अबुद्धिपूर्व्वं प्रागासीत् प्रादुर्भूता तड़िद्यथा ॥ ८० ॥
एतद्धिरण्यगर्भस्य जन्म यो वेद तत्त्वतः ।
आयुष्मान् कीर्त्तिमान् धन्यः प्रजावांश्च भवत्युत ॥ ८१ ॥
निवृत्तिकामोऽपि नरः शुद्धात्मा लभते गतिम् ।
पुराणश्रवणान्नित्यं सुखञ्च क्षेममाप्नुयात् ॥ ८२ ॥

इति श्रीमहापुराणे वायुप्रोक्ते सृष्टिप्रकरणं
नाम चतुर्थोऽध्यायः ।

---

# अथ पञ्चमोऽध्यायः ।

## सृष्टिप्रकरणं ।

———000———

लोमहर्षण उवाच । यद्दिष्टस्तु संख्यातं मया कालान्तरं द्विजाः ।
एतत् कालान्तरं ज्ञेयमहर्वै पारमेश्वरम् ॥ १ ॥
रात्रिश्चैतावती ज्ञेया परमेशस्य कृत्स्नशः ।
अहस्तस्य तु या सृष्टिः प्रलयो रात्रिरुच्यते ॥ २ ॥
अहश्च विद्यते तस्य न रात्रिरिति धारणा ।
उपचारः प्रक्रियते लोकानां हितकाम्यया ॥ ३ ॥
प्रजाः प्रजानाम्पतय ऋषयो मुनिभिः सह ।
ऋषीन् सनत्कुमाराख्यान् ब्रह्मसायुज्यगैः सह ॥ ४ ॥
इन्द्रियाणीन्द्रियार्थाश्च महाभूतानि पञ्च च ।
तन्मात्रा इन्द्रियगणो बुद्धिश्च मनसा सह ॥ ५ ॥
अहस्तिष्ठन्ति ते सर्व्वे परमेशस्य धीमतः ।
अहरन्ते प्रलीयन्ते रात्र्यन्ते विश्वसम्भवः ॥ ६ ॥
स्वात्मन्यवस्थिते सत्वे विकारे प्रतिसंहृते ।
साधर्म्म्येणावतिष्ठेते प्रधानपुरुषावुभौ ॥ ७ ॥
तमःसत्वगुणावेतौ समत्वेन व्यवस्थितौ ।
अनोद्रिक्तौ प्रसूतौ च तौ तथा च परस्परम् ।
गुणसाम्ये लयो ज्ञेयो वैषम्ये सृष्टिरुच्यते ॥ ८ ॥

तिलेषु वा यथा तैलं घृतं पयसि वा स्थितम्।
तथा तमसि सत्वे च रजोऽव्यक्ताश्रितं स्थितम्॥ ९ ॥
उपास्य रजनीं कृत्स्नां परां माहेश्वरीं तदा।
अहर्मुखे प्रवृत्ते च पुरः प्रकृतिसम्भवः॥ १० ॥
क्षोभयामास योगेन परेण परमेश्वरः।
प्रधानं पुरुषञ्चैव प्रविश्याण्डं महेश्वरः॥ ११ ॥
प्रधानात् क्षोभ्यमानात्तु रजो वै समवर्त्तत।
रजः प्रवर्त्तकं तत्र वीजेष्वपि यथा जलम्॥ १२ ॥
गुणवैषम्यमासाद्य प्रसूयन्ते ह्यधिष्ठिताः।
गुणेभ्यः क्षोभ्यमाणेभ्यस्त्रयो देवा विजज्ञिरे।
आश्रिताः परमा गुह्याः सर्व्वात्मानः शरीरिणः॥ १३ ॥
रजो ब्रह्मा तमो ह्यग्निः सत्वं विष्णुरजायत।
रजःप्रकाशको ब्रह्मा स्रष्टृत्वेन व्यवस्थितः॥ १४ ॥
तमःप्रकाशकोऽग्निस्तु कालत्वेन व्यवस्थितः।
सत्वप्रकाशको विष्णुरौदासीन्ये व्यवस्थितः॥ १५ ॥
एत एव त्रयो वेदा एत एव त्रयोऽग्नयः।
परस्पराश्रिता ह्येते परस्परमनुव्रताः॥ १६ ॥
परस्परेण वर्त्तन्ते धारयन्ति परस्परम्।
अन्योन्यमिथुना ह्येते ह्यन्योन्यमुपजीविनः।
क्षणं वियोगो न ह्येषां त्यजन्ति परस्परम्॥ १७ ॥
ईश्वरो हि परो देवो विष्णुस्तु महतः परः।
ब्रह्मा तु रजसोद्रिक्तः सर्गायेह प्रवर्त्तते।
परश्च पुरुषो ज्ञेयः प्रकृतिश्च परा स्मृता॥ १८ ॥

अधिष्ठितोऽसौ हि महेश्वरेण
प्रवर्त्तते चोद्यमानः समन्तात् ।
अनुप्रवर्त्तन्ति महान्त एव
चिरस्थिताः स्वे विषये प्रियत्वात् ॥ १९ ॥

प्रधानं गुणवैषम्यात्सर्गकाले प्रवर्त्तते ।
ईश्वराधिष्ठितात् पूर्व्वन्तस्मात्सदसदात्मकात् ।
ब्रह्मा बुद्धिश्च मिथुनं युगपत्सम्बभूवतुः ॥ २० ॥
तस्मात्तमोऽव्यक्तमयः क्षेत्रज्ञो ब्रह्मसंज्ञितः ।
संसिद्धः कार्य्यकरणैर्ब्रह्माऽग्रे समवर्त्तत ॥ २१ ॥
तेजसा प्रथमो धीमानव्यक्तः संप्रकाशते ।
स वै शरीरी प्रथमः कारणत्वे व्यवस्थितः ॥ २२ ॥
अप्रतीघेन ज्ञानेन ऐश्वर्य्येण च सोऽन्वितः ।
धर्म्मेण चाप्रतीघेन वैराग्येण समन्वितः ॥ २३ ॥
तस्येश्वरस्याप्रतिघं ज्ञानं वैराग्यलक्षणम् ।
धर्म्मैश्वर्य्यकृता बुद्धिर्ब्राह्मी जज्ञेऽभिमानिनः ॥ २४ ॥
अव्यक्ताज्जायते चास्य मनसा च यदिच्छति ।
वशीकृतत्वात्त्रैगुण्यात् सुरेशत्वात्स्वभावतः ॥ २५ ॥
चतुर्मुखस्तु ब्रह्मत्वे कालत्वे चान्तकोऽभवत् ।
सहस्रमूर्द्धा पुरुषस्तिस्रोऽवस्थाः स्वयम्भुवः ॥ २६ ॥
सत्वं रजश्च ब्रह्मत्वे कालत्वे च रजस्तमः ।
सात्विकं पुरुषत्वे च गुणवृत्तिः स्वयम्भुवः ॥ २७ ॥
लोकान् सृजति ब्रह्मत्वे कालत्वे संक्षिपत्यपि ।
पुरुषत्वे उदासीनस्तिस्रोऽवस्थाः प्रजापतेः ॥ २८ ॥

ब्रह्मा कमलगर्भाभः कालो जात्याञ्जनप्रभः ।
पुरुषः पुण्डरीकाक्षो रूपं तत्परमात्मनः ॥ २९ ॥
योगेश्वरः शरीराणि करोति विकरोति च ।
नानाकृतिक्रियारूपनामवृत्तिः स्वलीलया ॥ ३० ॥
त्रिधा यद्वर्त्तते लोके तस्मात्त्रिगुण उच्यते ।
चतुर्द्धा प्रविभक्तत्वाच्चतुर्व्यूहः प्रकीर्त्तितः ॥ ३१ ॥
यदाप्नोति यदादत्ते यच्चास्ति विषयं प्रति ।
यच्चास्य सततं भावस्तस्मादात्मा निरुच्यते ॥ ३२ ॥
ऋषिः सर्व्वगतत्वाच्च शरीराद्यात्स्वयं प्रभुः ।
स्वामित्वमस्य तत्सर्व्वं विष्णुः सर्व्वप्रवेशनात् ॥ ३३ ॥
भगवान् भगसद्भावाद्रागो रागस्य शासनात् ।
परश्च तु प्रकृतत्वादवनादोमिति स्मृतः ॥ ३४ ॥
सर्व्वज्ञः सर्व्वविज्ञानात् सर्व्वः सर्व्वं यतस्ततः ।
नराणामयनं यस्मात्तेन नारायणः स्मृतः ॥ ३५ ॥
त्रिधा विभज्य स्वात्मानं त्रैलोक्यं सम्प्रवर्त्तते ।
सृजते ग्रसते चैव वीक्षते च त्रिभिस्तु यत् ।
अग्रे हिरण्यगर्भः स प्रादुर्भूतश्चतुर्मुखः ॥ ३६ ॥
आदित्वाच्चादिदेवोऽसावजातत्वादजः स्मृतः ।
पाति यस्मात्प्रजाः सर्व्वाः प्रजापतिरतः स्मृतः ॥ ३७ ॥
देवेषु च महान् देवो महादेवस्ततः स्मृतः ।
सर्व्वशत्वाच्च लोकानामवशत्वात्तथेश्वरः ॥ ३८ ॥
बृहत्त्वाच्च स्मृतो ब्रह्मा भूतत्वाद्भूत उच्यते ।
क्षेत्रज्ञः क्षेत्रविज्ञानाद्विभुः सर्व्वगतो यतः ॥ ३९ ॥

यस्मात् पुर्य्यनुशेते च तस्मात् पुरुष उच्यते ।
नोत्पादितत्वात् पूर्व्वत्वात् स्वयम्भूरिति सः स्मृतः ॥ ४० ॥
ईज्यत्वादुच्यते यज्ञः कविर्विक्रान्तदर्शनात्(१) ।
क्रमणः क्रमणीयत्वाद्वर्णकस्याभिपालनात् ॥ ४१ ॥
आदित्यसंज्ञः कपिलस्त्वग्रजोऽग्निरिति स्मृतः ।
हिरण्यमस्य गर्भोऽभूद्धिरण्यस्यापि गर्भजः ।
तस्माद्धिरण्यगर्भः स पुराणेऽस्मिन्निरुच्यते ॥ ४२ ॥
स्वयम्भूवो निवृत्तस्य कालो वर्णाग्रजस्तु यः ।
न शक्यः परिसंख्यातुमपि वर्षशतैरपि ॥ ४३ ॥
कल्पसंख्यानिवृत्तेस्तु पराख्यो ब्रह्मणः स्मृतः ।
तावच्छेषोऽस्य कालोऽन्यस्तस्यान्ते प्रतिसृज्यते ॥ ४४ ॥
कोटिकोटिसहस्राणि अन्तर्भूतानि यानि वै ।
समतीतानि कल्पानान्तावच्छेषाः परास्तु ये ॥ ४५ ॥
यस्त्वऽयं वर्त्तते कल्पो वाराहस्तं निबोधत ।
प्रथमः साम्प्रतस्तेषां कल्पोऽयं वर्त्तते द्विजाः ॥ ४६ ॥
तस्मिन् स्वायम्भुवाद्यास्तु मनवः स्युश्चतुर्दश ।
अतीता वर्त्तमानाश्च भविष्या ये च वै पुनः ॥ ४७ ॥
तैरियं पृथिवी सर्व्वा सप्तद्वीपा समन्ततः ।
पूर्णं युगसहस्रं वै परिपाल्या नरेश्वरैः ।
प्रजाभिस्तपसा चैव तेषां शृणुत विस्तरं ॥ ४८ ॥

---

१ कविर्विक्रान्तदर्शनादिति ख०, घ०, ङ० च

मन्वन्तरेण चैकेन सर्व्वाण्येवान्तराणि वै ।
भविष्याणि भविष्येश कल्पः कल्पेन चैव ह ॥ ४९ ॥
अतीतानि च कल्पानि सोदर्कानि सहान्वयैः ।
अनागतेषु तद्दच तर्कः कार्य्यो विजानता ॥ ५० ॥

इति श्रीमहापुराणे वायुप्रोक्ते सृष्टिप्रकरणं नाम
पञ्चमोऽध्यायः ।



# अथ षष्ठोऽध्यायः ।

## सृष्टिप्रकरणं ।

———000———

सूत उवाच । आपो ह्यग्नेः समभवन्नष्टेऽग्नौ पृथिवीतले ।
सान्तरालैकलीनेऽस्मान्नष्टे स्थावरजङ्गमे ॥ १ ॥
एकार्णवे तदा तस्मिन् न प्राज्ञायत किञ्चन ।
तदा स भगवान् ब्रह्मा सहस्राक्षः सहस्रपात् ॥ २ ॥
सहस्रशीर्षा पुरुषो रुक्मवर्णोऽह्यतीन्द्रियः ।
ब्रह्मा नारायणाख्यः स सुष्वाप सलिले तदा ॥ ३ ॥
सत्त्वोद्रेकात् प्रबुद्धस्तु शून्यं लोकमुदीक्ष्य सः ।
इमञ्चोदाहरन्त्यत्र श्लोकं नारायणं प्रति ॥ ४ ॥
आपो नारा वै तनव इत्यपां नाम शुश्रुमः ।
अप्सु शेते च यत्तस्मात्तेन नारायणः स्मृतः ॥ ५ ॥
तुल्यं युगसहस्रस्य नैशङ्कालमुपास्य सः ।
शर्व्वर्य्यन्ते प्रकुरुते ब्रह्मत्वं सर्गकारणात् ॥ ६ ॥
ब्रह्मा तु सलिले तस्मिन् वायुर्भूत्वा तदाचरत् ।
निशायामिव खद्योतः प्रावृट्काले ततस्ततः ॥ ७ ॥
ततस्तु सलिले तस्मिन् विज्ञायान्तर्गतां महीं ।
अनुमानादसंमूढो भूमेरुद्धरणं प्रति ॥ ८ ॥
अकरोत् स तनुन्त्वन्यां कल्पादिषु यथा पुरा ।

ततो महात्मा मनसा दिव्यं रूपमचिन्तयत् ॥ ९ ॥
सलिलेनाप्लुतां भूमिन्दृष्ट्वा स तु समन्ततः ।
किन्तु रूपं महत् कृत्वा उद्धरेयमहं महीं ॥ १० ॥
जलक्रीड़ासु रुचिरं वाराहं रूपमस्मरत् ।
अधृष्यं सर्व्वभूतानां वाङ्मयं धर्म्मसंज्ञितं ॥ ११ ॥
दशयोजनविस्तीर्णं शतयोजनमुच्छ्रितं ।
नीलमेघप्रतीकाशं मेघस्तनितनिस्वनं ॥ १२ ॥
महापर्व्वतवर्ष्माणं श्वेततीक्ष्णोग्रदंष्ट्रिणं ।
विद्युदग्निप्रकाशाक्षमादित्यसमतेजसं ॥ १३ ॥
पीनवृत्तायतस्कन्धं सिंहविक्रान्तगामिनं ।
पीनोन्नतकटीदेशं सुश्लक्ष्णं शुभलक्षणं ॥ १४ ॥
रूपमास्थाय विपुलं वाराहममितं हरिः ।
पृथिव्युद्धरणार्थाय प्रविवेश रसातलं ॥ १५ ॥
स वेदपादो यूपदंष्ट्रः क्रतुवक्षाश्चितीमुखः ।
अग्निजिह्वो दर्भरोमा ब्रह्मशीर्षो महातपाः ॥ १६ ॥
अहोरात्रेक्षणधरो वेदाङ्गश्रुतिभूषणः ।
आज्यनासः स्रुवतुण्डः सामघोषस्वनो महान् ॥ १७ ॥
सत्यधर्म्ममयः श्रीमान् धर्म्मविक्रमसंस्थितः ।
प्रायश्चित्तरतो घोरः पशुजानुर्महाकृतिः ॥ १८ ॥
उद्गात्रो होमलिङ्गः स्थानवीजो महौषधिः ।
वेद्यान्तरात्मा मन्त्रस्फिगाज्यसृक् सोमशोणितः ॥ १९ ॥
वेदस्कन्धो हविर्गन्धो हव्यकव्यातिवेगवान् ।
प्राग्वंशकायो द्युतिमान्नानादीक्षाभिरन्वितः ॥ २० ॥

दक्षिणाहृदयो योगी महासत्रमयो विभुः ।
उपाकर्मेष्टिरुचिरः प्रवर्ग्यवित्तभूषणः ॥ २१ ॥
नानाच्छन्दोगतिपथो गुह्योपनिषदासनः ।
छायापत्नीसहायो वै मणिशृङ्ग इवोच्छ्रितः ।
भूत्वा यज्ञवराहो वै अपः स प्राविशत् प्रभुः ॥ २२ ॥
अद्भिः संछादितामुर्वीं स तामश्नन् प्रजापतिः ।
उपगम्योज्जहाराशु अपस्ताश्च स विन्यसत्(१) ॥ २३ ॥
सामुद्रीर्व्वै समुद्रेषु नादेयीश्च नदीष्वथ ।
रसातलतले मग्नां रसातलतले गतां ।
प्रभुर्लोकहितार्थाय दंष्ट्रयाभ्युज्जहार गां ॥ २४ ॥
ततः स्वस्थानमानीय पृथिवीं पृथिवीधरः ।
मुमोच पूर्व्वं मनसा धारयित्वा धराधरः ॥ २५ ॥
तस्योपरि जलौघस्य महती नौरिव स्थिता ।
विततत्वाच्च देहस्य न मही याति विप्लवम् ॥ २६ ॥
ततोद्धृत्य क्षितिन्देवो जगतः स्थापनेच्छया ।
पृथिव्याः प्रविभागाय मनश्चक्रेऽम्बुजेक्षणः ।
पृथिवीन्तु समीकृत्य पृथिव्यां सोऽचिनोद्गिरीन् ॥ २७ ॥
प्राक्सर्व्वे दग्धमनास्तु तदा सम्वर्त्तकाग्निना ।
तेनाग्निना विशीर्णास्ते पर्व्वता भुवि सर्वशः ॥ २८ ॥
शैत्यादेकार्णवे तस्मिन्वायुनापस्तु संहताः ।
निषिक्ता यत्र यत्रासंस्तत्र तत्राचलोऽभवत् ॥ २९ ॥
स्कन्धाचलत्वादचलाः पर्व्वभिः पर्व्वताः स्मृताः ।

१ पाठोऽयं न समीचीनो भवितुमर्हति ।

गिरयोऽस्तन्निगीर्णत्वाच्चयनाच्च शिलोच्चयाः ॥ ३० ॥
ततस्तेषु विशीर्णेषु लोकोदधिगिरिष्वथ ।
विश्वकर्म्मा विभजते कल्पादिषु पुनः पुनः ॥ ३१ ॥
ससमुद्रामिमां पृथ्वीं सप्तद्वीपां सपर्व्वतां ।
भूराद्यांश्चतुरो लोकान् पुनः सोऽथ प्रकल्पयत् ।
लोकान् प्रकल्पयित्वा च प्रजासर्गं ससर्ज्ज ह ॥ ३२ ॥
ब्रह्मा स्वयम्भूर्भगवान् सिसृक्षुर्विविधाः प्रजाः ।
ससर्ज्ज सृष्टिन्तद्रूपां कल्पादिषु यथा पुरा ॥ ३३ ॥
तस्याभिध्यायतः सर्गं तदा वै बुद्धिपूर्व्वकं ।
प्रध्यानसमकालं वै प्रादुर्भूतस्तमोमयः ॥ ३४ ॥
तमो मोहो महामोहस्तामिस्रो अन्धसंज्ञितः ।
अविद्या पञ्चपर्व्वैषा प्रादुर्भूता महात्मनः ॥ ३५ ॥
पञ्चधा चाश्रितः सर्गो ध्यायतः सोऽभिमानिनः ।
सर्व्वतस्तमसा चैव दीपः कुम्भवदावृतः ।
बहिरन्तःप्रकाशश्च शुद्धो निःसंज्ञ एव च ॥ ३६ ॥
यस्मात्तैः संवृता बुद्धिर्मुख्यानि करणानि च ।
तस्मात्ते संवृतात्मानो नगा मुख्याः प्रकीर्त्तिताः ॥ ३७ ॥
मुख्यसर्गं तथा भूतं ब्रह्मा दृष्ट्वा ह्यसाधकं ।
अप्रसन्नमनाः सोऽथ ततो न्यासोऽभ्यमन्यत ॥ ३८ ॥
तस्याभिध्यायतस्तत्र तिर्य्यक् स्रोतोऽभ्यवर्त्तत ।
यस्मात्तिर्य्यग्व्यवर्त्तेत तिर्य्यक्स्रोतस्ततः स्मृतं ॥ ३९ ॥
तमोबहुलात्ते सर्व्वे ह्यज्ञानबहुलाः स्मृताः ।
उत्पथग्राहिणश्चापि ते ध्यानाज्ज्ञानमानिनः ॥ ४० ॥

तिर्य्यक्स्रोतस्तु दृष्ट्वा वै द्वितीयं विश्वमीश्वरः ।
अहंकृता अहंमना अष्टाविंशद्विधात्मकाः ॥ ४१ ॥
एकादशेन्द्रियविधा नवधा चोदयस्तथा ।
अष्टौ च तारकाद्याश्च तेषां शक्तिविधाः स्मृताः ॥ ४२ ॥
अतः प्रकाशास्ते सर्व्वे आवृताश्च बहिः पुनः ।
यस्मात्तिर्य्यक् प्रवर्त्तेत तिर्य्यक्स्रोताः स उच्यते ॥ ४३ ॥
तिर्य्यक् स्रोताश्च दृष्ट्वा वै द्वितीयं विश्वमीश्वरः ।
अभिप्रायमथोद्भूतं दृष्ट्वा सर्व्वं तथाविधं ।
तस्याभिध्यायतो नित्यं सात्त्विकः समवर्त्तत ॥ ४४ ॥
ऊर्द्ध्वस्रोतास्तृतीयस्तु स चैवोर्द्धव्यवस्थितः ।
यस्मादूर्द्ध्वं वर्त्तते ऽर्द्धन्तु ऊर्द्ध्वस्रोतास्ततः स्मृतः ॥ ४५ ॥
ते सुखप्रीतिबहुला बहिरन्तश्च संवृताः ।
प्रकाशा बहिरन्तश्च ऊर्द्धस्रोतोद्भवाः स्मृताः ॥ ४६ ॥
तेन धातादयो ज्ञेयाः तुष्टात्मानो व्यवस्थिताः ।
ऊर्द्धस्रोतास्तृतीयो वै तेन सर्गस्तु स स्मृतः ॥ ४७ ॥
ऊर्द्धस्रोतःसु सृष्टेषु देवेषु स तदा प्रभुः ।
प्रीतिमानऽभवद्ब्रह्मा ततोऽन्यं सोऽभ्यमन्यत ।
ससर्ज्ज सर्गमन्यं स साधकं प्रभुरीश्वरः ॥ ४८ ॥
अथाभिध्यायतस्तस्य सत्याभिध्यायिनस्तदा ।
प्रादुर्ब्बभूव चाव्यक्तादर्व्वाक्स्रोतः सुसाधकं ।
यस्मादर्व्वाक् व्यवर्त्तेत ततोऽर्व्वाक्स्रोत उच्यते ॥ ४९ ॥
ते च प्रकाशबहुलास्तमःसत्त्वरजोधिकाः ।
तस्मात्ते दुःखबहुला भूयो भूयश्च कारिणः ॥ ५० ॥

प्रकाशा वहिरन्तश्च मनुष्याः साधकाश्च ते ।
लक्षणैस्तारकाद्यैस्ते अष्टधा च व्यवस्थिताः ॥ ५१ ॥
सिद्धात्मानो मनुष्यास्ते गन्धर्वसहधर्म्मिणः ।
इत्येष तैजसः सर्गो ह्यर्व्वाक्स्रोताः प्रकीर्त्तितः ॥ ५२ ॥
पञ्चमोऽनुग्रहः सर्गश्चतुर्द्धा स व्यवस्थितः ।
विपर्य्ययेण शक्त्या च तुष्ट्या सिद्ध्या तथैव च ।
निवृत्तं वर्त्तमानञ्च तेऽर्थं जानन्ति तत्त्वतः ॥ ५३ ॥
भूतादिकानां सत्त्वानां षष्ठः सर्गः स उच्यते ।
विपर्य्ययेण भूतादिरशक्त्या च व्यवस्थितः ॥ ५४ ॥
प्रथमो महतः सर्गो विज्ञेयो महतस्तु सः ।
तन्मात्राणां द्वितीयस्तु भूतसर्गः स उच्यते ॥ ५५ ॥
वैकारिकस्तृतीयस्तु सर्ग ऐन्द्रियकः स्मृतः ।
इत्येष प्राकृतः सर्गः सम्भूतो बुद्धिपूर्व्वकः ॥ ५६ ॥
मुख्यसर्गश्चतुर्थस्तु मुख्या वै स्थावराः स्मृताः ।
तिर्य्यक् स्रोताश्च यः सर्गस्तिर्य्यग्योनः स पञ्चमः ॥ ५७ ॥
तथोर्द्ध्वस्रोतसां षष्ठो देवसर्गस्तु सः स्मृतः ।
ततोऽर्व्वाक्स्रोतसां सर्गः सप्तमः स तु मानुषः ॥ ५८ ॥
अष्टमोऽनुग्रहः सर्गः सात्त्विकस्तामसस्तु सः ।
पञ्चैते वैकृताः सर्गाः प्राकृतास्तु त्रयः स्मृताः ॥ ५९ ॥
प्राकृतो वैकृतश्चैव कौमारो नवमः स्मृतः ।
प्राकृतास्तु त्रयः सर्गाः कृतास्ते बुद्धिपूर्व्वकाः ॥ ६० ॥
बुद्धिपूर्व्वं प्रवर्त्तन्ते षट्सर्गा ब्रह्मणस्तु ते ।
विस्तरानुग्रहं सर्गं कीर्त्त्यमानं निबोधत ॥ ६१ ॥

चतुर्धावस्थितः सोऽथ सर्वभूतेषु तत्त्वतः।
विपर्ययेण शक्त्या च तुष्ट्या सिद्धा तथैव च ॥ ६२ ॥
स्थावरेषु विपर्य्यासस्तिर्य्यग्योनिषु शक्तिता।
सिद्धात्मानो मनुष्यास्तु तुष्टिर्देवेषु कृत्स्नशः ॥ ६३ ॥
इत्येते प्राकृताश्चैव वैकृताश्च नव स्मृताः।
सर्गाः परस्परस्याथ प्रकारा बहवः स्मृताः ॥ ६४ ॥
अग्रे ससर्ज्ज वै ब्रह्मा मानसानात्मनः समान्।
सनन्दनञ्च सनकं विद्वांसञ्च सनातनं ॥ ६५ ॥
विज्ञानेन निवृत्तास्ते वैवर्त्तेन महौजसः।
संबुद्धाश्चैव नानात्वादप्रवृत्तास्त्रयोऽपि ते।
असृष्ट्वैव प्रजासर्गं प्रतिसर्गङ्गताः पुनः ॥ ६६ ॥
तदा तेषु व्यतीतेषु तदान्यान् साधकांश्च तान्।
मानसानसृजद्ब्रह्मा पुनः स्थानाभिमानिनः।
आभूतसंप्लवावस्थानामतस्तान्निबोधत ॥ ६७ ॥
आपोऽग्निः पृथिवी वायुरन्तरिक्षं दिशस्तथा।
स्वर्गं दिवः समुद्रांश्च नदान् शैलान् वनस्पतीन् ॥ ६८ ॥
ओषधीनां तथात्मानो ह्यात्मानो वृक्षवीरुधां।
लवाः काष्ठाः कलाश्चैव मुहूर्त्ताः सन्धिरात्र्यहाः ॥ ६९ ॥
अर्द्धमासाश्च मासाश्च अयनाब्दयुगानि च।
स्थानाभिमानिनः सर्व्वे स्थानाख्याश्चैव ते स्मृताः ॥ ७० ॥

वक्त्रादस्य ब्राह्मणा संप्रसूताः
तद्वक्षसः क्षत्रियाः पूर्व्वभागे।
वैश्याश्चोर्वोर्य्यस्य पद्भ्याञ्च शूद्राः

सर्व्वे वर्णा गायत: संप्रसूता: ॥ ७१ ॥
नारायण: परोऽव्यक्तादण्डमव्यक्तसम्भवं ।
अण्डाज्जज्ञे पुनर्ब्रह्मा लोकास्तेन कृता: स्वयं ॥ ७२ ॥
एष व: कथित: पाद: समासान्न तु विस्तरात् ।
अनेनाद्येन पादेन पुराणं संप्रकीर्त्तितं ॥ ७३ ॥

इति श्रीमहापुराणे वायुप्रोक्ते सृष्टिप्रकरणं नाम
षष्ठोऽध्याय: ।

समाप्त: प्रक्रियापाद: ।



## अथ सप्तमोऽध्यायः।

——०१०——

प्रतिसन्धिकीर्त्तनं।

इत्येष प्रथमः पादः प्रक्रियार्थः प्रकीर्त्तितः।
श्रुत्वा तु संहृष्टमनाः काश्यपेयः सनातनः॥ १॥
सम्वीक्ष्य सूतं वचसा पप्रच्छाथोत्तरां कथां।
अतःप्रभृति कल्पस्य प्रतिसन्धिं प्रचक्ष्व नः॥ २॥
समतीतस्य कल्पस्य वर्त्तमानस्य चोभयोः।
कल्पयोरन्तरं यच्च प्रतिसन्धिर्य्यंतस्तयोः।
एतद्वेदितुमिच्छामः अत्यन्तकुशलोऽह्यसि॥ ३॥
लोमहर्षण उवाच। अत्रऽवोऽहं प्रवक्ष्यामि प्रतिसन्धिश्च यस्तयोः।
समतीतस्य कल्पस्य वर्त्तमानस्य चोभयोः॥ ४॥
मन्वन्तराणि कल्पेषु येषु यानि च सुव्रताः।
यथायं वर्त्तते कल्पो वाराहः साम्प्रतः शुभः॥ ५॥
अस्मात् कल्पाच्च यः कल्पः पूर्व्वोऽतीतः सनातनः।
तस्य चास्य च कल्पस्य मध्यावस्थान्निबोधत॥ ६॥
प्रत्याहृते पूर्व्वकल्पे प्रतिसन्धिश्च तत्र वै।
अन्यः प्रवर्त्तते कल्पो जनाल्लोकात् पुनः पुनः॥ ७॥
व्युच्छिन्नात् प्रतिसन्धेस्तु कल्पात् कल्पः परस्परं।
व्युच्छिद्यन्ते क्रियाः सर्व्वाः कल्पान्ते सर्व्वशस्तदा।
तस्मात् कल्पात्तु कल्पस्य प्रतिसन्धिर्निगद्यते॥ ८॥

मन्वन्तरयुगाख्यानामव्युच्छिन्नाश्च सन्धयः ।
परस्पराः प्रवर्त्तन्ते मन्वन्तरयुगैः सह ॥ ९ ॥
उक्ता ये प्रक्रियार्थेन पूर्व्वकल्पाः समासतः ।
तेषां परार्द्धकल्पानां पूर्व्वो ज्ञस्मात्तु यः परः ।
आसीत् कल्पो व्यतीतो वै परार्द्धेन परस्तु सः ॥ १० ॥
अन्ये भविष्या ये कल्पा अपरार्द्धागुणीकृताः ।
प्रथमः साम्प्रतस्तेषां कल्पोऽयं वर्त्तते द्विजाः ॥ ११ ॥
यस्मिन् पूर्व्वः परार्द्धे तु द्वितीये पर उच्यते ।
एतावान् स्थितिकालश्च प्रत्याहारस्ततः स्मृतः ॥ १२ ॥
अस्मात् कल्पात्तु यः पूर्व्वं कल्पोऽतीतः सनातनः ।
चतुर्युगसहस्रान्ते सहोमन्वन्तरैः पुरा ॥ १३ ॥
क्षीणे कल्पे तदा तस्मिन् दाहकाले ह्युपस्थिते ।
तस्मिन् कल्पे तदा देवा आसन्वैमानिकास्तु ये ॥ १४ ॥
नक्षत्रग्रहतारास्तु चन्द्रसूर्य्यग्रहाश्च ये ।
अष्टाविंशतिरेवैताः कोट्यस्तु सुकृतात्मनां ॥ १५ ॥
मन्वन्तरे तथैकस्मिन् चतुर्द्दशसु वै तथा ।
त्रीणि कोटिशतान्यासन् कोट्यो द्विनवतिस्तथा ।
अष्टाधिकाः सप्तशताः सहस्राणां स्मृताः पुरा ॥ १६ ॥
वैमानिकानां देवानां कल्पेऽतीते तु येऽभवन् ।
एकैकस्मिंस्तु कल्पे वै देवा वैमानिकाः स्मृताः ॥ १७ ॥
अथ मन्वन्तरेष्वासंश्चतुर्द्दशसु वै दिवि ।
देवाश्च पितरश्चैव मुनयो मनवस्तथा ॥ १८ ॥
तेषामनुचरा ये च मनुपुत्रास्तथैव च ।

वर्णाश्रमिभिरीड्याश्च तस्मिन् काले तु ये सुराः ।
मन्वन्तरेषु ये ह्यासन् देवलोके दिवौकसः ॥ १९ ॥
ते तैः संयोजकैः सार्द्धं प्राप्ते सङ्कलने तथा ।
तुल्यनिष्ठास्तु ते सर्व्वं प्राप्ते ह्याभूतसंप्लवे ॥ २० ॥
ततस्ते बश्यभावित्वाद्दृष्ट्वा पर्य्यायमात्मनः ।
त्रैलोक्यवासिनो देवास्तस्मिन् प्राप्ते ह्युपप्लवे ॥ २१ ॥
तेनोत्सुक्यविषादेन त्यक्त्वा स्थानानि भावतः ।
महर्लोकाय संविग्नास्ततस्ते दधिरे मतिं ॥ २२ ॥
ते युक्ता उपपद्यन्ते महसि स्वैः शरीरकैः ।
विशुद्धिबहुलाः सर्व्वे मानसीं सिद्धिमास्थिताः ॥ २३ ॥
तैः कल्पवासिभिः सार्द्धं महानासादितस्तु यैः ।
ब्राह्मणैः क्षत्रियैर्वैश्यैस्तद्भक्तैश्चापरैर्जनैः ॥ २४ ॥
गत्वा तु ते महर्लोकं देवसङ्घाश्चतुर्द्दश ।
ततस्ते जनलोकाय सोद्वेगा दधिरे मतिं ॥ २५ ॥
विशुद्धिबहुलाः सर्व्वे मानसीं सिद्धिमास्थिताः ।
तैः कल्पवासिभिः सार्द्धं महानासादितस्तु यैः ॥ २६ ॥
दशकल्प इवावृत्य तस्माद्गच्छन्ति स्वस्तपः ।
तत्र कल्पान् दश स्थित्वा सत्यं गच्छन्ति वै पुनः ।
एतेन क्रमयोगेन यान्ति कल्पनिवासिनः ॥ २७ ॥
एवं देवयुगानान्तु सहस्राणि परस्परात् ।
गतानि ब्रह्मलोकं वै अपरावर्त्तिनीं गतिं ॥ २८ ॥
आधिपत्यं विना ते वै ऐश्वर्य्येण तु तत्समाः ।
भवन्ति ब्रह्मणस्तुल्या रूपेण विषयेण च ॥ २९ ॥

तत्र ते ह्यवतिष्ठन्ति प्रीतियुक्ताः प्रसङ्गमात् ।
आनन्दं ब्रह्मणः प्राप्य मुच्यन्ते ब्रह्मणा सह ॥ २० ॥
अवश्यम्भाविनाऽर्थेन प्राकृतेनैव ते स्वयं ।
नानात्वेनाभिसम्बद्धास्तदा तत्कालभाविनः ॥ २१ ॥
स्वरूपतो बुद्धिपूर्व्वं यथा भवति जाग्रतः ।
तत्कालभावि तेषान्तु तथा ज्ञानं प्रवर्त्तते ॥ २२ ॥
प्रत्याहारे तु भेदानां येषां भिन्नाभिसूक्ष्मणां ।
तैः सार्द्धं प्रतिसृज्यन्ते कार्य्याणि कारणानि च ॥ २३ ॥
नानात्वदर्शनात्तेषां ब्रह्मलोकनिवासिनां ।
विनष्टस्वाधिकाराणां स्वेन धर्मेण तिष्ठतां ॥ २४ ॥
ते तुल्यलक्षणाः सिद्धाः शुद्धात्मानो निरञ्जनाः ।
प्रकृतौ कारणातीताः स्वात्मन्येव व्यवस्थिताः ॥ २५ ॥
प्रख्यापयित्वा (१) ह्यात्मानं प्रकृतिस्तेषु सर्व्वशः ।
पुरुषाव्यवहृतत्वेन प्रतीता न प्रवर्त्तते ॥ २६ ॥
प्रवर्त्तिते पुनः सर्गे तेषां वा कारणं पुनः ।
संयोगे प्राकृते तेषां युक्तानां तत्त्वदर्शिनां ॥ २७ ॥
अत्रापवर्गिणां तेषामपुनर्मार्गगामिनां ।
अभावः पुनरुत्पत्तौ शान्तानामर्चिषामिव ॥ २८ ॥
ततस्तेषु गतेषूर्द्धं त्रैलोक्यात्सुमहात्मसु ।
तैः सार्द्धं ये महर्लोकास्तदा नासादिता जनाः ।
तच्छिष्टाश्चेह तिष्ठन्ति कल्पादिकमुपासते ॥ २९ ॥
गन्धर्व्वाद्याः पिशाचान्ता मानुषा ब्राह्मणादयः ।

---

१ ख्यापयित्वेति ख० ।

पशवः पक्षिणश्चैव स्थावराःससरीसृपाः ॥ ४० ॥
तिष्ठत्सु तेषु तत्कालं पृथिवीतलवासिषु ।
सहस्रं यत्तु रश्मीनां सूर्य्यस्येह विभासते ।
ते सप्तरश्मयो भूत्वा ह्येकैको जायते रविः ॥ ४१ ॥
क्रमेणोत्तिष्ठमानास्ते त्रीन् लोकान् प्रदहन्त्युत ।
जङ्गमं स्थावरञ्चैव नदीः सर्व्वांश्च पर्व्वतान् ।
पूर्व्वं शुष्का ह्यनावृष्ट्या सूर्य्यैस्तैश्च प्रधूपिताः ॥ ४२ ॥
तदा ते विविशः सर्व्वे निर्दग्धाः सूर्य्यरश्मिभिः ।
जङ्गमाः स्थावराः सर्व्वे धर्म्माधर्म्मात्मकास्तु वै ॥ ४३ ॥
दग्धदेहास्ततस्ते वै गताः पापयुगात्यये ।
योन्या तया ह्यनिर्मुक्ताः शुभपापानुबन्धया ॥ ४४ ॥
ततस्ते ह्युपपद्यन्ते तुल्यरूपा जने जनाः ।
विशुद्धिबहुलाः सर्व्वे मानसीं सिद्धिमास्थिताः ॥ ४५ ॥
उषित्वा रजनीं तत्र ब्रह्मणोऽव्यक्तजन्मनः ।
पुनः सर्गे भवन्तीह ब्रह्मणो मानसीप्रजाः ॥ ४६ ॥
ततस्तेषु प्रवृत्तेषु जने त्रैलोक्यवासिषु ।
निर्दग्धेषु च लोकेषु तेषु सूर्य्यैस्तु सप्तभिः ।
वृष्ट्या क्षितौ प्लावितायां विशीर्णेष्वालयेषु च ॥ ४७ ॥
समुद्राश्चैव मेघाश्च आपः सर्व्वाश्च पार्थिवाः ।
व्रजन्त्येकार्णवत्वं हि सलिलाख्यास्तदाश्रिताः ॥ ४८ ॥
आगतागतिकं तद्वै यदा तु सलिलं बहु ।
संछाद्येमां स्थितां भूमिमर्णवाख्या तदा च सा ॥ ४९ ॥
आभाति यस्मात्त्वाभान्ति भासन्तो व्याप्तिदीप्तिषु ।

सर्व्वतः समनुप्राप्य तासाञ्चाभो विभाव्यते ॥ ५० ॥
तदम्भस्तनुते यस्मात् सर्व्वां पृथ्वीं समन्ततः ।
धातूंस्तनोति विस्तारे तेनाम्भस्तनवः स्मृताः ॥ ५१ ॥
अरमित्येष शीघ्रन्तु निपातः कविभिः स्मृतः ।
एकार्णवे भवन्त्यापो न शीघ्रास्तेन ते नराः ॥ ५२ ॥
तस्मिन् युगसहस्रान्ते संस्थिते ब्रह्मणोऽहनि ।
रजन्यां वर्त्तमानायान्तावत्तत्सलिलात्मना ॥ ५३ ॥
ततस्तु सलिले तस्मिन्नष्टेऽग्नौ पृथिवीतले ।
प्रशान्तवातेऽन्धकारे निरालोके समन्ततः ॥ ५४ ॥
येनैवाधिष्ठितं हीदं ब्रह्मा स पुरुषः प्रभुः ।
विभागमस्य लोकस्य पुनर्व्वै कर्त्तुमिच्छति ॥ ५५ ॥
एकार्णवे तदा तस्मिन्नष्टे स्थावरजङ्गमे ।
तदा स भवति ब्रह्मा सहस्राक्षः सहस्रपात् ॥ ५६ ॥
सहस्रशीर्षा पुरुषो रुक्मवर्णो ह्यतीन्द्रियः ।
ब्रह्मा नारायणाख्यस्तु सुष्वाप सलिले तदा ॥ ५७ ॥
सत्त्वोद्रेकात् प्रबुद्धस्तु शून्यं लोकमवेक्ष्य च ।
इमञ्चोदाहरन्त्यत्र श्लोकं नारायणं प्रति ॥ ५८ ॥
आपो नारा वा आस्तनव इत्यपान्नाम शुश्रुमः ।
आपूर्य्य नाभिं तत्रास्ते तेन नारायणः स्मृतः ॥ ५९ ॥

सहस्रशीर्षा सुमनाः सहस्रपात्
सहस्रचक्षुर्व्वदनः सहस्रभुक् ।
सहस्रबाहुः प्रथमः प्रजापति-
स्त्रयीपथे यः पुरुषो निरुच्यते ॥ ६० ॥

आदित्यवर्णो भुवनस्य गोप्ता-
एको ह्यपूर्व्वः प्रथमन्तुराषाट्।
हिरण्यगर्भः पुरुषो महात्मा
स पठ्यते वै तमसः परस्तात्॥ ६१॥
कल्पादौ रजसोद्रिक्तो ब्रह्मा भूत्वाऽसृजत् प्रजाः।
कल्पान्ते तमसोद्रिक्तो कालो भूत्वाऽग्रसत् पुनः॥ ६२॥
स वै नारायणाख्यस्तु सत्त्वोद्रिक्तोऽर्णवे स्वपन्।
त्रिधा विभज्य चात्मानं त्रैलोक्ये समवर्त्तत॥ ६३॥
सृजते ग्रसते चैव वीक्षते च त्रिभिस्तु तान्।
एकार्णवे तदा लोके नष्टे स्थावरजङ्गमे॥ ६४॥
चतुर्युगसहस्रान्ते सर्व्वतः सलिलावृते।
ब्रह्मा नारायणाख्यस्तु अप्रकाशार्णवे स्वपन्॥ ६५॥
चतुर्विधाः प्रजा ग्रस्त्वा ब्राह्म्यां रात्र्यां महार्णवे।
पश्यन्ति तं महर्लोकात् सुप्तं कालं महर्षयः॥ ६६॥
भृग्वाद्यो यथा सप्त कल्पे ह्यस्मिन् महर्षयः।
ततो विवर्त्तमानैस्तैर्महान् परिगतः परः॥ ६७॥
गत्यर्थात् ऋषयो धातोर्नामनिर्वृत्तिरादितः।
तस्मादृषिपरत्वेन महांस्तस्मान्महर्षयः॥ ६८॥
महर्लोकस्थितैर्दृष्टः कालः सुप्तस्तदा च तैः।
सत्याद्या सप्त ये ह्यासन् कल्पेऽतीते महर्षयः॥ ६९॥
एवं ब्राह्मीषु रात्रीषु ह्यतीतासु सहस्रशः।
दृष्टवन्तस्तथा ह्यन्ये सुप्तं कालं महर्षयः॥ ७०॥
कल्पस्यादौ तु वहुशो यस्मात् संख्यायतुर्दश।

कल्पयामास वै ब्रह्मा तस्मात्कालो निरुच्यते ॥ ७१ ॥
स स्रष्टा सर्व्वभूतानां कल्पादिषु पुनः पुनः ।
व्यक्ताऽव्यक्तो महादेवस्तस्य सर्व्वमिदं जगत् ॥ ७२ ॥
इत्येष प्रतिसन्धिर्व्वः कीर्त्तितः कल्पयोर्द्वयोः ।
साम्प्रतातीतयोर्मध्ये प्रागवस्था बभूव या ॥ ७३ ॥
कीर्त्तिता तु समासेन कल्पे कल्पे यथा तथा ।
साम्प्रतन्ते प्रवक्ष्यामि कल्पमेतं निबोधत ॥ ७४ ॥

इति श्रीमहापुराणे वायुप्रोक्ते प्रतिसन्धिकीर्त्तनं
नाम सप्तमोऽध्यायः ।

---

# अथाष्टमोऽध्यायः।

## चतुराश्रमविभागः।

———000———

सूत उवाच। तुल्यं युगसहस्रस्य नैशङ्कालमुपास्य सः।
शर्व्वर्य्यन्ते प्रकुरुते ब्रह्मत्वं सर्गकारणात्॥ १॥
ब्रह्मा तु सलिले तस्मिन् वायुर्भूत्वा तदाचरत्।
अन्धकारे तदा तस्मिन् नष्टे स्थावरजङ्गमे॥ २॥
जलेन समनुव्याप्ते सर्व्वतः पृथिवीतले।
अविभागेन भूतेषु समन्तात्सुस्थितेषु च॥ ३॥
निशायामिव खद्योतः प्रावृट्काले ततस्ततः।
तदाकाशे चरन् सोऽथ वीक्ष्यमाणः स्वयम्भुवः॥ ४॥
प्रतिष्ठाया ह्युपायन्तु मार्गमाणस्तदा प्रभुः।
ततस्तु सलिले तस्मिन् ज्ञात्वा ह्यन्तर्गतां महीं॥ ५॥
अनुमानात्तु सम्बुद्धो भूमेरुद्धरणं प्रति।
चकारान्यान्तनुञ्चैव पूर्व्वकल्पादिषु स्मृतां॥ ६॥
स तु रूपं वराहस्य कृत्वापः प्राविशत् प्रभुः।
अद्भिः सञ्छादितामुर्व्वीं समीक्ष्याथ प्रजापतिः॥ ७॥
उद्धृत्योर्व्वीमथाङ्गास्तु अपस्तास्तु स न्यिमत्।
सामुद्रीस्तु समुद्रेषु नादेयीर्न्निम्नगास्वपि।
पार्थिवीस्तु स विन्यस्य पृथिव्यां सोऽचिनोद्गिरीन्॥ ८॥
प्राक्सर्गे दह्यमाने तु तदा संवर्त्तकाग्निना।
तेनाग्निना प्रलीनास्ते पर्व्वता भुवि सर्व्वशः॥ ९॥

शैत्यादेकार्णवे तस्मिन् वायुनापस्तु संहताः ।
निषक्ता यत्र यत्रासंस्तत्र तत्राऽचलोऽभवत् ॥ १० ॥
स्कन्नाचलत्वादचलाः पर्व्वभिः पर्व्वताः स्मृताः ।
गिरयोऽद्रिर्निगीर्णत्वाच्चयनाच्च शिलोच्चयाः ॥ ११ ॥
ततस्तु तां समुद्धृत्य क्षितिमन्तर्ज्जलात् प्रभुः ।
स्वस्थाने स्थापयित्वा च विभागमकरोत् पुनः ॥ १२ ॥
सप्त सप्त तु वर्षाणि तस्या द्वीपेषु सप्तसु ।
विषमाणि समीकृत्य शिलाभिरचिनोद्गिरीन् ॥ १३ ॥
द्वीपेषु तेषु वर्षाणि चत्वारिंशत्तथैव च ।
तावन्तः पर्व्वताश्चैव वर्षान्ते समवस्थिताः ।
सर्गादौ सन्निविष्टास्ते स्वभावेनैव नान्यथा ॥ १४ ॥
सप्तद्वीपाः समुद्राश्च अन्योन्यस्य तु मण्डलं ।
सन्निकृष्टाः स्वभावेन समावृत्य परस्परं ॥ १५ ॥
भूराद्यांश्चतुरो लोकांश्चन्द्रादित्यौ ग्रहैः सह ।
पूर्व्वन्तु निर्म्ममे ब्रह्मा स्थानानीमानि सर्व्वशः ॥ १६
कल्पस्य चास्य ब्रह्मा वै ह्यसृजत् स्थानिनः पुरा ।
आपोऽग्निः पृथिवी वायुरन्तरिक्षन्दिवन्तथा ॥ १७ ॥
स्वर्गन्दिशः समुद्रांश्च नदीः सर्व्वांश्च पर्व्वतान् ।
ओषधीनां तथात्मानमात्मानं वृक्षवीरुधां ॥ १८ ॥
लवाः काष्ठाः कलाश्चैव मुहूर्त्तं सन्धिरात्र्यहं ।
अर्द्धमासांश्च मासांश्च अयनाब्दयुगानि च ॥ १९ ॥
स्थानाभिमानिनश्चैव स्थानानि च पृथक् पृथक् ।
स्थानात्मनः स सृष्ट्वा वै युगावस्थां विनिर्म्ममे ॥ २० ॥

कृतन्त्रेता द्वापरश्च कलिश्चैव तथा युगं ।
कल्पस्यादौ कृतयुगे प्रथमे सोऽसृजत् प्रजाः ॥ २१ ॥
प्रागुक्ता या मया तुभ्यं पूर्व्वकालं प्रजास्तु ताः ।
तस्मिन् संवर्त्तमाने तु कल्पे दग्धास्तदाऽग्निना ॥ २२ ॥
अप्राप्ता यास्तपोलोकं जनलोकं समाश्रिताः ।
प्रवर्त्तन्ति पुनः सर्गे बीजार्थन्ता भवन्ति हि ॥ २३ ॥
बीजार्थेन स्थितास्तत्र पुनः सर्गस्य कारणात् ।
ततस्ताः सृज्यमानास्तु सन्तानार्थं भवन्ति हि ॥ २४ ॥
धर्म्मार्थकाममोक्षाणामिह ताः साधकाः स्मृताः ।
देवाश्च पितरश्चैव ऋषयो मनवस्तथा ॥ २५ ॥
ततस्ते तपसा युक्ता स्थानान्यापूरयन्ति हि ।
ब्रह्मणो मानसास्ते वै सिद्धात्मानो भवन्ति हि ॥ २६ ॥
ये सर्गाद्वेषयुक्तेन कर्म्मणा ते दिवङ्गताः ।
आवर्त्तमाना इह ते सम्भवन्ति युगे युगे ॥ २७ ॥
स्वकर्म्मफलशेषेण ख्यातास्चैव तथात्मिकाः ।
सम्भवन्ति जनाल्लोकात् कर्म्मसंशयबन्धनात् ॥ २८ ॥
आशयः कारणं तत्र बोद्धव्यं कर्म्मणान्तु सः ।
तैः कर्म्मभिस्तु जायन्ते जनाल्लोकाः शुभाशुभैः ॥ २९ ॥
गृह्णन्ति ते शरीराणि नानारूपाणि योनिषु ।
देवाद्यस्थावरान्ते च उत्पद्यन्ते परस्परं ॥ ३० ॥
तेषां ये यानि कर्म्माणि प्राक् सृष्टेः प्रतिपेदिरे ।
तान्येते प्रतिपद्यन्ते सृज्यमानाः पुनः पुनः ॥ ३१ ॥
हिंस्राहिंस्रे मृदुक्रूरे धर्म्माधर्म्मे ऋतानृते ।

तद्भाविताः प्रपद्यन्ते तस्मात्तत्तस्य रोचते ॥ ३२ ॥
कल्पेष्वासन् व्यतीतेषु रूपनामानि यानि च ।
तान्येवानागते काले प्रायशः प्रतिपेदिरे ॥ ३३ ॥
तस्मात्तु नामरूपाणि तान्येव प्रतिपेदिरे ।
पुनः पुनस्ते कल्पेषु जायन्ते नामरूपतः ॥ ३४ ॥
ततः सर्गे ह्यवष्टब्धे सिसृक्षोर्ब्रह्मणस्तु वै ।
प्रजास्ता ध्यायतस्तस्य सत्याभिध्यायिनस्तदा ॥ ३५ ॥
मिथुनानां सहस्रन्तु सोऽसृजद्वै मुखात्तदा ।
जनास्ते ह्युपपद्यन्ते सत्त्वोद्रिक्ताः सुचेतसः ॥ ३६ ॥
सहस्रमन्यद्वक्षस्तो मिथुनानां ससर्ज्ज ह ।
ते सर्व्वे रजसोद्रिक्ता शुष्मिणश्चाप्यशुष्मिणः ॥ ३७ ॥
सृष्ट्वा सहस्रमन्यत्तु द्वन्द्वानामूरुतः पुनः ।
रजस्तमोभ्यामुद्रिक्ता ईहाशीलास्तु ते स्मृताः ॥ ३८ ॥
पद्भ्यां सहस्रमन्यत्तु मिथुनानां ससर्ज्ज ह ।
उद्रिक्तास्तमसा सर्व्वे निःश्रीका ह्यल्पतेजसः ॥ ३९ ॥
ततो वै हर्षमानास्ते द्वन्द्वोत्पन्नास्तु प्राणिनः ।
अन्योन्या हृच्छयाविष्टा मैथुनायोपचक्रमुः ॥ ४० ॥
ततः प्रभृतिकल्पेऽस्मिन् मिथुनोत्पत्तिरुच्यते ।
मासे मासेऽर्त्तवं यद्यत्तदासीद्धि योषितां ॥ ४१ ॥
तस्मात्तदा न सुषुवुः सेवितैरपि मैथुनैः ।
आयुषोऽन्ते प्रसूयन्ते मिथुनान्येव ते सकृत् ॥ ४२ ॥
कुटकाः कुविकाश्चैव(१) उत्पद्यन्ते मुमूर्षिताः ।

१ कुटकान् कुन्दकांश्चैव इति क०।

ततः प्रभृतिकल्पेऽस्मिन् मिथुनानां हि सम्भवः ॥ ४३ ॥
ध्याते तु मनसा तासां प्रजानां जायते सकृत् ।
शब्दादिविषयः शुद्धः प्रत्येकं पञ्चलक्षणः ॥ ४४ ॥
इत्येवं मनसा पूर्व्वं प्राक्सृष्टिर्या प्रजापतेः ।
तस्यान्ववाये सम्भूता यैरिदं पूरितं जगत् ॥ ४५ ॥
सरित्सरःसमुद्रांश्च सेवन्ते पर्व्वतानपि ।
तदा नात्यम्बुशीतोष्णा युगे तस्मिन् चरन्ति वै ॥ ४६ ॥
पृथ्वीरसोद्भवं नाम आहारं ह्याहरन्ति वै ।
ताः प्रजाः कामचारिण्यो मानसीं सिद्धिमास्थिताः ॥४७॥
धर्माधर्मौ न तास्वास्तां निर्विशेषाः प्रजास्तु ताः ।
तुल्यमायुः सुखं रूपं तासां तस्मिन् कृते युगे ॥ ४८ ॥
धर्माधर्मौ न तास्वास्तां कल्पादौ तु कृते युगे ।
स्वेन स्वेनाधिकारेण जज्ञिरे ते कृते युगे ॥ ४९ ॥
चत्वारि तु सहस्राणि वर्षाणां दिव्यसंख्यया ।
आद्यङ्कृतयुगं प्राहुः सन्ध्यानान्तु चतुःशतं ॥ ५० ॥
ततः सहस्रशस्तासु प्रजासु प्रथितास्वपि ।
न तासाम्प्रतिघातोऽस्ति न द्वन्द्वनापि च क्रमः ॥ ५१ ॥
पर्व्वतोदधिसेविन्यो ह्यनिकेताश्रयास्तु ताः ।
विशोकाः सत्त्वबहुलाः एकान्तसुखितप्रजाः ॥ ५२ ॥
ता वै निष्कामचारिण्यो नित्यं मुदितमानसाः ।
पशवः पक्षिणश्चैव न तदासन् सरीसृपाः ॥ ५३ ॥
नोद्भिज्जा नारकाश्चैव ते ह्यधर्म्मप्रसूतयः ।
न मूलफलपुष्पञ्च नार्त्तवं ऋतवो न च ॥ ५४ ॥
सर्व्वकामसुखः कालो नात्यर्थं ह्युष्णशीतता ।

मनोभिलषिताः कामास्तासां सर्व्वत्र सर्व्वदा ॥ ५५ ॥
उत्तिष्ठन्ति पृथिव्यां वै ताभिर्ध्याता रसोत्थिताः ।
बलवर्णकरी तासां सिद्धिः सा रोगनाशिनी ॥ ५६ ॥
असंस्कार्य्यैः शरीरैश्च प्रजास्ताः स्थिरयौवनाः ।
तासां विशुद्धात् सङ्कल्पाज्जायन्ते मिथुनाः प्रजाः ॥ ५७ ॥
समं जन्म च रूपञ्च म्रियन्ते चैव ताः समं ।
तदा सत्यमलोभश्च क्षमा तुष्टिः सुखन्दमः ॥ ५८ ॥
निर्विशेषाः कृताः सर्व्वा रूपायुःशीलचेष्टितैः ।
अबुद्धिपूर्व्वकं वृत्तं प्रजानां जायते स्वयं ॥ ५९ ॥
अप्रवृत्तिः कृतयुगे कर्म्मणोः शुभपापयोः ।
वर्णाश्रमव्यवस्थाश्च न तदासन्न सङ्करः ॥ ६० ॥
अनिच्छाद्वेषयुक्तास्ते वर्त्तयन्ति परस्परं ।
तुल्यरूपायुषः सर्व्वा अधमोत्तमवर्ज्जिताः ॥ ६१ ॥
सुखप्राया ह्यशोकाश्च उत्पद्यन्ते कृते युगे ।
नित्यप्रहृष्टमनसो महासत्वा महाबलाः ॥ ६२ ॥
लाभालाभौ न तास्वास्तां मित्रामित्रे प्रियाप्रिये ।
मनसा विषयस्तासान्निरीहाणां प्रवर्त्तते ।
न लिप्सन्ति हि ताऽन्योन्यन्नानुगृह्णन्ति चैव हि ॥ ६३ ॥
ध्यानं परं कृतयुगे त्रेतायां ज्ञानमुच्यते ।
प्रवृत्तं द्वापरे यज्ञं दानं कलियुगे वरं ॥ ६४ ॥
सत्त्वं कृतं रजस्त्रेता द्वापरन्तु रजस्तमौ ।
कलौ तमस्तु विज्ञेयं युगवृत्तवशेन तु ॥ ६५ ॥
कालः कृते युगे त्वेष तस्य संख्यान्निबोधत ।

चत्वारि तु सहस्राणि वर्षाणान्तत् कृतं युगम् ॥६६॥
सन्ध्यांशो तस्य दिव्यानि शतान्यष्टौ च संख्यया ।
तदा तासां बभूवायुर्न च क्लेशविपत्तयः ॥ ६७ ॥
ततः कृतयुगे तस्मिन् सन्ध्यांशे हि गते तु वै ।
पादावशिष्टो भवति युगधर्म्मस्तु सर्व्वशः ॥ ६८ ॥
सन्ध्यायामप्यतीतायामन्तकाले युगस्य तु ।
पादतश्चावतिष्ठेत्तु सन्ध्याधर्म्मो युगस्य तु ।
एवं कृते तु निःशेषे सिद्धिस्त्वन्तर्द्दधे तदा ॥ ६९ ॥
तस्याञ्च सिद्धौ भ्रष्टायां मानस्यामभवत्ततः ।
सिद्धिरन्या युगे तस्मिंस्त्रेतायामन्तरे कृता ॥ ७० ॥
सर्गादौ या मयाष्टौ तु मानस्यो वै प्रकीर्त्तिताः ।
अष्टौ ताः क्रमयोगेन सिद्धयो यान्ति संचयं ॥ ७१ ॥
कल्पादौ मानसी ह्येषा सिद्धिर्भवति सा कृते ।
मन्वन्तरेषु सर्व्वेषु चतुर्युगविभागशः ।
वर्णाश्रमाचारकृतः कर्म्मसिद्धोद्भवः स्मृतः ॥ ७२ ॥
सन्ध्याकृतस्य पादेन सन्ध्यापादेन चांशतः ।
कृतसन्ध्यांशका ह्येते त्रींस्त्रीन् पादान् परस्परान् ।
ह्रसन्ति युगधर्म्मैस्ते तपःश्रुतबलायुषैः ॥ ७३ ॥
ततः कृतांशे क्षीणे तु बभूव तदनन्तरं ।
त्रेतायां युगमन्यन्तु कृतांशमृषिसत्तमाः ॥ ७४ ॥
तस्मिन् क्षीणे कृतांशे तु तच्छिष्टासु प्रजास्विह ।
कल्पादौ संप्रवृत्तायास्त्रेतायाः प्रमुखे तदा ॥ ७५ ॥
प्रणश्यति तदा सिद्धिः कालयोगेन नान्यथा ।

तस्यां सिद्धौ प्रनष्टायामन्या सिद्धिरवर्त्तत ॥ ७६ ॥
अपां सौक्ष्म्ये प्रतिगते तदा मेघात्मना तु तौ ।
मेघेभ्यस्तनयित्नुभ्यः प्रवृत्तं वृष्टिसर्ज्जनं ॥ ७७ ॥
सकृदेव तया वृष्ट्या संयुक्ते पृथिवीतले ।
प्रादुरासंस्तदा तासां वृक्षास्तु गृहसंस्थिताः ॥ ७८ ॥
सर्व्वप्रत्युपभोगस्तु तासान्तेभ्यः प्रजायते ।
वर्त्तयन्ति हि तेभ्यस्तास्त्रेतायुगमुखे प्रजाः ॥ ७९ ॥
ततः कालेन महता तासामेव विपर्य्ययात् ।
रागलोभात्मको भावस्तदा ह्याकस्मिकोऽभवत् ॥ ८० ॥
यत्तद्भवति नारीणां जीवितान्ते तदार्त्तवं ।
तदा तद्वै न भवति पुनर्युगबलेन तु ॥ ८१ ॥
तासां पुनः प्रवृत्तन्तु मासे मासे तदार्त्तवं ।
ततस्तेनैव योगेन वर्त्ततां मिथुने तदा ॥ ८२ ॥
तासान्तत् कालभावित्वान्मासि मास्युपगच्छतां ।
अकाले ह्यार्त्तवोत्पत्तिर्गर्भोत्पत्तिरजायत ॥ ८३ ॥
विपर्य्ययेण तासान्तु तेन कालेन भाविना ।
प्राणश्यन्ति ततः सर्व्वे वृक्षास्ते गृहसंस्थिताः ॥ ८४ ॥
ततस्तेषु प्रनष्टेषु विभ्रान्ता व्याकुलेन्द्रियाः ।
अभिध्यायन्ति तां सिद्धिं सत्याभिध्यायिनस्तदा ॥ ८५ ॥
प्रादुर्ब्बभूवुस्तासाञ्च वृक्षास्ते गृहसंस्थिताः ।
वस्त्राणि च प्रसूयन्ते फलान्याभरणानि च ॥ ८६ ॥
तेष्वेव जायते तासां गन्धवर्णरसान्वितं ।
अमाक्षिकं महावीर्य्यं पुटके पुटके मधु ॥ ८७ ॥

तेन ता वर्त्तयन्तिस्म सुखे त्रेतायुगस्य च ।
हृष्टतुष्टास्तया सिद्धया प्रजा वै विगतज्वराः ॥ ८८ ॥
पुनः कालान्तरेणैव पुनर्लोभावृतास्तु ताः ।
वृचांस्तान् पर्य्यगृह्णन्त मधु वामाक्षिकं बलात् ॥ ८९ ॥
तासान्तेनापचारेण पुनर्लोभकृतेन वै ।
प्रनष्टा मधुना सार्द्धं कल्पवृक्षाः क्वचित् क्वचित् ॥ ९० ॥
तस्यामेवाल्पशिष्टायां संध्याकालवशात्तदा ।
प्रावर्त्तन्त तदा तासां द्वन्द्वान्यभ्युत्थितानि तु ॥ ९१ ॥
शीतवातातपैस्तीव्रैस्ततस्ता दुःखिता भृशं ।
द्वन्द्वैस्ताः पीड्यमानास्तु चक्रुरावरणानि च ॥ ९२ ॥
कृत्वा द्वन्द्वप्रतीकारं निकेतानि हि भेजिरे ।
पूर्व्वं निकामचारास्ते अनिकेताश्रया भृशं ॥ ९३ ॥
यथायोग्यं यथाप्रीति निकेतेष्ववसन् पुनः ।
मरुधन्वसु निम्नेषु पर्व्वतेषु नदीषु च ।
संश्रयन्ति च दुर्गाणि धन्वानं शाश्वतोदकं ॥ ९४ ॥
यथायोगं यथाकामं समेषु विषमेषु च ।
आरब्धास्ते निकेता वै कर्त्तुं शीतोष्णवारणं ॥ ९५ ॥
ततः संस्थापयामास खेटानि च पुराणि च ।
ग्रामांश्चैव यथाभागं तथैवान्तःपुराणि च ॥ ९६ ॥
तासामायामविष्कम्भान् सन्निवेशान्तराणि च ।
चक्रुस्तदा यथाप्रज्ञं प्रदेशः संज्ञितस्तु तैः ॥ ९७ ॥
अङ्गुष्ठस्य प्रदेशिन्या व्यासः प्रादेश उच्यते ।
तालः स्मृतो मध्यमया गोकर्णश्चाप्यनामया ॥ ९८ ॥

कनिष्ठया वितस्तिस्तु द्वादशाङ्गुल उच्यते ।
रत्निरङ्गुलपर्व्वाणि संख्यया त्वेकविंशतिः ॥ ६८ ॥
चतुर्विंशतिभिश्चैव हस्तः स्यादङ्गुलानि तु ।
किष्कुः स्मृतो द्विरत्निस्तु द्विचत्वारिंशदङ्गुलं ॥ १०० ॥
चतुर्हस्तं धनुर्दण्डो नालिकायुगमेव च ।
धनुःसहस्रे द्वे तत्र गव्यूतिस्तैर्विभाव्यते ॥ १०१ ॥
अष्टौ धनुःसहस्राणि योजनन्तैर्निरुच्यते ।
एतेन योजनेनैव सन्निवेशस्ततः कृतः ॥ १०२ ॥
चतुर्णामेव दुर्गाणां स्वसमुत्थानि त्रीणि तु ।
चतुर्थं कृत्रिमं दुर्गं तस्य वक्ष्याम्यहं विधिं ॥ १०३ ॥
सौधोच्चवप्रप्राकारं सर्व्वतःखातकावृतं ।
तदेकं स्वस्तिकद्वारं कुमारीपुरमेव च ॥ १०४ ॥
स्रोतसीसह तद्द्वारं निखातं पुनरेव च ।
हस्ताष्टौ च दश श्रेष्ठा नवाष्टौ वाऽपरे मताः ॥ १०५ ॥
खेटानां नगराणाञ्च ग्रामाणाञ्चैव सर्व्वशः ।
त्रिविधानाञ्च दुर्गाणां पर्व्वतोदकबन्धनं ॥ १०६ ॥
त्रिविधाणाञ्च दुर्गाणां विष्कम्भायाममेव च ।
योजनानाञ्च विष्कम्भमष्टभागार्द्धमायतं ॥ १०७ ॥
परमार्द्धार्द्धमायामं प्रागुदक्प्रवरं पुरं ।
छिन्नकर्णं विकर्णन्तु व्यञ्जनं कृशसंस्थितं ॥ १०८ ॥
वृत्तं हीनञ्च दीर्घञ्च नगरं न प्रशस्यते ।
चतुरस्रार्ज्जवन्दिकस्थं प्रशस्तं वै पुरं परं ॥ १०९ ॥
चतुर्विंशतिराद्यन्तु हस्तानष्टशतं परं ।

अत्र मध्यं प्रशंसन्ति ह्रस्वोत्कृष्टविवर्जितं ॥ ११० ॥
अथ किष्कुशतान्यष्टौ प्राहुर्मुख्यनिवेशनं ।
नगरादर्द्धविष्कम्भं खेटं ग्रामं ततो बहिः(१) ॥ १११ ॥
नगराद्योजनं खेटं खेटाद्ग्रामोऽर्द्धयोजनं ।
द्विक्रोशं परमा सीमा क्षेत्रसीमा चतुर्धनुः ॥ ११२ ॥
विंशद्धनूंषि विस्तीर्णो दिशां मार्गस्तु तैः कृतः ।
विंशद्धनुर्ग्राममार्गः सीमामार्गो दशैव तु ॥ ११३ ॥
धनूंषि दश विस्तीर्णः श्रीमान् राजपथः स्मृतः ।
नृवाजिरथनागानामसम्बाधः सुसञ्चरः ॥ ११४ ॥
धनूंषि चैव चत्वारि शाखारथ्यास्तु तैः कृताः ।
त्रिकरथ्योपरथ्याश्च द्विकाश्चाप्युपरथ्यकाः ॥ ११५ ॥
घण्टापथश्चतुष्पाद्स्त्रिपदश्च गृहान्तरं ।
वृत्तिमार्गास्त्वर्द्धपदं प्राग्वंशः पदिकः स्मृतः ॥ ११६ ॥
अवस्करं(२) परीवाहं पदमात्रं समन्ततः ।
कृतेषु तेषु स्थानेषु पुनश्चक्रुर्गृहाणि वै ॥ ११७ ॥
यथा ते पूर्व्वमासन्वै वृक्षास्तु गृहसंस्थिताः ।
तथा कर्त्तुं समारब्धाश्चिन्तयित्वा पुनः पुनः ॥ ११८ ॥
वृक्षाश्चैव गताः शाखा नताश्चैव परागताः ।
अत ऊर्द्ध्वं गताश्चान्या एवं तिर्य्यग्गताः पुरा ॥ ११९ ॥
बुद्ध्याऽन्विष्यस्तथा न्यायो वृक्षशाखा यथा गताः ।
तथा कृतास्तु तैः शाखास्तस्माच्छालास्तु ताः स्मृताः ॥ १२० ॥

---

१ नगोर्द्धेन इति ख०, ग०, क० च ।
२ अवस्करे इति क० ।

एवं प्रसिद्धाः शाखाभ्यः शालाश्चैव गृहाणि च ।
तस्मात्ता वै स्मृताः शालाः शालात्वञ्चैव तासु तत् ॥१२१॥
प्रसीदति मनस्तासु मनः प्रसादयन्ति ताः ।
तस्माद्गृहाणि शालाश्च प्रासादाश्चैव संज्ञिताः ॥ १२२ ॥
कृत्वा द्वन्द्वोपघातांस्तान् वार्त्तोपायमचिन्तयन् ।
नष्टेषु मधुना सार्द्धं कल्पवृक्षेषु वै तदा ।
विषादव्याकुलास्ता वै प्रजास्तृष्णाक्षुधात्मिकाः ॥ १२३ ॥
ततः प्रादुर्बभौ तासां सिद्धिस्त्रेतायुगे पुनः ।
वार्त्तार्थसाधिकाप्यन्या वृष्टिस्तासां हि कामतः ॥ १२४ ॥
तासां वृष्ट्युदकानीह यानि निम्नगतानि तु ।
वृष्ट्या तदभवत्स्रोतः खातानि निम्नगाः स्मृताः ॥ १२५॥
एवं नद्यः प्रवृत्तास्तु द्वितीये वृष्टिसर्जने ।
ये परस्तादपां स्तोका आपन्नाः पृथिवीतले ॥ १२६ ॥
अपाम्भूमेश्च संयोगादोषध्यस्तासु चाभवन् ।
पुष्पमूलफलिन्यस्तु ओषध्यस्ताः प्रजज्ञिरे ॥ १२७ ॥
अफालकृष्टाश्चानुप्ता ग्राम्याऽरण्याश्चतुर्दश ।
ऋतुपुष्पफलाश्चैव वृक्षा गुल्माश्च जज्ञिरे ॥ १२८ ॥
प्रादुर्भावश्च त्रेतायां वार्त्तायामौषधस्य तु ।
तेनौषधेन वर्त्तन्ते प्रजास्त्रेतायुगे तदा ॥ १२९ ॥
ततः पुनरभूत्तासां रागो लोभश्च सर्व्वशः ।
अवश्यम्भाविनार्थेन त्रेतायुगवशेन तु ॥ १३० ॥
ततस्ताः पर्य्यगृह्णन्त नदीक्षेत्राणि पर्व्वतान् ।
वृक्षान् गुल्मौषधीश्चैव प्रसह्यन्तु यथाबलं ॥ १३१ ॥

सिद्धात्मानस्तु ये पूर्व्वं व्याख्याताः प्राकृते मया ।
ब्रह्मणा मानवास्ते वै उत्पन्ना योजनादिह ॥ १३२ ॥
शान्ताय शुष्मिणश्चैव कर्म्मिणो दुःखिनस्तदा ।
ततः प्रवर्त्तमानास्ते त्रेतायां जज्ञिरे पुनः ॥ १३३ ॥
ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा द्रोहिजनास्तथा ।
भाविताः पूर्व्वजातीषु कर्म्मभिश्चाशुभाशुभैः ॥ १३४ ॥
इतस्तेभ्यो बला ये तु सत्यशीला ह्यहिंसकाः ।
वीतलोभा जितात्मानो निवसन्तिस्म तेषु वै ॥ १३५ ॥
प्रतिगृह्णन्ति कुर्व्वन्ति तेभ्यश्चान्येऽल्पतेजसः ।
एवं विप्रतिपन्नेषु प्रपन्नेषु परस्परं ॥ १३६ ॥
तेन दोषेण तेषान्ता ओषध्यो मिषतां तदा ।
प्रनष्टा ह्रियमाणा वै मुष्टिभ्यां सिकता यथा ॥ १३७ ॥
अग्रसद्ग्रुच्य्गवलाद्ग्राम्यारण्याश्चतुर्दश ।
फलं गृह्णन्ति पुष्पैश्च पुष्पं पत्रैश्च याः पुनः ॥ १३८ ॥
ततस्तासु प्रनष्टासु विभ्रान्तास्ताः प्रजास्तदा ।
स्वयम्भुवं प्रभुञ्जग्मुः क्षुधाविष्टाः प्रजापतिं ॥ १३९ ॥
वृत्त्यर्थमभिलिप्सन्त आदौ त्रेतायुगस्य तु ।
ब्रह्मा स्वयम्भूर्भगवान् ज्ञात्वा तासां मनीषितं ॥ १४० ॥
युक्तं प्रत्यक्षदृष्टेन दर्शनेन विचार्य्य च ।
ग्रस्ताः पृथिव्या ओषध्यो ज्ञात्वा प्रत्यदुहत्पुनः ॥ १४१ ॥
कृत्वा वत्सं सुमेरुन्तु दुदोह पृथिवीमिमां ।
दुग्धेयं गौस्तदा तेन बीजानि पृथिवीतले ॥ १४२ ॥
जज्ञिरे तानि बीजानि ग्राम्यारण्यास्तु ताः पुनः ।

ओषध्यः फलपाकान्ताः सप्तसप्तदशास्तु ताः ॥ १४३ ॥
व्रीहयश्च यवाश्चैव गोधूमा अणवस्तिलाः ।
प्रियङ्गवो ह्युदाराश्च कारूषाश्च सचीनकाः ॥ १४४ ॥
माषा मुद्गा मसूराश्च निष्पावाः सकुलत्थकाः ।
आढ़क्यश्चणकाश्चैव सप्तसप्तदशाः स्मृताः ॥ १४५ ॥
इत्येता ओषधीनान्तु ग्राम्याणां जातयः स्मृताः ।
ओषध्यो यज्ञियाश्चैव ग्राम्यारण्याश्चतुर्द्दश ॥ १४६ ॥
व्रीहयः सयवा माषा गोधूमा अणवस्तिलाः ।
प्रियङ्गुसप्तमा ह्येते अष्टमी तु कुलत्थिका ॥ १४७ ॥
श्यामाकास्त्वथ नीवारा जर्त्तिलाः सगवेधुकाः ।
कुरुविन्दा वेणुयवास्तथा मर्क्कटकाश्च ये ॥ १४८ ॥
ग्राम्यारण्याः स्मृता ह्येता ओषध्यस्तु चतुर्द्दश ।
उत्पन्नाः प्रथमा ह्येता आदौ त्रेतायुगस्य तु ॥ १४९ ॥
अफालकृष्टा ओषध्यो ग्राम्यारण्यास्तु सर्व्वशः ।
वृक्षा गुल्मलता वल्ली वीरुधस्तृणजातयः ॥ १५० ॥
मूलैः फलैश्च रोहिण्यो गृह्णन् पुष्पैश्च जायते(१) ।
पृथ्वी दुग्धा तु वीजानि यानि पूर्व्वं स्वयम्भुवा ॥ १५१ ॥
ऋतुपुष्पफलास्ता वै ओषध्यो जज्ञिरे त्विह ।
यदा प्रसृष्टा ओषध्यो न प्ररोहन्ति ताः पुनः ॥ १५२ ॥
ततः स तासां वृत्त्यर्थं वार्त्तोपायञ्चकार ह ।
ब्रह्मा स्वयम्भूर्भगवान् दृष्ट्वा सिद्धिन्तु कर्म्मजां ॥ १५३ ॥

---

१ याः फलमिति क० ।

ततः प्रभृत्यथौषध्यः कृष्टपच्यास्तु जज्ञिरे ।
संसिद्धायान्तु वार्त्तायान्ततस्तासां स्वयम्भुवः ।
मर्य्यादाः स्थापयामास यथारब्धाः परस्परं ॥ १५४ ॥
ये वै परिगृहीतारस्तासामासन्विविधात्मकाः ।
इतरेषां कृतत्राणाः स्थापयामास क्षत्रियान् ॥ १५५ ॥
उपतिष्ठन्ति ये तान्वै यावन्तो निर्भयास्तथा ।
सत्यं ब्रह्म यथा भूतं ब्रुवन्तो ब्राह्मणाश्च ते ॥ १५६ ॥
ये चान्ये प्यबलास्तेषां वैश्यसंकर्म्मसंस्थिताः ।
कीनाशानाशयन्ति स्म पृथिव्यां प्रागतन्द्रिताः ।
वैश्यानेव तु तानाहुः कीनाशान् वृत्तिसाधकान् ॥ १५७॥
शोचन्तश्च द्रवन्तश्च परिचर्य्यासु ये रताः ।
निस्तेजसोऽल्पवीर्य्याश्च शूद्रास्तानब्रवीत्तु सः ॥ १५८ ॥
तेषां कर्म्माणि धर्म्मांश्च ब्रह्मा तु व्यदधात् प्रभुः ।
संस्थितौ प्राकृतायान्तु चातुर्व्वर्ण्यस्य सर्व्वशः ॥ १५९ ॥
पुनः प्रजास्तु ता मोहात् तान् धर्म्मान्तानपालयन् ।
वर्णधर्म्मैरजीवन्त्यो(१) व्यरुध्यन्त परस्परं ॥ १६० ॥
ब्रह्मा तमर्थं बुद्ध्वा तु याथातथ्येन वै प्रभुः ।
क्षत्रियाणां बलं दण्डं युद्धमाजीवमादिशत् ॥ १६१ ॥
याजनाध्यापनञ्चैव तृतीयञ्च प्रतिग्रहं ।
ब्राह्मणानां विभुस्तेषां कर्म्माण्येतान्यथादिशत् ॥ १६२ ॥
पाशुपाल्यं वाणिज्यञ्च कृषिञ्चैव विशान्ददौ ।

१ वर्णधर्म्मैश्च जीवन्त्य इति ख० ।

शिल्पाजीवं भृतिञ्चैव शूद्राणां व्यदधात् प्रभुः ॥ १६३ ॥
सामान्यानि तु कर्म्माणि ब्रह्मक्षत्रविशां पुनः ।
यजनाध्ययनं दानं समान्यानि तु तेषु च ॥ १६४ ॥
कर्म्माजीवन्ततो दत्त्वा तेभ्यश्चैव परस्परं ।
लोकान्तरेषु स्थानानि तेषां सिद्ध्याऽददत् प्रभुः ॥ १६५
प्राजापत्यं ब्राह्मणानां स्मृतं स्थानं क्रियावतां ।
स्थानमैन्द्रं क्षत्रियाणां संग्रामेष्वपलायिनां ॥ १६६ ॥
वैश्यानां मारुतं स्थानं स्वधर्म्ममुपजीविनां ।
गान्धर्व्वं शूद्रजातीनां प्रतिचारेण तिष्ठतां ॥ १६७ ॥
स्थानान्येतानि वर्णानां व्यत्याचारवतां स्वयं ।
ततः स्थितेषु वर्णेषु स्थापयामास चाश्रमान् ॥ १६८ ॥
गृहस्थो ब्रह्मचारित्वं वानप्रस्थं सभिक्षुकं ।
आश्रमांश्चतुरो ह्येतान् पूर्व्वमास्थापयत् प्रभुः ॥ १६९ ॥
वर्णकर्म्माणि ये केचित्तेषामिह न कुर्व्वते ।
कृतः कर्म्मक्षितिं प्राहुराश्रमस्थानवासिनः ॥ १७० ॥
ब्रह्मा तान् स्थापयामास आश्रमान्नामनामतः ।
निर्द्देशार्थं ततस्तेषां ब्रह्मा धर्म्मान् प्रभाषत ।
प्रस्थानानि च तेषां वै यमांश्च नियमांश्च ह ॥ १७१ ॥
चातुर्व्वर्णात्मकः पूर्व्वं गृहस्थश्चाश्रमः स्मृतः ।
त्रयाणामाश्रमाणाञ्च प्रतिष्ठायोनिरेव च ।
यथाक्रमं प्रवक्ष्यामि यमैश्च नियमैश्च ते ॥ १७२ ॥
दाराऽग्नयोऽथातिथयइज्याश्राद्धक्रियाः प्रजाः ।
इत्येष वै गृहस्थस्य समासाद्धर्म्मसंग्रहः ॥ १७३ ॥

दण्डी च मेखली चैव ह्यधःशायी तथा जटी ।
गुरुशुश्रूषणञ्चैवं विद्याहै ब्रह्मचारिणः ॥ १७४ ॥
चीरपत्राजिनानि स्युर्धान्यमूलफलौषधं ।
उभे सन्ध्येऽवगाहश्च होमश्चारण्यवासिनां ॥ १७५ ॥
आसन्नमुसले भैक्षमस्तेयं शौचमेव च ।
अप्रमादोऽव्यवायश्च दया भूतेषु च क्षमा ॥ १७६ ॥
अक्रोधो गुरुशुश्रूषा सत्यञ्च दशमं स्मृतं ।
दशलक्षणिको ह्येष धर्म्मः प्रोक्तः स्वयम्भुवा ॥ १७७ ॥
भिक्षोर्व्रतानि पञ्चात्र पञ्चैवोपव्रतानि च ।
आचारशुद्धिर्नियमः शौचञ्च प्रतिकर्म्म च ।
सम्यग्दर्शनमित्येवं पञ्चैवोपव्रतान्यपि ॥ १७८ ॥

ध्यानं समाधिर्मनसेन्द्रियाणां
समागरैर्भैक्ष्यमथोपगम्य ।
मौनं पवित्रोपचितैर्विमुक्तिः
परिव्रजो धर्म्ममिमं वदन्ति ॥ १७९ ॥

सर्व्वे ते श्रेयसे प्रोक्ता आश्रमा ब्रह्मणा स्वयं ।
सत्यार्ज्जवन्तपः क्षान्तिः योगेज्या दमपूर्व्विका ॥ १८० ॥
वेदाः साङ्गाश्च यज्ञाश्च व्रतानि नियमाश्च ये ।
न सिद्ध्यन्ति प्रदुष्टस्य भावदोष उपागते ॥ १८१ ॥
वहिः कर्म्माणि सर्व्वाणि प्रसिद्ध्यन्ति कदा च न ।
अन्तर्भावप्रदुष्टस्य कुर्व्वतोऽपि पराक्रमान् ॥ १८२ ॥
सर्व्वस्वमपि यो दद्यात् कलुषेणान्तरात्मना ।
न तेन धर्म्मभाक्स स्याद्भाव एवात्र कारणं ॥ १८३ ॥

एवं देवाः सपितर ऋषयो मनवस्तथा।
तेषां स्थानममुष्मिंस्तु संस्थितानां प्रचक्ष्यते ॥ १८४ ॥
अष्टाऽशीतिसहस्राणि ऋषीणामूर्द्धरेतसां।
स्मृतन्तु तेषां तत्स्थानं तदेव गुरुवासिनां ॥ १८५ ॥
सप्तर्षीणान्तु यत्स्थानं स्मृतन्तद्वै दिवौकसां।
प्राजापत्यं गृहस्थानां न्यासिनां ब्रह्मणः चयः।
योगिनाममृतं स्थानं नानाधीनां न विद्यते ॥ १८६ ॥
स्थानान्याश्रमिणां तानि ये स्वधर्म्मे व्यवस्थिताः।
चत्वार एते पन्थानो देवयाना विनिर्म्मिताः ॥ १८७ ॥
ब्रह्मणा लोकतन्त्रेण आद्ये मन्वन्तरे भुवि।
पन्थानो देवयानाय तेषां द्वारं रविः स्मृतः ॥ १८८ ॥
तथैव पितृयानानां चन्द्रमा द्वारमुच्यते ॥
एवं वर्णाश्रमाणां वै प्रविभागे कृते तदा।
यदास्य न व्यवर्त्तन्त प्रजा वर्णाश्रमात्मिकाः ॥ १८९ ॥
ततोऽन्या मानसीः सोऽथ त्रेतामध्येऽसृजत् प्रजाः।
आत्मनः स्वशरीराच्च तुल्याश्चैवात्मना तु वै ॥ १९० ॥
तस्मिन्त्रेतायुगे त्वाद्ये मध्यं प्राप्ते क्रमेण तु।
ततोऽन्या मानसीस्तत्र प्रजाः स्रष्टुं प्रचक्रमे ॥ १९१ ॥
ततः सत्त्वरजोद्रिक्ताः प्रजाः सोऽथासृजत्प्रभुः।
धर्म्मार्थकाममोक्षाणां वार्त्तायाश्चैव साधिकाः ॥ १९२ ॥
देवाश्च पितरश्चैव ऋषयो मनवस्तथा।
युगानुरूपा धर्म्मेण यैरिमा विचिताः प्रजाः ॥ १९३ ॥
उपस्थिते तदा तस्मिन् प्रजाधर्मे स्वयम्भुवः।

अभिदध्यौ प्रजाः सर्व्वाः नानारूपास्तु मानसीः ॥ १९४ ॥
पूर्व्वोक्ता या मया तुभ्यञ्जनलोकं समाश्रिताः ।
कल्पेऽतीते तु ते ह्यासन् देवाद्यास्तु प्रजा इह ॥ १९५ ॥
ध्यायतस्तस्य ताः सर्व्वाः सम्भूत्यर्थमुपस्थिताः ।
मन्वन्तरक्रमेणेह कनिष्ठे प्रथमे मताः ॥ १९६ ॥
ख्यात्यानुबन्धैस्तैस्तैस्तु सर्व्वार्थैरिह भाविताः ।
कुशलाकुशलप्रायैः कर्म्मभिस्तैः सदा प्रजाः ।
तत्कर्म्मफलशेषेण उपष्टब्धाः प्रजज्ञिरे ॥ १९७ ॥
देवासुरपितृत्वैश्च पशुपक्षिसरीसृपैः ।
वृक्षनारकिकीटत्वैस्तैस्तैर्भावैरुपस्थिताः ।
आधीनार्थं प्रजानाञ्च आत्मनो वै विनिर्म्ममे ॥ १९८ ॥

इति श्रीमहापुराणे वायुप्रोक्ते चतुराश्रविभागो
नामाष्टमोऽध्यायः ।

## अथ नवमोऽध्यायः।

### देवादिसृष्टिवर्णनं।

———000———

सूत उवाच। ततोऽभिध्यायतस्तस्य जज्ञिरे मानसीप्रजाः।
तच्छरीरसमुत्पन्नैः कार्य्यैस्तैः कारणैः सह।
क्षेत्रज्ञाः समवर्त्तन्त गात्रेभ्यस्तस्य धीमतः॥ १ ॥
ततो देवासुरपितॄन् मानवञ्च चतुष्टयं।
सिसृक्षुरम्भांस्येतांश्च स्वात्मना समयूयुजत्॥ २ ॥
युक्तात्मनस्ततस्तस्य ततो मात्रा स्वयम्भुवः।
तमभिध्यायतः सर्गं प्रयत्नोऽभूत् प्रजापतेः॥ ३ ॥
ततोऽस्य जघनात् पूर्व्वमसुरा जज्ञिरे सुताः।
असुः प्राणः स्मृतो विप्रास्तज्जन्मानस्ततोऽसुराः॥ ४ ॥
यया सृष्टाः सुरास्तन्वा तां तनुं स व्यपोहत।
सापविद्धातनुस्तेन सद्योरात्रिरजायत॥ ५ ॥
सा तमोबहुला यस्मात्ततो रात्रिस्त्रियामिका।
आवृतास्तमसा रात्रौ प्रजास्तस्मात् स्वयम्भुवः॥ ६ ॥
दृष्ट्वा सुरांस्तु(१) देवेशस्तनुमन्यामपश्यत।
अव्यक्तां सत्त्वबहुलां ततस्तां सोऽभ्ययूयुजत्।

०१ देवांश्च इति ख०।

ततस्तां युञ्जतस्तस्य प्रियमासीत् प्रभोः किल ॥ ७ ॥
ततो मुखे समुत्पन्ना दीव्यतस्तस्य देवताः ।
यतोऽस्य दीव्यतो जातास्तेन देवाः प्रकीर्त्तिताः ॥ ८ ॥
धातुर्दिवीति यः प्रोक्तः क्रीडायां स विभाव्यते ।
तस्मात्तन्वान्तु दिव्यायां जज्ञिरे तेन देवताः ॥ ९ ॥
देवान् सृष्ट्वाथ देवेशस्तनुमन्यामपद्यत ।
सत्त्वमात्रात्मिकां देवस्ततोऽन्यां सोऽभ्यपद्यत ॥ १० ॥
पितृवन्मन्यमानस्तान् पुत्रान् प्राध्यायत प्रभुः ।
पितरो ह्युपपत्ताभ्यां(१) रात्र्यह्नोरन्तरासृजत् ।
तस्मात्ते पितरो देवाः पुत्रत्वन्तेन तेषु तत् ॥ ११ ॥
यया सृष्टास्तु पितरस्तान्तनुं स व्यपोहत ।
सापविद्धा तनुस्तेन सद्यः सन्ध्या प्रजायत ॥ १२ ॥
तस्मादहस्तु देवानां रात्रिर्या सासुरी स्मृता ।
तयोर्मध्ये तु वै पैत्री या तनुः सा गरीयसी ॥ १३ ॥
तस्माद्देवासुराः सर्व्वे ऋषयो मनवस्तथा ।
ते युक्तास्तामुपासन्ते ब्रह्मणो मध्यमान्तनुं ॥ १४ ॥
ततोऽन्यां स पुनर्ब्रह्मा तनुं वै प्रत्यपद्यत ।
रजोमात्रात्मिकायान्तु मनसा सोऽसृजत् प्रभुः ॥ १५ ॥
रजःप्रायात् ततः सोऽथ मानसानसृजत् सुतान् ।
मनसस्तु ततस्तस्य मानसा जज्ञिरे प्रजाः ॥ १६ ॥
दृष्ट्वा पुनः प्रजाश्चापि स्वान्तनुन्तामपोहत ।

१ पाठोऽयं न समीचीनः ।

सापविद्धा तनुस्तेन ज्योत्स्ना सद्यस्त्वजायत ॥ १७ ॥
तस्माद्भवन्ति संहृष्टा ज्योत्स्नाया उद्भवे प्रजाः ।
इत्येतास्तमवस्तेन व्यपविद्धा महात्मना ॥ १८ ॥
सद्योरात्र्यहनी चैव सन्ध्या ज्योत्स्ना च जज्ञिरे ।
ज्योत्स्ना सन्ध्या तथाहश्च सत्त्वमात्रात्मकं स्वयं ।
तमोमात्रात्मिका रात्रिः सा वै तस्मात् त्रियामिका ॥ १९ ॥
तस्माद्देवा दिव्यतन्वा हृष्टाः सृष्टा मुखात्तु वै ।
यस्मात्तेषां दिवा जन्म बलिनस्तेन ते दिवा ॥ २० ॥
तन्वा यदसुरान् रात्रौ जघनादसृजत् प्रभुः ।
प्राणेभ्यो रात्रिजन्मानो ह्यसह्या निशि तेन ते ॥ २१ ॥
एतान्येव भविष्याणां देवानामसुरैः सह ।
पितॄणां मानवानाञ्च अतीतानागतेषु वै ।
मन्वन्तरेषु सर्व्वेषाम् निमित्तानि भवन्ति हि ॥ २२ ॥
ज्योत्स्ना रात्र्यहनी सन्ध्या चत्वार्य्याभासितानि वै ।
भान्ति यस्मात्ततो भासि भाशब्दोऽयं मनीषिभिः ।
व्याप्तिदीप्त्यां निगदितः पुनश्चाह प्रजापतिः ॥ २३ ॥
सोऽम्भांस्येतानि दृष्ट्वा तु देवदानवमानवान् ।
पितॄंश्च वासृजत्सोऽन्यानात्मनो विबुधान् पुनः ॥ २४ ॥
तामुत्सृज्य तनुं कृत्स्नां ततोऽन्यामसृजत् प्रभुः ।
मूर्त्तिं रजस्तमःप्रायां पुनरेवाभ्य युयुजत् ॥ २५ ॥
अन्धकारे क्षुधाविष्टः ततोऽन्यां सृजते पुनः ।
तेन सृष्टाः क्षुधात्मानस्तेऽम्भांस्यादातुमुद्यताः ॥ २६ ॥
अम्भांस्येतानि रक्षाम उक्तवन्तश्च तेषु च ।

राक्षसास्ते स्मृता लोके क्रोधात्मानो निशाचराः ॥ २७ ॥
येऽब्रुवन् क्षिणुमोऽस्मांसि तेषां हृष्टाः परस्परं ।
तेन ते कर्म्मणा यक्षा गुह्यकाः क्रूरकर्म्मिणः ॥ २८ ॥
रक्षणे पालने चापि धातुरेष विभाव्यते ।
य एष क्षितिधातुर्व्वै क्षयणे सन्निरुच्यते ॥ २९ ॥
तान्दृष्ट्वा ह्यप्रियेणास्य केशाः शीर्य्यन्त धीमतः ।
शीतोष्णाच्चोच्छ्रिता ह्यूर्द्ध्वमदारोहन्त तं प्रभुं ॥ ३० ॥
हीना मच्छिरसो व्याला यस्माच्चैवापसर्प्पिताः ।
व्यालात्मानः स्मृता व्यालात् हीनत्वादहयः स्मृताः ॥३१॥
पन्नत्वात्पन्नगाश्चैव सर्पाश्चैवापसर्प्पिणः ।
तेषां पृथिव्यां निलयाः सूर्य्याचन्द्रमसोरधः ॥ ३२ ॥
तस्य क्रोधोद्भवो योऽसावग्निगर्भसुदारुणः ।
स तु सर्पसहोत्पन्नानाविवेश विषात्मिकान् ॥ ३३ ॥
सर्प्पान् सृष्ट्वा ततः क्रोधात् क्रोधात्मानो विनिर्म्ममे ।
वर्णेन कपिशेनोग्रास्ते भूताः पिशिताशनाः ॥ ३४ ॥
भूतत्वात्ते स्मृताः भूताः पिशाचाः पिशिताशनात् ।
धयतो गास्ततस्तस्य गन्धर्व्वा जज्ञिरे तदा ॥ ३५ ॥
धायतीत्येष धातुर्व्वै याज्ञार्थे परिपठ्यते ।
पिबतो जज्ञिरे गास्तु गन्धर्व्वास्तेन ते स्मृताः ॥ ३६ ॥
अष्टास्वेतासु सृष्टासु देवयोनिषु स प्रभुः ।
ततः स्वच्छन्दतोऽन्यानि वयांसि वयसोऽसृजत् ॥ ३७ ॥
छन्दतस्तानि छन्दांसि वयसोपि वयांस्यपि ।
मुख्यान्दृष्ट्वा तु देवो वै सृजत्पक्षिगणानपि ॥ ३८ ॥

मुखतोऽजान् ससर्जाथ वक्षसश्च वयोऽसृजत् ।
गाश्चैवाथोदराद् ब्रह्मा पार्श्वाभ्याञ्च विनिर्म्ममे ॥ ३९ ॥
पद्भ्याञ्चाश्वान् समातङ्गान्शरभान् गवयान् मृगान् ।
उष्ट्रानश्वतरांश्चैव ताश्चान्याश्चैव जातयः ॥ ४० ॥
ओषध्यः फलमूलानि रोमतस्तस्य जज्ञिरे ।
एवं पश्वोषधीः सृष्ट्वा न्ययुञ्जत्सोऽध्वरे प्रभुः ॥ ४१ ॥
तस्मादादौ तु कल्पस्य त्रेतायुगमुखे सदा ।
गौरजः पुरुषो मेषो ह्यश्वोऽश्वतरगर्द्दभौ ।
एतान् ग्राम्यान्पशूनाहुरारण्यांश्च निबोधत ॥ ४२ ॥
श्वापदा द्विखुरौ हस्ती वानरः पक्षिपञ्चमाः ।
उन्दकाः पशवः सृष्टाः सप्तमास्तु सरीसृपाः ॥ ४३ ॥
गायत्रं वरुणञ्चैव त्रिवृत्सोम्यं रथन्तरं ।
अग्निष्टोमञ्च यज्ञानां निर्म्ममे प्रथमान्मुखात् ॥ ४४ ॥
छन्दांसि त्रैष्टुभच्छन्दस्तोमं पञ्चदशन्तथा ।
बृहत्साममथोक्थञ्च दक्षिणात्सोऽसृजन्मुखात् ॥ ४५ ॥
सामानि जगतीच्छन्दस्तोमं पञ्चदशन्तथा ।
वैरूप्यमतिरात्रञ्च पश्चिमादसृजन्मुखात् ॥ ४६ ॥
एकविंशमथर्वाणमाप्तोर्य्यामाणमेव च ।
अनुष्टुभं सवैराजमुत्तरादसृजन्मुखात् ॥ ४७ ॥
विद्युतोऽशनिमेघांश्च रोहितेन्द्रधनूंषि च ।
वयांसि च ससर्जादौ कल्पस्य भगवान् प्रभुः ॥ ४८ ॥
उच्चावचानि भूतानि गात्रेभ्यस्तस्य जज्ञिरे ।
ब्रह्मणस्तु प्रजासर्गं सृजतो हि प्रजापतेः ॥ ४९ ॥

सृष्ट्वा चतुष्टयं पूर्व्वं देवासुरपितॄन् प्रजाः ।
ततः सृजति भूतानि स्थावराणि चराणि च ॥ ५० ॥
यक्षान् पिशाचान् गन्धर्व्वान् तथैवाप्सरसाङ्गणान् ।
नरकिन्नररक्षांसि वयःपशुमृगोरगान् ॥ ५१ ॥
अव्ययञ्च व्ययञ्चैव यदिदं स्थाणुजङ्गमं ।
तेषां ये यानि कर्म्माणि प्राक्सृष्ट्यां प्रतिपेदिरे ।
तान्येव प्रतिपद्यन्ते सृज्यमानाः पुनः पुनः ॥ ५२
हिंस्राहिंस्रे मृदुक्रूरे धर्म्माधर्म्मावृतानृते ।
तद्भाविताः प्रपद्यन्ते तस्मात्तत्तस्य रोचते ॥ ५३ ॥
महाभूतेषु नानात्वमिन्द्रियार्थेषु मूर्त्तिषु ।
विनियोगञ्च भूतानां धातैव व्यदधात् स्वयं ॥ ५४ ॥
केचित् पुरुषकारन्तु प्राहुः कर्म्म च मानवाः ।
दैवमित्यपरे विप्राः स्वभावं दैवचिन्तकाः ॥ ५५ ॥
पौरुषं कर्म्म दैवञ्च फलवृत्तिस्वभावतः ।
न चैकं न पृथग्भावमधिकं न तयोर्विदुः ।
एतदेवञ्च नैकञ्च न चोभे न च वाप्युभे ॥ ५६ ॥
कर्म्मस्थान् विषयान्ब्रूयुः सत्त्वस्थाः समदर्शिनः ।
नामरूपञ्च भूतानां कृतानाञ्च प्रपञ्चनं ।
वेदशब्देभ्य एवादौ निर्म्ममे स महेश्वरः ॥ ५७ ॥
ऋषीणां नामधेयानि याश्च देवेषु दृष्टयः ।
शर्व्वर्य्यन्ते प्रसूतानां तान्येवास्य ददाति सः ॥ ५८ ॥
यथर्त्तावृतुलिङ्गानि नानारूपाणि पर्य्यये ।
दृश्यन्ते तानि तान्येव तथा भावा युगादिषु ॥ ५९ ॥

एवम्विधासु सृष्टासु ब्रह्मणाऽव्यक्तजन्मना ।
अर्व्वय्यन्ते प्रदृश्यन्ते सिद्धिमाश्रित्य मानसीं ॥ ६० ॥
एवम्भुतानि सृष्टानि चराणि स्थावराणि च ।
यदास्य ताः प्रजाः सृष्टाः न व्यवर्धन्त धीमतः ॥ ६१ ॥
अथान्यान्मानसान्पुत्रान् सदृशानात्मनोऽसृजत् ।
भृगुं पुलस्त्यं पुलहं क्रतुमाङ्गिरसन्तथा ॥ ६२ ॥
मरीचिं दक्षमत्रिञ्च वसिष्ठञ्चैव मानसं ।
नव ब्रह्माण इत्येते पुराणे निश्चयङ्गताः ।
तेषां ब्रह्मात्मकानां वै सर्व्वेषां ब्रह्मवादिनां ॥ ६३ ॥
ततोऽसृजत्पुनर्ब्रह्मा रुद्रं रोषात्मसम्भवं ।
सङ्कल्पञ्चैव धर्म्मञ्च पूर्व्वेषामपि पूर्व्वजः ॥ ६४ ॥
अग्रे ससर्ज्ज वै ब्रह्मा मानसानात्मनः समान् ।
सनन्दनं ससनकं विद्वांसञ्च सनातनं ॥ ६५ ॥
सनत्कुमारञ्च विभुं सनकञ्च सनन्दनं ।
न ते लोकेषु सज्जन्ते निरपेक्षाः सनातनाः ॥ ६६ ॥
सर्व्वे ते ह्यागतज्ञाना वीतरागा विमत्सरा ।
तेष्वेवं निरपेक्षेषु लोकवृत्तानुकारणात्(१) ॥ ६७ ॥
हिरण्यगर्भो भगवान् परमेष्ठी ह्यचिन्तयत् ।
तस्य रोषात्समुत्पन्नः पुरुषोऽर्कसमद्युतिः ।
अर्द्धनारीनरवपुः तेजसा ज्वलनोपमः ॥ ६८ ॥
सर्व्वन्तेजोमयञ्जातमादित्यसमतेजसं ।

---

१ लोकरक्षार्थकारणादिति ख०

विभजात्मानमित्युक्त्वा तत्रैवान्तरधीयत ॥ ६९ ॥
एवमुक्त्वा द्विधाभूतः पृथक् स्त्री पुरुषः पृथक् ।
स चैकादशधा जज्ञे अर्द्धमात्मानमीश्वरः ॥ ७० ॥
तेनोक्तास्ते महात्मानः सर्व्वे एव महात्मना ।
जगतो बहुलीभावमधिकृत्य हितैषिणः ॥ ७१ ॥
लोकवृत्तान्तहेतोर्हि प्रयतध्वमतन्द्रिताः ।
विश्वं विश्वस्य लोकस्य स्थापनाय हिताय च ॥ ७२ ॥
एवमुक्तास्तु रुरुदुर्दुद्रुवुश्च समन्ततः ।
रोदनाद्द्रावणाच्चैव रुद्रा नाम्नेति विश्रुताः ॥ ७३ ॥
यैर्हि व्याप्तमिदं सर्व्वं त्रैलोक्यं सचराचरं ।
तेषामनुचरा लोके सर्व्वलोकपरायणाः(१) ॥ ७४ ॥
नैकनागायुतबला विक्रान्ताश्च गणेश्वराः ।
तत्र या सा महाभागा शङ्करस्यार्द्धकायिनी ॥ ७५ ॥
प्रागुक्ता तु मया तुभ्यं स्त्री स्वयम्भोर्मुखोद्गता ।
कायार्द्धं दक्षिणन्तस्याः शुक्लं वामन्तथाऽसितं ॥ ७६ ॥
आत्मानं विभजस्वेति सोक्ता देवी स्वयम्भुवा ।
सा तु प्रोक्ता द्विधाभूता शुक्ला कृष्णा च वै द्विजाः ।
तस्या नामानि वक्ष्यामि शृणुध्वं सुसमाहिताः ॥ ७७ ॥
स्वाहा स्वधा महाविद्या मेधा लक्ष्मीः सरस्वती ।
अपर्णा चैकपर्णा च तथा स्यादेव पाटला ॥ ७८ ॥
उमा हैमवती षष्ठी कल्याणी चैव नामतः ।
ख्यातिः प्रज्ञा महाभागा लोके गौरीतिविश्रुता ॥ ७९ ॥

१ वरा गणा इति घ०, ङ०, च

विश्वरूपमथार्य्याया: पृथग्देहविभावनात् ।
शृणु संक्षेपतस्तस्या यथावदनुपूर्व्वश: ॥ ८० ॥
प्रकृतिर्नियता रौद्री दुर्गा भद्रा प्रमाथिनी ।
कालरात्रिर्म्महामाया रेवती भूतनायिका ॥ ८१ ॥
द्वापरान्तविकारेषु देव्या नामानि मे शृणु ।
गौतमी कौशिकी आर्य्या चण्डी कात्यायनी सती ॥ ८२ ॥
कुमारी यादवी देवी वरदा कृष्णपिङ्गला (१) ।
वर्हिर्ध्वजा(२) शूलधरा परमब्रह्मचारिणी ॥ ८३ ॥
माहेन्द्री चेन्द्रभगिनी वृषकन्यैकवाससी ।
अपराजिता बहुभुजा प्रगल्भा सिंहवाहिनी ॥ ८४ ॥
एकानसा दैत्यहनी माया महिषमर्द्दिनी ।
अमोघा विन्ध्यनिलया विक्रान्ता गणनायिका ॥ ८५ ॥
देवीनामविकाराणि इत्येतानि यथाक्रमं ।
भद्रकाल्यास्तवोक्तानि देव्या नामानि तत्त्वत: ॥ ८६ ॥
ये पठन्ति नरास्तेषां विद्यते न पराभव: ।
अरण्ये प्रान्तरे वापि पुरे वापि गृहेपि वा ॥ ८७ ॥
रक्षामेतां प्रयुञ्जीत जले वापि स्थलेपि वा ।
व्याघ्रकुम्भीरचौरेभ्यो भूतस्थाने विशेषत: ।
आधिष्वपि च सर्व्वासु देव्या नामानि कीर्त्तयेत् ॥ ८८ ॥
अर्भकग्रहभूतैश्च पूतनामातृभि: सदा ।
अभ्यर्द्दितानां बालानां रक्षामेतां प्रयोजयेत् ॥ ८९ ॥

---

१ कृष्णपिङ्गला इति ।
२ वर्हिर्ध्वजेति ख० ।

महादेवी कुले हे तु प्रज्ञा श्रीश्च प्रकीर्त्त्यते ।
आभ्यां देवीसहस्राणि यैर्व्याप्तमखिलं जगत् ॥ ९० ॥
साऽसृजद्व्यवसायन्तु धर्म्मं भूतसुखावहं ।
सङ्कल्पश्चैव कल्पादौ जज्ञिरेऽव्यक्तयोनितः ॥ ९१ ॥
मानसश्च रुचिर्नाम विज्ञेयो ब्रह्मणः सुतः ।
प्राणात् स्वादसृजद्दक्षञ्चक्षुर्भ्याञ्च मरीचिकं ॥ ९२ ॥
भृगुस्तु हृदयाज्जज्ञे ऋषिः सलिलजन्मनः ।
शिरसोऽङ्गिरसश्चैव श्रोत्रादत्रिस्तथैव च ॥ ९३ ॥
पुलस्त्यञ्च तथोदानाद्व्यानाच्च पुलहं पुनः ।
समानजं वशिष्ठन्तु अपानान्निर्म्ममे क्रतुं ॥ ९४ ॥
अभिमानात्मकं भद्रं निर्म्ममे नीललोहितं ।
इत्येते ब्रह्मणः पुत्राः प्राणजा द्वादश स्मृताः ॥ ९५ ॥
इत्येते मानसाः पुत्रा विज्ञेया ब्रह्मणः सुताः ।
भृग्वादयस्तु ये सृष्टा न चैते ब्रह्मवादिनः ॥ ९६ ॥
गृहमेधिनः पुराणास्ते धर्म्मस्तैः प्राक्प्रवर्त्तितः ।
द्वादशैते प्रवर्त्तन्ते सह रुद्रेण वै प्रजाः ॥ ९७ ॥
ऋभुः सनत्कुमारस्तु द्वावेतावूर्द्ध्वरेतसौ ।
पूर्व्वोत्पन्नौ पुरा तेभ्यः सर्व्वेषामपि पूर्व्वजौ ॥ ९८ ॥
व्यतीते प्रथमे कल्पे पुराणे लोकसाधकौ ।
वैराजे तावुभौ लोके तेजः संक्षिप्य चास्थितौ ॥ ९९ ॥
तावुभौ योगधर्म्माणावारोप्यात्मानमात्मनि ।
प्रजाधर्म्मञ्च कामञ्च वर्त्तयेतां महौजसा ॥ १०० ॥
यथोत्पन्नस्तथैवेह कुमार इति चोच्यते ।

तस्मात्सनत्कुमारोयमिति नामास्य कीर्त्तितं ॥ १०१ ॥
तेषां द्वादश ते वंशा दिव्या देवगुणान्विताः ।
क्रियावन्तः प्रजावन्तो महर्षिभिरलङ्कृताः ॥ १०२ ॥
इत्येष करणोद्भूतो लोकान् स्रष्टुं स्वयम्भुवः ।
महदादिविशेषान्तो विकारः प्रकृतेः स्वयं ॥ १०३ ॥
चन्द्रसूर्य्यप्रभालोको ग्रहनक्षत्रमण्डितः ।
नदीभिश्च समुद्रैश्च पर्व्वतैश्च समावृतः ॥ १०४ ॥
पुरैश्च विविधाकारैः स्फीतैर्ज्जनपदैस्तथा ।
तस्मिन् ब्रह्मवनेऽव्यक्ते ब्रह्मा चरति शर्व्वरीं ॥ १०५ ॥
अव्यक्तबीजप्रभवस्तस्यैवानुग्रहोत्थितः ।
बुद्धिस्कन्धमयश्चैव इन्द्रियाङ्कुरकोटरः ॥ १०६ ॥
महाभूतप्रशाखश्च विशेषैः पत्रवांस्तथा ।
धर्म्माधर्म्मसुपुष्पस्तु सुखदुःखफलोदयः ॥ १०७ ॥
आजीवः सर्व्वभूतानामयं वृक्षः सनातनः ।
एतद् ब्रह्मवनञ्चैव ब्रह्मवृक्षस्य तस्य ह ॥ १०८ ॥
अव्यक्तं कारणं यत्तु नित्यं सदसदात्मकं ।
इत्येषोऽनुग्रहः सर्गो ब्रह्मणः प्राकृतस्तु यः ॥ १०९ ॥
मुख्यादयस्तु षट्सर्गा वैकृता बुद्धिपूर्व्वकाः ।
वैकाले समवर्त्तन्त ब्रह्मणस्तेऽभिमानिनः ॥ ११० ॥
सर्गाः परस्परस्याथ कारणन्ते बुधैः स्मृताः ।
दिव्यौ सुपर्णौ सयुजौ सशाखौ पटविद्रुमौ ॥ १११ ॥
एकस्तु यो द्रुमं वेत्ति नान्यः सर्व्वात्मनस्ततः ।
द्यौर्मूर्द्धानं यस्य विप्रास्तुवन्ति

खन्नाभिं वै चन्द्रसूर्य्यौ च नेत्रे।
दिशः श्रोत्रे चरणौ चास्य भूमिः
सोऽचिन्त्यात्मा सर्व्वभूतप्रसूतिः॥ ११२॥
वक्त्रादस्य ब्राह्मणाः संप्रसूता-
स्तद्वक्षसः क्षत्रियाः पूर्व्वभागे।
वैश्यास्चोरोर्य्यस्य पद्भ्याञ्च शूद्राः
सर्व्वे वर्णा गात्रतः संप्रसूताः॥ ११३॥
महेश्वरः परोऽव्यक्तादण्डमव्यक्तसम्भवं।
अण्डाज्जज्ञे पुनर्ब्रह्मा येन लोकाः कृतास्त्विमे॥ ११४॥

इति श्रीमहापुराणे वायुप्रोक्ते देवादिसृष्टिवर्णनं
नाम नवमोऽध्यायः।

# अथ दशमोऽध्यायः।

---000---

## मन्वन्तरवर्णनं।

सूत उवाच। एवं भूतेषु लोकेषु ब्रह्मणा लोककर्त्तृणा।
यदा ता न प्रवर्त्तन्ते प्रजाः केनापि हेतुना॥ १ ॥
तमोमात्रावृतो ब्रह्मा तदाप्रभृति दुःखितः।
ततः स विदधे बुद्धिमर्थनिश्चयगामिनीं॥ २॥
अथात्मनि समस्ताक्षीत्तमोमात्रां नियामिकां।
राजसत्वं पराजित्य वर्त्तमानं स धर्म्मतः।
तप्यते तेन दुःखेन शोकञ्चक्रे जगत्पतिः॥ ३ ॥
तमश्च व्यनुदत्तस्माद्रजस्तमससमावृणोत्॥ ४ ॥
तत्तमः प्रतिनुत्तं वै मिथुनं स व्यजायत।
अधर्म्माचरणाज्जज्ञे हिंसा शोकादजायत॥ ५॥
ततस्तस्मिन् समुद्भूते मिथुने चरणात्मनि।
ततश्च भगवानासीत् प्रीतश्चैवमशिश्रियत्॥ ६ ॥
स्वां तनुं स ततो ब्रह्मा तामपोहद्भास्वरां।
द्विधाकरोत्स तं देहमर्द्धेन पुरुषोऽभवत्॥ ७॥
अर्द्धेन नारी सा तस्य शतरूपा व्यजायत।
प्राकृतां भूतधात्रीं तां कामाद्वै सृष्टवान् विभुः॥ ८ ॥

सा दिवं पृथिवीञ्चैव महिम्ना व्याप्य धिष्ठिता।
अर्द्धाङ्गः सा तनुः पूर्व्वा दिवमावृत्य तिष्ठति ॥ ९ ॥
या त्वर्द्धात् सृजते नारी शतरूपां व्यजायत।
सा देवी नियुतन्तप्त्वा तपः परमदुश्चरं ॥ १० ॥
भर्त्तारन्दीप्तयशसं पुरुषं प्रत्यपद्यत।
स वै स्वायम्भुवः पूर्व्वं पुरुषो मनुरुच्यते ॥ ११ ॥
तस्यैकसप्ततियुगं मन्वन्तरमिहोच्यते।
लब्ध्वा तु पुरुषः पत्नीं शतरूपामयोनिजां ॥ १२ ॥
तया स रमते सार्द्धं तस्मात्सा रतिरुच्यते।
प्रथमः संप्रयोगः स कल्पादौ समवर्त्तत ॥ १३ ॥
विराजमसृजत् ब्रह्मा सोऽभवत् पुरुषो विराट्।
सम्राट्‌मानसरूपात्तु वैराजस्तु मनुः स्मृतः ॥ १४ ॥
स वैराजः प्रजासर्गः स सर्गे पुरुषो मनुः।
वैराजात्पुरुषाद्वीराच्छतरूपा व्यजायत ॥ १५ ॥
प्रियव्रतोत्तानपादौ पुत्रौ पुत्रवतां वरौ।
कन्ये द्वे च महाभागे याभ्यां जाताः प्रजास्त्विमाः ॥ १६ ॥
देवी नाम्ना तथाकूतिः प्रसूतिश्चैव ते शुभे।
स्वायम्भुवः प्रसूतिन्तु दक्षाय व्यसृजत् प्रभुः ॥ १७ ॥
प्राणो दक्षस्तु विज्ञेयः सङ्कल्पो मनुरुच्यते।
रुचेः प्रजापतेश्चैव आकूतिं प्रत्यपादयत् ॥ १८ ॥
आकूत्यां मिथुनं जज्ञे मानसस्य रुचेः शुभं।
यज्ञश्च दक्षिणा चैव यमकौ सम्बभूवतुः ॥ १९ ॥
यज्ञस्य दक्षिणायाञ्च पुत्रा द्वादश जज्ञिरे।

यामा इति समाख्याता देवाः स्वायम्भुवेऽन्तरे ॥ २० ॥
यमस्य पुत्रा यज्ञस्य तस्माद्यामास्तु ते स्मृताः ।
अजिताश्चैव शुक्राश्च गणौ द्वौ ब्रह्मणः स्मृतौ ॥ २१ ॥
यामाः पूर्व्वं परिक्रान्ताः यतः संज्ञा दिवौकसः ।
स्वायम्भुवसुतायान्तु प्रसूत्यां लोकमातरः ॥ २२ ॥
तस्यां कन्याश्चतुर्विंशद्दक्षस्त्वजनयत् प्रभुः ।
सर्व्वास्ताश्च महाभागाः सर्व्वाः कमललोचनाः ॥ २३ ॥
योगपत्न्यश्च ताः सर्व्वाः सर्व्वास्ता योगमातरः ।
श्रद्धा लक्ष्मीर्धृतिस्तुष्टिः पुष्टिर्मेधा क्रिया तथा ।
बुद्धिर्लज्जा वपुः शान्तिः सिद्धिः कीर्त्तिस्त्रयोदशी ॥ २४ ॥
पत्न्यर्थं प्रतिजग्राह धर्म्मो दाक्षायणीः प्रभुः ।
द्वाराण्येतानि चैवास्य विहितानि स्वयम्भुवा ॥ २५ ॥
ताभ्यः शिष्टा यवीयस्य एकादश सुलोचनाः ।
ख्यातिः सत्यथ संभूतिः स्मृतिः प्रीतिः क्षमा तथा ॥ २६ ॥
सन्नतिश्चानसूया च ऊर्ज्जा स्वाहा स्वधा तथा ।
तास्ततः प्रत्यपद्यन्त पुनरन्ये महर्षयः ॥ २७ ॥
रुद्रो भृगुर्मरीचिश्च अङ्गिराः पुलहः क्रतुः ।
पुलस्त्योऽत्रिर्वशिष्ठश्च पितरोऽग्निस्तथैव च ॥ २८ ॥
सतीं भवाय प्रायच्छत् ख्यातिञ्च भृगवे तथा ।
मरीचये च सम्भूतिं स्मृतिमङ्गिरसे ददौ ॥ २९ ॥
प्रीतिञ्चैव पुलस्त्याय क्षमां वै पुलहाय च ।
क्रतवे सन्नतिं नाम अनसूयान्तथाऽत्रये ॥ ३० ॥
ऊर्ज्जां ददौ वशिष्ठाय स्वाहां वै ह्यग्नये ददौ ।

स्वधाश्चैव पितृभ्यस्तु तास्त्वपत्यानि वक्ष्यते ॥ ३१ ॥
एते सर्व्वे महाभागाः प्रजाः स्वानुष्ठिताः स्थिताः।
मन्वन्तरेषु सर्व्वेषु यावदाभूतसंप्लवं ॥ ३२ ॥
श्रद्धा कामं विजज्ञे वै दर्पो लक्ष्मीसुतः स्मृतः।
धृत्यास्तु नियमः पुत्रस्तुष्ट्याः सन्तोष उच्यते ॥ ३३ ॥
पुष्ट्या लाभः सुतश्चापि मेधापुत्रः श्रुतस्तथा।
क्रियायास्तु नयः प्रोक्तो दण्डः समय एव च ॥ ३४ ॥
बुद्धेर्बोधसुतश्चापि अप्रमादश्च तावुभौ।
लज्जाया विनयः पुत्रो व्यवसायो वपुःसुतः (१) ॥ ३५ ॥
क्षेमः शान्तिसुतश्चापि सुखं सिद्धेर्व्यजायत।
यशः कीर्त्तेः सुतश्चापि इत्येते धर्म्मसूनवः ॥ ३६ ॥
कामस्य हर्षः पुत्रो वै देव्या रत्या व्यजायत।
इत्येष वै सुखोदर्कः सर्गो धर्म्मस्य कीर्त्तितः ॥ ३७ ॥
जज्ञे हिंसा त्वधर्म्माद्वै निकृतिश्चानृतावुभौ।
निकृत्यानृतयोर्जज्ञे भयं नरक एव च ॥ ३८ ॥
माया च वेदना चापि मिथुनद्वयमेतयोः।
भयाज्जज्ञेऽथ सा माया मृत्युं भूतापहारिणं ॥ ३९ ॥
वेदनायास्ततश्चापि दुःखं जज्ञेऽथ रौरवात्।
मृत्योर्व्याधिज्वराः शोकाः क्रोधोऽसूया च जज्ञिरे।
दुःखान्तराः स्मृता ह्येते सर्व्वे चाधर्म्मलक्षणाः ॥ ४० ॥
तेषां भार्य्याऽस्ति पुत्रो वा सर्व्वे निधनाः स्मृताः।

(१) वपोः सुत इति घ०, ङ० च।

इत्येषतामसः सर्गो जज्ञे धर्म्मनियामकः ॥ ४१ ॥
प्रजाः सृजेति व्यादिष्टो ब्रह्मणा नीललोहितः ।
सोऽभिध्याय सतीं भार्य्यां निर्ममे ह्यात्मसम्भवां ॥ ४२ ॥
नाधिकान्न च हीनांस्तान्मानसानात्मनः समान् ।
सहस्रं हि सहस्राणामसृजत् कृत्तिवाससा ।
तुल्यांश्चैवात्मनः सर्व्वं रूपतेजोबलश्रुतैः ॥ ४३ ॥
पिङ्गलान् सनिषङ्गांश्च सकपर्दान् विलोहितान् ।
विवासान् हरिकेशांश्च दृष्टिघ्नांश्च कपालिनः ॥ ४४ ॥
बहुरूपान् विरूपांश्च विश्वरूपांश्च रूपिणः ।
रथिनो वर्म्मिणश्चैव धर्म्मिनश्च वरूथिनः ॥ ४५ ॥
सहस्रशतबाहूंश्च दिव्यान् भौमान्तरिक्षगान् ।
स्थूलशीर्षानष्टदंष्ट्रान्द्विजिह्वां स्त्रिलोचनान् ॥ ४६ ॥
अन्नादान् पिशितादांश्च आज्यपान् सोमपांस्तथा ।
मेढ्रपांश्चातिकायांश्च शितिकण्ठोग्रमन्यवः ॥ ४७ ॥
सोपासङ्गतलत्रांश्च धन्विनो ह्यपवर्म्मिणः ।
आसीनान् धावतश्चैव जृम्भिनश्चैव धिष्ठितान् ॥ ४८ ॥
अध्यापिनोऽथ जपतो युञ्जतोऽध्यायतस्तथा ।
ज्वलतो वर्षतश्चैव द्योतमानान् प्रधूपितान् ॥ ४९ ॥
बुद्धान् बुद्धतमांश्चैव ब्रह्मिष्ठान् शुभदर्शनान् ।
नीलग्रीवान् सहस्राक्षान् सर्व्वांश्चाथ क्षपाचरान् ॥ ५० ॥
अदृश्यान् सर्वभूतानां महायोगान् महौजसः ।
रुदतो द्रवतश्चैव एवं युक्तान् सहस्रशः ।
अपातयामानसृजत् रुद्ररूपान् सुरोत्तमान् ॥ ५१ ॥

ब्रह्मा दृष्ट्वा ब्रवीदेतान्मास्राक्षीरीदृशीः प्रजाः ।
स्रष्टव्या नात्मनस्तुल्याः प्रजा नैताधिकास्त्वया ।
अन्याः सृज त्वं भद्रन्ते स्थितोहन्त्वं सृज प्रजाः ॥ ५२ ॥
एते ये वै मया सृष्टा विरूपा नीललोहिताः ।
सहस्राणां सहस्रन्तु आत्मनोपमनिःसृताः ॥ ५३ ॥
एते देवा भविष्यन्ति रुद्रा नाम महाबलाः ।
पृथिव्यामन्तरिक्षे च रुद्रनाम्ना प्रतिश्रुताः ॥ ५४ ॥
शतरुद्रसमाम्नाता भविष्यन्तीह यज्ञियाः ।
यज्ञभाजो भविष्यन्ति सर्व्वदेवयुगैः सह ॥ ५५ ॥
मन्वन्तरेषु ये देवा भविष्यन्तीह च्छन्दजाः ।
तैः सार्द्धमोज्यमानास्ते स्थास्यन्तीह युगक्षयात् ॥ ५६ ॥
एवमुक्तस्तदा ब्रह्मा महादेवेन धीमता ।
प्रत्युवाच तदा भीमं हृष्यमाणः प्रजापतिः ॥ ५७ ॥
एवं भवतु भद्रन्ते यथा ते व्याहृतं प्रभो ।
ब्रह्मणा समनुज्ञाते सदा सर्व्वमभूत्किल ॥ ५८ ॥
ततःप्रभृति देवेशो न प्रासूयत वै प्रजाः ।
ऊर्द्धरेताः स्थितः स्थाणुर्य्यावदाभूतसंप्लवं ।
यस्माच्चोक्तं स्थितोऽस्मीति ततः स्थाणुरिति स्मृतः ॥ ५९ ॥
ज्ञानं वैराग्यमैश्वर्य्यं तपः सत्यं क्षमा धृतिः ।
स्रष्टृत्वमात्मसम्बोधस्त्वधिष्ठातृत्वमेव च ।
अव्ययानि दशैतानि नित्यन्तिष्ठन्ति शङ्करे ॥ ६० ॥
सर्व्वान् देवान् ऋषींश्चैव समेतानसुरैः सह ।
अत्येति तेजसा देवो महादेवस्ततः स्मृतः ॥ ६१ ॥

अत्येति देवानैश्वर्य्याद्बलेन च महासुरान्।
ज्ञानेन च मुनीन् सर्व्वान् योगाद्भूतानि सर्व्वशः॥ ६२॥
ऋषय ऊचुः। योगं तपश्च सत्यञ्च धर्मञ्चापि महामुने।
माहेश्वरस्य ज्ञानस्य साधनञ्च प्रचक्ष्व नः॥ ६३॥
येन येन च धर्मेण गतिं प्राप्स्यन्ति वै द्विजाः।
तत् सर्व्वं श्रोतुमिच्छामि योगं माहेश्वरं प्रभो॥ ६४।
वायुरुवाच। पञ्च धर्म्माः पुराणे तु रुद्रेण समुदाहृताः।
माहेश्वर्य्यं यथा प्रोक्तं रुद्रैरक्लिष्टकर्म्मभिः॥ ६५॥
आदित्यैर्व्वसुभिः साध्यैरश्विभ्याञ्चैव सर्व्वशः।
मरुद्भिर्भृगुभिश्चैव ये चान्ये विबुधालयाः॥ ६६॥
यमशुक्रपुरोगैश्च पितृकालान्तकैस्तथा।
एतैश्चान्यैश्च बहुभिस्ते धर्म्माः पर्य्युपासिताः॥ ६७॥
ते वै प्रक्षीणकर्म्माणः शारदाम्बरनिर्म्मलाः।
उपासते मुनिगणाः सन्ध्यायात्मानमात्मनि॥ ६८॥
गुरुप्रियहिते युक्ता गुरूणां वै प्रियेप्सवः।
विमुच्य मानुषं जन्म विहरन्ति च देववत्॥ ६९॥
महेश्वरेण ये प्रोक्ताः पञ्च धर्म्माः सनातनाः।
तान् सर्व्वान् क्रमयोगेन उच्यमानान्निबोधत॥ ७०॥
प्राणायामस्तथा ध्यानं प्रत्याहारोऽथ धारणा।
स्मरणञ्चैव योगेऽस्मिन् पञ्च धर्म्माः प्रकीर्त्तिताः॥ ७१॥
तेषां क्रमविशेषेण लक्षणं कारणं तथा।
प्रवक्ष्यामि तथा तत्त्वं यथा रुद्रेण भाषितं॥ ७२॥

प्राणायामगतिश्चापि प्राणस्यायाम उच्यते।
स चापि त्रिविधः प्रोक्तो मन्दो मध्योत्तमस्तथा॥ ७३॥
प्राणानाञ्च निरोधस्तु स प्राणायामसंज्ञितः।
प्राणायामप्रमाणन्तु मात्रा वै द्वादश स्मृताः॥ ७४॥
मन्दो द्वादशमात्रास्तु उद्घाता द्वादश स्मृताः।
मध्यमश्च द्विरुद्घातश्चतुर्विंशतिमात्रिकः॥ ७५॥
उत्तमस्तत्त्रिरुद्घातो मात्राः षट्त्रिंशदुच्यते।
स्वेदकम्पविषादानां जननो ह्युत्तमः स्मृतः॥ ७६॥
इत्येतत् त्रिविधं प्रोक्तं प्राणायामस्य लक्षणं।
प्रमाणञ्च समासेन लक्षणञ्च निबोधत॥ ७७॥
सिंहो वा कुञ्जरो वापि तथाऽन्यो वा मृगो वने।
गृहीतः सेव्यमानस्तु मृदुः समुपजायते॥ ७८॥
तथा प्राणो दुराधर्षः सर्व्वेषामकृतात्मनां।
योगतः सेव्यमानस्तु स एवाभ्यासतो व्रजेत्॥ ७९॥
स चैव हि यथा सिंहः कुञ्जरो वापि दुर्ब्बलः।
कालान्तरवशाद्योगाद्दम्यते परिमर्द्दनात्॥ ८०॥
परिधाय मनो मन्दं वश्यत्वं चाधिगच्छति।
परिधाय मनोदेवं तथा जीवति मारुतः॥ ८१॥
वश्यत्वं हि यथा वायुर्गच्छते योगमाश्रितः।
तदा स्वच्छन्दतः प्राणं नयते यत्र चेच्छति॥ ८२॥
यथा सिंहो गजो वापि वश्यत्वाद्वतिष्ठते।
अभयाय मनुष्याणां मृगेभ्यः संप्रवर्त्तते॥ ८३॥
यथा परिचितश्चायं वायुर्व्वै विशती मुखः।

परिध्मायमान: संदग्ध: शरीरे किल्बिषन्दहेत् ॥ ८४ ॥
प्राणायामैन युक्तस्य विप्रस्य नियतात्मन: ।
सर्व्वे दोषा: प्रणश्यन्ति सत्त्वस्थश्चैव जायते ॥ ८५ ॥
तपांसि यानि तप्यन्ते व्रतानि नियमाश्च ये ।
सर्व्वयज्ञफलञ्चैव प्राणायामश्च तत्समः ॥ ८६ ॥
अम्बिन्दुं य: कुशाग्रेण मासि मासि समश्नुते ।
संवत्सरशतं साग्रं प्राणायामश्च तत्समं ॥ ८७ ॥
प्राणायामैर्दहेद्दोषान् धारणाभिश्च किल्बिषं ।
प्रत्याहारेण विषयान् ध्यानेनानीश्वरान् गुणान् ॥ ८८ ॥
तस्माद्युक्त: सदा योगी प्राणायामपरो भवेत् ।
सर्व्वपापविशुद्धात्मा परं ब्रह्माधिगच्छति ॥ ८९ ॥

इति श्रीमहापुराणे वायुप्रोक्ते मन्वन्तरादिवर्णनं
नाम दशमोऽध्याय: ।



# अथैकादशोऽध्यायः।

## पाशुपतयोगः।



वायुरुवाच। एकं महान्तं दिवसमहोरात्रमथापि वा।
अर्द्धमासं तथा मासमयनान्यृतुगानि च ॥ १ ॥
महायुगसहस्राणि ऋषयस्तपसि स्थिताः।
उपासते महात्मानः प्राणं दिव्येन चक्षुषा ॥ २ ॥
अत ऊर्द्धं प्रवक्ष्यामि प्राणायामप्रयोजनं।
फलञ्चैव विशेषेण यथाह भगवान् प्रभुः ॥ ३ ॥
प्रयोजनानि चत्वारि प्राणायमस्य विद्धि वै।
शान्तिः प्रशान्तिर्दीप्तिश्च प्रसादश्च चतुष्टयं ॥ ४ ॥
घोराकारशिवानान्तु कर्म्मणां फलसम्भवं।
स्वयङ्कृतानि कालेन इहामुत्र च देहिनां ॥ ५ ॥
पितृमातृगुरुदुष्टानां ज्ञातिसम्बन्धिसङ्करैः।
क्षपणं हि कषायाणां पापानां शान्तिरुच्यते ॥ ६ ॥
लोभमानात्मकानां हि पापानामपि संयमः।
इहामुत्र हितार्थाय प्रशान्तिस्तप उच्यते ॥ ७ ॥
सूर्य्येन्दुग्रहताराणां तुल्यस्तु विषयो भवेत्।
ऋषीणाञ्च प्रसिद्धानां ज्ञानविज्ञानसम्पदां ॥ ८ ॥
अतीतानागतानाञ्च दर्शनं साम्प्रतस्य च।
बुद्धस्य समतां याति दीप्तिः स्यात्तप उच्यते ॥ ९ ॥
इन्द्रियाणीन्द्रियार्थांश्च मनः पञ्च च मारुतान्।

प्रसादयति येनासौ प्रसाद इति संज्ञितः ॥ १० ॥
इत्येष धर्म्मः प्रथमः प्राणायामश्चतुर्व्विधः ।
सन्निकृष्टफलो ज्ञेयः सद्यः काल प्रसादजः ॥ ११ ॥
अत ऊर्द्धं प्रवक्ष्यामि प्राणायामस्य लक्षणं ।
आसनञ्च यथा तत्त्वं युञ्जतो योगमेव च ॥ १२ ॥
ॐ कारं प्रथमं कृत्वा चन्द्रसूर्य्यौ नमस्य च ।
आसनं स्वस्तिकं कृत्वा पद्ममर्द्धासनन्तथा ॥ १३ ॥
समजानुरेकजानुरुत्तानः सुस्थितोऽपि च ।
समो दृढ़ासनो भूत्वा संहृत्य चरणावुभौ ॥ १४ ॥
संवृतास्योऽवबद्धाक्ष उरो विष्टभ्य चाग्रतः ।
पार्ष्णिभ्यां वृषणौ छाद्य तथा प्रजननं यतः ॥ १५ ॥
किञ्चिदुन्नामितशिराः शिरोग्रीवां तथैव च ।
सम्प्रेक्ष्य नासिकाग्रं स्वं दिशश्चानवलोकयन् ॥ १६ ॥
तमः प्रच्छाद्य रजसा रजः सत्त्वेन छादयेत् ।
ततः सत्त्वस्थितो भूत्वा योगं युञ्जन् समाहितः ॥ १७ ॥
इन्द्रियाणीन्द्रियार्थांश्च मनः पञ्च स मारुतान् ।
निगृह्य समवायेन प्रत्याहारमुपक्रमेत् ॥ १८ ॥
यस्तु प्रत्याहरेत् कामान् कूर्म्मोऽङ्गानीव सर्व्वतः ।
तथात्मरतिरेकस्थः पश्यत्यात्मानमात्मनि ॥ १९ ॥
पूरयित्वा शरीरन्तु स बाह्याभ्यन्तरं शुचिः ।
आकण्ठनाभियोगेन प्रत्याहारमुपक्रमेत् ॥ २० ॥
कलामात्रस्तु विज्ञेयो निमेषोन्मेष एव च ।
तथा द्वादशमात्रस्तु प्राणायामो विधीयते ॥ २१ ॥

धारणाद्दादशायामो योगी वै धारणाद्वयं।
तथा वै योगयुक्तश्च ऐश्वर्य्यं प्रतिपद्यते।
वीक्षते परमात्मानं दीप्यमानं स्वतेजसा॥ २२॥
प्राणायामेन युक्तस्य विप्रस्य नियतात्मनः।
सर्व्वे दोषाः प्रणश्यन्ति सत्त्वस्थश्चैव जायते॥ २३॥
एवं वै नियताहारः प्राणायामपरायणः।
जित्वा जित्वा सदा भूमिमारोहेत्तु सदा मुनिः॥ २४॥
अजिता हि महाभूमिर्दोषानुत्पादयेद् बहून्।
विवर्द्धयति सम्मोहं न रोहेदजितां ततः॥ २५॥
नालेन तु यथा तोयं यन्त्रेणैव बलान्वितः।
आपिवेत(१) प्रयत्नेन तथा वायुर्जितश्रमः॥ २६॥
नाभ्याञ्च हृदये चैव कण्ठे उरसि चानने।
नासाग्रे तु तथा नेत्रे भ्रुवोर्म्मध्येऽथ मूर्द्धनि॥ २७॥
किञ्चिद्दूर्द्ध्वं परस्मिंश्च धारणा परमा स्मृता।
प्राणापानसमारोधात् प्राणायामः स कथ्यते॥ २८॥
मनसो धारणा चैव धारणेति प्रकीर्त्तिता।
निवृत्तिर्विषयाणान्तु प्रत्याहारस्तु संज्ञितः॥ २९॥
सर्व्वेषां समवाये तु सिद्धिः स्याद् योगलक्षणा।
तथोत्पन्नस्य योगस्य ध्यानं वै सिद्धिलक्षणं।
ध्यानयुक्तः सदा पश्येदात्मानं सूर्य्यचन्द्रवत्॥ ३०॥
सत्त्वस्यानुपपत्तौ तु दर्शनन्तु न विद्यते।
अदेशकालयोगस्य दर्शनन्तु न विद्यते॥ ३१॥

१ अपः पिवेदिति क०।

अग्न्यभ्यासे वने वापि शुष्कपर्णचये तथा ।
जन्तुव्याप्ते श्मशाने वा जीर्णगोष्ठे चतुष्पथे ॥ ३२ ॥
सशब्दे सभये वापि चैत्यवल्मीकसञ्चये ।
उदपाने तथा नद्यान्न बाधातः कदाचन ॥ ३३ ॥
क्षुधाविष्टास्तथाऽप्रीता न च व्याकुलचेतसः ।
युञ्जीत परमं ध्यानं योगी ध्यानपरः सदा ॥ ३४ ॥
एतान् दोषान् विनिश्चित्य प्रमादाद्यो युनक्ति वै ।
तस्य दोषाः प्रकुप्यन्ति शरीरे विघ्नकारकाः ॥ ३५ ॥
जडत्वं वधिरत्वञ्च मूकत्वञ्चाधिगच्छति ।
अन्धत्वं स्मृतिलोपश्च जरा रोगस्तथैव च ॥ ३६ ॥
तस्य दोषाः प्रकुप्यन्ति अज्ञानाद्यो युनक्ति वै ।
तस्माज् ज्ञानेन शुद्धेन योगी युञ्ज्यात् समाहितः ॥ ३७ ॥
अप्रमत्तः सदा चैव न दोषान् प्राप्नुयात् क्वचित् ।
तेषां चिकित्सां वक्ष्यामि दोषाणाञ्च यथाक्रमं ।
यथा गच्छन्ति ते दोषाः प्राणायामसमुत्थिताः ॥ ३८ ॥
स्निग्धां यवागूमत्युष्णां भुक्त्वा तत्रावधारयेत् ।
एतेन क्रमयोगेन वातगुल्मं प्रशाम्यति ॥ ३९ ॥
गुदावर्त्तप्रतीकारमिदं कुर्य्याच्चिकित्सितं ।
भुक्त्वा दधि यवागूर्वा वायुरूर्द्ध्वं ततो व्रजेत् ॥ ४० ॥
वायुग्रन्थिं ततो भित्त्वा वायुदेशे प्रयोजयेत् ।
तथापि न विशेषः स्यात्धारणां मूर्द्ध्नि धारयेत् ॥ ४१ ॥
युञ्जानस्य तनुत्वस्य सत्त्वस्यैव देहिनः ।
गुदावर्त्तप्रतीघाते एतत् कुर्य्याच्चिकित्सितं ॥ ४२ ॥

सर्व्वगात्रप्रकम्पेन समारब्धस्य योगिनः ।
इमां चिकित्सां कुर्व्वीत तया सम्पद्यते सुखी ॥ ४३ ॥
मनसा यद्गतं किञ्चिद्दिष्टश्चीकृत्य धारयेत् ।
उरोघाते उरःस्थानं कण्ठदेशे च धारयेत् ॥ ४४ ॥
त्वचोऽवघाते तां वाचि वाधिर्यें श्रोत्रयोस्तथा ।
जिह्वास्थाने तृषार्त्तस्तु अग्रे स्नेहांश्च तन्तुभिः ।
फलं वै चिन्तयेद्योगी ततः सम्पद्यते सुखी ॥ ४५ ॥
क्षये कुष्ठे सकीलासे धारयेत्सर्व्वसात्त्विकीं ।
यस्मिन् यस्मिन् रजो देशे तस्मिन् युक्तो विनिर्द्दिशेत् ॥ ४६॥
योगोत्पन्नस्य विप्रस्य इदं कुर्य्याच्चिकित्सितं ।
वंशकीलेन मूर्द्धानं धारयानस्य ताड़येत् ।
मूर्द्धि कीलं प्रतिष्ठाप्य काष्ठकाष्ठेन ताड़येत् ॥ ४७ ॥
भयभीतस्य सा संज्ञा ततः प्रत्यागमिष्यति ।
अथ वा लुप्तसंज्ञस्य हस्ताभ्यां तत्र धारयेत् ॥ ४८ ॥
प्रतिलभ्य ततः संज्ञां धारणां मूर्द्धि धारयेत् ।
स्निग्धमल्पञ्च भुञ्जीत ततः सम्पद्यते सुखी ॥ ४९ ॥
अमानुषेण सत्त्वेन यदा बुध्यति योगवित् ।
दिवञ्च पृथिवीञ्चैव वायुमग्निञ्च धारयेत् ॥ ५० ॥
प्राणायामेन तत्सर्व्वं दह्यमानं वशीभवेत् ।
अथापि प्रविशेद्देहं ततस्तं प्रतिषेधयेत् ॥ ५१ ॥
ततः संस्तभ्य योगेन धारयानस्य मूर्द्धनि ।
प्राणायामाग्निना दग्धं तत्सर्व्वं विलयं व्रजेत् ॥ ५२ ॥
कृष्णसर्पापराधन्तु धारयेद्धृदयोदरे ।

महो जनस्तपः सत्यं हृदि कृत्वा तु धारयेत् ॥ ५३ ॥
विषस्य तु फलं पीत्वा विशल्यां धारयेत्ततः ।
सर्व्वतः सनगां पृथ्वीं कृत्वा मनसि धारयेत् ॥ ५४ ॥
हृदि कृत्वा समुद्रांश्च तथा सर्व्वाश्च देवताः ।
सहस्रेण घटानाञ्च युक्तः स्नायीत योगवित् ॥ ५५ ॥
उदके कण्ठमात्रे तु धारणां मूर्द्धि धारयेत् ।
प्रतिस्रोतोविषाविष्टो धारयेत् सर्व्वगात्रिकीं ॥ ५६ ॥
शीर्णोऽर्कपत्रपुटकैः पिवेद्वल्मीकमृत्तिकां ।
चिकित्सितविधिश्चैष विश्रुतो योगनिर्म्मितः ॥ ५७ ॥
व्याख्यातस्तु समासेन योगदृष्टेन हेतुना ।
प्रवृत्तो लक्षणं विद्धि विप्रस्य कथयेत् क्वचित् ॥ ५८ ॥
अथापि कथयेन्मोहात्तद्विज्ञानं प्रलीयते ।
तस्मात् प्रवृत्तिर्य्योगस्य न वक्तव्या कथञ्चन ॥ ५९ ॥

सत्त्वं तथारोग्यमलोलुपत्वं
वर्णप्रभा सुस्वरसौम्यता च ।
गन्धः शुभो मूत्रपुरीषमल्पं
योगप्रवृत्तिः प्रथमा शरीरे ॥ ६० ॥

आत्मानं पृथिवीञ्चैव ज्वलन्तीं यदि पश्यति ।
कृत्वान्यं विशते चैव विद्यात् सिद्धिमुपस्थितां ॥ ६१ ॥

इति श्रीमहापुराणे वायुप्रोक्ते पाशुपतयोगो नामैकादशोऽध्यायः ।

---

# अथ द्वादशोऽध्यायः।

——oo——

योगोपसर्गाः।

सूत उवाच। अत ऊर्द्धं प्रवक्ष्यामि उपसर्गा यथा तथा।
प्रादुर्भवन्ति ये दोषा दृष्टतत्त्वस्य देहिनः॥ १॥
मानुष्यान् विविधान् कामान् कामयेत ऋतुं स्त्रियः।
विद्यादानफलञ्चैव उपसृष्टस्तु योगवित्॥ २॥
अग्निहोत्रं हविर्य्यज्ञमेतत्प्रायतनन्तथा।
मायाकर्म्म धनं स्वर्गमुपसृष्टस्तु काङ्क्षति॥ ३॥
एष कर्म्मसु युक्तस्तु सोऽविद्यावशमागतः।
उपसृष्टन्तु जानीयात् बुद्धा चैव विसर्ज्जयेत्।
नित्यं ब्रह्मपरो युक्त उपसर्गात् प्रमुच्यते॥ ४॥
जितप्रत्युपसर्गस्य जितश्वासस्य देहिनः।
उपसर्गाः प्रवर्त्तन्ते सात्त्वराजसतामसाः॥ ५॥
प्रतिभाश्रवणे चैव देवानाञ्चैव दर्शनं।
भ्रमावर्त्तश्च इत्येते सिद्धिलक्षणसंज्ञिताः॥ ६॥
विद्याकाव्यं तथा शिल्पं सर्व्वंवाचाहृतानि तु।
विद्यार्थाश्चोपतिष्ठन्ति प्रभावस्यैव लक्षणं॥ ७॥
शृणोति शब्दान् श्रोतव्यान् योजनानां शतादपि।
सर्व्वज्ञश्च विधिज्ञश्च योगी चोन्मत्तवद्भवेत्॥ ८॥
यक्षराक्षसगन्धर्व्वान् वीक्षत दिव्यमानुषान्।
वेत्ति तांश्च महायोगी उपसर्गस्य लक्षणं॥ ८॥

देवदानवगन्धर्व्वान् ऋषींश्चापि तथा पितॄन् ।
प्रेक्षते सर्व्वतश्चैव उन्मत्तन्तं विनिर्द्दिशेत् ॥ १० ॥
भ्रमेण भ्राम्यते योगी चोद्यमानोऽन्तरात्मना ।
भ्रमेण भ्रान्तबुद्धिस्तु ज्ञानं सर्व्वं प्रणश्यति ॥ ११ ॥
वार्त्ता नाशयते चित्तं चोद्यमानोऽन्तरात्मना ।
वर्त्तनाक्रान्तबुद्धेस्तु सर्व्वज्ञानं प्रणश्यति ॥ १२ ॥
प्रावृत्य मनसा शुक्लं पटं वा कम्बलं तथा ।
ततस्तु परमं ब्रह्म चिप्रमेवानुचिन्तयेत् ॥ १३ ॥
तस्माच्चैवात्मनो दोषांस्तूपसार्गानुपस्थितान् ।
परित्यजेत मेधावी यदीच्छेत् सिद्धिमात्मनः ॥ १४ ॥
ऋषयो देवगन्धर्व्वा यक्षोरगमहासुराः ।
उपसर्गेषु संयुक्ता आवर्त्तन्ते पुनः पुनः ॥ १५ ॥
तस्माद्युक्तः सदा योगी लघ्वाहारो जितेन्द्रियः ।
तथा सुतः सुसूक्ष्मेषु धारणां मूर्द्धि धारयेत् ॥ १६ ॥
ततस्तु योगयुक्तस्य जितनिद्रस्य योगिनः ।
उपसर्गाः पुनश्चान्ये जायन्ते प्राणसंज्ञकाः ॥ १७ ॥
पृथिवीं धारयेत्सर्व्वां ततश्चापो ह्यनन्तरं ।
ततोऽग्निश्चैव सर्व्वं वायुमाकाशं मन एव च ॥ १८ ॥
ततः परां पुनर्बुद्धिं धारयेद्यत्नतो यती ।
सिद्धीनाञ्चैव लिङ्गानि दृष्ट्वा दृष्ट्वा परित्यजेत् ॥ १९ ॥
पृथ्वीं धारयमाणस्य मही सूक्ष्मा प्रवर्त्तते ।
अपोधारयमानस्य आपः सूक्ष्मा भवन्ति हि ।
शीता रसाः प्रवर्त्तन्ते सूक्ष्मा ह्यमृतसन्निभाः ॥ २० ॥

तेजोधारयमानस्य तेजः सूक्ष्मं प्रवर्त्तते ।
आत्मानं मन्यते तेजस्तद्भावमनुपश्यति ॥ २१ ॥
आत्मानं मन्यते वायुं वायुवन्मण्डलं प्रभो ।
आकाशं धारयमानस्य व्योम सूक्ष्मं प्रवर्त्तते ॥ २२ ॥
पश्यते मण्डलं सूक्ष्मं घोषश्चास्य प्रवर्त्तते ।
आत्मानं मन्यते नित्यं वायुः सूक्ष्मः प्रवर्त्तते ॥ २३ ॥
तथा मनोधारयतो मनः सूक्ष्मं प्रवर्त्तते ।
मनसा सर्व्वभूतानां मनस्तु विशते हि सः ।
बुद्ध्या बुद्धिं यदा युञ्जेत् तदा विज्ञाय बुध्यते ॥ २४ ॥
एतानि सप्त सूक्ष्माणि विदित्वा यस्तु योगवित् ।
परित्यजति मेधावी स बुद्ध्या परमं व्रजेत् ॥ २५ ॥
यस्मिन् यस्मिंश्च संयुक्तो भूत ऐश्वर्य्यलक्षणे ।
तत्रैव सङ्गं भजते तेनैव प्रविनश्यति ॥ २६ ॥
तस्माद्विदित्वा सूक्ष्माणि संसक्तानि परस्परं ।
परित्यजति यो बुद्ध्या स परं प्राप्नुयाद्द्विजः ॥ २७ ॥
दृश्यन्ते हि महात्मान ऋषयो दिव्यचक्षुषः ।
संसक्ताः सूक्ष्मभावेषु ते दोषास्तेषु संश्रिताः ॥ २८ ॥
तस्मान्न निश्चयः कार्य्यः सूक्ष्मेष्विह कदाचन ।
ऐश्वर्य्याज्जायते रागो विरागं ब्रह्म प्रोच्यते ॥ २९ ॥
विदित्वा सप्त सूक्ष्माणि षडङ्गञ्च महेश्वरं ।
प्रधानं विनियोगज्ञः परं ब्रह्माधिगच्छति ॥ ३० ॥

सर्व्वज्ञता तृप्तिरनादिबोधः
स्वतन्त्रता नित्यमलुप्तशक्तिः ।

अनन्तशक्तिश्च विभोर्विधिज्ञाः
षड़ाहुरङ्गानि महेश्वरस्य ॥ २१ ॥
नित्यं ब्रह्मधनो युक्तः(१) उपसर्गैः प्रमुच्यते ।
जितश्वासोपसर्गस्य जितरागस्य योगिनः ।
एका वह्निः शरीरेऽस्मिन् धारणा सर्व्वकामिकी ॥ २२ ॥
निशेद्यदा द्विजो युक्तो यत्र यत्रार्प्पयेन्मनः ।
भूतान्याविशते वापि त्रैलोक्यञ्चापि कम्पयेत् ॥ २३ ॥
एतया प्रविशेद्‌देहं हित्वा देहं पुनस्त्विह ।
मनोद्वारं हि योगानामादित्यश्च विनिर्द्दिशेत् ॥ २४ ॥
आदानादिक्रियाणान्तु आदित्य इति चोच्यते ।
एतेन विधिना योगी विरक्तः सूक्ष्मवर्ज्जितः ।
प्रकृतिं समतिक्रम्य रुद्रलोके महीयते ॥ २५ ॥
ऐश्वर्य्यगुणसम्प्राप्तं ब्रह्मभूतन्तु तं प्रभुं ।
देवस्थानेषु सर्व्वेषु सर्व्वतस्तु निवर्त्तते ॥ २६ ॥
पैशाचेन पिशाचांश्च राक्षसेन च राक्षसान् ।
गान्धर्व्वेण च गन्धर्व्वान् कौवेरेण कुवेरजान् ॥ २७ ॥
इन्द्रमैन्द्रेण स्थानेन सौम्यं सौम्येन चैव हि ।
प्रजापतिं तथा चैव प्राजापत्येन साधयेत् ॥ २८ ॥

---

१ ब्रह्मवशी युक्त इति ख० ।

ब्राह्मं ब्राह्मिन चाप्येवमुपामन्त्रयते प्रभुं ।
तत्र सक्तास्तु उन्मत्तस्तस्मात्सर्व्वं प्रवर्त्तते ॥ ३९ ॥
नित्यं ब्रह्मपरोयुक्तः स्थानान्येतानि वै त्यजेत् ।
असज्यमानः स्थानेषु द्विजः सर्वगतो भवेत् ॥ ४० ॥

इति श्रीमहापुराणे वायुप्रोक्ते योगोपसर्गनिरूपणं
नाम द्वादशोऽध्यायः ।

# अथ त्रयोदशोऽध्यायः ।

———000(D)000———

## योगैश्वर्य्याणि ।

वायुरुवाच । अत ऊर्द्धं प्रवक्ष्यामि ऐश्वर्य्यगुणविस्तरं ।
येन योगविशेषेण सर्व्वलोकानतिक्रमेत् ॥ १ ॥
तत्राष्टगुणमैश्वर्य्यं योगिनां समुदाहृतं ।
तत् सर्व्वं क्रमयोगेन उच्यमानं निबोधत ॥ २ ॥
अणिमा लघिमा चैव महिमा प्राप्तिरेव च ।
प्राकाम्यञ्चैव सर्व्वत्र ईशित्वञ्चैव सर्व्वतः ॥ ३ ॥
वशित्वमथ सर्व्वत्र यत्र कामावसायिता ।
तच्चापि विविधं ज्ञेयमैश्वर्य्यं सर्व्वकामिकं ॥ ४ ॥
सावद्यं निरवद्यञ्च सूक्ष्मञ्चैव प्रवर्त्तते ।
सावद्यं नाम तत्तत्त्वं पञ्चभूतात्मकं स्मृतं ॥ ५ ॥
निरवद्यं तथा नाम पञ्चभूतात्मकं स्मृतं ।
इन्द्रियाणि मनश्चैव अहङ्कारश्च वै स्मृतं ॥ ६ ॥
तत्र सूक्ष्मप्रवृत्तन्तु पञ्चभूतात्मकं पुनः ।
इन्द्रियाणि मनश्चैव बुद्ध्यहङ्कारसंज्ञितं ॥ ७ ॥
तथा सर्व्वमयश्चैव आत्मस्था ख्यातिरेव च ।
संयोग एवं त्रिविधः सूक्ष्मेष्वेव प्रवर्त्तते ॥ ८ ॥
पुनरष्टगुणस्यापि तेष्वेवाथ प्रवर्त्तते ।
तस्य रूपं प्रवक्ष्यामि यथाह भगवान् प्रभुः ॥ ९ ॥

त्रैलोक्ये सर्व्वभूतेषु जीवस्यानियत: स्मृत: ।
अणिमा च यथाव्यक्तं सर्व्वं तत्र प्रतिष्ठितं ॥ १० ॥
त्रैलोक्ये सर्व्वभूतानां दु:ष्प्राप्यं समुदाहृतं ।
तच्चापि भवति प्राप्यं प्रथमं योगिनां बलात् ॥ ११ ॥
लम्बनं प्लवनं योगे रूपमस्य सदा भवेत् ।
शीघ्रगं सर्व्वभूतेषु द्वितीयं तत्पदं स्मृतं ॥ १२ ॥
त्रैलोक्ये सर्व्वभूतानां प्राप्ति: प्राकाम्यमेव च ।
महिमा चापि यो यस्मिंस्तृतीयो योग उच्यते ॥ १३ ॥
त्रैलोक्ये सर्व्वभूतेषु त्रैलोक्यमगमं स्मृतं ।
प्रकामान् विषयान् भुङ्क्ते न च प्रतिहत: क्वचित् ।
त्रैलोक्ये सर्व्वभूतानां सुखदु:खं प्रवर्त्तते ॥ १४ ॥
ईशो भवति सर्व्वत्र प्रविभागेन योगवित् ।
वश्यानि चैव भूतानि त्रैलोक्ये सचराचरे ।
भवन्ति सर्व्वकार्य्येषु इच्छतो न भवन्ति च ॥ १५ ॥
यत्र कामावसायित्वं त्रैलोक्ये सचराचरे ।
इच्छया चेन्द्रियाणि स्युर्भवन्ति न भवन्ति च ॥ १६ ॥
शब्द: स्पर्शौ रसो गन्धो रूपञ्चैव मनस्तथा ।
प्रवर्त्ततेऽस्य चेच्छातो न भवन्ति तथेच्छया ॥ १७ ॥
न जायते न म्रियते भिद्यते न च छिद्यते ।
न दह्यते न मुह्यते ह्रीयते न च लिप्यते ॥ १८ ॥
न चीयते न क्षरति न खिद्यति कदाचन ।
क्रियते चैव सर्व्वत्र तथा विक्रियते न च ॥ १९ ॥
अगन्धरसरूपस्तु स्पर्शशब्दविवर्ज्जित: ।

अवर्णो ह्यवरश्चैव तथा वर्णस्य कर्हिचित् ॥ २० ॥
भुङ्क्तेऽथ विषयांश्चैव विषयैर्न्न च युज्यते ।
ज्ञात्वा तु परमं सूक्ष्मं सूक्ष्मत्वाच्चापवर्गकः ॥ २१ ॥
व्यापकस्त्वपवर्गाच्च व्यापित्वात् पुरुषः स्मृतः ।
पुरुषः सूक्ष्मभावात्तु ऐश्वर्य्ये परतः स्थितः ॥ २२ ॥
गुणान्तरन्तु ऐश्वर्य्यं सर्व्वतः सूक्ष्म उच्यते ।
ऐश्वर्य्यमप्रतिघाति प्राप्य योगमनुत्तमं ।
अपवर्गं ततो गच्छेत् सुसूक्ष्मं परमं पदं ॥ २३ ॥

इति श्रीमहापुराणे वायुप्रोक्ते योगैश्वर्य्याणि
नाम त्रयोदशोऽध्यायः ।

---

# अथ चतुर्द्दशोऽध्यायः।



## पाशुपतयोगः।

वायुरुवाच। न चैवमागतो ज्ञानाद्रागात् कर्म्म समाचरेत्।
राजसन्तामसं वापि भुक्ता तत्रैव युज्यते ॥ १ ॥
तथा सुकृतकर्म्मा तु फलं स्वर्गे समश्नुते।
तस्मात् स्थानात् पुनर्भ्रष्टो मानुष्यमनुपद्यते ॥ २ ॥
तस्माद् ब्रह्म परं सूक्ष्मं ब्रह्म शाश्वतमुच्यते।
ब्रह्म एव हि सेवेत ब्रह्मैव परमं सुखं ॥ ३ ॥
परिश्रमस्तु यज्ञानां महतार्थेन वर्त्तते।
भूयो मृत्युवशं याति तस्मान् मोक्षः परं सुखं ॥ ४ ॥
अथ वै ध्यानसंयुक्तो ब्रह्मयज्ञपरायणः।
न स स्याद् व्यापितुं शक्यो मन्वन्तरशतैरपि ॥ ५ ॥
दृष्ट्वा तु पुरुषं दिव्यं विश्वाख्यं विश्वरूपिणं।
विश्वपादशिरोग्रीवं विश्वेशं विश्वभावनं।
विश्वगन्धं विश्वमाल्यं विश्वाम्बरधरं प्रभुं ॥ ६ ॥

गोभिर्मही संयतते पतत्रिणं
महात्मानं परममतिं वरेण्यं।
कविं पुराणमनुशासितारं
सूक्ष्माच्च सूक्ष्मं महतो महान्तं।

योगेन पश्यन्ति न चक्षुषा तं
निरिन्द्रियं पुरुषं रुक्मवर्णं ॥ ७ ॥
अलिङ्गिनं पुरुषं रुक्मवर्णं
सलिङ्गिनं निर्गुणं चेतनञ्च ।
नित्यं सदा सर्व्वगतन्तु शौषं
पश्यन्ति युक्त्या ह्यचलं प्रकाशं ॥ ८ ॥
तद्भावितस्तेजसा दीप्यमानः
अपाणिपादोदरपार्श्वजिह्वः ।
अतीन्द्रियोऽप्यापि सुसूक्ष्म एकः
पश्यत्यचक्षुः स शृणोत्यकर्णः ॥ ९ ॥
नास्यास्त्यबुद्धं न च बुद्धिरस्ति
स वेद सर्व्वं न च वेदवेद्यः ।
तमाहुरग्र्यं पुरुषं महान्तं
सचेतनं सर्व्वगतं सुसूक्ष्मं ॥ १० ॥
तमाहुर्मुनयः सर्व्वे लोके प्रसवधर्म्मिणीं ।
प्रकृतिं सर्व्वभूतानां युक्ताः पश्यन्ति चेतसा ॥ ११ ॥
सर्व्वतः पाणिपादान्तं सर्व्वतोऽक्षिशिरोमुखं ।
सर्व्वतः श्रुतिमाल्लोके सर्व्वमावृत्य तिष्ठति ॥ १२ ॥
युक्ता योगेन चेशानं सर्व्वतश्च सनातनं ।
पुरुषं सर्व्वभूतानां तस्माद्‌ज्ञाता न मुह्यते ॥ १३ ॥
भूतात्मानं महात्मानं परमात्मानमव्ययं ।
सर्व्वात्मानं परं ब्रह्म तद्वै ध्यात्वा न मुह्यति ॥ १४ ॥
पवनो हि यथा ग्राह्यो विचरन् सर्व्वमूर्त्तिषु ।

पुरि शेते तथाप्ने च तस्मात् पुरुष उच्यते ।
अथ चेत्तुमधर्म्मास्तु स विशेषैश्च कर्म्मभिः ॥ १५ ॥
ततस्तु ब्रह्म योन्यां वै शुक्रशोणितसंयुतं ।
स्त्रीपुमांसप्रयोगेण जायते हि पुनः पुनः ॥ १६ ॥
ततस्तु गर्भकाले तु कललं नाम जायते ।
कालेन कललश्चापि वुद्बुदश्च प्रजायते ॥ १७ ॥
मृत्पिण्डस्तु यथा चक्रे चक्रवर्त्तेन पीड़ितः ।
हस्ताभ्यां क्रियमाणस्तु विश्वत्वमुपगच्छति ॥ १८ ॥
एवमात्मास्थिसंयुक्तो वायुना समुदीरितः ।
जायते मानुषस्तत्र यथा रूपं तथा मनः ॥ १९ ॥
वायुः सम्भवते तेषां वातात् सञ्जायते जलं ।
जलात्सम्भवति प्राणः प्राणाच्छुक्रं विवर्द्धते ॥ २० ॥
रक्तभागास्त्रयस्त्रिंशच्छुक्रभागाश्चतुर्द्दश ।
भागतोऽर्द्धपलङ्कृत्वा ततो गर्भं निषच्यते ॥ २१ ॥
ततस्तु गर्भसंयुक्तः पञ्चभिर्वायुभिर्वृतः ।
पितुः शरीरात् प्रत्यङ्गरूपमस्योपजायते ॥ २२ ॥
ततोऽस्य मातुराहारात् पीतलीढ़प्रवेशितं ।
नाभिः स्रोतःप्रवेशेन प्राणधारी हि देहिनां ॥ २३ ॥
नवमासान् परिक्लिष्टः संवेष्टितशिरोधरः ।
वेष्टितः सर्व्वगात्रैश्च अपर्य्यायक्रमागतः ।
नवमासोषितश्चैव योनिच्छिद्रादवाङ्मुखः ॥ २४ ॥
ततस्तु कर्म्मभिः पापैर्निरयं प्रतिपद्यते ।
असिपत्रवनञ्चैव शाल्मलीच्छेदभेदयोः ॥ २५ ॥

तत्र निर्भर्त्सनञ्चैव तथा शोणितभोजनं ।
एतास्तु यातना घोराः कुम्भीपाकसुदुःसहाः ॥ २६ ॥
यथा ह्यापस्तु विच्छिन्नाः स्वरूपमुपयान्ति वै ।
तस्माच्छिन्नाश्च भिन्नाश्च यातनास्थानमागताः ॥ २७ ॥
एवं जीवस्तु तैः पापैस्तप्यमानः स्वयं कृतैः ।
प्राप्नुयात् कर्म्मभिर्दुःखं शेषं वा यदि चेतरं ॥ २८ ॥
एकेनैव तु गन्तव्यं सर्व्वमृत्युनिवेशनं ।
एकेनैव च भोक्तव्यं तस्मात् सुकृतमाचरेत् ॥ २९ ॥
न ह्येनं प्रस्थितं कश्चिद्गच्छन्तमनुगच्छति ।
यदनेन कृतं कर्म्म तदेनमनुगच्छति ॥ ३० ॥

ते नित्यं यमविषये विभिन्नदेहाः
क्रोशन्तः सततमनिष्टसंप्रयोगैः ।
शुष्यन्ते परिगतवेदनाशरीराः
वह्वीभिः सुभृशमधर्म्मयातनाभिः ॥ ३१ ॥

कर्म्मणा मनसा वाचा यदभीष्टं निषेव्यते ।
तत्प्रसह्य हरेत् पापं तस्मात् सुकृतमाचरेत् ॥ ३२ ॥
यादृग् जातानि पापानि पूर्व्वं कर्म्माणि देहिनः ।
संसारन्तामसं तादृक् षड्विधं प्रतिपद्यते ॥ ३३ ॥
मानुष्यम्पशुभावञ्च पशुभावान्मृगो भवेत् ।
मृगत्वात् पक्षिभावन्तु तस्माच्चैव सरीसृपः ॥ ३४ ॥
सरीसृपत्वाद्गच्छेद्धि स्थावरत्वन्न संशयः ।
स्थावरत्वं पुनः प्राप्तो यावदुन्मिषते नरः ।
कुलालचक्रवद्भ्रान्तस्तत्रैव परिकीर्त्तितः ॥ ३५ ॥

इत्येवं हि मनुष्यादिः संसारे स्थावरान्तके ।
विज्ञेयस्तामसो नाम तत्रैव परिवर्त्तते ॥ ३६ ॥
सात्विकश्चापि संसारो ब्रह्मादिः परिकीर्त्तितः ।
पिशाचान्तः स विज्ञेयः स्वर्गस्थानेषु देहिनां ॥ ३७ ॥
ब्राह्मे तु केवलं सत्त्वं स्थावरे केवलं तमः ।
चतुर्द्दशानां स्थानानां मध्ये विष्टम्भकं रजः ।
मर्म्मसु छिद्यमानेषु वेदनार्त्तस्य देहिनः ॥ ३८ ॥
ततस्तु परमं ब्रह्म कथं विप्रः स्मरिष्यति ।
संस्कारात् पूर्व्वधर्म्मस्य भावनायां प्रनोदितः ।
मानुष्यं भजते नित्यं तस्मान्नित्यं समादधेत् ॥ ३९ ॥

इति श्रीमहापुराणे वायुप्रोक्ते पाशुपतयोगो
नाम चतुर्द्दशोऽध्यायः ।

---

## अथ पञ्चदशोऽध्यायः।

———000@000———

### पाशुपतयोगः।

वायुरुवाच। चतुर्दशविधं ह्येतत् बुद्धा संसारमण्डलं।
तथा समारभेत् कर्म्म संसारभयपीड़ितः॥ १॥
ततः स्मरति संसारचक्रेण परिवर्त्तितः।
तस्मात्तु सततं युक्तो ध्यानतत्परयुञ्जकः।
तथा समारभेद्योगं यथात्मानं स पश्यति॥ २॥
एष आद्यः परं ज्योतिरेष सेतुरनुत्तमः।
विवृद्धो ह्येष भूतानां न सम्भेदश्च शाश्वतः॥ ३॥
तदेनं सेतुमात्मानं अग्निं वै विश्वतोमुखं।
हृदिस्थं सर्व्वभूतानामुपासीत विधानवित्॥ ४॥
हुत्वाष्टावाहुतीः सम्यक् शुचिस्तद्गतमानसः।
वैश्वानरं हृदिस्थन्तु यथावदनुपूर्व्वशः।
अपः पूर्व्वं सकृत् प्राश्य तुष्णीं भूत्वा उपासते॥ ५॥
प्राणायेति ततस्तस्य प्रथमा ह्याहुतिः स्मृता।
अपानाय द्वितीया तु समानायेति चापरा॥ ६॥
उदानाय चतुर्थीति व्यानायेति च पञ्चमी।
स्वाहाकारैः परं हुत्वा शेषं भुञ्जीत कामतः।
अपः पुनः सकृत् प्राश्य त्राचम्य हृदयं स्पृशेत्॥ ७

श्रीप्राणानां ग्रन्थिरस्यात्मा रुद्रो ह्यात्मा विशान्तकः ।
स रुद्रो ह्यात्मनः प्राणा एवमाप्याययेत् स्वयं ॥ ८ ॥
त्वं देवानामपि ज्येष्ठ उग्रस्त्वञ्चतुरो वृषा ।
मृत्युघ्नोऽसि त्वमस्मभ्यं भद्रमेतद्धुतं हविः ॥ ९ ॥
एवं हृदयमालभ्य पादाङ्गुष्ठे तु दक्षिणे ।
विश्राव्य दक्षिणं पाणिं नाभिं वै पाणिना स्पृशेत् ।
ततः पुनरुपस्पृश्य चात्मानमभिसंस्पृशेत् ॥ १० ॥
अक्षिणी नासिका श्रोत्रे हृदयं शिर एव च ।
द्वावात्मानावुभावेतौ प्राणापानावुदाहृतौ ॥ ११ ॥
तयोः प्राणोऽन्तरात्मास्य वाह्योऽपानोऽत उच्यते ।
अन्नं प्राणस्तथापानं मृत्युर्जीवितमेव च ॥ १२ ॥
अन्नं ब्रह्म च विज्ञेयं प्रजानां प्रसवस्तथा ।
अन्नाद्भूतानि जायन्ते स्थितिरन्नेन चेष्यते ।
वर्द्धन्ते तेन भूतानि तस्मादन्नन्तदुच्यते ॥ १३ ॥
तदेवाग्नौ हुतं ह्यन्नं भुञ्जते देवदानवाः ।
गन्धर्व्वयक्षरक्षांसि पिशाचाश्चान्नमेव हि ॥ १४ ॥

इति श्रीमहापुराणे वायुप्रोक्ते पाशुपतयोगो नाम पञ्चदशोऽध्यायः ।

---

# अथ षोड़शोऽध्यायः।

———000@000———

## शौचाचारलक्षणं।

वायुरुवाच। अत ऊर्द्धं प्रवक्ष्यामि शौचाचारस्य लक्षणं।
यदनुष्ठाय शुद्धात्मा प्रेत्य स्वर्गं हि चाप्नुयात्॥ १॥
उदकार्थी तु शौचानां मुनीनामुत्तमं पदं।
यस्तु तेष्वप्रमत्तः स्यात्स मुनिर्नावसीदति॥ २॥
मानावमानौ द्वावेतौ तावेवाहुर्विषामृते।
अवमानं विषन्तत्र मानन्त्वमृतमुच्यते॥ ३॥
यस्तु तेष्वप्रमत्तः स्यात्स मुनिर्नावसीदति।
गुरोः प्रियहिते युक्तः स तु संवत्सरं वसेत्॥ ४॥
नियमेष्वप्रमत्तस्तु यमेषु च सदा भवेत्।
प्राप्यानुज्ञान्ततश्चैव ज्ञानागमनमुत्तमं।
अविरोधेन धर्म्मस्य विचरेत् पृथिवीमिमां॥ ५॥
चक्षुःपूतं व्रजेन्मार्गं वस्त्रपूतं जलं पिवेत्।
सत्यपूतां वदेद्वाणीमिति धर्म्मानुशासनं॥ ६॥
आतिथ्यं श्राद्धयज्ञेषु न गच्छेद्योगवित् क्वचित्।
एवं ह्यहिंसको योगी भवेदिति विचारणा॥ ७॥
वह्नौ विधूमे व्यङ्गारे सर्व्वस्मिन् भुक्तवज्जने।
विचरेन्मतिमान् योगी न तु तेष्वेव नित्यशः॥ ८॥
यथैवमवमन्यन्ते यथा परिभवन्ति च।

युक्तस्तथाचरेद्भैक्ष्यं सतां धर्म्ममदूषयन् ॥ ९ ॥
भैक्ष्यं चरेद् गृहस्थेषु यथाचारगृहेषु च ।
श्रेष्ठा तु परमा चेयं वृत्तिरस्योपदिश्यते ॥ १० ॥
अत ऊर्द्ध्वं गृहस्थेषु शालीनेषु चरेद्द्विजः ।
श्रद्दधानेषु दान्तेषु श्रोत्रियेषु महात्मसु ॥ ११ ॥
अत ऊर्द्ध्वं पुनश्चापि अदुष्टपतितेषु च ।
भैक्ष्यचर्य्या विवर्णेषु जघन्या वृत्तिरुच्यते ॥ १२ ॥
भैक्ष्यं यवागूं तक्रं वा पयो यावकमेव च ।
फलमूलं विपक्वं वा पिण्याकं शक्तितोपि वा ॥ १३ ॥
इत्येते वै मया प्रोक्ता योगिनां सिद्धिवर्धनाः ।
आहारास्तेषु सिद्धेषु श्रेष्ठं भैक्ष्यमिति स्मृतं ॥ १४ ॥
अब्बिन्दुं यः कुशाग्रेण मासे मासे समश्नुते ।
न्यायतो यस्तु भिक्षेत स पूर्व्वोक्ताद्विशिष्यते ॥ १५ ॥
योगिनाञ्चैव सर्व्वेषां श्रेष्ठञ्चान्द्रायणं स्मृतं ।
एकं द्वे त्रीणि चत्वारि शक्तितो वा समाचरेत् ॥ १६ ॥
अस्तेयं ब्रह्मचर्य्यञ्च अलोभस्त्याग एव च ।
व्रतानि चैव भिक्षूणामहिंसा परमार्थिता ॥ १७ ॥
अक्रोधो गुरुशुश्रूषा शौचमाहारलाघवं ।
नित्यं स्वाध्याय इत्येते नियमाः परिकीर्त्तिताः ॥ १८ ॥
वीजयोनिर्गुणवपुर्बद्धः कर्म्मभिरेव च ।
यथा द्विप इवारण्ये मनुष्याणां विधीयते ॥ १९ ॥
प्राप्यते वाचिरादेवाशुभेनेव निवारितः ।
एवं ज्ञानेन शुद्धेन दग्धवीजो ह्यकल्मषः ॥ २० ॥

विमुक्तबन्धः शान्तोऽसौ मुक्त इत्यभिधीयते ।

वेदैस्तु त्याः सर्व्वयज्ञक्रियास्तु
यज्ञे जप्यं ज्ञानिनामाहुरग्र्यं ।
ज्ञानाद्ध्यानं सङ्गरागव्यपेतं
तस्मिन् प्राप्ते शाश्वतस्योपलब्धिः ॥ २१ ॥

दमः शमः सत्यमकल्मषत्वं
मौनञ्च भूतेष्वखिलेष्वथार्ज्जवं ।
अतीन्द्रियज्ञानमिदं तथार्ज्जवं(१)
प्राहुस्तथा ज्ञानविशुद्धसत्त्वाः ॥ २२ ॥

समाहितो ब्रह्मपरोऽप्रमादी
शुचिस्तथैवात्मरतिर्जितेन्द्रियः ।
समाप्नुयुर्योगमिमं महाधियो-
महर्षयश्चैवमनिन्दितामलाः ॥ ॥ २३ ॥

इति श्रीमहापुराणे वायुप्रोक्ते शौचाचारलक्षणं नाम षोड़शोऽध्यायः ।

---

१ ऋषेः स्वाच्छन्द्यादादर्शदोषाद्वा पुनरुक्तोऽयं पाठः ।

# अथ सप्तदशोऽध्यायः ।

———000@000———

## परमाश्रमप्राप्तिकथनं ।

वायुरुवाच । आश्रमत्रयमुत्सृज्य प्राप्तस्तु परमाश्रमं ।
अतः संवत्सरस्यान्ते प्राप्य ज्ञानमनुत्तमं ॥ १ ॥
अनुज्ञाप्य गुरुञ्चैव विचरेत् पृथिवीमिमां ।
सारभूतमुपासीत ज्ञानं यज्ज्ञेयसाधकं ॥ २ ॥
इदं ज्ञानमिदं ज्ञेयमिति यस्तुषितश्चरेत् ।
अपि कल्पसहस्रायुर्नैव ज्ञेयमवाप्नुयात् ॥ ३ ॥
त्यक्तसङ्गो जितक्रोधो लघ्वाहारी जितेन्द्रियः ।
पिधाय बुद्ध्या द्वाराणि ध्याने ह्येवं मनो दधेत् ॥ ४ ॥
शून्येष्वेवावकाशेषु गुहासु च वने तथा ।
नदीनां पुलिने चैव नित्यं युक्तः सदा भवेत् ॥ ५ ॥
वाग्दण्डः कर्म्मदण्डश्च मनोदण्डश्च ते त्रयः ।
यस्यैते नियता दण्डाः स त्रिदण्डी व्यवस्थितः ॥ ६ ॥
अवस्थितो ध्यानरतिर्जितेन्द्रियः
शुभाशुभे हित्य च कर्म्मणी उभे ।
इदं शरीरं प्रविमुच्य शाश्वतो
न जायते म्रियते वा कदाचित् ॥ ७ ॥

इति श्रीमहापुराणे वायुप्रोक्ते परमाश्रमप्राप्तिकथनं
नाम सप्तदशोऽध्यायः ।

# अथाष्टादशोऽध्यायः ।

———000———

यतिप्रायश्चित्तविधिः ।

वायुरुवाच । अत ऊर्द्धं प्रवच्यामि यतीनामिह निश्चयं ।
प्रायश्चित्तानि तत्त्वेन यान्यकामकृतानि तु ।
अथ कामकृतेष्याहुः सूक्ष्मधर्म्मविदो जनाः ॥ १ ॥
पापञ्च त्रिविधं प्रोक्तं वाङ्मनःकायसम्भवं ।
सततं हि दिवा रात्रौ येनेदं बध्यते जगत् ॥ २ ॥
न कर्म्माणि न चाप्येष तिष्ठतीति परा श्रुतिः ।
क्षणमेव प्रयोज्यन्तु आयुषस्तु विधारणात् ॥ ३ ॥
भवेद्धीरोऽप्रमत्तस्तु योगो हि परमं बलं ।
न हि योगात्परं किञ्चिन्नराणामिह दृश्यते ।
तस्माद्योगं प्रशंसन्ति धर्म्मयुक्ता मनीषिणः ॥ ४ ॥
अविद्यां विद्यया तीर्त्वा प्राप्यैश्वर्य्यमनुत्तमं ।
दृष्ट्वा परापरं धीराः परं गच्छन्ति तत्पदं ॥ ५ ॥
व्रतानि यानि भिक्षूणां तथैवोपव्रतानि च ।
एकैकापक्रमे तेषां प्रायश्चित्तं विधीयते ॥ ६ ॥
उपेत्य तु स्त्रियं कामात् प्रायश्चित्तं विनिर्दिशेत् ।
प्राणायामसमायुक्तं कुर्य्यात्सान्तपनं तथा ॥ ७ ॥
ततश्चरति निर्द्दिष्टं कृच्छ्रस्यान्ते समाहितः ।
पुनराश्रममागम्य चरेद्भिक्षुरतन्द्रितः ।
न मर्म्मयुक्तं वचनं हिनस्तीति मनीषिणः ॥ ८ ॥

तथापि च न कर्त्तव्यः प्रसङ्गो ह्येष दारुणः ।
अहोरात्राधिकः कश्चिन्नास्त्यधर्म्म इति श्रुतिः ॥ ९ ॥
हिंसा ह्येषा परा सृष्टा दैवतैर्मुनिभिस्तथा ।
यदेतद्द्रविणं नाम प्राणा ह्येते वहिश्चराः ।
स तस्य हरति प्राणान् यो यस्य हरते धनं ॥ १० ॥
एवं कृत्वा स दुष्टात्मा भिन्नवृत्तो व्रतात्च्युतः ।
भूयो निर्व्वेदमापन्नश्चरेच्चान्द्रायणं व्रतं ॥ ११ ॥
विधिना शास्त्रदृष्टेन संवत्सरमिति श्रुतिः ।
ततः संवत्सरस्यान्ते भूयः प्रक्षीणकल्मषः ।
भूयो निर्व्वेदमापन्नश्चरेद्भिक्षुरतन्द्रितः ॥ १२ ॥
अहिंसा सर्व्वभूतानां कर्म्मणा मनसा गिरा ।
अकामादपि हिंसेत यदि भिक्षुः पशून् मृगान् ।
कृच्छ्रातिकृच्छ्रं कुर्व्वीत चान्द्रायणमथापि वा ॥ १३ ॥
स्कन्देदिन्द्रियदौर्ब्बल्यात् स्त्रियं दृष्ट्वा यतिर्यदि ।
तेन धारयितव्या वै प्राणायामास्तु षोड़श ॥ १४ ॥
दिवा स्कन्नस्य विप्रस्य प्रायश्चित्तं विधीयते ।
त्रिरात्रमुपवासश्च प्राणायामशतं तथा ॥ १५ ॥
रात्रौ स्कन्नः शुचिः स्नातो द्वादशैव तु धारणाः ।
प्राणायामेन शुद्धात्मा विरजा जायते द्विजः ॥ १६ ॥
एकान्नं मधु मांसं वा ह्यामश्राद्धं तथैव च ।
अभोज्यानि यतीनाञ्च प्रत्यक्षलवणानि च ॥ १७ ॥
एकैकातिक्रमे तेषां प्रायश्चित्तं विधीयते ।
प्राजापत्येन कृच्छ्रेण ततः पापात् प्रमुच्यते ॥ १८ ॥

व्यतिक्रमाच्च ये केचिद्वाङ्मनःकायसम्भवं ।
सद्भिः सह विनिश्चित्य यद्ब्रूयुस्तत्समाचरेत् ॥ १९ ॥

विशुद्धबुद्धिः समलोष्टकाञ्चनः
समस्तभूतेषु चरन् समाहितः ।
स्थानं ध्रुवं शाश्वतमव्ययं सतां
परं स गत्वा न पुनर्हि जायते ॥ २० ॥

इति श्रीमहापुराणे वायुप्रोक्ते यतिप्रायश्चित्तविधिर्नामाष्टादशोऽध्यायः ।

# अथैकोनविंशोऽध्यायः ।

———000———

अरिष्टानि ।

वायुरुवाच । अत ऊर्द्धं प्रवक्ष्यामि अरिष्टानि निबोधत ।
येन ज्ञानविशेषेण मृत्युं पश्यति चात्मनः ॥ १ ॥
अरुन्धतीं ध्रुवञ्चैव सोमच्छायां महापथं ।
यो न पश्येत्स नो जीवेन्नरः संवत्सरात्परं ॥ २ ॥
अरश्मिवन्तमादित्यं रश्मिवन्तञ्च पावकं ।
यः पश्येन्न च जीवेत मासादेकादशात्परं ॥ ३ ॥
वमेन्मूत्रं करीषं वा सुवर्णं रजतं तथा ।
प्रत्यक्षमथ वा स्वप्ने दशमासान् स जीवति ॥ ४ ॥
अग्रतः पृष्ठतो वापि खण्डं यस्य पदम्भवेत् ।
पांशुले कर्दमे वापि सप्तमासान् स जीवति ॥ ५ ॥
काकः कपोतो गृध्रो वा निलीयेद्यस्य मूर्द्धनि ।
क्रव्यादो वा खगः कश्चित् षण्मासान्नातिवर्त्तते ॥ ६ ॥
बध्येद्वायसपङ्क्तीभिः पांशुवर्षेण वा पुनः ।
छायां वा विकृतां पश्येच्चतुः पञ्च स जीवति ॥ ७ ॥
अनभ्रे विद्युतं पश्येद् दक्षिणां दिशमाश्रितां ।
उदकेन्द्रधनुर्वापि त्रयो द्वौ वा स जीवति ॥ ८ ॥
अप्सु वा यदि वादर्शे आत्मानं यो न पश्यति ।
अशिरस्कन्तथात्मानं मासादूर्द्ध्वं न जीवति ॥ ९ ॥

शवगन्धि भवेद्गात्रं वशागन्धि ह्यथापि वा ।
मृत्युर्ह्युपस्थितस्तस्य अर्द्धमासं स जीवति ॥ १० ॥
सम्भिन्नो मारुतो यस्य मर्म्मस्थानानि क्रन्तति ।
अद्भिः स्पृष्टो न हृष्येच्च तस्य मृत्युरुपस्थितः ॥ ११ ॥
ऋक्षवानरयुक्तेन रथेनाशान्तु दक्षिणां ।
गायन्नथ व्रजेत् स्वप्ने विद्यान् मृत्युरुपस्थितः ॥ १२ ॥
कृष्णाम्बरधरा श्यामा गायन्ती वाथ चाङ्गना ।
यन्नयेद्दक्षिणामाशां स्वप्ने सोऽपि न जीवति ॥ १३ ॥
छिद्रं वासश्च कृष्णञ्च स्वप्ने यो बिभृयान्नरः ।
भग्नं वा श्रवणं दृष्ट्वा विद्यान्मृत्युरुपस्थितः ॥ १४ ॥
आमस्तकतलाद्यस्तु निमज्जेत्पङ्कसागरे ।
दृष्ट्वा तु तादृशं स्वप्नं सद्य एव न जीवति ॥ १५ ॥
भस्माङ्गारांश्च केशांश्च नदीं शुष्कां भुजङ्गमान् ।
पश्येद्यो दशरात्रन्तु न स जीवेत तादृशः ॥ १६ ॥
कृष्णैश्च विकटैश्चैव पुरुषैरुद्यतायुधैः ।
पाषाणैस्ताड्यते स्वप्ने यः सद्यो न स जीवति ॥ १७
सूर्य्योदये प्रत्यूषसि प्रत्यक्षं यस्य वै शिवा ।
क्रोशन्ती सम्मुखाभ्येति स गतायुर्भवेन्नरः ॥ १८ ॥
यस्य वै स्नातमात्रस्य हृदयं पीड्यते भृशं ।
जायते दन्तहर्षश्च तं गतायुषमादिशेत् ॥ १९ ॥
भूयो भूयः श्वसेद्यस्तु रात्रौ वा यदि वा दिवा ।
दीपगन्धञ्च नो वेत्ति विद्यान्मृत्युमुपस्थितं ॥ २० ॥
रात्रौ चेन्द्रायुधं पश्येद् दिवा नक्षत्रमण्डलं ।

परनेत्रेषु चात्मानं न पश्येन्न स जीवति ॥ २१ ॥
नेत्रमेकं स्रवेद्यस्य कर्णौ स्थानाच्च भ्रश्यतः।
नासा च वक्रा भवति स ज्ञेयो गतजीवितः ॥ २२ ॥
यस्य कृष्णा खरा जिह्वा पङ्कभासञ्च वै मुखं।
गण्डे चिपिटके रक्ते तस्य मृत्युरुपस्थितः ॥ २३ ॥
मुक्तकेशो हसंश्चैव गायन् नृत्यंश्च यो नरः।
याम्याशाभिमुखो गच्छेत्तदन्तं तस्य जीवितं ॥ २४ ॥
यस्य स्वेदसमुद्भूताः श्वेतसर्षपसन्निभाः।
स्वेदा भवन्ति ह्यसकृत्तस्य मृत्युरुपस्थितः ॥ २५ ॥
उष्ट्रा वा रासभा वापि युक्ताः स्वप्ने रथेऽशुभाः।
यस्य सोपि न जीवेत दक्षिणाभिमुखो गतः ॥ २६ ॥
द्व चात्र परमेऽरिष्टे एतद्रूपं परं भवेत्।
घोषं न शृणुयात् कर्णे ज्योतिर्नेत्रे न पश्यति ॥२७ ॥
श्वभ्रे यो निपतेत् स्वप्ने द्वारञ्चास्य न विद्यते।
न चोत्तिष्ठति यः श्वभ्रात्तदन्तं तस्य जीवितं ॥ २८ ॥
जर्द्धा च दृष्टिर्न च सम्प्रतिष्ठा
रक्ता पुनः सम्परिवर्त्तमाना।
मुखस्य चोष्मा शुषिरा च नाभि-
रत्युष्णमूत्रो विषमस्थ एव ॥ २९ ॥
दिवा वा यदि वा रात्रौ प्रत्यक्षं योऽभिहन्यते।
तं पश्येदथ हन्तारं स हतस्तु न जीवति ॥ ३० ॥
अग्निप्रवेशं कुरुते स्वप्नान्ते यस्तु मानवः।
स्मृतिं नोपलभेच्चापि तदन्तं तस्य जीवितं ॥ ३१ ॥

यस्तु प्रावरणं शुक्लं स्वकं पश्यति मानवः ।
रक्तं कृष्णमपि स्वप्ने तस्य मृत्युरुपस्थितः ॥ ३२ ॥
अरिष्टसूचिते देहे तस्मिन्काल उपागते ।
त्यक्त्वा भयविषादञ्च उद्गच्छेद्बुद्धिमान्नरः ॥ ३३ ॥
प्राचीं वा यदि वोदीचीं दिशं निष्क्रम्य वै शुचिः ।
समेऽतिस्थावरे देशे विविक्ते जनवर्ज्जिते ॥ ३४ ॥
उदङ्मुखः प्राङ्मुखो वा स्वस्थः स्वाचान्त एव च ।
स्वस्तिकोपनिविष्टश्च नमस्कृत्वा महेश्वरं ।
समकायशिरोग्रीवन्धारयेन्नावलोकयेत् ॥ ३५ ॥
यथा दीपो निवातस्थो नेङ्गते सोपमा स्मृता ।
प्रागुदक्प्रवणे देशे तस्माद्युञ्जीत योगवित् ॥ ३६ ॥
प्राणे च रमते नित्यं चक्षुषोः स्पर्शने तथा ।
श्रोत्रे मनसि बुद्धौ च तथा वक्षसि धारयेत् ॥ ३७ ॥
कालधर्म्मञ्च विज्ञाय सम्यक्चैव सर्व्वशः ।
द्वादशाध्यात्म इत्येवं योगधारणमुच्यते ॥ ३८ ॥
शतमष्टशतं वापि धारणां मूर्द्धि धारयेत् ।
न तस्य धारणायोगाद्वायुः सर्व्वं प्रवर्त्तते ॥ ३९ ॥
ततस्त्वापूरयेद्देहं ओंकारेण समाहितः ।
अथोङ्कारमयो योगी न चरेत्त्वचरी भवेत् ॥ ४० ॥

इति श्रीमहापुराणे वायुप्रोक्ते अरिष्टानि नामोन-
विंशोऽध्यायः ।

---

# अथ विंशोऽध्यायः।

———ooo———

## ओंकारप्राप्तिलक्षणं।

वायुरुवाच। अत ऊर्द्ध्वं प्रवक्ष्यामि ओंकारप्राप्तिलक्षणं।
एष त्रिमात्रो विज्ञेयो व्यञ्जनश्चात्र सस्वरं॥ १॥
प्रथमा वैद्युती मात्रा द्वितीया तामसी स्मृता।
तृतीया निर्गुणी विद्यात्मात्रामक्षरगामिनीं॥ २॥
गान्धर्व्वीति च विज्ञेया गान्धारस्वरसम्भवा।
पिपीलिकासमस्पर्शा प्रयुक्ता मूर्द्ध्नि लक्ष्यते॥ ३॥
तथा प्रयुक्तमोङ्कारं प्रतिनिर्व्वाति मूर्द्धनि।
तथोङ्कारमयो योगी ह्यक्षरे त्वक्षरी भवेत्॥ ४॥
प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते।
अप्रमत्तेन वेद्धव्यं शरवत्तन्मयो भवेत्॥ ५॥
ओमित्येकाक्षरं ब्रह्म गुहायां निहितं पदं।
ओमित्येतत् त्रयो वेदास्त्रयो लोकास्त्रयोऽग्नयः।
विष्णुक्रमास्त्रयस्त्वेते ऋक्सामानि यजूंषि च॥ ६॥
मात्राश्चात्र चतस्रस्तु विज्ञेयाः परमार्थतः।
तत्र युक्तश्च यो योगी तस्य सालोक्यतां व्रजेत्॥ ७॥
अकारस्त्वक्षरो ज्ञेय उकारः स्वरितः स्मृतः।
मकारस्तु प्लुतो ज्ञेयस्त्रिमात्र इति संज्ञितः॥ ८॥
अकारस्त्वथ भूर्लोक उकारो भुव उच्यते।

सव्यञ्जनो मकारश्च स्वर्ल्लोकश्च विधीयते ॥ ९ ॥
ओंकारस्तु त्रयो लोकाः शिरस्तस्य त्रिपिष्टपं ।
भुवनान्तञ्च तत्सर्व्वं ब्राह्मन्तत्पदमुच्यते ॥ १० ॥
मात्रापदं रुद्रलोको ह्यमात्रस्तु शिवं पदं ।
एवन्ध्यानविशेषेण तत्पदं समुपासते ॥ ११ ॥
तस्माद्ध्यानरतिर्नित्यममात्रं हि तदक्षरं ।
उपास्यं हि प्रयत्नेन शाश्वतं पदमिच्छता ॥ १२ ॥
ह्रस्वा तु प्रथमा मात्रा ततो दीर्घा त्वनन्तरं ।
ततः प्लुतवती चैव तृतीया उपदिश्यते ॥ १३ ॥
एतास्तु मात्रा विज्ञेया यथावदनुपूर्व्वशः ।
यावच्चैव तु शक्यन्ते धार्य्यन्ते तावदेव हि ॥ १४ ॥
इन्द्रियाणि मनो बुद्धिं ध्यायन्नात्मनि यः सदा ।
अत्राष्टमात्रमपि चेच्छृणुयात्फलमाप्नुयात् ॥ १५ ॥
मासे मासेऽश्वमेधेन यो यजेत शतं समाः ।
न स तत् प्राप्नुयात् पुण्यं मात्रया यदवाप्नुयात् ॥ १६ ॥
अब्बिन्दुं यः कुशाग्रेण मासे मासे पिबेन्नरः ।
संवत्सरशतं पूर्णं मात्रया तदवाप्नुयात् ॥ १७ ॥
इष्टापूर्त्तस्य यज्ञस्य सत्यवाक्ये च यत्फलं ।
अतक्षणे च मांसस्य मात्रया तदवाप्नुयात् ॥ १८ ॥
स्वाम्यर्थे युध्यमानानां शूराणामनिवर्त्तिनां(१) ।
यद्भवेत्तत्फलं दृष्टं मात्रया तदवाप्नुयात् ॥ १९ ॥

---

१ शूनामामनिवर्त्तिनामिति क०, ख० च ।

न तथा तपसोग्रेण न यज्ञैर्भूरिदक्षिणैः ।
यत्फलं प्राप्नुयात् सम्यक् मात्रया तदवाप्नुयात् ॥ २० ॥
तत्र वै योऽर्द्धमात्रो यः प्लुतो नामोपदिश्यते ।
एषा एव भवेत्कार्य्या गृहस्थानान्तु योगिनां ॥ २१ ॥
एषा चैव विशेषेण ऐश्वर्य्यसमलक्षणा ।
योगिनान्तु विशेषेण ऐश्वर्य्यं ह्यष्टलक्षणे ।
अणिमाद्येतिविज्ञेया तस्माद्युञ्जीत तां द्विजः ॥ २२ ॥
एवं हि योगी संयुक्तः शुचिर्दान्तो जितेन्द्रियः ।
आत्मानं विन्दते यस्तु स सर्व्वं विन्दते द्विजः ॥ २३ ॥
ऋचो यजूंषि सामानि वेदोपनिषदस्तथा ।
योगज्ञानादवाप्नोति ब्राह्मणो ध्यानचिन्तकः ॥ २४ ॥
सर्व्वभूतलयो भूत्वा अभूतः स तु जायते ।
योगिसङ्क्रमणं ज्ञात्वा याति वै शाश्वतं पदं ॥ २५ ॥
अपि चात्र चतुर्थीं तां ध्यायमानश्चतुर्मुखीं ।
प्रकृतिं विश्वरूपाख्यां दृष्ट्वा दिव्येन चक्षुषा ॥ २६ ॥
अजामेतां लोहितशुक्लकृष्णां वह्वीः प्रजाः सृजमानां स्वरूपां ।
अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः ।
अष्टाक्षरां षोडशपाणिपादां
चतुर्मुखीं त्रिशिखामेकशृङ्गां ।
आद्यामजां विश्वसृजां स्वरूपां
ज्ञात्वा बुधास्त्वमृतत्वं व्रजन्ति ।
ये ब्राह्मणाः प्रणवं वेदयन्ति
न ते पुनः संसरन्तीह भूयः ॥ २७ ॥

इत्येतदक्षरं ब्रह्म परमोङ्कारसंज्ञितं ।
यस्तु वेदयते सम्यक् तथा ध्यायति वा पुनः ॥ २८ ॥
संसारचक्रमुत्सृज्य मुक्तबन्धनबन्धनः ।
अचलं निर्गुणं स्थानं शिवं प्राप्नोत्यसंशयः ।
इत्येतद्वै मया प्रोक्तमोङ्कारप्राप्तिलक्षणं ॥ २९ ॥

नमो लोकेश्वराय सङ्कल्पकल्पग्रहणाय(१) महात्मसुपतिष्ठते तद्धो ह्नितं यद्ब्रह्मणे नमः ।

सर्व्वत्र स्थानिने निर्गुणाय सम्भक्तयोगीश्वराय च ।

पुष्करपर्णमिवाद्भिर्विशुद्धमिव ब्रह्मसुपतिष्ठेत्यविलं पवित्राणां पवित्रं पवित्रेण परिपूरितेन पवित्रेण कृत्स्नदीर्घप्लुतमिति तदेतमोङ्कारमशब्दमस्पर्शमरूपमरसमगन्धं पर्य्युपासेत अविद्येशा-नाय विश्वरूपो न तस्य अविद्येशानाय नमो योगीश्वरायेति च येन द्यौरुग्रा पृथिवी चोदृढ़ा येन स्वस्तभितं येन नाकस्तयोरन्त-रीक्षं इमे वरीयसी देवानां हृदयं विश्वरूपो न तस्य प्राणापानो-पस्थचास्ति ओंकारोविश्वविद्या वै यज्ञः यज्ञो वै वेदः वेदो वै नमस्कारः नमस्कारो रुद्रः नमो रुद्राय योगेश्वराधिपतये नमः ॥

इति सिद्धिप्रत्युपस्थानं सायं प्रातर्मध्याह्ने नम इति ।

सर्व्वकामफलो रुद्रः ।

यथा वृन्तात्फलं पक्वं पवनेन समीरितं ।
नमस्कारेण रुद्रस्य तथा पापं प्रणश्यति ॥ ३० ॥
यथा रुद्रनमस्कारः सर्व्वधर्म्मफलो ध्रुवः ।

---

१ सङ्कल्पसङ्कल्परक्षणायेति ख० । सङ्कल्पलक्षणायेति ग० ।

अन्यदेवनमस्कारो न तत् फलमवाप्नुयात् ॥ ३१ ॥
तस्मात्त्रिषवणं योगी उपासीत महेश्वरं ।
दशविस्तारकं ब्रह्म तथा च ब्रह्म विस्तरं ॥ ३२ ॥
ओंकारं सर्व्वतः काले सर्व्वं विहितवान् प्रभुः ।
तेन तेन तु विष्णुत्वं नमस्कारं महायशाः ॥ ३३ ॥
नमस्कारस्तथा चैव प्रणवस्तुवते प्रभुं ।
प्रणवं स्तुवते यज्ञो यज्ञं संस्तुवते नमः ।
नमस्तुवति वै रुद्रस्तस्मात् रुद्रपदं शिवं ॥ ३४ ॥
इत्येतानि रहस्यानि यतीनां वै यथाक्रमं ।
यस्तु वेदयते ध्यानं स परं प्राप्नुयात्पदं ॥ ३५ ॥

इति श्रीमहापुराणे वायुप्रोक्ते ओंकारप्राप्तिलक्षणं
नाम विंशोऽध्यायः ।

---

पाशुपतयोगः समाप्तः ।

---

## अथैकविंशोऽध्यायः ।



### कल्पनिरूपणं ।

सूत उवाच । ऋषीणामग्निकल्पानां नैमिषारण्यवासिनां ।
ऋषिः श्रुतिधरः प्राज्ञः सावर्णिर्नाम नामतः ॥ १ ॥
तेषां सोऽप्यऽग्रतो भूत्वा वायुं वाक्यविशारदः ।
सातत्यं तत्र कुर्व्वन्तं प्रियार्थं सत्रयाजिनां ।
विनयेनोपसङ्गम्य पप्रच्छ स महाद्युतिं ॥ २ ॥
सावर्णिरुवाच । विभो पुराणसम्बद्धां कथां वै वेदसम्मितां ।
श्रोतुमिच्छामहे सम्यक् प्रसादात्सर्व्वदर्शिनः ॥ ३ ॥
हिरण्यगर्भो भगवान् ललाटान्नीललोहितं ।
कथं तत्तेजसन्देवं लब्धवान् पुत्रमात्मनः ॥ ४ ॥
कथञ्च भगवान् जज्ञे ब्रह्मा कमलसम्भवः ।
रुद्रत्वञ्चैव शर्व्वस्य स्वात्मजस्य कथं पुनः ॥ ५ ॥
कथञ्च विष्णोरुद्रेण सार्द्धं प्रीतिरनुत्तमा ।
सर्व्वे विष्णुमया देवा सर्व्वे विष्णुमया गणाः ॥ ६ ॥
न च विष्णुसमा काचिद्गतिरन्या विधीयते ।
इत्येवं सततं देवा गायन्ते नात्र संशयः ।
भवस्य स कथं नित्यं प्रणामं कुरुते हरिः ॥ ७ ॥
सूत उवाच । एवमुक्ते तु भगवान् वायुः सावर्णिमब्रवीत् ।
अहो साधु त्वया साधो पृष्टः प्रश्नो ह्यनुत्तमः ॥ ८ ॥

भवस्य पुत्रजन्मत्वं ब्रह्मणः सोऽभवद्यथा ।
ब्रह्मणः पद्मयोनित्वं रुद्रत्वं महेश्वरस्य च ॥ ९ ॥
द्वाभ्यामपि च सम्प्रीतिर्विष्णोश्चैव भवस्य च ।
यच्चापि कुरुते नित्यं प्रणामं महेश्वरस्य च ।
विस्तरेणानुपूर्व्याच्च शृणुत ब्रुवतो मम ॥ १० ॥
मन्वन्तरस्य संहारे पश्चिमस्य महात्मनः ।
आसीत्तु सप्तमः कल्पः पद्मोनाम (१) द्विजोत्तम ।
वाराहः साम्प्रतस्तेषां तस्य वक्ष्यामि विस्तरं ॥ ११ ॥
सावर्णिरुवाच । कियता चैव कालेन कल्पः सम्भवते कथं ।
किञ्च प्रमाणं कल्पस्य तन्न प्रब्रूहि पृच्छतां ॥ १२ ॥
वायुरुवाच । मन्वन्तराणां सप्तानां कालसंख्या यथाक्रमं ।
प्रवक्ष्यामि समासेन ब्रुवतो मे निबोधत ॥ १३ ॥
कोटीनां द्वे सहस्रे वै अष्टौ कोटिशतानि च ।
द्विषष्टिश्च तथा कोट्यो नियुतानि च सप्ततिः ।
कल्पार्द्धस्य तु संख्यायामेतत् सर्व्वमुदाहृतं ॥ १४ ॥
पूर्व्वोक्तो च गुणच्छेदो वर्षाग्रं सर्व्वमादिशेत् ।
शतञ्चैव तु कोटीनां कोटीनामष्टसप्ततिः ।
द्वे च शतसहस्रे तु नवतिर्नियुतानि च ॥ १५ ॥
मानुषेण प्रमाणेन यावद्वैवस्वतान्तरं ।
एष कल्पस्तु विज्ञेयः कल्पार्द्धद्विगुणीकृतः ॥ १६ ॥
अनागतानां सप्तानामेतदेव यथाक्रमं ।

---

१ पद्मो नामेति घ० ।

प्रमाणं कालसंख्याया विज्ञेयं मतमैश्वरं ॥ १७ ॥
नियुतान्यष्टपञ्चाशत्तथाशीतिशतानि च ।
चतुरशीति चान्यानि प्रयुतानि (१) प्रमाणतः ॥ १८ ॥
सप्तर्षयो मनुश्चैव देवाश्चेन्द्रपुरोगमाः ।
एतत् कालस्य विज्ञेयं वर्णयन्तु प्रमाणतः ॥ १९ ॥
एवं मन्वन्तरं तेषां मानुषान्तः प्रकीर्त्तितः ।
प्रणवान्नाश्च ये देवाः साध्या देवगणाश्च ये ।
विश्वे देवाश्च ये नित्याः कल्पं जीवन्ति ते गणाः ॥ २० ॥
अयं यो वर्त्तते कल्पो वाराहः स तु कीर्त्त्यते ।
यस्मिन् स्वायम्भुवाद्याश्च मनवश्च चतुर्द्दश ॥ २१ ॥
ऋषय ऊचुः । कस्माद्वाराह कल्पोऽयं नामतः परिकीर्त्तितः ।
कस्माच्च कारणाद्देवो वराह इति कीर्त्त्यते ॥ २२ ॥
को वा वराहो भगवान् कस्य योनिः किमात्मकः ।
वराहः कथमुत्पन्न एतदिच्छाम वेदितुं ॥ २३ ॥
वायुरुवाच । वराहस्तु यथोत्पन्नो यस्मिन्नर्थे च कल्पितः ।
वाराहश्च यथा कल्पः कल्पत्वं कल्पना च या ॥ २४ ॥
कल्पयोरन्तरं यच्च तस्य चास्य च कल्पितं ।
तत्सर्व्वं सम्प्रवक्ष्यामि यथा दृष्टं यथा श्रुतं ॥ २५ ॥
भवस्तु प्रथमः कल्पो लोकादौ प्रथितः पुरा ।
ज्ञातव्यो भगवानत्र ह्यानन्दः साम्प्रतः स्वयं ॥ २६ ॥

---

१ प्रयुतान्यशीति ग० ।
२ कश्यपस्येति घ०, ङ० च ।

ब्रह्मस्थानमिदं दिव्यं प्राप्तं वा दिव्यसम्भवं ।
द्वितीयस्तु भुवः कल्पस्तृतीयस्तप उच्यते ॥ १७ ॥
भवश्चतुर्थो विज्ञेयः पञ्चमो रम्भ एव च ।
ऋतुकल्पस्तथा षष्ठः सप्तमस्तु क्रतुः स्मृतः ॥ २८ ॥
अष्टमस्तु भवेद्वह्निर्नवमो हव्यवाहनः ।
सावित्रो दशमः कल्पो भुवस्त्वेकादशः स्मृतः ॥ २९ ॥
उशिको द्वादशस्तत्र कुशिकस्तु त्रयोदशः ।
चतुर्दशस्तु गन्धर्व्वो गान्धर्व्वो यत्र वै स्वरः ।
उत्पन्नस्तु यथा नादो गन्धर्व्वा यत्र चोत्थिताः ॥ ३० ॥
ऋषभस्तु ततः कल्पो ज्ञेयः पञ्चदशो द्विजाः ।
ऋषयो यत्र सम्भूताः स्वरो लोकमनोहरः ॥ ३१ ॥
षड्जस्तु षोड़शः कल्पः षड् जना यत्र चर्षयः ।
शिशिरश्च वसन्तश्च निदाघो वर्ष एव च ॥ ३२ ॥
शरद्धेमन्त इत्येते मानसा ब्रह्मणः सुताः ।
उत्पन्नाः षड्जसंसिद्धाः पुत्राः कल्पे तु षोड़शे ॥ ३३ ॥
यस्माज्जातैश्च तैः षड् भिः सद्योजातो महेश्वरः ।
तस्मात् समुत्थितः षड्जः स्वरस्तूदधिसन्निभः ॥ ३४ ॥
ततः सप्तदशः कल्पो मार्जालीय इति स्मृतः ।
मार्ज्जालीयन्तु तत् कर्म्म यस्माद्ब्राह्ममकल्पयत् ॥ ३५ ॥
ततस्तु मध्यमो नाम कल्पोऽष्टादश उच्यते ।
यस्मिंस्तु मध्यमो नाम स्वरो धैवतपूजितः ।
उत्पन्नः सर्व्वभूतेषु मध्यमो वै स्वयम्भुवः ॥ ३६ ॥
ततस्त्वेकोनविंशस्तु कल्पो वैराजकः स्मृतः ।

वैराजो यत्र भगवान् मनुर्वै ब्रह्मणः सुतः ॥ ३७ ॥
तस्य पुत्रस्तु धर्म्मात्मा दधीचिर्नाम धार्म्मिकः ।
प्रजापतिर्महातेजा बभूव चिदग्रेश्वरः ॥ ३८ ॥
अकामयत गायत्री यजमानं प्रजापतिं ।
तस्मात्(१)जज्ञे स्वरः स्निग्धः पुत्रस्तस्य दधीचिनः ॥३९॥
ततो विंशतिमः कल्पो निषादः परिकीर्त्तितः ।
प्रजापतिस्तु तं दृष्ट्वा स्वयम्भूप्रभवं तदा ।
विरराम प्रजाः स्रष्टुं निषादस्तु तपोऽतपत् ॥ ४० ॥
दिव्यं वर्षसहस्रन्तु निराहारो जितेन्द्रियः ।
तमुवाच महातेजा ब्रह्मा लोकपितामहः ॥ ४१ ॥
ऊर्द्ध्वबाहुं तपोग्लानं दुःखितं क्षुत्पिपासितं ।
निषीदेत्यब्रवीदेनं पुत्रं श्रान्तं पितामहः ।
तस्मान्निषादः सम्भूतः स्वरस्तु स निषादवान् ॥ ४२ ॥
एकविंशतिमः कल्पो विज्ञेयः पञ्चमो द्विजाः ।
प्राणोऽपानः समानश्च उदानो व्यान एव च ॥ ४३ ॥
ब्रह्मणो मानसाः पुत्राः पञ्चैते ब्रह्मणः समाः ।
तैस्त्वथर्वादिभिर्युक्तैर्वाग्भिरिष्टो महेश्वरः ॥ ४४ ॥
यस्मात्परिगतैर्गीतः पञ्चभिस्तैर्महात्मभिः ।
स्वरस्तु पञ्चमः स्निग्धः तस्मात्कल्पस्तु पञ्चमः ॥ ४५ ॥
द्वाविंशस्तु तथा कल्पो विज्ञेयो मेघवाहनः ।
यत्र विष्णुर्महाबाहुर्मेघीभूत्वा महेश्वरं ।

---

१ तस्येति घ० ।

दिव्यं वर्षसहस्रन्तु अवहत् कृत्तिवाससं ॥ ४६ ॥
तस्य निश्वसमानस्य भाराक्रान्तस्य वै मुखात् ।
निर्जगाम महाकायः कालो लोकप्रकाशनः ।
यस्त्वयं पठ्यते विप्रैर्विष्णुर्वै कश्यपात्मजः ॥ ४७ ॥
त्रयोविंशतिमः कल्पो विज्ञेयश्चिन्तकस्तथा ।
प्रजापतिसुतः श्रीमान् चितिश्च मिथुनश्च तौ ॥ ४८ ॥
ध्यायतो ब्रह्मणश्चैव यस्माच्चिन्ता समुत्थिता ।
तस्मात्तु चिन्तकः सो वै कल्पः प्रोक्तः स्वयम्भुवा ॥ ४९ ॥
चतुर्विंशतिमश्चापि ह्याकूतिः कल्प उच्यते ।
आकूतिश्च तथा देवी मिथुनं सम्बभूव ह ॥ ५० ॥
प्रजाः स्रष्टुं तथाकूतिं यस्मादाह प्रजापतिः ।
तस्मात् स पुरुषो ज्ञेय आकूतिः कल्पसंज्ञितः ॥ ५१ ॥
पञ्चविंशतिमः कल्पो विज्ञातिः परिकीर्त्तितः ।
विज्ञातिश्च तथा देवी मिथुनं संप्रसूयते ॥ ५२ ॥
ध्यायतः पुत्रकामस्य मनस्यध्यात्मसंज्ञितं ।
विज्ञातं वै समासेन विज्ञातिस्तु ततः स्मृतः ॥ ५३ ॥
षड्विंशस्तु ततः कल्पो मन इत्यभिधीयते ।
देवी च शङ्करी नाम मिथुनं सम्प्रसूयते ॥ ५४ ॥
प्रजा वै चिन्तमानस्य स्रष्टुकामस्य वै तदा ।
यस्मात् प्रजासम्भवनादुत्पन्नस्तु स्वयम्भुवा ।
तस्मात् प्रजासम्भवनाद्भावनासम्भवः स्मृतः ॥ ५५ ॥
सप्तविंशतिमः कल्पो भावो वै कल्पसंज्ञितः ।
पौर्णमासी तथा देवी मिथुनं समपद्यत ॥ ५६ ॥

प्रजा वै स्रष्टुकामस्य ब्रह्मणः परमेष्ठिनः ।
ध्यायतस्तु परं ध्यानं परमात्मानमीश्वरं ॥ ५७ ॥
अग्निस्तु मण्डलीभूत्वा रश्मिजालसमावृतः ।
भुवन्दिवञ्च विष्टभ्य दीप्यते स महावपुः ॥ ५८ ॥
ततो वर्षसहस्रान्ते सम्पूर्णे ज्योतिमण्डले ।
आविष्टया सहोत्पन्नमपश्यत् सूर्य्यमण्डलं ॥ ५९ ॥
यस्माद्दृष्टो भूतानां ब्रह्मणा परमेष्ठिना ।
दृष्टस्तु भगवान् देवः सूर्य्यः सम्पूर्णमण्डलः ॥ ६० ॥
सर्व्वे योगाश्च मन्त्राश्च मण्डलेन सहोत्थिताः ।
यस्मात्कल्पो ह्ययं दृष्टस्तस्मात्तं दर्शमुच्यते ॥ ६१ ॥
यस्मान्मनसि सम्पूर्णो ब्रह्मणः परमेष्ठिनः ।
पुरा वै भगवान् सोमः पौर्णमासी ततः स्मृता ॥ ६२ ॥
तस्मात्तु पर्व्वदर्शे वै पौर्णमासञ्च योगिभिः ।
उभयोः पक्षयोर्य्येष्टमात्मनो हितकाम्यया ॥ ६३ ॥
दर्शञ्च पौर्णमासञ्च ये यजन्ति द्विजातयः ।
न तेषां पुनरावृत्तिर्ब्रह्मलोकात् कदाचन ॥ ६४ ॥
योऽनाहिताग्निः प्रयतो वीराध्वानं गतोपि वा ।
समाधाय मनस्तीव्रं मन्त्रमुच्चारयेच्छनैः ॥ ६५ ॥
त्वमग्ने रुद्रो असुरो महो दिवस्त्वं शर्व्वो मारुतं पृक्ष ईशिषे
त्वं वातैररुणैर्यासि शङ्गयस्त्वं पूषा विधतः पासि नु त्मना (१) ।
इत्येव मन्त्रं मनसा सम्यगुच्चारयेद् द्विजः ।

---

१ त्वं वातैर्यासि शङ्गराय त्वं पूषोज्झितधामासि इति ख०, क० च ।

अग्निं प्रविशते यस्तु रुद्रलोकं स गच्छति ॥ ६६ ॥
सोमश्चाग्निस्तु भगवान् कालो रुद्र इति श्रुतिः ।
तस्माद्यः प्रविशेदग्निं स रुद्रान्न निवर्त्तते ॥ ६७ ॥
अष्टाविंशतिमः कल्पो बृहदित्यभिसंज्ञितः ।
ब्रह्मणः पुत्रकामस्य स्रष्टुकामस्य वै प्रजाः ।
ध्यायमानस्य मनसा बृहत्साम रथन्तरं ॥ ६८ ॥
यस्मात्तत्र समुत्पन्नो बृहतः सर्व्वतोमुखः ।
तस्मात्तु बृहतः कल्पो विज्ञेयस्तत्त्वचिन्तकैः ॥ ६९ ॥
अष्टाशीतिसहस्राणां योजनानां प्रमाणतः ।
रथन्तरन्तु विज्ञेयं परमं सूर्य्यमण्डलं ।
तस्मादण्डन्तु विज्ञेयमभेद्यं सूर्य्यमण्डलं ॥ ७० ॥
यत्सूर्य्यमण्डलस्यापि बृहत्साम तु भिद्यते ।
भित्त्वा चैनं द्विजा यान्ति योगात्मानो दृढव्रताः ।
सङ्घातमुपनीताश्च अन्ये कल्पा रथन्तरे ॥ ७१ ॥
इत्येतत्तु मया प्रोक्तं चिन्त्यमध्यात्मदर्शनं ।
अतः परं प्रवक्ष्यामि कल्पानां विस्तरं शुभं ॥ ७२ ॥

इति श्रीमहापुराणे वायुप्रोक्ते कल्पनिरूपणं नामैकविंशोऽध्यायः ।

---

## अथ द्वाविंशोऽध्यायः ।

———000@000———

### कल्पसंख्यानिरूपणं ।

ऋषय ऊचुः । अत्यद्भुतमिदं सर्व्वं कल्पानान्ते महामुने ।
रहस्यं वै समाख्यातं मन्वाणाञ्च प्रकल्पनं ॥ १ ॥
न तवाविदितं किञ्चित् त्रिषु लोकेषु विद्यते ।
तस्माद्विस्तरतः सर्व्वाः कल्पसंख्या ब्रवीहि नः ॥ २ ॥
वायुरुवाच । अत्र वः कथयिष्यामि कल्पसंख्या यथा तथा ।
युगाग्रञ्च वर्षाग्रन्तु ब्रह्मणः परमेष्ठिनः ॥ ३ ॥
एकं कल्पसहस्रन्तु ब्रह्मणोऽब्दः प्रकीर्त्तितः ।
एतदष्टसहस्रन्तु ब्रह्मणस्तद्युगं स्मृतं ॥ ४ ॥
एकं युगसहस्रन्तु सवनं तत् प्रजापतेः ।
सवनानां सहस्रन्तु द्विगुणं त्रिवृतं तथा ॥ ५ ॥
ब्रह्मणः स्थितिकालस्य चैतत्सर्व्वं प्रकीर्त्तितं ।
तस्य संख्यां प्रवक्ष्यामि पुरस्ताद्वै यथाक्रमं ॥ ६ ॥
अष्टाविंशतिर्ये कल्पा नामतः परिकीर्त्तिताः ।
तेषां पुरस्ताद्वक्ष्यामि कल्पसंज्ञा यथाक्रमं ॥ ७ ॥
रथन्तरस्य साम्नस्तु उपरिष्टान्निबोधत ।
कल्पान्ते नामधेयानि मन्वोत्पत्तिश्च यस्य या ॥ ८ ॥
एकोनविंशकः कल्पो विज्ञेयः श्वेतलोहितः ।
यस्मिंस्तत् परमध्यानं ध्यायतो ब्रह्मणस्तथा ॥ ९ ॥

श्वेतोष्णीषः श्वेतमाल्यः श्वेताम्बरधरः शिखी ।
उत्पन्नस्तु महातेजाः कुमारः पावकोपमः ॥ १० ॥
भीमं मुखं महारौद्रं सुघोरं श्वेतलोहितं ।
दीप्तं दीप्तेन वपुषा महास्यं श्वेतवर्च्चसं ॥ ११ ॥
तं दृष्ट्वा पुरुषः श्रीमान् ब्रह्मा वै विश्वतो मुखः ।
कुमारं लोकधातारं विश्वरूपं महेश्वरं ॥ १२ ॥
पुराणपुरुषं देवं विश्वात्मा योगिनां चिरं ।
ववन्दे देवदेवेशं ब्रह्मा लोकपितामहः ॥ १३ ॥
हृदि कृत्वा महादेवं परमात्मानमीश्वरं ।
सद्योजातं ततो ब्रह्म ब्रह्मा वै समचिन्तयत् ।
ज्ञात्वा मुमोच देवेशो हृष्टो हासं जगत्पतिः ॥ १४ ॥
ततोऽस्य पार्श्वतः श्वेता ऋषयो ब्रह्मवर्च्चसः ।
प्रादुर्भूता महात्मानः श्वेतमाल्यानुलेपनाः ॥ १५ ॥
सुनन्दो नन्दकश्चैव विश्वनन्दोऽथ नन्दनः ।
शिष्यास्ते वै महात्मानो यैस्तु ब्रह्म ततो वृतं ॥ १६ ॥
तस्याग्रे श्वेतवर्णाभः श्वेतनामा महामुनिः ।
विजज्ञेऽथ महातेजा यस्माज्जज्ञे नरस्त्वसौ ॥ १७ ॥
तत्र ते ऋषयः सर्व्वे सद्योजातं महेश्वरं ।
तस्माद्विश्वेश्वरं देवं ये प्रपश्यन्ति (१) वै द्विजाः ।
प्राणायामपरा युक्ता ब्रह्मणि व्यवसायिनः ॥ १८ ॥
ते सर्व्वे पापनिर्म्मुक्ता विमला ब्रह्मवर्च्चसः ।

---

(१) यन्तीति ष० ।

ब्रह्मलोकमतिक्रम्य ब्रह्मलोकं व्रजन्ति च ॥ १९ ॥
वायुरुवाच । ततस्तस्मिन्गते सप्तमः कल्पो रक्तो नाम प्रकीर्त्तितः ।
रक्तो यत्र महातेजा रक्तवर्णमधारयत् ॥ २० ॥
ध्यायतः पुत्रकामस्य ब्रह्मणः परमेष्ठिनः ।
प्रादुर्भूतो महातेजाः कुमारो रक्तविग्रहः ।
रक्तमाल्याम्बरधरो रक्तनेत्रः प्रतापवान् ॥ २१ ॥
स तं दृष्ट्वा महादेवं कुमारं रक्तवाससं ।
ध्यानयोगं परङ्गत्वा बुबुधे विश्वमीश्वरं ॥ २२ ॥
स तं प्रणम्य भगवान् ब्रह्मा परमयन्त्रितः ।
वामदेवं ततो ब्रह्मा ब्रह्मात्मकं व्यचिन्तयत् ॥ २३ ॥
एवं ध्यातो महादेवो ब्रह्मणा परमेष्ठिना ।
मनसा प्रीतियुक्तेन पितामहमथाब्रवीत् ॥ २४ ॥
ध्यायता पुत्रकामेन यस्मात्तेहं पितामहः ।
दृष्टः परमया भक्त्या ध्यानयोगेन सत्तम ॥ २५ ॥
तस्माद्ध्यानं परं प्राप्य कल्पे कल्पे महातपाः ।
वेत्स्यसे मां महासत्त्व लोकधातारमीश्वरं ।
एवमुक्त्वा ततः शर्व्वः अट्टहासं मुमोच ह ॥ २६ ॥
ततस्तस्य महात्मानश्चत्वारश्च कुमारकाः ।
सम्बभूवुर्महात्मानो विरेजुः शुद्धबुद्धयः ॥ २७ ॥
विरजश्च विवाहश्च (१) विशोको विश्वभावनः ।
ब्रह्मण्या ब्रह्मणस्तुल्या वीरा अध्यवसायिनः ॥ २८ ॥

---

१ विराजश्चेति ख० ।

रक्ताम्बरधराः सर्व्वे रक्तमाल्यानुलेपनाः ।
रक्तभस्मानुलिप्ताङ्गा रक्तास्या रक्तलोचनाः ॥ २९ ॥
ततो वर्षसहस्रान्ते ब्रह्मण्या व्यवसायिनः ।
ध्यानान्तस्य महात्मानो ब्रह्म तद्वामदैवकं ॥ ३० ॥
अनुग्रहार्थं लोकानां शिष्याणां हितकाम्यया ।
धर्मोपदेशमखिलं कृत्वा ते ब्राह्मणाः स्वयं ।
पुनरेव महादेवं प्रविष्टा रुद्रमव्ययं ॥ ३१ ॥
येऽपि चान्ये द्विजश्रेष्ठा युञ्जाना वाममीश्वरं ।
प्रपद्यन्ति महादेवं तद्भक्तास्तत्परायणाः ॥ ३२ ॥
ते सर्व्वे पापनिर्मुक्ता विमला ब्रह्मवर्चसः ।
रुद्रलोकं गमिष्यन्ति पुनरावृत्तिदुर्लभं ॥ ३३ ॥
इति श्रीमहापुराणे वायुप्रोक्ते कल्पसंख्यानिरूपणं नाम द्वाविंशोऽध्यायः ।

# अथ त्रयोविंशोऽध्यायः।

———000———

माहेश्वरावतारयोगः।

वायुरुवाच। एकत्रिंशत्तमः कल्पः पीतवासा इति स्मृतः।
ब्रह्मा यत्र महातेजाः पीतवर्णत्वमागतः॥ १॥
ध्यायतः पुत्रकामस्य ब्रह्मणः परमेष्ठिनः।
प्रादुर्भूतो महातेजाः कुमारः पीतवस्त्रवान्॥ २॥
पीतगन्धानुलिप्ताङ्गः पीतमाल्यधरो युवा।
पीतयज्ञोपवीतश्च पीतोष्णीषो महाभुजः॥ ३॥
तं दृष्ट्वा ध्यानसंयुक्तं ब्रह्मा लोकेश्वरं प्रभुं।
मनसा लोकधातारं ववन्दे परमेश्वरं॥ ४॥
ततो ध्यानगतस्तत्र ब्रह्मा माहेश्वरीं परां।
अपश्यद्गां विरूपाक्ष महेश्वरमुखच्युतां॥ ५॥
चतुष्पदां चतुर्व्वक्त्रां चतुर्हस्तां चतुस्तनीं।
चतुर्न्नेत्रां चतुःशृङ्गीं चतुर्द्दंष्ट्रां चतुर्मुखीं।
द्वात्रिंशल्लोकसंयुक्तां ईश्वरीं सर्व्वतोमुखीं॥ ६॥
स तां दृष्ट्वा महातेजा महादेवीं महेश्वरीं।
पुनराह महादेवः सर्व्वदेवनमस्कृतः॥ ७॥
मतिः स्मृतिर्बुद्धिरिति गायमानः पुनः पुनः।
एह्येहीति महादेवी सोत्तिष्ठत् प्राञ्जलिर्भृशं॥ ८॥
विश्वमावृत्य योगेन जगत्सर्व्वं वशीकुरु।

अथ वा महादेवेन रुद्राणी त्वं भविष्यसि ।
ब्राह्मणानां हितार्थाय परमार्थं भविष्यसि ॥ ९ ॥
अथैनां पुत्रकामस्य ध्यायतः परमेष्ठिनः ।
प्रददौ देवदेवेशश्चतुष्पादां महेश्वरीं ।
ततस्तां ध्यानयोगेन विदित्वा परमेश्वरीं ॥१० ॥
ब्रह्मा लोकनमस्कार्य्यः प्रपद्य तां महेश्वरीं ।
गायत्रीन्तु ततो रौद्रीं ध्यात्वा ब्रह्मा सुयन्त्रितः ॥ ११ ॥
इत्येतां वैदिकीं विद्यां रौद्रीं गायत्रीमर्पितां ।
जपित्वा तु महादेवीं रुद्रलोकनमस्कृतां ।
प्रपन्नस्तु महादेवं ध्यानयुक्तेन चेतसा ॥ १२ ॥
ततस्तस्य महादेवो दिव्यं योगं पुनः स्मृतः ।
ऐश्वर्य्यं ज्ञानसम्पत्तिं वैराग्यञ्च ददौ पुनः॥ १३ ॥
अथाट्टहासं मुमुचे भीषणं दीप्तमीश्वरः ।
ततोऽस्य सर्व्वतो दीप्ताः प्रादुर्भूताः कुमारकाः ॥ १४ ॥
पीतमाल्याम्बरधराः पीतगन्धविलेपनाः ।
पीतोष्णीषशिराश्चैव पीतास्याः पीतमूर्द्धजाः ॥ १५ ॥
ततो वर्षसहस्रान्ते उषित्वा विमलौजसः ।
योगात्मानस्ततः स्नाता ब्राह्मणानां हितैषिणः ॥ १६ ॥
धर्म्मयोगबलोपेता ऋषीणां दीर्घसत्रिणां ।
उपदिश्य तु ते योगं प्रविष्टा रुद्रमीश्वरं ॥ १७ ॥
एवमेतेन विधिना प्रपन्ना ये महेश्वरं ।
अन्येपि नियतात्मानो ध्यानयुक्ता जितेन्द्रियाः ॥ १८ ॥
ते सर्व्वे पापमुत्सृज्य विरजा ब्रह्मवर्चसः ।

प्रविशन्ति महादेवं रुद्रन्ते त्वपुनर्भवाः ॥ १९ ॥

वायुरुवाच । ततस्तस्मिन् गते कल्पे पीतवर्णे स्वयम्भुवः ।

पुनरन्यः प्रवृत्तस्तु सितकल्पो हि नामतः ॥ २० ॥

एकार्णवे तदा वृत्ते दिव्ये वर्षसहस्रके ।

स्रष्टुकामः प्रजा ब्रह्मा चिन्तयामास दुःखितः ॥ २१ ॥

तस्य चिन्तयमानस्य पुत्रकामस्य वै प्रभोः ।

(कृष्णः समभवद्वर्णो ध्यायतः परमेष्ठिनः ॥ २२ ॥

अथापश्यन्महातेजाः प्रादुर्भूतं कुमारकं ।

कृष्णवर्णं महावीर्य्यं दीप्यमानं स्वतेजसा ॥ २३ ॥

कृष्णाम्बरवरोष्णीषं कृष्णयज्ञोपवीतिनं ।

कृष्णेन मौलिना युक्तं कृष्णस्रगनुलेपनं ॥ २४ ॥

स तं दृष्ट्वा महात्मानममरं घोरमन्त्रिणं ।

ववन्दे देवदेवेशं विश्वेशं कृष्णपिङ्गलं ॥ २५ ॥)

प्राणायामपरः श्रीमान् हृदि कृत्वा महेश्वरं ।

मनसा ध्यानसंयुक्तं प्रपन्नस्तु यतीश्वरं ।

अघोरेति ततो ब्रह्मा ब्रह्म एवानुचिन्तयन् । २६ ॥

एवं वै ध्यायतस्तस्य ब्रह्मणः परमेष्ठिनः ।

मुमोच भगवान् रुद्रः अट्टहासं महास्वनं । २७ ॥

अथास्य पार्श्वतः कृष्णाः कृष्णस्रगनुलेपनाः ।

चत्वारस्तु महात्मानः सम्बभूवुः कुमारकाः ॥ २८ ॥

कृष्णाः कृष्णाम्बरोष्णीषाः कृष्णास्याः कृष्णवाससः ।

तेषाट्टहासः सुमहान् हुंकारश्चैव पुष्कलः ।

नमस्कारश्च सुमहान् पुनः पुनरुदीरितः ॥ २९ ॥

ततो वर्षसहस्रान्ते योगात्तत् पारमेश्वरं।
उपासित्वा महाभागाः शिष्येभ्यः प्रददुस्ततः॥ ३०॥
योगेन योगसम्पन्नाः प्रविश्य मनसा शिवं।
अमलं निर्गुणं स्थानं प्रविष्टा विश्वमीश्वरं॥ ३१॥
एवमेतेन योगेन ये चाप्यन्ये द्विजातयः।
अरिष्यन्ति विधानज्ञा गन्तारो रुद्रमव्ययं॥ ३२॥
ततस्तस्मिन् गते कल्पे कृष्णरूपे भयानके।
अन्यः प्रवर्त्तितः कल्पो विश्वरूपस्तु नामतः॥ ३३॥
विनिवृत्ते तु संहारे पुनः सृष्टे चराचरे।
ब्रह्मणः पुत्रकामस्य ध्यायतः परमेष्ठिनः।
प्रादुर्भूता महानादा विश्वरूपा सरस्वती॥ ३४॥
विश्वमाल्याम्बरधरं विश्वयज्ञोपवीतिनं।
विश्वोष्णीषं विश्वगन्धं विश्वस्थानं महाभुजं॥ ३५॥
अथ तं मनसा ध्यात्वा युक्तात्मा वै पितामहः।
ववन्दे देवमीशानं सर्व्वेशं सर्व्वगं प्रभुं॥ ३६॥
ओमीशान नमस्तेऽस्तु महादेव नमोऽस्तु ते।
एवं ध्यानगतं तत्र प्रणमन्तं पितामहं।
उवाच भगवानीशः प्रीतोऽहन्ते किमिच्छसि॥ ३७॥
ततस्तु प्रणतो भूत्वा वाग्भिः स्तुत्वा महेश्वरं।
उवाच भगवान् ब्रह्मा प्रीतः प्रीतेन चेतसा॥ ३८॥
यदिदं विश्वरूपन्ते विश्वगं विश्वमीश्वरं।
एतद्वेदितुमिच्छामि कस्यायं परमेश्वरः॥ ३९॥
कैषा भगवती देवी चतुःपादा चतुर्मुखी।

चतुःशृङ्गी चतुर्व्वक्त्रा चतुर्द्दन्ता चतुःस्तनी ॥ ४० ॥
चतुर्हस्ता चतुर्नेत्रा विश्वरूपा कथं स्मृता (१) ।
किंनामधेया कोऽस्यात्मा किंवीर्य्या वापि कर्म्मतः ॥ ४१ ॥
महेश्वर उवाच । रहस्यं सर्व्वमन्त्राणां पावनं पुष्टिवर्द्धनं ।
शृणुष्वैतत्परं गुह्यमादिसर्गं यथातथं (२) ॥ ४२ ॥
अयं यो वर्त्तते कल्पो विश्वरूपस्त्वसौ स्मृतः ।
यस्मिन् भवादयो देवाः षड्विंशन्मनवः स्मृताः ॥ ४३ ॥
ब्रह्मस्थानमिदञ्चापि यदा प्राप्तं त्वया विभो ।
तदाप्रभृति कल्पश्च त्रयस्त्रिंशत्तमो ह्ययं ॥ ४४ ॥
शतं शतसहस्राणामतीता ये स्वयम्भुवः ।
पुरस्तात्तव देवेश तान् शृणुष्व महामुने ॥ ४५ ॥
आनन्दस्तु स विज्ञेय आनन्दते महालयः (३) ।
माण्डव्यगोत्रतपसा मम पुत्रस्त्वमागतः ॥ ४६ ॥
त्वयि योगश्च साङ्ख्यञ्च तपो विद्याविधिः क्रिया ।
ऋतं सत्यञ्च यद्ब्रह्म अहिंसा सन्ततिक्रमाः ॥ ४७ ॥
ध्यानं ध्यानवपुः शान्तिर्विद्याऽविद्यामतिर्धृतिः ।
कान्तिः शान्तिः स्मृतिर्मेधा लज्जा शुद्धिः सरस्वती ।
तुष्टिः पुष्टिः क्रिया चैव लज्जा क्षान्तिः प्रतिष्ठिता ॥ ४८ ॥
षड्विंशत्सुगुणा ह्येषा द्वात्रिंशाक्षरसंज्ञिता ।
प्रकृतिं विद्धि तां ब्रह्मन् त्वत्प्रसूतिं महेश्वरीं ॥ ४९ ॥

---

१ तनुः कृतेति ख० ।

२ यथाक्रममिति ख० ।

३ महातपा इति ख० ।

सैषा भगवती देवी तत्प्रसूतिः स्वयम्भुवः।
चतुर्मुखी जगद्योनिः प्रकृतिर्गौः प्रकीर्त्तिता।
प्रधानं प्रकृतिश्चैव यदाहुस्तत्त्वचिन्तकाः॥ ५०॥
अजामेतां लोहितां शुक्लकृष्णां
विश्वं संप्रसृजमानां सुरूपां।
अजोऽहं वै बुद्धिमान्विश्वरूपां
गायत्रीं गां विश्वरूपां हि बुद्धा (१)॥ ५१॥
एवमुक्त्वा महादेवः अट्टहासमथाकरोत्।
वलितास्फोटितरवं कहाकहनदन्तथा॥ ५२॥
ततोऽस्य पार्श्वतो दिव्याः सर्व्वरूपाः कुमारकाः।
जटी मुण्डी शिखण्डी च अर्द्धमुण्डश्च जज्ञिरे॥ ५३॥
ततस्ते तु यथोक्तेन योगेन सुमहौजसः।
दिव्यं वर्षसहस्रन्तु उपासित्वा महेश्वरं॥ ५४॥
धर्म्मोपदेशं नियतं कृत्वा योगमयं दृढ़ं।
शिष्टानां नियतात्मानः प्रविष्टा रुद्रमीश्वरं॥ ५५॥
वायुरुवाच। ततो विस्मयमापन्नो ब्रह्मा लोकपितामहः।
प्रपन्नस्तु महादेवं भक्तियुक्तेन चेतसा।
उवाच वचनं सर्व्वं श्वेतत्वन्ते कथं विभो॥ ५६॥
भगवानुवाच। श्वेतकल्पो यदा ह्यासीदहं श्वेतस्ततोऽभवं।
श्वेतोष्णीषः श्वेतमाल्यः श्वेताम्बरधरः शिवः॥ ५७॥
श्वेतास्थिमांसरोमा च श्वेतत्वक् श्वेतलोहितः।

१ ध्यात्वेति ख०।

तेन नाम्ना च विख्यातः श्वेतकल्पस्तदा ह्यसौ ॥ ५८ ॥
मत्प्रसादाच्च देवेश श्वेताङ्गः श्वेतलोहितः ।
श्वेतवर्णा तदा ह्यासीद्गायत्री ब्रह्मसंज्ञिता ॥ ५९ ॥
यस्मादहञ्च देवेश त्वया गुह्ये पदे स्थितः ।
विज्ञातः स्वेन तपसा सद्योजातः सनातनः ।
सद्योजातेति ब्रह्मैतद् गुह्यञ्चैव प्रकीर्तितं ॥ ६० ॥
तस्माद् गुह्यत्वमापन्नं ये वेत्स्यन्ति द्विजातयः ।
तत्समीपङ्गमिष्यन्ति पुनरावृत्तिदुर्लभं ॥ ६१ ॥
यदाऽहञ्च पुनस्त्वासं लोहितो नामनामतः ।
मत्कृतेन वर्णेन कल्पो वै लोहितः स्मृतः ॥ ६२ ॥
तदा लोहितमांसास्थिलोहितक्षीरसन्निभा (१) ।
लोहिताक्षस्तनवती गायत्री गौः प्रकीर्त्तिता ॥ ६३ ॥
ततोऽस्य लोहितत्वेन वर्णस्य च विपर्य्यये ।
वामत्वाच्चैव योगस्य वामदेवत्वमागतः ॥ ६४ ॥
तथापि हि महासत्त्व त्वयाऽहं नियतात्मना ।
विज्ञातः स्वेतवर्णेन तस्माद्वर्णोत्तमः स्मृतः ।
ततोऽहं वामदेवेति ख्यातिं यातो महीतले ॥ ६५ ॥
ये चापि वामदेवत्वं ज्ञास्यन्तीह द्विजातयः ।
विज्ञाय चेमां रुद्राणीं (२) गायत्रीं मातरं विभो ॥ ६६ ॥
सर्व्वपापविनिर्मुक्ता विरजा ब्रह्मवर्चसः ।

---

१ लोहितमांसास्थिलोहितक्षीरसन्निभितेति ख० ।
२ ये चेमान्तु च रुद्राणीमिति घ० । ये चेमां रुद्ररुद्राणीमिति ङ० ।

रुद्रलोकं गमिष्यन्ति पुनरावृत्तिदुर्लभं॥ ६७॥
यदा तु पुनरेवायं कृष्णवर्णो भयानकः।
मत्कृतेन च वर्णेन मत्कल्पः कृष्ण उच्यते॥ ६८॥
तत्राऽहं कालसंकाशः कालो लोकप्रकाशनः।
विज्ञातोऽहन्त्वया ब्रह्मन् घोरो घोरपराक्रमः॥ ६९॥
तस्माद्घोरत्वमापन्नं ये मां वेत्स्यन्ति भूतले।
तेषामघोरः शान्तश्च भविष्याम्यहमव्ययः। ७०॥
तस्माद्विश्वत्वमापन्नं ये मां पश्यन्ति भूतले।
तेषां शिवश्च सौम्यश्च भविष्यामि सदैव तु॥ ७१॥
तस्माच्च विश्वरूपो वै कल्पोऽयं समुदाहृतः।
विश्वरूपा तथा चेयं सावित्री समुदाहृता॥ ७२॥
सर्व्वरूपास्तथा चे मे संवृत्ता मम पुत्रकाः।
चत्वारस्ते समाख्याताः पादा वै लोकसम्मताः॥ ७३॥
तस्माच्च सर्व्ववर्णत्वं प्रजात्वं मे भविष्यति।
सर्व्वभक्ष्या च मेध्या च वर्णतश्च भविष्यति॥ ७४॥
मोक्षो धर्म्मस्तथार्थश्च कामश्चेति चतुष्टयं।
तस्माद्वेत्ता च वेद्यश्च चतुर्द्धा वै भविष्यति॥ ७५॥
भूतग्रामाश्च चत्वारः आश्रमाश्चतुरस्तथा।
धर्म्मस्य पादाश्चत्वारश्चत्वारो मम पुत्रकाः॥ ७६॥
तस्माच्चतुर्युगावस्थं जगद्वै सचराचरं।
चतुर्द्धाऽवस्थितश्चैव चतुष्पादं भविष्यति॥ ७७॥
भूर्लोकोऽथ भुवो लोकः स्वर्लोकोऽथ महस्तथा।
जनस्तपश्च शान्तश्च रुद्रलोकस्ततः परं॥ ७८॥

स्वर्लोको हि तृतीयस्तु चतुर्थस्तु महः स्मृतः।
तत्र लोकः परं स्थानं परन्तद्योगिनां स्मृतं॥ ७९॥
निर्म्ममा निरहङ्काराः कामक्रोधविवर्ज्जिताः।
द्रक्ष्यन्ते तद्द्विजा युक्ता ध्यानतत्परयुञ्जकाः॥ ८०॥
यस्माच्चतुष्पदा ह्येषा त्वया दृष्टा सरस्वती।
तस्माच्च पशवः सर्व्वे भविष्यन्ति चतुष्पदाः।
तस्माच्चैषां भविष्यन्ति चत्वारो वै पयोधराः॥ ८१॥
सोमश्च मन्त्रसंयुक्तो यस्मान्मम मुखाच्च्युतः।
जीवः प्राणभृतां ब्रह्मन् सर्वैः पीत्वा स्तनैर्धृतं॥ ८२॥
तस्मात् सोममयश्चैतदमृतञ्चैव संज्ञितं।
चतुष्पादा भविष्यन्ति श्वेतत्वञ्चास्य तेन तत्॥ ८३॥
यस्माच्चैवं क्रिया भूत्वा द्विपादा वै महेश्वरी।
दृष्टा पुनस्त्वया चैषा सावित्री लोकभाविनी।
तस्माद्वै द्विपदाः सर्वे द्विस्तनाश्च नराः स्मृताः॥ ८४॥
यस्माच्चैवमजा भूत्वा सर्व्ववर्णा महेश्वरी।
दृष्टा त्वया महासत्त्वा सर्वभूतधरा परा।
तस्मात्तु विश्वरूपत्वमजानां वै भविष्यति॥ ८५॥
अजश्चैव महातेजा विश्वरूपो भविष्यति।
अमोघरेताः सर्वत्र मुखे चास्य हुताशनः।
तस्मात् सर्वगतो मेध्यः पशुरूपो हुताशनः॥ ८६॥
तपसा भावितात्मानो ये वै द्रक्ष्यन्ति वै द्विजाः।
ईशित्वे च वशित्वे च (१) सर्वगं सर्वतः स्थिरं॥ ८७॥

---

१ वशित्वे चेति ष०।

रजस्तमोविनिर्मुक्तास्त्यक्त्वा मानुष्यकम्भुवि ।
मत्समीपं गमिष्यन्ति पुनरावृत्तिदुर्लभं ॥ ८८ ॥
इत्येवमुक्तो भगवान् ब्रह्मा रुद्रेण वै द्विजाः ।
प्रणम्य प्रयतो भूत्वा पुनराह पितामहः ॥ ८९ ॥
ब्रह्मोवाच । भगवन् देवदेवेश विश्वरूपो महेश्वरः ।
इमास्तव महादेव तनवो लोकवन्दिताः (१) ॥ ९० ॥
विश्वरूप महासत्त्व कस्मिन् काले महाभुज ।
कस्यां वा युगसम्भूत्यां द्रक्ष्यन्ति त्वां द्विजातयः ॥ ९१ ॥
केन वा तत्त्वयोगेन ध्यानयोगेन केन वा ।
तनवस्ते महादेव शक्या द्रष्टुं द्विजातिभिः ॥ ९२ ॥
भगवानुवाच । तपसा नैव योगेन दानधर्म्मफलेन वा ।
न तीर्थफलयोगेन क्रतुभिर्वा सदक्षिणैः ॥ ९३ ॥
न वेदाध्यापनैर्वापि न चित्तेन निवेदनैः ।
शक्योऽहं मानुषैर्द्रष्टुं ऋते ध्यानात्परं न हि ॥ ९४ ॥
साध्यो नारायणश्चैव विष्णुस्त्रिभुवनेश्वरः ।
भविष्यतीह नाम्ना तु वाराहो नाम विश्रुतः ॥ ९५ ॥
चतुर्बाहुश्चतुष्पादश्चतुर्नेत्रश्चतुर्मुखः ।
तदा संवत्सरो भूत्वा यज्ञरूपो भविष्यति ।
षडङ्गश्च त्रिशीर्षश्च त्रिस्थाने त्रिशरीरवान् ॥ ९६ ॥
कृतन्त्रेता द्वापरश्च कलिश्चैव चतुर्युगं ।
एतस्य पादाश्चत्वारः अङ्गानि क्रतवस्तथा ॥ ९७ ॥

---

१ लोकवेदिता इति ध० ।

भुजाश्च वेदाश्चत्वारो ऋतुः सन्धिमुखानि च ।
द्वे मुखे द्वे च अयने नेत्राश्च चतुरस्तथा ॥ ९८ ॥
शिरांसि त्रीणि पर्वाणि फाल्गुन्याषाढकृत्तिकाः ।
दिव्यान्तरीक्षभौमानि त्रीणि स्थानानि यानि तु ।
सम्भवः प्रलयश्चैव आश्रमौ द्वौ प्रकीर्त्तितौ ॥ ९९ ॥
स यदा कालरूपाभो वराहत्वे व्यवस्थितः ।
भविष्यति यदा साध्यो विष्णुर्नारायणः प्रभुः ॥ १०० ॥
तदा त्वमपि देवेश चतुर्वक्त्रो भविष्यसि ।
ब्रह्मलोकनमस्कार्यो विष्णुर्नारायणः प्रभुः ॥ १०१ ॥
एकार्णवे प्लवे चैव प्रधानं पुरुषं हरिं ।
यदा द्रक्ष्यसि देवेशं ध्यानयुक्तं महामुनिं ॥ १०२ ॥
तदावां मम योगेन मोहितौ नष्टचेतसौ ।
अन्योन्यस्पर्द्धिनौ रात्रावविज्ञाय परस्परं ॥ १०३ ॥
एकैकस्योदरस्थांस्तु दृष्ट्वा लोकांश्चराचरान् ।
विस्मयं परमङ्गत्वा ध्यानादुबुद्ध्वा तु मानुषौ ॥ १०४ ॥
ततस्त्वं पद्मसंभूतः पद्मनाभः सनातनः ।
पद्माङ्कितस्तदा कल्पे ख्यातिं यास्यसि पुष्कलां ॥ १०५ ॥
ततस्तस्मिन् तदा कल्पे वाराहे सप्तमे प्रभोः ।
पुनर्विष्णुर्महातेजाः कालो लोकप्रकालनः (१) ।
मनुर्वैवस्वतो नाम तव पुत्रो भविष्यति ॥ १०६ ॥
तदा चतुर्युगावस्थे कल्पे तस्मिन् युगान्तके ।
भविष्यामि शिखायुक्तः श्वेतो नाम महामुनिः ॥ १०७ ॥

---

१ लोकप्रकाशन इति ख० ।

हिमवच्छिखरे रम्ये छागले पर्व्वतोत्तमे ।
चतुःशिष्याः शिवे युक्ता भविष्यन्ति तदा मम ॥ १०८ ॥
श्वेतश्चैव शिखश्चैव श्वेताश्वः श्वेतलोहितः ।
चत्वारस्ते महात्मानो ब्राह्मणा वेदपारगाः ॥ १०९ ॥
ततस्ते ब्रह्मभूयिष्ठा दृष्ट्वा ब्रह्मगतिं परां ।
तत्समीपं गमिष्यन्ति पुनरावृत्तिदुर्लभं ॥ ११० ॥
पुनस्तु मम देवेशो द्वितीयद्वापरे प्रभुः ।
प्रजापतिर्य्यदा व्यासः सत्यो नाम भविष्यति ॥ १११ ॥
तदा लोकहितार्थाय सुतारो नाम नामतः ।
भविष्यामि कलौ तस्मिन् लोकानुग्रहकारणात् ॥ ११२ ॥
तत्रापि मम ते पुत्रा भविष्या नामनामतः ।
दुन्दुभिः शतरूपश्च ऋचीकः क्रतुमांस्तथा ॥ ११३ ॥
प्राप्य योगं तथा ध्यानं ब्रह्म चैव सनातनं ।
रुद्रलोकं गमिष्यन्ति पुनरावृत्तिदुर्लभं ॥ ११४ ।
तृतीये द्वापरे चैव यदा व्यासस्तु भार्गवः ।
तदा त्वहं भविष्यामि दमनस्तु युगान्तिके ॥ ११५ ॥
तत्रापि च भविष्यन्ति चत्वारो मम पुत्रकाः ।
विशोकश्च विकेशश्च विशापः शापनाशनः ॥ ११६ ॥
तेऽपि तेनैव मार्गेण योगोक्तेन महौजसः ।
रुद्रलोकं गमिष्यन्ति पुनरावृत्तिदुर्लभं ॥ ११७ ॥
चतुर्थे द्वापरे चैव यदाव्यासोऽङ्गिराः स्मृतः ।
तदाऽप्यहं भविष्यामि सुहोत्रो नामनामतः ॥ ११८ ॥
तत्रापि मम सत्पुत्रास्चत्वारश्च तपोधनाः ।

भविष्यन्ति द्विजश्रेष्ठा योगात्मानो दृढ़व्रताः ॥ ११९ ॥
सुमुखो दुर्मुखश्चैव दुर्दमो दुरतिक्रमः ।
प्राप्य योगगतिं सूक्ष्मां विमला दग्धकिल्बिषाः ।
तेऽपि तेनैव मार्गेण गमिष्यन्ति न संशयः ॥ १२० ॥
पञ्चमे द्वापरे चैव व्यासस्तु सविता यदा ।
तदा चापि भविष्यामि कङ्को नाम महातपाः ।
अनुग्रहार्थं लोकानां योगात्मा नैककर्म्मकृत् ॥ १२१ ॥
चत्वारस्तु महाभागा विरजाः शुद्धयोनयः ।
पुत्रा मम भविष्यन्ति योगात्मानो दृढ़व्रताः ॥ १२२ ॥
सनः सनन्दनश्चैव प्रभुर्यश्च सनातनः ।
ऋतुः सनत्कुमारश्च निर्ममानिरहंकृताः ।
मत्समीपं गमिष्यन्ति पुनरावृत्तिदुर्लभं ॥ १२३ ॥
परिवृत्ते पुनः षष्ठे मृत्युर्व्यासो यदा विभुः ।
तदाऽप्यहं भविष्यामि लोकाचिर्नामनामतः ॥ १२४ ॥
शिष्याश्च मम ते दिव्या योगात्मानो दृढ़व्रताः ।
भविष्यन्ति महाभागाश्चत्वारो लोकसम्मताः ॥ १२५ ॥
सुधामा विरजश्चैव शङ्खपाद्रव एव च ।
योगात्मानो महात्मानस्ते सर्व्वे दग्धकिल्बिषाः ।
तेऽपि तेनैव मार्गेण गमिष्यन्ति न संशयः ॥ १२६ ॥
सप्तमे परिवर्त्ते तु यदा व्यासः शतक्रतुः ।
विभुर्नाम महातेजाः पूर्व्वमासीच्छतक्रतुः ॥ १२७ ॥
तदाऽप्यहं भविष्यामि कलौ तस्मिन् युगान्तिके ।
जैगीषव्येति विख्यातः सर्व्वेषां योगिनां वरः ॥ १२८ ॥

तत्रापि मम ते पुत्रा भविष्यन्ति युगे तदा ।
सारस्वतः सुमेधश्च वसुवाहः सुवाहनः ॥ १२६
तेऽपि तेनैव मार्गेण ध्यानयुक्तिं समाश्रिताः ।
भविष्यन्ति महात्मानो रुद्रलोकपरायणाः ॥ १३० ॥
वसिष्ठश्चाष्टमे व्यासः परिवर्त्ते भविष्यति ।
कपिलश्चासुरिश्चैव तथा पञ्चशिखो मुनिः ।
वाग्वलिश्च महायोगी सर्व्वे एव महौजसः ॥ १३१ ॥
प्राप्य माहेश्वरं योगं ध्यानिनो दग्धकल्मषाः ।
मत्समीपं गमिष्यन्ति पुनरावृत्तिदुर्लभं ॥ १३२ ॥
परिवर्त्तेऽथ नवमे व्यासः सारस्वती यदा ।
तदा चाहं भविष्यामि ऋषभो नामनामतः ।
तत्रापि मम ते पुत्रा भविष्यन्ति महौजसः ॥ १३३ ॥
पराशरश्च गार्ग्यश्च भार्गवो ह्यङ्गिरास्तथा ।
भविष्यन्ति महात्मानो ब्राह्मणा वेदपारगाः ॥ १३४ ॥
सर्वे तपोबलोत्कृष्टाः शापानुग्रहकोविदाः ।
तेपि तेनैव मार्गेण योगोक्तेन तपस्विनः ।
ध्यानमार्गं समासाद्य गमिष्यन्ति तथैव ते ॥ १३५ ॥
दशमे द्वापरे व्यासस्त्रिधामा नामनामतः ।
यदा भविष्यति विप्रास्तदाऽहं भविता पुनः ॥ १३६ ॥
हिमवच्छिखरे रम्ये भृगुतुङ्गे नगोत्तमे ।
नाम्ना भृगोस्तु शिखरन्तस्मात्तच्छिखरम्भृगुः ॥ १३७ ॥
तत्रैव मम ते पुत्रा भविष्यन्ति दृढ़व्रताः ।
बलबन्धुर्निरामित्रः केतुशृङ्गस्तपोधनः ॥ १३८ ॥

योगात्मानो महात्मानो ध्यानयोगसमन्विताः ।
रुद्रलोकं गमिष्यन्ति तपसा दग्धकल्मषाः ॥ १३९ ॥
एकादशे द्वापरे तु त्रिवृद्व्यासो भविष्यति ।
तदाऽप्यहं भविष्यामि गङ्गाद्वारे कलेर्धुरि ॥ १४० ॥
उग्रा नाम महानादास्तत्रैव मम पुत्रकाः ।
भविष्यन्ति महौजस्काः सुवृत्ता लोकविश्रुताः ॥ १४१ ॥
लम्बोदरश्च लम्बश्च लम्बाक्षो लम्बकेशकः ।
प्राप्य माहेश्वरं योगं रुद्रलोकाय संस्थिताः ।
तेऽपि तेनैव मार्गेण गमिष्यन्ति परां गतिं ॥ १४२ ॥
द्वादशे परिवर्त्ते तु शततेजा महामुनिः ।
भविष्यति महासत्त्वो व्यासः कविवरोत्तमः ॥ १४३ ॥
ततोऽप्यहं भविष्यामि अत्रिर्नाम युगान्तिके ।
हैमकं वनमासाद्य योगमास्थाय भूतले ॥ १४४ ॥
अत्रापि मम ते पुत्रा भस्मस्नानानुलेपनाः ।
भविष्यन्ति महायोगा रुद्रलोकपरायणाः ॥ १४५ ॥
सर्व्वज्ञः समबुद्धिश्च साध्यः सर्व्वस्तथैव च ।
रुद्रलोकं गमिष्यन्ति ध्यानयोगपरायणाः ॥ १४६ ॥
त्रयोदशे पुनः प्राप्ते परिवर्त्ते क्रमेण तु ।
धर्म्मो नारायणो नाम व्यासस्तु भविता यदा ॥ १४७ ॥
तदाप्यहं भविष्यामि वालिर्नाम महामुनिः ।
वालिखिल्याश्रमे पुण्ये पर्व्वते गन्धमादने ॥ १४८ ॥
तत्रापि मम ते पुत्रा भविष्यन्ति तपोधनाः ।
सुधामा काश्यपश्चैव वसिष्ठो विरजास्तथा ॥ १४९ ॥

महायोगबलोपेता विमला ऊर्ध्वरेतसः ।
तेनैव योगमार्गेण गमिष्यन्ति न संशयः ॥ १५० ॥
यदा व्यासः सुरक्षण पर्य्यायेस्तु चतुर्द्दशे ।
तत्रापि पुनरेवाहं भविष्यामि युगान्तिके ॥ १५१ ॥
वंशे त्वऽङ्गिरसः श्रेष्ठो गौतमो नाम योगवित् ।
तस्माद्भविष्यते पुण्यं गौतमं नाम तद्वनं ॥ १५२ ॥
तत्रापि मम ते पुत्रा भविष्यन्ति कलौ तथा ।
अत्रिरुग्रतपाश्चैव श्रावणोऽथ स्नविष्टकः ॥ १५३ ॥
योगात्मानो महात्मानो ध्यानयोगपरायणाः ।
तेऽपि तेनैव मार्गेण रुद्रलोकनिवासिनः ॥ १५४ ॥
ततः प्राप्ते पञ्चदशे परिवर्त्ते क्रमागते ।
आरुणिस्तु यदाव्यासो द्वापरे भविता प्रभुः ॥ १५५ ॥
तदाप्यहं भविष्यामि नाम्ना वेदशिरा द्विजाः ।
तत्र वेदशिरा नाम अस्त्रन्तत्पारमेश्वरं ॥ १५६ ॥
भविष्यति महावीर्य्यं वेदशीर्षश्च पर्व्वतः ।
हिमवत्पृष्ठमाश्रित्य सरस्वत्या नगोत्तमे ॥ १५७ ॥
तदापि मम ते पुत्रा भविष्यन्ति तपोधनाः ।
कुणिश्च कुणिबाहुश्च कुशरीरः कुनेत्रकः ॥ १५८ ॥
योगात्मानो महात्मानो ब्रह्मिष्ठाश्चोर्द्ध्वरेतसः ।
तेऽपि तेनैव मार्गेण रुद्रलोकं गतास्तु ते ॥ १५९ ॥
ततः षोडशमे चापि परिवर्त्ते क्रमागते ।
व्यासस्तु योसञ्च नाम भविष्यति तदा प्रभुः ॥ १६० ॥
तदाऽप्यहं भविष्यामि गोकर्णो नामनामतः ।

तस्माद्भविष्यति पुण्यं गोकर्णं नाम तद्वनं ॥ १६१ ॥
तत्रापि मम ते पुत्रा भविष्यन्ति महौजसः ।
कश्यपो ह्युशनाश्चैव च्यवनोऽथ बृहस्पतिः ।
तेऽपि तेनैव मार्गेण गमिष्यन्ति परं पदं ॥ १६२ ॥
ततः सप्तदशे चैव परिवर्त्ते क्रमागते ।
तदा भविष्यते व्यासो नाम्ना देवकृतञ्जयः । १६३ ॥
तदाप्यहं भविष्यामि गुहावासीति नामतः ।
हिमवच्छिखरे चैव महातुङ्गे महालये ।
सिद्धक्षेत्रं महापुण्यं भविष्यति महालयं ॥ १६४ ॥
तत्रापि मम ते पुत्रा ब्रह्मण्या योगवेदिनः ।
भविष्यन्ति महात्मानो ममंशा निरऽङ्कुताः ॥ १६५ ॥
उतथ्यो वामदेवश्च महाकालो महालयः ।
तेषां शतसहस्रन्तु शिष्याणां ध्यानसाधनं ॥ १६६ ॥
भविष्यन्ति तदा कल्पे सर्व्वे ते ध्यानयुञ्जकाः ।
ते तु सन्निहित योगे हृदि कृत्वा महेश्वरं ।
महालये पदं त्विष्ट्वा प्रविष्टाः शिवमव्ययं ॥ १६७ ॥
ये चान्येऽपि महात्मानः काले तस्मिन् युगान्तिके ।
ध्यानयुक्तेन मनसा विमलाः शुद्धबुद्धयः ॥ १६८ ॥
गत्वा महालयं पुण्यं दृष्ट्वा माहेश्वरं पदं ।
तूर्णं तारयते जन्तून्दशपूर्व्वान् दशापरान् ॥ १६९ ॥
आत्मानमेकविंशञ्च तारयित्वा महार्णवं ।
मम प्रसादाद्यास्यन्ति रुद्रलोकं गतज्वराः ॥ १७० ॥
ततोऽष्टादशमे चैव वरिवर्त्ते यदा भवेत् ।

तदा ऋतञ्जयो नाम व्यासस्तु भविता मुनिः ।
तदाऽप्यहं भविष्यामि शिखण्डी नामनामतः ॥ १७१ ॥
सिद्धक्षेत्रे महापुण्ये देवदानवपूजिते ।
हिमवच्छिखरे पुण्ये शिखण्डी यत्र पर्व्वतः ।
शिखण्डिनो वनञ्चापि ऋषिसिद्ध निषेवित ॥१७२ ॥
तत्रापि मम ते पुत्रा भविष्यन्ति तपोधनाः ।
वाचस्रवा ऋचीकश्च शावासश्च दृढव्रतः ॥ १७३ ॥
योगात्मानो महासत्त्वाः सर्व्वे ते वेद पारगाः ।
प्राप्य माहेश्वरं योगं रुद्रलोकं व्रजन्ति ते ॥ १७४ ॥
ततस्त्वेकोनत्रिंशे तु परिवर्त्ते क्रमागते ।
व्यासस्तु भविता नाम्ना भरद्वाजो महामुनिः ॥ १७५ ॥
तत्राप्यहं भविष्यामि जटामालीति नामतः ।
हिमवच्छिखरे रम्ये जटायुर्यत्र पर्व्वतः ॥ १७६ ॥
तत्रापि मम ते पुत्रा भविष्यन्ति महौजसः ।
हिरण्यनामा कौशिल्यः काक्षीवः कुथुमिस्तथा ॥ १७७ ॥
ईश्वरा योगधर्म्माणः सर्व्वे ते ह्यूर्द्धरेतसः ।
प्राप्य माहेश्वरं योगं गमिष्यन्ति न संशयः ॥ १७८ ॥
ततो त्रिंशतिमे सर्गे परिवर्त्ते क्रमेण तु ।
वाचःश्रवाः स्मृतो व्यासो भविष्यति महामतिः ॥ १७९ ॥
तदाप्यहं भविष्यामि ह्यट्टहासतो नामतः ।
अट्टहासप्रियाश्चापि भविष्यन्ति तदा नराः ॥ १८० ॥
तत्रैव हिमवत्पृष्ठे सिद्धचारण सेविते ।
तत्रापि मम ते पुत्रा भविष्यन्ति महौजसः ।

युक्तात्मानो महासत्त्वा ध्यानिनो नियतव्रताः ॥ १८० ॥
सुमन्तुर्बर्बरिर्विद्वान् सुबन्धुः कुशिकन्धरः ।
प्राप्य माहेश्वरं योगं रुद्रलोकाय ते गताः ॥ १८१ ॥
एकविंशे पुनः प्राप्ते परिवर्त्ते क्रमेण तु ।
वाचस्पतिः स्मृतो व्यासो यदा स ऋषिसत्तमः ॥ १८२ ॥
तदाऽप्यहं भविष्यामि दारुको नाम नामतः ।
तस्माद्भविष्यते पुण्यं देवदारुवनं महत् ॥ १८३ ॥
तत्रापि मम ते पुत्रा भविष्यन्ति महौजसः ।
प्लक्षो दार्भायणिश्चैव (१) केतुमाली वकस्तथा (२)॥ १८४ ॥
योगात्मानो महात्मानो नियता ऊर्द्ध्वरेतसः ।
परमं योगमास्थाय रुद्रं प्राप्तास्तथानघाः ॥ १८५ ॥
द्वाविंशे परिवर्त्ते तु व्यासः शुक्लायनो यदा ।
तदाऽप्यहं भविष्यामि वाराणस्यां महामुनिः ॥ १८६ ॥
नाम्ना वै लाङ्गली भीमो यत्र देवाः सवासवाः ।
द्रक्ष्यन्ति मां कलौ तस्मिन्नवतीर्णं हलायुधं ॥ १८७ ॥
तत्रापि मम ते पुत्रा भविष्यन्ति सुधार्म्मिकाः ।
तुल्यार्च्चिर्मधुपिङ्गाक्षः श्वेतकेतुस्तथैव च (३) ॥ १८८ ॥
तेपि माहेश्वरं योगं प्राप्य ध्यानपरायणाः ।
विरजा ब्रह्मभूयिष्ठा रुद्रलोकाय संस्थिताः ॥ ८९ ॥
परिवर्त्ते त्रयोविंशे तृणविन्दुर्य्यदा मुनिः ।

---

१ दारुभ्यायनिन्यश्चैवेति ग०, ङ० च ।

२ नकस्तथेति ग०, ङ० च ।

३ चेकितानस्तथैव चेति ङ० ।

व्यासो भविष्यति ब्रह्मा तदाऽहं भविता पुनः।
ऋतो नाम महाकायो मुनिपुत्रः सुधार्म्मिकः॥ १८०॥
तत्र कालञ्जरिष्यामि तदा गिरिवरोत्तमे।
तेन कालञ्जरो नाम भविष्यति स पर्व्वतः। १८१॥
तत्रापि मम ते पुत्रा भविष्यन्ति महौजसः।
उशिजो बृहदुक्थश्च देवलः कविरेव च।
प्राप्य माहेश्वरं योगं रुद्रलोकं गता हि ते॥ १८२॥
परिवर्त्ते चतुर्विंशे ऋक्षो व्यासो भविष्यति।
तत्राऽहं भविता ब्रह्मन् कलौ तस्मिन् युगान्तिके।
शूली नाम महायोगी नैमिषे योगिवन्दिते॥ १८३॥
तत्रापि मम ते पुत्रा भविष्यन्ति तपस्विनः।
शालिहोत्रोऽग्निवेश्यश्च युवनाश्वः शरद्वसुः।
तेऽपि योगबलोपेता रुद्रं यास्यन्ति सुव्रताः॥ १८४॥
पञ्चविंशे पुनः प्राप्ते परिवर्त्ते यथाक्रमं।
वासिष्ठस्तु यदा व्यासः शक्तिर्नाम भविष्यति॥ १८५॥
तदाऽप्यहं भविष्यामि दण्डी मुण्डीश्वरः प्रभुः।
कोटिवर्षं समासाद्य (१) नगरं देवपूजितं॥ १८६॥
तत्रापि मम ते पुत्रा भविष्यन्ति क्रमागताः।
योगात्मानो महात्मानः सर्व्वे ते ह्यूर्द्ध्वरेतसः॥ १८७॥
छगलः कुम्भकर्णाश्च (२) कुम्भश्चैव प्रवाहुकः।

---

१ कोटिवर्षसहस्रन्त्विति ङ०।
२ कुम्भकर्णं श्चेति ङ०।

प्राप्य माहेश्वरं योगं गमिष्यन्ति तथैव ते ॥ १९८ ॥
षड्विंशे परिवर्त्ते तु यदा व्यासः पराशरः ।
तदाऽप्यहं भविष्यामि सहिष्णुर्नामनामतः ।
पुण्यं रुद्रवटं प्राप्य कलौ तस्मिन् युगान्तिके ॥ १९९ ॥
तत्रापि मम ते पुत्रा भविष्यन्ति सुधार्म्मिकाः ।
उलूको वैद्युतश्चैव (१) सर्वकः (२) ह्याश्वलायनः ।
प्राप्य माहेश्वरं योगं गन्तारस्ते तथैव हि ॥ २०० ॥
सप्तविंशतिमे प्राप्ते परिवर्त्ते क्रमागते ।
जातूकर्ण्यो यदा व्यासो भविष्यति तपोधनः ॥ २०१ ॥
तदाऽप्यहं भविष्यामि सोमशर्म्मा द्विजोत्तमः ।
प्रभासतीर्थमासाद्य योगात्मा लोकविश्रुतः ॥ २०२ ॥
तत्रापि मम ते पुत्रा भविष्यन्ति तपोधनाः ।
अक्षपादः कणादश्च उलूको वत्स एव च ॥ २०३ ॥
योगात्मानो महात्मानो विमलाः शुद्धबुद्धयः ।
प्राप्य माहेश्वरं योगं रुद्रलोकं ततो गताः ॥ २०४ ॥
अष्टाविंशे पुनः प्राप्ते परिवर्त्ते क्रमागते ।
पराशरसुतः श्रीमान् विष्णुर्लोकपितामहः ॥ २०५ ॥
यदा भविष्यति व्यासो नाम्ना द्वैपायनः प्रभुः ।
तदा षष्ठेन चांशेन कृष्णः पुरुषसत्तमः ।
वसुदेवाद्यदुश्रेष्ठो वासुदेवो भविष्यति ॥ २०६ ॥
तदा चाहं भविष्यामि योगात्मा योगमायया ।

---

१ विद्युतिश्चैवेति ख० ।

२ सम्बक इति ग० । घचिह्नितपुस्तके सर्म्बक इति तालव्यशकारघटितः ।

लोकविस्मयनार्थाय ब्रह्मचारिशरीरकः॥ २०७॥
श्मशाने मृतमुत्सृष्टं दृष्ट्वा लोकमनाथकं।
ब्राह्मणानां हितार्थाय प्रविष्टो योगमायया॥ २०८॥
दिव्यां मेरुगुहां पुण्यां त्वया सार्द्धञ्च विष्णुना।
भविष्यामि तदा ब्रह्मन् नकुली नामनामतः। २०९॥
कायारोहणमित्येवं सिद्धक्षेत्रञ्च वै तदा।
भविष्यति तु विख्यातं यावद्भूमिर्द्धरिष्यति॥ २१०॥
तत्रापि मम ते पुत्रा भविष्यन्ति तपस्विनः।
कुशिकश्चैव गार्ग्यश्च मित्रको रुष्ट एव च॥ २११॥
योगयुक्ता महात्मानो ब्राह्मणा वेदपारगाः।
प्राप्य माहेश्वरं योगं विमला ह्यूर्द्ध्वरेतसः।
रुद्रलोकं गमिष्यन्ति पुनरावृत्तिदुर्लभं॥ २१२॥
इत्येतद्वै मया प्रोक्तमवतारेषु लक्षणं।
मन्वादिकृष्णपर्य्यन्तमष्टाविंशयुगक्रमात्।
तत्र स्मृतिसमूहानां (१) विभागो धर्म्मलक्षणं॥ २१३॥

इति श्रीमहापुराणे वायुप्रोक्ते माहेश्वरावतारयोगो नाम त्रयोविंशोऽध्यायः।

---

१ श्रुतिसमूहानामिति ख०।

# अथ चतुर्विंशोऽध्यायः।



## शार्व्वस्तवं।

वायुरुवाच। चत्वारि भारते वर्षे युगानि मुनयो विदुः।
कृतं त्रेता द्वापरञ्च तिष्यश्चेति चतुर्युगं॥ १॥
एतत्सहस्रपर्य्यन्तमहर्य्यद्ब्रह्मणः स्मृतं।
यामाद्यास्तु गणाः सप्त रोमवन्तश्चतुर्द्दश॥ २॥
सशरीराः श्रयन्तेस्म जनलोकं सहानुगाः।
एवं देवेष्वतीतेषु महर्लोकाज्जनन्तपः॥ ३॥
मन्वन्तरेष्वतीतेषु देवाः सर्व्वे महौजसः।
ततस्तेषु गतेषूर्द्ध्वं सायुज्यं कल्पवासिनां॥ ४॥
समेत्य देवैस्ते देवाः प्राप्ते सङ्कालने तदा।
महर्लोकं परित्यज्य गणास्ते वै चतुर्द्दश॥ ५॥
भूतादिष्ववशिष्टेषु (१) स्थावरान्तेषु वै तदा।
शून्येषु तेषु लोकेषु महोन्तेषु भुवादिषु।
देवेष्वथ गतेषूर्द्ध्वं कल्पवासिषु वै जनं॥ ६॥
तत्संहृत्य ततो ब्रह्मा देवर्षिगणदानवान्।
संस्थापयति वै सर्व्वान् दाहवृष्ट्या युगक्षये॥ ७॥

---

१ भूतादिष्वेषु शिष्टेष्विति ख०।

अजातशत्रुर्भगवान् पितामहमथाब्रवीत् ॥ २६ ॥
भगवन् आदि मध्यञ्च अन्तं कालदिशोर्न च ।
नाहमन्तं प्रपश्यामि ह्युदरस्य तवानघ ॥ २७ ॥
एवमुक्त्वाब्रवीद्भूयः पितामहमिदं हरिः ।
भवानप्येवमेवाद्य ह्युदरं मम शाश्वतं ।
प्रविश्य लोकान्पश्यैताननौपम्यान् द्विजोत्तम ॥ २८ ॥
मनः प्रह्लादनीं वाणीं श्रुत्वा तस्याभिनन्द्य च ।
श्रीपतेरुदरं भूयः प्रविवेश पितामहः ॥ २९ ॥
तानेव लोकान् गर्भस्थः पश्यन् सोऽचिन्त्यविक्रमः ।
पर्य्यटित्वादिदेवस्य ददर्शान्तं न वै हरेः ॥ ३० ॥

ज्ञात्वागमन्तस्य पितामहस्य
द्वाराणि सर्व्वाणि पिधाय विष्णुः ।
विभुर्म्मनः कर्त्तुमियेष चाशु
सुखं प्रसुप्तोऽस्मि महाजलौघे ॥ ३१ ॥

ततो द्वाराणि सर्व्वाणि पिहितान्युपलक्ष्यते ।
सूक्ष्मं कृत्वात्मनो रूपं नाभ्यां द्वारमविन्दत ॥ ३२ ॥
पद्मसूत्रानुमार्गेण ह्यनुगम्य पितामहः ।
उज्जहारात्मनो रूपं पुष्कराच्चतुराननः ।
विरराजारविन्दस्थः पद्मगर्भसमद्युतिः ॥ ३३ ॥
एतस्मिन्नन्तरे ताभ्यां एकैकस्य तु कार्त्स्न्यतः ।
प्रवर्त्तमाने संहर्षे मध्ये तस्यार्णवस्य तु ॥ ३४ ॥
सूत उवाच। ततो ह्युपरि मेयात्मा भूतानां प्रभुरीश्वरः ।
शूलपाणिर्महादेवो हेमचीराम्बरच्छदः ।

आगच्छद्यत्र सोऽनन्तो नागभोगपतिर्हरिः ॥ ३५ ॥
शीघ्रं विक्रमतस्तस्य पद्मग्रामत्यन्तपीड़िताः ।
उद्भूतास्तूर्णमाकाशे पृथुलास्तोयबिन्दवः ।
अत्युष्णाश्चातिशीताश्च वायुस्तत्र ववौ भृशं ॥ ३६ ॥
तद्दृष्ट्वा महदाश्चर्य्यं ब्रह्मा विष्णुमभाषत ।
अब्बिन्दवो हि स्थूलोष्णाः कम्पते चाम्बुजं भृशं ।
एतं मे संशयं ब्रूहि किञ्चान्यत् त्वञ्चिकीर्षसि ॥ ३७ ॥
एतदेवंविधं वाक्यं पितामहमुखोद्भवं ।
श्रुत्वाप्रतिमकर्म्माह भगवानसुरान्तकृत् ॥ ३८ ॥
किन्नु खल्वत्र मे नाभ्यां भूतमन्यत्कृतालयं ।
वदति प्रियमत्यर्थं विप्रियेपि च ते मया ॥ ३९ ॥
इत्येवं मनसा ध्यात्वा प्रत्युवाचेदमुत्तरं ।
किन्त्वत्र भगवान् तस्मिन् पुष्करे जातसम्भ्रमः ॥ ४० ॥
किं मया यत् कृतन्देव यन्मां प्रियमनुत्तमं ।
भाषसे पुरुषश्रेष्ठ किमर्थं ब्रूहि तत्त्वतः ॥ ४१ ॥
एवं ब्रुवाणं देवेशं लोकयात्रान्तु तत्त्वगां ।
प्रत्युवाचाम्बुजाभास्यः ब्रह्मा वेदनिधिः प्रभुः ॥ ४२ ॥
योऽसौ तवोदरं पूर्व्वं प्रविष्टोऽहं त्वदिच्छया ।
यथा ममोदरे लोकाः सर्व्वे दृष्टास्त्वया प्रभो ।
तथैव दृष्टाः कार्त्स्न्येन मया लोकास्तवोदरे ॥ ४३ ॥
ततो वर्षसहस्रान्ते उपावृत्तस्य मेऽनघ ।
नूनं मत्सरभावेन मां वशीकर्तुमिच्छता ।
आशु द्वाराणि सर्व्वाणि घटितानि त्वया पुनः ॥ ४४ ॥

ततो मया महाभाग सञ्चिन्त्य स्वेन चेतसा ।
लब्धो नाभ्यां प्रवेशस्तु पद्मसूत्राद्विनिर्गमः ॥ ४५ ॥
माभूत्ते मनसोऽल्पोऽपि व्याघातोऽयं कथञ्चन ।
इत्येषानुगतिर्विष्णोः कार्य्याणामौपसर्गिकी ॥ ४६ ॥
यन्मयानन्तरं कार्य्यं मयाध्यवसितं त्वयि ।
त्वां स्वाबाधितुकामेन क्रीड़ापूर्व्वं यदृच्छया ।
आशु द्वाराणि सर्व्वाणि घटितानि मया पुनः ॥ ४७ ॥
न तेऽन्यथावमन्तव्यो मान्यः पूज्यश्च मे भवान् ।
सर्व्वं मर्षय कल्याण यन्मया यत्कृतन्तव ।
तस्मान्मयोच्यमानस्त्वं पद्माद्वतर प्रभो ॥ ४८ ॥
नाहं भवन्तं शक्नोमि सोढुन्तेजोमयं गुरुं ।
स चोवाच वरं ब्रूहि पद्माद्वतराम्यहं ॥ ४९ ॥
विष्णुरुवाच । पुत्रो भव ममारिघ्न मुदं प्राप्स्यसि शोभनं ।
सत्यधनो महायोगी त्वमीड्यः (१) प्रणवात्मकः ॥ ५० ॥
(अद्यप्रभृति सर्व्वेश श्वेतोष्णीषविभूषणः ।
पद्मयोनिरितीत्येवं ख्यातो नाम्ना भविष्यसि ।
पुत्रो मे त्वं भव ब्रह्मन् सर्व्वलोकाधिप प्रभो ॥ ५१ ॥)
ततः स भगवान् ब्रह्मा वरं गृह्य किरीटिनः ।
एवं भवतु चेत्युक्त्वा प्रीतात्मा गतमत्सरः ॥ ५२ ॥
प्रत्यासन्नमथायातं बालार्काभं महाननं ।
भूतमत्यद्भुतं दृष्ट्वा नारायणमथाब्रवीत् ॥ ५३ ॥

---

१ त्वमीश इति ख० ।

अप्रमेयो महावक्त्रो दंष्ट्री व्यस्तशिरोरुहः ।
दशबाहुस्त्रिशूलाङ्को नयनैर्विश्वतोमुखः ॥ ५४ ॥
लोकप्रभुः स्वयं साक्षाद्विकृतो मुञ्जमेखली ।
मेढ्रेणोर्द्धेन महता नदमानोऽतिभैरवं ॥ ५५ ॥
कः खल्वेष पुमान् विष्णो तेजोराशिर्महाद्युतिः ।
व्याप्य सर्व्वा दिशो द्याञ्च इत एवाभिवर्त्तते ॥ ५६ ॥
तेनैवमुक्तो भगवान् विष्णुर्ब्रह्माणमब्रवीत् ।
पद्भ्यान्तलनिपातेन यस्य विक्रमतोऽर्णवे ।
वेगेन महताकाशे व्यथिताश्च जलाशयाः ॥ ५७ ॥
छटाभिर्विश्वतोऽत्यर्थं सिच्यते पद्मसम्भवः ।
घ्राणजेन च वातेन कम्पमानं त्वया सह ।
दोधूयते महापद्मं स्वच्छन्दं मम नाभिजं ॥ ५८ ॥
स एष भगवानीशो ह्यनादिश्चान्तकृद्विभुः ।
भवानहञ्च स्तोत्रेण ह्युपतिष्ठाव गोध्वजं ॥ ५९ ॥
ततः क्रुद्धोऽम्बुजाभाक्षं ब्रह्मा प्रोवाच केशवं ।
न भवान् न्यूनमात्मानं लोकानां योनिमुत्तमं ॥ ६० ॥
ब्रह्माणं लोककर्त्तारं माञ्च वेत्ति सनातनं ।
कोऽयं भोः शङ्करो नाम ह्यावयोर्व्यतिरिच्यते ॥ ६१ ॥
तस्य तत् क्रोधजं वाक्यं श्रुत्वा विष्णुरभाषत ।
मा मैवं वद कल्याण परिवादं महात्मनः ॥ ६२ ॥
मायायोगेश्वरो धर्मो दुराधर्षो वरप्रदः ।
हेतुरस्यात्र जगतः पुराणः पुरुषोऽव्ययः ॥ ६३ ॥
जीवः खल्वेष जीवानां ज्योतिरेकं प्रकाशते ।

बालक्रीड़नकैरिव: क्रीड़तेशङ्कर: स्वयं ॥ ६४ ॥
प्रधानमव्ययं ज्योतिरव्यक्तं प्रकृतिस्तम: ।
अस्य चैतानि नामानि नित्यं प्रसवधर्मिण: ।
य: क: स इति दु:खार्त्तैर्मृग्यते यतिभि: शिव: ॥ ६५ ॥
एष वीजी भवान्वीजमहं योनि: सनातन: ।
एवमुक्तोऽथ विश्वात्मा ब्रह्मा विष्णुमभाषत ॥ ६६ ॥
भवान्योनिरहं वीजं कथं वीजी महेश्वर: ।
एतन्मे सूक्ष्ममव्यक्तं संशयं छेत्तुमर्हसि ॥ ६७ ॥
ज्ञात्वा चैवं समुत्पत्तिं ब्रह्मणा लोकतन्त्रिणा ।
इदं परमसादृश्यं प्रश्नमभ्यवदद्धरि: ॥ ६८ ॥
अस्मान्महत्तरं गुह्यं भूतमन्यन्नविद्यते ।
महत: परमं धाम शिवमध्यात्मिनां पदं ॥ ६९ ॥
द्वैधीभावेन चात्मानं प्रविष्टस्तु व्यवस्थित: ।
निष्कल: सूक्ष्ममव्यक्त: सकलश्च महेश्वर: ॥ ७० ॥
अस्य मायाविधिज्ञस्य अगम्यगहनस्य च ।
पुरा लिङ्गं भवद्वीजं प्रथमं त्वादिसर्गिकं ॥ ७१ ॥
मयि योनौ समायुक्तं तद्वीजं कालपर्य्ययात् ।
हिरण्मयमपारन्तद्योन्यामण्डमजायत ॥ ७२ ॥
शतानि दशवर्षाणामण्डञ्चाप्सु प्रतिष्ठितं ।
अन्ते वर्षसहस्रस्य वायुना तद्द्विधा कृतं ॥ ७३ ॥
कपालमेकं द्यौर्जज्ञे कपालमपरं क्षिति: ।
उल्वन्तस्य महोत्सेधं योऽसैकनकपर्वत: ॥ ७४ ॥
ततस्तस्मात् प्रबुद्धात्मा देवो देववर: प्रभु: ।

हिरण्यगर्भो भगवान् अहं जज्ञे चतुर्भुजः ॥ ७५ ॥
ततो वर्षसहस्रान्ते वायुना तद्द्विधाकृतं ।
अतारार्केन्दुनक्षत्रं शून्यं लोकमवेक्ष्य च ।
कोऽयमत्रेत्यभिध्याते (१) कुमारास्तेऽभवंस्तदा ॥ ७६ ॥
प्रियदर्शनास्तु तनवो येऽतीताः पूर्व्वजास्तव ।
भूयो वर्षसहस्रान्ते तत एवात्मजास्तव ।
भुवनानलसङ्काशाः पद्मपत्रायतेक्षणाः ॥ ७७ ॥
श्रीमान् सनत्कुमारस्तु ऋतुश्चैवोर्द्धरेतसौ ।
सनातनश्च सनकस्तथैव च सनन्दनः ।
उत्पन्नाः समकालन्ते बुद्ध्यातीन्द्रियदर्शनाः ॥ ७८ ॥
उत्पन्नाः प्रतिभात्मानो जगदुच्चैतदेव हि ।
नारप्स्यन्ते च कर्म्माणि तापत्रयविवर्जिताः ॥ ७९ ॥
अस्य सौम्यं बहुक्लेशं जराशोकसमन्वितं ।
जीवितं मरणञ्चैव सम्भवश्च पुनः पुनः ॥ ८० ॥
स्वप्नभूतं पुनः स्वर्गं दुःखानि नरकांस्तथा ।
विदित्वा चागमं सर्व्वमवश्यं भवितव्यताम् ॥ ८१ ॥
ऋभुं सनत्कुमारञ्च दृष्ट्वा तव वशे स्थितौ ।
त्रयस्तु त्रीन् गुणान् हित्वा आत्मजाः सनकादयः ।
वैवर्त्तेन तु ज्ञानेन निवृत्तास्ते महौजसः ॥ ८२ ॥
ततस्तेष्वपवृत्तेषु सनकादिषु वै त्रिषु ।
भविष्यसि विमूढस्तु मायया शङ्करस्य तु ॥ ८३ ॥

---

१ कोऽयमत्रेत्य भिध्याते इति ख० ।

एवं कल्पे तु वैकल्पे (१) संज्ञा नश्यति तेऽनघ ।
कल्पशेषाणि भूतानि सूक्ष्माणि पार्थिवानि च ॥ ८४ ॥
सा चैषा ह्यैश्वरी माया जगतः समुदाहृता ।
स एष पर्व्वतो मेरुर्देवलोक उदाहृतः ॥ ८५ ॥
तवैवेदं हि माहात्म्यं दृष्ट्वा चात्मानमात्मना ।
ज्ञात्वा चेश्वरसद्भावं ज्ञात्वा मामम्बुजेक्षणं ॥ ८६ ॥
महादेवं महायोगं भूतानां वरदं प्रभुं ।
प्रणवात्मानमासाद्य नमस्कृत्वा जगद्गुरुं ।
त्वाञ्च माञ्चैव संक्रुद्धो निश्वासाग्निर्दहेदयं ॥ ८७ ॥
एवं ज्ञात्वा महायोगं अभ्युत्तिष्ठनं महाबलः ।
अहं त्वामग्रतः कृत्वा स्तोष्येहमनलप्रभं ॥ ८८ ॥
सूत उवाच । ब्रह्माणमग्रतः कृत्वा ततः स गरुड़ध्वजः ।
अतीतैश्च भविष्यैश्च वर्त्तमानैस्तथैव च ।
नामभिश्छान्दसैश्चैव इदं स्तोत्रमुदीरयत् । ८९ ॥
नमस्तुभ्यं भगवते सुव्रतेऽनन्ततेजसे ।
नमः क्षेत्राधिपतये बीजिने शूलिने नमः ॥ ९० ॥
अमेढ्रायोर्द्ध्वमेढ्राय नमो वैकुण्ठरेतसे ।
नमो ज्येष्ठाय श्रेष्ठाय अपूर्वप्रथमाय च ॥ ९१ ॥
नमो हव्याय पूज्याय सद्योजाताय वै नमः ।
गह्वराय घनेशाय हेमचीराम्बराय च ॥ ९२ ॥
नमस्ते ह्यस्मदादीनां भूतानां प्रभावाय च ।

---

१ वैवस्त इति पा० ।

वेदकर्म्मान्नदानानां द्रव्याणां प्रभवे नमः ॥ ६३ ॥
नमो योगस्य प्रभवे सांख्यस्य प्रभवे नमः ।
नमो ध्रुवनिशीथानामृषीणां पतये नमः ॥ ६४ ॥
विद्युदशनिमेघानां गर्ज्जितप्रभवे नमः ।
उदधीनाञ्च प्रभवे द्वीपानां प्रभवे नमः ॥ ६५ ॥
अद्रीनां प्रभवे चैव वर्षाणां प्रभवे नमः ।
नमो नदानां प्रभवे नदीनां प्रभवे नमः ॥ ६६ ॥
नमश्चौषधिप्रभवे वृक्षाणां प्रभवे नमः ।
धर्म्माध्यक्षाय धर्म्माय स्थितीनां प्रभवे नमः ॥ ६७ ॥
नमो रसानां प्रभवे रत्नानां प्रभवे नमः ।
नमः क्षणानां प्रभवे कलानां प्रभवे नमः ॥ ६८ ॥
निमेषप्रभवे चैव काष्ठानां प्रभवे नमः ।
अहोरात्रार्द्धमासानां मासानां प्रभवे नमः ॥ ६९ ॥
नम ऋतूनां प्रभवे संख्यायाः प्रभवे नमः ।
प्रभवे च परार्द्धस्य परस्य प्रभवे नमः ॥ २२० ॥
नमः पुराणप्रभवे युगस्य प्रभवे नमः ।
चतुर्व्विधस्य सर्गस्य प्रभवेऽनन्तचक्षुषे । २०१ ॥
कल्पोदये निबद्धानां वार्त्तानां प्रभवे नमः ।
नमो विश्वस्य प्रभवे ब्रह्मादि प्रभवे नमः ॥ २०२ ॥
विद्यानां प्रभवे चैव विद्यानां पतये नमः ।
नमो व्रतानां पतये मन्त्राणां पतये नमः ॥ २०३ ॥
पितॄणां पतये चैव पशूनां पतये ।
वाग्वृषाय नमस्तुभ्यं पुराणवृषभाय च ॥ २०४ ॥

सुचारुचारुकेशाय ऊर्द्धचक्षुःशिराय च ।
नमः पशूनां पतये गोवृषेन्द्रध्वजाय च ॥ २०५ ॥
प्रजापतीनां पतये सिद्धानां पतये नमः ।
गरुडोरगसर्पाणां पक्षिणां पतये नमः ॥ २०६ ॥
गोकर्णाय च गोष्ठाय शङ्कुकर्णाय वै नमः ।
वाराहायाप्रमेयाय रक्षोधिपतये नमः ॥ २०७ ॥
नमोऽप्सराणां पतये गणानां क्षेमये नमः ।
अम्भसां पतये चैव तेजसां पतये नमः ॥ २०८ ॥
नमोऽस्तु लक्ष्मीपतये श्रीमते ह्रीमते नमः ।
बलाबलसमूहाय ह्यक्षोभ्यक्षोभणाय च ॥ २०९ ॥
दीर्घशृङ्गैकशृङ्गाय वृषभाय ककुद्मिने ।
नमस्थैर्याय वपुषे तेजसे सुप्रभाय च ॥ २१० ॥
भूताय च भविष्याय वर्त्तमानाय वै नमः ।
सुवर्चसेऽथ वीराय शूराय ह्यतिगाय च ॥ २११ ॥
वरदाय वरेण्याय नमः सर्व्वगताय च ।
नमो भूताय भव्याय भवाय महते तथा ॥ २१२ ॥
जनाय च नमस्तुभ्यं तपसे वरदाय च ।
नमो वन्द्याय मोक्षाय जनाय नरकाय च ॥ २१३ ॥
भवाय भजमानाय इष्टाय याजकाय च ।
अभ्युदीर्णाय दीप्ताय तत्त्वाय निर्गुणाय च ॥ २१४ ॥
नमः पाशाय हस्ताय नमः स्वाभरणाय च ।
हुताय अपहुताय प्रहुतप्रशिताय च ॥ २१५ ॥
नमस्त्विष्टाय मूर्त्ताय ह्यग्निष्टोमर्त्त्विजाय च ।

नम ऋताय सत्याय भूताधिपतये नम ॥ २१६ ॥
सदस्याय नमश्चैव दक्षिणावभृथाय च ।
अहिंसायाथ लोकानां पशुमन्त्रौषधाय च ॥ २१७ ॥
नमस्तुष्टिप्रदानाय त्र्यम्बकाय सुगन्धिने ।
नमोऽस्त्विन्द्रियपतये परिह्लाराय स्रग्विने ॥ २१८ ॥
विश्वाय विश्वरूपाय विश्वतोऽक्षिमुखाय च ।
सर्व्वतः पाणिपादाय रुद्रायाप्रमिताय च ॥ २१९ ॥
नमो हव्याय कव्याय हव्यकव्याय वै नमः ।
नमः सिद्धाय मेध्याय चेष्टाय त्वव्ययाय च ॥ २२० ॥
सुवीराय सुघोराय ह्यक्षोभ्यक्षोभणाय च ।
सुमेधसे सुप्रजाय दीप्ताय भास्कराय च ॥ २२१ ॥
नमो नमः सुपर्णाय तपनीयनिभाय च ।
विरूपाक्षाय त्र्यक्षाय पिङ्गलाय महौजसे ॥ २२२ ॥
वृष्टिघ्नाय नमश्चैव नमः सौम्येक्षणाय च ।
नमो धूम्राय श्वेताय कृष्णाय लोहिताय च ॥ २२४ ॥
पिशिताय पिशङ्गाय पीताय च निषङ्गिणे ।
नमस्ते सविशेषाय निर्विशेषाय वै नमः ॥ २२५ ॥
नमो वै पद्मवर्णाय मृत्युघ्नाय च मृत्यवे ।
नमः श्यामाय गौराय कद्रवे रोहिताय च ॥ २२५ ॥
नमः कान्ताय सन्ध्याभ्रवर्णाय बहुरूपिणे ।
नमः कपालहस्ताय दिग्वस्त्राय कपर्द्दिने ॥ २२६ ॥
अप्रमेयाय शर्व्वाय ह्यवध्याय वराय च ।
पुरस्तात् पृष्ठतश्चैव विभ्राणाय कृशानवे ॥ २२७ ॥

दुर्गाय महते चैव रोधाय कपिलाय च: ।
अर्कप्रभशरीराय बलिने रंहसाय च ॥ २२८ ॥
पिनाकिने प्रसिद्धाय स्फीताय प्रसृताय च ।
सुमेधसेऽक्षमालाय दिग्वासाय शिखण्डिने ॥ २२९ ॥
चित्राय चित्रवर्णाय विचित्राय धराय च (१) ।
चेकितानाय तुष्टाय नमस्त्वनिहिताय च ॥ २३० ॥
नम: चान्ताय शान्ताय वज्रसंहननाय च ।
रक्षोघ्नाय मखघ्नाय शितिकण्ठोर्द्ध्वरेतसे ॥ २३१ ॥
अरिहाय कृतान्ताय तिग्मायुधधराय च ।
समोदाय प्रमोदाय इरिणायैव ते नमः ॥ २३२ ॥
प्रणवप्रणवेशाय भक्तानां शर्मदाय च ।
मृगव्याधाय दक्षाय दक्षयज्ञहराय च ॥ २३३ ॥
सर्व्वभूताय भूताय सर्व्वेशातिशयाय च ।
पुरभेत्त्रे च शान्ताय सुगन्धाय वरेशवे ॥ २३४ ॥
पुष्पवेन्त स्वरूपाय भगनेत्रान्तकाय च ।
कणादाय वरिष्ठाय कामाङ्गदहनाय च ॥ २३५ ॥
रवि: करालचक्राय नागेन्द्रदमनाय च ।
दैत्यानामन्तकायाथो दिव्याक्रन्दकराय च ॥ २३६ ॥
श्मशानरतिनित्याय नमस्त्र्यम्बकधारिणे ।
नमस्ते प्राणपालाय धवमालाधराय च ॥ २३७ ॥
प्रहीणशोकैर्विविधैर्भूतै: परिष्टुताय च ।

१ चित्रधर्म्मधराय चेति ख० ।

नरनारीशरीराय देव्याः प्रियकराय च ॥ २३८ ॥
जटिने दण्डिने तुभ्यं व्यालयज्ञोपवीतिने ।
नमोऽस्तु नृत्यशीलाय वाद्य नृत्यप्रियाय च ॥ २३९ ॥
मन्यवे गीतशीलाय मुनीतिगायते नमः ।
कटककराय भीमाय घोररूपधराय च ॥ २४० ॥
विभीषणाय भीमाय भगप्रमथनाय च ।
सिद्धसङ्घातगीताय महाभागाय वै नमः ॥ २४१ ॥
नमो मुक्ताट्टहासाय क्ष्वेडितास्फोटिताय च ।
नदते कूर्द्दते चैव नमः प्रमुदिताय च ॥ २४२ ॥
नमोऽद्भुताय स्वपते धावते प्रस्थिताय च ।
ध्यायते जृम्भते चैव तुदते द्रवते नमः ॥ २४३ ॥
चलते क्रीड़ते चैव लम्बोदरशरीरिणे ।
नमः क्षताय कम्प्याय मुण्डाय विकराय च ॥ २४४ ॥
नम उन्मत्तवेषाय किंकिणीकाय वै नमः ।
नमो विकृतवेषाय क्रूरायामर्षणाय च ॥ २४५ ॥
अप्रमेयाय दीप्ताय दीप्तये निर्गुणाय च ।
नमः प्रियाय वादाय मुद्रामणिधराय च ॥ २४६ ॥
नमस्तोकाय तनवे गुणैरप्रतिमाय च ।
नमो गणाय गुह्याय अगम्यागमनाय च ॥ २४७ ॥
लोकधात्री त्वियं भूमिः पादौ सज्जनसेवितौ ।
सर्व्वेषां सिद्धयोगानामधिष्ठानन्तवोदरं ॥ २४८ ॥
मध्येऽन्तरीक्षं विस्तीर्णन्तारागणविभूषितं ।
तारापथ इवाभाति श्रीमान्हारस्तवोरसि ॥ २४९ ॥

दिशो दशभुजास्ते वै केयूराङ्गदभूषिताः ।
विस्तीर्णपरिणाहश्च नीलाम्बुदचयोपमः ॥ २५० ॥
कण्ठस्ते शोभते श्रीमान् हेमसूत्रविभूषितः ।
दंष्ट्राकरालदुर्द्धर्षमनौपम्यं मुखं तव ॥ २५१ ॥
पद्ममालाकृतोष्णीषं शीर्षण्यं शोभते कथं ।
दीप्तिः सूर्य्ये वपुश्चन्द्रे स्थैर्य्यंभूह्र्यनिलो बले ॥ २५२ ॥
तैक्ष्ण्यमग्नौ प्रभा चन्द्रे खे शब्दः शैत्यमप्सु च ।
अक्षरोत्तमनिष्पन्दान् गुणानेतान्विदुर्बुधाः ॥ २५३ ॥
जपो जप्यो महायोगी महादेवो महेश्वरः ।
पुरेशयो गुहावासी खेचरो रजनीचरः ॥ २५४ ॥
तपोनिधिर्गुहगुरुर्नन्दनो नन्दिवर्द्धनः ।
हयशीर्षा धराधाता विधाता भूतिवाहनः ॥ २५५ ॥
बोद्धव्यो बोधनो नेता धूर्व्वहो दुःप्रकम्पकः ।
बृहद्रथो भीमकर्म्मा बृहत्कीर्त्तिर्धनञ्जयः ॥ २५६ ॥
घण्टाप्रियो ध्वजी छत्री पताकाध्वजिनीपतिः ।
कवची पट्टिशी शङ्खी पाशहस्तः परश्वभृत् ॥ २५७ ॥
अगमस्त्वनघः शूरो देवराजारिमर्दनः ।
त्वां प्रसाद्य पुराऽस्माभिर्द्विषन्तो निहता युधि ॥ २५८ ॥
अग्निस्त्वं चार्णवान्सर्वान् पिबन्नेव न तृप्यसे ।
क्रोधागारः प्रसन्नात्मा कामहा कामदः प्रियः ॥ २५९ ॥
ब्रह्मण्यो ब्रह्मचारी च गोघ्नस्त्वं शिष्टपूजितः ।
वेदानामव्ययः कोशस्त्वया यज्ञः प्रकल्पितः ॥ २६० ॥
हव्यञ्च वेदं वहति वेदोक्तं हव्यवाहनः ।

प्रीते त्वयि महादेव वयं प्रीता भवामहे ॥ २६१ ॥

भवानीशो नादिमान् धामराशि-
र्ब्रह्मा लोकानान्त्वं कर्त्ता त्वादिसर्गः ।
साङ्ख्याः प्रकृतिभ्यः परमं त्वां विदित्वा
क्षीणध्यानास्ते न मृत्युं विशन्ति ॥ २६२ ॥
योगेन त्वाम्ध्यानिनो नित्ययुक्ताः
ज्ञात्वा भोगान् सन्त्यजन्ते पुनस्तान् ।
येऽन्ये मर्त्त्यास्त्वां प्रपन्ना विशुद्धाः
ते कर्म्मभिर्दिव्यभोगान् भजन्ते ॥ २६३ ॥

अप्रमेयस्य तत्त्वस्य यथा विद्मः स्वशक्तितः ।
कीर्त्तितं तव माहात्म्यम पारं परमात्मनः ।
शिवो नो भव सर्व्वत्र योऽसि सोऽसि नमोऽस्तु ते ॥ २६४ ॥

इति श्रीमहापुराणे वायुप्रोक्ते शार्व्वस्तवं नाम
चतुर्विंशोऽध्यायः ।

---

## अथ पञ्चविंशोऽध्यायः ।

———000(D)000———

### मधुकैटभोत्पत्तिविनाशवर्णनं ।

सूत उवाच । संपिबन्निव तौ दृष्ट्वा मधुपिङ्गायतेक्षणः ।
प्रहृष्टवदनोऽत्यर्थमभवञ्च स्वकीर्त्तनात् ॥ १ ॥
उमापतिर्विरूपाक्षो दक्षयज्ञविनाशनः ।
पिनाकी खण्डपरशुर्भूतग्रामस्त्रिलोचनः ॥ २ ॥
ततः स भगवान् देवः श्रुत्वा वाक्यामृतन्तयोः ।
जानन्नपि महाभागः प्रीतपूर्व्वमथाब्रवीत् ॥ ३ ॥
कौ भवन्तौ महात्मानौ परस्परहितैषिणौ ।
समेतावम्बुजाभाक्षौ तस्मिन् घोरे जलप्लवे ॥ ४ ॥
तावूचतुर्महात्मानौ समिरीक्ष्य परस्परं ।
भगवन् किन्नु तत्त्वेन विज्ञातेन त्वया विभो ।
कुत्र वा सुखमानन्त्यमिच्छाचारमृते त्वया ॥ ५ ॥
उवाच भगवान् देवो मधुरश्लक्ष्णया गिरा ।
भो भो हिरण्यगर्भं त्वां त्वां च कृष्ण वदाम्यहं ॥ ६ ॥
प्रीतोऽहमनया भक्त्या शाश्वताक्षरयुक्तया ।
भवन्तौ माननीयौ वै मम ह्यर्हतरावुभौ ।
युवाभ्यां किन्ददाम्यद्य वराणां वरमुत्तमं ॥ ७ ॥
तेनैवमुक्ते वचने ब्रह्माणं विष्णुरब्रवीत् ।
ब्रूहि ब्रूहि महाभाग वरो यस्ते विवक्षितः ॥ ८ ॥

प्रजाकामोऽस्म्यहं विष्णो पुत्रमिच्छामि धूर्व्वहं ।
ततः स भगवान् ब्रह्मा वरेप्सुः पुत्रलिप्सया ॥ ९ ॥
अथ विष्णुरुवाचेदं प्रजाकामं प्रजापतिं ।
वीरमप्रतिमं पुत्रं यत् त्वमिच्छसि धूर्व्वहं ॥ १० ॥
पुत्रत्वेनाभियुङ्क्ष्व त्वं देवदेवं महेश्वरं ।
स तस्य वाक्यं संपूज्य केशवस्य पितामहः ॥ ११ ॥
ईशानं वरदं रुद्रमभिवाद्य कृताञ्जलिः ।
उवाच पुत्रकामस्तु वाक्यानि सह विष्णुना ॥ १२ ॥
यदि मे भगवान् प्रीतः पुत्रकामस्य नित्यशः ।
पुत्रो मे भव विश्वात्मन् स्वतुल्यो वापि धूर्व्वहः ।
नान्यं वरमहं वव्रे प्रीते त्वयि महेश्वर ॥ १३ ॥
तस्य तां प्रार्थनां श्रुत्वा भगवान् भगनेत्रहा ।
निष्कल्मषमभायस्य वाढ़मित्यब्रवीद्वचः ॥ १४ ॥
यदा कार्य्यसमारम्भे कस्मिंश्चित्तव सुव्रत ।
अनिष्पत्तौ च कार्य्यस्य क्रोधस्त्वां समुपेष्यति ।
आत्मैकादश ये रुद्रा विहिताः प्राणहेतवः ॥ १५ ॥
सोऽहमेकादशात्मा वै शूलहस्तः सहानुगः ।
ऋषिर्भिर्भवो महात्मा वै ललाटाद्भविता तदा ॥ १६ ॥
प्रसादमतुलं कृत्वा ब्रह्मणस्ताहृशं पुरा ।
विष्णुं पुनरुवाचेदं ददामि च वरन्तव ॥ १७ ॥
स होवाच महाभागो विष्णुर्भवमिदं वचः ।
सर्व्वमेतत् कृतं देव परितुष्टोऽसि मे यदि ।
त्वयि मे सुप्रतिष्ठाऽस्तु भक्तिरस्तु वृषवाहन ॥ १८ ॥

एवमुक्तस्ततो देवः समभाषत केशवं ।
विष्णो शृणु यथा देव प्रीतोऽहन्तव शाश्वत ॥ १९ ॥
प्रकाशश्चाप्रकाशश्च जङ्गमं स्थावरञ्च यत् ।
विश्वरूपमिदं सर्व्वं रुद्रनारायणात्मकं ॥ २० ॥
अहमग्निर्भवान् सोमो भवान् रात्रिरहं दिनं ।
भवानृतमहं सत्यं भवान् क्रतुरहं फलं ॥ २१ ॥
भवान् ज्ञानमहं ज्ञेयं यज्जपित्वा सदा जनाः ।
मां विशन्ति त्वयि प्रीते जनाः सुकृतकारिणः ।
आवाभ्यां सहिता चैव गतिर्नान्या युगक्षये ॥ २२ ॥
आत्मानं प्रकृतिं विद्धि मां विद्धि पुरुषं शिवं ।
भवानर्द्धशरीरं मे त्वहन्तव तथैव च ॥ २३ ॥
वामपार्श्वमहम्मह्यं श्यामं श्रीवत्सलक्षणं ।
त्वञ्च वामेतरं पार्श्वं त्वहं वै नीललोहितः ॥ २४ ॥
त्वञ्च मे हृदयं विष्णो तव चाहं हृदि स्थितः ।
भवान्सर्व्वस्य कार्य्यस्य कर्त्ताहमधिदैवतं ॥ २५ ॥
तदेहि स्वस्ति ते वत्स गमिष्याम्यम्बुदप्रभ ।
एवमुक्त्वा गतो विष्णोर्देवोऽन्तर्द्धानमीश्वरः ॥ २६ ॥
ततः सोऽन्तर्हिते देवे संप्रहृष्टस्तदा पुनः ।
अशेत शयने भूप प्रविश्यान्तर्जले हरिः ॥ २७ ॥
तं पद्मं पद्मगर्भाभं पद्माक्षः पद्मसम्भवः ।
सम्प्रहृष्टमना ब्रह्मा भेजे ब्राह्मं तदासनं ॥ २८ ॥
अथ दीर्घेण कालेन तत्राप्यप्रतिमावुभौ ।
महाबलौ महासत्त्वौ भ्रातरौ मधुकैटभौ ॥ २९ ॥

ऊचतुश्चैव वचनं मध्यो वै नौ भविष्यसि ।
एवमुक्ता तु तौ तस्मिन्नन्तर्द्धानं गतावुभौ ॥ ३० ॥
दारुणन्तु तयोर्भावं ज्ञात्वा पुष्करसम्भवः ।
माहात्म्यञ्चात्मनो बुद्ध्वा विज्ञातुमुपचक्रमे ॥ ३१ ॥
कर्णिकाघटनं भूयो नाभ्यजानाद्यदा गतिं ।
ततः स पद्मनालेन अवतीर्य्य रसातलं ।
कृष्णाजिनोत्तरासङ्गन्ददर्शेऽन्तर्जले हरिं ॥ ३२ ॥
स च तं बोधयामास विबुद्धश्चेदमब्रवीत् ।
भूतेभ्यो मे भयं देव त्रायस्वोत्तिष्ठ शङ्कर ॥ ३३ ॥
ततः स भगवान् विष्णुः सप्रहासमरिन्दमः ।
न भेतव्यं न भेतव्यमित्युवाच मुनिः स्वयं ॥ ३४ ॥
तस्मात्पूर्व्वं त्वया चोक्तं भूतेभ्यो मे महद्भयं ।
तस्माद्भूतादिवाक्यैस्तौ दैत्यौ त्वं नाशयिष्यसि ॥ ३५ ॥
भूर्भुवःस्वःस्ततो देवं विविशुस्तमयोनिजं ।
ततः प्रदक्षिणं कृत्वा तमेवासीनमागतं ॥ ३६ ॥
गते तस्मिंस्ततोऽनन्त उद्गीर्य्य भ्रातरौ मुखात् ।
विष्णुं जिष्णुञ्च प्रोवाच ब्रह्माणमभिरक्षतां ।
मधुकैटभयोर्ज्ञात्वा तयोरागमनं पुनः ॥ ३७ ॥
चक्राते रूपसादृश्यं विष्णोर्जिष्णोश्च सत्तमौ ।
कृतसादृश्यरूपौ तौ तावेवाभिमुखौ स्थितौ ॥ ३८ ॥
ततस्तौ प्रोचतुर्दैत्यौ ब्रह्माणं दारुणं वचः ।
अस्माकं युध्यमानानां मध्ये त्वं प्राश्निको भव ॥ ३९ ॥
ततस्तौ जलमाविश्य संस्तभ्यापः स्वमायया ।

चक्रातुस्तुमुलं युद्धं यस्य येनेप्सितं तदा ॥ ४० ॥
तेषान्तु युध्यमानानां दिव्यं वर्षशतद्रुतं ।
न च युद्धमदोत्सेको ह्यन्योन्यं संन्यवर्त्तत ॥ ४१ ॥
लक्षणद्वयसंस्थानाद्रुपवन्तौ स्थितेङ्गितौ ।
साहश्याद्व्याकुलमना ब्रह्मा ध्यानमुपागमत् ॥ ४२ ॥
स तयोरन्तरं बुद्धा ब्रह्मा दिव्येन चक्षुषा ।
पद्मकेसरजं सूक्ष्मं बबन्धं कावचन्तयोः ।
आमेखलञ्च गात्रञ्च ततो मन्त्रमुदाहरत् ॥ ४३ ॥
जपतस्त्वभवत्कन्या विश्वरूपसमुत्थिता ।
पद्मेन्दुवदनप्रख्या पद्महस्ता शुभा सती ।
तां दृष्ट्वा व्यथितौ दैत्यौ भयाद्धर्षविवर्ज्जितौ ॥ ४४ ॥
ततः प्रोवाच तां कन्यां ब्रह्मा मधुरया गिरा ।
काऽस त्वमवगन्तव्या ब्रूहि सत्यमनिन्दिते ॥ ४५ ॥
साम्ना संपूज्य सा कन्या ब्रह्माणं प्राञ्जलिस्तदा ।
मोहिनीं विद्धि मां मायां विष्णोः सन्देशकारिणीं ॥ ४६ ॥
त्वया सङ्कीर्त्यमानाऽहं ब्रह्मन् प्राप्ता त्वरायुता ।
अस्याः प्रीतमना ब्रह्मा गौणं नाम चकार ह ॥ ४७ ॥
मया च व्याहृता यस्मात्त्वञ्चैव समुपस्थिता ।
महाव्याहृतिरित्येव नाम ते विचरिष्यति ॥ ४८ ॥
उत्थिता च शिरो भित्त्वा सावित्री तेन चोच्यते ।
एकानंशास्तु यस्मात्त्वमनेकांशा भविष्यसि ॥ ४९ ॥
गौणानि तावदेतानि कर्मजान्यपराणि च ।
नामानि ते भविष्यन्ति मत्प्रसादात् शुभानन ॥ ५० ॥

ततस्तौ पीड्यमानौ तु वरमेनमयाचतां ।
अनावृतं नौ मरणं पुत्रत्वञ्च भवेत्तव ॥ ५१ ॥
तथेत्युक्त्वा ततस्तूर्णमनयद्यमसादनं ।
अनयत्कैटभं विष्णुर्जिष्णुश्चाप्यनयन्मधुं ॥ ५२ ॥
एवन्तौ निहतौ दैत्यौ विष्णुना जिष्णुना सह ।
प्रीतेन ब्रह्मणा चाथ लोकानां हितकाम्यया ॥ ५३ ॥
पुत्रत्वमीशेन यथा ह्यात्मा दत्तो निबोधत ।
विष्णुना जिष्णुना सार्द्धं मधुकैटभयोस्तथा ।
सम्पराये व्यतिक्रान्ते ब्रह्मा विष्णुमभाषत ॥ ५४ ॥
अद्य वर्षशतं पूर्णं सभयः प्रत्युपस्थितः ।
संक्षेपसम्प्लवङ्घोरं स्वस्थानं यामि चाप्यहं ॥ ५५ ॥
स तस्य वचसा देवः संहारमकरोत्तदा ।
महीं निःस्थावरां कृत्वा प्रकृतिस्थांश्च जङ्गमान् ॥ ५६ ॥
यदि गोविन्द भद्रन्ते क्षिप्तस्ते यादसां पतिः ।
ब्रूहि यत् करणीयं स्यान्मया ते लक्ष्मिवर्द्धन(१) ॥ ५७ ॥
वाढं शृणु त्वं हेमाभ पद्मयोने वचो मम ।
प्रसादो यस्त्वया लब्ध ईश्वरात् पुत्रलिप्सया ॥ ५८ ॥
तत्तथा सफलं कृत्वा मत्तोऽभूदनृणो भवान् ।
चतुर्व्विधानि भूतानि सृज त्वं विसृजस्व वा(२) ॥ ५९ ॥
अवाप्य संज्ञाङ्गोविन्दात् पद्मयोनिः पितामहः ।
प्रजाः स्रष्टुमनास्तेपे तप उग्रं ततो महत् ॥ ६० ॥

---

१ प्रयोगोऽयं आर्षः ।

२ विसृजस्व चेति क० ।

तस्यैवन्तप्यमानस्य न किञ्चित्समवर्त्तत।
ततो दीर्घेण कालेन दुःखात् क्रोधो व्यवर्द्धत ॥ ६१ ॥
सक्रोधाविष्टनेत्राभ्यामपतन्नश्रुविन्दवः।
ततस्तेभ्योऽश्रुविन्दुभ्यो वातपित्तकफात्मकाः ॥ ६२ ॥
महाभागा महासत्त्वाः स्वस्तिकैरभ्यलङ्कृताः।
प्रकीर्णकेशाः सर्पास्ते प्रादुर्भूता महाविषाः ॥ ६३ ॥
सर्पांस्तथाग्रजान् दृष्ट्वा ब्रह्मात्मानमनिन्दत।
अहो धिक् तपसा मह्यं फलमीदृशकं यदि।
लोकवैनाशिकी जज्ञे आदावेव प्रजा मम ॥ ६४ ॥
तस्य तीव्राभवन्मूर्च्छा क्रोधामर्षसमुद्भवा।
मूर्च्छाभितापेन तदा जहौ प्राणान् प्रजापतिः ॥ ६५ ॥
तस्याप्रतिमवीर्य्यस्य देहात् कारुण्यपूर्व्वकं।
आत्मैकादश ते रुद्राः प्रोद्भूतारुदतस्तथा।
रोदनात् खलु रुद्रास्ते रुद्रत्वं तेन तेषु तत् ॥ ६६ ॥
ये रुद्राः खलु ते प्राणा ये प्राणास्ते तदात्मकाः।
प्राणाः प्राणभृतां ज्ञेयाः सर्व्वभूतेष्ववस्थिताः ॥ ६७ ॥
अत्युग्रस्य महत्त्वस्य साधुना चरितस्य च।
तस्य प्राणान् ददौ भूयस्त्रिशूली नीललोहितः।
ललाटात् पद्मयोनेस्तु प्रभुरेकादशात्मकः ॥ ६८ ॥
ब्रह्मणः सोऽददात् प्राणानात्मजः स तदा प्रभुः।
प्रहृष्टवदनो रुद्रः किञ्चित् प्रत्यागतासवं।
अभ्यभाषत्तदा देवो ब्रह्माणं परमं वचः ॥ ६९ ॥
उपयाचस्व मां ब्रह्मन् स्मर्त्तमर्हसि चात्मनः।

मां च वेत्थात्मजं रुद्रं प्रसादं कुरु मे प्रभो ॥ ७० ॥
श्रुत्वा त्विदं वचस्तस्य प्रभुतञ्च मनोगतं ।
पितामहः प्रसन्नात्मा नेत्रैः फुल्लाम्बुजप्रभैः ॥ ७१ ॥
ततः प्रत्यागतप्राणः स्निग्धगम्भीरया गिरा ।
उवाच भगवान् ब्रह्मा शुद्धजाम्बूनदप्रभः ॥ ७२ ॥
भो भो वद महाभाग आनन्दयसि मे मनः ।
को भवान् विश्वमूर्तिस्त्वं स्थित एकादशात्मकः ॥ ७३ ॥
एवमुक्तो भगवता ब्रह्मणाऽनन्ततेजसा ।
ततः प्रत्यवदद्रुद्रो ह्यभिवाद्यात्मजैः सह ॥ ७४ ॥
यत्ते वरमहं ब्रह्मन् याचितो विष्णुना सह ।
पुत्रो मे भव देवेति त्वत्तुल्यो वापि धूर्वहः ॥ ७५ ॥
लोकेषु विश्रुतैः कार्य्यं सर्वैर्विश्वात्मसम्भवैः ।
विषादन्त्यज देवेश लोकांस्त्वं स्रष्टुमर्हसि ॥ ७६ ॥
एवं स भगवानुक्तो ब्रह्मा प्रीतमनाभवत् ।
रुद्रं प्रत्यवदद् भूयो लोकान्ते नीललोहितं ॥ ७७ ॥
साहाय्यं मम कार्य्यार्थं प्रजाः सृज मया सह ।
बीजी त्वं सर्व्वभूतानां तत् प्रपन्नस्तथा भव ।
बाढ़मित्येव तां वाणीं प्रतिजग्राह शङ्करः ॥ ७८ ॥
ततः स भगवान् ब्रह्मा कृष्णाजिनविभूषितः ।
मनोऽग्रे सोऽसृजद्देवो भूतानां धारणां ततः ।
जिह्वां सरस्वतीञ्चैव ततस्तां विश्वरूपिणीं ॥ ७९ ॥
भृगुमङ्गिरसं दक्षं पुलस्त्यं पुलहं क्रतुं ।
वसिष्ठञ्च महातेजाः ससृजे सप्त मानसान् ॥ ८० ॥

पुत्रानात्मसमानन्यान् (१) सोऽसृजद्विश्वसम्भवान्।
तेषां भूयोऽनुमार्गेण गावो वक्त्राद्विजज्ञिरे ॥ ८१ ॥
ओंकारप्रमुखान् वेदानभिमान्याश्च देवताः।
एवमेतान् यथा प्रोक्तान् ब्रह्मा लोकपितामहः ॥ ८२ ॥
दक्षाद्यान् मानसान् पुत्रान् प्रोवाच भगवान् प्रभुः।
प्रजाः सृजत भद्रं वो रुद्रेण सह धीमता ॥ ८३ ॥
अनुगम्य महात्मानं प्रजानां पतयस्तदा।
वयमिच्छामहे देव प्रजाः स्रष्टुं त्वया सह।
ब्रह्मणस्त्वेष सन्देशस्तव चैव महेश्वर ॥ ८४ ॥
तैरेवमुक्तो भगवान् रुद्रः प्रोवाच तान् प्रभुः।
ब्रह्मणश्चात्मजा मह्यं प्राणान् गृह्य च वै सुराः ॥ ८५ ॥
कृत्वाग्रजाग्रजानेतान् ब्राह्मणानात्मजान्मम।
ब्रह्मादिस्तम्भपर्यन्तान् सप्तलोकान्ममात्मकान्।
भवन्तः स्रष्टुमर्हन्ति वचनान्मम स्वस्ति वः ॥ ८६ ॥
तेनैवमुक्ताः प्रत्यूचुः रुद्रमीशं त्रिशूलिनं।
यथाज्ञापयसे देव तथा तद्वै भविष्यति ॥ ८७ ॥
अनुमान्य महादेवं प्रजानां पतयस्तदा।
ऊचुर्दक्षं महात्मानं भवान् श्रेष्ठः प्रजापतिः।
त्वां पुरस्कृत्य भद्रन्ते प्रजाः स्रक्ष्यामहे वयं ॥ ८८ ॥
एवमस्त्विति वै दक्षः प्रत्यपद्यत भाषितं।
तैः सह स्रष्टुमारेभे प्रजाकामः प्रजापतिः।
सर्गस्थिते ततः स्थाणो ब्रह्मा सर्गमथासृजत् ॥ ८९ ॥

---

१ पुत्रानात्मसमानेतानिति क०।

अथास्य सप्तमेऽतीते कल्पे वै सम्बभूवतुः।
ऋभुः सनत्कुमारश्च तपोलोकनिवासिनौ।
ततो महर्षीनन्यान् स मानसानसृजत् प्रभुः ॥ ८० ॥

इति श्रीमहापुराणे वायुप्रोक्ते मधुकैटभोत्पत्तिविनाश-
वर्णनं नाम पञ्चविंशोऽध्यायः।

---

## अथ षड्विंशोऽध्यायः।

———000———

### स्वरोत्पत्तिः।

सूत उवाच। अहो विस्मयनीयानि रहस्यानि महामते।
त्वयोक्तानि यथातत्त्वं लोकानुग्रहकारणात् ॥ १ ॥
तत्र वै संशयो मह्यमववारेषु शूलिनः।
किं कारणं महादेवः कलिं प्राप्य सुदारुणं।
हित्वा युगानि पूर्व्वाणि अवतारं करोति वै ॥ २ ॥
अस्मिन्मन्वन्तरे चैव प्राप्ते वैवस्वते प्रभो।
अवतारं कथञ्चक्रे एतदिच्छामि वेदितुं ॥ ३ ॥
न तेऽस्त्यविदितं किञ्चिदिह लोके परत्र च।
भक्तानामुपदेशार्थं विनयात् पृच्छतो मम।
कथयस्व महाप्राज्ञ यदि श्राव्यं महामतं ॥ ४ ॥
लोमश उवाच(१)। एवं पृष्टोऽथ भगवान् वायुर्लोकहिते रतः।
इदमाह महातेजा वायुर्लोकनमस्कृतः ॥ ५ ॥
एतद्गुह्यतमं(२) लोके यन्मात्त्वं परिपृच्छसि।
तत्सर्व्वं शृणु गाधेय उच्यमानं यथाक्रमं ॥ ६ ॥
पुरा ह्येकार्णवे वृत्ते दिव्ये वर्षसहस्रके।

---

१ लोमहर्षण उवाचेति ङ०।

२ एतद्गुह्यतममिति घ०।

स्रष्टुकामः प्रजा ब्रह्मा चिन्तयामास दुःखितः ॥ ७ ॥
तस्य चिन्तयमानस्य प्रादुर्भूतः कुमारकः ।
दिव्यगन्धः सुधापेक्षो दिव्यां श्रुतिमुदीरयन् ॥ ८ ॥
अशब्दस्पर्शरूपान्तामगन्धां रसवर्ज्जितां ।
श्रुतिं ह्युदीरयन् देवी यामविन्दच्चतुर्म्मुखः ॥ ९ ॥
ततस्तु ध्यानसंयुक्तस्तप आस्थाय भैरवं ।
चिन्तयामास मनसा त्रितयं कोऽन्वयन्त्विति ॥ १० ॥
तस्य चिन्तयमानस्य प्रादुर्भूतं तदक्षरं ।
अशब्दस्पर्शरूपञ्च रसगन्धविवर्ज्जितं ॥ ११ ॥
अथोत्तमं स लोकेषु स्वभूर्त्तिञ्चापि पश्यति ।
ध्यायन्वै स तदा देवमथैनं पश्यते पुनः ॥ १२ ॥
तं श्वेतमथ रक्तञ्च पीतं कृष्णं तदा पुनः ।
वर्णस्थं तत्र पश्येत न स्त्री न च नपुंसकं ॥ १३ ॥
तत्सर्वं सुचिरं ज्ञात्वा चिन्तयन् हि तदक्षरं ।
तस्य चिन्तयमानस्य कण्ठादुत्तिष्ठतेऽक्षरः ॥ १४ ॥
एकमात्रो महाघोषः श्वेतवर्णः सुनिर्म्मलः ।
स ओंकारो भवेद्वेदः अक्षरं वै महेश्वरः ॥ १५ ॥
ततश्चिन्तयमानस्य त्वक्षरं वै स्वयम्भुवः ।
प्रादुर्भूतन्तु रक्तन्तु स देवः प्रथमः स्मृतः ॥ १६ ॥
ऋग्वेदं प्रथमं तस्य त्वग्निमीले पुरोहितं ।
एतां दृष्ट्वा ऋचं ब्रह्मा चिन्तयामास वै पुनः ।
तदक्षरं महातेजाः किमेतदिति लोककृत् ॥ १७ ॥
तस्य चिन्तयमानस्य तस्मिन्नथ महेश्वरः ।

द्विमात्रमक्षरं जज्ञे दृश्यित्वेन द्विमात्रिकं ॥ १८ ॥
ततः पुनर्द्विमात्रन्तु चिन्तयामास चाक्षरं ।
प्रादुर्भूतश्च रक्तान्तत् छेदने गृह्य सा यजुः ॥ १९ ॥
इषे त्वोर्ज्जेत्वा वायवः स्थ देवो वः सविता पुनः ।
ऋग्वेद एकमात्रस्तु द्विमात्रन्तु यजुः स्मृतं ॥ २० ॥
ततो वेदं द्विमात्रन्तु दृष्ट्वा चैव तदक्षरं ।
द्विमात्रं चिन्तयन् ब्रह्मा त्वक्षरं पुनरीश्वरः ॥ २१ ॥
तस्य चिन्तयमानस्य चोङ्कारः सम्बभूव ह ।
ततस्तदक्षरं ब्रह्मा ओंकारं समचिन्तयत् ॥ २२ ॥
अथापश्यत्ततः पीतामृचश्चैव समुत्थिताम् ।
अग्न आयाहि वीतये गृणानो हव्यदातये ॥ २३ ॥
ततस्तु स महातेजा दृष्ट्वा वेदानुपस्थितान् ।
चिन्तयित्वा च भगवांस्त्रिसन्ध्यं यत्त्रिरक्षरं ।
त्रिवर्णं यत् त्रिषवणमोङ्कारं ब्रह्मसञ्ज्ञितं ॥ २४ ॥
ततश्चैव त्रिसंयोगात् त्रिवर्णन्तु तदक्षरं ।
लक्ष्यालक्ष्यप्रदृश्यश्च सहितं त्रिदिवं त्रिकं ॥ २५ ॥
त्रिमात्रन्त्रिपदश्चैव त्रियोगश्चैव शाश्वतं ।
तस्मात्तदक्षरं ब्रह्मा चिन्तयामास वै प्रभुः ॥ २६ ॥
तस्मात्तदक्षरं सोऽथ ब्रह्म रूपं स्वयम्भुवः ।
चतुर्द्दशमुखं देवं पश्यते दीप्ततेजसं ।
तमोंकारं स ज्ञात्वादौ विज्ञेयः स स्वयम्भुवः ॥ २७ ॥
चतुर्मुखमुखात्तस्मादजायन्त चतुर्द्दश ।
नानावर्णाः स्वरा दिव्यमाद्यन्तश्च तदक्षरं ।

तस्मात् त्रिषष्टिवर्णा वै अकारप्रभवाः स्मृताः ॥ २८ ॥
ततः साधारणार्थाय वर्णानान्तु स्वयम्भुवः ।
अकाररूप आदौ तु स्थितः स प्रथमः स्वरः ॥ २६ ॥
ततस्तेभ्यः स्वरेभ्यस्तु चतुर्द्दश महामुखाः ।
मनवः सम्प्रसूयन्ते दिव्या मन्वन्तरे स्वराः ॥ ३० ॥
चतुर्द्दशमुखो यश्च अकारो ब्रह्मसंज्ञितः ।
ब्रह्मकल्पः समाख्यातः सर्ववर्णः प्रजापतिः ॥ ३१ ॥
मुखात्तु प्रथमात्तस्य मनुः स्वायम्भुवः स्मृतः ।
अकारस्तु स विज्ञेयः श्वेतवर्णः स्वयम्भुवः ॥ ३२ ॥
द्वितीयात्तु मुखात्तस्य आकारो वै मुखः स्मृतः ।
नाम्ना स्वारोचिषो नाम वर्णः पाण्डुर उच्यते ॥ ३३ ॥
तृतीयात्तु मुखात्तस्य इकारो यजुषां वरः ।
यजुर्मयः स चादित्यो यजुर्व्वेदो यतः स्मृतः ॥ ३४ ॥
ईकारः स मनुश्चयो रक्तवर्णः प्रतापवान् ।
ततः चत्रं प्रवर्त्तत तस्माद्रक्तस्तु चत्रियः ॥ ३५ ॥
चतुर्थात्तु मुखात्तस्य उकारः स्वर उच्यते ।
वर्णतस्तु स्मृतस्ताम्रः स मनुस्तामसः स्मृतः ॥ ३६ ॥
पञ्चमात्तु मुखात्तस्य ऊकारो नाम जायते ।
पीतको वर्णतश्चैव मनुश्चापि चरिष्णवः ॥ ३७ ॥
ततः षष्ठान्मुखात्तस्य ओंकारः कपिलः स्मृतः ।
वरिष्ठश्च ततः षष्ठो विजयः स महातपाः ॥ ३८ ॥
सप्तमात्तु मुखात्तस्य ततो वैवस्वतो मनुः ।
ऋकारश्च स्वरस्तत्र वर्णतः कृष्ण उच्यते ॥ ३८ ॥

अष्टमात्तु मुखात्तस्य ऋकारः श्यामवर्णतः।
श्यामाचरसवर्णश्च ततः सावर्णिरुच्यते॥ ४०॥
मुखात्तु नवमात्तस्य लृकारो नवमः स्मृतः।
धूम्रो वै वर्णतश्चापि धूम्रश्च मनुरुच्यते॥ ४१॥
दशमात्तु मुखात्तस्य लॄकारः प्रभुरुच्यते।
समश्चैव सवर्णश्च बभौ सावर्णिको मनुः॥ ४२॥
मुखादेकादशात्तस्य एकारो मनुरुच्यते।
पिशङ्गो वर्णतश्चैव पिशङ्गो वर्ण उच्यते॥ ४३॥
द्वादशात्तु मुखात्तस्य ऐकारो नाम उच्यते।
पिशङ्गो भस्मवर्णाभः पिशङ्गो मनुरुच्यते॥ ४४॥
त्रयोदशान्मुखात्तस्य ओकारो वर्ण उच्यते।
पञ्चवर्णसमायुक्त ओकारो वर्ण उत्तमः॥ ४५॥
चतुर्द्दशमुखात्तस्य औकारो वर्ण उच्यते।
कर्बूरो वर्णतश्चैव मनुः सावर्णिरुच्यते॥ ४६॥
इत्येते मनवश्चैव स्वरा वर्णाश्च कल्पतः।
विज्ञेया हि यथातत्त्वं स्वरतो वर्णतस्तथा॥ ४७॥
परस्परसवर्णाश्च स्वरा यस्माद् वृता हि वै।
तस्मात्तेषां सवर्णत्वादन्वयस्तु प्रकीर्तितः॥ ४८॥
सवर्णाः सदृशाश्चैव यस्माज्जातास्तु कल्पजाः।
तस्मात् प्रजानां लोकेऽस्मिन् सवर्णाः सर्वसन्धयः॥ ४९॥
भविष्यन्ति यथाशैलं वर्णाश्च न्यायतोऽर्थतः।
अभ्यासात्सन्धयश्चैव तस्माज्ज्ञेयाः स्वरा इति॥ ५०॥

इति श्रीमहापुराणे वायुप्रोक्ते स्वरोत्पत्तिर्नाम
षड्विंशोऽध्यायः।

# अथ सप्तविंशोऽध्यायः ।

———000(D)000———

महादेवतनुवर्णनं ।

ऋषय ऊचुः । अस्मिन् कल्पे त्वया चोक्तः प्रादुर्भावो महात्मनः ।
महादेवस्य रुद्रस्य साधकैर्म्मुनिभिः सह ॥ १ ॥
सूत उवाच । उत्पत्तिरादिसर्गस्य मया प्रोक्ता समासतः ।
विस्तरेणास्य वक्ष्यामि नामानि तनुभिः सह ॥ २ ॥
पत्नीषु जनयामास महादेवः सुतान् बहून् ।
(कल्पेऽष्टमे व्यतीते तु(१) यस्मिन् कल्पे तु तच्छृणु ॥ ३ ॥
कल्पादौ चात्मनस्तुल्यं सुतं प्रध्यायतः प्रभोः ।
प्रादुरासीत्ततोऽङ्केऽस्य कुमारो नीललोहितः ।
तं दध्रे सुस्वरं घोरं निर्दहन्निव तेजसा ॥ ४ ॥
दृष्ट्वा रुदन्तं सहसा कुमारं नीललोहितं ।
किं रोदिषि कुमारेति ब्रह्मा तं प्रत्यभाषत ॥ ५ ॥
सोऽब्रवीद्देहि मे नाम प्रथमं वै पितामह ।
रुद्रस्त्वं देव नाम्नासि इत्युक्तः सोऽरुदत्पुनः ॥ ६ ॥
किं रोदिषीति तं ब्रह्मा रुदन्तं पुनरब्रवीत् ।
नाम देहि द्वितीयं मे इत्युवाच स्वयम्भुवं ॥ ७ ॥
भवस्त्वं देव नाम्नासि इत्युक्तः सोऽरुदत्पुनः ।
किं रोदिषीति तं ब्रह्मा प्रत्युवाचाथ शङ्करं ॥ ८ ॥
तृतीयं देहि मे नाम इत्युक्तः प्रत्युवाच तं ।

* १ कल्पेष्वन्येष्वतीतेष्विति घ० ।

शिवस्त्वं देव नाम्नासि इत्युक्तः सोऽरुदत्पुनः ॥ ९ ॥
किं रोदिषीति तं ब्रह्मा रुदन्तं पुनरब्रवीत्।
चतुर्थं देहि मे नाम इत्युवाच स्वयम्भुवं ॥ १० ॥
पशूनां त्वं पतिर्देव इत्युक्तः सोऽरुदत्पुनः।
किं रोदिषीति तं ब्रह्मा रुदन्तं पुनरब्रवीत् ॥ ११ ॥
पञ्चमं देहि मे नाम इत्युक्तः प्रत्युवाच तं।
ईशस्त्वं देव नाम्नासि इत्युक्तः सोऽरुदत्पुनः ॥ १२ ॥
किं रोदिषीति तं ब्रह्मा रुदन्तं पुनरब्रवीत्।
षष्ठं मे नाम देहीति इत्युवाचाथ तं प्रभुं ॥ १३ ॥
भीमस्त्वं देव नाम्नासि इत्युक्तः सोऽरुदत्पुनः।
किं रोदिषीति तं ब्रह्मा रुदन्तं पुनरब्रवीत् ॥ १४ ॥
सप्तमं देहि मे नाम इत्युक्तः प्रत्युवाच तं।
उग्रस्त्वं देव नाम्नासि इत्युक्तः सोऽरुदत्पुनः ॥ १५ ॥
किं रोदिषीति तं ब्रह्मा रुदन्तं पुनरब्रवीत्।
अष्टमं देहि मे नाम त्वं विभो पुनरब्रवीत्।
महादेवस्तु नाम्नासि इत्युक्तो विरराम ह ॥ १६ ॥
लब्ध्वा नामानि चैतानि ब्रह्मणो नीललोहितः।
प्रोवाच नाम्नामेतेषां भूतानि प्रदिशेति ह ॥ १७ ॥
ततोऽभि सृष्टास्तनव एषां नाम्नां स्वयम्भुवा।
सूर्यो मही जलं वह्निर्वायुराकाशमेव च ॥ १८ ॥
दीक्षितो ब्राह्मणश्चन्द्र इत्येते ब्रह्मभातवः ।)
तेषु पूज्यश्च वन्द्यः स्याद्रुद्रस्ताम्न हिनस्ति वै ॥ १९ ॥
ततोऽब्रवीत् पुनर्ब्रह्मा तं देवं नीललोहितं।

द्वितीयं नामधेयन्ते मया प्रोक्तं भवेति यत् ।
एतस्यापो द्वितीया ते तनुर्नाम्ना भविष्यति ॥ २० ॥
इत्युक्ते यत् स्थिरं तस्य शरीरस्थं रसात्मकं ।
तद्विवेश ततस्तोयं तस्मादापो भवः स्मृतः ॥ २१ ॥
यस्माद् भवन्ति भूतानि ताभ्यस्ता भावयन्ति च ।
भवनाद्भावनाच्चैव भूतानां सम्भवः स्मृतः ॥ २२ ॥
तस्मान्मूत्रं पुरीषञ्च नाप्सु कुर्व्वीत सर्व्वदा ।
न स्नायेदप्सु नग्नश्च न निष्ठीवेत् कदाचन ॥ २३ ॥
मैथुनं नैव सेवेत शिरःस्नानञ्च वर्जयेत् ।
न प्रीतः परिचक्षीत वहन्न संस्थितोपि वा ॥ २४ ॥
मेध्यामेध्यशरीरत्वान्नैव दुष्यन्त्यापः क्वचित् ।
विवर्णरसगन्धाश्च अल्पाश्च परिवर्जयेत् ॥ २५ ॥
अपां योनिः समुद्रश्च तस्मात्तं कामयन्ति ताः ।
मेध्याश्चैवामृताश्चैव भवन्ति प्राप्य सागरम् ॥ २६ ॥
तस्मादपो न रुन्धीत समुद्रं कामयन्ति ताः ।
न हिनस्ति भवो देवः सदैवं योऽप्सु वर्त्तते ॥ २७ ॥
ततोऽब्रवीत् पुनर्ब्रह्मा तं देवं कृष्णलोहितं ।
शर्व्वस्त्वमिति यन्नाम तृतीयं समुदाहृतं ।
तस्य भूमिस्तृतीया तु तनुर्नाम्ना भवत्वियं ॥ २८ ॥
इत्युक्ते यत्स्थिरं तस्य शरीरस्यास्थिसञ्ज्ञितं ।
तद्विवेश ततो भूमिस्तस्माद्भुः शर्व्व उच्यते ॥ २९ ॥
तस्मात् कुर्व्वीत नो विद्वान् पुरीषम्मूत्रमेव वा ।
न च्छायायां न सोपाने स्वच्छायां नापि मेहयेत् ॥ ३० ॥

शिरः प्रावृत्य कुर्वीत अन्तर्धाय हणैर्महीं ।
य एवं वर्त्तते भूमौ तं शर्वो न हिनस्ति वै ॥ ३१ ॥
ततोऽब्रवीत्पुनर्ब्रह्मा तं देवं नीललोहितं ।
ईशान इति यत् प्रोक्तं चतुर्थं नाम ते मया ॥ ३२ ॥
चतुर्थस्य चतुर्थी स्याद्वायुर्नाम्ना तनुस्तव ।
इत्युक्ते यच्छरीरस्थं पञ्चधा प्राणसंज्ञितं ॥ ३३ ॥
विवेश तं तदा वायुरीशानो वायुरुच्यते ।
तस्मादेनं परिवदेद्दायतं वायुमीश्वरं ।
एवं युक्तमथेशानो नैव देवो हिनस्ति तं ॥ ३४ ॥
ततोऽब्रवीत् पुनर्ब्रह्मा तं देवं धूम्रलोहितं ।
यत्ते पशुपतीत्युक्तं मया नामेह पञ्चमं ।
पञ्चमी पञ्चमस्यैव तनुर्नाम्नाग्निरस्तु ते ॥ ३५ ॥
इत्युक्ते यच्छरीरस्थं तेजस्तस्योपसंज्ञितम् ।
विवेश तत्तदा ह्यग्निस्तस्मात्पशुपतिः पतिः(१) ॥ ३६ ॥
चन्द्रमास्तु स्मृतः सोमः तस्यात्मा ह्योषधीगणः ।
एवं यो वर्त्तते विद्वान् सदा पर्व्वणि पर्व्वणि ।
न हन्ति तं महादेव एवं वन्देत तं प्रभुं(२) ॥ ३७ ॥
गोपायति दिवादित्यः प्रजा नक्तन्तु चन्द्रमाः ।
एकरात्रे समेयातां सूर्य्याचन्द्रमसावुभौ ।
अमावास्यानिशायान्तु तस्यां युक्तः सदा वसेत् ॥ ३८ ॥
तत्रानिष्टं सर्वमिदन्तनुभिर्नामभिः सह ।

---

१ पशुपतिः स्मृत इति ख० ।
२ एवं वै देवतं प्रभुमिति ख०

एकाकी यश्चरत्येष सूर्य्योऽसौ चन्द्र उच्यते ॥ ३९ ॥
सूर्य्यस्य यत्प्रकाशेन वीक्षन्ते चक्षुषा प्रजाः ।
शुक्लात्मा संस्थितो रुद्रः पिवत्यम्भो गभस्तिभिः ॥ ४० ॥
अद्यते पीयते चैवाप्यन्नपानात्मकानि या ।
तनुरात्मभवा सा वै देहेष्वेवापचीयते ॥ ४१ ॥
यया धत्ते प्रजाः सर्व्वाः स्थिरीभूतेन चेतसा ।
पार्थिवी सा तनुस्तस्य शार्व्वी धारयति प्रजाः ॥ ४२ ॥
यावत् स्थिता शरीरेषु भूतानां प्राणवृत्तिभिः ।
वाय्वात्मिका तु ऐशानी सा प्राणाः प्राणिना सह ॥ ४३ ॥
पीताशितानि पचति भूतानां जठरेषु या ।
ततः पाशुपती तस्य पाचिका शक्तिरुच्यते ॥ ४४ ॥
यानीह सुषिराणि स्युर्देहेष्वन्तर्गतानि वै ।
वायोः सञ्चरणार्थाय सा भीमा चोच्यते तनुः ॥ ४५ ॥
वैतानदीक्षितानान्तु या स्थितिर्ब्रह्मवादिनां ।
तनुरुग्रात्मिका सा तु तेनोग्रो दीक्षितः स्मृतः ॥ ४६ ॥
यत्तु सङ्कल्पकं तस्य प्रजास्विह समं स्थितं ।
सा तनुर्म्मानसी तस्य चन्द्रमाः प्राणिषु स्थितः ॥ ४७ ॥
नवो नवो भवति हि जायमानः पुनः पुनः ।
नीयते यो यथाकामं विवुधैः पितृभिः सह ।
महादेवोऽमृतात्माऽसौ ह्यम्मयश्चन्द्रमाः स्मृतः ॥ ४८ ॥
तस्य या प्रथमा नाम्ना तनूरौद्री प्रकीर्त्तिता ।
पत्नी सुवर्चला तस्य पुत्रस्तस्याः शनैश्चरः ॥ ४९ ॥
भवस्य या द्वितीया तु तनुरापः स्मृता तु वै ।

तस्योषाच स्मृता पत्नी पुत्रश्चाप्युशनाः स्मृतः ॥ ५० ॥
शर्वस्य या तृतीया तु नाम भूमिस्तनुः स्मृता ।
पत्नी तस्य विकेशीति पुत्रश्चाङ्गारकः स्मृतः ॥ ५१ ॥
ईशानस्य चतुर्थस्य स्वर्गतस्य(१) च या तनुः ।
तस्य पत्नी शिवा नाम पुत्रश्चास्य मनोजवः ॥ ५२ ॥
नाम्ना पशुपतेर्या तु तनुरग्निर्द्विजैः स्मृता ।
तस्य पत्नी स्मृता स्वाहा स्कन्दश्चापि सुतः स्मृतः ॥ ५३ ॥
नाम्ना षष्ठस्य या भीमा तनुराकाश उच्यते ।
दिशः पत्न्यः स्मृतास्तस्य स्वर्गश्चास्य सुतः स्मृतः ॥ ५४ ॥
उग्रा तनुः सप्तमो या दीक्षितैर्ब्राह्मणैः स्मृता ।
दीक्षा पत्नी स्मृता तस्य सन्तानः पुत्र उच्यते ॥ ५५ ॥
नाम्नाऽष्टमस्य महतस्तनुर्या चन्द्रमाः स्मृतः ।
पत्नी तु रोहिणी तस्य पुत्रश्चास्य बुधः स्मृतः ॥ ५६ ॥
इत्येतास्तनवस्तस्य नामभिः परिकीर्त्तिताः ।
तास्तु वन्द्या नमस्याश्च प्रतिनाम तनूषु वै ॥ ५७ ॥
भक्तैः सूर्येऽप्सु पृथिव्यां वायुग्निव्योमदीक्षितः ।
तथा च वै चन्द्रमसि तनुभिर्नामभिः सह ।
प्रजावानेति सायुज्यमीश्वरस्य नरो हि सः ॥ ५८ ॥
इत्येतद्वो मयाख्यातं गुह्यं भीमस्य तद्यशः ।
शन्नोऽस्तु द्विपदे नित्यं शन्नोऽस्तु च चतुष्पदे ॥ ५९ ॥
एतत् प्रोक्तं निदानं वस्तनूनां नामभिः सह ।
महादेवस्य देवस्य भृगोस्तु शृणुत प्रजाः ॥ ६० ॥

इति श्रीमहापुराणे वायुप्रोक्ते महादेवतनुवर्णनं
नाम सप्तविंशोऽध्यायः ।

१ स्वर्गस्थस्येति ख० ।

# अथाष्टाविंशोऽध्यायः ।

———000@000———

ऋषिवंशानुकीर्त्तनं ।

सूत उवाच । भृगोः ख्यातिर्विजज्ञेऽथ ईश्वरौ सुखदुःखयोः ।
शुभाशुभप्रदातारौ सर्वप्राणभृतामिह ।
देवौ धाताविधातारौ मन्वन्तरविचारिणौ ॥ १ ॥
तयोर्ज्येष्ठा तु भगिनी देवी श्रीर्लोकभाविनी ।
सा तु नारायणं देवं पतिमासाद्य शोभनं ।
नारायणात्मजौ साध्वी(१) बलोत्साहौ व्यजायत ॥ २ ॥
तस्यास्तु मानसाः पुत्रा ये चान्ये दिव्यचारिणः ।
ये वहन्ति विमानानि देवानां पुण्यकर्मणां ॥ ३ ॥
द्वे तु कन्ये स्मृते भार्य्ये विधातुर्धातुरेव च ।
आयतिर्नियतिश्चैव तयोः पुत्रौ दृढ़व्रतौ ॥ ४ ॥
पाण्डुश्चैव मृकण्डुश्च ब्रह्मकोशौ सनातनौ ।
मनस्विन्यां मृकण्डोश्च मार्कण्डेयो बभूव ह ॥ ५ ॥
सुतो वेदशिरास्तस्य मूर्द्धन्यायामजायत ।
पीवर्य्यां वेदशिरसः पुत्रा वंशकराः स्मृताः ।
मार्कण्डेय इतिख्याता ऋषयो वेदपारगाः ॥ ६ ॥
पाण्डोश्च पुण्डरीकायां द्युतिमानात्मजोऽभवत् ।
उत्पन्नौ द्युतिमन्तश्च सृजवानश्च(२) तावुभौ ।

---

१ देवानिति ख० ।

२ सृजवामश्चेति ध० ।

तयोः पुत्राश्च पौत्राश्च भार्गवाणां परस्परं।
स्वायम्भुवेऽन्तरेऽतीते मरीचेः शृणुत प्रजाः॥ ७॥
पत्नी मरीचेः सम्भूतिर्विजज्ञे सात्मसम्भवं।
प्रजायते(१) पूर्णमासं कन्याश्चेमा निबोधत।
कृष्टिः पृष्टिस्त्विषा चैव तथा चापचितिः शुभा॥ ८॥
पूर्णमासः सरस्वत्यां द्वौ पुत्रावुदपादयत्।
विरजश्चैव धर्म्मिष्ठं पर्व्वसश्चैव तावुभौ॥ ९॥
विरजस्यात्मजो विद्वान् सुधामा नामविश्रुतः।
सुधामसुतवैराजः प्राच्यान्दिशि समाश्रितः(२)॥ १०॥
लोकपालः सुधर्म्मात्मा गौरीपुत्रः प्रतापवान्।
पर्वसः सर्वगणानाम्प्रविष्टः स महायशाः॥ ११॥
पर्वसः पर्वसायान्तु जनयामास वै सुतौ।
यज्ञवामश्च श्रीमन्तं सुतं काश्यपमेव च।
तयोर्गोत्रकरौ पुत्रौ तौ जातौ धर्म्मनिश्चितौ॥ १२॥
स्मृतिश्चाङ्गिरसः पत्नी जज्ञे तावात्मसम्भवौ।
पुत्रौ कन्याश्चतस्रश्च पुण्यास्ता लोकविश्रुताः॥ १३॥
सिनीवाली कुहुश्चैव राका चानुमतिस्तथा।
तथैव भरताग्निञ्च कीर्त्तिमन्तञ्च तावुभौ॥ १४॥
अग्नेः पुत्रन्तु पर्जन्यं संहतौ सुषुवे प्रभुं।
हिरण्यरोमा पर्जन्यो मारीच्यामुदपादयत्।
आभूतसंप्लवस्थायी लोकपालः स वै स्मृतः॥ १५॥

१ प्रजायत इत्यनिजन्तपाठो न समीचीनः।

२ सदा स्थित इति ख०।

जज्ञे कीर्त्तिमतश्चापि धेनुका तावकल्मषौ ।
वरिष्ठं धृतिमन्तञ्चाप्युभावङ्गिरसां वरौ ॥ १६ ॥
तयोः पुत्राश्च पौत्राश्च येऽतीता वै सहस्रशः ।
अनसूयापि जज्ञे तान् पञ्चात्रेयानकल्मषान् ॥ १७ ॥
कन्याञ्चैव श्रुतिं नाम माता शङ्खपदस्य या ।
कर्दमस्य तु या पत्नी पुलहस्य प्रजापतेः ॥ १८ ॥
सत्यनेत्रश्च हव्यश्च आपो मूर्त्तिः शनीश्वरः(१) ।
सोमश्च पञ्चमस्तेषामासीत् स्वायम्भुवेऽन्तरे ।
यामेऽतीते सहातीताः पञ्चात्रेयाः प्रकीर्त्तिताः ॥ १९ ॥
तेषां पुत्राश्च पौत्राश्च ह्यत्रिणा वै महात्मना ।
स्वायम्भुवेऽन्तरे यामे शतशोऽथ सहस्रशः ॥ २० ॥
प्रीत्यां पुलस्त्यभार्य्यायां दत्तालिस्तत् सुतोऽभवत् ।
पूर्वजन्मनि सोऽगस्त्यः स्मृतः स्वायम्भुवेऽन्तरे ।
मध्यमो देववाहुश्च विनीतो नाम ते त्रयः ॥ २१ ॥
स्वसा यवीयसी तेषां सद्वती नाम विश्रुता ।
पर्जन्यजननी शुभ्रा पत्नी त्वग्नेः स्मृता शुभा ॥ २२ ॥
पौलस्त्यस्य ऋषेश्चापि प्रीतिपुत्रस्य धीमतः ।
दत्तालेः सुषुवे पत्नी सुजङ्घादीन् वहून् सुतान् ।
पौलस्त्या इति विख्याताः स्मृताः स्वायम्भुवेऽन्तरे ॥ २३ ॥
क्षमा तु सुषुवे पुत्रान् पुलहस्य प्रजापतेः ।
ते चाग्निवर्चसः सर्वे येषां कीर्त्तिः प्रतिष्ठिता ॥ २४ ॥
कर्दमश्चाम्बरीषश्च सहिष्णुश्चेति ते त्रयः ।

---

१ शनैश्चर इति ख० ।

ऋषिर्धनकपीवांश्च शुभा कन्या च पीवरी ॥ २५ ॥
कर्दमस्य श्रुतिः पत्नी आत्रेय्यजनयत्सुतान् ।
पुत्रं शङ्खपदञ्चैव कन्यां काम्यां तथैव च ॥ २६ ॥
स वै शङ्खपदः श्रीमान् लोकपालः प्रजापतिः ।
दक्षिणस्यां दिशि रतः काम्यां दत्वा प्रियव्रते ॥ २७ ॥
काम्या प्रियव्रताल्लेभे स्वायम्भुवसमान् सुतान् ।
दशकन्याद्वयञ्चैव यैः क्षत्रं सम्प्रवर्त्तितं ॥ २८ ॥
पुत्रो धनकपीवांश्च(१) सहिष्णुर्नामविश्रुतः ।
यशोधारी विजज्ञे वै कामदेवः सुमध्यमः ॥ २९ ॥
ऋतोः क्रतुसमः पुत्रो विजज्ञे सन्ततिः शुभा ।
नेषां भार्य्यास्ति पुत्रो वा सर्व्वे ते ह्यूर्द्ध्वरेतसः ।
षष्टि तानि सहस्राणि बालखिल्या इतिश्रुताः ॥ ३० ॥
अरुणस्याग्रतो यान्ति परिवार्य्य दिवाकरं ।
आभूतसंप्लवात्सर्व्वे पतङ्गसहचारिणः ॥ ३१ ॥
स्वसारौ तु यवीयस्यौ पुण्यात्मसुमती च ते ।
पर्व्वसस्य स्नुषे ते वै पूर्णमाससुतस्य वै ॥ ३२ ॥
ऊर्जायान्तु वसिष्ठस्य पुत्रा वै सप्त जज्ञिरे ।
ज्यायसी च स्वसा तेषां पुण्डरीका सुमध्यमा ॥ ३३ ॥
जननी सा द्युतिमतः पाण्डोस्तु महिषी प्रिया ।
अस्यां त्विमे यवीयांसो वासिष्ठाः सप्त विश्रुताः ॥ ३४ ॥
रजःपुत्रोऽर्द्धबाहुश्च सवनश्चाधनश्च यः ।
सुतपाः शुक्र इत्येते सर्व्वे सप्तर्षयः स्मृताः ॥ ३५ ॥

१ धनकपीन्द्रश्चेति घ०, ङ० च ।

रजसो वाप्यऽजनयन्मार्कण्डेयी यशस्विनी ।
प्रतीच्यां दिशि राजन्यं केतुमन्तं प्रजापतिं ॥ ३६ ॥
गोत्राणि नामभिस्तेषां वासिष्ठानां महात्मनां ।
स्वायम्भुवेन्तरेऽतीतास्त्वग्नेस्तु शृणुत प्रजाः ॥ ३७ ॥
इत्येष ऋषिसर्गस्तु सानुबन्धः प्रकीर्त्तितः ।
विस्तरेणानुपूर्व्या चाप्यग्नेस्तु शृणुत प्रजाः ॥ ३८ ॥

इति श्रीमहापुराणे वायुप्रोक्ते ऋषिवंशानुकीर्त्तनं
नामाष्टाविंशोऽध्यायः ।

---

# अथोनत्रिंशोऽध्यायः ।

———oo0oo———

## अग्निवंशवर्णनं ।

योऽसावग्निरभिमानी ह्यासीत् स्वायम्भुवेऽन्तरे ।
ब्रह्मणो मानसः पुत्रस्तस्मात्स्वाहा व्यजायत ॥ १ ॥
पावकः पवमानश्च पावमानश्च यः स्मृतः ।
शुचिः शौरस्तु विज्ञेयः स्वाहापुत्रास्त्रयस्तु ते ॥ २ ॥
निर्मथ्य पवमानस्तु शुचिः शौरस्तु यः स्मृतः ।
पावका वैद्युताश्चैव तेषां स्थानानि यानि वै ॥ ३ ॥
पवमानात्मजश्चैव कव्यवाहन उच्यते ।
पावकात् सहरक्षस्तु हव्यवाहः शुचेः सुतः ॥ ४ ॥
देवानां हव्यवाहोऽग्निः पितॄणां कव्यवाहनः ।
सहरक्षोऽसुराणान्तु त्रयाणान्तु त्रयोऽग्नयः ॥ ५ ॥
एतेषां पुत्रपौत्रास्तु चत्वारिंशन्नवैव तु ।
वक्ष्यामि नामतस्तेषां प्रविभागं पृथक् पृथक् ॥ ६ ॥
वैद्युतो लौकिकाग्निस्तु प्रथमो ब्रह्मणः सुतः ।
ब्रह्मौदनाग्निस्तत् पुत्रो भरतो नाम विश्रुतः ॥ ७ ॥
वैश्वानरमुखस्तस्य महः काव्यो ह्यपां रसः(१) ।
अमृतोऽथर्वणा पूर्वं मथितः पुष्करोदधौ ।
सोऽथर्वा लौकिकाग्निस्तु दध्यङ्गोऽथर्वणः सुतः ॥ ८ ॥

---

१ मपारस इति ग० ।

अथर्वा तु भृगुर्ज्ञेयोऽप्यङ्गिराऽथर्वणः सुतः ।
तस्मात् स लौकिकाग्निस्तु दध्यङ्गोऽथर्वणः सुतः ॥ ९ ॥
अथ यः पवमानोऽग्निर्निर्मन्थ्यः कविभिः स्मृतः ।
स ज्ञेयो गार्हपत्योऽग्निस्ततः पुत्रद्वयं स्मृतं ॥ १० ॥
शंस्यस्त्वाहवनीयोऽग्निर्यः स्मृतो हव्यवाहनः ।
द्वितीयस्तु सुतः प्रोक्तः शुक्रोऽग्निर्यः प्रणीयते ॥ ११ ॥
तथा(१) सभ्यावसथ्यौ वै शंस्यस्याग्नेः सुतावुभौ ।
शंस्यास्तु षोड़शनदीश्चकमे हव्यवाहनः ।
योऽसावाहवनीयोऽग्निरभिमानी द्विजैः स्मृतः ॥ १२ ॥
कावेरीं कृष्णवेणीञ्च नर्मदां यमुनान्तथा ।
गोदावरीं वितस्ताञ्च चन्द्रभागामिरावतीं ॥ १३ ॥
विपाशाङ्कौशिकीञ्चैव शतद्रुं सरयून्तथा ।
सीतां सरस्वतीञ्चैव ह्रादिनीं पावनीं तथा ॥ १४ ॥
तासु षोड़शधात्मानं प्रविभज्य पृथक् पृथक् ।
आत्मानं व्यदधात्तासु धिष्णीष्वथ बभूव सः ॥ १५ ॥
धिष्णयो द्व्यभिचारिण्यस्तासूत्पन्नास्तु धिष्णयः ।
धिष्णीषु यज्ञिरे यस्माद्धिष्णयस्तेन कीर्त्तिताः ॥ १६ ॥
इत्येते वै नदीपुत्रा धिष्णीष्वेव विजज्ञिरे ।
तेषां विहरणीया ये उपस्थेयाश्च येऽग्नयः ।
तान् शृणुध्वं समासेन कीर्त्त्यमानान् यथा तथा ॥ १७ ॥
ऋतुः प्रवाहणोऽग्नीध्रः पुरस्ताद्धिष्णयोऽपरे ।
विधीयन्ते यथास्थानं सौत्येऽह्नि सवनक्रमात् ॥ १८ ॥

१ यथेति ङ० ।

अनिर्देश्याव्यवाच्यानामग्नीनां शृणुत क्रमं ।
सम्राडग्निः कृशानुर्यो द्वितीयोत्तरवेदिकः ॥ १९ ॥
सम्राड़ग्निः स्मृता ह्यष्टौ उपतिष्ठन्ति तान् द्विजाः ।
अधस्तात्पर्षदग्निस्तु द्वितीयः सोऽत्र दृश्यते ॥ २० ॥
प्रतद्वोचे नभो नाम चत्वारि स विभाव्यते ।
ब्रह्मज्योतिर्वसुर्नाम ब्रह्मस्थाने स उच्यते ॥ २१ ॥
हव्यसूर्य्याद्यसंसृष्टः शामित्रे स विभाव्यते ।
विश्वस्याथ समुद्रोऽग्निर्ब्रह्मस्थाने स कीर्त्यते ॥ २२ ॥
ऋतुधामा च सुज्योतिरौदुम्बर्य्यां स कीर्त्यते ।
ब्रह्मज्योतिर्वसुर्नाम ब्रह्मस्थाने स उच्यते ॥ २३ ॥
अजैकपादुपस्थेयः स वै शालामुखीयकः ।
अनुद्देश्योऽप्यहिर्बुध्नः(१) सोऽग्निर्गृहपतिः स्मृतः ॥ २४ ॥
शंस्यस्यैव सुताः सर्व्वे उपस्थेयाः द्विजैः स्मृताः ।
ततो विहरणीयांश्च वक्ष्याम्यष्टौ तु तत्सुतान् ॥ २५ ॥
क्रतुप्रवाहनोऽग्नीध्रस्तत्रस्था धिष्ण्योऽपरे ।
विक्रयन्ते यथास्थानं सौत्येऽह्नि सवनक्रमात् ॥ २६ ॥
पौत्रेयस्तु ततो ह्यग्निः स्मृतो यो हव्यवाहनः ।
शान्तिश्चाग्निः प्रचेतास्तु द्वितीयः सत्य उच्यते(२) ॥ २७ ॥
तथाग्निर्विश्वदेवस्तु ब्रह्मस्थाने स उच्यते ।
अवचुरच्छावाकस्तु भुवः स्थाने विभाव्यते ॥ २८ ॥
उशीरग्निः सवीर्यस्तु नेष्टीयः संविभाव्यते ।

१ अनिर्द्देश्योऽप्यहिर्बुध्न इति ख० ।
२ साम्य उच्यत इति ख० । शंस्य उच्यत इति ङ० ।

अष्टमस्तु व्यरत्तिस्तु मार्जालीयः प्रकीर्तितः ॥ २९ ॥
धिष्ण्या विहरणीया ये सौम्येनान्येन चैव हि ।
तयोर्यः पावको नाम स चापां गर्भ उच्यते ॥ ३० ॥
अग्निः सोऽवभृथो ज्ञेयः सम्यक् प्राप्याप्सु हूयते ।
हृच्छयस्तत्सुतो ह्यग्निर्जठरे यो नृणां स्थितः ॥ ३१ ॥
मन्युमान् जाठरस्याग्नेर्विद्वानग्निः सुतः स्मृतः ।
परस्परोच्छ्रितः सोऽग्निर्भूतानां ह विभुर्महान् ॥ ३२ ॥
पुत्रः सोऽग्नेर्मन्युमतो घोरः संवर्त्तकः स्मृतः ।
पिबन्नपः स वसति समुद्रे वड़वामुखः ॥ ३३ ॥
समुद्रवासिनः पुत्रः सहरक्षो विभाव्यते ।
सहरक्षसुतः क्षामो गृहाणि स दहन्नृणां ॥ ३४ ॥
क्रव्यादोऽग्निः सुतस्तस्य पुरुषानत्ति यो मृतान् ।
इत्येते पावकस्याग्नेः पुत्रा ह्येवं प्रकीर्त्तिताः ॥ ३५ ॥
ततः शुचेस्तु यैः सौरैर्गन्धर्वैरसुराहृतैः ।
मथितो यस्त्वरण्यां वै सोऽग्निरग्निः समिध्यते ॥ ३६ ॥
आयुर्नामाथ भगवान् पशौ यस्तु प्रणीयते ।
आयुषो महिमान् पुत्रः सगावान्नामतः सुतः(१) ॥ ३७ ॥
पाकयज्ञेष्वभिमानी सोऽग्निस्तु सवनः स्मृतः ।
पुत्रश्च सवनस्याग्नेरद्भुतः स महायशाः ॥ ३८ ॥
विविचिस्त्वद्भुतस्यापि पुत्रोऽग्नेः स महान् स्मृतः ।
प्रायश्चित्तेऽथ भीमानां हुतं भुङ्क्ते हविः सदा ॥ ३९ ॥

---

१ स समक्नामतः श्रुत इति ख० ।

विविचेस्तु सुतो ह्यर्को योऽग्निस्तस्य सुतास्त्विमे ।
अनीकवान् वास्तजवांश्च रक्षोहा पितृकृत्तथा ।
सुरभिर्वसुरन्नादौ प्रविष्टो यश्च रुक्मवान् ॥ ४० ॥
शुचेरग्नेः प्रजा ह्येषा वह्नयस्तु चतुर्दश ।
इत्येते वह्नयः प्रोक्ताः प्रणीयन्तेऽध्वरेषु ये ॥ ४१ ॥
आदिसर्गे ह्यतीता वै यामैः सह सुरोत्तमैः ।
स्वायम्भुवेऽन्तरे पूर्वमग्नयस्तेऽभिमानिनः ॥ ४२ ॥
एते विहरणीयास्तु चेतनाचेतनेष्विह ।
स्थानाभिमानिनो लोके प्रागासन् हव्यवाहनाः ॥ ४३ ॥
काम्यनैमित्तिकाजस्रेष्वेते कर्मस्ववस्थिताः ।
पूर्वमन्वन्तरेऽतीते शुक्रैर्यामैः सुतैः सह ।
देवैर्महात्मभिः पुण्यैः प्रथमस्यान्तरे मनोः ॥ ४४ ॥
इत्येतानि मयोक्तानि स्थानानि स्थानिनश्च ह ।
तैरेव तु प्रसंख्यातमतीतानागतेष्वपि ॥ ४५ ॥
मन्वन्तरेषु सर्व्वेषु लक्षणं जातवेदसां ।
सर्व्वे तपस्विनो ह्येते सर्व्वे ह्यवभृथास्तथा ।
प्रजानां पतयः सर्व्वे ज्योतिष्मन्तश्च ते स्मृताः ॥ ४६ ॥
स्वारोचिषादिषु ज्ञेयाः सावर्ण्यन्तेषु सप्तसु ।
मन्वन्तरेषु सर्वेषु नानारूपप्रयोजनैः ॥ ४७ ॥
वर्त्तन्ते वर्त्तमानैश्च देवैरिह सहाग्नयः ।
अनागतैः सुरैः सार्द्धं वर्त्तन्तेऽनागताग्नयः ॥ ४८ ॥

इत्येष विनयोऽग्नीनां मया प्रोक्तो यथातथं ।
विस्तरेणानुपूर्व्व्या च पितृणां वक्ष्यते ततः ॥ ४८ ॥

इति श्रीमहापुराणे वायुप्रोक्ते अग्निवंशवर्णनं
नामोनत्रिंशोऽध्यायः ।

---

## अथ त्रिंशोऽध्यायः।

———000———

दक्षशापवर्णनं।

सूत उवाच। ब्रह्मणः सृजतः पुत्रान् पूर्वं स्वायम्भुवेऽन्तरे।
अम्भांसि जज्ञिरे तानि मनुष्यासुरदेवताः॥ १॥
पितृवन्मन्यमानस्य जज्ञिरे पितरोऽस्य वै।
तेषान्निसर्गः प्रागुक्तो विस्तरस्तस्य वक्ष्यते॥ २॥
देवासुरमनुष्याणां दृष्ट्वा देवोऽभ्यभाषत।
पितृवन्मन्यमानस्य जज्ञिरे वोपपक्षिताः॥ ३॥
मध्वादयः षड़ृतवस्तान् पितॄन् परिचक्षते।
ऋतवः पितरो देवा इत्येषा वैदिकी श्रुतिः(१)॥ ४॥
मन्वन्तरेषु सर्वेषु ह्यतीतानागतेष्वपि।
एते स्वायम्भुवे पूर्वमुत्पन्ना ह्यन्तरे शुभे॥ ५॥
अग्निष्वात्ताः स्मृता नाम्ना तथा बर्हिषदश्च वै।
अयज्वानस्तथातेषामासन् वै गृहमेधिनः।
अग्निष्वात्ताः स्मृतास्ते वै पितरोऽनाहिताग्नयः॥ ६॥
यज्वानस्तेषु ये ह्यासन् पितरः सोमपीथिनः।
स्मृता बर्हिषदस्ते वै पितरस्त्वग्निहोत्रिणः।
ऋतवः पितरो देवाः शास्त्रेऽस्मिन्निश्चयो मतः॥ ७॥

---

१ स्मृतिरिति क०, घ० च

मधुमाधवौ रसौ ज्ञेयौ शुचिशुक्रौ तु शुष्मिणौ ।
नभश्चैव नभस्यश्च जीवावेतावुदाहृतौ ॥ ८ ॥
इषश्चैव तथोर्जश्च सुधावन्तावुदाहृतौ ।
सहश्चैव सहस्यश्च मन्युमन्तौ तु तौ स्मृतौ ।
तपश्चैव तपस्यश्च घोरावेतौ तु शैशिरौ ॥ ९ ॥
कालावस्थास्तु षट् तेषाम्मासाख्या वै व्यवस्थिताः ।
त इमे ऋतवः प्रोक्तास्चेतनाचेतनास्तु वै ॥ १० ॥
ऋतवो ब्रह्मणः पुत्रा विज्ञेयास्तेऽभिमानिनः ।
मासार्द्धमासस्थानेषु स्थानञ्च ऋतवोर्त्तवाः(१) ॥ ११ ॥
स्थानानां व्यतिरेकेण ज्ञेयाः स्थानाभिमानिनः ।
अहोरात्रञ्च मासाश्च ऋतवश्चायनानि च ॥ १२ ॥
संवत्सराश्च स्थानानि कालावस्थाभिमानिनः ।
निमेषाश्च कलाः काष्ठा मुहूर्त्ता वै दिनक्षपाः ॥ १३ ॥
एतेषु स्थानिनो ये तु कालावस्थास्ववस्थिताः ।
तन्मयत्वात्तदात्मानस्तान् वक्ष्यामि निबोधत ॥ १४ ॥
पर्व्वण्यास्तिथयः सन्ध्या पक्षा मासार्द्धसंज्ञिताः ।
द्वावर्द्धमासौ मासस्तु द्वौ मासावृतुरुच्यते ॥ १५ ॥
ऋतुत्रयञ्चाप्ययनं द्वेऽयने दक्षिणोत्तरे ।
संवत्सरः सुमेकस्तु स्थानान्येतानि स्थानिनां ॥ १६ ॥
ऋतवः सुमेकपुत्रा विज्ञेया ह्यष्टधा तु षट् ।
ऋतुपुत्राः स्मृताः पञ्च प्रजास्त्वार्त्तवलक्षणाः ॥ १७ ॥

---

१ आर्त्तवा इत्यर्थं प्रयोग आर्षः ।

यस्माच्चैवार्त्तवेयास्तु जायन्ते स्थाणुजङ्गमाः ।
आर्त्तवाः पितरश्चैव ऋतवश्च पितामहाः ॥ १८ ॥
सुमेकात्तु प्रसूयन्ते म्रियन्ते च प्रजातयः ।
तस्मात् स्मृतः प्राजानां वै सुमेकः प्रपितामहः ॥ १९ ॥
स्थानेषु स्थानिनो ह्येते स्थानात्मानः प्रकीर्त्तिताः ।
तदाख्यास्तन्मयत्वाच्च तदात्मानश्च ते स्मृताः ॥ २० ॥
प्रजापतिः स्मृतो यस्तु स तु संवत्सरो मतः ।
संवत्सरः स्मृतो ह्यग्निः ऋतमित्युच्यते द्विजैः ॥ २१ ॥
ऋतात्तु ऋतवो यस्मात् जज्ञिरे ऋतवस्ततः ।
मासाः षट् ऋतवो ज्ञेयास्तेषां पञ्चार्त्तवाः सुताः ॥ २२ ॥
द्विपदाश्चतुष्पदाश्चैव पक्षिसंसर्पतामपि ।
स्थावराणाञ्च पञ्चानां पुष्पं कालार्त्तवं स्मृतं ॥ २३ ॥
ऋतुत्वमार्त्तवत्वञ्च पितृत्वञ्च प्रकीर्त्तितं ।
इत्येते पितरो ज्ञेया ऋतवश्चार्त्तवाश्च ये ॥ २४ ॥
सर्व्वभूतानि तेभ्योऽथ ऋतुकालाद्विजज्ञिरे ।
तस्मादेतेऽपि पितर आर्त्तवा इति नः श्रुतं ॥ २५ ॥
मन्वन्तरेषु सर्व्वेषु स्थिताः कालाभिमानिनः ।
स्थानाभिमानिनो ह्येते तिष्ठन्तीह प्रसंयमात् ॥ २६ ॥
अग्निष्वात्ता वर्हिषदः पितरो द्विविधाः स्मृताः ।
जज्ञाते च पितृभ्यस्तु द्वे कन्ये लोकविश्रुते ॥ २७ ॥
मेना च धारिणी चैव याभ्यां विश्वमिदं धृतं ।
पितरस्ते निजे कन्ये धर्म्मार्थं प्रददुः शुभे ।
त उभे ब्रह्मवादिन्यौ योगिन्यौ चैव ते उभे ॥ २८ ॥

अग्निष्वात्तास्तु ये प्रोक्तास्तेषां मेना तु मानसी।
धारणी मानसी चैव कन्या बर्हिषदां स्मृता॥ २९॥
मेरोस्तु धारणीं नाम पत्न्यर्थं व्यसृजन् शुभां।
पितरस्ते बर्हिषदः स्मृता ये सोमपीथिनः॥ ३०॥
अग्निष्वात्तास्तु तां मेनां पत्नीं हिमवते ददुः।
स्मृतास्ते वै तु दौहित्रास्तद्दौहित्रान् निबोधत(१)॥ ३१॥
मेना हिमवतः पत्नी मैनाकं सान्वसूयत।
गङ्गा सरिद्वरा चैव पत्नी या लवणोदधेः।
मैनाकस्यानुजः क्रौञ्चः क्रौञ्चद्वीपो यतः स्मृतः॥ ३२॥
मेरोस्तु धारणी पत्नी दिव्यौषधिसमन्वितं।
मन्दरं सुषुवे पुत्रं तिस्रः कन्याश्च विश्रुताः॥ ३३॥
वेला च नियतिश्चैव तृतीया चायतिः पुनः।
धातुश्चैवायतिः पत्नी विधातुर्नियतिः स्मृता॥ ३४॥
स्वायम्भुवेऽन्तरे पूर्वन्तयोर्वै कीर्त्तिताः प्रजाः।
सुषुवे सागराद्वेला कन्यामेकामनिन्दितां॥ ३५॥
सावर्णिना च सामुद्री पत्नी प्राचीनबर्हिषः।
सवर्णा साथ सामुद्री दशप्राचीनबर्हिषः।
सर्व्वे प्रचेतसो नाम धनुर्वेदस्य पारगाः॥ ३६॥
तेषां स्वायम्भुवो दक्षः पुत्रत्वे जज्ञिवान् प्रभुः।
त्र्यम्बकस्याभिशापेन चाक्षुषस्यान्तरे मनोः॥ ३७॥
एतच्छ्रुत्वा ततः सूतमपृच्छच्छांशपायनः।

१ उपस्थिताः स्मृतास्ते वै तद्दौहित्रान् निबोधतेति ख०। उपक्षताः स्मृतास्तत्र तद्दौहित्रान् निबोधतेति घ०।

उत्पन्नः स कथं दक्षो ह्यभिशापाद्भवस्य तु ।
चाक्षुषस्यान्वये पूर्व्वं तन्नः प्रब्रूहि पृच्छतां ॥ ३८ ॥
इत्युक्तः कथयामास सूतो दक्षाश्रितां कथां ।
शांशपायनमामन्त्र्य त्र्यम्बकाच्छापकारणं ॥ ३९ ॥
दक्षस्यासन् सुता ह्यष्टौ कन्या याः कीर्त्तिता मया ।
स्वेभ्यो गृहेभ्यो ह्यानाय्य ताः पिताभ्यर्चयद् गृहे ।
ततस्त्वभ्यर्चिताः सर्व्वा न्यवसंस्ताः पितुर्गृहे ॥ ४० ॥
तासां ज्येष्ठा सती नाम पत्नी या त्र्यम्बकस्य वै ।
नाजुहावात्मजां तां वै दक्षो रुद्रमभिद्विषन् ॥ ४१ ॥
अकरोत्स नतिं दक्षे न कदाचिन्महेश्वरः ।
जामाता श्वशुरे तस्मिन् स्वभावात् तेजसि स्थितः ॥ ४२ ॥
ततो ज्ञात्वा सती सर्व्वाः स्वस्रः(१) प्राप्ताः पितुर्गृहं ।
जगाम साप्यनाहूता सती तत् स्वं पितुर्गृहं ॥ ४३ ॥
ततोऽब्रवीत्सा पितरं देवी क्रोधादमर्षिता ।
यवीयसीभ्यो ज्यायसीं किन्तु पूजामिमां प्रभो ।
असम्मतामवज्ञाय कृतवानसि गर्हितां ॥ ४४ ॥
अहं ज्येष्ठा वरिष्ठा हि न त्वसत्कर्त्तुमर्हसि ।
एवमुक्तोऽब्रवीदेनां दक्षः संरक्तलोचनः ॥ ४५ ॥
त्वन्तु श्रेष्ठा वरिष्ठा च पूज्या बाला सदा मम ।
तासां ये चैव भर्त्तारस्ते मे बहुमताः सदा ॥ ४६ ॥
ब्रह्मिष्ठाश्च तपिष्ठाश्च महायोगाः सुधार्म्मिकाः ।
गुणैश्चैवाधिकाः श्लाघ्याः सर्व्वे ते त्र्यम्बकात्सति ॥ ४७ ॥

१ स्वसृ इत्यर्थं प्रयोग आर्षः ।

वसिष्ठोऽत्रिः पुलस्त्यश्च अङ्गिराः पुलहः क्रतुः ।
भृगुर्मरीचिश्च तथा श्रेष्ठा जामातरो मम ॥ ४८ ॥
तस्यात्मा स च ते शर्व्वौ भक्ता चासि हितं सदा ।
तेन त्वां न बुभूषामि प्रतिकूलो हि मे भवः ॥ ४९ ॥
इत्युवाच तदा दक्षः संप्रमूढेन चेतसा ।
शापार्थमात्मनश्चैव ये चोक्ताः परमर्षयः ॥ ५० ॥
तथोक्ता पितरं सा वै क्रुद्धा देवीदमब्रवीत् ।
वाङ्मनःकर्मभिर्य्यस्मादुदुष्टां मां विगर्हसि ।
तस्मात्त्यजाम्यहन्देहमिदन्तात तवात्मजं ॥ ५१ ॥
ततस्तेनावमानेन सती दुःखादमर्षिता ।
अब्रवीद्वचनं देवी नमस्कृत्वा महेश्वरं ॥ ५२ ॥
यत्राहमुपपत्स्येहं पुनर्देहेन भास्वता ।
तत्राप्यहमसंमूढ़ा सम्भूता धार्म्मिकी पुनः ।
गच्छेयं धर्म्मपत्नीत्वं त्र्यम्बकस्यैव धर्म्मतः ॥ ५३ ॥
तत्रैवाथ समासीना युक्तात्मानं समादधे ।
धारयामास चाग्नेयीं धारणां मनसात्मनः ॥ ५४ ॥
तत आग्नेयीसमुत्थेन वायुना समुदीरितः ।
सर्व्वाङ्गेभ्यो विनिःसृत्य वह्निर्भस्म चकार तां ॥ ५५ ॥
तदुपश्रुत्य निधनं सत्या देवोऽथ शूलधृक्(१) ।
संवादञ्च तयोर्बुद्धा याथातथ्येन शङ्करः ।
दक्षस्याथ ऋषीणाञ्च चुकोप भगवान् प्रभुः ॥ ५६ ॥

१ शूलभृदिति घ०, ङ० च ।

यस्माद्वमता दक्ष मत्कृते नाम सा सती।
प्रशस्तास्चेतराः सर्व्वाः स्वसुताः(१) भर्त्तृभिः सह ॥ ५७ ॥
तस्माद्वैवस्वतं प्राप्य पुनरेव महर्षयः ।
उत्पत्स्यन्ते द्वितीये वै मम यज्ञे ह्ययोनिजाः ॥ ५८ ॥
हुते वै ब्रह्मणा यज्ञे चाक्षुषस्यान्तरे मनोः ।
अभिव्याहृत्य च ऋषीन् दक्षमभ्यगमत् पुनः ॥ ५९ ॥
भविता चाक्षुषो राजा चाक्षुषस्य समन्वये ।
प्राचीनवर्हिषः पौत्रः पुत्रश्चैव प्रचेतसः ॥ ६० ॥
दक्ष इत्येव नाम्ना त्वं मार्षायां जनयिष्यसि ।
कन्यायां शाखिनाञ्चैव प्राप्ते वै चाक्षुषेऽन्तरे ॥ ६१ ॥
दक्ष उवाच । अहं तत्रापि ते विघ्नमाचरिष्यामि दुर्म्मते ।
धर्म्मार्थकामयुक्तेषु कर्म्मस्विह पुनः पुनः ॥ ६२ ॥
यस्मात् त्वं मत्कृते क्रूरमृषीन् व्याहृतवानसि ।
तस्मात्सार्द्धं सुरैर्यज्ञे न त्वां यक्ष्यन्ति वै द्विजाः ॥ ६३ ॥
हुत्वाहुतिं ततः क्रूर अपस्यक्ष्यन्ति(२) कर्म्मसु ।
इहैव वत्स्यसि तथा दिवं हित्वा युगक्षयात् ॥ ६४ ॥
रुद्र उवाच । सर्वेषामेव लोकानां भूर्लोकस्त्वादिरुच्यते ।
तमहं धारयिष्यामि निदेशात् परमेष्ठिनः ॥ ६५ ॥
अस्याञ्चितौ धृताः(३)लोकाः सर्व्वे तिष्ठन्ति भास्कराः(४)।
तानहं धारयामीह सततं न तवाज्ञया ॥ ६६ ॥
चातुर्व्वर्ण्यं हि देवानां ते चाप्येकत्र भुञ्जते ।

---

१ स्वसार इति घ० ।
२ आपः प्रयक्ष्यन्तीति ख०, क० च ।
३ धृता इति क० ।
४ भास्वरा इति ख० ।

नाहं तैः सह भोक्ष्यामि ततो दास्यन्ति ते पृथक् ।
ततो देवैः स तैः सार्द्धं नेज्यते पृथगिज्यते ॥ ६७ ॥
ततोऽभिव्याहृतो दक्षो रुद्रेणामिततेजसा ।
स्वायम्भुवेऽन्तरे त्यक्त्वा उत्पन्नो मानुषेष्विह ॥ ६८ ॥
ज्ञात्वा गृहपतिं दक्षं ज्ञानानामीश्वरं प्रभुं ।
दक्षो नाम महायज्ञैः सोऽयजद्दैवतैः सह ॥ ६९ ॥
अथ देवी सती या तु प्राप्ते वैवस्वतेऽन्तरे ।
मेनायां तामुमां देवीं जनयामास शैलराट् ॥ ७० ॥
सा तु देवी सती पूर्व्वं ततः पश्चादुमाऽभवत् ।
सहव्रता भवस्यैषा न तया मुच्यते भवः ।
यावदिच्छति संस्थातुं प्रभुर्मन्वन्तरेष्विह ॥ ७१ ॥
मारीचं कश्यपं देवी यथा दितिरनुव्रता ।
साध्वं नारायणं श्रीस्तु मघवन्तं शची यथा ॥ ७२ ॥
विष्णुं कीर्त्ती रुचिः सूर्य्यं वशिष्ठश्चाप्यरुन्धती
नैतास्तु विजहत्येतान् भर्तॄन् देव्यः कथचन ।
आवर्त्तमानकल्पेषु पुनर्जायन्ति तैः सह ॥ ७३ ॥
एवं प्राचेतसो दक्षो जज्ञे वै चाक्षुषेऽन्तरे ।
प्राचीनवर्हिषः पौत्रः पुत्रश्चैव प्रचेतसः ॥ ७४ ॥
दशभ्यस्तु प्रचेतोभ्यो मार्षायाश्च पुनर्नृपः ।
जज्ञे रुद्राभिशापेन द्वितीयेऽस्मिन्निति श्रुतः ॥ ७५ ॥
भृग्वादयस्तु ते सर्वे जज्ञिरे वै महर्षयः ।
आद्ये त्रेतायुगे पूर्वं मनोर्वैवस्वतस्य ह ।
देवस्य महतो यज्ञे वारुणीं बिभ्रतस्तनुं ॥ ७६ ॥

इति सानुशयोऽह्यासीत्तयोर्जात्यन्तरागतः।
प्रजापतिस्तु दक्षस्य त्र्यम्बकस्य च धीमतः॥ ७७॥
तस्मान्नानुशयः कार्य्यो वैरिष्विह कदाचन।
जात्यन्तरगतस्यापि भावितस्य शुभाशुभैः।
जन्तुं न मुञ्चति ख्यातिस्तत्र कार्य्यं विजानता॥ ७८॥
ऋषय ऊचुः। प्राचेतसस्य दक्षस्य कथं वैवस्वतेऽन्तरे।
विनाशमगमत् सूत हयमेधः प्रजापतेः॥ ७९॥
देव्या मृत्युं कृतं मत्वा क्रुद्धं सर्वात्मकं प्रभुं।
कथं प्रासादयद्दक्षः स यज्ञः साधितः कथं।
एतद्वेदितुमिच्छामस्तन्नो ब्रूहि यथातथं॥ ८०॥
सूत उवाच। पुरा मेरोर्द्विजश्रेष्ठाः शृङ्गं त्रैलोक्यविश्रुतं।
ज्योतिष्कं नाम सावित्रं सर्वरत्नविभूषितं॥ ८१॥
अप्रमेयमनाधृष्यं सर्वलोकनमस्कृतं।
तस्मिन् (१) देवो गिरिश्रेष्ठे सर्वधातुविभूषिते।
पर्य्यङ्क इव विभ्राजन्नुपविष्टो बभूव ह॥ ८२॥
शैलराजसुता चास्य नित्यं पार्श्वस्थिताऽभवत्।
आदित्याश्च महात्मानो वसवश्चामितौजसः॥ ८३॥
तथैव च महात्मानावश्विनौ भिषजां वरौ।
तथा वैश्रवणो राजा गुह्यकैः परिवारितः॥ ८४॥
यक्षाणामीश्वरः श्रीमान् कैलासनिलयः प्रभुः।
उपासते महात्मानं उशनाश्च महामुनिः।
सनत्कुमारप्रमुखास्तथैव परमर्षयः॥ ८५॥

---

१ तत्रेति घ०।

अङ्गिरःप्रमुखाश्चैव तथा देवर्षयोऽपरे ।
विश्वावसुश्च गन्धर्वस्तथा नारदपर्वतौ ॥ ८६ ॥
अप्सरोगणसङ्घाश्च समाजग्मुरनेकशः ।
ववौ शिवः सुखो वायुर्नानागन्धवहः शुचिः ॥ ८७ ॥
सर्वर्त्तुकुसुमोपेताः पुष्पवन्तो द्रुमास्तथा ।
तथा विद्याधराश्चैव सिद्धाश्चैव तपोधनाः ॥ ८८ ॥
महादेवं पशुपतिं पर्य्युपासन्ति तत्र वै ।
भूतानि च तथान्यानि नानारूपधराण्यथ ॥ ८९ ॥
राक्षसाश्च महारौद्राः पिशाचाश्च महाबलाः ।
बहुरूपधरा हृष्टा नानाप्रहरणोद्यताः ॥ ९० ॥
देवस्यानुचरास्तत्र तस्थुर्वैश्वानरोपमाः ।
नन्दीश्वरश्च भगवान् देवस्यानुमते स्थितः ॥ ९१ ॥
प्रगृह्य ज्वलितं शूलं दीप्यमानं स्वतेजसा ।
गङ्गा च सरितां श्रेष्ठा सर्वतीर्थजलोद्भवा ।
पर्य्युपासत तन्देवरूपिणी द्विजसत्तमाः ॥ ९२ ॥
एवं स भगवांस्तत्र दीप्यमानः सुरर्षिभिः ।
देवैश्च सुमहाभागैर्महादेवो व्यवस्थितः ॥ ९३ ॥
पुरा हिमवतः पृष्ठे दक्षो वै यज्ञमारभत् ।
गङ्गाद्वारे शुभे देशे ऋषिसिद्धनिषेविते ॥ ९४ ॥
ततस्तस्य मखे देवाः शतक्रतुपुरोगमाः ।
गमनाय समागम्य बुद्धिमापेदिरे तदा ॥ ९५ ॥
स्वैर्विमानैर्महात्मानो ज्वलद्भिर्ज्वलनप्रभाः ।
देवस्यानुमतेऽगच्छन् गङ्गाद्वार इति श्रुतिः ॥ ९६ ॥

गन्धर्वाप्सरसाकीर्णं नानाद्रुमलतावृतं ।
ऋषिसङ्घैः परिवृतं दक्षं धर्म्मभृतां वरं ॥ ९७ ॥
पृथिव्यामन्तरीक्षे वा ये च स्वर्लोकवासिनः ।
सर्वे प्राञ्जलयो भूत्वा उपतस्थुः प्रजापतिं ॥ ९८ ॥
आदित्या वसवो रुद्राः साध्याः सह मरुद्गणैः ।
जिष्णुना सहिताः सर्वे आगता यज्ञभागिनः ॥ ९९ ॥
उष्मपाः सोमपाश्चैव आज्यपा धूमपास्तथा ।
अश्विनौ पितरश्चैव आगता ब्रह्मणा सह ॥ १०० ॥
एते चान्ये च बहवो भूतग्रामास्तथैव च ।
जरायुजाण्डजाश्चैव स्वेदजोद्भिज्जकास्तथा ॥ १०१ ॥
आहूता मन्त्रतः सर्वे देवाश्च सह पत्निभिः (१) ।
विराजन्ते विमानस्था दीप्यमाना इवाग्नयः ॥ १०२ ॥
तान् दृष्ट्वा मन्युमाविष्टो दधीचो वाक्यमब्रवीत् ।
अपूज्यपूजने चैव पूज्यानां चाप्यपूजने ।
नरः पापमवाप्नोति महद्वै नात्र संशयः ॥ १०३ ॥
एवमुक्त्वा तु विप्रर्षिः पुनर्दक्षमभाषत ।
पूज्यन्तु पशुभर्त्तारं कस्मान्नाह्वयसे प्रभुं ॥ १०४ ॥
दक्ष उवाच । सन्ति मे बहवो रुद्राः शूलहस्ताः कपर्द्दिनः ।
एकादशावस्थगता नान्यं वेद्मि महेश्वरं ॥ १०५ ॥
दधीच उवाच । सर्व्वै निमन्त्रिता देवा येन ईशो निमन्त्रितः ।
यथाहं शङ्करादूर्द्ध्वं नान्यं पश्यामि दैवतं ।
तथा दक्षस्य विपुलो यज्ञोऽयं न भविष्यति ॥ १०६ ॥

---

१ यज्ञोऽयमार्ग. ।

दक्ष उवाच । एतन्मखे शूर सुवर्णपात्रे
हविः समस्तं विधिमन्त्रपूतं ।
विष्णोर्नयाम्यप्रतिमस्य सर्वं
प्रभोर्विभो ह्याहवनीय नित्यं ॥ १०७ ॥
गतास्तु देवता ज्ञात्वा शैलराजसुता तदा ।
उवाच वचनं साध्वी देवं पशुपतिं तदा(१) ॥ १०८ ॥
उमा उवाच । भगवन् क्व गता ह्येते देवाः शक्रपुरोगमाः ।
ब्रूहि तत्त्वेन तत्त्वज्ञ संशयो मे महानयं ॥ १०९ ॥
महेश्वर उवाच । दक्षो नाम महाभागो प्रजानां पतिरुत्तमः ।
हयमेधेन यजते तत्र यान्ति दिवौकसः ॥ ११० ॥
देव्युवाच । यज्ञमेतं महाभाग किमर्थं न गतोऽसि वै ।
केन वा प्रतिषेधेन गमनं प्रतिषिध्यते ॥ १११ ॥
महेश्वर उवाच । सुरैरेव महाभागे सर्व्वमेतदनुष्ठितं ।
यज्ञेषु मम सर्व्वेषु न भाग उपकल्पितः ॥ ११२ ॥
पूर्व्वोपायोपपन्नेन मार्गेण वरवर्णिनि ।
न मे सुराः प्रयच्छन्ति भागं यज्ञस्य धीमतः ॥ ११३ ॥
देव्युवाच । भगवन् सर्वदेवेषु प्रभावानधिको गुणैः ।
अजेयश्चाप्यधृष्यश्च तेजसा यशसा श्रिया ॥ ११४ ॥
अनेन तु महाभाग प्रतिषेधेन नामतः ।
अतीव दुःखमापन्ना वेपथुश्च ममानघ ॥ ११५ ॥
किं नाम दानं नियमन्तपो वा
कुर्य्यामहं येन पतिर्म्ममाद्य ।

१ प्रतिमिति घ० ।

लभेत भागं भगवानचिन्त्यो
यज्ञस्य चार्द्धमथ वा तृतीयं ॥ ११६ ॥
एवं ब्रुवाणां भगवानचिन्त्यः
पत्नीं प्रहृष्टः क्षुभितामुवाच ।
न वेत्सि देवेशि कृशोदराङ्गि
किं नाम युक्तं वचनन्तवेदं ॥ ११७ ॥
अहं हि जानामि विशालनेत्रे
ध्यानेन सर्व्वं हि वदन्ति सन्तः ।
न वाद्य मोहेन महेन्द्रदेवो
लोकत्रयं सर्व्वथा संप्रमूढं ॥ ११८ ॥
मामध्वरे शंसितारः स्तुवन्ति
रथन्तरे साम गायन्ति गेयं ।
मा ब्राह्मणा ब्रह्मसत्रे यजन्ते
माध्वर्य्यवः कल्पयन्ते च भागं ॥ ११९ ॥
देव्युवाच । अप्राकृतोऽपि भगवान् सर्व्वस्त्रीजनसंसदि ।
स्तौति गोपायते(१) वापि स्वमात्मानं न संशयः ॥ १२० ॥
भगवानुवाच । नात्मानं स्तौमि देवेशि पश्य त्वमुपगच्छ च ।
यं स्रक्ष्यामि वरारोहे भागार्थं वरवर्णिनि ॥ १२१ ॥
एवमुक्त्वा तु भगवान् पत्नीं प्राणैरपि प्रियां ।
सोऽसृजद्भगवान्वक्त्राद्भूतं क्रोधाग्निसन्निभं ॥ १२२ ॥
सहस्रशीर्षं देवञ्च सहस्रचरणेक्षणं ।
सहस्रमुद्गरधरं सहस्रशरपाणिनं ॥ १२३ ॥

१ गोपयत इति ख०, घ० च ।

शङ्खचक्रगदापाणिं दीप्तकार्मुकधारिणं ।
परश्वसिधरं देवं महारौद्रं भयावहं ॥ १२४ ॥
घोररूपेण दीप्यन्तं चन्द्रार्द्धकृतभूषणं ।
वसानं चर्म्म वैयाघ्रं महारुधिरनिस्रवं ॥ १२५ ॥
दंष्ट्राकरालं विभ्रान्तं महावक्त्रं महोदरं ।
विद्युज्जिह्वं प्रलम्बौष्ठं लम्बकर्णं(१) दुरासदं ॥ १२६ ॥
कुलिशोद्योतितकरश्चाभिज्वलितमूर्द्धजं ।
ज्वालामालापरिक्षिप्तं मुक्तादामविभूषितं ॥ १२७ ॥
तेजसा चैव दीप्यन्तं युगान्तमिव पावकं ।
आकर्णदारितास्यान्तश्चतुर्दिक्षु भयानकं(२) ॥ १२८ ॥
महाबलं महातेजं महापुरुषमीश्वरं ।
विश्वहर्त्तमहाकायं महान्यग्रोधमण्डलं ।
युगपच्चन्द्रशतवद्दीप्यन्तं मन्मथाग्निवत् ॥ १२९ ॥
चतुर्महास्यं सिततीक्ष्णदंष्ट्रं
महोग्रतेजोबलकौतुकाढ्यं ।
युगान्तसूर्य्याग्निसहस्रभासं
सहस्रचन्द्रामलकान्तिकान्तं ।
प्रदीप्तसर्व्वौषधिमन्दराभं
सुमेरुकैलासहिमाद्रितुल्यं ॥ १३० ॥
युगार्काभं महावीर्य्यञ्चारुनासं महाननं ।

---

१ लम्बकर्णमिति घ०, ङ० च ।

२ चतुर्दंष्ट्रं भयानकमिति घ०, ङ० च ।

प्रचण्डगण्डं दीप्ताक्षं(१) अग्निज्वालाविलाननं(२)॥१३१॥
मृगेन्द्रकृत्तिवसनं महाभुजगवेष्टितं।
उष्णीषिणं चन्द्रधरं क्वचिदुग्रं क्वचित्समं॥ १३२॥
नानाकुसुममूर्द्धानं नानागन्धानुलेपनं।
नानारत्नविचित्राङ्गं नानाभरणभूषितं॥ १३३॥
कर्णिकारस्रजं दीप्तं क्रोधादुद्भ्रान्तलोचनं।
क्वचिन्नृत्यति चित्राङ्गं क्वचिद्वदति सुस्वरं(३)॥ १३४॥
क्वचिद्ध्यायति युक्तात्मा क्वचित्स्थूलं प्रमार्जति।
क्वचिद्गायति विश्वात्मा क्वचिद्रौति मुहुर्मुहुः॥ १३५॥
ज्ञानं वैराग्यमैश्वर्य्यन्तपः सत्यं क्षमा धृतिः।
प्रभुत्वमात्मसम्बोधो ह्यधिष्ठानगुणैर्युतः॥ १३६॥
जानुभ्यामवनिं गत्वा प्रणतः प्राञ्जलिः स्थितः।
आज्ञापय त्वं देवेश किं कार्य्यं करवाणि ते॥ १३७॥
तमुवाचाक्षिप मखं दक्षस्येह महेश्वरः।
देवस्यानुमतिं श्रुत्वा वीरभद्रो महाबलः।
प्रणम्य शिरसा पादौ देवेशस्य उमापतेः॥ १३८॥
ततो बन्धात् प्रमुक्तेन सिंहेनेवेह लीलया।
देव्या मन्युकृतं मत्वा हतो दक्षस्य स क्रतुः॥ १३९॥
मन्युना च महाभीमा भद्रकाली महेश्वरी।
आत्मनः सर्वसाक्षित्वे तेन सार्द्धं सहानुगा॥ १४०॥

---

१ प्रचण्डमतिं दीप्ताक्षमिति क०।
२ अग्निज्वालाविलासिनमिति क०।
३ सुस्वनमिति ख०।

स एष भगवान् क्रुद्धः प्रेतावासकृतालयः।
वीरभद्र इतिख्यातो देव्या मन्युप्रमार्जकः॥ १४१ ॥
सोऽसृजद्रोमकूपेभ्यो रौद्रान्नाम गणेश्वरान्।
रुद्रानुगा महावीर्य्या रुद्रवीर्य्यपराक्रमाः॥ १४२ ॥
रुद्रस्यानुचराः सर्व्वे सर्व्वे रुद्रसमप्रभाः।
ते निपेतुस्ततस्तूर्णं शतशोऽथ सहस्रशः॥ १४३ ॥
ततः किलकिला शब्द आकाशं पूरयन्निव।
तेन शब्देन महता त्रस्ताः सर्व्वे दिवौकसः॥ १४४ ॥
पर्वताश्च व्यशीर्य्यन्त कम्पते च वसुन्धरा।
मेरुश्च घूर्णते विप्राः क्षुभ्यन्ते वरुणालयाः॥ १४५ ॥
अग्नयो नैव दीप्यन्ते न च दीप्यति भास्करः।
ग्रहा नैव प्रकाशन्ते नक्षत्राणि न तारकाः॥ १४६ ॥
ऋषयो नाभ्यभाषन्त न देवा न च दानवाः।
एवं हि तिमिरीभूतं निर्द्दहन्ति विमानिताः॥ १४७ ॥
सिंहनादं प्रमुञ्चन्ते घोररूपा महाबलाः।
प्रभञ्जन्ते परे घोरा यूपानुत्पाटयन्ति च॥ १४८ ॥
प्रमर्द्दन्ति तथा चान्ये विनृत्यन्ति तथाऽपरे।
आधावन्ति प्रधावन्ति वायुवेगा मनोजवाः॥ १४९ ॥
चूर्णन्ते यज्ञपात्राणि यागस्यायतनानि च।
शीर्य्यमाणानि दृश्यन्ते तारा इव नभस्तलात्॥ १५० ॥
दिव्यान्नपानभक्ष्याणां राशयः पर्वतोपमाः।
क्षीरनद्यस्तथा चान्या घृतपायसकर्द्दमाः।
मधुमण्डोदका दिव्याः खण्डशर्करवालुकाः॥ १५१ ॥

घृतसाविवहन्त्यन्या गुड़कुल्या मनोरमाः ।
उच्चावचानि मांसानि भक्ष्याणि विविधानि च ॥ १५२ ॥
यानि कानि च दिव्यानि लेह्यचोष्यं तथाऽपरे ।
भुञ्जते विविधैर्वक्त्रैर्विलुण्ठन्ति च सर्वशः ।
क्रीड़न्ति विविधाकाराश्चिक्षिपुः सुरयोषितः ॥ १५३ ॥
रुद्रकोपप्रयुक्तास्तु सर्वदेवैः सुरक्षितं ।
तं यज्ञमहनन् शीघ्रं रुद्रकन्याः समीपतः ॥ १५४ ॥
चक्रुरन्ये तथा नादान् सर्वभूतभयङ्करान् ।
छित्त्वा शिरोऽन्ये यज्ञस्य विनदन्ति भयङ्कराः ॥ १५५ ॥
दक्षो दक्षपतिश्चैव देवो यज्ञपतिस्तथा ।
मृगरूपेण चाकाशे प्रपलायितुमारभत् ॥ १५६ ॥
वीरभद्रोऽप्रमेयात्मा ज्ञात्वा तस्य बलन्तदा ।
अन्तरीक्षगतस्याशु चिच्छेदास्य शिरो महान् ॥ १५७ ॥
दक्षः प्रजापतिश्चैव विनष्टः भ्रान्तचेतनः ।
क्रुद्धेन वीरभद्रेण शिरः पादेन पीड़ितः ।
जराभिभूततीव्रात्मा निपपात महीतले ॥ १५८ ॥
त्रयस्त्रिंशद्देवतानां ताः कोट्यो विमलात्मकाः ।
पाशेनाग्निबलेनाशु बद्धाः सिंहबलेन च ॥ १५९ ॥
ततो जग्मुर्महात्मानं सर्वे देवा महाबलं ।
प्रसीद भगवन् रुद्र भृत्यानां मा क्रुधः प्रभो ॥ १६० ॥
ततो ब्रह्मादयो देवा दक्षश्चैव प्रजापतिः ।
ऊचुः प्राञ्जलयो भूत्वा कथ्यतां को भवानिति ॥ १६१ ॥
वीरभद्र उवाच । न च देवो न चादित्यो न च भोक्तुमिहागतः ।

नैव द्रष्टुं हि देवेन्द्रान्न च कौतूहलान्वितः ॥ १६२ ॥
दक्षयज्ञविनाशार्थं सम्प्राप्तं विद्धि मामिह ।
वीरभद्र इतिख्यातं रुद्रकोपाद्विनिर्गतं ॥ १६३ ॥
भद्रकाली च विज्ञेया देव्याः क्रोधाद्विनिर्गता ।
प्रेषिता देवदेवेन यज्ञान्तिकमिहागता ॥ १६४ ॥
शरणं गच्छ राजेन्द्र देवन्तं त्वमुमापतिं ।
वरं क्रोधोऽपि रुद्रस्य वरदानं न देवतः(१) ॥ १६५ ॥
वीरभद्रवचः श्रुत्वा दक्षो धर्मभृतां वरः।
तोषयामास देवेशं शूलपाणिं महेश्वरं ॥ १६६ ॥
प्रदुष्टे(२) यज्ञवाटे तु विद्रुतेषु द्विजातिषु ।
तारामृगमये दीप्ते रौद्रे भीममहानले ॥ १६७ ॥
शूलनिर्भिन्नवदनैः कूजद्भिः परिचारकैः ।
निखातोत्पाटितैर्यूपैरपविद्धैर्यतस्ततः ॥ १६८ ॥
उत्पतद्भिः पतद्भिश्च गृध्रैरामिषगृध्नुभिः ।
पक्षपातविनिर्धूतैः शिवाशतनिनादितैः ॥ १६९ ॥
प्राणापानौ सन्निरुध्य ततः स्थानेन यत्नतः ।
विचार्य्य सर्वतो दृष्टिं बहुदृष्टिरमित्रजित् ॥ १७० ॥
सहसा देवदेवेशः अग्निकुण्डादुपागतः ।
चन्द्रसूर्य्यसहस्रस्य तेजः सम्वर्त्तकोपमं ॥ १७१ ॥
प्रहस्य चैनं भगवानिदं वचनमब्रवीत् ।
नष्टस्ते ज्ञानतो दक्ष प्रीतिस्ते मयि साम्प्रतं ॥ १७२ ॥

---

१ देवतमिति घ० ।

२ प्रदीप्ते इति ख० ।

स्मितं कृत्वाऽब्रवीद्वाक्यं ब्रूहि किङ्करवाणि ते ।
आवितश्च समाख्याय देवानाङ्गुरुभिः सह ॥ १७३ ॥
तमुवाचाञ्जलिं कृत्वा दक्षो देवं प्रजापतिः ।
भीतशङ्कितवित्रस्तः सवाष्पवदनेक्षणः ॥ १७४ ॥
यदि प्रसन्नो भगवान् यदि वाहन्तव प्रियः ।
यदि वाहमनुग्राह्यो यदि देयो वरो मम ॥ १७५ ॥
यज्जग्धं भक्षितं पीतमशितं यच्च नाशितं ।
चूर्णीकृतञ्चापविद्धं यज्ञसम्भारमीदृशं ॥ १७६ ॥
दीर्घकालेन महता प्रयत्नेन च सञ्चितं ।
तन्न मिथ्या भवेन्मह्यं वरमेतं वृणोम्यहं ॥ १७७ ॥
तथास्त्वित्याह भगवान् भगनेत्रहरो हरः ।
धर्म्माध्यक्षं महादेवं त्र्यक्षन्तं वै प्रजापतिः ॥ १७८ ॥
जानुभ्यामवनीङ्गत्वा दक्षो लब्ध्वा भवाद्वरं ।
नाम्नामष्टसहस्रेण स्तुतवान् वृषभध्वजं ॥ १७९ ॥
दक्ष उवाच । नमस्ते देवदेवेश देवारिबलसूदन ।
देवेन्द्र ह्यमरश्रेष्ठ देवदानवपूजित ॥ १८० ॥
सहस्राक्ष विरूपाक्ष त्र्यक्ष यक्षाधिप प्रिय ।
सर्वतः पाणिपादस्त्वं(१) सर्वतोऽक्षिशिरोमुखः ।
सर्वतः श्रुतिमान् लोके सर्वानावृत्य तिष्ठसि ॥ १८१ ॥
शङ्कुकर्ण महाकर्ण कुम्भकर्णार्णवालय ।
गजेन्द्रकर्ण गोकर्ण पाणिकर्ण नमोऽस्तु ते ॥ १८२ ॥

१ पाणिपादान्त इति ख ।

शतोदर शतावर्त्त शतजिह्व शतानन ।
गायन्ति त्वां गायत्रिणो ह्यर्चयन्ति तथार्चिनः ॥ १८३ ॥
देवदानवगोप्ता च ब्रह्मा च त्वं शतक्रतुः ।
मूर्त्तीश त्वं महामूर्त्ते समुद्राम्बुधराय च ॥ १८४ ॥
सर्वा ह्यस्मिन् देवतास्ते गावो गोष्ठ इवासते ।
शरीरन्ते प्रपश्यामि सोममग्निं जलेश्वरं ॥ १८५ ॥
आदित्यमथ विष्णुञ्च ब्रह्माणं सबृहस्पतिं ।
क्रिया कार्य्यं कारणञ्च कर्त्ता करणमेव च ॥ १८६ ॥
असच्च सदसच्चैव तथैव प्रभवाव्ययं ।
नमो भवाय शर्वाय रुद्राय वरदाय च ॥ १८७ ॥
पशूनां पतये चैव नमस्त्वन्धकघातिने ।
त्रिजटाय त्रिशीर्षाय त्रिशूलवरधारिणे ॥ १८८ ॥
त्र्यम्बकाय त्रिनेत्राय त्रिपुरघ्नाय वै नमः ।
नमश्चण्डाय मुण्डाय प्रचण्डाय धराय च ॥ १८९ ॥
दण्डिमासक्तकर्णाय(१) दण्डिमुण्डाय(२) वै नमः ।
नमोऽर्द्धदण्डकेशाय निष्काय विकृताय च ॥ १९० ॥
विलोहिताय धूम्राय नीलग्रीवाय ते नमः ।
नमस्त्वप्रतिरूपाय शिवाय च नमोऽस्तु ते ॥ १९१ ॥
सूर्य्याय सूर्य्यपतये सूर्य्यध्वजपताकिने ।
नमः प्रमथनाथाय वृषस्कन्धाय धन्विने ॥ १९२ ॥
नमो हिरण्यगर्भाय हिरण्यकवचाय च ।

---

१ पाठोऽयं न समीचीनः ।

२ कुण्डिमुण्डायेति ख० ।

हिरण्यकृतचूड़ाय हिरण्यपतये नमः ॥ १९३ ॥
सत्रघाताय(१) दण्डाय वर्णपानपुटाय च ।
नमस्तुताय स्तुत्याय स्तूयमानाय वै नमः ॥ १९४ ॥
सर्वाग्राभक्ष्यभक्ष्याय सर्वभूतान्तरात्मने ।
नमो होत्राय मन्त्राय शुक्लध्वजपताकिने ॥ १९५ ॥
नमो नमाय नम्याय नमः किलिकिलाय(२) च ।
नमस्ते शयमानाय शयितायोत्थिताय च ॥ १९६ ॥
स्थिताय चलमानाय मुद्राय कुटिलाय च ।
नमो नर्त्तनशीलाय मुखवादित्रकारिणे ॥ १९७ ॥
नाट्योपहारलुब्धाय गीतवाद्यरताय च ।
नमो ज्येष्ठाय श्रेष्ठाय बलप्रमथनाय च ॥ १९८ ॥
कलनाय च कल्पाय क्षयायोपक्षयाय च ।
भीमदुन्दुभिहासाय भीमसेनप्रियाय च ॥ १९९ ॥
उग्राय च नमो नित्यं नमस्ते दशबाहवे ।
नमः कपालहस्ताय चिताभस्मप्रियाय च ॥ २०० ॥
विभीषणाय भीष्माय भीष्मव्रतधराय च ।
नमो विकृतवक्त्राय खड्गजिह्वाग्रदंष्ट्रिणे ॥ २०१ ॥
पक्वाममांसलुब्धाय तुम्बवीणाप्रियाय च ।
नमो वृषाय वृष्याय वृष्णये वृषणाय च ॥ २०२ ॥
कटङ्कटाय चण्डाय नमः सावयवाय च ।
नमस्ते वरकृष्णाय वराय वरदाय च ॥ २०३ ॥

---

१ सद्योजातायेति ख० ।

२ किल्किकिलायेति क०, घ०, ङ० च ।

वरगन्धमाल्यवस्त्राय वरातिवरये नमः ।
नमो वर्षाय वाताय छायायै आतपाय च ॥ २०४ ॥
नमो रक्तविरक्ताय शोभनायाक्षमालिने ।
सम्भिन्नाय विभिन्नाय विविक्तविकटाय च ॥ २०५ ॥
अघोररूपरूपाय(१) घोरघोरतराय च ।
नमः शिवाय शान्ताय नमः शान्ततराय च ॥ २०६ ॥
एकपाद्बहुनेत्राय एकशीर्ष नमोऽस्तु ते ।
नमो वृद्धाय लुब्धाय संविभागप्रियाय च ॥ २०७ ॥
पञ्चमालार्चिताङ्गाय नमः पाशुपताय च ।
नमश्चण्डाय घण्टाय घण्टया जग्धरन्ध्रिणे ॥ २०८ ॥
सहस्रशतघण्टाय घण्टामालाप्रियाय च ।
प्राणदण्डाय(२) त्यागाय नमो हिलिहिलाय च ॥ २०९ ॥
हूंहूङ्काराय पाराय हूंहूङ्कारप्रियाय च ।
नमश्च शम्भवे नित्यं गिरिवृक्षकलाय च ॥ २१० ॥
गर्भमांसशृगालाय तारकाय तराय च ।
नमो यज्ञाधिपतये द्रुतायोपद्रुताय च ॥ २११ ॥
यज्ञवाहाय दानाय(३) तप्याय तपनाय च ।
नमस्तटाय भव्याय तडितां पतये(४) नमः ॥ २१२ ॥
अन्नदायान्नपतये नमोऽस्त्वन्नभवाय च ।

---

१ अघोरघोररूपायेति ख० ।

२ प्राणिदण्डायेति घ०, ङ० च ।

३ दाम्नायेति ख० ।

४ दृष्टिमां पतय इति ख० ।

नमः सहस्रशीर्षाय सहस्रचरणाय च ॥ २१३ ॥
सहस्रोद्यतशूलाय सहस्रनयनाय च।
नमोऽस्तु बालरूपाय बालरूपधराय च ॥ २१४ ॥
बालानाञ्चैव गोप्त्रे च बालक्रीड़नकाय च।
नमः शुद्धाय बुद्धाय क्षोभणायाक्षताय च ॥ २१५ ॥
तरङ्गाङ्कितकेशाय मुक्तकेशाय वै नमः।
नमः षट्कर्मनिष्ठाय त्रिकर्मनिरताय च ॥ २१६ ॥
वर्णाश्रमाणां विधिवत् पृथक् कर्मप्रवर्तिने।
नमो घोषाय घोष्याय नमः कलकलाय च ॥ २१७ ॥
श्वेतपिङ्गलनेत्राय कृष्णरक्तेक्षणाय च।
धर्मार्थकाममोक्षाय क्रथाय क्रथनाय च ॥ २१८ ॥
साङ्ख्याय साङ्ख्यमुख्याय योगाधिपतयेनमः।
नमो रथ्यविरथ्याय चतुष्पथरताय च ॥ २१९ ॥
कृष्णाजिनोत्तरीयाय व्यालयज्ञोपवीतिने।
ईशान वज्रसंहाय हरिकेश नमोऽस्तु ते।
अविवेकैकनाथाय व्यक्ताव्यक्त नमोऽस्तु ते ॥ २२० ॥
काम कामद कामघ्न धृष्टोदृप्तनिसूदनः।
सर्व्व सर्व्वद सर्व्वज्ञ सन्ध्याराग नमोऽस्तु ते ॥ २२१ ॥
महाबाल महाबाहो महामल्ल महाद्युते।
महामेघवरप्रेक्ष महाकाल नमोऽस्तु ते ॥ २२२ ॥
स्थूलजीर्णाङ्गजटिने वल्कलाजिनधारिणे।
दीप्तसूर्य्याग्निजटिने वल्कलाजिनवाससे।
सहस्रसूर्य्यप्रतिम तपोनित्य नमोऽस्तु ते ॥ २२३ ॥

उन्मादनशतावर्त्त गङ्गातोयार्द्रमूर्द्धज ।
चन्द्रावर्त्त युगावर्त्त मेघावर्त्त नमोऽस्तु ते ॥ २२४ ॥
त्वमन्नमन्नकर्त्ता च अन्नदश्च त्वमेव हि ।
अन्नस्रष्टा च पक्ता च पक्वभुक्तपचे नमः ॥ २२५ ॥
जरायुजोऽण्डजश्चैव स्वेदजोद्भिज्ज एव च ।
त्वमेव देवदेवेशो भूतग्रामश्चतुर्विधः ॥ २२६ ॥
चराचरस्य ब्रह्मा (१) त्वं प्रतिहर्त्ता त्वमेव च ।
त्वमेव ब्रह्मविदुषामपि ब्रह्मविदां वरः ॥ २२७ ॥
सत्वस्य परमा योनिरब्वायुर्ज्योतिषां निधिः ।
ऋक्सामानि तथोङ्कारमाहुस्त्वां ब्रह्मवादिनः ॥२२८ ॥
हविर्हावी हवो हावी हुवां वाचाहुतिः सदा ।
गायन्ति त्वां सुरश्रेष्ठ सामगा ब्रह्मवादिनः ॥ २२९ ॥
जजुर्म्मयो ऋङ्मयश्च सामाथर्वमयस्तथा ।
पठ्यसे ब्रह्मविद्भिस्त्वं कल्पोपनिषदां गणैः ॥ २३० ॥
ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा वर्णावराश्च ये ।
त्वामेव मेघसङ्घाश्च विश्वस्तनितगर्ज्जितं ॥ २३१ ॥
संवत्सरस्त्वमृतवो मासा मासार्द्धमेव च ।
कलाकाष्ठानिमेषाश्च नक्षत्राणि युगा ग्रहाः ॥ २३२ ॥
वृषाणां ककुदं त्वं हि गिरीणां शिखराणि च ।
सिंहो मृगाणां पततां तार्क्ष्योऽनन्तश्च भोगिनां ॥ २३३ ॥
क्षीरोदो ह्युदधीनाञ्च यन्त्राणां धनुरेव च ।

---

१ स्रष्टेति ख० ।

वञ्चमहरणानाञ्च व्रतानां सत्यमेव च ॥ २३४ ॥
इच्छा द्वेषश्च रागश्च मोहः चामो दमः शमः ।
व्यवसायो धृतिर्लोभः कामक्रोधौ जयाजयौ ॥ २३५ ॥
त्वङ्गदी त्वं शरी चापि खट्वाङ्गी झर्झरी तथा(१) ।
छेत्ता भेत्ता प्रहर्त्ता च त्वं नेताऽप्यन्तको मतः ॥ २३६ ॥
दशलक्षणसंयुक्तो धर्मोऽर्थः काम एव च ।
इन्द्रः समुद्राः सरितः पल्वलानि सरांसि च ॥ २३७ ॥
लतावल्ली तृणौषध्यः पशवो मृगपक्षिणः ।
द्रव्यकर्मगुणारम्भः कालपुष्पफलप्रदः ॥ २३८ ॥
आदिश्चान्तश्च मध्यश्च गायत्र्योङ्कार एव च ।
हरितो लोहितः कृष्णो नीलः पीतस्तथाऽरुणः ॥ २३९ ॥
कद्रुश्च कपिलश्चैव कपोतो मेचकस्तथा ।
सुवर्णरेता विख्यातः सुवर्णश्चाप्यतो मतः ॥ २४० ॥
सुवर्णनामा च तथा सुवर्णप्रिय एव च ।
त्वमिन्द्रोऽथ यमश्चैव वरुणो धनदोऽनलः ॥ २४१ ॥
उत्फुल्लश्चित्रभानुश्च स्वर्भानुर्भानुरेव च ।
होत्रं होता च होमस्त्वं हुतञ्च प्रहुतं प्रभुः ॥ २४२ ॥
सुपर्णञ्च तथा ब्रह्म यजुषां शतरुद्रियं ।
पवित्राणां पवित्रञ्च मङ्गलानाञ्च मङ्गलं ॥ २४३ ॥
गिरिः स्तोकस्तथा वृक्षो जीवः पुद्गल एव च ।
सत्वं त्वञ्च रजस्त्वञ्च तमश्च प्रजनं तथा ॥ २४४ ॥

---

१ महाझर्झरधारक इति ख० ।

प्राणोऽपानः समानश्च उदानो व्यान एव च ।
उन्मेषश्चैव मेषश्च तथा जृम्भितमेव च ॥ २४५ ॥
लोहिताङ्गो गदी दंष्ट्री महावक्त्रो महोदरः ।
शुचिरोमा हरिद्श्मश्रुरूर्द्ध्वकेशश्चलाचलः ॥ २४६ ॥
गीतवादित्रनृत्याङ्गो गीतवादनकप्रियः ।
मत्स्यो जली जलो(१) जल्यो जवः कालः कली कलः ॥२४७॥
विकालश्च सुकालश्च दुःष्कालः कलनाशनः ।
मृत्युश्चैव क्षयोऽन्तश्च क्षमापायकरो हरः ॥ २४८ ॥
संवर्त्तकोऽन्तकश्चैव संवर्त्तकबलाहकौ ।
घटी घटीको घण्टीको चूड़ालोलबलो वलं(२) ॥ २४९ ॥
ब्रह्मकालोऽग्निवक्त्रश्च दण्डी मुण्डी च दण्डधृक् ।
चतुर्युगश्चतुर्वेदश्चतुर्होत्रश्चतुष्पथः ॥ २५० ॥
चतुराश्रमवेत्ता च चातुर्वर्ण्यकरश्च ह ।
क्षराक्षरप्रियो धूर्त्तोऽगण्योऽगण्यगणाधिपः ॥ २५१ ॥
रुद्राक्षमाल्याम्बरधरो गिरिको गिरिकप्रियः ।
शिल्पीशः शिल्पिनां श्रेष्ठः सर्व्वशिल्पप्रवर्त्तकः ॥ २५२ ॥
भगनेत्रान्तकश्चन्द्रः पूष्णो दन्तविनाशनः ।
गूढ़ावर्त्तश्च गूढ़श्च गूढ़प्रतिनिषेविता ॥ २५३ ॥
तरणस्तारकश्चैव सर्व्वभूतसुतारणः ।
धाता विधाता सत्वानान्निधाता धारणो धरः ॥ २५४ ॥
तपो ब्रह्म च सत्यञ्च ब्रह्मचर्य्यमथार्जवं ।

---

१ मत्स्यो जलो जघन्यश्चेति ख० ।

२ बलोमि ख० ।

भूतात्मा भूतकृद्भूतो भूतभव्यभवोद्भवः ॥ २५५ ॥
भूर्भुवस्स्वरितश्चैव तथोत्पत्तिर्महेश्वरः ।
ईशानो वीक्षणः शान्तो दुर्दान्तो दन्तनाशनः ॥ २५६ ॥
ब्रह्मावर्त्त सुरावर्त्त कामावर्त्त नमोऽस्तु ते ।
कामविम्बनिहर्त्ता च कर्णिकाररजःप्रियः ॥ २५७ ॥
मुखचन्द्रो भीममुखः सुमुखो दुर्मुखो मुखः ।
चतुर्मुखो बहुमुखो रणे ह्यभिमुखः सदा ॥ २५८ ॥
हिरण्यगर्भः शकुनिर्महोदधिः परो विराट् ।
अधर्महा महादण्डो दण्डधारी रणप्रियः ॥ २५९ ॥
गोतमो गोप्रतारश्च गोवृषेश्वरवाहनः ।
धर्मकृद्धर्मस्रष्टा च धर्मो धर्मविदुत्तमः ॥ २६० ॥
त्रैलोक्यगोप्ता गोविन्दो मानदो मान एव च(१) ।
तिष्ठंस्थिरश्च स्थाणुश्च निष्कम्पः कम्प एव च ॥ २६१ ॥
दुर्वारणो दुर्विषहो दुःसहो दुरतिक्रमः ।
दुर्द्धरो दुष्प्रकम्पश्च दुर्विदो दुर्ज्जयो जयः ॥ २६२ ॥
शशः शशाङ्कः शमनः शीतोष्णं दुर्जराऽथ तृट् ।
आधयो व्याधयश्चैव व्याधिहा व्याधिगश्च ह ॥ २६३ ॥
सह्यो यज्ञा मृगा व्याधा व्याधीनामाकरोऽकरः ।
शिखण्डी पुण्डरीकाक्षः पुण्डरीकावलोकनः ॥ २६४ ॥
दण्डधरः सदण्डश्च दण्डमुण्डविभूषितः(२) ।
विषपोऽमृतपश्चैव सुरापः क्षीरसोमपः ॥ २६५ ॥

---

(१) त्रैलोक्यमार्गगः मार्गो गामार्गो मार्ग एव चेति घ० ।

(२) दण्डविनाशन इति घ०, ङ० च ।

मधुपश्चाज्यपश्चैव सर्व्वपश्च महाबलः ।
वृषाश्ववाह्यो वृषभस्तथा वृषभलोचनः ॥ २६६ ॥
वृषभश्चैव विख्यातो लोकानां लोकसत्कृतः ।
चन्द्रादित्यौ चक्षुषी ते हृदयञ्च पितामहः ।
अग्निरापस्तथा देवो धर्म्मकर्म्मप्रसाधितः ॥ २६७ ॥
न ब्रह्मा न च गोविन्दः पुराणा ऋषयो न च ।
माहात्म्यं वेदितुं शक्ता याथातथ्येन ते शिव ॥ २६८ ॥
या मूर्त्तयः सुसूक्ष्मास्ते न मह्यं यान्ति दर्शनं ।
ताभिर्म्मां सततं रक्ष पिता पुत्रमिवौरसं ॥ २६९ ॥
रक्ष मां रक्षणीयोऽहन्तवानघ नमोऽस्तु ते ।
भक्तानुकम्पी भगवान् भक्तश्चाहं सदा त्वयि(१) ॥ २७० ॥
यः सहस्राण्यनेकानि पुंसामाहृत्य दुर्द्दशः ।
तिष्ठत्येकः समुद्रान्ते स मे गोप्ताऽस्तु नित्यशः ॥ २७१ ॥
यं विनिद्रा जितश्वासाः सत्वस्थाः समदर्शिनः ।
ज्योतिः पश्यन्ति युञ्जानास्तस्मै योगात्मने नमः ॥ २७२ ॥
सम्भक्ष्य सर्व्वभूतानि युगान्ते समुपस्थिते ।
यः शेते जलमध्यस्थस्तं प्रपद्येऽप्सु शायिनं ॥ २७३ ॥
प्रविश्य वदने राहोर्य्यः सोमं ग्रसते निशि ।
ग्रसत्यर्कञ्च स्वर्भानुर्भूत्वा सोमाग्निरेव च ॥ २७४ ॥
येऽङ्गुष्ठमात्राः पुरुषा देहस्थाः सर्व्वदेहिनां ।
रक्षन्तु ते हि मां नित्यं नित्यमाप्याययन्तु मां ॥ २७५ ॥
ये चाप्युत्पतिता गर्भादधोभागगताश्च ये ।

---

१ प्रिय इति घ० ।

तेषां स्वाहा: स्वधाश्चैव आप्नुवन्तु स्वदन्तु च ॥ २७६ ॥
ये न रोदन्ति देहस्था: प्राणिनो रोदयन्ति च ।
हर्षयन्ति च हृष्यन्ति नमस्तेभ्यस्तु नित्यश: ॥ २७७॥
ये समुद्रे नदीदुर्गे पर्वतेषु गुहासु च ।
वृक्षमूलेषु गोष्ठेषु कान्तारगहनेषु च ॥ २७८ ॥
चतुष्पथेषु रथ्यासु चत्वरेषु सभासु च ।
चन्द्रार्कयोर्मध्यगता ये च चन्द्रार्करश्मिषु ॥ २७९ ॥
रसातलगता ये च ये च तस्मात्परङ्गता: ।
नमस्तेभ्यो नमस्तेभ्यो नमस्तेभ्यश्च नित्यश: ।
सूक्ष्मा: स्थूला: कृशा ह्रस्वा नमस्तेभ्यस्तु नित्यश: ॥२८०॥
सर्व्वस्त्वं सर्व्वगो देव सर्व्वभूतपतिर्भवान् ।
सर्व्वभूतान्तरात्मा च तेन त्वं न निमन्त्रित: ॥ २८१ ॥
त्वमेव चेज्यसे यस्माद्यज्ञैर्विविधदक्षिणै: ।
त्वमेव कर्त्ता सर्व्वस्य तेन त्वन्न निमन्त्रित: ॥ २८२ ॥
अथ वा मायया देव मोहित: सूक्ष्मया त्वया ।
एतस्मात्कारणाद्वापि तेन त्वन्न निमन्त्रित: ॥ २८३ ॥
प्रसीद मम देवेश त्वमेव शरणं मम ।
त्वङ्गतिस्त्वं प्रतिष्ठा च न चान्यास्ति न मे गति: ॥ २८४ ॥
स्तुत्वैवं स महादेवं विरराम प्रजापति: ।
भगवानपि सुप्रीत: पुनर्दक्षमभाषत ॥ २८५ ॥
परितुष्टोऽस्मि ते दक्ष स्तवेनानेन सुव्रत ।
बहुनात्र किमुक्तेन मत्समीपं गमिष्यसि ॥ २८६ ॥
अथैनमब्रवीद्वाक्यं त्रैलोक्याधिपतिर्भव: ।

कृत्वाश्वासकरं वाक्यं वाक्यज्ञो वाक्यमाहृतं ॥ १८७ ॥
दक्ष दक्ष न कर्त्तव्यो मन्युर्विघ्नमिमं प्रति ।
अहं यज्ञहा न त्वन्यो दृश्यते तत्पुरा त्वया ॥ १८८ ॥
भूयश्च तं वरमिमं मत्तो गृह्णीष्व सुव्रत ।
प्रसन्नवदनो भूत्वा त्वमेकाग्रमनाः शृणु ॥ १८९ ॥
अश्वमेधसहस्रस्य वाजपेयशतस्य च ।
प्रजापते मत्प्रसादात् फलभागी भविष्यसि ॥ १९० ॥
वेदान् षड़ङ्गानुद्धृत्य सांख्यान्योगांश्च कृत्स्नशः ।
तपश्च विपुलन्तप्त्वा दुःश्चरं देवदानवैः ॥ १९१ ॥
अर्थैर्द्दशार्द्धसंयुक्तैर्गूढ़मप्राज्ञनिर्म्मितं ।
वर्णाश्रमकृतैर्धर्म्मैर्विपरीतं क्वचित्समं ॥ १९२ ॥
श्रुत्यर्थैरध्यवसितं पशुपाशविमोक्षणं ।
सर्वेषामाश्रमाणान्तु मया पाशुपतं व्रतं ।
उत्पादितं शुभं दक्ष सर्वपापविमोक्षणं ॥ १९३ ॥
अस्य चीर्णस्य यत्सम्यक्फलं भवति पुष्कलं ।
तदस्तु ते महाभाग मानसस्त्यज्यतां ज्वरः ॥ १९४ ॥
एवमुक्त्वा महादेवः सपत्नीकः सहानुगः ।
अदर्शनमनुप्राप्तो दक्षस्यामितविक्रमः ॥ १९५ ॥
अवाप्य च तदा भागं यथोक्तं ब्रह्मणा भवः ।
ज्वरञ्च सर्वधर्म्मज्ञो बहुधा व्यभजत्तदा ।
शान्त्यर्थं सर्व्वभूतानां शृणुध्वन्तच्च वै द्विजाः ॥ १९६ ॥
शीर्षाभितापो नागानां पर्वतानां शिलारुजः ।
अपान्तु नालिकां विद्यान्निर्मोकम्भुजगेष्वपि ॥ १९७ ॥

खोरकः सौरभेयाणां ऊषरः पृथिवीतले ।
इभानामपि धर्म्मज्ञ दृष्टिप्रत्यवरोधनं ॥ २९८ ॥
रन्ध्रोद्भूतं (१)तथाश्वानां शिखोद्भेदश्च बर्हिणां ।
नेत्ररोगः कोकिलानां ज्वरः प्रोक्तो महात्मभिः ॥ २९९ ॥
अजानां पित्तभेदश्च सर्वेषामिति नः श्रुतं ।
शुकानामपि सर्वेषां हिमिका प्रोच्यते ज्वरः ।
शार्दूलेष्वपि वै विप्राः श्रमो ज्वर इहोच्यते ॥ ३०० ॥
मानुषेषु तु सर्वज्ञ(२) ज्वरो नामैष कीर्तितः ।
मरणे जन्मनि तथा मध्ये च विशते सदा ॥ ३०१ ॥
एतन्माहेश्वरं तेजो ज्वरो नाम सुदारुणः ।
नमस्यश्चैव(३) मान्यश्च सर्वप्राणिभिरीश्वरः ॥ ३०२ ॥
इमां ज्वरोत्पत्तिमदीनमानसः
पठेत्सदा यः सुसमाहितो नरः ।
विमुक्तरोगः स नरो मुदा युतो
लभेत कामान् स यथा मनीषितान् ॥ ३०३ ॥
दक्षप्रोक्तं स्तवञ्चापि कीर्त्तयेद्यः शृणोति वा ।
नाशुभं प्राप्नुयात् किञ्चित् दीर्घञ्चायुरवाप्नुयात् ॥ ३०४ ॥
यथा सर्वेषु देवेषु वरिष्ठो योगवान् हरः ।
तथा स्तवो वरिष्ठोऽयं स्तवानां ब्रह्मनिर्म्मितः ॥ ३०५ ॥
यशोराज्यसुखैश्वर्य्यवित्तायुर्धनकाङ्क्षिभिः ।

१ रन्ध्रोद्गतमिति घ० ।
२ सर्वाष्विति ख० ।
३ अन्यथश्चैवेति घ० ।

स्तोतव्यो भक्तिमास्थाय विद्याकामैश्च यत्नतः ॥ २०६ ॥
व्याधितो दुःखितो दीनश्चौरग्रस्तो भयार्द्दितः ।
राजकार्य्यनियुक्तो वा मुच्यते महतो भयात् ॥ २०७ ॥
अनेन चैव देहेन गणानां स गणाधिपः ।
इह लोके सुखं प्राप्य गण एवोपपद्यते(१) ॥ २०८ ॥
न च यक्षाः पिशाचा वा न नागा न विनायकाः ।
कुर्य्युर्विघ्नं गृहे तस्य यत्र संस्तूयते भवः ॥ २०९ ॥
शृणुयाद्वा इदं नारी सुभक्त्या ब्रह्मचारिणी ।
पितृभिर्भर्त्तृपक्षाभ्यां पूज्या भवति देववत् ॥ २१० ॥
शृणुयाद्वा इदं सर्व्वं कीर्त्तयेद्वाप्यभीक्ष्णशः ।
तस्य सर्व्वाणि कार्य्याणि सिद्धिं गच्छन्त्यविघ्नतः ॥ २११ ॥
मनसा चिन्तितं यच्च यच्च वाचाप्युदाहृतं ।
सर्व्वं सम्पद्यते तस्य स्तवनस्यानुकीर्त्तनात् ॥ २१२ ॥
देवस्य सगुहस्याथ देव्या नन्दीश्वरस्य तु ।
बलिं विभवतः कृत्वा दमेन नियमेन च ॥ २१३ ॥
ततः स युक्तो गृह्णीयान्नामान्याशु यथाक्रमं ।
ईप्सितान् लभतेऽत्यर्थं कामान् भोगांश्च मानवः ।
मृतश्च स्वर्गमाप्नोति स्त्रीसहस्रपरीवृतः ॥ २१४ ॥
सर्व्वकर्म्मसु युक्तो वा युक्तो वा सर्व्वपातकैः ।
पठन् दक्षकृतं स्तोत्रं सर्व्वपापैः प्रमुच्यते ।
मृतश्च गणसालोक्यं पूज्यमानः सुरासुरैः ॥ २१५ ॥

---

१ परत्र उपपद्यत इति पा० ।

वृषेव विधियुक्तेन विमानेन विराजते ।
आभूतसंप्लवस्थायी रुद्रस्यानुचरो भवेत्॥ २१६ ॥
इत्याह भगवान् व्यासः पराशरसुतः प्रभुः ।
नैतद्देयते कश्चिन्नेदं श्राव्यन्तु कस्यचित्॥ २१७ ॥
श्रुत्वैतत्परमं गुह्यं येऽपि स्युः पापकारिणः ।
वैश्या स्त्रियश्च शूद्राश्च रुद्रलोकमवाप्नुयुः ॥ २१८ ॥
श्रावयेद्यस्तु विप्रेभ्यः सदा पर्व्वसु पर्व्वसु ।
रुद्रलोकमवाप्नोति द्विजो वै नात्र संशयः ॥ २१९ ॥

इति श्रीमहापुराणे वायुप्रोक्ते दक्षशापवर्णनं
नाम त्रिंशोऽध्यायः ।



# अथैकत्रिंशोऽध्यायः ।

———000———

## देववंशवर्णनं ।

सूत उवाच । इत्येषा समनुज्ञाता कथा पापप्रणाशिनी ।
या दक्षमधिकृत्येह कथा शर्व्वादुपागता ॥ १ ॥
पितृवंशप्रसङ्गेन कथा ह्येषा प्रकीर्त्तिता ।
पितॄणामानुपूर्व्व्येण देवान् वक्ष्याम्यतः परं ॥ २ ॥
त्रेतायुगमुखे पूर्व्वमासन् स्वायम्भुवेऽन्तरे ।
देवा यामा इतिख्याताः पूर्वं ये यज्ञसूनवः ॥ ३ ॥
अजिता ब्रह्मणः पुत्रा जिता जिदजिताश्च ये ।
पुत्राः स्वायम्भुवस्यैते शुक्रनाम्ना तु मानसाः ॥ ४ ॥
तृप्तिमन्तो गणा ह्येते देवानान्तु त्रयः स्मृताः ।
छन्दोगास्तु त्रयस्त्रिंशत्सर्वे स्वायम्भुवस्य ह ॥ ५ ॥
यदुर्ययातिर्द्वौ देवौ दीधयः स्रवसो मतिः ।
विभासश्च क्रतुश्चैव प्रजातिर्विंशतो द्युतिः ॥ ६ ॥
वायसो मङ्गलश्चैव यामा द्वादश कीर्तिताः ।
अभिमन्युरुग्रदृष्टिः समयोऽथ शुचिश्रवाः ।
केवलो विश्वरूपश्च सुपक्षो मधुपस्तथा ॥ ७ ॥
तुरीयो निर्हपुश्चैव युक्तो ग्रावाजिनस्तु ते ।
यमिनो विश्वदेवाश्च यविष्ठोऽमृतवानपि ॥ ८ ॥
अजिरो विभुर्विभावश्च मृलिकोऽथ दिदेहकः ।
श्रुतिश्रृणो बृहच्छुक्रो देवा द्वादश कीर्तिताः ॥ ९ ॥

आसन् स्वायम्भुवस्यैते अन्तरे सोमपायिनः ।
त्विषिमन्तो गणा ह्येते वीर्य्यवन्तो महाबलाः ॥ १० ॥
तेषामिन्द्रः सदा ह्यासीद् विश्वभुक् प्रथमो विभुः ।
असुरा ये तदा तेषामासन् दायादबान्धवाः ॥ ११ ॥
सुपर्णयक्षगन्धर्व्वाः पिशाचोरगराक्षसाः ।
अष्टौ ते पितृभिः सार्द्धं(१) नासत्या देवयोनयः ॥ १२ ॥
स्वायम्भुवेऽन्तरेऽतीताः प्रजास्त्वासां सहस्रशः ।
प्रभावरूपसम्पन्ना आयुषा च बलेन च ॥ १३ ॥
विस्तरादिह नोच्यन्ते मा प्रसङ्गो भवत्विह ।
स्वायम्भुवो निसर्गश्च विज्ञेयः साम्प्रतं मनुः ॥ १४ ॥
अतीते वर्त्तमाने न दृष्टो वैवस्वतेन सः ।
प्रजाभिर्देवताभिश्च ऋषिभिः पितृभिः सह ॥ १५ ॥
तेषां सप्तर्षयः पूर्वमासन्ये तान् निबोधत ।
भृग्वङ्गिरा मरीचिश्च पुलस्त्यः पुलहः क्रतुः ॥ १६ ॥
अत्रिश्चैव वसिष्ठश्च सप्त स्वायम्भुवेऽन्तरे ।
अग्नीध्रश्चातिबाहुश्च मेधा मेधातिथिर्वसुः ॥ १७ ॥
ज्योतिष्मान् द्युतिमान्(२) हव्यः सवनः पुत्र एव च ।
मनोः स्वाम्भुवस्यैते दशपुत्रा महौजसः ॥ १८ ॥
वायुप्रोक्ता महासत्वा राजानः प्रथमेऽन्तरे ।
सासुरन्तत्सगन्धर्वं सयक्षोरगराक्षसं ।
सपिशाचमनुष्यञ्च सुपर्णाप्सरसाङ्गणं ॥ १९ ॥

---

१ मेऽतिष्ठन् मनुना सार्द्धमिति ख० ।

२ अग्निमामिति घ० ।

नो शक्यमानुपूर्व्येण वक्तुं वर्षशतैरपि ।
बहुत्वान्नामधेयानां संख्या तेषां कुले तथा(१) ॥ २० ॥
या वै व्रजकुलाख्यास्तु आसन् स्वायम्भुवेऽन्तरे ।
कालेन बहुनातीता अयनाब्दयुगक्रमैः ॥ २१ ॥
ऋषय ऊचुः । क एष भगवान् कालः सर्वभूतापहारकः ।
कस्य योनिः किमादिश्च किन्तत्त्वं स किमात्मजः ॥ २२ ॥
किमस्य चक्षुः का मूर्त्तिः के चास्यावयवाः स्मृताः ।
किंनामधेयः कोऽस्यात्मा एतत् प्रब्रूहि पृच्छतां ॥ २३ ॥
सूत उवाच । श्रूयतां कालसद्भावः श्रुत्वा चैवावधार्य्यतां ।
सूर्य्ययोनिर्निमेषादिः सङ्ख्याचक्षुः स उच्यते ॥ २४ ॥
मूर्त्तिरस्य त्वहोरात्रे निमेषावयवश्च सः ।
संवत्सरशतं त्वस्य नाम चास्य कलात्मकं ।
साम्प्रतानागतातीतकालात्मा स प्रजापतिः ॥ २५ ॥
पञ्चानां प्रविभक्तानां कालावस्थान्निबोधत ।
दिनार्द्धमासमासैस्तु ऋतुभिस्त्वयनैस्तथा ॥ २६ ॥
संवत्सरस्तु प्रथमो द्वितीयः परिवत्सरः ।
इद्वत्सरस्तृतीयस्तु चतुर्थश्चानुवत्सरः ॥ २७ ॥
वत्सरः पञ्चमस्तेषां कालः स युगसंज्ञितः ।
तेषान्तु तत्त्वं वक्ष्यामि कीर्त्त्यमानन्निबोधत ॥ २८ ॥
ऋतुरग्निस्तु यः प्रोक्तः स तु संवत्सरो मतः ।
आदित्ययस्त्वऽसौ सारः कालाग्निः परिवत्सरः ॥ २९ ॥
शुक्लकृष्णा गतिश्चापि अपां सारमयः खगः ।

१ कुले कुल इति ख० ।

स इडावत्सरः सोमः पुराणे निश्चयो मतः ॥ ३० ॥
यश्चायम्तपते लोकांस्तनुभिः सप्तसप्तभिः।
आशु कर्त्ता च लोकस्य स वायुरिति वत्सरः(१) ॥ ३१ ॥
अहङ्कारात् रुदन् रुद्रः सद्भूतो ब्रह्मणस्त्रयः।
स रुद्रो वत्सरस्तेषां विजज्ञे नीललोहितः।
तेषां हि तत्त्वं वक्ष्यामि कीर्त्त्यमानं निबोधत ॥ ३२ ॥
अङ्गप्रत्यङ्गसंयोगात् कालात्मा प्रपितामहः।
ऋक्सामयजुषां योनिः पञ्चानां पतिरीश्वरः ॥ ३३ ॥
सोऽग्निर्य्यजुश्च सोमश्च स भूतः स प्रजापतिः।
प्रोक्तः संवत्सरश्चेति सूर्य्यो योऽग्निर्मनीषिभिः ॥ ३४ ॥
यस्मात्कालविभागानां मासर्त्त्वयनयोरपि।
ग्रहनक्षत्रशीतोष्णवर्षायुःकर्म्मणां तथा।
योजितः प्रविभागानां दिवसानाञ्च भास्करः ॥ ३५ ॥
वैकारिकः प्रसन्नात्मा ब्रह्मपुत्रः प्रजापतिः।
एकोनैकोऽथ दिवसो मासोऽथर्त्तुः पितामहः ॥ ३६ ॥
आदित्यः सविता भानुर्जीवनो ब्रह्मसत्कृतः।
प्रभवश्चात्ययश्चैव भूतानां तेन भास्करः ॥ ३७ ॥
ताराभिमानी विज्ञेयस्तृतीयः परिवत्सरः।
सोमः सर्व्वौषधिपतिर्य्यस्मात्स प्रपितामहः ॥ ३८ ॥
आजीवः सर्वभूतानां योगक्षेमकृदीश्वरः।
अवेक्षमाणः सततं बिभर्ति जगदंशुभिः ॥ ३९ ॥
तिथीनां पर्व्वसन्धीनां पूर्णिमादर्शयोरपि।

---

१ स वायुः परिवत्सर इति ख०।

योनिर्निशाकरो यश्च योऽमृतात्मा प्रजापतिः ॥ ४० ॥
तस्मात् स पितृमान् सोम ऋग्यजुश्छन्दसात्मकः ।
प्राणापानसमानाद्यैर्व्यानोदानात्मकैरपि ॥ ४१ ॥
कर्म्मभिः प्राणिनां लोके सर्वचेष्टाप्रवर्त्तकः ।
प्राणापानसमानानां वायूनाञ्च प्रवर्त्तकः ॥ ४२ ॥
पञ्चानाञ्चेन्द्रियमनोबुद्धिस्मृतिजलात्मनां ।
समानकाल करणः क्रियाः सम्पादयन्निव ॥ ४३ ॥
सर्व्वात्मा सर्वलोकानामावहः प्रवहादिभिः ।
विधाता सर्वभूतानां क्षमी नित्यं प्रभञ्जनः ॥ ४४ ॥
योनिरग्नेरपां भूमेरवेश्चन्द्रमसश्च यः ।
वायुः प्रजापतिर्भूतं लोकात्मा प्रपितामहः ॥ ४५ ॥
प्रजापतिमुखैर्देवैः सम्यगिष्टफलार्थिभिः ।
त्रिभिरेव कपालैस्तु त्र्यम्बकैरोषधिक्षये ।
इज्यते भगवान् यस्मात्तस्मात्त्र्यम्बक उच्यते ॥ ४६ ॥
गायत्री चैव त्रिष्टुप् च जगती चैव या स्मृता ।
त्र्यम्बका नामतः प्रोक्ता योनयः सवनस्य ताः ॥ ४७ ॥
ताभिरेकत्वभूताभिस्त्रिविधाभिः स्ववीर्य्यतः ।
चिसाधनपुरोडाशस्त्रिकपालः स वै स्मृतः ॥ ४८ ॥
इत्येतत्पञ्चवर्षं हि युगं प्रोक्तं मनीषिभिः ।
यश्चैव पञ्चधात्मा वै प्रोक्तः संवत्सरो द्विजैः ।
सैकं षट्कं विजज्ञेऽथ मध्वादीनृतवः किल ॥ ४९ ॥
ऋतुपुत्रार्त्तवः पञ्च इति सर्गः समासतः ।
इत्येष पवमानो वै प्राणिनां जीवितानि तु ॥ ५० ॥

नदीवेगसमायुक्तं कालो धावति संहरन् ।
अहोरात्रकरस्तस्मात् स वायुरभवत्पुनः ॥ ५१ ॥
एते प्राजानां पतयः प्रधानाः सर्वदेहिनां(१) ।
पितरः सर्वलोकानां लोकात्मानः प्रकीर्त्तिताः ॥ ५२ ॥
ध्यायतो ब्रह्मणो वक्त्रादुद्यन् समभवद्भवः ।
ऋषिर्विप्रो महादेवो भूतात्मा प्रपितामहः ॥ ५३ ॥
ईश्वरः सर्वभूतानां प्रणवायोपपद्यते ।
आत्मवेशेन भूतानामङ्गप्रत्यङ्गसम्भवः ॥ ५४ ॥
अग्निः संवत्सरः सूर्य्यश्चन्द्रमा वायुरेव च ।
युगाभिमानो कालात्मा नित्यं संक्षेपकृद्विभुः ।
तस्मादर्कोऽनुग्रहकृत्स इद्वत्सर उच्यते ॥ ५५ ॥
रुद्राविष्टो भगवता जगत्यस्मिन् स्वतेजसा ।
आश्रयाश्रयसंयोगात्तनुभिर्नामभिस्तथा ॥ ५६ ॥
ततस्तस्य तु वीर्य्येण लोकानुग्रहकारकं ।
द्वितीयं भद्रसंयोगं सन्तत्यैककारकं ॥ ५७ ॥
देवत्वञ्च पितृत्वञ्च कालत्वञ्चास्य यत्परं ।
तस्माद्वै सर्व्वथा भद्रस्तद्वद्भिरभिपूज्यते ॥ ५८ ॥
पतिः पतीनां भगवान् प्रजेशानां प्रजापतिः ।
भवनः सर्वभूतानां सर्वेषां नीललोहितः ।
ओषधोः प्रतिसन्धत्ते रुद्रः क्षीणाः पुनः पुनः ॥ ५९ ॥

---

१ चत्वार उपपन्नका इति घ०, ङ० च ।

इत्येषां यदपत्यं वै न तच्छक्यं प्रमाणतः ।
बहुत्वात् परिसंख्यातुं पुत्रपौत्रमनन्तकं ॥ ६० ॥
इमं वंशं प्रजेशानां महतां पुण्यकर्म्मणां ।
कीर्त्तयन् स्थिरकीर्त्तीनां महतीं सिद्धिमाप्नुयात् ॥ ६१ ॥

इति श्रीमहापुराणे वायुप्रोक्ते देववंशवर्णनं
नामैकत्रिंशोऽध्यायः ।

---

# अथ द्वात्रिंशोऽध्यायः ।

———000@000———

## युगधर्म्माः ।

वायुरुवाच । अत ऊर्द्धं प्रवक्ष्यामि प्रणवस्य विनिश्चयं ।
ओंकारमक्षरं ब्रह्म त्रिवर्णञ्चादितः स्मृतं ॥ १ ॥
यो यो यस्य यथा वर्णो विहितो देवतास्तथा ।
ऋचो यजूंषि सामानि वायुरग्निस्तथा जलं ॥ २ ॥
तस्मात्तु अक्षरादेव पुनरन्ये प्रजज्ञिरे ।
चतुर्द्दश महात्मानो देवानां ये तु दैवताः ॥ ३ ॥
तेषु सर्वगतश्चैव सर्वगः सर्वयोगवित् ।
अनुग्रहार्थं लोकानामादिमध्यान्त उच्यते ॥ ४ ॥
सप्तर्षयस्तथेन्द्रा ये देवाश्च पितृभिः सह ।
अक्षरान्निःसृताः सर्वे देवदेवान्महेश्वरात् ॥ ५ ॥
इहामुत्र हितार्थाय वदन्ति परमं पदं ।
पूर्वमेव मयोक्तस्ते कालस्तु युगसंज्ञितः ॥ ६ ॥
कृतं त्रेता द्वापरञ्च युगादिः कलिना सह ।
परिवर्त्तमानैस्तैरेव भ्रममाणेषु चक्रवत् ॥ ७ ॥
देवतास्तु तदोद्विग्नाः कालस्य वशमागताः ।
न शक्नुवन्ति तस्थानं संस्थापयितुमात्मना ॥ ८ ॥
तदा ते वाग्यता भूत्वा आदौ मन्वन्तरस्य वै ।
ऋषयश्चैव देवाश्च इन्द्रश्चैव महातपाः(१) ॥ ९ ॥

---

१ महायशा इति ख० ।

समाधाय मनस्तीव्रं सहस्रं परिवत्सरान् ।
प्रपन्नास्ते महादेवं भीताः कालस्य वै तदा ॥ १० ॥
अयं हि कालो देवेशश्चतुर्भुक्तिश्चतुर्मुखः ।
कोऽस्य विद्यान्महादेव अगाधस्य महेश्वर ॥ ११ ॥
अथ दृष्ट्वा महादेवस्तन्तु कालश्चतुर्मुखं ।
न भेतव्यमिति प्राह को वः कामः प्रदीयतां ॥ १२ ॥
तत्करिष्याम्यहं सर्वं न वृथायं परिश्रमः ।
उवाच देवो भगवान् स्वयङ्कालः सुदुर्जयः ॥ १३ ॥
यदेतस्य मुखं श्वेतं चतुर्जिह्वं हि लक्ष्यते ।
एतत् कृतयुगं नाम तस्य कालस्य वै मुखं ।
असौ देवः सुरश्रेष्ठो ब्रह्मा वैवस्वतो मुखः ॥ १४ ॥
यदेतद्रक्तवर्णाभं तृतीयं वः स्मृतं मया ।
त्रिजिह्वं(१) लेलिहानन्तु एतत् त्रेतायुगं द्विजाः ॥ १५ ॥
अत्र यज्ञप्रवृत्तिस्तु जायते हि महेश्वरात् ।
ततोऽत्र हूयते यज्ञस्तिस्रो जिह्वास्त्रयोऽग्नयः ।
दृष्ट्वा चैवाग्नयो विप्राः कालजिह्वा प्रवर्त्तते ॥ १६ ॥
यदेतद्वै मुखं भीमं द्विजिह्वं रक्तपिङ्गलं ।
द्विपादोऽत्र भविष्यामि द्वापरं नाम तद्युगं ॥ १७ ॥
यदेतत् कृष्णवर्णाभन्तुरीयं रक्तलोचनं ।
एकजिह्वं पृथु श्यामं लेलिहानं पुनः पुनः ॥ १८ ॥
ततः कलियुगं घोरं सर्वलोकभयङ्करं ।

---

१ त्रिमेत्रमिति ख० ।

कल्पस्य तु मुखं ह्येतच्चतुर्थं नाम भीषणं ॥ १९ ॥
न सुखं नापि निर्वाणं तस्मिन् भवति वै युगे ।
कालग्रस्ता प्रजा चापि युगे तस्मिन् भविष्यति ॥ २० ॥
ब्रह्मा कृतयुगे पूज्यस्त्रेतायां यज्ञ उच्यते ।
द्वापरे पूज्यते विष्णुरहम्पूज्यश्चतुर्ष्वपि ॥ २१ ॥
ब्रह्मा विष्णुश्च यज्ञश्च कालस्यैव कलास्त्रयः ।
सर्व्वेष्वेव हि कालेषु चतुर्मूर्त्तिर्महेश्वरः ॥ २२ ॥
अहं जनो जनयिता वः कालः कालप्रवर्त्तकः ।
युगकर्त्ता तथा चैव परं परपरायणः ॥ २३ ॥
तस्मात् कलियुगं प्राप्य लोकानां हितकारणात् ।
अभयार्थञ्च देवानामुभयोर्लोकयोरपि ॥ २४ ॥
तदा भव्यश्च पूज्यश्च भविष्यामि सुरोत्तमाः ।
तस्माद्भयं न कार्य्यञ्च कलिं प्राप्य महौजसः ॥ २५ ॥
एवमुक्तास्ततः सर्वा देवता ऋषिभिः सह ।
प्रणम्य शिरसा देवं पुनरूचुर्जगत्पतिं ॥ २६ ॥
देवर्षय ऊचुः । महातेजा महाकायो महावीर्य्यो महाद्युतिः ।
भीषणः सर्वभूतानां कथं कालश्चतुर्मुखः ॥ २७ ॥
महादेव उवाच । एष कालश्चतुर्मूर्त्तिश्चतुर्दंष्ट्रश्चतुर्मुखः ।
लोकसंरक्षणार्थाय अतिक्रामति सर्वशः ॥ २८ ॥
नासाध्यं विद्यते चास्य सर्वस्मिन् सचराचरे ।
कालः सृजति भूतानि पुनः संहरति क्रमात् ॥ २९ ॥
सर्वे कालस्य वशगा न कालः कस्यचिद्वशे ।
तस्मात्तु सर्वभूतानि कालः कलयते सदा ॥ ३० ॥

विक्रमस्य पदान्यस्य पूर्वोक्तान्येकसप्ततिः ।
तानि मन्वन्तराणीह परिवृत्तयुगक्रमात् ॥ ३१ ॥
एकं पदं परिक्रम्य पदानामेकसप्ततिः ।
यदा कालः प्रक्रमते तदा मन्वन्तरव्ययः ॥ ३२ ॥
एवमुक्त्वा तु भगवान् देवर्षिपितृदानवान् ।
नमस्कृतश्च तैः सर्वैस्तत्रैवान्तरधीयत ॥ ३३ ॥
एवं स काले भगवान् देवर्षिपितृदानवान् ।
पुनः पुनः संहरते सृजते च पुनः पुनः ॥ ३४ ॥
अतो मन्वन्तरे चैव देवर्षिपितृदानवैः ।
पूज्यते भगवानीशो भयात् कालस्य तस्य वै ॥ ३५ ॥
तस्मात् सर्वप्रयत्नेन कलौ कुर्यात्तपो द्विजः ।
प्रपन्नस्य महादेवं तस्य पुण्यफलं महत् ।
तस्माद्देवा दिवङ्गत्वा अवतीर्य्य च भूतले ॥ ३६ ॥
ऋषयश्चैव देवाश्च कलिम्प्राप्य सुदारुणं ।
तप इच्छन्ति भूयिष्ठं कर्त्तुं धर्म्मपरायणाः ।
अवतारान् कलिं प्राप्य करोति च पुनः पुनः ॥ ३७ ॥
एवं कालान्तरे सर्व्वे येऽतीता वै सहस्रशः ।
वैवस्वतेऽन्तरे तस्मिन् देवराजर्षयस्तथा ॥ ३८ ॥
देवापिः पौरवो राजा मनुश्चेक्ष्वाकुवंशजाः ।
महायोगबलोपेताः कालान्तरमुपासते ॥ ३९ ॥
क्षीणे कलियुगे तस्मिन् तिष्ये त्रेतायुगे कृते ।
सप्तर्षिभिश्चैव सार्द्धं भाव्ये त्रेतायुगे पुनः ।
गोत्राणां क्षत्रियाणाञ्च भविष्यास्ते प्रकीर्तिताः ॥ ४० ॥

द्वापरान्ते प्रतिष्ठन्ते क्षत्रिया ऋषिभिः सह ।
कृते त्रेतायुगे चैव तथा क्षीणे च द्वापरे ।
नराः पातकिनो ये वै वर्त्तन्ते ते कलौ स्मृताः ॥ ४१ ॥
मन्वन्तराणां सप्तानां सान्तानार्थो श्रुतिः स्मृतिः ।
एवमेतेषु सर्व्वेषु युगत्रयक्रमस्तथा ॥ ४२ ॥
परस्परं युगानाञ्च ब्रह्मक्षत्रस्य चोद्भवः ।
यथा वै प्रकृतिस्तेभ्यः प्रवृत्तानां यथाक्षयं ॥ ४३ ॥
जामदग्न्येन रामेण क्षत्रे निरवशेषिते ।
क्रियन्ते कुलटाः सर्वाः क्षत्रियैर्वसुधाधिपैः ।
द्विवङ्गतानहन्तुभ्यं कीर्त्तयिष्ये निबोधत ॥ ४४ ॥
ऐड़मिक्ष्वाकुवंशस्य प्रकृतिं परिचक्षते ।
राजानः श्रेणिबद्धास्तु तथाऽन्ये क्षत्रिया भुवि ॥ ४५ ॥
ऐडवंशेऽथ सम्भूता यथा चेक्ष्वाकवो नृपाः ।
तेभ्य एव शतं पूर्णं कुलानामभिषेचितं ॥ ४६ ॥
तावदेव तु भोजानां विस्तरो द्विगुणः स्मृतः ।
भोजन्तु त्रिशतं क्षत्र चतुर्द्धा तद्यथादिशं ॥ ४७ ॥
तेष्वतीतास्तु राजानो ब्रुवतस्तान्निबोधत ।
शतं वै प्रतिविन्ध्यानां हैहयानां तथा शतं ॥ ४८ ॥
धार्त्तराष्ट्रास्त्वेकशतं अशीतिर्जनमेजयाः ।
शतं वै ब्रह्मदत्तानां कुलानां वीर्य्यिणां शतं ॥ ४९ ॥
ततः श तन्तु पौलानां शतं काशिकुशादयः ।
तथाऽपरं सहस्रन्तु येऽतीताः शशविन्दवः ।
इजानास्तेऽश्वमेधैस्तु सर्वे नियुतदक्षिणैः ॥ ५० ॥

एवं संक्षेपतः प्रोक्ता न शक्या विस्तरेण तु ।
वक्तुं राजर्षयः कृत्स्ना येऽतीतास्तैर्युगैः सह ॥ ५१ ॥
एते ययातिवंशस्य बभूवुर्वंशवर्द्धनाः ।
कीर्त्तिताः द्युतिमन्तस्ते ये लोकान् धारयन्ति वै(१)॥ ५२॥
लभन्ते च वरान्पञ्च दुर्लभान् ब्रह्मलौकिकान् ।
आयुः पुत्रा धनङ्कीर्त्तिरैश्वर्य्यं भूतिरेव च ॥ ५३ ॥
धारणाच्छ्रवणाच्चैव पञ्चवर्गस्य धीमतां ।
तथोक्ता लौकिकाश्चैव ब्रह्मलोकं व्रजन्ति वै ॥ ५४ ॥
चत्वार्य्याहुः सहस्राणि वर्षाणाञ्च कृतं युगं ।
तस्य तावच्छती सन्ध्या सन्ध्यांशश्च तथाविधः ॥ ५५ ॥
कृते वै प्रक्रियापादश्चतुःसाहस्र उच्यते ।
तस्माच्चतुःशतं सन्ध्या सन्ध्यांशश्च तथाविधः ॥ ५६ ॥
त्रेतादीनि सहस्राणि संख्यया मुनिभिः सह ।
तस्यापि त्रिशती सन्ध्या सन्ध्यांशस्त्रिशतः स्मृतः ॥ ५७ ॥
अनुषङ्गपादस्त्रेतायास्त्रिसाहस्रस्तु संख्यया ।
द्वापरे द्वे सहस्रे तु वर्षाणां सम्प्रकीर्त्तितं ॥ ५८ ॥
तस्यापि द्विशती सन्ध्या सन्ध्यांशो द्विशतस्तथा ।
उपोद्‌घातस्तृतीयस्तु द्वापरे पाद उच्यते ॥ ५९ ॥
कलिं वर्षसहस्रन्तु प्राहुः संख्याविदो जनाः ।
तस्यापि शतिका सन्ध्या सन्ध्यांशः शतमेव च ॥ ६० ॥
संहारपादः संख्यातश्चतुर्थो वै कलौ युगे ।
ससन्ध्यानि सहांशानि चत्वारि तु युगानि वै ॥ ६१ ॥

---

१ सर्वे धर्मःपरायणा इति ख० ।

एतत् द्वादशसाहस्रं चतुर्युगमिति स्मृतं ।
एवं पादैः सहस्राणि श्लोकानां पञ्च पञ्च च ॥ ६२ ॥
सन्ध्यासन्ध्यांशकैरेव द्वे सहस्रे तथाऽपरे ।
एवं द्वादशसाहस्रं पुराणं कवयो विदुः ॥ ६३ ॥
यथा वेदश्चतुष्पादश्चतुष्पादं तथा युगं ।
यथा युगश्चतुष्पादं विधात्रा विहितं स्वयं ।
चतुष्पादं पुराणान्तु ब्रह्मणा विहितं पुरा ॥ ६४ ॥

इति श्रीमहापुराणे वायुप्रोक्ते युगधर्म्मनिरूपणं नाम द्वात्रिंशोऽध्यायः ।

---

# अथ त्रयस्त्रिंशोऽध्याय।

———000@000———

## स्वायम्भुववंशवर्णनं।

सूत उवाच। मन्वन्तरेषु सर्वेषु अतीतानागतेष्विह।
तुल्याभिमानिनः सर्वे जायन्ते नामरूपतः॥ १॥
देवाश्च विविधा ये च तस्मिन् मन्वन्तरेऽधिपाः।
ऋषयो मानवाश्चैव सर्वे तुल्याभिमानिनः॥ २॥
महर्षिसर्गः प्रोक्तो वै वंशं स्वायम्भुवस्य तु।
विस्तरेणानुपूर्व्या च कीर्त्यमानं निबोधत॥ ३॥
मनोः स्वायम्भुवस्यासन्दश पौत्रास्तु तत्समाः।
यैरियं पृथिवी सर्वा सप्तद्वीपसमन्विता(१)॥ ४॥
ससमुद्रा करवती प्रतिवर्षन्निवेशिता।
स्वायम्भुवेऽन्तरे पूर्वमाद्ये त्रेतायुगे तदा॥ ५॥
प्रियव्रतस्य पुत्रैस्तैः पौत्रैः स्वायम्भुवस्य तु।
प्रजासर्गतपोयोगैस्तैरियं विनिवेशिता॥ ६॥
प्रियव्रतात् प्रजावन्तः(२) वीरात् कन्या व्यजायत।
कन्या सा तु महाभागा कर्द्दमस्य प्रजापतेः॥ ७॥
कन्ये द्वे शतपुत्रांश्च सम्राट् कुक्षिश्च ते उभे।
तयोर्वै भ्रातरः शूराः प्रजापतिसमा दश॥ ८॥

---

१ सप्तद्वीपा सपत्तना इति घ०, ङ० च।

२ पाठोऽयं न समीचीनः।

अग्नीध्रश्च वपुष्मांश्च(१) मेधा मेधातिथिर्विभुः।
ज्योतिष्मान् द्युतिमान् हव्यः सवनः सर्व्व एव च(२) ॥९॥
प्रियव्रतोऽभिषिच्यैतान् सप्त सप्तसु पार्थिवान्।
द्वीपेषु तेषु धर्मेण द्वीपांस्तांश्च निबोधत ॥१०॥
जम्बूद्वीपेश्वरं चक्रे अग्नीध्रन्तु महाबलं।
प्लक्षद्वीपेश्वरस्यापि तेन मेधातिथिः कृतः ॥११॥
शाल्मलौ तु वपुष्मन्तं राजानमभिषिक्तवान्।
ज्योतिष्मन्तं कुशद्वीपे राजानं कृतवान् प्रभुः ॥१२॥
द्युतिमन्तञ्च राजानं क्रौञ्चद्वीपे समादिशत्।
शाकद्वीपेश्वरञ्चापि हव्यञ्चक्रे प्रियव्रतः ॥१३॥
पुष्कराधिपतिञ्चापि सवनं कृतवान् प्रभुः।
पुष्करे सवनस्यापि महावीतः सुतोऽभवत्।
धातकिश्चैव द्वावेतौ पुत्रौ पुत्रवतां वरौ ॥१४॥
महावीतं स्मृतं वर्षं तस्य नाम्ना महात्मनः।
नाम्ना तु धातकेश्चापि धातकीखण्ड उच्यते ॥१५॥
हव्यो व्यजनयत् पुत्रान् शाकद्वीपेश्वरान् प्रभुः।
जलदश्च कुमारश्च सुकुमारं मणीचकं(३)।
वसुमोदं सुमोदाकं सप्तमञ्च महाद्रुमं ॥१६॥
जलदं जलदस्याथ वर्षं प्रथममुच्यते।
कुमारस्य च कौमारं द्वितीयं परिकीर्त्तितं ॥१७॥

---

१ अग्नीध्रश्चाग्निबाहुश्चेति ग०, ङ० च।
२ सत्य एव चेति ख०। पुत्र एव चेति ङ०।
३ मनीचकस्थाने सर्व्वत्र मनीवकेति ग०पुस्तकपाठः।

सुकुमारं तृतीयन्तु सुकुमारस्य कीर्त्तितं ।
मणीचकस्य चतुर्थं मणीचकमिहोच्यते ॥ १८ ॥
वसुमोदस्य वै वर्षं पञ्चमं वसुमोदकं ।
मोदाकस्य तु मोदाकं वर्षं षष्ठं प्रकीर्त्तितं ॥ १९ ॥
महाद्रुमस्य नाम्ना तु सप्तमन्तु महाद्रुमं ।
एषान्तु नामभिस्तानि सप्तवर्षाणि तत्र वै ॥ २० ॥
क्रौञ्चद्वीपेश्वरस्यापि पुत्रा द्युतिमतस्तु वै ।
कुशलो मनुगश्चोष्णः पीवरश्चान्धकारकः ।
मुनिश्च दुन्दुभिश्चैव सुता द्युतिमतस्तु वै ॥ २१ ॥
तेषां स्वनामभिर्देशाः क्रौञ्चद्वीपाश्रयाः शुभाः ।
उष्णस्योष्णः स्मृतो देशः पीवरस्यापि पीवरः ॥ २२ ॥
अन्धकारकदेशस्तु अन्धकारश्च कीर्त्त्यते ।
मुनेस्तु मुनिदेशो वै दुन्दुभेर्दुन्दुभिः स्मृतः ।
एते जनपदाः सप्त क्रौञ्चद्वीपे तु भास्वराः ॥ २३ ॥
ज्योतिष्मतः कुशद्वीपे सप्तैते सुमहौजसः ।
उद्भिदो वेणुमांश्चैव स्वैरथो लवणो धृतिः ।
षष्ठः प्रभाकरश्चैव सप्तमः कपिलः स्मृतः ॥ २४ ॥
उद्भिदं प्रथमं वर्षं द्वितीयं वेणुमण्डलं ।
तृतीयं स्वैरथाकारं चतुर्थं लवणं स्मृतं ॥ २५ ॥
पञ्चमं धृतिमद्वर्षं षष्ठं वर्षं प्रभाकारं ।
सप्तमं कपिलं नाम कपिलस्य प्रकीर्त्तितं ॥ २६ ॥
तेषां द्वीपाः कुशद्वीपे तत्सनामान एव तु ।
आश्रमाचारयुक्ताभिः प्रजाभिः समलङ्कृताः ॥ २७ ॥

शाल्मलस्येश्वराः सप्त पुत्रास्ते तु वपुष्मतः ।
श्वेतश्च हरितश्चैव जीमूतो रोहितस्तथा ।
वैद्युतो मानसश्चैव सुप्रभः सप्तमस्तथा ॥ २८ ॥
श्वेतस्य श्वेतदेशस्तु रोहितस्य च रोहितः ।
जीमूतस्य च जीमूतो हरितस्य च हारितः ॥ २९ ॥
वैद्युतो वैद्युतस्यापि मानसस्यापि मानसः ।
सुप्रभः सुप्रभस्यापि सप्तैते देशपालकाः ॥ ३० ॥
सप्तद्वीपे तु वक्ष्यामि जम्बुद्वीपादनन्तरं ।
सप्त मेधातिथेः पुत्राः प्लक्षद्वीपेश्वरा नृपाः ॥ ३१ ॥
ज्येष्ठः शान्तभयस्तेषां सप्तवर्षाणि तानि वै ।
तस्माच्छान्तभयाच्चैव(१) शिशिरस्तु सुखोदयः ।
आनन्दश्च ध्रुवश्चैव क्षेमकश्च शिवस्तथा ॥ ३२ ॥
तानि तेषां सनामानि सप्तवर्षाणि भागशः ।
निवेशितानि तैस्तानि पूर्वे स्वायम्भुवेऽन्तरे ॥ ३३ ॥
मेधातिथेस्तु पुत्रैस्तैः सप्तद्वीपनिवासिभिः ।
वर्णाश्रमाचारयुक्ताः प्लक्षद्वीपे प्रजाः कृताः ॥ ३४ ॥
प्लक्षद्वीपादिकेष्वेव शाकद्वीपान्तरेषु वै ।
ज्ञेयः पञ्चसु धर्मो वै वर्णाश्रमविभागशः ॥ ३५ ॥
सुखमायुश्च रूपञ्च बलं धर्मश्च नित्यशः ।
पञ्चस्वेतेषु द्वीपेषु सर्वं साधारणं स्मृतं ॥ ३६ ॥
सप्तद्वीपपरिक्रान्तं(२) जम्बूद्वीपं निबोधत ।

१ शान्तमुखाच्चैवेति क०, घ० च।
२ पुष्करद्वीपपरिक्रान्तमिति ख०, घ० च।

अग्नीध्रं ज्येष्ठदायादं कन्यापुत्रं महाबलं ।
प्रियव्रतोऽभ्यषिञ्चत्तं जम्बूद्वीपेश्वरं नृपं ॥ ३७ ॥
तस्य पुत्रा बभूवुर्हि प्रजापतिसमौजसः ।
ज्येष्ठो नाभिरिति ख्यातस्तस्य किंपुरुषोऽनुजः ॥ ३८ ॥
हरिवर्षस्तृतीयस्तु चतुर्थोऽभूदिलावृतः ।
रम्यः स्यात्पञ्चमः पुत्रो हरिण्मान् षष्ठ उच्यते ॥ ३९ ॥
कुरुस्तु सप्तमस्तेषां भद्राश्वो ह्यष्टमः स्मृतः ।
नवमः केतुमालस्तु तेषां देशान्निबोधत ॥ ४० ॥
नाभेस्तु दक्षिणं वर्षं हिमाह्वन्तु(१) पिता ददौ ।
हेमकूटन्तु यद्वर्षं ददौ किंपुरुषाय तत् ॥ ४१ ॥
नैषधं यत् स्मृतं वर्षं हरिवर्षाय तद्ददौ ।
मध्यमं यत्सुमेरोस्तु स ददौ तदिलावृते ॥ ४२ ॥
नीलन्तु यत्स्मृतं वर्षं रम्यायैतत् पिता ददौ ।
श्वेतं यदुत्तरं तस्मात् पित्रा दत्तं हरिण्मते(२) ॥ ४३ ॥
यदुत्तरं शृङ्गवतो वर्षं तत् कुरवे ददौ ।
वर्षं माल्यवतश्चापि भद्राश्वाय न्यवेदयेत् ॥ ४४ ॥
गन्धमादनवर्षन्तु केतुमाले न्यवेदयत् ।
इत्येतानि महान्तीह नववर्षाणि भागशः ॥ ४५ ॥
अग्नीध्रस्तेषु सर्व्वेषु पुत्रांस्तानभ्यषिञ्चत ।
यथाक्रमं स धर्म्मात्मा ततस्तु तपसि स्थितः ॥ ४६ ॥
इत्येतैः सप्तभिः कृत्स्नाः सप्तद्वीपा निवेशिताः ।

---

१ प्रीत्या नाम्ने इति ख० ।

२ हरिण्मतः स्थाने सर्व्वत्र हिरण्मदितिपाठः ख०, घ०चिह्नितपुस्तके वर्त्तते ।

प्रियव्रतस्य पुत्रैस्तैः पौत्रैः स्वायम्भुवस्य तु ॥ ४७ ॥
यानि किम्पुरुषाद्यानि वर्षाण्यष्टौ शुभानि तु ।
तेषां स्वभावतः सिद्धिः सुखप्राया ह्ययत्नतः ॥ ४८ ॥
विपर्य्ययो न तेष्वस्ति जरामृत्युभयं न च ।
धर्म्माधर्म्मौ न तेष्वास्तां नोत्तमाधममध्यमाः ।
न तेष्वस्ति युगावस्था क्षेत्रेष्वेव तु सर्व्वशः ॥ ४९ ॥
नाभेर्हि सर्गं वच्यामि हिमाह्वे तन्निबोधत ।
नाभिस्त्वजनयत् पुत्रं मरुदेव्यां महाद्युतिः(१) ।
ऋषभं पार्थिवश्रेष्ठं सर्व्वचत्रस्य पूर्व्वजं ॥ ५० ॥
ऋषभाद्भरतो जज्ञे वीरः पुत्रशताग्रजः ।
सोऽभिषिच्याथ भरतः पुत्रं प्राव्राज्यमास्थितः ॥ ५१ ॥
हिमाह्वं दक्षिणं वर्षं भरताय न्यवेदयत् ।
तस्मात्तद्भारतं वर्षं तस्य नाम्ना विदुर्बुधाः ॥ ५२ ॥
भरतस्यात्मजो विद्वान् सुमतिर्नाम धार्म्मिकः ।
बभूव तस्मिंस्तद्राज्यं भरतः संन्ययोजयत् ।
पुत्रसंक्रामितश्रीको वनं राजा विवेश सः ॥ ५३ ॥
तेजसस्तु सुतश्चापि प्रजापतिरमित्रजित् ।
तैजसस्यात्मजो विद्वान् इन्द्रद्युम्न इतिश्रुतः ॥ ५४ ॥
परमेष्ठी सुतश्चाथ निधने तस्य शोभनः ।
प्रतीहारकुले तस्य नाम्ना जज्ञे तदन्वयात् ।
प्रतिहर्त्तेति विख्यातो जज्ञे तस्यापि धीमतः ॥ ५५ ॥

---

१ महाद्युतिमिति क० ।

उन्नेता प्रतिहर्त्तुस्तु भुवस्तस्य सुतः स्मृतः ।
उद्गीथस्तस्य पुत्रोऽभूत्प्रतापिश्चापि(१) तत्सुतः ॥ ५६ ॥
प्रतापेस्तु(२) विभुः पुत्रः पृथुस्तस्य सुतो मतः ।
पृथोश्चापि सुतो नक्तो नक्तस्यापि गयः स्मृतः ॥ ५७ ॥
गयस्य तु नरः पुत्रो नरस्यापि सुतो विराट् ।
विराट्सुतो महावीर्य्यो धीमांस्तस्य सुतोऽभवत् ॥ ५८ ॥
धीमतश्च महान् पुत्रो महतश्चापि भौवनः ।
भौवनस्य सुतस्त्वष्टा अरिजस्तस्य चात्मजः ॥ ५९ ॥
अरिजस्य रजः पुत्रः शतजिद्रजसो मतः ।
तस्य पुत्रशतन्त्वासीद्राजानः सर्व्व एव ते ॥ ६० ॥
विश्वज्योतिःप्रधाना यैस्तैरिमा वर्द्धिताः प्रजाः ।
तैरिदं भारतं वर्षं सप्तखण्डं कृतं पुरा(३) ॥ ६१ ॥
तेषां वंशप्रसूतैस्तु भुक्तेयं भारती धरा ।
कृतत्रेतादियुक्तानि युगाख्यान्येकसप्तति: ॥ ६२ ॥
येऽतीतास्तैर्युगैः सार्द्धं राजानस्ते तदन्वयाः ।
स्वायम्भुवेऽन्तरे पूर्व्वं शतशोऽथ सहस्रशः ॥ ६३ ॥
एष स्वायम्भुवः सर्गो येनेदं पूरितं जगत् ।
ऋषिभिर्देवतैश्चापि पितृगन्धर्व्वराक्षसैः ॥ ६४ ॥
यक्षभूतपिशाचैश्च मनुष्यमृगपक्षिभिः ।
तेषां सृष्टिरियं लोके युगैः सह विवर्त्तते ॥ ६५ ॥

इति श्रीमहापुराणे वायुप्रोक्ते स्वायम्भुववंशानुकीर्त्तनं नाम त्रयस्त्रिंशोऽध्यायः ।

---

१ प्रगाथश्चापीति ख० । प्रस्ताविश्चापीति ङ० ।
२ प्रगाथस्येति ख० । प्रस्तावेस्त्विति ङ० । ३ सप्तद्वीपमिहाम्बिकमिति घ०, ङ० च ।

# अथ चतुस्त्रिंशोऽध्यायः ।

## जम्बुद्वीपवर्णनं ।

———ooo———

ऋषय ऊचुः । एवं प्रजासन्निवेशं श्रुत्वा च ऋषिपुङ्गवः ।
पप्रच्छ निपुणः सूतं पृथिव्यायामविस्तरौ ॥ १ ॥
कति द्वीपाः समुद्रा वा पर्व्वताश्च कति प्रभो ।
कियन्ति चैव वर्षाणि तेषु नद्यश्च काः स्मृताः ॥ २ ॥
महाभूतप्रमाणञ्च लोकालोकौ तथैव च ।
पर्य्यायपारिमाण्यञ्च गतिश्चन्द्रार्कयोस्तथा ।
एतत् प्रब्रूहि नः सर्व्वं विस्तरेण यथा तथा ॥ ३ ॥
सूत उवाच । अत ऊर्द्ध्वं प्रवक्ष्यामि पृथिव्यायामविस्तरं ।
सङ्ख्याश्चैव समुद्राणां द्वीपानाञ्चैव विस्तरं ॥ ४ ॥
यावन्ति चैव वर्षाणि तेषु नद्यश्च याः स्मृताः ।
महाभूतप्रमाणञ्च लोकालोकौ तथैव च ।
पर्य्यायपारिमाण्यञ्च(१) गतिश्चन्द्रार्कयोस्तथा ॥ ५ ॥
द्वीपभेदसहस्राणि सप्तस्वन्तर्गतानि वै ।
न शक्यन्ते प्रमाणेन वक्तुं वर्षशतैरपि ॥ ६ ॥
सप्तद्वीपन्तु वक्ष्यामि चन्द्रादित्यग्रहैः सह ।
येषां मनुष्यास्तर्केण प्रमाणानि प्रचक्षते ॥ ७ ॥
अचिन्त्याः खलु ये भावा न तांस्तर्केण भावयेत् ॥
प्रकृतिभ्यः परं यच्च तन्नित्यञ्च प्रचक्ष्यते(२) ॥ ८ ॥

---

१ पर्य्यायपरिमाणञ्चेति ख० । २ प्रभाषत इति घ०, ङ० च ।

नववर्षं प्रवक्ष्यामि जम्बूद्वीपं यथा तथा ।
विस्तरान् मण्डलाच्चैव योजनैस्तन्निबोधत ॥ ९ ॥
शतमेकं सहस्राणां योजनानां प्रमाणतः ।
नानाजनपदाकीर्णैः पुरैश्च विविधैः शुभैः ॥ १० ॥
सिद्धचारणगन्धर्व्वपर्व्वतैरुपशोभितं ।
सर्व्वधातुनिबद्धैश्च शिलाजालसमुद्भवैः ।
पर्व्वतप्रभवाभिश्च नदीभिः पर्व्वतैस्तथा ॥ ११ ॥
(जम्बूद्वीपः पृथुः श्रीमान् सर्व्वतः परिवारितः ।
नवभिश्चावृतः सर्व्वैर्भुवनैर्भूतभावनैः ।
लावणेन समुद्रेण सर्व्वतः परिवारितः ॥ १२ ॥
जम्बूद्वीपस्य विस्तारात् समेन तु समन्ततः ।
प्रागायताः सुपर्व्वाणः षडिमे वर्षपर्व्वताः ।
अवगाढ़ा उभयतः समुद्रौ पूर्व्वपश्चिमौ ॥ १३ ॥
हिमप्रायश्च हिमवान् हेमकूटश्च हेमवान् ।
तरुणादित्यवर्णाभो हैरण्यो निषधः स्मृतः ॥ १४ ॥
चातुवर्णस्तु सौवर्णो मेरुश्चोच्चतमः स्मृतः ।)
वृत्ताकृतिप्रमाणश्च(१) चतुरस्रः समुच्छ्रितः ॥ १५ ॥
नानावर्णस्तु पार्श्वेषु प्रजापतिगुणान्वितः ।
नाभिबन्धनसम्भूतो ब्रह्मणोऽव्यक्तजन्मनः ॥ १६ ॥
पूर्व्वतः श्वेतवर्णोऽसौ ब्राह्मण्यं तस्य तेन तत् ।

---

१ चतुर्लक्षप्रमाणश्चेति ख० ।

पीतस्य दक्षिणेनासौ तेन वैश्यत्वमिष्यते(१) ॥ १७ ॥
भृङ्गपत्रनिभश्चासौ पश्चिमेन महाबलः ।
तेनास्य शूद्रता दृष्टा मेरोर्नानार्थकारणात् ॥ १८ ॥
पार्श्वमुत्तरतस्तस्य रक्तवर्णं स्वभावतः ।
तेनास्य क्षत्रता च स्यादिति वर्णाः प्रकीर्तिताः ।
व्यक्तः स्वभावतः प्रोक्तो वर्णतः परिमाणतः ॥ १९ ॥
नीलश्च वैदूर्य्यमयः श्वेतशृङ्गो हिरण्मयः ।
मयूरबर्हवर्णस्तु शातकौम्भस्तु शृङ्गवान् ॥ २० ॥
एते पर्व्वतराजानः सिद्धचारणसेविताः ।
तेषामन्तरविष्कम्भो नवसाहस्र उच्यते ॥ २१ ॥
(मध्ये त्विलावृतं यस्तु महामेरोः समन्ततः ।
नवैव तु सहस्राणि विस्तीर्णः पर्व्वतस्तु सः ।
मध्ये तस्य महामेरोर्निर्धूम इव पावकः ॥ २२ ॥
वेद्यर्द्धं दक्षिणं मेरोरुत्तरार्द्धं तथोत्तरं ।
वर्षाणि यानि सप्तात्र तेषां ये वर्षपर्व्वताः ।
द्वे द्वे सहस्रे विस्तीर्णा योजनानि समुच्छ्रयात् ॥ २३ ॥
जम्बूद्वीपस्य विस्तारात्तेषामायाम उच्यते ।
योजनानां सहस्राणि शते द्वे मध्यमौ गिरी ॥ २४ ॥
नीलश्च निषधश्चैव ताभ्यां हीनास्तु येऽपरे(२) ।
श्वेतश्च हेमकूटश्च हिमवान् शृङ्गवांश्च यः ॥ २५ ॥
नवति,द्वावशीतिर्द्वौ सहस्राण्यायतास्तु ये ।

१ वैश्यत्वमीप्सत इति ख० ।
२ द्वावेतौ च समन्वितावित्ति ख० ।

तेषां मध्ये जनपदास्तानि वर्षाणि सप्त वै ॥ २६ ॥)
सम्पातविषमैस्तैस्तु पर्व्वतैरावृतानि च ।
सन्ततानि नदीभेदैरगम्यानि परस्परं ।
वसन्ति तेषु सत्वानि नाना जातीनि भागशः ॥ २७ ॥
(इदं हैमवतं वर्षं भारतं नाम विश्रुतं ।
हेमकूटं परं तस्मान्नाम्ना किंपुरुषं स्मृतं ॥ २८ ॥
नैषधं हेमकूटन्तु हरिवर्षं तदुच्यते ।
हरिवर्षात्परञ्चैव मेरोश्च तदिलावृतं ॥ २९ ॥
इलावृतपरं नीलं रम्यकं नाम विश्रुतं ।
रम्यात्परतरं श्वेतं विश्रुतन्तद्धिरण्मयं ।
हिरण्मयात्परञ्चापि शृङ्गवांस्त कुरु स्मृतं ॥ ३० ॥
धनुःसंस्थे च विज्ञेये द्वे वर्षे दक्षिणोत्तरे ।
दीर्घाणि तत्र चत्वारि मध्यमन्तदिलावृतं ॥ ३१ ॥
अर्वाक् च निषधस्याथ वेद्यर्द्धं दक्षिणं स्मृतं ।
परं नीलवतो यच्च वेद्यर्द्धन्तु तदुत्तरं ।
वेद्यर्द्धे दक्षिणे त्रीणि वर्षाणि त्रीणि चोत्तरे ॥ ३२ ॥
तयोर्मध्ये तु विज्ञेयं मेरुमध्यमिलावृतं ।
दक्षिणेन तु नीलस्य निषधस्योत्तरेण तु ॥ ३३ ॥
उदगायतो महाशैलो माल्यवान्नाम पर्व्वतः ।
योजनानां सहस्रोऽपरानीलनिषधायतः ।
आयामतश्चतुस्त्रिंशत्सहस्राणि प्रकीर्तितः ॥ ३४ ॥
तस्य प्रतीच्यां विज्ञेयः पर्वतो गन्धमादनः ।
•आयामादथ विस्ताराच्चाल्यवानिति विश्रुतः ॥ ३५ ॥)

परिमण्डलयोर्मध्ये मेरुरुत्तमपर्वतः ।
चतुर्वर्णः सुसौवर्णश्चतुरस्रः समुच्छ्रितः ।
अव्यक्ता धातवः सर्व्वे समुत्पन्ना जलादयः ॥ ३६ ॥
अव्यक्तात् पृथिवीपद्मं मेरुपर्वतकर्णिकं ।
चतुष्पथं समुत्पन्नं व्यक्तं पञ्चगुणं महत् ॥ ३७ ॥
ततः सर्व्वाः समुत्पन्ना वृत्तयो द्विजसत्तमाः ।
नैककल्पार्जितैः पुण्यैर्विविधैः प्रागुपार्जितैः ॥ ३८ ॥
कृतात्मभिर्विनीतात्मा महात्मा पुरुषोत्तमः ।
महादेवो महायोगी जगज्ज्येष्ठो महेश्वरः ।
सर्वलोकगतोऽनन्तो ह्यमूर्तित्वादजायत ॥ ३९ ॥
न तस्य प्राकृतामूर्त्तिर्मांसमेदोऽस्थिसम्भवा ।
योगाच्चैवेश्वरत्वाच्च सर्व्वात्मागत एव(१) सः ॥ ४० ॥
तन्निमित्तं समुत्पन्नं लोकपद्मं सनातनं ।
कल्पशेषस्य तस्यादौ कालस्य गतिरीदृशी ॥ ४१ ॥
तस्मिन् पद्मे समुत्पन्नो देवदेवश्चतुर्भुजः ।
प्रजापतिपतिर्ब्रह्मा ईशानो जगतः प्रभुः ॥ ४२ ॥
तस्य बीजानि सर्गो हि पुष्करस्य यथार्थवत् ।
कृत्स्नः प्रजानिसर्गेण विस्तरेणेह कथ्यते ॥ ४३ ॥
यदङ्गं वैष्णवं कार्य्यं ततस्तन्नाभितोऽभवत् ।
पद्माकारा समुत्पन्ना पृथिवी सवनद्रुमा ॥ ४४ ॥
तदस्य लोकपद्मस्य विस्तरेण प्रकाशितं ।

---

१ सर्वंथागत एवेति ख० ।

वर्णमानं विभागेन क्रमशः शृणुत द्विजाः ॥ ४५ ॥
महाद्वीपास्तु विख्यातास्त्वारः पत्रसंस्थिताः ।
ततः कर्णिकसंस्थानो मेरुर्नाम महाबलः ॥ ४६ ॥
नानावर्णेषु पार्श्वेषु पूर्वतः श्वेत उच्यते ।
पीतन्तु दक्षिणं तस्य शृङ्गं कृष्णं तथाऽपरं ॥ ४७ ॥
उत्तरं तस्य रक्तं वै शोभिवर्णसमन्वितं ।
मेरुस्तु शोभते शुभ्रो राजवत्स तु धिष्ठितः ॥ ४८ ॥
तरुणादित्यवर्णाभो विधूम इव पावकः ।
चतुरशीतिसाहस्र उत्सेधेन प्रकीर्त्तितः ॥ ४९ ॥
प्रविष्टः षोड़शाधस्ताद्विस्तृतस्तावदेव तु ।
स शरावस्थितः पूर्व्वं द्वात्रिंशन्मूर्द्धि विस्तृतः ॥ ५० ॥
विस्तारात् त्रि गुणश्चास्य परिणाहः समन्ततः ।
मण्डलेन प्रमाणेन त्र्यस्रेऽर्द्धन्तु तदिष्यते ॥ ५१ ॥
चत्वारिंशत्सहस्राणि योजनानां समन्ततः ।
अष्टाभिरधिकानि स्युः त्र्यस्रे माने प्रकीर्त्तितं ॥ ५२ ॥
चतुरस्रेण मानेन परिणाहः समन्ततः ।
चतुःषष्टिसहस्राणि योजनानां विधीयते ॥ ५३ ॥
स पर्वतो महादिव्यो दिव्यौषधिसमन्वितः ।
भुवनैरावृतः सर्वो जातरूपमयैः शुभैः ॥ ५४ ॥
तत्र देवगणाः सर्वे गन्धर्वोरगराक्षसाः ।
शैलराजैः प्रहृष्यन्ते शुभाश्चाप्सरसाङ्गणाः ॥ ५५ ॥
स तु मेरुः परिवृतो भुवनैर्भूतभावनः ।
चत्वारो यस्य देशा वै नानापार्श्वेष्वधिष्ठिताः ॥ ५६ ॥

भद्राश्वो भरतश्चैव केतुमालश्च पश्चिमः।
उत्तराः कुरवश्चैव कृतपुण्यप्रतिश्रयाः॥ ५७॥
कर्णिका तस्य पद्मस्य समन्तात्परिमण्डला।
योजनानां सहस्राणि नवतिः षट् प्रकीर्त्तिताः।
चत्वार्य्याप्यशीतिश्च अन्तरान्तरधिष्ठिताः॥ ५८॥
त्रिशतञ्च सहस्राणि योजनानां प्रमाणतः।
तस्य केशरजालानि विस्तीर्णानि समन्ततः॥ ५९॥
शतसाहस्रिकायामा साशीतिपृथुलायता।
चत्वारि तस्य पत्राणि योजनानाञ्चतुर्द्दिशं॥ ६०॥
तत्र याऽसौ मया पूर्वं कर्णिकेत्यभिशब्दिता।
तां वर्ण्यमानामेकाग्राः समासेन निबोधत॥ ६१॥
शतास्त्रिमेनं मेनेऽत्रिः सहस्रास्त्रिमृषिर्भृगुः।
अष्टास्त्रिमेनं सावर्णिश्चतुरस्त्रन्तु भागुरिः॥ ६२॥
वर्षायणिस्तु सामुद्रं शरावञ्चैव गालवः।
ऊर्द्ध्ववेणीकृतञ्जार्ग्यः क्रोष्टुकिः परिमण्डलं॥ ६३॥
यद्यद्दृश्यस्य हि यत्पार्श्वं पर्वताधिपतेर्ऋषिः।
तत्तदेवास्य वेदासौ ब्रह्मैनं वेद कृत्स्नशः॥ ६४॥
मणिरत्नमयं चित्रं नानावर्णप्रभायुतं।
अनेकवर्णनिचयं सौवर्णमरुणप्रभं॥ ६५॥
कान्तं सहस्रपर्वाणं सहस्रोदककन्दरं।
सहस्रशतपत्रन्तं विद्धि मेरुमशोत्तमं॥ ६६॥
मणिरत्नार्पितस्तम्भैर्मणिचित्रितवेदिकैः।
सुवर्णमणिचित्राङ्गं तथा विद्रुमतोरणैः॥ ६७॥

विमानयानैः श्रीमद्भिः शतसङ्ख्यैर्दिवौकसां ।
प्रभादीपितपर्य्यन्तं मेरुं पर्व्वणि पर्व्वणि ॥ ६८ ॥
तस्य पर्व्वसहस्रेऽस्मिन् नानाश्चर्य्यविभूषिते(१) ।
सर्व्वदेवनिकायानि सन्निविष्टान्यनेकशः ॥ ६९ ॥
तमावसत्पीठतले(२) देवदेवश्चतुर्मुखः ।
ब्रह्मा ब्रह्मविदां श्रेष्ठो वरिष्ठस्त्रिदिवौकसां ॥ ७० ॥
महाभुवनसम्पूर्णैः सर्व्वैः कामफलप्रदैः(३) ।
महासुरसहस्रैस्तं दिक्ष्वनेकसमाकुलं ॥ ७१ ॥
तत्र ब्रह्मसभा रम्या ब्रह्मर्षिगणसेविता ।
नाम्ना मनोवती नाम सर्व्वलोकेषु विश्रुता ॥ ७२ ॥
तत्रेशानस्य देवस्य सहस्रादित्यवर्च्चसं ।
महाविमानं संस्थाप्य महिम्ना वर्त्तते सदा ॥ ७३ ॥
तत्र सर्षिगणा देवाश्चतुर्व्वक्त्रस्य ते तदा(४) ।
तदेव तेजसां राशिर्देवानां तत्र कीर्त्त्यते ॥ ७४ ॥
तत्रास्ते श्रीपतिः श्रीमान् सहस्राक्षः पुरन्दरः ।
उपास्यमानस्त्रिदशैर्महायोगैः सुरर्षिभिः ॥ ७५ ॥
तत्र लोकपतेः स्थानमादित्यसमवर्च्चसः ।
महेन्द्रस्य महाराज्ञः सर्व्वसिद्धैर्नमस्कृतं ॥ ७६ ॥
तमिन्द्रलोकं लोकस्य ऋद्ध्या परमया युतं ।
दीप्यते त्वमरश्रेष्ठैस्त्रिदशैर्नित्यसेवितं ॥ ७७ ॥

---

१ नानाश्रमविभूषिते इति ख० ।
२ तेषां मध्ये सुरश्रेष्ठ इति ख० ।
३ कामगुणोत्तरैः इति ङ० ।
४ चतुर्वक्त्रस्य सन्निधाविति ङ० ।

द्वितीयेऽप्यन्तरतटे वैदिश्ये पूर्व्वदक्षिणे ।
नानाधातुशतैश्चित्रैः सुरम्यमतितेजसं ॥ ७८ ॥
नैकरत्नार्च्चिततलमनेकस्तम्भसंयुतं ।
जाम्बूनदकृततोरणं नानारत्नसुवेदिकं ॥ ७९ ॥
कूटागारैर्विनिश्चितमनेकैर्भवनोत्तमैः ।
महाविमानं प्रथितं भास्करं जातवेदसं ॥ ८० ॥
सा हि तेजोवती नाम हुताशस्य महासभा ।
साक्षात्तत्र सुरश्रेष्ठः सर्वदेवमुखोऽनलः ॥ ८१ ॥
शिखाशतसहस्राढ्यो ज्वालामाली विभावसुः ।
स्तूयते ह्रयते चैव तत्र सर्षिगणैः सुरैः ॥ ८२ ॥
अधिदैवकृतं विप्रैर्विशेषः स तु उच्यते ।
सविभागश्च तेजस्तु सर्वं एव(१) न संशयः ॥ ८३ ॥
भोगान्तरमनुप्राप्त एकतेजो विभुः स्मृतः ।
पृथक् त्वञ्च हि युक्त्या तु कार्य्यकारणमिश्रितं ॥ ८४॥
तमग्निं लोकलोकज्ञैस्तद्वीर्य्यैस्तत्पराक्रमैः ।
महात्मभिर्महासिद्धैर्महाभागैर्नमस्कृतं ॥ ८५ ॥
तृतीयेऽप्यन्तरतटे एवमेव महासभा ।
वैवस्वतस्य विज्ञेया लोके ख्याता सुसंयमा ॥ ८६॥
तथा चतुर्थदिग् देशे नैर्ऋत्याधिपतेः सभा ।
नाम्ना कृष्णाङ्गना नाम विरूपाक्षस्य धीमतः ॥ ८७ ॥
पञ्चमे ऽप्यन्तरतटे एवमेव महासभा ।

१ एक एवेति ख०, ग० च ।

वैवस्वतस्य विज्ञेया नाम्ना शुभवती सती(१) ।
उदकाधिपतेः ख्याता वरुणस्य महात्मनः ॥ ८८ ॥
परोत्तरे तथा देशे षष्ठेऽन्तरतटे शिवे ।
वायोर्गन्धवती नाम सभा सर्वगुणोत्तरा ॥ ८९ ॥
सप्तमेऽप्यन्तरतटे नक्षत्राधिपतेः सभा ।
नाम्ना महोदया नाम शुद्धवैदूर्य्यवेदिका ॥ ९० ॥
तथाऽष्टमेऽन्तरतटे ईशानस्य महात्मनः ।
यशोवती नाम सभा तप्तकाञ्चनसुप्रभा ॥ ९१ ॥
महाविमानान्येतानि दिक्ष्वष्टासु शुभानि हि ।
अष्टानां देवमुख्यानामिन्द्रादीनां महात्मनां ॥ ९२ ॥
ऋषिभिर्देवगन्धर्वैरप्सरोभिर्महोरगैः ।
सेवितानि महाभागैरुपस्थानगतैः सदा ॥ ९३ ॥
नाकपृष्ठं दिवं स्वर्गमिति यैः परिपठ्यते ।
वेदवेदाङ्गविद्भिर्हि शब्दैः पर्य्यायवाचकैः ॥ ९४ ॥
तदेतत् सर्वदेवानामधिवासे कृतात्मनां ।
देवलोके गिरौ तस्मिन् सर्व्वश्रुतिषु गीयते(२) ॥ ९५ ॥
नियमैर्विविधैर्यज्ञैर्व्वहुभिर्नियतात्मभिः ।
पुण्यैरन्यैश्च विविधैर्नैकजातिशतार्जितैः ।
प्राप्नोति देवलोकं तं स स्वर्ग इति चोच्यते ॥ ९६ ॥

इति श्रीमहापुराणे वायुप्रोक्ते जम्बुद्वीपवर्णनं नाम
चतुस्त्रिंशोऽध्यायः ।

---

१ सभेति ख० ।　　२ श्रुतिषु परिगीयत इति क०

## अथ पञ्चत्रिंशोऽध्यायः।

———000(D)000———

### जम्बुद्वीपवर्णनं।

सूत उवाच। यत्तद्वै कर्णिकामूलमिति वै संप्रकीर्तितं।

तद्योजनसहस्राणां सप्ततीनामधः स्मृतं ॥ १ ॥

चत्वारिंशत्तथाष्टौ च सहस्राण्यत्र मण्डलं।

शैलराजावृतं रम्यं मेरुमूलमिति श्रुतिः ॥ २ ॥

तेषां गिरिसहस्राणामनेकेषु महोच्छ्रिताः।

दिक्षु सर्वासु पर्य्यन्तैर्मर्य्यादाः पर्वताः स्मृताः ॥ ३ ॥

निकुञ्जकन्दरनदीगुहानिर्झरशोभिताः।

बहुप्रासादकटकैस्तटैश्च कुसुमोज्ज्वलैः ॥ ४ ॥

नितम्बपुष्पमालीवैः सानुभिर्धातुमण्डितैः।

शिखरैर्हेमकपिलैर्नैकप्रस्रवणावृतैः।

शोभिता गिरयः सर्व्वे पुष्टैरत्नसमर्पितैः ॥ ५ ॥

विहङ्गशतसंयुष्टैः कुञ्जैरनुपमैरपि।

सिंहशार्दूलशरभैर्नैकैश्चामरवारणैः।

नानावर्णाकृतिधरैः सेविता विविधैर्नगैः(१) ॥ ६ ॥

सप्ताश्वहरिकृष्णाङ्गमेकैकं दशपर्व्वतं(२)।

बाह्यमाभ्यन्तरा ये तु त्रिवाहास्तु समाः स्मृताः ॥ ७ ॥

(जठरो देवकूटश्च पूर्वस्यां दिशि पर्वतौ।

---

१ सेविता विविधैर्नागैस्तथा पश्चिमगैरपीति ख०।

२ श्लोकार्द्धमिदं न समीचीनं।

तौ दक्षिणोत्तरायामावानीलनिषधायतौ ॥ ८ ॥
कैलासो हिमवांश्चैव दक्षिणोत्तरपर्वतौ ।
पूर्वपश्चायतावेतावर्णवान्तर्व्यवस्थितौ ॥ ९ ॥
योऽसौ मेरुर्द्विजश्रेष्ठाः प्रांशुः कनकपर्वतः ।
विष्कम्भं तस्य वक्ष्यामि तन्मे निगदतः शृणु ॥ १० ॥
महापादास्तु चत्वारो मेरोरथ चतुर्दिशं ।
यैर्विष्टब्धात् न चलति सप्तद्वीपवती मही ॥ ११ ॥
दशयोजनसाहस्र आयामस्तेषु पठ्यते ।
देवगन्धर्वयक्षाणां नानारत्नोपशोभिताः(१) ।
नैकनिर्झरवप्राढ्या रम्यकन्दरनिर्म्मिताः ॥ १२ ॥
नितम्बपुष्पकादम्बैः शोभिताश्चित्रसानवः ।
मनःशिलादरीभिश्च हरितालतलैस्तथा ॥ १३ ॥
सुवर्णमणिचित्राभिर्गुहाभिश्च समन्ततः ।
शुद्धहिङ्गुलकप्रख्यैः काञ्चनैर्धातुमण्डितैः ॥ १४ ॥
वरकाञ्चनचित्रैश्च प्रवालैः समलङ्कृताः ।
रुचिराः शतपर्व्वाणः सिद्धावासा मुदान्विताः ।
महाविमानैः श्रीमद्भिः समन्तात्परिदीपिताः ॥ १५॥
पूर्वेण मन्दरो नाम दक्षिणे गन्धमादनः ।
विपुलः पश्चिमे पार्श्वे सुपार्श्वश्चोत्तरे स्मृतः ॥ १६ ॥
तेषां सहस्रशृङ्गेषु वज्रवैदूर्य्यवेदिकाः ।
शाखासहस्रकलिताः सुमूलाः सुप्रतिष्ठिताः ॥ १७ ॥
स्निग्धैर्नीलैर्घनैः पर्णैः सच्छत्रविविधाश्रयाः ।

---

१ देवगन्धर्वचरिता नानारत्नविभूषिता इति घ०, ङ० च ।

अनेकप्रजनोत्सेधा महापुष्पफलोपगाः ॥ १८ ॥
यक्षगन्धर्वसैन्याश्च सेविताः सिद्धचारणैः ।
महावृक्षाः समुत्पन्नाश्चत्वारो द्वीपकेतवः ॥ १९ ॥
मन्दरस्य गिरेः शृङ्गे महावृक्षः स केतुराट् ।
प्रालम्बशाखाशिखरः कदम्बश्चैव पादपः ॥ २० ॥
महाकुम्भप्रमाणैस्तु पुष्पैर्विकचकेसरैः ।
महागन्धैर्मनोज्ञैश्च शोभितः सर्वकालजैः ॥ २१ ॥
सहस्रमधिकं सोऽथ गन्धेनापूरयद्दिशः ।
योजनानां समन्ताद्वै मन्दमारुतवीजितः ॥ २२ ॥
वरकेतुरेव प्रथितो भद्राश्वो नाम यो द्विजाः ।
यत्र साक्षात् हृषीकेशः सिद्धसङ्घैर्महीयते ॥२३ ॥
तस्य रुद्रकदम्बस्य तदा श्वेतहरो हरिः ।
प्राप्तवानमरश्रेष्ठः स तत्र सहितः पुरा ॥ २४ ॥
तेन चालोकितं सर्वं द्वीपं द्विपदनायकाः ।
यस्य नाम्ना समाख्यातो भद्राश्वो नामनामतः ॥ २५ ॥
दक्षिणस्यापि शैलस्य शिखरे देवसेविता ।
जम्बूः सदा पुष्पफला सदा माल्योपशोभिता ॥ २६ ॥
महामूलैर्महास्कन्धैः स्निग्धवर्णैर्विभूषिता ।
नवैः सदापुष्पफलैः शाखाभिश्चोपशोभिता ॥ २७ ॥
तस्या ह्यतिप्रमाणानि स्वादूनि च मृदूनि च ।
फलान्यमृतकल्पानि पतन्ति गिरिमूर्द्धनि ॥ २८ ॥
तस्माद्गिरिवरप्रस्थात् पुनः प्रस्यन्दवाहिनी ।
नदी जम्बूनदी नाम प्रवृत्ता मधुवाहिनी ॥ २९ ॥

तत्र जम्बूनदन्नाम सुवर्णं ज्वलनप्रभं।
देवालङ्कारमतुलं जायते पापनाशनं॥ ३० ॥
देवदानवगन्धर्वा यक्षराक्षसपन्नगा।
यत् पिबन्त्यमृतप्रख्यं मधु जाम्बूरसस्रवं॥ ३१ ॥
स केतुर्दक्षिणे द्वीपे जम्बूर्लोकेषु विश्रुता।
यस्या नाम्ना स विख्यातो जम्बूद्वीपः सनातनः॥ ३२ ॥
विपुलस्यापि शैलस्य पश्चिमस्य महात्मनः।
जातः शृङ्गेऽतिसुमहानश्वत्थश्चैव पादपः॥ ३३ ॥
विलम्बिरत्नमालाढ्यः सुवर्णमणिवेदिकः।
महोच्चस्कन्धविटपो नैकसत्वगुणालयः॥ ३४ ॥
कुम्भप्रमाणैः सुखदैः फलैः सर्वर्त्तुकैः शुभैः।
स केतुः केतुमालानां देवगन्धर्वसेवितः॥ ३५ ॥
केतुमालेति च यथा तस्या नाम प्रकीर्तितं।
तन्निबोधत विप्रेन्द्रा निरुक्तं नाम कर्मतः॥ ३६ ॥
क्षीरोदमथने वृत्ते दैत्यपक्षे पराजिते।
महासमरसम्मर्द्दवृक्षक्षोभविमर्द्दिता॥ ३७ ॥
सहस्राक्षेण विहिता माला तस्य सुतानिता।
तस्य स्कन्धे समासक्त्या ह्यश्वत्थस्य वनस्पतेः॥ ३८ ॥
सा तथैव महागन्धा ह्यम्लाना सर्व्वकामिकी।
दृश्यते सुमहाभागा विविधैः सिद्धचारणैः॥ ३९ ॥
तस्य केतोः सदा माला देवदत्ता विराजते।
पवनेनेरिता दिव्यं वाति गन्धं मनोरमं॥ ४० ॥
ताभ्यां नामाङ्कितो द्वीपः पश्चिमे बहुविस्तरः।

केतुमाल इति ख्यातो दिवि चेह च सर्व्वशः(१ ॥ ४१ ॥
स्वपार्श्वस्योत्तरे चापि शृङ्गे जातो महाद्रुमः ।
न्यग्रोधो विपुलस्कन्धोऽनेकयोजनमण्डलः ॥ ४२ ॥
माल्यदामकलापैश्च विविधैर्गन्धशालिभिः ।
शाखाविलम्बो शुशुभे सिद्धचारणसेवितः ॥ ४३ ॥
प्रवालकुम्भसदृशैर्मधुपूर्णैः फलैः सदा ।
स ह्युत्तरकुरूणान्तु केतुवृक्षः प्रकाशते ॥ ४४ ॥
सनत् कुमारा वरजा मानसाः ब्रह्मणः सुताः ।
सप्त तत्र महाभागाः कुरवो नामविश्रुताः ॥ ४५ ॥
तत्र तैरागतज्ञानैः सत्वस्थैः पुण्यकीर्तिभिः ।
अक्षयं क्षेममपरं लोकं प्राप्तं सनातनं ॥ ४६ ॥
तेषां नामाङ्कितो द्वीपः सप्तानां वै महात्मनां ।
दिवि चेह च विख्याता उत्तराः कुरवः सदा ॥ ४७ ॥

इति श्रीमहापुराणे वायुप्रोक्ते जम्बुद्वीपवर्णनं नाम
पञ्चत्रिंशोऽध्यायः ।

---

१ सर्वत इति ख० ॥

# अथ षट्त्रिंशोऽध्यायः ।

———०००———

भुवनविन्यासः ।

सूत उवाच । तेषां चतुर्णां वक्ष्यामि शैलेन्द्राणां यथाक्रमं ।
अनुबन्धानि रम्याणि सर्वकालर्त्तुकानि च ॥ १ ॥
सारिकाभिर्मयूरैश्च चकोरैश्च मदोत्कटैः ।
शुकैश्च भृङ्गराजैश्च चित्रकैश्च समन्ततः ॥ २ ॥
जीवञ्जीवकनादैश्च हेमकानाञ्च नादितैः ।
मत्तकोकिलनादैश्च वल्गूनाञ्च निनादितैः(१) ॥ ३ ॥
सुग्रीवकाञ्चनरवैः कलविङ्करुतैस्तथा ।
कूजितान्तरशब्दैश्च सुरम्याणि च सर्वशः ॥ ४ ॥
मदोत्कटैर्मधुरैश्च भ्रमरैश्च महालसैः(२) ।
उपगीतवनान्तानि किन्नरैश्च क्वचित् क्वचित् ॥ ५ ॥
पुष्पवृष्टिं विमुञ्चन्ति मन्दमारुतकम्पिताः ।
तरवो यत्र दृश्यन्ते चारुपल्लवशोभिताः ॥ ६ ॥
स्तवकैर्मञ्जरीभिश्च ताम्रैः किशलयैस्तथा ।
मन्दवातवशाल्लोलैर्दोलयद्भिर्व्यतानि च ॥ ७ ॥
नानाधातुविचित्रैश्च कान्तरूपैः शिलाशतैः ।
शस्तैः क्वचिद् द्विजश्रेष्ठा विन्यस्तैः शोभितानि च ॥ ८ ॥
देवदानवगन्धर्वैर्यक्षराक्षसपन्नगैः ।

---

१ मत्तकोकिलनादैश्चाधवनीनाञ्च नादितैरिति ख० ।

२ मधुलिट्भिरिति ख० ।

सिद्धाप्सरोगणैश्चैव सेवितानि ततस्ततः ॥ ९ ॥
मनोहराणि चत्वारि देवाक्रीड़नकान्यथ ।
चतुर्दिशमुदाराणि नाम्ना शृणुत तानि मे ॥ १० ॥
पूर्वं चैत्ररथं नाम दक्षिणं नन्दनं वनं ।
वैभ्राजं पश्चिमं विद्यादुत्तरं सवितुर्वनं ॥ ११ ॥
महावनेषु चैतेषु निविष्टानि यथाक्रमं ।
अनुबन्धानि रम्याणि विहङ्गैः कूजितानि च ॥ १२ ॥
वनैर्विस्तीर्णतीर्थानि महापुण्यवनानि च ।
महानागाधिवासानि सेवितानि महात्मभिः ॥ १३ ॥
सुरसामलतोयानि शिवानि सुसुखानि च ।
सिद्धदेवासुरवरैरुपस्पृष्टजलानि च ॥ १४ ॥
छत्रप्रमाणैर्विकचैर्महागन्धैर्मनोहरैः ।
पुण्डरीकैर्महापत्रैरुत्पलैः शोभितानि च ।
महासरांसि चत्वारि तानि वक्ष्यामि नामतः ॥ १५ ॥
अरुणोदं सरः पूर्वं दक्षिणं मानसं स्मृतं ।
सितोदं पश्चिमसरो महाभद्रन्तथोत्तरं ॥ १६ ॥
अरुणोदस्य पूर्वेण ये च शैलास्ततः स्मृताः ।
तान् कीर्त्यमानांस्तत्त्वेन शृणुध्वं विस्तरान्मम ॥ १७ ॥
शीतान्तश्च कुमुञ्जश्च सुवीरश्चाचलोत्तमः ।
विकङ्को मणिशैलश्च(१) वृषभश्चाचलोत्तमः ॥ १८ ॥
महानीलोऽथ रुचकः सबिन्दुर्मन्दरस्तथा ।

१ मणिशैलश्चेति घ० ।

वेणुमांश्च सुमेधश्च निषधो देवपर्वतः ॥ १९ ॥
इत्येते पर्वतवरा अन्ये च गिरयस्तथा ।
पूर्वेण मन्दरस्यैते सिद्धवासा उदाहृताः ॥ २० ॥
सरसो मानसस्येह दक्षिणा ये महाचलाः ।
ये कीर्त्तिता मया ते वै नामतस्तान्निबोधत ॥ २१ ॥
शैलस्त्रिशिखरश्चापि शिशिरश्चाचलोत्तमः(१) ।
कलिङ्गश्च पतङ्गश्च रुचकश्चैव सानुमान् ॥ २२ ॥
ताम्राभश्च विशाखश्च तथा श्वेतोदरो गिरिः ।
समूलो विषधारश्च रत्नधारश्च पर्वतः ॥ २३ ॥
एकशृङ्गो महामूलो गजशैलः पिशाचकः ।
पञ्चशैलोऽथ कैलासो हिमवांश्चाचलोत्तमः ॥ २४ ॥
इत्येते देवचरिता ह्युत्कृष्टाः पर्वतोत्तमाः ।
दिग्भागे दक्षिणे प्रोक्ता मेरोरमरवर्चसः ॥ २५ ॥
अपरेण सितोदस्य सरसो द्विजसत्तमाः ।
उत्तमा ये महाशैलास्तान् प्रवक्ष्ये यथाक्रमं ॥ २६ ॥
सुवक्षाः शिखिशैलश्च कालो वैदूर्य्यपर्वतः ।
कपिलः पिङ्गलो रुद्रः(२) सुरसश्च महाचलः ॥ २७ ॥
कुमुदो मधुमांश्चैव अञ्जनो मुकुटस्तथा ।
कृष्णश्च पाण्डरश्चैव सहस्रशिखरश्च ह ॥ २८ ॥
पारिपात्रश्च(३) शैलेन्द्रस्त्रिशृङ्गश्चाचलोत्तमः ।

---

१ शिखरश्चाचलोत्तम इति घ०, ङ० च ।

२ कुञ्जरो रुद्र इति ख० ।

३ पारियात्रश्चेति क० । पारिजातश्चेति घ०, ङ० च ।

इत्येते पर्वतवरा दिग्भागे पश्चिमे स्मृताः ॥ २८ ॥
महाभद्रस्य सरस उत्तरेणापि श्रीमतः ।
ये मया पूर्व्वताः प्रोक्तास्तान्वदिष्ये यथाक्रमं ॥ ३० ॥
शङ्कुकूटो महाशैलो वृषभो हंसपर्वतः ।
नागश्च कपिलश्चैव इन्द्रशैलश्च सानुमान् ॥ ३१ ॥
नीलः कनकशृङ्गश्च शतशृङ्गश्च पर्वतः ।
पुष्पको मेघशैलश्च विराजश्चाचलोत्तमः ।
जारुधिश्चैव(१) शैलेन्द्र इत्येते उत्तराः स्मृताः ॥ ३२ ॥
एतेषां शैलमुख्यानामन्तरेषु यथाक्रमं ।
स्थाल्योऽह्यन्तरद्रोण्यश्च सरांसि च निबोधत । ३३ ॥

इति श्रीमहापुराणे वायुप्रोक्ते भुवनविन्यासो
नाम षट्त्रिंशोऽध्यायः ।

---

१ जातुधिश्चैवेति ग० ।

# अथ सप्तत्रिंशोऽध्यायः ।

———000———

## भुवनविन्यासः ।

सूत उवाच । शीतान्तस्याचलेन्द्रस्य कुमुञ्जस्यान्तरेण(१) तु ।
द्रोण्यो विहङ्गसंघुष्टा नानासत्वनिषेविताः ॥ १ ॥
त्रियोजनशतायामा विस्तीर्णाः शतयोजनाः ।
सुरसामलपानीयरम्यं तत्र सरोवरं ॥ २ ॥
द्रोण्यायामप्रमाणैस्तु पुण्डरीकैः सुगन्धिभिः ।
सहस्रशतपत्रैर्हि महापद्मैरलङ्कृतं ॥ ३ ॥
महोरगैरध्युषितं महाभोगैर्दुरासदैः ।
देवदानवगन्धर्व्वैरुपस्पृष्टं जलं शुभं ॥ ४ ॥
पुण्यं तच्छ्रीसरो नाम प्रकाशं दिवि चेह च ।
प्रसन्नजलसम्पूर्णं शरण्यं सर्व्वदेहिनां ॥ ५ ॥
तत्र त्वेकं(२) महापद्मं मध्ये पद्मवनस्य ह ।
कोटिपत्रप्रचारन्तत्तरुणादित्यवर्च्चसं ॥ ६ ॥
नित्यं व्याकोशमजरं चाञ्चल्याच्चातिमण्डलं ।
चारुकेशरजालाढ्यं मत्तषट्पदनादितं ॥ ७ ॥
तस्मिन् पद्मे भगवती साक्षाच्छ्रीर्नित्यमेव हि ।
लक्ष्म्याः पद्मं तदावासं मूर्त्तिमत्या न संशयः ॥ ८ ॥
सरसस्तस्य पूर्वस्मिन् तीरे सिद्धनिषेविते ।

---

१ भुजङ्गस्यान्तरेणेति ख०। कुञ्जरस्यान्तरेणेति घ० । २ तत्र लक्ष्म्या महापद्ममिति ङ०।

सदा पुष्पफलं रम्यं तत्र विल्ववनं महत् ॥ ९ ॥
शतयोजनविस्तीर्णं त्रियोजनशतायतं ।
अर्द्धक्रोशोच्चशिखरैर्महाद्रुमैः सहस्रशः ॥ १० ॥
शाखासहस्रकलितैर्महास्कन्धैः समाकुलं ।
फलैः सुवर्णसङ्काशैर्हरितैः पाण्डरैस्तथा ॥ ११ ॥
अमृतस्वादुसदृशैर्भेरीमात्रैः सुगन्धिभिः ।
शीर्य्यमाणैः पतद्भिश्च कीर्णा भूमिर्निरन्तरा ॥ १२ ॥
नाम्ना तच्छ्रीवनं नाम सर्वलोकेषु विश्रुतं ।
गन्धर्व्वैः किन्नरैर्यक्षैर्महानागैश्च सेवितं ॥ १३ ॥
सिद्धैश्चैव समाकीर्णं नित्यं विल्वफलाशिभिः ।
विविधैर्भूतसङ्घैश्च नित्यमेव निषेवितं ॥ १४ ॥
तस्मिन् वने भगवती साक्षाच्छ्रीर्नित्यमेव हि ।
देवी सन्निहिता तत्र सिद्धसङ्घैर्नमस्कृता ॥ १५ ॥
विकङ्कस्याचलेन्द्रस्य मणिशैलस्य चान्तरे ।
शतयोजनविस्तीर्णं द्वियोजनशतायतं ॥ १६ ॥
विपुलञ्चम्पकवनं सिद्धचारणसेवितं ।
पुष्पलक्ष्म्यावृतं भाति ज्वलनमिव नित्यदा ॥ १७ ॥
अर्द्धक्रोशोच्चशिखरैर्महास्कन्धैः पलाशिभिः ।
प्रफुल्लशाखाशिखरैः पिञ्जरम्भाति तद्वनं ॥ १८ ॥
द्विबाहुपरिणाहैस्तैस्त्रिहस्तायामविस्तरैः ।
मनःशिलाचूर्णनिभैः पाण्डुकेसरशालिभिः ॥ १९ ॥
पुष्पैर्मनोहरैर्व्याप्तं व्याकाशैर्गन्धशालिभिः ।
विराजते वनं सर्वं मत्तभ्रमरनादितं ॥ २० ॥

तद्वनं दानवैर्दैवगन्धर्वैर्यक्षराक्षसैः ।
किन्नरैरप्सरोभिश्च महानागैश्च सेवितं ॥ २१ ॥
तत्राश्रमं भगवतः कश्यपस्य प्रजापतेः ।
सिद्धसाध्यगणाकीर्णं नानाश्रुतिविभूषितं ।
महानीलकुमुञ्जाभ्यामन्तरेप्यचलावथ ॥ २२ ॥
महानद्याः सुखायास्तु तीरे सिद्धनिषेविते ।
पञ्चाशद्योजनायाममत्रिंशद्योजनविस्तरं ।
रम्यं तालवनं तद्धि अर्द्धक्रोशोच्चमस्तकं ॥ २३ ॥
महामूलैर्महासारैः स्थिरैरविरलैः शुभैः ।
कुमुदाञ्जनसंस्थानैः परिवृत्तैर्महाफलैः ।
मृष्टगन्धरसोपेतैरुपेतं सिद्धसेवितं ॥ २४ ॥
माहेन्द्रस्य द्विपेन्द्रस्य तत्र वास उदाहृतः ।
ऐरावतस्य भद्रस्य सर्वलोकेषु विश्रुतः ॥ २५ ॥
वेणुमन्तस्य शैलस्य सुमेधस्योत्तरेण च ।
सहस्रयोजनायामं विस्तीर्णं शतयोजनं ॥ २६ ॥
वृक्षगुल्मलतागुच्छैः सर्ववीरुद्भिरीरितं(१) ।
दूर्वाप्रस्तारमेवाथ सर्वसत्त्वविवर्जितं ॥ २७ ॥
तथा निषधशैलस्य देवशैलस्य चोत्तरे ।
सहस्रयोजनायामा शतयोजनविस्तृता ॥ २८ ॥

---

१ सर्ववीरुद्भिरुज्झितमिति ख० ।

सर्वा ह्येकशिला भूमिर्वृक्षवीरुद्विवर्जिता।
आप्लुता पादमात्रेण ह्युदकेन समन्ततः॥ २९॥
इत्येता ह्यन्तरद्रोण्यो नानाकाराः प्रकीर्त्तिताः।
मेरोः पूर्वेण विप्रेन्द्रा यथावदनुपूर्वशः॥ ३०॥

इति श्रीमहापुराणे वायुप्रोक्ते भुवनविन्यासो नाम सप्तत्रिंशोऽध्यायः।

---

# अथाष्टत्रिंशोऽध्यायः ।

———ooo(◎)ooo———

भुवनविन्यासः ।

सूत उवाच । अतः परं प्रवक्ष्यामि दक्षिणान्दिशमाश्रिताः ।
या द्रोण्यः सिद्धचरिताः शृणु ता ह्यनुपूर्वशः ॥ १ ॥
शिशिरस्याचलेन्द्रस्य पतङ्गस्यान्तरेण च ।
स्वच्छभूमिश्रिया युक्तं लतालिङ्गितपादपं ॥ २ ॥
पृथुक्षेपोच्चशिखरैः पादपैरुपशोभितं ।
उदुम्बरवनं रम्यं पक्षिसङ्घनिषेवितं ॥ ३ ॥
पक्वै र्विद्रुमसङ्काशैर्मधुपूर्णैर्मनोरमैः ।
ज्वलितं तद्वनं भाति महाकुम्भोपमैः फलैः ॥ ४ ॥
तत् सिद्धयक्षगन्धर्वाः किन्नरा उरगास्तथा ।
विद्याधराश्च मुदिता उपजीवन्ति नित्यशः ॥ ५ ॥
प्रसन्नस्वादुसलिलास्तत्र नद्यो बहूदकाः ।
सुरसामलतोयास्ताः सरांसि च समन्ततः ॥ ६ ॥
तत्राश्रमं भगवतः कर्द्दमस्य प्रजापतेः ।
रम्यं सुरगणाकीर्णं सर्वतश्चित्रकाननं ।
समन्ताद्योजनशतं तद्वनं परिमण्डलं ॥ ७ ॥
ताम्रवर्णस्य शैलस्य पतङ्गस्यान्तरेण तु ।
शतयोजनविस्तीर्णं द्वियोजनशतायतं ॥ ८ ॥
तरुणादित्यसङ्काशैः पुण्डरीकैः समन्ततः ।

सहस्रपत्रैर्विकचैर्महापद्मैरलङ्कृतं ॥ ९ ॥
तथा भ्रमरसंलीनैः शतपत्रैः सुगन्धिभिः ।
प्रफुल्लैः शोभितजलं रक्तनीलैर्महोत्पलैः ॥ १० ॥
सरोवरं महापुण्यं देवदानवसेवितं ।
महोरगैरध्युषितं नीलजालविभूषितं ॥ ११ ॥
तस्य मध्ये जनपदो ह्यायतः शतयोजनः ।
त्रिंशद्योजनविस्तीर्णो रक्तधातुविभूषितः ॥ १२ ॥
तस्योपरि महारथ्या प्रांशुप्राकारतोरणा ।
नरनारीगणाकीर्णा स्फीता विभवविस्तरैः ॥ १३ ॥
वलभीकूटनिर्यूहैर्मणिभक्तिविचित्रितैः ।
रत्नचित्रार्पिततलैः शुक्लचित्रोत्तरच्छदैः ॥ १४ ॥
महाभवनमालाभिर्महाप्रांशुभिरुत्तमैः ।
विद्याधरपुरं तत्र शोभते भ्राजयच्छुभं ॥ १५ ॥
विद्याधरपतिस्तत्र पुलोमा तत्र विश्रुतः ।
चित्रवेशधरः स्रग्वी माहेन्द्रसदृशद्युतिः ॥ १६ ॥
दीप्तानां चित्रवेशाणां सूर्य्यप्रतिमतेजसां ।
विद्याधरसहस्राणामनेकेषां स राजराट् ॥ १७ ॥
विशाखस्याचलेन्द्रस्य पतङ्गस्यान्तरेण च ।
सरसस्ताम्रवर्णस्य पूर्वे तीरे परिश्रुतं ॥ १८ ॥
पञ्चशुक्लेपर्णैर्विद्धं सुशाखं वर्णशोभितं ।
सर्वकालफलं तत्र स्फीतस्त्वाम्रवनं महत् ॥ १९ ॥
फलैः कनकसङ्काशैर्महास्वादैः सुगन्धिभिः ।
महाकुम्भप्रमाणैश्चातगुणाढ्यैः समन्ततः ॥ २० ॥

गन्धर्वकिन्नरा यक्षा नागा विद्याधरास्तथा ।
पिवन्त्याम्ररसं तत्र सुस्वादु ह्यमृतोपमं ॥ २१ ॥
तत्राम्ररसपीतानां मुदितानां महात्मनां ।
श्रूयन्ते हृष्टतुष्टानां नादास्तस्मिन् महावने ॥ २२ ॥
सुमलस्याचलेन्द्रस्य वसुधारस्य चान्तरे ।
समा सुरभिपूर्णाढ्या विहङ्गैरुपशोभिता ॥ २३ ॥
त्रिंशद्योजनविस्तीर्णा पञ्चाशद्योजनायता ।
तत्र विल्वस्थली विप्राः शुद्धा निम्नफलद्रुमाः ॥ २४ ॥
सुस्वादैर्विद्रुमनिभैः फलैर्विल्वैर्महोपमैः ।
शीर्य्यमाणैर्विशीर्णैश्च प्रक्लिन्नतलमृत्तिका: ॥ २५ ॥
तां स्थलीमुपजीवन्ति यक्षगन्धर्वकिन्नराः ।
सिद्धा नागाश्च वहुशो नित्यं विल्वफलाशिनः ॥ २६ ॥
अन्तरे वसुधारस्य रत्नधारस्य चान्तरे ।
त्रिंशद्योजनविस्तीर्णमायतं शतयोजनं ॥ २७ ॥
सुगन्धं किंशुकवनं नित्यं पुष्पितपादपं ।
पुष्पलक्ष्म्यावृतं भाति प्रदीप्तमिव सर्वतः ॥ २८ ॥
यस्य गन्धेन दिव्येन वास्यते परिमण्डलं ।
समग्रं योजनशतं काननानि समन्ततः ॥ २९ ॥
तत् सिद्धचारणगणैरप्सरोभिश्च सेवितं ।
रम्यं तत् किंशुकवनं जलाशयविभूषितं ॥ ३० ॥
तत्रादित्यस्य देवस्य दीप्तमायतनं महत् ।
मासे मासेऽवतरति तत्र सूर्य्यः प्रजापतिः ॥ ३१ ॥
तत्र कालस्य कर्त्तारं सहस्रांशुं सुरोत्तमं ।

सिद्धसङ्घा नमस्यन्ति सर्वलोकनमस्कृतं ॥ ३२ ॥
पञ्चकूटस्य शैलस्य कैलासस्यान्तरेण तु ।
षट्त्रिंशद्योजनायामं विस्तीर्णं शतयोजनं ॥ ३३ ॥
क्षुद्रसत्त्वैरनाधृष्यं सर्वतो हंसपाण्डुरं ।
दुष्पारं सर्वसत्त्वानां दुर्गमं लोमहर्षणं ॥ ३४ ॥
इत्येता ह्यन्तरद्रोण्यो दक्षिणे परिकीर्त्तिताः ।
यथानुपूर्वमखिलाः सिद्धसङ्घनिषेविताः ॥ ३५ ॥
पश्चिमायान्दिशि तथा येऽन्तरद्रोणिविस्तराः ।
तान्वर्ण्यमानांस्तत्त्वेन शृणुतेमान् द्विजोत्तमाः ॥ ३६ ॥
अन्तराले गिरौ तस्मिन् सुवक्षःशिखिशैलयोः ।
समन्ताद्योजनशतं एकभूमं शिलातलं ॥ ३७ ॥
नित्यतप्तं महाघोरं दुःस्पर्शं रोमहर्षणं ।
अगम्यं सर्वसत्त्वानामीश्वराणां सुदारुणं ॥ ३८ ॥
मध्ये तस्यां शिलास्थल्यां त्रिंशद्योजनमण्डलं ।
ज्वालासहस्रकलिलं वह्निस्थानं सुदारुणं ॥ ३९ ॥
अनिन्धनस्तत्र सदा ज्वालामाली विभावसुः ।
ज्वलत्येष सदा देवः शश्वत्तत्र हुताशनः ॥ ४० ॥
अधिदेवकृते योऽसावग्नेर्भागो विधीयते ।
स तत्र ज्वलते नित्यं लोकसंवर्त्तकोऽनलः ॥ ४१ ॥
अन्तरे शैलवरयोर्देवा वापि तयोः शुभाः ।
मातुलुङ्गस्थली तत्र आयामाद्दशयोजना ॥ ४२ ॥
मधुव्यञ्जनसंस्थानैः सुरसैः कनकप्रभैः ।
फलैः परिणतैः सर्वा शोभिता सा महास्थली ॥ ४३ ॥

तत्राश्रमं महापुण्यं सिद्धसङ्घनिषेवितं ।
बृहस्पतेः प्रमुदितं सर्वकामगुणैर्युतं ॥ ४४ ॥
तथैव शैलवरयोः कुमुदाञ्जनयोरपि ।
अन्तरे केसरद्रोणिरनेकायामयोजना ॥ ४५ ॥
द्विबाहुपरिणाहैस्तैस्त्रिहस्तायतविस्तृतैः ।
चन्द्रांशुवर्णव्यांकोशैर्मत्तषट्पदनादितैः ॥ ४६ ॥
मधुसर्पीरजःपूतैर्महागन्धैर्मनोहरैः ।
शवलन्तद्वनं(१) भाति कुसुमैः सर्वकालजैः ॥ ४७
तत्र विष्णोः सुरगुरोर्दीप्तमायतनं महत् ।
प्रकाशन्त्रिषु लोकेषु सर्वलोकनमस्कृतं ॥ ४८ ॥
अन्तरे शैलवरयोः कृष्णपाण्डुरयोरपि ।
त्रिंशद्योजनविस्तीर्णं नवत्यायतयोजनं ॥ ४९ ॥
श्लक्ष्णमेकशिलं देशं वृक्षवीरुद्विवर्जितं ।
सुखपादप्रचारञ्च निम्नोन्नतविवर्जितं ॥ ५० ॥
मध्ये तु सरसस्तस्य रम्या तु स्थलपद्मिनी ।
सहस्रपत्रैर्व्याकोशैः छत्रमात्रैरलङ्कृता ॥ ५१ ॥
पुण्डरीकैर्महापद्मैरुचिरैर्गन्धशालिभिः ।
शतपत्रैश्च विकचैरुत्पलैर्नीलपत्रकैः ॥ ५२ ॥
मदोत्कटैर्मधुकरैर्भ्रमरैश्च मदोत्कटैः ।
मृदुगद्गदकण्ठानां किन्नराणाञ्च निस्वनैः ॥ ५३ ॥
उपगीतपद्मखण्डाढ्या विस्तीर्णा स्थलपद्मिनी ।

१ शबलन्तद्वनमिति ख० ।

यक्षगन्धर्वचरिता सिद्धचारणसेविता ॥ ५४ ॥
मध्ये तस्याश्च पद्मिन्याः पञ्चयोजनमण्डलः ।
न्यग्रोधो विपुलस्कन्धो ह्यनेकारोहमण्डितः ॥ ५५ ॥
तत्र चन्द्रप्रभः श्रीमान् पूर्णचन्द्रनिभाननः ।
सहस्रवदनो देवो नीलवासाः सुरारिहा ॥ ५६ ॥
पद्ममाल्यधरस्तस्यां महाभागोऽपराजितः ।
इज्यते यक्षगन्धर्वैर्विद्याधरगणैस्तथा ॥ ५७ ॥
तस्मिन्नायतने साक्षादनादिनिधनो हरिः ।
पद्मोपहारैर्विविधैरिज्यते सिद्धचारणैः ॥ ५८ ॥
तदनन्तसदो नाम सर्वलोकेषु विश्रुतं ।
पद्ममालावलम्बाभिर्मालाभिरुपशोभितं ॥ ५९ ॥
तथा सहस्रशिखरकुमुदस्यान्तरेण च ।
पञ्चाशद्योजनायामन्त्रिंशद्योजनविस्तरं ।
इषुक्षेपोच्चशिखरं नानाविहगसेवितं । ६० ॥
महागन्धैर्महास्वादैर्गजदेहनिभैः फलैः ।
मधुस्रवैर्महावृक्षैरुपेतं तत् समन्ततः ॥ ६१ ॥
तत्राश्रमं महापुण्यं देवर्षिगणसेवितं ।
शुक्रस्य प्रथितं तत्र भास्वरं पुण्यकर्मणः ॥ ६२ ॥
शङ्खकूटस्य शैलस्य वृषभस्यान्तरेण च ।
परूषकस्थली रम्या ह्यनेकायतयोजना ॥ ६३ ॥
बिल्वप्रमाणैश्च शुभैर्महास्वादैः सुगन्धिभिः ।
फलैः प्रक्लिद्यते भूमिः परुषैर्वृन्तविच्युतैः ॥ ६४ ॥
तां स्थलीमुपजीवन्ति किन्नरोरगसाधवः ।

पद्मपत्रकरसोमत्ता मानाढ्यास्तत्र चारणाः ॥ ६५ ॥
कपिञ्जलस्य शैलस्य नागशैलस्य चान्तरे ।
द्वियोजनशतायामा विस्तीर्णा शतयोजना ॥ ६६ ॥
स्थली मनोहरा सा हि नानावनविभूषिता ।
नानापुष्पफलोपेता किन्नरोरगसेविता ॥ ६७ ॥
द्राक्षावनानि रम्याणि तथा नागवनानि च ।
खर्जूरवनखण्डानि नीलाशोकवनानि च ॥ ६८ ॥
दाडिमानाञ्च स्वादूनामक्षोटकवनानि च ।
अतसीतिलकानाञ्च कदलीनां वनानि च ॥ ६९ ॥
वदरीणाञ्च स्वादूनां वनखण्डानि सर्वशः ।
स्वादुशीताम्बुपूर्णाभिर्नदीभिः शोभितानि च ॥ ७० ॥
तथा पुष्पकशैलस्य महामेघस्य चान्तरे ।
षष्टियोजनविस्तीर्णा सा भूमिः शतमायता ॥ ७१ ॥
समा पाणितलप्रख्या कठिना पाण्डुरा घना ।
वृक्षगुल्मलतागुल्मैस्तृणैश्चापि विवर्जिता ॥ ७२ ॥
वर्जिता विविधैः सत्त्वैर्नित्यमस्मिन् निराश्रया ।
सा काननस्थली नाम दारुणा रोमहर्षणा ॥ ७३ ॥
महासरांसि च तथा महावृक्षास्तथैव च ।
महावनानि सर्वाणि कान्तनामानि(१) सर्वशः ॥ ७४ ॥
सरसाञ्च वनानाञ्च सा स्थली च प्रजापतेः ।

---

१ सुरसानि चेति ख० ।

क्षुद्राणां सरसाञ्चैव संख्या तत्र न विद्यते ॥ ७५ ॥
दश द्वादश सप्ताष्टौ विंशत्रिंशञ्च योजनाः ।
स्थल्यो द्रोण्यश्च विख्याताः सरांसि च वनानि च ॥ ७६ ॥
केचित् सन्ति महाघोराः श्यामाः पर्व्वतकुक्षयः ।
सूर्य्यांशुजालैरस्पृष्टा नित्यं शीता दुरासदाः ॥ ७७ ॥
तथा ह्यनलतप्तानि सरांसि द्विजसत्तमाः ।
शैलकुक्ष्यन्तरस्थानि सहस्राणि शतानि च ॥ ७८ ॥

इति श्रीमहापुराणे वायुप्रोक्ते भुवनविन्यासो
नामाऽष्टत्रिंशोऽध्यायः ।



# अथैकोनचत्वारिंशोऽध्यायः ।

———000———

भुवनविन्यासः ।

सूत उवाच । अतः परं प्रवक्ष्यामि यस्मिन् यस्मिन् शिलोच्चये ।
ये सन्निविष्टा देवानां विविधानां गृहोत्तमाः ॥ १ ॥
तत्र योऽसौ महाशैलः शीतान्तो नैकविस्तरः ।
नैकधातुशतैश्चित्रैर्नैकरत्नाकराकरः ॥ २ ॥
नितम्बैः पुष्पसालम्बैर्नैकसत्वगुणालयः ।
महार्हमणिचित्राभिर्हैमवंशैरलङ्कृतः ॥ ३ ॥
नितम्बैः षट्पदोद्गीतैः प्रवालैर्हेमचित्रकैः ।
तटैः कुसुमसङ्कीर्णैर्मत्तभ्रमरनादितैः ॥ ४ ॥
लतालम्बैश्चित्रवल्लिश्चित्रैर्धातुशताचितैः ।
सानुभीरत्नचित्रैश्च पुष्पाढ्यैश्च विभूषितः ॥ ५ ॥
विमलस्वादुपानीयैर्नैकप्रस्रवणैर्युतः ।
निकुञ्जैः कुसुमोत्कीर्णैरनेकैश्च विभूषितः ॥ ६ ॥
पुष्पोडुपवहाभिश्च स्रवन्तीभिरलङ्कृतः ।
किन्नराचरिताभिश्च दरीभिः(१) सर्वतस्ततः ॥ ७ ॥
यक्षगन्धर्वचरितैरनेकैः कन्दरोदरैः ।
शोभितश्च सुखासेव्यैश्चित्रैर्गहनसङ्कटैः ॥ ८ ॥
नानासत्वगणाकीर्णैः सुपानीयैः सुखाश्रयैः ।

१ नदीभिरिति ख० ।

नानापुष्पफलोपेतैः पादपैः समलङ्कृतः ॥ ९ ॥
तस्मिन् गुहाश्रयाकीर्णे अनेकोदरकन्दरे।
क्रीड़ावनं महेन्द्रस्य सर्वकामगुणैर्युतं ॥ १० ॥
तत्र तद्देवराजस्य पारिजातवनं महत्।
प्रकाशं त्रिषु लोकेषु गीयते श्रुतिनिश्चयात् ॥ ११ ॥
तरुणादित्यसङ्काशैर्महागन्धैर्मनोहरैः।
पुष्पैर्भाति नगश्रेष्ठः सुदीप्त इव सर्वशः ॥ १२ ॥
समग्रं योजनशतं तं गन्धमनिलो ववौ।
पारिजातकपुष्पाणां माहेन्द्रवननिर्गतः ॥ १३ ॥
वैदूर्य्यनीलैः कमलैः सौवर्णैर्वज्रकेसरैः।
सर्वगन्धवलोपेतैर्मत्तषट्पदनादितैः ॥ १४ ॥
व्याकोशैर्विकचैश्चापि शतपत्रैर्मनोहरैः।
सपङ्कजैर्महापत्रैर्वाप्यस्तत्र विभूषिताः ॥ १५ ॥
विरेजुरन्तरम्बुस्थाः सौवर्णमणिभूषिताः।
परिस्पन्देचणा नित्यं मीनयूथाः सहस्रशः ॥ १६ ॥
कूर्म्मैश्चानेकसंस्थानैश्चैमरत्नपरिष्कृतैः।
चञ्चूर्य्यमाणैः सलिलैर्भाति चित्रं समन्ततः ॥ १७ ॥
नानावर्णैश्च शकुनैर्नानारत्नतनूरुहैः(१)।
सुवर्णपुष्पैश्चामेकैर्मणितुण्डैर्द्विजातिभिः ॥ १८ ॥
वल्गुस्वरैः सदोन्मत्तैः सम्पतद्भिः समन्ततः।
शुशुभे तद्वनं रम्यं सहस्राक्षस्य धीमतः ॥ १९ ॥

---

१ नानारत्नमच्छदैरिति क०।

मत्तभ्रमरसन्नादैर्विहङ्गानाञ्च कूजितैः ।
नित्यमानन्दितवनं तस्मात् क्रीड़ावनं महत् ॥ २० ॥
सुवर्णपार्श्वैश्च नगैर्मणिमुक्तापुरस्कृतैः ।
मणिशृङ्गकलापन्नैः पतद्भिश्च समन्ततः ॥ २१ ॥
शाखामृगैश्च चित्राङ्गैर्नानारत्नतनूरुहैः ।
नानावर्णप्रकारैश्च सत्वैरन्यैः समाकुलं ॥ २२ ॥
मुञ्चन्ति पुष्पवर्षञ्च तत्र बाललता द्रुमाः ।
पारिजातकपुष्पाणां मन्दमारुतकम्पिताः ॥ २३ ॥
शयनासननिर्य्यूहैः स्तौर्णैरत्नविभूषितैः ।
विहारभूमयस्तत्र द्विजाः शक्रवने शुभाः ।
न च शीतो न चाप्युष्णो रविस्तत्र समः सदा ॥ २४ ॥
नित्यमुन्मादजननो मधुमाधवसम्भवः ।
वाति चाप्यनिलस्तत्र नानापुष्पाधिवासितः ।
नित्यं सङ्गसुखाह्लादी श्रमक्लमविनाशनः ॥ २५ ॥
तस्मिन्निन्द्रवने शुभ्रे देवदानवपन्नगाः ।
यक्षराक्षसगुह्याश्च गन्धर्वाश्चामितौजसः ॥ २६ ॥
विद्याधराश्च सिद्धाश्च किन्नराश्च मुदायुताः ।
तथाप्सरोगणाश्चैव नित्यं क्रीड़ापरायणाः ॥ २७ ॥
तस्य पर्वतराजस्य पूर्वं पार्श्वे महोचितं ।
कुमुञ्जं(१) शैलराजानं नैकनिर्झरकन्दरं ॥ २८ ॥
तस्य धातुविचित्रेषु कूटेषु बहुविस्तराः ।
अष्टौ पुर्य्यो सुदीर्णाश्च दानवानां महात्मनां ॥ २९ ॥

---

१ कुमुदमिति क० ।

वज्रके पर्वते चापि अनेकशिखरोदरे: ।
उदीर्णा राक्षसावासा नरनारीसमाकुला: ॥ ३० ॥
नीलका नाम ते घोरा राक्षसा: कामरूपिण: ।
तत्र तेऽभिरता नित्यं महाबलपराक्रमा: ॥ ३१ ॥
महानीलेपि शैलेन्द्रे पुराणि दश पञ्च च ।
हयाननानां विख्याता:(१) किन्नराणां महात्मनां ॥ ३२ ॥
देवसेनो महाबाहुर्बलमिन्द्रादयस्तथा ।
तत्र किन्नरराजानो दश पञ्च च गर्विता: ॥ ३३ ॥
सुवर्णपार्श्वा: प.येण नानावर्णसमाकुलै: ।
विलप्रवेशैर्नगरै: शैलेन्द्र: सोऽभ्यलङ्कृत: ॥ ३४ ॥
अतिदारुणा दृष्टिविषा ह्यग्निकोपा दुरासदा: ।
महोरगशतास्तत्र सुवर्णवशवर्तिन: ॥ ३५ ॥
सुनागेऽपि महाशैले दैत्यावासा: सहस्रश: ।
हर्म्यंप्रासादकलिला: प्रांशुप्राकारतोरणा: ॥ ३६ ॥
वेणुमन्ते महाशैले विद्याधरपुरत्रयं ।
त्रिंशद्योजनविस्तीर्णं पञ्चाशद्योजनायतं ॥ ३७ ॥
उलूको रोमशश्चैव महानेत्रश्च वीर्य्यवान् ।
विद्याधरवरास्तत्र शक्रतुल्यपराक्रमा: ॥ ३८ ॥
वैकङ्के शैलशिखरे ह्यन्त:कन्दरनिर्झरे ।
महोत्तमशृङ्गे रुचिरे रत्नधातुविचित्रिते ॥ ३९ ॥
तत्रास्ते गारुडिर्नित्यं उरगारिर्दुरासद: ।
महावायुजवस्त्वण्ड: सुग्रीवो नाम वीर्य्यवान् ॥ ४० ॥

१ पाठोऽयं न समीचीन: ।

महाप्रमाणैर्विक्रान्तैर्महाबलपराक्रमैः ।
स शैलो ह्यावृतः सर्वैः पक्षिभिः पन्नगारिभिः ॥ ४१
कण्ठेऽभिरतो नित्यं साक्षाद्भूतपतिः प्रभुः ।
वृषभाङ्को महादेवः शङ्करो योगिनां प्रभुः ॥ ४२ ॥
नानावेषधरैर्भूतैः प्रमथैश्च दुरासदैः ।
कण्ठे सानवः सर्वैः ह्यवकीर्णाः समन्ततः ॥ ४३ ॥
वसुधारे वसुमतां वसूनाममितौजसां ।
अष्टावायतनान्याहुः पूजितानि महात्मनां ॥ ४४ ॥
रत्नधातौ(१) गिरिवरे ऋषीणाञ्च महात्मनां ।
सप्ताश्रमाणि पुण्यानि सिद्धावासयुतानि च ॥ ४५ ॥
महाप्रजापतेः स्थानं हेमशृङ्गे नगोत्तमे ।
चतुर्वक्त्रस्य देवस्य सर्वभूतनमस्कृतं ॥ ४६ ॥
गजशैले भगवती नानाभूतगणावृता ।
रुद्राः प्रमुदिता नित्यं सर्वभूतनमस्कृताः ॥ ४७ ॥
सुमेघे धातुचित्राढ्ये शैलेन्द्रे मेघसन्निभे ।
नैकोदरदरीवप्रनिकुञ्जैश्चोपशोभिते ॥ ४८ ॥
आदित्यानां वसूनाञ्च रुद्राणाञ्चामितौजसां ।
तत्रायतनविन्यासा रम्याश्चैवाश्विनोरपि ॥ ४९ ॥
स्थानानि सिद्धैर्देवानां स्थापितानि नगोत्तमे ।
तत्र पूजापरा नित्यं यक्षगन्धर्वकिन्नराः ॥ ५० ॥
गन्धर्वनगरी स्फीता हेमकक्षे नगोत्तमे ।

१ रत्नधारे इति घ० ।

अग्नीत्यमरपुर्य्याभा महाप्राकारतोरणा ॥ ५१ ॥
सिद्धा ह्यपत्तना नाम गन्धर्वा युद्धशालिनः ।
येषामधिपतिर्देवो राजराजः कपिञ्जलः ॥ ५२ ॥
अनले राक्षसावासाः पञ्चकूटेऽपि दानवाः ।
ऊर्जिता देवरिपवो महाबलपराक्रमाः ॥ ५३ ॥
शतशृङ्गे पुरशतं यक्षाणाममितौजसां ।
ताम्राभे काद्रवेयस्य तक्षकस्य पुरोत्तमं ॥ ५४ ॥
विशाखे पर्वतश्रेष्ठे नैकवप्रदरीशुभे ।
गुहानिरतवासस्य गुहस्यायतनं महत् ॥ ५५ ॥
श्वेतोदरे महाशैले महाभवनमण्डिते ।
पुरं गरुडपुत्रस्य सुनाभस्य महात्मनः ॥ ५६ ॥
पिशाचके गिरिवरे हर्म्यं प्रासादमण्डितं ।
यक्षगन्धर्वचरितं कुवेरभवनं महत् ॥ ५७ ॥
हरिकूटे हरिर्देवः सर्वभूतनमस्कृतः ।
प्रभावात्तस्य शैलोऽसौ महानाभः प्रकाशते ॥ ५८ ॥
कुमुदे किन्नरावासा अञ्जने च महोरगाः ।
कृष्णे गन्धर्वनगरा महाभवनशालिनः ॥ ५९ ॥
पाण्डुरे चारुशिखरे महाप्राकारतोरणे ।
विद्याधरपुरन्तत्र महाभवनमालिनं ॥ ६० ॥
सहस्रशिखरे शैले दैत्यानामुग्रकर्म्मणां ।
पुराणि समुदीर्णानां सहस्रं हेममालिनां ॥ ६१ ॥
मुकुटे पन्नगावासा अनेकाः पर्वतोत्तमाः ।
पुष्पके वै मुनिगणा नित्यमेव मुदायुताः ॥ ६२ ॥

वैवस्वतस्य सोमस्य वायोर्नागाधिपस्य च ।
सुपक्षे पर्वतवरे चत्वार्य्यायतनानि च ॥ ६३ ॥
गन्धर्वैः किन्नरैर्यक्षैर्नागैर्विद्याधरोत्तमैः ।
सिद्धैर्हितेषु स्थानेषु नित्यमिष्टः प्रपूज्यते ॥ ६४ ॥

इति श्रीमहापुराणे वायुप्रोक्ते भुवनविन्यासो नामै-
कोनचत्वारिंशोऽध्यायः ।

---

अशीत्यमरपुर्य्याभा महाप्राकारतोरणा ॥ ५१ ॥
सिद्धा शूपत्तना नाम गन्धर्वा युद्धशालिनः ।
येषामधिपतिर्द्देवो राजराजः कपिञ्जलः ॥ ५२ ॥
अनले राक्षसावासाः पञ्चकूटेऽपि दानवाः ।
ऊर्जिता देवरिपवो महाबलपराक्रमाः ॥ ५३ ॥
शतशृङ्गे पुरशतं यक्षाणाममितौजसां ।
ताम्राभे काद्रवेयस्य तक्षकस्य पुरोत्तमं ॥ ५४ ॥
विशाखे पर्व्वतश्रेष्ठे नैकवप्रदरीशुभे ।
गुहानिरतवासस्य गुहस्यायतनं महत् ॥ ५५ ॥
श्वेतोदरे महाशैले महाभवनमण्डिते ।
पुरं गरुडपुत्रस्य सुनाभस्य महात्मनः ॥ ५६ ॥
पिशाचके गिरिवरे हर्म्यं प्रासादमण्डितं ।
यक्षगन्धर्वचरितं कुवेरभवनं महत् ॥ ५७ ॥
हरिकूटे हरिर्द्देवः सर्वभूतनमस्कृतः ।
प्रभावात्तस्य शैलोऽसौ महानाभः प्रकाशते ॥ ५८ ॥
कुमुदे किन्नरावासा अञ्जने च महोरगाः ।
कृष्णे गन्धर्व्वनगरा महाभवनशालिनः ॥ ५९ ॥
पाण्डुरे चारुशिखरे महाप्राकारतोरणे ।
विद्याधरपुरन्तत्र महाभवनमालिनं ॥ ६० ॥
सहस्रशिखरे शैले दैत्यानामुग्रकर्म्मणां ।
पुराणि समुदीर्णानां सहस्रं हेममालिनां ॥ ६१ ॥
मुकुटे पन्नगावासा अनेकाः पर्वतोत्तमाः ।
पुष्पके वै मुनिगणा नित्यमेव मुदायुताः ॥ ६२ ॥

वैवस्वतस्य सोमस्य वायोर्नागाधिपस्य च ।
सुपक्षे पर्वतवरे चत्वार्य्यायतनानि च ॥ ६३ ॥
गन्धर्वैः किन्नरैर्यक्षैर्नागैर्विद्याधरोत्तमैः ।
सिद्धैर्ह्रितेषु स्थानेषु नित्यमिष्टः प्रपूज्यते ॥ ६४ ॥

इति श्रीमहापुराणे वायुप्रोक्ते भुवनविन्यासो नामै-
कोनचत्वारिंशोऽध्यायः ।

---

# अथ चत्वारिंशोऽध्यायः ।

——000——

भुवनविन्यासः ।

सूत उवाच ।[मर्य्यादाः पर्वते शुभ्रे देवकूटे निबोधत ।
विस्तीर्णे शिखरे तस्य कूटे गिरिवरस्य ह ॥ १ ॥
समन्ताद्योजनशतं महाभवनमण्डितं ।
जन्मचैत्रं सुपर्णस्य वैनतेयस्य धीमतः ॥ २ ॥
नैकैर्महापक्षिगणैर्गारुडैः शीघ्रविक्रमैः ।
सम्पूर्णवीर्यसम्पन्नैर्दमनैरुरगारिभिः ॥ ३ ॥
पक्षिराजस्य भवनं प्रथमं तन्महात्मनः ।
महावायुप्रवेगस्य शाल्मलिद्वीपवासिनः ॥ ४ ॥
तस्यैव चारुमूर्द्धस्तु कूटेषु च महर्द्धिषु ।
दक्षिणेषु विचित्रेषु सप्तस्वपि तु शोभिनः ॥ ५ ॥
सन्ध्याभ्राभाः समुदिता रुक्मप्राकारतोरणाः ।
महाभवनमालाभिः शोभिता देवनिर्म्मिताः ॥ ६ ॥
त्रिंशद्योजनविस्तीर्णाश्चत्वारिंशत्तमायताः ।
सप्त गन्धर्वनगरा नरनारीसमाकुलाः ॥ ७ ॥
आग्नेया नाम गन्धर्वा महाबलपराक्रमाः ।
कुवेरानुचरा दीप्तास्तेषान्ते भवनोत्तमाः ॥ ८ ॥
तत्र चोत्तरकुटेषु भुवनस्य महागिरेः ।
हर्म्यप्रासादबद्धञ्च उद्यानवनशोभितं ॥ ९ ॥
पुरमाशीविषैः पूर्णं महाप्राकारतोरणं ।

वादित्रशतनिर्घोषैरानन्दितवनान्तरं(१) ॥१०॥
दुःप्रसह्यममित्राणां त्रिंशद्योजनमण्डलं ।
नगरं सैंहिकेयानामुदीर्णं देवविद्विषां ।
सिद्धदेवर्षिचरितं देवकूटे निबोधत ॥११॥
द्वितीये द्विजशार्दूला मर्य्यादापर्वते शुभे ।
महाभवनमालाभिर्नानावर्णाभिरावृतं ॥१२॥
सुवर्णमणिचित्राभिरनेकाभिरलङ्कृतं ।
विशालरथ्यन्दुर्धर्षं नित्यम्प्रमुदितं शिवं ॥१३॥
नरनारीगणाकीर्णं प्रांशुप्राकारतोरणं ।
षष्टियोजनविस्तीर्णं शतयोजनमायतं ॥१४॥
नगरं कालकेयानामसुराणान्दुरासदं ।
देवकूटतटे रम्ये सन्निविष्टं सुदुर्जयं ॥
महाभ्रचयसङ्काशं सुनामन्नाम विश्रुतं ॥१५॥
तस्यैव दक्षिणे कूटे विंशद्योजनविस्तरं(२) ।
द्विषष्टियोजनायामं हेमप्राकारतोरणं ॥१६॥
हृष्टपुष्टावलिप्तानां(३) आवासाः कामरूपिणां ।
औत्कचानां प्रमुदितं राक्षसानां महापुरं ॥१७॥
मध्यमे तु महाकूटे देवकूटस्य वै गिरेः ।
सुवर्णमणिपाषाणैश्चितैः स्वन्नतरैः शुभैः ।
शाखाशतसहस्राढ्यैनैकारोहसमाकुलं ॥१८॥

---

१ आनन्दितबलोत्तरमिति क० ।

२ विंशद्योजनविस्तरमित्यत्र विंशदित्ययं प्रयोग आर्षः ।

३ हृष्टधृष्टावलिप्तानामिति घ० ।

स्निग्धपर्णमहामूलमनेकस्कन्धवाहनं ।
रम्यं ह्यविरलच्छायं दशयोजनमण्डलं ॥१९॥
तत्र भूतवटन्नाम नानाभूतगणालयं ।
महादेवस्य प्रथितं त्र्यम्बकस्य महात्मनः ।
दीप्तमायतनं तत्र सर्वलोकेषु विश्रुतं ॥२०॥
वराहगजसिंहर्क्षशार्दूलकरभाननैः ।
गृध्रोलूकमुखैश्चैव मेषोष्ट्राजमहामुखैः ॥२१॥
कदम्बैर्विकटैः स्थूलैर्लम्बोष्ठतनूरुहैः ।
नानावर्णाकृतिधरैर्नानासंस्थानसंस्थितैः ॥२२॥
दीप्तैरनेकैर्घोराख्यैर्भूतैरुग्रपराक्रमैः ।
अशून्यमभवन्नित्यं महापारिषदैस्तथा ॥२३॥
तत्र भूतपतेर्भूता नित्यम्पूजां प्रयुञ्जते ।
झर्झरैः शङ्खपटहैर्भेरीडिण्डिमगोमुखैः ॥२४॥
रणितालसितोद्गीतैर्नित्यम्वल्गितवर्जितैः ।
विस्फूर्जितशतैस्तत्र पूजायुक्ता गणेश्वराः ।
प्रीताः पुरारिप्रमथास्तत्र क्रीडापराः सदा ॥२५॥
सिद्धदेवर्षिगन्धर्वयक्षनागेन्द्रपूजितः ।
स्थाने तस्मिन् महादेवः साक्षाल्लोकशिवः शिवः ॥२६॥

इति श्रीमहापुराणे वायुप्रोक्ते भुवनविन्यासो नाम चत्वारिंशोऽध्यायः ।

---

# अथैकचत्वारिंशोऽध्यायः ।

———000(ग)000———

भुवनविन्यासः ।

सूत उवाच । विविक्तचारुशिखरं पवित्रं ब्रह्मवर्चसं ।

कैलासं देवभक्तानामालयं सुकृतात्मनां ॥ १ ॥

तस्य कूटतटे रम्ये मध्यमे कुन्दसन्निभे ।

योजनानां शतायामे पञ्चाशच्च तथायतं ॥ २ ॥

सुवर्णमणिचित्राभिरनेकाभिरलङ्कृतं ।

महाभवनमालाभिर्भूषितं नैकविस्तरं ॥ ३ ॥

धनाध्यक्षस्य देवस्य कुवेरस्य महात्मनः ।

नगरन्तदनाधृष्यमृद्धियुक्तं मुदायुतं ॥ ४ ॥

तस्य मध्ये सभा रम्या नानाकनकमण्डिता ।

विपुला नाम विख्याता विपुलस्तम्भतोरणा ॥ ५ ॥

तत्र तत्पुष्पकं नाम नानारत्नविभूषितं ।

महाविमानं रुचिरं सर्वकामगुणैर्युतं ॥६॥

मनोजवं कामगमं हेमजालविभूषितं ।

वाहनं यक्षराजस्य कुवेरस्य महात्मनः ॥७॥

तत्रैकपिङ्गलो देवो महादेवसखः स्वयं ।

वसति स्म स यक्षेन्द्रः सर्वभूतनमस्कृतः ॥८॥

तत्राप्सरोगणैर्यक्षैर्गन्धर्वैः सिद्धचारणैः ।

वसति स्म महात्माऽसौ कुवेरो देवसत्तमः ॥९॥

तत्र पद्ममहापद्मौ तथा मकरकच्छपौ ।

कुमुदः(१) शङ्खनीलश्च नन्दनो निधिसत्तमः ॥१०॥
अष्टावेतेऽक्षया दिव्या धनेशस्य महात्मनः ।
महानिधानास्तिष्ठन्ति सभायां रत्नसञ्चिताः ॥११॥
तथेन्द्राग्नियमादीनां देवानामप्सरोगणैः ।
तेषां कैलास आवासो यत्र यक्षेश्वरः प्रभुः ॥१२॥
कृत्वा पूर्वमुपस्थानं यक्षेन्द्रस्य महात्मनः ।
पश्चाद्गच्छन्ति ये यस्य विहिताः परिचारकाः ॥१३॥
तत्र मन्दाकिनी नाम सुरम्या विपुलोदका ।
सुवर्णमणिसोपाना नानापुष्पोत्कटोत्कटा ॥१४॥
जाम्बूनदमयैः पद्मैर्गन्धस्पर्शगुणान्वितैः ।
नीलवैदूर्य्यपत्रैश्च गन्धोपेतैर्महोत्पलैः ॥१५॥
तथा कुमुदखण्डैश्च महापद्मैरलङ्कृता ।
यक्षगन्धर्वनारीभिरप्सरोभिश्च शोभिता ॥१६॥
देवदानवगन्धर्वैर्यक्षराक्षसपन्नगैः ।
उपस्पृष्टजला रम्या वापी मन्दाकिनी तथा ॥१७॥
तथा अलकनन्दा च नन्दा च सरितां वरा ।
एतैरेव गुणैर्युक्ता नद्यो देवर्षिसेविताः ॥१८॥
तस्यैव शैलराजस्य पूर्वे कूटे परिश्रुताः ।
सहस्रयोजनायामास्त्रिंशद्योजनविस्तराः ॥१९॥
दश गन्धर्वनगराः समृद्ध्या परया युताः ।
महाभवनमालाभिरनेकाभिर्विभूषिताः ॥२०॥

---

१ मुकुन्द इति ख० ।

सुबाहुहरिकेशाद्याश्चित्रसेनजरादयः ।
दश गन्धर्वराजानो दीप्तवह्निपराक्रमाः ॥२१॥
तस्यैव पश्चिमे कूटे कुन्देन्दुसदृशप्रभे ।
नानाधातुशतैश्चित्रैः सिद्धदेवर्षिसेविते ॥२२॥
अशीतियोजनायामं चत्वारिंशत्प्रविस्तरं ।
एकैकयक्षभवनं महाभवनमालिनं ॥ २३ ॥
महायक्षालयान्यत्र त्रिंशदाढ्यानि मे शृणु ।
मुदाऽथ परमर्द्धया च संयुक्तानि समन्ततः ॥२४॥
महामालिसुनेत्राद्यास्तथा मणिवरादयः ।
उदीर्णा यक्षराजानस्तत्र त्रिंशत्सदा बभुः ॥२५॥
इत्येते कथिता यक्षा वाय्वग्निसमतेजसः ।
येषामधिपतिर्देवः श्रीमान् वैश्रवणः प्रभुः ॥२६॥
तस्यैव दक्षिणे पार्श्वे हिमवत्यचलोत्तमे(१) ।
निकुञ्जनिर्झरगुहानैकसानुदरीतटे ॥२७॥
अर्णवादर्णवं यावत् पूर्वपश्चायतेऽचले ।
किन्नराणां पुरशतं निविष्टं वै क्वचित् क्वचित् २८॥
नैकशृङ्गकलापस्य शैलराजस्य कुक्षिषु ।
नरनारीप्रमुदितं हृष्टपुष्टजनाकुलं ॥२९॥
द्रुमसुग्रीवसैन्याद्या भगदत्तपुरःसराः ।
तत्र राजशतं तेषां दीप्तानां बलशालिनां ॥३०॥
विवाहो यत्र रुद्रस्य महादेव्योमया सह ।

१ हिमवत्पर्वतोत्तमे इति क० ।

तपस्तप्तवती चैव यत्र देवी वराङ्गना ॥३१॥
किरातरूपिणा चैव तत्र रुद्रेण क्रीड़ितं ।
यत्र चैव कृतं ताभ्यां जम्बूद्वीपावलोकनं ॥३२॥
यत्र ताः सम्मुदा युक्ता नानाभूतगणैर्युताः ।
चित्रपुष्पफलोपेता रुद्रस्याक्रीडभूमयः ॥३३॥
हृष्टा गिरिदरीवासाः कर्णोदर्य्यो मनोरमाः ।
सुन्दर्य्यो यत्र किन्नर्य्यो रमन्ते स्म सुलोचनाः ॥३४॥
विशालाक्षास्तथा यत्र अन्याश्चाप्सरसाङ्गणाः ।
गन्धर्वाश्चाङ्गशालिन्यो यत्र तत्र मुदा युताः ॥३५॥
तत्रैवोमावनं नाम सर्वलोकेषु विश्रुतं ।
अर्धनारीनरं रूपं धृतवान् यत्र शङ्करः ॥३६॥
तथा शरवनं नाम यत्र जातः षडाननः ॥
यत्र चैव कृतोत्साहः क्रौञ्चशैलवनं प्रति ॥३७॥
ध्वजापताकिनञ्चैव किङ्किणीजालमालिनं ।
यत्र सिंहरथं युक्तं कार्त्तिकेयस्य धीमतः ॥३८॥
चित्रपुष्पनिकुञ्जस्य क्रौञ्चस्य च गिरेस्तटे ।
देवारिस्कन्दनः स्कन्दो यत्र शक्तिं विमुक्तवान् ॥३९॥
यत्राभिषिक्तश्च गुहः सेन्द्रोपेन्द्रैः सुरोत्तमैः ।
सेनापत्ये च दैत्यारिर्द्दादशार्कप्रतापवान् ॥४०॥
भूतसङ्घावकीर्णानि एतान्यन्यानि च द्विजाः ।
तत्र तत्र कुमारस्य स्थानान्यायतनानि च ॥४१॥
तथा पाण्डुशिला नाम ह्याक्रीडा क्रौञ्चघातिनः ।
नानाभूतगणाकीर्णा पृष्ठे हिमवतः शुभे ॥४२॥

तस्य पूर्वे तटे रम्ये सिद्धावासमुदाहृतं ।
कलापग्राममित्येवं नाम्ना ख्यातं मनीषिभिः ॥४३॥
मृकण्डस्य वसिष्ठस्य भरतस्य नलस्य च ।
विश्वामित्रस्य विप्रर्षेस्तथैवोद्दालकस्य च । ४४॥
अन्येषाञ्चोग्रतपसां ऋषीणां भावितात्मनां ।
हिमवत्याश्रमाणाञ्च सहस्राणि शतानि च ॥४५॥
नैकसिद्धगणावासं स्थानायतनमण्डितं ।
यक्षगन्धर्वचरितं नानाम्लेच्छगणैर्युतं ॥४६॥
नानारत्नाकरापूर्णं नानासत्वनिषेवितं ।
नानानदीसहस्राणां सम्भवं परपर्वतं(१) ॥४७॥
पश्चिमस्याचलेन्द्रस्य निषधस्य यथार्थवत् ।
कीर्त्त्यमानमशेषेण विशेषं शृणुत द्विजाः ॥४८॥
विस्तीर्णे मध्यमे कूटे हेमधातुविभूषिते ।
दीप्तमायतनं विष्णोः सिद्धर्षिगणसेवितं ।
यच्चाप्सरःसमाकीर्णं गन्धर्वगणसेवितं ॥४९॥
तत्र साक्षान्महादेवः पीताम्बरधरो हरिः ॥
वरदः सेव्यते सिद्धैर्लोककर्त्ता सनातनः ॥५०॥
तस्यैवाभ्यन्तरे कूटे नानाधातुविभूषिते ।
तटे निषधकूटस्य स्वच्छचारुशिलातले ॥५१॥
रुक्मकाञ्चनमित्यूहस्तप्तकाञ्चनतोरणं ।
अनेकवलभीकूटप्रतोलीशतसङ्कटं ॥५२॥

---

१ वरपर्वतमिति क०, ङ० च ।

हर्म्यप्रासादमतुलन्तप्तकाञ्चनभूषितं ।
हर्म्यप्रासादबद्धञ्च मुदितञ्चातिविस्तरं ॥५३॥
उद्यानमालाकलितं त्रिंशद्योजनमायतं ।
दुःप्रसह्यममित्रैस्तत् पूर्णमाशीविषोपमैः ।
उलक्षीनां(१) प्रमुदितं रक्षसां राक्षसं पुरं ॥५४॥
तस्यैव दक्षिणे पार्श्वे नैकदैत्यगणालये ।
गुहाप्रवेशं नगरं शैलकुक्षौ दुरासदं ॥५५॥
तथैव पश्चिमे कूटे पारिजातशिलोच्चये ।
देवदानवभागानां समृद्धानि पुराणि तु ॥५६॥
तत्र सोमशिला नाम गिरेस्तस्य महातटे ।
सोमो यत्रावतरति सदा पर्वसु पर्वसु ॥५७॥
उपासतेऽत्र श्रीमन्तं तारापतिमनिन्दितं ।
ऋषिकिन्नरगन्धर्वाः साक्षाद्देवं तमोनुदं ॥५८॥
तत्रैव चोत्तरे कूटे ब्रह्मपार्श्वमिति स्मृतं ।
स्थानं तत्र सुरेशस्य ब्रह्मणः प्रथितन्दिवि ॥५९॥
इज्यापूजानमस्कारैस्तत्र सिद्धाः स्वयम्भुवं ।
उपासते महात्मानं यक्षगन्धर्वदानवाः ॥६०॥
तथैवायतनं वह्नेः सर्वलोकेषु विश्रुतं ।
तत्र विग्रहवान् वह्निः सेव्यते सिद्धचारणैः ॥६१॥
तथैव चोत्तरे रम्ये त्रिशृङ्गे वरपर्वते ।
ऋषिभिर्व्वानुचरिते नानाभूतगणालये ।
पुरस्तात् त्रिषु लोकेषु हेमचित्रन्तु विश्रुतं ॥६२॥

१ उलक्षीनामिति क० ।

त्रयाणां देवमुख्यानां(१) त्रीण्येवायतनानि च ।
नारायणस्यायतनं पूर्वकूटे द्विजोत्तमाः ।
मध्यमे ब्रह्मणः स्थानं शङ्करस्य तु पश्चिमे ॥ ६३ ॥
दैत्यदानवगन्धर्वैर्यक्षराक्षसपन्नगैः ।
इज्याना अभिपूज्यन्ते(२) देवदेवा महाबलाः ॥ ६४ ॥
तथा पुराणि रम्याणि देशे चैव क्वचित् क्वचित् ।
यक्षगन्धर्वनागानां त्रिशृङ्गे वरपर्वते ॥ ६५ ॥
तथैव चोत्तरे देशे जातुधौ(३) देवपर्वते ।
अनेकशृङ्गकलिते सिद्धसाधुनिषेविते ॥ ६६ ॥
यक्षाणां किन्नराणाञ्च गन्धर्वाणां सहस्रशः ।
नागानां राक्षसानाञ्च दैत्यानाञ्च महाबले ॥ ६७ ॥
कूटे तु मध्यमे तस्य सिद्धसङ्घनिषेविते ।
रम्ये देवर्षिचरिते रत्नधातुविभूषिते ॥ ६८ ॥
पद्मोत्पलवनैः फुल्लैः सौगन्धिकवनैस्तथा ।
तथा कुमुदखण्डैश्च विकचैरुपशोभिते ॥ ६९ ॥
विहङ्गसङ्घसङ्घुष्टं नानासत्त्वनिषेवितं ।
हंसकारण्डवाकीर्णं मत्तषट्पदसेवितं ॥ ७० ॥
नानासत्त्वगणाकीर्णं विहङ्गैरुपशोभितं ।
चारुतीर्थसुसम्बाधं त्रिंशद्योजनमण्डलं ॥ ७१ ॥
सिद्धैरुपस्पृष्टजलं जलदोषविवर्जितं ।

---

१ देवपुण्यानामिति क०, घ० च ।
२ इज्याः स्वरसैः पूज्यन्त इति ङ० ।
३ जातुधाविति ख०, ङ० च ।

तत्रानन्दजलन्नाम महापुण्यजलं सरः ॥ ७२ ॥
तत्र नागपतिश्चण्डश्चण्डो नाम दुरासदः ।
शतशीर्षो महाभागो विष्णुचक्राङ्कचिह्नितः ।
इत्येवमष्टौ विज्ञेया विचित्रा देवपर्वताः ॥ ७३ ॥
पुरैरायतनैः पुण्यैः पुण्योदैश्च सरोवरैः ।
सुवर्णपर्वतैर्नैकैस्तथा रजतपर्वतैः ॥ ७४ ॥
नानारत्नप्रभासैश्च नैकैश्चमणिपर्वतैः ।
हरितालपर्व्वतैर्नैकैस्तथा हिङ्गुलकाञ्चनैः ॥ ७५ ॥
शुद्धैर्मनःशिलाजालैर्भास्वरैररुणप्रभैः ।
नानाधातुविचित्रैश्च नैकैश्च मणिपर्वतैः ॥ ७६ ॥
पूर्णा वसुमती सर्वा गिरिभिर्नैकविस्तरैः ।
नदीकन्दरशैलाद्यैरनेकैश्चित्रसानुभिः ॥ ७७ ॥
इत्येवमचलैर्युक्ता दैत्यराक्षससाधुभिः ।
किन्नरोरगगन्धर्वैर्विचित्रैः(१) सिद्धचारणैः ॥ ७८ ॥
गन्धर्वाप्सरोभिश्च सेविता नैकविस्तराः ।
पुण्यकृद्भिः(२) समाकीर्णाः केसराकृतयो नगाः ॥ ७९ ॥
गिरिजालन्तु तन्मेरोः सिद्धलोकमिति स्मृतं ।
चित्रं नानाश्रयोपेतं प्रचारं सुकृतात्मनां ॥ ८० ॥
नात्युग्रकर्मसिद्धानां प्रतिमा मध्यमाः स्मृताः ।
स हि स्वर्ग इतिख्यातः क्रमस्त्वेष प्रकीर्तितः ॥ ८१ ॥
चतुर्महाद्वीपवती सेयमुर्वी प्रकीर्त्तिता ।

---

१ विविधैरिति घ०, ङ० च ।

२ पुण्यवद्भिरिति ख० ।

नानावर्णप्रमाणैर्हि नानावर्णबलैस्तथा ॥ ८२ ॥
नानाभक्ष्यान्नपानैश्च नानाच्छादनभूषणः ।
प्रजाविकारैर्विविधैश्चित्रैरध्युषितैः सह ॥ ८३ ॥
चत्वारो नैकवर्णाढ्या महाद्वीपाः परिश्रुताः ।
भद्राश्च भरताश्चैव केतुमालाश्च पश्चिमाः ।
उत्तराः कुरवश्चैव कृतपुण्यप्रतिश्रयाः ॥ ८४ ॥
सैषा चतुर्महाद्वीपा नानाद्वीपसमाकुला ।
पृथिवी कीर्तिता कृत्स्ना पद्माकारा मया द्विजाः ॥ ८५ ॥
तदेषा सान्तरद्वीपा सशैलवनकानना ।
पद्मेत्यभिहिता कृत्स्ना पृथिवी बहुविस्तरा ॥ ८६ ॥
सब्रह्मसदनं लोकं सदेवासुरमानुषं ।
त्रिलोकमिति विख्यातं यत्तत्तैर्व्यवहार्य्यते ॥ ८७ ॥
चन्द्रादित्यावततं यत्तज्जगत्परिगीयते ।
गन्धवर्णरसोपेतं शब्दस्पर्शगुणान्वितं ॥ ८८ ॥
तं लोकपद्मं श्रुतिभिः पद्ममित्यभिधीयते ।
एष सर्व्वपुराणेषु क्रमः सुपरिनिश्चितः ॥ ८९ ॥

इति श्रीमहापुराणे वायुप्रोक्ते भुवनविन्यासो नामैकचत्वारिंशोऽध्यायः ।

---

# अथ द्विचत्वारिंशोऽध्यायः।

———000———

भुवनविन्यासः।

सूत उवाच। सरोवरेभ्यः पुण्योदाः(१) देवनद्यो विनिर्गताः।
महौघतोया नद्यश्च ताः शृणुध्वं यथाक्रमं ॥ १ ॥
आकाशाम्भोनिधेर्योऽसौ सोम इत्यभिधीयते।
आधारः सर्व्वभूतानां देवानाममृताकरः ॥ २ ॥
तस्मात् प्रवृत्ता पुण्योदा नदी ह्याकाशगामिनी।
सप्तमेनानिलपथा प्रयाता विमलोदका ॥ ३ ॥
सा ज्योतिषि निवर्त्तन्ती ज्योतिर्गणनिषेविता।
ताराकोटिसहस्राणां नभसश्च समायता ॥ ४ ॥
माहेन्द्रेण गजेन्द्रेण आकाशपथयायिना।
क्रीडिता ह्यन्तरतले या सा विक्षोभितोदका ॥ ५ ॥
नैकैर्विमानसङ्घातैः प्रक्रामद्भिर्नभस्तलं।
सिद्धैरुपस्पृष्टजला महापुण्यजला शिवा ॥ ६ ॥
वायुना प्रेर्य्यमाणा च अनेकाभोगगामिनी।
परिवर्त्तत्यहरहो यथा सूर्य्यस्तथैव सा ॥ ७ ॥
चत्वार्य्यशीति प्रतता योजनानां समन्ततः।
वेगेन कुर्वती मेरुं सा प्रयाता प्रदक्षिणं ॥ ८ ॥

---

१ पुण्योभ्य इति ख०।

विभिद्यमाना सलिलैस्तेजसेनानिलेन च ।
मेरोरुत्तरकूटेषु पतिताथ चतुर्ष्वपि ॥ ९ ॥
मेरुकूटतटान्तेभ्य उत्कृष्टेभ्यो निवर्त्तिता ।
विकीर्य्यमाणसलिला चतुर्द्धा संस्रुतोदका(१) ॥ १० ॥
षष्टियोजनसाहस्रं निरालम्बनमम्बरं ।
निपपात महाभागा मेरोस्तस्य चतुर्द्दिशं ॥ ११ ॥
सा चतुर्ष्वभितश्चैव महापादेषु शोभना ।
पुण्या मन्दरपूर्वेण पतिता हि महानदी ॥ १२ ॥
पूर्वेणांशेन देवानां सर्वसिद्धगणालयं ।
सुवर्णचित्रकटकं नैकनिर्झरकन्दरं ॥ १३ ॥
प्लावयन्ती सशैलेन्द्रं मन्दरञ्चारुकन्दरं ।
वप्रप्रतापशमनैरनेकैः स्फाटिकोदकैः(२) ॥ १४ ॥
तथा चैत्ररथं रम्यं प्लावयन्ती प्रदक्षिणं ।
प्रविष्टा ह्यम्बरनदी ह्यरुणोदसरोवरं ॥ १५ ॥
अरुणोदाच्चिहृत्ताऽथ शीतान्ते रम्यनिर्झरे ।
शैले सिद्धगणावासे निपपात सुगामिनी(३) ॥ १६ ॥
सीता नाम महापुण्या नदीनां प्रवरा नदी ।
सा निकुञ्जनिरुद्धा तु अनेकाभोगगामिनी ॥ १७ ॥
शीतान्तशिखराद्भ्रष्टा सुकुञ्जे वरपर्वते ।
निपपात महाभागा तस्मादपि सुमञ्जसं ॥ १८ ॥

---

१ संस्कृतोदकेति ख० ।
२ स्फुटिकोदकैरिति ख० ।
३ निपपातासुगामिनीति ख० ॥

तस्मान् माल्यवतं शैलं भावयन्ती वरापगा(१) ।
वैकङ्कं समनुप्राप्ता वैकङ्कान्मणिपर्वतं ।
मणिपर्वतान्महाशैलं ऋषभं नैककन्दरं ॥ १८ ॥
एवं शैलसहस्राणि दारयन्ती महानदी ।
पतिताऽथ महाशैले जठरे सिद्धसेविते ॥ २० ॥
तस्मादपि महाशैलं देवकूटं तरङ्गिणी ।
तस्य कुक्षिसमुद्भ्रान्ता क्रमेण पृथिवीं गता ॥ २१ ॥
सैवं स्थलीसहस्राणि शैलराजशतानि च ।
वनानि च विचित्राणि सरांसि विविधानि च ॥ २२ ॥
स्रावयन्ती महाभागा विस्फारेष्ववलोकदा(२) ।
नदीसहस्रानुगता प्रवृत्ता च महानदी ॥ २३ ॥
भद्राश्वं समहाद्वीपं प्लावयन्ती वरापगा ।
प्रविष्टा ह्यर्णवं पूर्वं पूर्वे द्वीपे महानदी ॥ २४ ॥
दक्षिणेऽपि प्रपन्ना या शैलेन्द्रे गन्धमादने ।
चित्रैः प्रपातैर्विविधैर्नैकविस्फालितोदका ॥ २५ ॥
तद्गन्धमादनवनं नन्दनं देवनन्दनं ।
प्लावयन्ती महाभागा प्रयाता सा प्रदक्षिणं । २६ ॥
नाम्ना ह्यलकनन्देति सर्वलोकेषु विश्रुता ।
प्रविशत्युत्तरसरो मानसं देवमानसं । २७ ॥
मानसाच्छैलराजानं रम्यं त्रिशिखरं गता ।
त्रिकूटाच्छैलशिखरात् कलिङ्गशिखरं गता ॥ २८ ॥

---

१ परापगेति ङ० ॥

२ विस्फारेषु त्रिस्रामदेति ख०

कलिङ्गशिखराद्भ्रष्टा रुचके निपपात सा ।
रुचकान्निषधं प्राप्ता ताम्राभं निषधादपि ॥ २९ ॥
ताम्राभशिखराद्भ्रष्टा गता श्वेतोदरं गिरिं ।
तस्मात्सुमूलं शैलेन्द्रं वसुधारञ्च पर्वतं ॥ ३० ॥
हेमकूटं गता तस्माद् देवशृङ्गे ततो गता ।
तस्माद्गता महाशैलं ततश्चापि पिशाचकं ॥ ३१ ॥
पिशाचकाच्छैलवरात् पञ्चकूटङ्गता पुनः ।
पञ्चकूटात्तु कैलासं देवावासं शिलोच्चयं ॥ ३२ ॥
तस्य कुक्षिषु विभ्रान्ता नैककन्दरसानुषु ।
हिमवत्युत्तमनदी निपपाताचलोत्तमे ॥ ३३ ॥
सैवं शैलसहस्राणि दारयन्ती(१) महानदी ।
स्थलीशतान्यनेकानि प्लावयन्त्याशुगामिनी ॥ ३४ ॥
वनानाञ्च सहस्राणि कन्दराणां शतानि च ।
स्नावयन्ती महाभागा प्रयाता दक्षिणोदधिं ॥ ३५ ॥
रम्या योजनविस्तीर्णा शैलकुक्षिषु संवृता ।
या धृता देवदेवेन शङ्करेण महात्मना ॥ ३६ ॥
पावनी द्विजशार्दूल घोराणामपि पाप्मनां ।
शङ्करस्याङ्गसंस्पर्शान्महादेवस्य धीमतः ।
द्विगुणं पवित्रसलिला सर्वलोके महानदी ॥ ३७ ॥
अनुशैलं समन्ताच्च निर्गता बहुभिर्मुखैः ।
अथोऽन्येनाभिधानेन(२) ख्याता नद्यः सहस्रशः ॥ ३८ ॥

१ पावयन्तीति ख० ।
२ अन्योन्येनाभिधानेनेति ङ०

तस्माद्धिमवती गङ्गा गता सा तु महानदी ।
एवं गङ्गेति नाम्नादिप्रकाशा सिद्धसेविता ॥ ३९ ॥
धन्यास्ते सत्तमा देशा यत्र गङ्गा महानदी ।
रुद्रसाध्यानिलादित्यैर्जुष्टतोया यशस्वती ॥ ४० ॥
महापादं प्रवक्ष्यामि मेरोरपि हि पश्चिमं ।
नानारत्नाकरं पुण्यं पुण्यकृद्भिर्निषेवितं ॥ ४१ ॥
विपुलं शैलराजानं विपुलोदरकन्दरं ।
नितम्बकुञ्जकटकैर्विमलैर्म्मणिशृङ्गतोदरं ॥ ४२ ॥
अपि या त्र्यम्बकस्यैषा त्रिदशैः सेवितोदका ।
वायुवेगा गताभोगा लतेव भ्रामिता पुनः (१)॥ ४३ ॥
मेरुकूटतटाद्भ्रष्टा प्रहतैः स्वादितोदका ।
विस्तीर्य्यमाणसलिला निर्म्मलांशुकसन्निभा ॥ ४४ ॥
तस्य कूटेऽम्बरनदी सिद्धचारणसेविता ।
प्रदक्षिणमथावृत्य पतिता सा तु गामिनी ॥ ४५ ॥
देवभ्राजं महाभ्राजं सर्वभ्राजं महावनं ।
प्लावयन्ती महाभागा नानापुष्पफलोदका ॥ ४६ ॥
प्रदक्षिणं प्रकुर्वाणा नानावनविभूषिता ।
प्रविष्टा पश्चिमसरः सितोदं विमलोदकं ॥ ४७ ॥
सा सितोदाद्विनिष्क्रान्ता सुपक्षं पर्व्वतं गता ।
सुपक्षतस्तु पुण्योदा ततो देवर्षिसेविता ॥ ४८ ॥
सुपक्षकूटतटगा तस्माच्च संशितोदका ।
निपपात महाभागा रमण्यं शिखिपर्व्वतं ॥ ४९ ॥

---

१ लतेवानिलभ्रामितेति ध० ।

शिखेश पर्व्वतात् कङ्कं कङ्काद्वैदूर्य्यपर्व्वतं ।
वैदूर्य्यात् कपिलं शैलं तस्माच्च गन्धमादनं ॥ ५० ॥
तस्माद् गिरिवरात् गता पिञ्जरं वरपर्व्वतं ।
पिञ्जरात् सरसं याता तस्माच्च कुमुदाचलं ॥ ५१ ॥
मधुमन्तं जनञ्चैव(१) मुकुटञ्च शिलोच्चयं ।
मुकुटाच्छैलशिखरात् कृष्णं याता महागिरिं ॥ ५२ ॥
कृष्णात् श्वेतं महाशैलं महानगनिषेवितं ।
श्वेतात् सहस्रशिखरं शैलेन्द्रं पतिता पुनः ॥ ५३ ॥
अनेकाभिः स्रवन्तीभिराप्यायितजला शिवा ।
एवं शैलसहस्राणि सादयन्ती महानदी ।
पारिजाते महाशैले निपपाताशुगामिनी ॥ ५४ ॥
अनेकनिर्झरनदी गुहासानुषु राजते ।
तस्य कुक्षिष्वनेकासु भ्रान्ततोया तरङ्गिणी ॥ ५५ ॥
व्याहन्यमानसंवेगा गण्डशैलैरनेकशः ।
संविद्यमानसलिला गता च धरणीतले ॥ ५६ ॥
(केतुमालं महाद्वीपं नानाम्लेच्छगणैर्युतं ।
प्लावयन्ती महाभागा प्रयाता पश्चिमार्णवं ॥ ५७ ॥)
सुवर्णचित्रपार्श्वं तु सुपार्श्वेऽप्युत्तरे गिरौ ।
मेरोश्चित्रमहापादे महासत्वनिषेविते ॥ ५८ ॥
मेरुकूटतटाद् भ्रष्टा पवनेनेरितोदका ।

---

१ मधुमन्तावलञ्चैवेति ख० ।

अनेकाभोगवक्राङ्गी क्षिप्यमाना नभस्तले ॥ ५९ ॥
षष्टियोजनमात्रस्ते निरालम्बेऽम्बरे शुभे ।
विकीर्य्यमाणा मालेव निपपात महानदी ॥ ६० ॥
एवं कूटतटैर्भ्रष्टा नैकैर्देवर्षिसेवितैः ।
विकीर्य्यमाणसलिला नैकपुष्पोडुपोत्कचा ॥ ६१ ॥
नानारत्नवनोद्देशमरण्यं सवितुर्व्वनं ।
महावनं महाभागा प्लावयन्ती प्रदक्षिणं ॥ ६२ ॥
सरोवरं महापुण्यं महाभागनिषेवितं ।
तत्राविवेश कल्याणी महाभद्रं सितोदका ॥ ६३ ॥
भद्रसोमेति नाम्ना हि महापारा महाजवा ।
महानदी महापुण्या महाभद्रा विनिर्गता ॥ ६४ ॥
नैकनिर्झरवप्राढ्या शङ्खकूटतटे तु सा(१) ।
तत्र कूटे गिरितटे निपपाताशुगामिनी ॥ ६५ ॥
शङ्खकूटतटाद्भ्रष्टा पपात वृषपर्व्वतं ।
वृषपर्व्वताद्वत्सगिरिं नागशैलं ततो गता ॥ ६६ ॥
तस्मान्नीलं नगश्रेष्ठं संप्राप्ता वर्षपर्व्वतं ।
नीलात्कपिञ्जलश्चैव इन्द्रनीलश्च निम्नगा ॥ ६७ ॥
ततः परं महानीलं हेमशृङ्गञ्च सा ययौ ।
हेमशृङ्गाद्गता श्वेतं श्वेताच्च सुनगं ययौ ॥ ६८ ॥
सुनगात् शतशृङ्गञ्च संप्राप्ता सा महानदी ।
शतशृङ्गान्महाशैलं पुष्करं पुष्पमण्डितं ॥ ६९ ॥

१ शुभेति ङ० ।

पुष्कराश्च महाशैलं हिराजं सुमहाबलं।
वराहपर्व्वतं तस्मान्मयूरञ्च शिलोच्चयं ॥ ७० ॥
मयूराच्चैकशिखरं कन्दरोदरमण्डितं।
जातुधिं(?) शैलशिखरं निपपाताशुगामिनी ॥ ७१ ॥
एवं गिरिसहस्राणि दारयन्ती महानदी।
त्रिशृङ्गं शृङ्गकलिलं मर्य्यादापर्व्वतं गता ॥ ७२ ॥
त्रिशृङ्गतटविभ्रष्टा महाभागनिषेविता।
मेरुकूटतटाद्भ्रष्टा पवनेनेरितोदका ॥ ७३ ॥
विरुद्धं पर्व्वतवरं पपात विमलोदका।
प्लावयन्ती महाभागा प्रयाता पश्चिमार्णवं ॥ ७४ ॥
सुवर्णभुवि पार्श्वे तु सुपार्श्वेप्युत्तरे गिरौ।
मेरोश्चित्रे महापादे महासत्वनिषेविते ॥ ७५ ॥
कन्दरोदरविभ्रष्टा तस्मादपि तरङ्गिणी।
नैकभोगा पपातोर्व्वीं चित्रपुष्पोडुपोत्कचा ॥ ७६ ॥
प्लावयन्ती प्रमुदिता उत्तरान् मा कुरून्शिवा।
महाद्वीपस्य मध्येन प्रयाता सोत्तरार्णवं ॥ ७७ ॥
एवं तास्तु महानद्यश्चतस्रो विमलोदकाः।
महागिरितटभ्रष्टाः संप्रयाताश्चतुर्दिशं ॥ ७८ ॥
तत्रेयं कथितप्राया पृथिवी बहुविस्तरा।
मेरुशैलमहाकीर्णाऽविशञ्च सर्व्वतो दिशं ॥ ७९ ॥
चतुर्महाद्वीपवती चतुराक्रीडकानना।

---

१ जातधिमिति ङ०

चतुष्केतुमहावृक्षा चतुर्व्वीरसरस्वती ॥ ८० ॥
चतुर्महाशैलवती चतुरोरगसंश्रया(१)।
अष्टोत्तरमहाशैला तथाष्टवरपर्वता ॥ ८१ ॥

इति श्रीमहापुराणे वायुप्रोक्ते भुवनविन्यासो नाम
द्विचत्वारिंशोऽध्यायः।

---

१ चतुराननसंश्रयेति ख०।

# अथ त्रिचत्वारिंशोऽध्यायः।

———000———

भुवनविन्यासः।

सूत उवाच। गन्धमादनपार्श्वे तु स्फीता चोपरि गण्डिका।
द्वात्रिंशतं (१) सहस्राणि योजनैः पूर्व्वपश्चिमा ॥ १ ॥
अस्यायामश्चतुस्त्रिंशत्सहस्राणि प्रमाणतः।
तत्र ते शुभकर्म्माणः केतुमालाः परिस्रुताः ॥ २ ॥
तत्र काला नराः सर्व्वे महासत्वा महाबलाः।
स्त्रियश्चोत्पलपत्राभाः सर्वास्ताः प्रियदर्शनाः ॥ ३ ॥
तत्र दिव्यो महावृक्षः पनसः षड्रसाश्रयः।
ईश्वरो ब्रह्मणः पुत्रः कामचारी मनोजवः।
तस्य पीत्वा फलरसं जीवन्ति हि समायुतं ॥ ४ ॥
पार्श्वे माल्यवतश्चापि पूर्वे पूर्वा तु गण्डिका।
आयामतोऽथ विस्ताराद्यथैवापरगण्डिका ॥ ५ ॥
भद्राश्वास्तत्र विज्ञेया नित्यं मुदितमानसाः।
भद्रं सालवनं तत्र कालाम्राश्च महाद्रुमाः ॥ ६ ॥
तत्र ते पुरुषाः श्वेता महासत्वा महाबलाः।
स्त्रियः कुमुदवर्णाभाः सुन्दर्य्यः प्रियदर्शनाः ॥ ७ ॥
चन्द्रप्रभाश्चन्द्रवर्णाः पूर्णचन्द्रनिभाननाः।

---

१ पाठोऽयं न समीचीनः।

चन्द्रशीतलगात्राश्च स्वयशोत्पलगन्धिकाः ॥ ८ ॥
दशवर्षसहस्राणि तेषामायुर्निरामयं ।
कालाम्रस्य रसं पीत्वा सर्व्वदा स्थिरयौवनाः ॥ ९ ॥

ऋषय ऊचुः । प्रमाणं वर्णमायुश्च याथातथ्येन कीर्तितं ।
चतुर्णामपि द्वीपानां समासन्न तु विस्तरात् ॥ १० ॥

सूत उवाच । भद्राश्वानां यथा चिह्नं कीर्तितं कीर्तिवर्द्धनाः ।
तच्छृणुध्वन्तु कार्त्स्नेन पूर्वसिद्धैरुदाहृतं ॥ ११ ॥
देवकूटस्य सर्वस्य प्रथितस्येह यत्परं ।
पूर्व्वेण दिक्षु सर्वासु यथावच्च प्रकीर्तितं ॥ १२ ॥
कुलाचलानां पञ्चानां नदीनाञ्च विशेषतः ।
तथा जनपदानाञ्च यथा दृष्टं यथा श्रुतं ॥ १३ ॥
सैवालो वर्णमालाग्रः कोरञ्जश्चाचलोत्तमः ।
श्वेतवर्णश्च नीलश्च पञ्चैते कुलपर्वताः ॥ १४ ॥
तेषां प्रसृतिरन्येऽपि पर्वता बहुविस्तराः ।
कोटिर्कोटिः क्षितौ ज्ञेयाः शतशोऽथ सहस्रशः ॥ १५ ॥
तैर्विमिश्रा जनपदैर्नानासत्वसमाकुलाः ।
नानाप्रकारजातीयास्त्वनेकनृपपालिताः ॥ १६ ॥
नामधेयैश्च विक्रान्तैः श्रीमद्भिः पुरुषर्षभैः ।
अध्यासिता जनपदाः कीर्तनीयाश्च शोभिताः ॥ १७ ॥
तेषान्तु नामधेयानि राष्ट्राणि विविधानि च ।
गिर्य्यन्तरनिविष्टानि समेषु विषमेषु च ॥ १८ ॥
तथा समङ्गलाः शुद्धायन्द्रकान्ताः सुनन्दमाः ।
व्रजका नीलशैलेयाः सौवीरा विजयस्थलाः ॥ १९ ॥

महास्थला: सुकामाश्च महाकेशा: सुमूर्द्धजा: ।
वातरंहा: सोपसङ्गा: परिवाया: पराचका: ॥ २० ॥
सम्भवक्रा महानेत्रा: सैवालास्तनपास्तथा ।
कुमुदा: शाकमुण्डाश्च उर:सङ्कीर्णभौमका: ॥ २१ ॥
मोदका वत्सकाश्चैका वाराहा हारवामका: ।
शङ्खाख्या भाविसन्द्राश्च उत्तरा हैमभौमका: ॥ २२ ॥
कृष्णभौमा: सुभौमाश्च महाभौमाश्च कीर्तिता: ।
एते चान्ये च विख्याता नानाजनपदा मया ॥ २३ ॥
ते पिबन्ति महापुण्यां महागङ्गां महानदीं ।
आद्री त्रैलोक्यविख्याता शीता शीताम्बुवाहिनी ॥ २४ ॥
तथा च हंसवमतिर्महाचक्रा च निम्नगा ।
चक्रा वक्रा च कञ्ची च सुरसा चापगोत्तमा ॥ २५ ॥
शाखावती चेन्द्रनदी मेघा मङ्गारवाहिनी ।
कावेरी हरितोया च सोमावर्त्ता शतद्रुदा ॥ २६ ॥
वनमाला वसुमती पम्पा पम्पावती शुभा ।
सुवर्णा पञ्चवर्णा च तथा पुण्या वपुष्मती ॥ २७ ॥
मणिवप्रा सुवप्रा च ब्रह्मभागा शिलाशिनी ।
कृष्णतोया च पुण्योदा तथा नागपदी शुभा ॥ २८ ॥
शैवालिनी मणितटा क्षारोदा चारुणावती ।
तथा विष्णुपदी चैव महापुण्या महानदी ॥ २९ ॥
हिरण्यवाहिनीला च(१) स्कन्दमाला सुरावती ।
वामोदा च पताका च वेताली च महानदी ॥ ३० ॥

---

१ हिरण्यवाहिनी मा चेति ख० ॥

एता गङ्गा महानद्यो नायिका परिकीर्त्तिताः ।
क्षुद्रनद्यस्त्वसंख्याताः शतशोऽथ सहस्रशः ॥ ३१ ॥
पूर्व्वद्वीपस्य वाहिन्यः पुण्यवत्यश्च कीर्त्तिताः ।
कीर्त्तनेनापि चैतासां पूतः स्यादिति मे मतिः ॥ ३२ ॥
समृद्धराष्ट्रं स्फीतञ्च नानाजनपदाकुलं ।
नानावृक्षवनोद्देशं नानानगसुवेष्टितं (१) ॥ ३३ ॥
नरनारीगणाकीर्णं(२) नित्यं प्रमुदितं शिवं ।
बहुधान्यधनोपेतं नानानृपतिपालितं ।
उपेतं कीर्त्तनगतैर्नानारत्नाकराकरं ॥ ३४ ॥
तस्मिन्देशे समाख्याता हेमगङ्गदलप्रभाः ।
महाकाया महावीर्य्याः पुरुषाः पुरुषर्षभाः ॥ ३५ ॥
सम्भाषणं दर्शनञ्च समस्थानोपसेवनं ।
देवैः सह महाभागाः कुर्वते तत्र वै प्रजाः ॥ ३६ ॥
दशवर्षसहस्राणि तेषामायुः प्रकीर्तितं ।
धर्माधर्मविशेषश्च न तेष्वस्ति महात्मसु ।
अहिंसा सत्यवाक्यञ्च प्रकृत्यैव हि वर्त्तते ॥ ३७ ॥
ते भक्त्या शङ्करं देवं गौरीं परमवैष्णवीं (३) ।
इज्यापूजानमस्कारांस्ताभ्यां नित्यं प्रयुञ्जते ॥ ३८ ॥

इति श्रीमहापुराणे वायुप्रोक्ते भुवनविन्यासो नाम
त्रिचत्वारिंशोऽध्यायः ।

---

१ नानानगरपत्तनमिति ङ० । २ नरनारीसमाकीर्णमिति ङ० ।
३ गौरीञ्च प्रभविष्णवीमिति क०, ध०, ङ० च ।

# अथ चतुश्चत्वारिंशोऽध्यायः।

—०००—

भुवनविन्यासः।

सूत उवाच। निसर्ग एष विख्यातो भद्राश्वानां यथार्थवत्।
शृणुध्वं केतुमालानां विस्तरेण प्रकीर्त्तनं(१)॥ १॥
निषधस्याचलेन्द्रस्य पश्चिमस्य महात्मनः।
पश्चिमेन हि यत्तत्र दिक्षु सर्वासु कीर्तितं॥ २॥
कुलाचलानां सप्तानां नदीनाञ्च विशेषतः।
तथा जनपदानाञ्च विस्तरं श्रोतुमर्हथ॥ ३॥
विशालः कम्बलः कृष्णो जयन्तो हरिपर्व्वतः।
अशोको वर्द्धमानश्च सप्तैते कुलपर्व्वताः॥ ४॥
तेषां प्रसूतिरन्येपि पर्व्वता बहुविस्तराः।
कोटिकोटिशता ज्ञेयाः शतशोऽथ सहस्रशः॥ ५॥
तैर्व्विमिश्रा जनपदा नानाजातिसमाकुलाः(२)।
नानाप्रकारविज्ञेयास्त्वनेकनृपपालिताः॥ ६॥
ते नामधेयैर्विक्रान्ता विविधाः प्रथिता भुवि।
अध्यासिता जनपदैः कीर्त्तनैश्च विभूषिताः॥ ७॥
तेषां सनामधेयानि राष्ट्राणि विविधानि च।

---

१ प्रकीर्त्तितमिति क०। २ नानाजनसमाकुला इति घ०।

गिर्य्यन्तरनिविष्टानि समेषु विषमेषु च ॥ ८ ॥
यथेह कथिताः पौरा गोमनुष्यकपोतकाः ।
तत्मुखा भ्रमरा यूथा माहेयाचलकूटकाः ॥ ९ ॥
सुमौलाः स्तावकाः क्रौञ्चाः कृष्णाङ्गमणिपुञ्जकाः ।
कूटकम्बलमौषीयाः समुद्रान्तरकास्तथा ॥ १० ॥
करम्भवाः कुचाः श्वेताः सुवर्णकटकाः शुभाः ।
श्वेताङ्गाः कृष्णपादाश्च विहाः(१) कपिलकर्णिकाः ॥ ११ ॥
अत्याकरालगोज्वाला हीनाना वनपातकाः ।
महिषाः कुमुदाभाश्च करवाटाः सहोत्कचाः ॥ १२ ॥
शुनकासा महानासा वनामगजभूमिकाः ।
करञ्जमञ्जमा वाहाः किष्किगडौपाण्डुभूमिकाः ॥ १३ ॥
कुवेरा धूमजा जङ्गा वङ्गा राजीवकोकिलाः ।
वाचाङ्गाश्च महाङ्गाश्च मधौरेयाः(२) सुरेचकाः ॥ १४ ॥
पित्तलाः काचलाश्चैव श्रवणा मत्तकासिकाः ।
गोदावा वकुला वाङ्गा वङ्गका मोदकाः कलाः ॥ १५ ॥
ते पिबन्ति महाभागाः प्रथमान्तु महानदीं ।
सुवप्रां पुण्यसलिलां महानागनिषेवितां ॥ १६ ॥
कम्बलां तामसीं श्यामां सुमेधां वकुलां नदीं ।
विकीर्णां शिखिमालाञ्च तथा दर्भावतीमपि ॥ १७ ॥
भद्रानदीं शुकनदीं पलाशाञ्च महानदीं ।

---

१ किन्हा इति घ० ।

२ मेधरेया इति घ० । माधवेया इति क० ।

भीमां प्रभञ्जनां काञ्चीं पुण्याञ्चैव कुशावतीं ॥ १८ ॥
दक्षां शाकवतीञ्चैव पुण्योदाञ्च महानदीं ।
चन्द्रावतीं सुमूलाञ्च ऋषभाञ्चापगोत्तमां ॥ १९ ॥
नदीं समुद्रमालाञ्च तथा चम्पावतीमपि ।
एकाक्षां पुष्कलां बाह्यां सुवर्णां नन्दिनीमपि ॥ २० ॥
कालिन्दीञ्चैव पुण्योदां भारतीञ्च महानदीं ।
सीतोदाम्पातिकां ब्राह्मीं विशालाञ्च महानदीं ॥ २१ ॥
पीवरीं कुम्भकारीञ्च रुषाञ्चैवापगोत्तमां ।
महिषीं मानुषीं दण्डां तथा नदनदीं शुभां ॥ २२ ॥
एताश्चान्याश्च पीयन्ते बह्वयो हि सरितोत्तमाः(१) ।
देवर्षिसिद्धचरिताः पुण्योदाः पापहाः शुभाः ॥ २३ ॥
नानाजनपदास्फीतं महापगाविभूषितं ।
नानारत्नौघसम्पूर्णं नित्यं प्रमुदितं शिवं ॥ २४ ॥
उदीर्णं धनधान्याद्यैर्नरवासैः समन्ततः ।
सन्निविष्टं महाद्वीपं पश्चिमं सुकृतात्मनां ।
निसर्गः केतुमालानामेष वः परिकीर्त्तितः ॥ २५ ॥

इति श्रीमहापुराणे वायुप्रोक्ते भुवनविन्यासो
नाम चतुश्चत्वारिंशोऽध्यायः ।

---

१ पाठोऽयमार्षः ।

# अथ पञ्चचत्वारिंशोऽध्यायः ।

———ooo———

भुवनविन्यासः ।

शांशपायन उवाच(१) । पूर्वापरौ समाख्यातौ द्वौ देशौ नस्त्वया प्रभो ।
उत्तराणाञ्च वर्षाणां दक्षिणानाञ्च सर्वशः ।
आचक्ष्व नो यथातथ्यं ये च पर्व्वतवासिनः ॥ १ ॥
सूत उवाच । (दक्षिणेन तु श्वेतस्य नीलस्यैवोत्तरेण तु ।
वर्षं रमणकं नाम जायन्ते तत्र मानवाः ॥ २ ॥
सर्व्वर्तुकामदाः सत्वा जरादुर्गन्धवर्जिताः ।
शुक्लाभिजनसम्पन्नाः सर्वे च प्रियदर्शनाः ॥ ३ ॥
तत्रापि सुमहान् दिव्यो न्यग्रोधो रोहिणो महान् ।
तस्य पीत्वा फलरसं पिबन्तो वर्त्तयन्त्युत ॥ ४ ॥
दशवर्षसहस्राणि शतानि दशपञ्च च ।
जीवन्ति ते महाभागाः सदा हृष्टा नरोत्तमाः ॥ ५ ॥
(उत्तरेण तु श्वेतस्य शृङ्गसाह्वस्य दक्षिणे ।
वर्षं हिरण्वतं नाम यत्र हैरण्वती नदी ॥ ६ ॥)
महाबलाः सुतेजस्का जायन्ते तत्र मानवाः ।
सर्वर्तुकामदाः सत्वा धनिनः प्रियदर्शनाः ॥ ७ ॥

---

१ वैशम्पायन उवाचेति ख० ।

एकादश सहस्राणि वर्षाणां तेऽमितौजसः ।
आयुःप्रमाणं जीवन्ति शतानि दशपञ्च च ॥ ८ ॥
तस्मिन् वर्षे महावृक्षो लकुचः षड्रसाश्रयः ।
तस्य पीत्वा फलरसं तत्र जीवन्ति मानवाः ॥ ९ ॥
त्रीणि शृङ्गवतः शृङ्गाण्युच्छ्रितानि महान्ति च ।
एकं मणिमयं तेषामेकञ्चैव हिरण्मयं ।
सर्व्वरत्नमयञ्चैकं भवनैरुपशोभितं ॥ १० ॥
उत्तरस्य समुद्रस्य समुद्रान्ते च दक्षिणे ।
कुरवस्तत्र तद्वर्षं पुण्यं सिद्धनिषेवितं ॥ ११ ॥
तत्र वृक्षा मधुफला नित्यं पुष्पफलोपगाः ।
वस्त्राणि च प्रसूयन्ते फलेष्वाभरणानि च ॥ १२ ॥
सर्व्वकामफलास्तत्र क्वचिद् वृक्षा मनोरमाः ।
गन्धवर्णरसोपेतं प्रक्षरन्ति मधूत्तमं ॥ १३ ॥
अपरे क्षीरिणो नाम वृक्षास्तत्र मनोरमाः ।
ये क्षरन्ति सदा क्षीरं षड्रसं ह्यमृतोपमं ॥ १४ ॥
सर्वा मणिमयी भूमिः सूक्ष्मकाञ्चनवालुका ।
सर्व्वतः सुखसंस्पर्शा निष्पङ्का नीरुजा शुभा ॥ १५ ॥
देवलोकाच्युतास्तत्र जायन्ते मानवाः शुभाः ।
शुक्लाभिजनसम्पन्नाः सर्वे च स्थिरयौवनाः ॥ १६ ॥
मिथुनानि प्रसूयन्ते स्त्रियश्चातिमनोहराः ।
ते च तं क्षीरिणं वृक्षं पिबन्ति ह्यमृतोपमं ॥ १७ ॥
मिथुनं जायते सद्यः समञ्चैव विवर्द्धते ।
समं शीलञ्च रूपञ्च म्रियन्ते चैव ते समं ॥ १८ ॥

अन्योन्यमनुरक्ताश्च चक्रवाकसधर्म्मिणः ।
अनामया ह्यशोकाश्च नित्यं सुखनिषेविणः ॥ १९ ॥
त्रयोदश सहस्राणि शतानि दशपञ्च च ।
जीवन्ति ते महावीर्य्या न चान्यस्त्रीनिषेविणः ॥ २० ॥
कुरूणामपि चैतेषां शृणुध्वं विस्तरेण तु ।
जारुधेः(१) शैलराजस्याप्युत्तरेणोत्तरस्य हि ।
दिक्षु सर्व्वासु यद् यत्र कीर्त्त्यमानं विबोधत ॥ २१ ॥
अनेककन्दरदरीगुहानिर्झरमण्डितौ ।
नैककुञ्जवनोपेतौ चित्रधातुविभूषितौ(२) ॥ २२ ॥
अनेकधातुकलिलौ सर्व्वधातुविभूषितौ ।
पुष्पमूलफलोपेतौ सिद्धचारणसेवितौ ॥ २३ ॥
द्वावर्ण्णवौ सुमहतावुच्छ्रितौ कुलपर्व्वतौ ।
ताभ्यां कूटशतैर्नैकैस्तद्द्वीपमुपसेवितं ॥ २४ ॥
चन्द्रकान्तश्च शैलश्च सूर्य्यकान्तश्च सानुमान् ।
ययोर्मध्येन सा याता भद्रसोमा महानदी ॥ २५ ॥
सहस्रशश्च नद्योऽन्याः प्रसन्नसुरसोदकाः ।
पर्य्याप्तोदाः कुरूणां हि स्नानपानावगाहनैः ॥ २६ ॥
तथाऽन्याः क्षीरवाहिन्यो महानद्यः सहस्रशः ।
मधुमैरेयवाहिन्यो घृतवाहिन्य एव च ॥ २७ ॥
दध्नः शतह्रदाश्चान्यास्ततः स्वादुश्च पर्व्वतः ।
अमृतस्वादुकल्पानि फलानि विविधानि च ॥ २८ ॥

१ जातुधेरिति घ० ।

२ चित्रधातुविभूषितावि़ति ङ० ।

गन्धवर्णरसाढ्यानि मूलानि च फलानि च ।
पञ्चयोजनमानानि महागन्धानि सर्वशः ॥ २९ ॥
नानावर्णप्रकाराणि पुष्पाणि च सहस्रशः ।
उपभोगसहस्राणि भक्ष्याणि च महान्ति च ॥ ३० ॥
गन्धवर्णरसाढ्यानि स्पर्शोपेतानि सर्वशः ।
तमालागुरुगन्धानां चन्दनानां वनानि च ॥ ३१ ॥
भ्रमरैरुपगीतानि प्रफुल्लानि सदैव च ।
वृक्षगुल्मलताढ्यानि वनानि सुसुखानि च ॥ ३२ ॥
षट्पदैरुपगीतानि द्विजैश्चान्यैर्द्विजोत्तमाः ।
पद्मोत्पलवनाढ्यानि सरांसि च सहस्रशः ॥ ३३ ॥
भक्ष्यमाल्यसमृद्धाश्च बहुमाल्यानुलेपनाः ।
मनोहरसुखैश्चित्रैः पक्षिसङ्घैर्निकूजिताः ॥ ३४ ॥
शयनासनोपभोगाश्च अनेकगुणविस्तराः ।
विहारभूमयो रम्याः सर्वर्तुषु सुखप्रदाः ॥ ३५ ॥
आक्रीडाः सर्वतः स्फीताः मणिहेमपरिष्कृताः ।
शिलागृहा वृक्षगृहाः वरेण्याः कदलीगृहाः ॥ ३६ ॥
लतागृहसहस्राणि सुसुखानि समन्ततः ।
शुद्धशङ्खदलाभानि भूमिवेश्मशतानि च ॥ ३७ ॥
तपनीयगवाक्षाणि मणिजालान्तराणि च ।
सुवर्णमणिचित्राणि सर्वत्र विपुलानि च ॥ ३८ ॥
महावृक्षसहस्राणि वरेण्यानि(१) च सर्वशः ।
नानाकाराणि वासांसि सूक्ष्माणि सुसुखानि च ॥ ३९ ॥

१ रमण्यानि इति क०, घ० च ।

मृदङ्गवेणुपणववीणाद्या बहुविस्तराः ।
फलन्ति कल्पवृक्षाणां सहस्राणि शतानि च ॥ ४० ॥
सर्वत्रैव तथोद्यानं सर्वत्रैव हि तत्पुरं ।
सर्वद्वीपप्रमुदितं नरनारीसमाकुलं ।
प्रवाति चानिलस्तत्र नानापुष्पाधिवासितः ॥ ४१ ॥
नित्यमङ्गसुखाह्लादस्तस्मिन् द्वीपे श्रमापहे ।
तत्र स्वर्गपरिभ्रष्टा जायन्ते हि नराः सदा ।
भौमं तदपि हि स्वर्गं तत्रापि च गुणोत्तमं ॥ ४२ ॥
चन्द्रकान्ता नरवराः श्यामाङ्गाः पूर्वकूलजाः ।
श्यामावदाताः सुखिनः सूर्य्यकान्ता वराः प्रजाः ॥ ४३ ॥
तस्मिन् देशे नराः श्रेष्ठाः देवसत्वपराक्रमाः ।
सदा विहारिणः सर्वे कामवृत्त्या सुवर्चसः ॥ ४४ ॥
वलयाङ्गदकेयूरहारकुण्डलभूषिताः ।
स्रग्विणश्चित्रमुकुटाश्चित्राच्छादनवाससः । ४५ ॥
अजीर्णयौवनधराः सुप्रियाः प्रियदर्शनाः ।
प्रजा वर्षसहस्राणि जीवन्ति सुबह्वन्युत ॥ ४६ ॥
न ताः प्रसवधर्मिण्यो न वंशप्रत्ययो विधिः ।
मिथुनं जायते वृक्षादुपत्तममनीदृशं ॥ ४७ ॥
सामान्यविभवाः सर्वे ममत्वपरिवर्जिताः ।
न तत्र विद्यते धर्मो नाधर्म्मः सम्प्रवर्त्तते ॥ ४८ ॥
न व्याधिर्न जरा तत्र न दुर्मेधा न च क्लमः ।
पूर्णे काले विनश्यन्ति स्वबुद्बुदवत्स ते ॥ ४९ ॥
एवमत्यन्तसुखिनः सर्वदुःखविवर्जिताः ।

रक्षा धर्म्मं न पश्यन्ति दुःखाद्धर्मोऽभिजायते ॥ ५० ॥
उत्तराणां कुरूणान्तु पार्श्वे ज्ञेयन्तु दक्षिणे ।
समुद्रमूर्म्मिमालाढ्यं नानास्वरविभूषितं ॥ ५१ ॥
पञ्चयोजनसाहस्रमतिक्रम्य सुरालयं ।
चन्द्रद्वीपमिति ख्यातं चन्द्रमण्डलसंस्थितं ॥ ५२ ॥
सहस्रयोजनानान्तु सर्व्वतः परिमण्डलं ।
नानापुष्पफलोपेतं समृद्ध्या परया युतं ।
शतयोजनविस्तीर्णमुच्छ्रितं तावदेव तु ॥ ५३ ॥
तस्य मध्ये गिरिवरः सिद्धचारणसेवितः ।
चन्द्रतुल्यप्रभैः कान्तैश्चन्द्राकारैः सुलक्षणैः ॥ ५४ ॥
श्वेतवैदूर्य्यकुमुदैश्चितोऽसौ कुमुदप्रभः ।
अनेकचित्रकोद्यानो नैकनिर्झरकन्दरः ।
महासानुदरीकुञ्जैर्विविधैः समलङ्कृतः ॥ ५५ ॥
तस्माच्छैलान्महापुण्या चन्द्रांशुविमलोदका ।
प्रवहत्युत्तमनदी चन्द्रावर्त्ता तरङ्गिणी ॥ ५६ ॥
तत्र चन्द्रमसः स्थानं नक्षत्राधिपतेर्वरं ।
सदाऽवतरते तत्र चन्द्रमा ग्रहनायकः ॥ ५७ ॥
तत्र चन्द्रमसो नाम्ना शैलः स तु परिश्रुतः ।
चन्द्रद्वीपं महाद्वीपं प्रकाशं दिवि चेह च ॥ ५८ ॥
तत्र चन्द्रप्रतीकाशाः पूर्णचन्द्रनिभाननाः ।
चन्द्रकान्ताः प्रजाः सर्वा विमलाश्चन्द्रदैवताः ॥ ५९ ॥
अत्यन्तधार्म्मिकाः सौम्याः सत्यसन्धाः सुतेजसः ।
प्रजास्तत्र सदाचाराः दशवर्षशतायुषः ॥ ६० ॥

पश्चिमेन तु द्वीपस्य पश्चिमस्य प्रकीर्त्तितं ।
चतुर्योजनसाहस्रं समतीत्य महोदधिं ॥ ६१ ॥
दशयोजनसाहस्रं समन्तात् परिमण्डलं ।
द्वीपं भद्राकरं नाम नानापुष्पोपशोभितं ॥ ६२ ॥
प्रभूतधनधान्याढ्यमनेकनृपपालितं ।
नित्यं प्रमुदितं स्फीतं महाशैलैश्च शोभितं ॥ ६३ ॥
तत्र भद्रासनं वायोर्नानारत्नैश्च मण्डितं ।
तत्र विग्रहवान् वायुः सदा पर्वसु पूज्यते ॥ ६४ ॥
तपनीयसुवर्णाभास्तपनीयविभूषिताः ।
विराजन्तेऽमरप्रख्यास्तत्र चित्राम्बरस्रजः ॥ ६५ ॥
वीर्य्यवन्तो महाभागाः पञ्चवर्षशतायुषः ।
सत्यसन्धा मुदा युक्ताः प्रजास्ता वायुदैवताः ॥ ६६ ॥
सूत उवाच । एवमेव निसर्गोऽयं वर्षाणां भारते युगे ।
दृष्टः परमतत्त्वज्ञैर्भूयः किं कीर्त्तयामि ते ॥ ६७ ॥
आख्याते त्वेवमृषयः सूतपुत्रेण धीमता ।
उत्तरश्रवणे भूयः पप्रच्छुस्तदनन्तरम् ॥ ६८ ॥
ऋषय ऊचुः । यदिदं भारतं वर्षं यस्मिन् स्वायम्भुवादयः ।
चतुर्दशैते मनवः प्रजासर्गे भवन्त्युत ॥ ६९ ॥
एतद्वेदितुमिच्छामस्तन्नो निगद सत्तम ।
एतत् श्रुत्वा वचस्तेषामब्रवील्लोमहर्षणः ॥ ७० ॥
पौराणिकस्तदा सूत ऋषीणां भावितात्मनां ।
एतद्विस्तरतो भूयस्तानुवाच समाहितः ॥ ७१ ॥
सूत उवाच । निसर्ग एष विख्यातः कुरूणान्तु यथार्थवत् ।

भारतस्य तु वक्ष्यामि निसर्गन्तं निबोधत ॥ ७२ ॥
पुण्यतीर्थं हिमवतो दक्षिणस्याच्चलस्य हि।
पूर्वपश्चायतस्यास्य दक्षिणेन द्विजोत्तमाः ॥ ७३ ॥
तथा जनपदानाञ्च विस्तरं श्रोतुमर्हथ।
अत्र वो वर्णयिष्यामि वर्षेऽस्मिन् भारते प्रजाः ॥ ७४ ॥
इदन्तु मध्यमं चित्रं शुभाशुभफलोदयं।
(उत्तरं यत्समुद्रस्य हिमवद्दक्षिणञ्च यत् ॥ ७५ ॥
वर्षं यद्भारतं नाम यत्रेयं भारती प्रजा।
भरणाच्च प्रजानां वै मनुर्भरत उच्यते।
निरुक्तवचनाच्चैव वर्षन्तद्भारतं स्मृतं ॥ ७६ ॥)
ततः स्वर्गश्च मोक्षश्च मध्यश्चान्तश्च गम्यते।
न खल्वन्यत्र मर्त्त्यानां भूमौ कर्म्म विधीयते ॥ ७७ ॥
(भारतस्यास्य वर्षस्य नव भेदाः प्रकीर्त्तिताः।
समुद्रान्तरिता ज्ञेयास्ते त्वगम्याः परस्परं ॥ ७८ ॥
इन्द्रद्वीपः कसेरुश्च ताम्रवर्णो गभस्तिमान्।
नागद्वीपस्तथा सौम्यो गन्धर्वस्त्वथ वारुणः ॥ ७९ ॥
अयन्तु नवमस्तेषां द्वीपः सागरसंवृतः।
योजनानां सहस्रन्तु द्वीपोऽयं दक्षिणोत्तरं ॥ ८० ॥
आयतो ह्याकुमारिक्यादागङ्गाप्रभवाच्च वै।
तिर्य्यगुत्तरविस्तीर्णः सहस्राणि नवैव तु ॥ ८१ ॥
द्वीपो ह्युपनिविष्टोऽयं म्लेच्छैरन्तेषु नित्यशः।
पूर्वे किराता ह्यस्यान्ते पश्चिमे यवनाः स्मृताः ॥ ८२ ॥
ब्राह्मणाः क्षत्रिया वैश्या मध्ये शूद्राश्च भागशः।

इज्यायुद्धवणिज्याभिर्वर्त्तयन्तो व्यवस्थिताः ॥ ८३ ॥
तेषां संव्यवहारोऽयं वर्त्तते तु परस्परं ।
धर्मार्थकामसंयुक्तो वर्णानान्तु स्वकर्मसु ॥ ८४ ॥
सङ्कल्पपञ्चमानान्तु आश्रमाणां यथाविधि ।
इह स्वर्गापवर्गार्थं प्रवृत्तिर्येषु मानुषी ॥ ८५ ॥
(यस्त्वयं नवमो द्वीपस्तिर्य्यगायत उच्यते ।
कृत्स्नं जयति यो ह्येनं स सम्राडिह कीर्त्यते ॥ ८६ ॥)
अयं लोकस्तु वै सम्राडन्तरीक्षो विराट् स्मृतः ।
स्वराडन्यः स्मृतो लोकः पुनर्वक्ष्यामि विस्तरं ॥ ८७ ॥
(सप्त चास्मिन् सुपर्वाणो विश्रुताः कुलपर्वताः ।
महेन्द्रो मलयः सह्यः शुक्तिमानृक्षपर्वतः ।
विन्ध्यश्च पारियात्रश्च सप्तैते कुलपर्वताः ॥ ८८ ॥
तेषां सहस्रशश्चान्ये पर्वतास्तु समीपगाः ।
अभिजाताः सर्वगुणा विपुलाश्चित्रसानवः ॥ ८९ ॥
मन्दरः पर्वतश्रेष्ठो वैहारो दर्दुरस्तथा ।
कोलाहलः ससुरसः (१) मैनाको वैद्युतस्तथा ॥ ९० ॥
पातन्धमो नाम गिरिस्तथापाण्डुरपर्वतः ।
गन्तुप्रस्थः कृष्णगिरिर्गोधनो गिरिरेव च ॥ ९१ ॥
पुष्पगिर्य्युज्जयन्तौ च शैलो रैवतकस्तथा ।
श्रीपर्वतश्च कारुश्च(२) कूटशैलो गिरिस्तथा ॥ ९२ ॥
अन्ये तेभ्यः परिज्ञाताः ह्रस्वाः स्वल्पोपजीविनः ।

---

१ सुमरस इति क० ।

२ केतुश्चेति घ० ।

तैर्विमिश्रा जनपदा आर्य्यम्लेच्छाश्च नित्यशः ॥ ९३ ॥
पीयन्ते यैरिमा नद्यो गङ्गा सिन्धुसरस्वती ।
शतद्रुश्चन्द्रभागा च यमुना सरयूस्तथा ॥ ९४ ॥
इरावती वितस्ता च विपाशा देविका कुहूः ।
गोमती धुतपापा च बाहुदा च दृषद्वती ॥ ९५ ॥
कौशिकी च तृतीया तु निश्चीरा गण्डकी तथा ।
इक्षुर्लोहित इत्येता हिमवत्पादनिःसृताः ॥ ९६ ॥
वेदस्मृतिर्वेदवती वृत्रघ्नी सिन्धुरेव च ।
वर्णाशा चन्दना चैव सतीरा महती तथा (१) ॥ ९७ ॥
परा चर्म्मण्वती चैव विदिशा वेत्रवत्यपि ।
शिप्रा ह्यवन्ती च तथा पारियात्राश्रयाः स्मृताः ॥ ९८ ॥
शोणो महानदश्चैव नर्म्मदा सुमहाद्रुमा (२) ।
मन्दाकिनी दशार्णा च चित्रकूटा तथैव च ॥ ९९ ॥
तमसा पिप्पला श्रोणी करतोया पिशाचिका ।
नीलोत्पला विपाशा च जम्बुला(३) बालुवाहिनी ॥१००॥
सितेरजा शुक्तिमती मक्रुणा(४) त्रिदिवा क्रमात् ।
ऋक्षपादात् प्रसूतास्ता नद्यो मणिनिभोदकाः ॥१०१॥
तापी पयोष्णी निर्व्विन्ध्या मद्रा च निषधा नदी ।
वेन्वा वैतरणी चैव शितिबाहुः कुमुद्वती ॥ १०२ ॥
तोया चैव महागौरी दुर्गा चान्तशिला तथा ।
विन्ध्यपादप्रसूताश्च नद्यः पुण्यजलाः शुभाः ॥ १०३ ॥

---

१ सदातीरा महती नद्येति ग०, घ० च ।　२ सुरसा द्रुमेति ग०, घ० च ।
३ मञ्जुलेति घ० ।　४ मन्दगेति क० ।

गोदावरी भीमरथी कृष्णा वैख्यथ वञ्जुला ।
तुङ्गभद्रा सुप्रयोगा कावेरी च तथापगा ।
दक्षिणापथनद्यस्तु सह्यपादाद्विनिःसृताः ॥ १०४ ॥
कृतमाला ताम्रवर्णा पुष्पजात्युत्पलावती ।
मलयाभिजातास्ता नद्यः सर्वाः शीतजलाः शुभाः॥१०५॥
त्रिसामा ऋतुकूल्या च इक्षुला त्रिदिवा च या ।
लाङ्गूलिनी वंशधरा महेन्द्रतनयाः स्मृताः ॥ १०६ ॥
ऋषीका सुकुमारी च मन्दगा मन्दवाहिनी ।
कूपा पलाशिनी चैव शुक्तिमत्प्रभवाः स्मृताः ॥ १०७ ॥
सर्वाः पुण्याः सरस्वत्याः सर्वा गङ्गाः समुद्रगाः (१) ।
विश्वस्य मातरः सर्वा जगत्पापहराः स्मृताः ॥ १०८ ॥
तासां नद्युपनद्योऽपि शतशोऽथ सहस्रशः ।
तास्त्विमे कुरुपाञ्चालाः शाल्वाश्चैव सजाङ्गलाः ॥ १०९ ॥
शूरसेना भद्रकारा बोधाः शतपथेश्वरैः ।
वत्साः किमष्णाः(२)कुल्याश्च कुन्तलाः काशिकोशलाः॥११०॥
अथ पार्श्वे तिलङ्गाश्च मगधाश्च वृकैः सह ।
मध्यदेशा जनपदाः प्रायशोऽमी प्रकीर्त्तिताः ॥ १११ ॥
सह्यस्य चोत्तरार्द्धे तु यत्र गोदावरी नदी ।
पृथिव्यामिह कृत्स्नायां स प्रदेशो मनोरमः ॥ ११२ ॥
तत्र गोवर्द्धनो नाम सुरराजेन निर्मितः ।
रामप्रियार्थं स्वर्गोऽयं वृक्षा ओषधयस्तथा ॥ ११३ ॥
भरद्वाजेन मुनिना तत्प्रियार्थेऽवतारिताः ।

१ सर्व्वा नद्यः समुद्रगा इति क० । २ किमष्टा इति ङ० । किमथ्या इति घ० ।

अन्तःपुरवनोद्देशस्तेन(१) जज्ञे मनोरमः ॥ ११४ ॥
वाह्लीका वाढधानाश्च आभीराः कालतोयकाः ।
अपरीताश्च शूद्राश्च पह्लवाश्चर्मखण्डिकाः ॥ ११५ ॥
गान्धारा यवनाश्चैव सिन्धुसौवीरभद्रकाः ।
शका ह्रदाः कुलिन्दाश्च परिता हारपूरिकाः ॥ ११६ ॥
रमटा रुद्रकटका केकया दशमानिकाः ।
क्षत्रियोपनिवेशाश्च वैश्यशूद्रकुलानि च ॥ ११७ ॥
काम्बोजा दरदाश्चैव वर्वराः प्रियलौकिकाः ।
पीनाश्चैव तुषाराश्च पह्लवा वाह्यतोदराः (२)॥ ११८ ॥
आत्रेयाश्च भरद्वाजाः प्रस्थलाश्च कसेरुकाः ।
लम्पाका स्तनपाश्चैव पीडिका जुहुडैः सह ॥ ११९ ॥
अपगाश्चालिमद्राश्च किरातानाञ्च जातयः ।
तोमरा हंसमार्गाश्च काश्मीरास्तङ्गणास्तथा ॥ १२० ॥
चूलिकाश्चाहुकाश्चैव पूर्णदर्वास्तथैव च ।
एते देशा ह्युदीच्याश्च प्राच्यान् देशान्निबोधत ॥ १२१ ॥
अन्ध्रवाकाः सुजरका अन्तर्गिरिवहिर्गिराः ।
तथा प्रवङ्गवङ्गेया मालदा मालवर्त्तिनः ॥ १२२ ॥
ब्रह्मोत्तराः प्रविजया भार्गवा गेयमर्थकाः (३) ।
प्राग्ज्योतिषाश्च मुण्डाश्च विदेहास्ताम्रलिप्तकाः ।
माला मगधगोविन्दाः प्राच्यां जनपदाः स्मृताः ॥ १२३ ॥
अथापरे जनपदा दक्षिणापथवासिनः ।

---

१ तत्रेति घ० ।
२ रतुषाराः च्ततोदरा इति छ० ।
३ पाठोऽयं न समीचीनः ।

पाण्ड्याश्च केरलाश्चैव चोल्याः कुल्यास्तथैव च ॥ १२४ ॥
सेतुका मूषिकाश्चैव कुमना वनवासिकाः ।
महाराष्ट्रा माहिषकाः कलिङ्गाश्चैव सर्वशः ॥ १२५ ॥
अभीराः सहचैषीका आटव्याश्च वराश्च ये ।
पुलिन्द्रा विन्ध्यमूलीका वैदर्भा दण्डकैः सह ॥ १२६ ॥
पौनिका मौनिकाश्चैव अश्मका भोगवर्द्धनाः ।
नैर्णिकाः कुन्तला अन्ध्रा उद्भिदा नलकालिकाः ॥१२७॥
दाक्षिणात्याश्च वै देशा अपरांस्तान्निबोधत ।
सूर्पाकाराः कोलवना दुर्गाः कालीतकैः सह ॥ १२८ ॥
पुलेयाश्च सुरालाश्च रूपसास्तापसैः सह ।
तथा तुरसिताश्चैव सर्वे चैव परक्षराः ॥ १२९ ॥
नासिक्याद्याश्च ये चान्ये ये चैवान्तरनर्मदाः ।
भानुकच्छाः समा हेयाः सहसा शाश्वतैरपि ॥ १३० ॥
कच्छीयाश्च सुराष्ट्राश्च अनर्त्ताश्चार्बुदैः सह ।
इत्येते सम्परीताश्च शृणुध्वं विन्ध्यवासिनः ॥ १३१ ॥
मालवाश्च करूषाश्च मेकलाश्चोत्कलैः सह ।
उत्तमर्णा दशार्णाश्च भोजाः किष्किन्धकैः सह ॥ १३२ ॥
तोसलाः कोसलाश्चैव त्रैपुरा वैदिकास्तथा ।
तुमुरास्तुम्बुराश्चैव षट्सुरा निषधैः सह ॥ १३३ ॥
अनुपास्तुण्डिकेराश्च वीतिहोत्रा ह्यवन्तयः ।
एते जनपदाः सर्वे विन्ध्यपृष्ठनिवासिनः ॥ १३४ ॥
अतो देशान् प्रवक्ष्यामि पर्व्वताश्रयिणश्च ये ।
निगर्हरा हंसमार्गाः क्षुपणास्तङ्गणाः खसाः ॥ १३५ ॥

कुशप्रावरणाश्चैव ऊर्णा दर्वाः सहूदकाः ।
त्रिगर्त्ता मालवाश्चैव किरातास्तामसैः सह ॥ १३६ ॥
चत्वारि भारते वर्षे युगानि कवयो विदुः ।
कृतं त्रेता द्वापरश्च कलिश्चेति चतुष्टयं ।
तेषां निसर्गं वक्ष्यामि उपरिष्टान्निबोधत ॥ १३७ ॥

इति श्रीमहापुराणे वायुप्रोक्ते भुवनविन्यासो नाम
पञ्चचत्वारिंशोऽध्यायः ।

---

# अथ षट्चत्वारिंशोऽध्यायः ।

———000———

भुवनविन्यासः ।

सूत उवाच । एतच्छ्रुत्वा तु ऋषय उत्तरं पुनरेव ते ।
शुश्रूषवो मुदा युक्ताः पप्रच्छुर्लोमहर्षणं ॥ १ ॥
ऋषय ऊचुः । यच्च किं पुरुषं वर्षं हरिवर्षं तथैव च ।
आचक्ष्व नो यथातत्त्वं कीर्त्तितं भारतं त्वया ॥ २ ॥
पृष्टस्त्विदं यथा विप्रैर्यथा प्रश्नं विशेषतः ।
उवाच मुनिनिर्दिष्टं पुराणं विहितं यथा ॥ ३ ॥
सूत उवाच । शुश्रुषा यत्र वो विप्रास्तत्शृणुध्वं मुदा युताः
प्लक्षखण्डः किं पुरुषे सुमहान्नन्दनोपमः ॥ ४ ॥
दशवर्षसहस्राणि स्थितिः किं पुरुषे स्मृता ।
सुवर्णवर्णाश्च नरा स्त्रियश्चाप्सरसोपमाः ॥ ५ ॥
अनामया ह्यशोकाश्च सर्वे ते शुद्धमानसाः ।
जायन्ते मानवास्तत्र निस्तप्तकनकप्रभाः ॥ ६ ॥
वर्षे किंपुरुषे पुण्ये प्लक्षो मधुवहः शुभः ।
तस्य किंपुरुषाः सर्वे पिबन्ति रसमुत्तमं ॥ ७ ॥
अतःपरं किंपुरुषाद्धरिवर्षः प्रचक्ष्यते ।
महारजतसङ्काशा जायन्ते तत्र मानवाः ॥ ८ ॥
देवलोकाच्च्युताः सर्वे देवरूपाश्च सर्वशः ।
हरिवर्षे नराः सर्वे पिबन्तीक्षुरसं शुभं ॥ ९ ॥

एकादश सहस्राणि वर्षाणान्तु मुदा युताः ।
हरिवर्षे तु जीवन्ति सर्वे मुदितमानसाः ।
न जरा बाधते तत्र जीर्य्यन्ति न च ते नराः ॥ १० ॥
मध्यमं यन्मया प्रोक्तं नाम्ना वर्षमिलावृतं ।
न तत्र सूर्य्यस्तपति न च जीर्य्यन्ति मानवाः ॥ ११ ॥
चन्द्रसूर्य्यौ सनक्षत्रावप्रकाशाविलावृते ।
पद्मवर्णाः पद्मप्रभाः पद्मपत्रनिभेक्षणाः ।
पद्मपत्रसुगन्धाश्च जायन्ते तत्र मानवाः ॥ १२ ॥
जम्बूरसफलाहारा ह्यनिष्यन्दाः सुगन्धिनः ।
मनस्विनो भुक्तभोगाः सत्कर्म्मफलभोगिनः ॥ १३ ॥
देवलोकाच्च्युताः सर्वे जायन्ते ह्यजरामराः ।
त्रयोदश सहस्राणि वर्षाणान्ते नरोत्तमाः ॥ १४ ॥
आयुःप्रमाणं जीवन्ति ते तु वर्षे त्विलावृते ।
मेरोः प्रतिदिशं ते तु नवसाहस्रविस्तृते ॥ १५ ॥
योजनानां सहस्राणि षड्विंशस्तस्य विस्तरः ।
चतुरस्रः समन्ताच्च शरावाकारसंस्थितः ॥ १६ ॥
मेरोस्तु पश्चिमे भागे नवसाहस्रसम्मिते ।
चतुस्त्रिंशत्सहस्राणि गन्धमादनपर्व्वतः ॥ १७ ॥
उदग्दक्षिणतश्चैव आनीलनिषधायतः ।
चत्वारिंशत्सहस्राणि परिवृद्धो महीतलात् ।
सहस्रमवगाढ़स्तु तावदेव तु धिष्ठितः ॥ १८ ॥
पूर्व्वेण माल्यवान् शैलस्तत्प्रमाणः प्रकीर्त्तितः ।
दक्षिणेन तु नीलस्य निषधस्योत्तरेण तु ॥ १९ ॥

तेषां मध्ये महामेरुः सुप्रमाणः प्रकीर्त्तितः ।
सर्वेषामेव शैलानामवगाढो यथा भवेत् ॥ २० ॥
विस्तरस्तत्प्रमाणः स्यादायामे नियुतः स्मृतः ।
वृत्तभावात् समुद्रस्य महीमण्डलभावनः ॥ २१ ॥
आयामाः परिहीयन्ते चतुरस्राः समन्ततः ।
अनावृत्ताश्चतुष्कोण भिद्यन्ते मध्यमागताः ॥ २२ ॥
प्रभिन्नाञ्जनसङ्काशा जम्बूरसवती नदी ।
मेरोस्तु दक्षिणे पार्श्वे निषधस्योत्तरेण तु ॥ २३ ॥
सुदर्शनो नाम महाजम्बूवृक्षः सनातनः ।
नित्यपुष्पफलोपेतः सिद्धचारणसेवितः ॥ २४ ॥
तस्य नाम्ना समाख्यातो जम्बूद्वीपे वनस्पतिः ।
योजनानां सहस्रन्तु शतञ्चान्यमहाद्रुमः ।
उत्सेधो वृक्षराजस्य दिवं स्पृशति सर्व्वशः ॥ २५ ॥
अरत्नीनां शतान्यष्टौ एकषष्ट्यधिकानि तु ।
फलप्रमाणं संख्यातमृषिभिस्तत्त्वदर्शिभिः ॥ २६ ॥
पतमानानि तान्युर्व्यां कुर्वन्ति विपुलं स्वनं ।
तस्या जम्ब्वाः फलरसो नदीभूय प्रसर्पति ॥ २७ ॥
मेरुं प्रदक्षिणीकृत्य जम्बूवृक्षं विशत्यधः ।
ते पिबन्ति सदा हृष्टा जम्बूरसफलाश्रिताः ॥ २८ ॥
जम्बूरसफलं पीत्वा न जरां प्राप्नुवन्ति ते ।
न च क्षुधं (१) न रोगन्तु न च मृत्युं तथाविधं ॥ २९ ॥
तत्र जाम्बूनदं नाम कनकं देवभूषणं ।

---

१ क्षुधमिति ध० ।

इन्द्रगोपकसङ्काशं जायते भास्वरन्तु तत् ॥ ३० ॥
सर्वेषां वर्षवृक्षाणां शुभः फलरसस्तु सः ।
स्वर्णं भवति तच्छुभ्रं कनकं देवभूषणं ॥ ३१ ॥
तेषां मूत्रं पुरीषञ्च दिक्षु सर्वासु भागशः ।
ईश्वरानुग्रहाद्भूमिर्मृतांश्च ग्रसते तु तान् ॥ ३२ ॥
रक्षःपिशाचा यक्षाश्च सर्वे हैमवताः स्मृताः ।
हेमकूटे तु गन्धर्वा विज्ञेयाः साप्सरोगणाः ॥ ३३ ॥
सर्वे नागास्तु निषधे शेषवासुकितक्षकाः ।
महामेरौ त्रयस्त्रिंशद्रमन्ते याज्ञिकाः सुराः ।
नीले तु वैडूर्य्यमये सिद्धब्रह्मर्षयो मताः ॥ ३४ ॥
दैत्यानां दानवानाञ्च श्वेतपर्व्वत उच्यते ।
शृङ्गवान्पर्व्वतः श्रेष्ठः पितॄणां प्रतिसञ्चरः ॥ ३५ ॥
नवस्वेतेषु वर्षेषु यथाभागस्थितेषु वै ।
भूतान्युपनिविष्टानि गतिमन्ति ध्रुवाणि च ॥ ३६ ॥
तेषां विवृद्धिर्बहुला दृश्यते देवमानुषी ।
न शक्या परिसंख्यातुं श्रद्धेयाऽनुबुभूषता ॥ ३७ ॥

इति श्रीमहापुराणे वायुप्रोक्ते भुवनविन्यासो
नाम षट्चत्वारिंशोऽध्यायः ।

---

## अथ सप्तचत्वारिंशोऽध्यायः ।

———000———

भुवनविन्यासः ।

सूत उवाच । सव्ये हिमवतः पार्श्वे कैलासो नाम पर्व्वतः ।
तस्मिन्निवसति श्रीमान् कुवेरः सह राक्षसैः ।
अप्सरोगणसंयुक्तो मोदते ह्यलकाधिपः ॥ १ ॥
कैलासपादात् सम्भूतं पुण्यं शीतजलं शुभं ।
मन्दं नाम्ना कुमुदन्तं शरदम्बुदसन्निभं ॥ २ ॥
तस्माद्दिव्या प्रभवति नदी मन्दाकिनी शुभा ।
दिव्यञ्च नन्दनं तत्र तस्यास्तीरे महद्वनं ॥ ३ ॥
प्रागुत्तरेण कैलासाद्दिव्यसर्व्वौषधं गिरिं ।
सुरधातुमयं चित्रं सुवर्णं पर्वतं प्रति ॥ ४ ॥
चन्द्रप्रभो नाम गिरिः स शुभ्रो रत्नसन्निभः ।
तस्य पादे महद्दिव्यमच्छोदं नाम तत्सरः ॥ ५ ॥
तस्माद्दिव्या प्रभवति ह्यच्छोदा नाम निम्नगा ।
तस्यास्तीरे महादिव्यं वनं चैत्ररथं स्मृतं ॥ ६ ॥
तस्मिन् गिरौ निवसति मणिभद्रः सहानुगः ।
यक्षसेनापतिः क्रूरगुह्यकैः परिवारितः ॥ ७ ॥
पुण्या मन्दाकिनी चैव निम्नगाच्छोदिका तथा ।
महीमण्डलमध्येन प्रविष्टे ते महोदधिं ॥ ८ ॥

कैलासाद्दक्षिणप्राच्यां शिवसत्त्वौषधिं गुरुम् ।
मनःशिलामयं दिव्यं पिशङ्गं पर्व्वतं प्रति ॥ ९ ॥
लोहितो हेमशृङ्गस्तु गिरिः सूर्य्यप्रभो महान् ।
तस्य पादे महद्दिव्यं लोहितं नाम तत्सरः ॥ १० ॥
तस्मात् पुण्यः प्रभवति लौहित्यः सदनो महान् ।
देवारण्यं विशोकञ्च तस्य तीरे महावनं ॥ ११ ॥
तस्मिन् गिरौ निवसति यक्षो मणिवरो वशी ।
सौम्यैः सुधार्म्मिकैश्चैव गुह्यकैः परिवारितः ॥ १२ ॥
कैलासाद्दक्षिणे पार्श्वे क्रूरसत्त्वौषधं गिरिं ।
वृत्रकायात् किलोत्पन्नमञ्जनं त्रिककुम्प्रति ॥ १३ ॥
सर्व्वधातुमयस्तत्र सुमहान् वैद्युतो गिरिः ।
तस्य पादे सरः पुण्यं मानसं सिद्धसेवितं ॥ १४ ॥
तस्मात् प्रभवते पुण्या सरयूर्लोकभावनी ।
तस्यास्तीरे वनं दिव्यं वैभ्राजं नाम विश्रुतं ॥ १५ ॥
कुवेरानुचरस्तत्र प्रहेतृतनयो वशी ।
ब्रह्मपातो निवसति राक्षसोऽनन्तविक्रमः ।
अन्तरीक्षचरैर्घोरैर्यातुधानशतैर्वृतः ॥ १६ ॥
अपरेण तु कैलाशान्मुख्यसत्त्वौषधिं गिरिं ।
अरुणं पर्व्वतश्रेष्ठं रुक्मधातुमयं प्रति ॥ १७ ॥
भवस्य दयितः श्रीमान् पर्व्वतो मेघसन्निभः ।
शातकुम्भमयैः शुभ्रैः शिलाजालैः समावृतः ॥ १८ ॥
शतसंख्यैस्तापनीयैः शृङ्गैर्दिवमिवोल्लिखन् ।
मुञ्जवान् स महादिव्यो दुर्गशैलो हिमाचितः ॥ १९ ॥

तस्मिन् गिरौ निवसति गिरिशो धूम्रलोहितः ।
तस्य पादात् प्रभवति शैलोदं नाम तत्सरः ॥ २० ॥
तस्मात् प्रभवते दिव्या शैलोदा नाम निम्नगा ।
सा चक्षुःशीतयोर्मध्ये प्रविष्टा लवणोदधिं ॥ २१ ॥
तस्यास्तीरे वनं दिव्यं विश्रुतं सुरभीति वै ।
अस्त्युत्तरेण कैलासाच्छिवसर्व्वौषधी गिरिः ॥ २२ ॥
गौरो नाम गिरिस्तत्र हरितालमयः शुभः ।
हिरण्यशृङ्गः सुमहान् दिव्यो मणिमयो गिरिः ॥ २३ ॥
तस्य पादे महद्दिव्यं शुभं काञ्चनवालुकं ।
रम्यं विन्दुसरो नाम यत्र यातो भगीरथः ॥ २४ ॥
गङ्गानिमित्तं राजर्षिरुवास बहुलाः समाः ।
दिवं यास्यन्ति मे पूर्वे गङ्गातोयपरिप्लुताः ॥ २५ ॥
तत्र त्रिपथगा देवी प्रथमन्तु प्रतिष्ठिता ।
सोमपादप्रसूता सा सप्तधा प्रतिपद्यते ॥ २६ ॥
यूपा मणिमयास्तत्र चितयश्च हिरण्मयाः ।
तत्रेष्ट्वा तु गतः शर्व्वं शक्रः सर्व्वैः सुरैः सह ॥ २७ ॥
दिविच्छायापथो यस्तु अनुनक्षत्रमण्डलं ।
दृश्यते भास्वरो रात्रौ देवी त्रिपथगा तु सा ॥ २८ ॥
अन्तरीक्षं दिवञ्चैव भावयन्ती भुवङ्गता ।
भवोत्तमाङ्गे पतिता संरुद्धा योगमायया ॥ २९ ॥
तस्या ये विन्दवः केचित् क्रुद्धायाः पतिताः क्षितौ ।
कृतं विन्दुसरस्तत्र ततो विन्दुसरः स्मृतं ॥ ३० ॥
ततो निरुद्धा देवी सा भवेन स्मयता किल ।

चिन्तयामास मनसा शङ्करक्षेपणं प्रति ॥ ३१ ॥
भित्त्वा विशामि पातालं स्रोतसा गृह्य शङ्करं ।
ज्ञात्वा तस्या अभिप्रायं क्रूरं देव्या चिकीर्षितं ॥ ३२ ॥
तिरोभावयितुं बुद्धिरासीदङ्गेषु तां नदीं ।
तस्यावलेपं तं बुद्धा नद्याः क्रुद्धस्तु शङ्करः ।
निरुध्य तु शिरस्येनां वेगेन पतितां भुवि ॥ ३३ ॥
एतस्मिन्नेव काले तु दृष्ट्वा राजानमग्रतः ।
धमनीसन्ततं क्षीणं क्षुधापरिगतेन्द्रियं ॥ ३४ ॥
अनेन तोषितश्चाहं नद्यर्थं पूर्वमेव हि ।
बुद्धास्य वरदानन्तु कोपं नियतवांस्तु सः ॥ ३५ ॥
ब्रह्मणो हि वचः श्रुत्वा प्रतिज्ञाधारणं प्रति ।
ततो विसर्जयामास संरुद्धां स्वेन तेजसा ।
नदीं भगीरथस्यार्थे तपसोग्रेण तोषितः ॥ ३६ ॥
ततो विसर्ज्यमानायाः स्रोतस्तत्सप्तधाकृतं ।
त्रयः प्राचीमभिमुखं प्रतीचीं त्रय एव तु ॥ ३७ ॥
नद्याः स्रोतस्तु गङ्गायाः प्रत्यपद्यत सप्तधा ।
नलिनी ह्लादिनी चैव पावनी चैव प्राग्गता ॥ ३८ ॥
सीता चक्षुश्च सिन्धुश्च प्रतीचीं दिशमाश्रिताः ।
सप्तमी त्वनुगा तासां दक्षिणेन भगीरथी ॥ ३९ ॥
तस्माद्भागीरथी या सा प्रविष्टा लवणोदधिं ।
सप्तैता भावयन्तीह हिमाह्वं वर्षमेव तु ॥ ४० ॥
प्रसूताः सप्त नद्यस्ताः शुभा विन्दुसरोद्भवाः ।
नानादेशान् भावयन्त्यो म्लेच्छप्रायांश्च सर्वशः ॥ ४१ ॥

उपगच्छन्ति ताः सर्वा यतो वर्षति वासवः ।
सिरिन्ध्रान् कुन्तलांश्चीनान् बर्बरान्यवसान् द्रुहान् ॥४२॥
रुषाणांश्च कुणिन्दांश्च अङ्गलोकवराश्च ये ।
कृत्वा द्विधा सिन्धुमरु सीताऽगात्पश्चिमोदधिं ॥ ४३ ॥
अथ चीनमरूंश्चैव नङ्गणान् सर्वमूलिकान् ।
साध्रांस्तुषारांस्तम्पाकान् पह्लवान् दरदान् शकान् ।
एतान् जनपदान् चक्षुः स्रावयन्ती(१)गतोदधिं ॥ ४४ ॥
दरदांश्च सकाश्मीरान् गान्धारान् वरपान् ह्रदान् ।
शिवपौरानिन्द्रहासान् वदातींश्च विसर्जयान् ॥ ४५ ॥
सैन्धवान् रन्ध्रकरकान् भ्रमराभीररोहकान् ।
शुनामुखांश्चोर्द्धमनून् सिद्धचारणसेवितान् ॥ ४६ ॥
गन्धर्व्वान् किन्नरान् यक्षान् रक्षोविद्याधरोरगान् ।
कलापग्रामकांश्चैव पारदान् सौगणान् खसान् ॥ ४७ ॥
किरातांश्च पुलिन्दांश्च कुरून् सभरतानपि ।
पञ्चालकाशिमात्स्यांश्च मगधाङ्गांस्तथैव च ॥ ४८ ॥
ब्रह्मोत्तरांश्च वङ्गांश्च ताम्रलिप्तांस्तथैव च ।
एतान जनपदानार्य्यान् गङ्गा भावयते शुभान् ॥ ४९ ॥
ततः प्रतिहता विन्ध्ये प्रविष्टा दक्षिणोदधिं ।
ततश्चाह्लादिनी पुण्या प्राचीनाभिमुखी ययौ ॥ ५० ॥
प्लावयन्त्युपभोगांश्च निषादानाञ्च जातयः ।
धीवरानृषिकांश्चैव तथा नीलमुखानपि ॥ ५१ ॥
केरलानुष्ट्रकर्णांश्च किराताऽपि चैव हि ।

१ पावयन्तीति घ० ङ० च।

कालोदरान् विवर्णांश्च कुमारान् स्वर्णभूषितान् ॥ ५२॥
सा मण्डले समुद्रस्य तिरोभूताऽनुपूर्वतः ।
ततस्तु पावनी चैव प्राचीमेव दिशङ्गता॥ ५३ ॥
अपथान् भावयन्तीह इन्द्रद्युम्नसरोपि च ।
तथा खरपथांश्चैव इन्द्रशङ्कुपथानपि ॥ ५४ ॥
मध्येनोद्यानमस्कारान् कुथप्रावरणान् ययौ ।
इन्द्रद्वीपसमुद्रे तु प्रविष्टा लवणोदधिं ॥ ५५ ॥
ततश्च नलिनी चागात् प्राचीमाशां जवेन तु ।
तोमरान् भावयन्तीह हंसमार्गान्सहहुकान् (१) ॥ ५६॥
पूर्वान् देशांश्च सेवन्ती भित्त्वा सा बहुधा गिरीन् ।
कर्णप्रावरणांश्चैव प्राप्य चाश्वमुखानपि ॥ ५७ ॥
सिकतापर्वतमरून् गत्वा विद्याधरान् ययौ ।
नेमिमण्डलकोष्ठे तु प्रविष्टा सा महोदधिं ॥ ५८ ॥
तासां नद्युपनद्यश्च शतशोऽथ सहस्रशः ।
उपगच्छन्ति ताः सर्वा यतो वर्षति वासवः ॥ ५९ ॥
वस्वोकसारायास्तीरे तु वारिसुरभिविश्रुते ।
हरिशृङ्गे तु वसति विद्वान् कौवेरको वशी ॥ ६० ॥
यज्ञोपेतः स सुमहानमितौजाः सुविक्रमः ।
तत्रागस्त्यैः परिवृतो विद्वद्भिर्ब्रह्मराक्षसैः ।
कुवेरानुचरा ह्येते चत्वारस्तत्समाः स्मृताः ॥ ६१ ॥
एवमेव तु विज्ञेया ऋद्धिः पर्वतवासिनां ।
परस्परेण द्विगुणा धर्मतः कामतोऽर्थतः ॥ ६२ ॥

---

१ बहुदकानिति ख० ।

हेमकूटस्य पृष्ठे तु सायनं नाम तत्सरः ।
मनस्विनी प्रभवति तस्माज्ज्योतिष्मती च सा ॥ ६३ ॥
अवगाह्य ह्युभयतः समुद्रौ पूर्व्वपश्चिमौ ।
सरो विष्णुपदं नाम निषधे पर्व्वतोत्तमे ॥ ६४ ॥
तस्माद्द्वयं प्रभवति गान्धर्वी नन्वली च या ।
मेरोः पश्चात् प्रभवति ह्रदश्चन्द्रप्रभो महान् ॥ ६५ ॥
तत्र जाम्बूनदी पुण्या यस्यां जाम्बूनदं शुभं ।
पयोदन्तु सरो नीले सुशुभ्रं पुण्डरीकवत् ॥ ६६ ॥
पुण्डरीका पयोदा च तस्मान्नद्यौ विनिर्गते ।
श्वेतात् प्रभवते पुण्यं सरस्तूत्तरमानसं ॥ ६७ ॥
ज्योत्स्ना च मृगकान्ता च तस्माद्द्वे संबभूवतुः ।
मधुमत्सरः पुण्यञ्च पद्ममीनद्विजाकुलं ॥ ६८ ॥
कल्पवृक्षसमाकीर्णं मधुवत्सर्वतः सुखं ।
रुद्रकान्तमिति ख्यातं निर्मितं तद्भवेन तु ॥ ६९ ॥
अन्ये चाप्यत्र विख्याताः पद्ममीनद्विजाकुलाः ।
नाम्ना रुद्रा जया नाम (१) द्वादशोदधिसन्निभाः ॥ ७० ॥
तेभ्यः शान्ता च माध्वी च द्वे नद्यौ सम्बभूवतुः ।
यानि किंपुरुषाद्यानि तेषु देवो न वर्षति ॥ ७१ ॥
उद्भिज्जान्युदकान्यत्र प्रवहन्ति सरिद्वराः ।
ऋषभो दुन्दुभिश्चैव धूम्रश्चैव महागिरिः ॥ ७२ ॥
पूर्वायता महाभागा निम्नगा लवणाम्भसि ।
चन्द्रकङ्कस्तथा प्राणो महाग्निः शिलोच्चयः ।

१. नाम्ना रुद्रा जया नामेति ख०

उदग्याता उदीच्यान्ता अवगाढ़ा महोदधिं ॥ ७३ ॥
सोमकश्च वराहश्च नारदश्च महीधरः ।
प्रतीचीमायतास्ते वै प्रविष्टा लवणोदधिं ॥ ७४ ॥
चक्रो बलाहकश्चैव मैनाकश्चैव पर्वतः ।
आयतास्ते महाशैलाः समुद्रं दक्षिणं प्रति ।
चन्द्रमैनाकयोर्मध्ये विदिशं दक्षिणां प्रति ॥ ७५ ॥
तत्र संवर्त्तको नाम सोऽग्निः पिबति तज्जलं ।
नाम्ना समुद्रपः श्रीमानौर्वः स वडवामुखः ॥ ७६ ॥
द्वादशैते प्रविष्टा हि पर्वता लवणोदधिं ।
महेन्द्रभयवित्रस्ताः पक्षच्छेदभयात्तदा ।
यदेतद्दृश्यते चन्द्रे श्वेते कृष्णशशाकृतिः ॥ ७७ ॥
भारतस्य तु वर्षस्य भेदास्ते नव कीर्त्तिताः ।
इहोदितस्य दृश्यन्ते तथाऽन्येऽन्यत्र नोदिते ॥ ७८ ॥
उत्तरोत्तरमेतेषां वर्षमुद्दिश्यते गुणैः ।
आरोग्यायुःप्रमाणाभ्यां धर्मतः कामतोऽर्थतः ॥ ७९ ॥
समन्वितानि भूतानि गुणैरेतैस्तु भागतः ।
वसन्ति नानाजातीनि तेषु वर्षेषु तानि वै ।
इत्येषाऽधारयत् सर्वं पृथ्वी विश्वं जगत्स्थिता ॥ ८० ॥

इति श्रीमहापुराणे वायुप्रोक्ते भुवनविन्यासो नाम
सप्तचत्वारिंशोऽध्यायः ।

---

# अथाष्टचत्वारिंशोऽध्यायः ।

——————ooOoo——————

## भुवनविन्यासः ।

सूत उवाच । दक्षिणेनापि वर्षस्य भारतस्य निबोधत ।
दशयोजनसाहस्रं समतीत्य महार्णवं ॥ १ ॥
त्रीण्येव तु सहस्राणि योजनानां समायतं ।
अतस्त्रिभागविस्तीर्णं नानापुष्पफलोदयं ॥ २ ॥
विद्रुमवन्तं महाशैलं तत्रैकं कुलपर्वतं ।
येन कूटतटैर्नैकैस्तद्द्वीपं समलङ्कृतं ॥ ३ ॥
प्रसन्नस्वादुसलिलास्तत्र नद्यः सहस्रशः ।
वाप्यस्तस्य तु द्वीपस्य प्रवृत्ता विमलोदकाः ॥ ४ ॥
तस्य शैलस्य छिद्रेषु विस्तीर्णेष्वायतेषु च ।
अनेकेषु सम्बद्धानि नानाकाराणि सर्व्वशः ॥ ५ ॥
नरनारीसमाढ्यानि मुदितानि महान्ति च ।
तेषां तलप्रवेशानि सहस्राणि शतानि च ॥ ६ ॥
पुराणि सन्निविष्टानि पर्वतान्तर्गतानि च ।
सुसम्बद्धानि तान्योन्यमेकद्वाराणि तान्यथ ॥ ७ ॥
दीर्घश्मश्रुधरात्मानो नीला मेघसमप्रभाः ।
जातमात्राः प्रजास्तत्र अशीतिपरमायुषः ॥ ८ ॥
शाखामृगसधर्म्माणः फलमूलाशिनस्तथा ।

गोधर्माणो ह्यनिर्दिष्टा शौचाचारविवर्जिताः ॥ ९ ॥
तद्द्वीपं तादृशैः पूर्णं मनुजैः क्षुद्रमानुषैः ।
एवमेतेऽन्तरद्वीपा व्याख्याता आनुपूर्व्यशः ॥ १० ॥
विंशतिस्त्रिंशच्च पञ्चाशत् षष्ट्यशीतिः शतं तथा ।
सहस्रमपि चाप्युक्तं योजनानां समन्ततः ॥ ११ ॥
विस्तीर्णाश्चायताश्चैव नानासत्त्वसमाकुलाः ।
बर्हिणद्वीपपर्वाणि क्षुद्रद्वीपाः सहस्रशः ॥ १२ ॥
(जम्बुद्वीपप्रदेशास्तु षडन्ये विविधाश्रयाः ।
अत्र द्वीपाः समाख्याता नानारत्नाकराः क्षितौ ॥ १३ ॥
अङ्गद्वीपं यमद्वीपं मलयद्वीपमेव च ।
शङ्खद्वीपं कुशद्वीपं वराहद्वीपमेव च ॥ १४ ॥)
अङ्गद्वीपं निबोध त्वं नानासङ्घसमाकुलं ।
नानाम्लेच्छगणाकीर्णं तद् द्वीपं बहुविस्तरं ॥ १५ ॥
हेमविद्रुमपूर्णानां रत्नानामाकरं क्षितौ ।
नदीशैलवनैश्चित्रं सन्निभं लवणाम्भसा ॥ १६ ॥
तत्र चक्रगिरिर्नाम नैकनिर्झरकन्दरः ।
तत्र सा तु दरी चास्य नानासत्त्वसमाश्रया ॥ १७ ॥
स मध्ये नागदेशस्य नैकदेशो महागिरिः ।
कोटिभ्यां नागनिलयं प्राप्तो नदनदीपतिं ॥ १८ ॥
यमद्वीपमिति प्रोक्तं नानारत्नाकराचितं ।
तत्रापि द्युतिमान्नाम पर्वतो धातुमण्डितः ।
समुद्रगानां प्रभवः प्रभवः काञ्चनस्य तु ॥ १९ ॥
तथैव मलयद्वीपमेवमेव सुसंवृतं ।

मणिरत्नाकरं स्फीतमाकरं कनकस्य च ॥ २० ॥
आकरं चन्दनानाञ्च समुद्राणां तथाकरं ।
नानाम्लेच्छगणाकीर्णं नदीपर्वतमण्डितं । २१ ॥
तत्र श्रीमांस्तु मलयः पर्वतो रजताकरः ।
महामलय इत्येवं विख्यातो वरपर्वतः ॥ २२ ॥
द्वितीयं मन्दरं नाम प्रथितञ्च सदा क्षितौ ।
अगस्त्यभवनं तत्र देवासुरनमस्कृतं ॥ २३ ॥
तथा काञ्चनपादस्य मलयस्यापरस्य हि ।
निकुञ्जैस्तृणसोमाङ्गैराश्रमं पुण्यसेवितं ॥ २४ ॥
नानापुष्पफलोपेतं स्वर्गादपि विशिष्यते ।
तत्रावतरते स्वर्गः सदा पर्वसु पर्वसु ॥ २५ ॥
तथा त्रिकूटनिलये नानाधातुविभूषिते ।
अनेकयोजनोत्सेधे चित्रसानुदरीगृहे ॥ २६ ॥
तस्य कूटतटे रम्ये हेमप्राकारतोरणा ।
निर्य्यूहवलभी चित्रा हर्म्यप्रासादमालिनी ॥ २७ ॥
शतयोजनविस्तीर्णा त्रिंशदायामयोजना ।
नित्यप्रमुदिता स्फीता लङ्का नाम महापुरी ॥ २८ ॥
सा कामरूपिणां स्थानं राक्षसानां महात्मनां ।
आवासो बलदृप्तानां तद्विद्याद्देवविद्विषां ।
मानुषाणामसम्बाधा ह्यगम्या सा महापुरी ॥ २९ ॥
तस्य द्वीपस्य वै पूर्व्वे तीरे नदनदीपतेः ।
गोकर्णनामधेयस्य शङ्करस्यालयं महत् ॥ ३० ॥
तथैकराज्यं विज्ञेयं शङ्खद्वीपसमाश्रितं ।

शतयोजनविस्तीर्णं नानाम्लेच्छगणालयं ॥ ३१ ॥
तत्र शङ्खगिरिर्नाम शीतशङ्खदलप्रभः ।
नानारत्नाकरः पुण्यः पुण्यकृद्भिर्निषेवितः ॥ ३२ ॥
शङ्खनागा महापुण्या यस्मात् प्रभवते नदी ।
यत्र शङ्खमुखो नाम नागराजः कृतालयः ॥ ३३ ॥
तथैव कुमुदद्वीपं नानापुण्योपशोभितं ।
नानाग्रामसमाकीर्णं नानारत्नकरं शिवं ॥ ३४ ॥
कुमुदा नाम महाभागा दुष्टचित्तनिवर्हणी ।
महादेवस्य भगिनी प्रभाभिस्ताभिरिज्यते ॥ ३५ ॥
तथा वराहद्वीपे च नानाम्लेच्छगणाकुले ।
नानाजातिसमाकीर्णे नानाधिष्ठानपत्तने ॥ ३६ ॥
धनधान्ययुते स्फीते धर्म्मिष्ठजनसंकुले ।
नदीशैलवनैश्चित्रैर्बहुपुष्पफलोपगैः ॥ ३७ ॥
वराहपर्व्वतो नाम तत्र रम्यः शिलोच्चयः ।
अनेककन्दरदरीगुहानिर्झरशोभितः ॥ ३८ ॥
तस्मात्सुरसपानीया पुण्यतीर्थतरङ्गिणी ।
वाराही नाम वरदा प्रवृत्तास्य महानदी ॥ ३९ ॥
वाराहरूपिणे तत्र विष्णवे प्रभविष्णवे ।
अनन्यदेवतास्तस्मै नमस्कुर्वन्ति विप्रजाः ॥ ४० ॥
एवं षडेते कथिता अनुद्वीपाः समन्ततः ।
भारतद्वीपदेशो वै दक्षिणे बहुविस्तरः ॥ ४१ ॥
एवमेकमिदं वर्षं बहुद्वीपमिहोच्यते ।
समुद्रजलसम्भिन्नं खण्डं खण्डीकृतं स्मृतं ॥ ४२ ॥

एवञ्चतुर्म्महाद्वीपः सान्तरद्वीपमण्डितः ।
सानुद्वीपः समाख्यातो जम्बूद्वीपस्य विस्तरः ॥ ४१ ॥

इति श्रीमहापुराणे वायुप्रोक्ते भुवनविन्यासो नामा-
ष्टचत्वारिंशोऽध्यायः ।

---

# अथैकोनपञ्चाशोऽध्यायः ।

—— ००० ——

## भुवनविन्यासः ।

सूत उवाच । प्लक्षद्वीपं प्रवक्ष्यामि यथावदिह संग्रहात् ।
शृणुतेमं यथातत्त्वं ब्रुवतो मे द्विजोत्तमाः॥ १ ॥
जम्बूद्वीपस्य विस्ताराद्द्विगुणस्तस्य विस्तरः ।
विस्तारात्त्रिगुणश्चास्य परिणाहः समन्ततः ।
तेनावृतः समुद्रोऽयं द्वीपेन लवणोदकः ॥ २ ॥
तत्र पुण्या जनपदाश्चिराच्च म्रियते प्रजा ।
कुत एव हि दुर्भिक्षं जराव्याधिभयं कुतः ॥ ३ ॥
तत्रापि पर्वताः शुभ्राः सप्तैव मणिभूषणाः ।
रत्नाकरास्तथा नद्यस्तासान्नामानि वक्ष्यते ॥ ४ ॥
प्लक्षद्वीपादिषु तेषु सप्त सप्तसु सप्तसु ।
ऋज्वायताः प्रतिदिशं निविष्टाः पर्व्वताः सदा ॥ ५ ।
प्लक्षद्वीपे तु वक्ष्यामि सप्तद्वीपान्महाचलान् ।
गोमेदकोऽत्र प्रथमः पर्व्वतो मेघसन्निभः ।
ख्यायते तस्य नाम्ना वै वर्षं गोमेदकन्तु तत् ॥ ६ ॥
द्वितीयः पर्व्वतश्चन्द्रः सर्व्वौषधिसमन्वितः ।
अश्विभ्याममृतस्यार्थे ओषध्यस्तत्र संस्थिताः ॥ ७ ॥
तृतीयो नारदो नाम दुर्गशैलो महोच्छ्रयः ।
तत्राचले समुत्पन्नौ पूर्व्वं नारदपर्व्वतौ ॥ ८ ॥

चतुर्थस्तत्र वै शैलो दुन्दुभिर्नाम नामतः ।
शब्दमृत्युः पुरा तस्मिन् दुन्दुभिस्ताड़ितः सुरैः ।
रत्नाकरो रत्नमयः शाल्मलश्चासुरान्तकृत् ॥ ९ ॥
पञ्चमः सोमको नाम देवैर्यत्रामृतं पुरा ।
सम्भृतञ्च हृतञ्चैव मातुरर्थे गरुत्मता ॥ १० ॥
षष्ठस्तु सुमना नाम स एवर्षभ उच्यते ।
हिरण्याक्षो वराहेण तस्मिन् शैले निषूदितः ॥ ११ ॥
वैभ्राजः सप्तमस्तत्र भ्राजिष्णुः स्फाटिको महान् ।
यस्माद्विभ्राजतेऽर्चिर्भिर्वैभ्राजस्तेन स स्मृतः ॥ १२ ॥
तेषां वर्षाणि वक्ष्यामि नामतस्तु यथा क्रमं ।
गोमेदं प्रथमं वर्षं नाम्ना शान्तभयं स्मृतं ॥ १३ ॥
चन्द्रस्य शिखरं नाम नारदस्य सुखोदयं ।
आनन्दं दुन्दुभेर्वर्षं सोमकस्य शिवं स्मृतं ।
क्षेमकं ऋषभस्यापि वैभ्राजस्य ध्रुवं तथा ॥ १४ ॥
एतेषु देवगन्धर्वाः सिद्धाश्च सह चारणैः ।
विहरन्ति रमन्ते च दृश्यमानास्तु तैः सह ॥ १५ ॥
तेषां नद्यश्च सप्तैव प्रतिवर्षं समुद्रगाः ।
नामतस्ताः प्रवक्ष्यामि सप्तगङ्गा महानदी ॥ १६ ॥
अभिगच्छन्ति ता नद्यस्ताभ्यश्चान्याः सहस्रशः ।
बहूदकाश्चौघवत्यो यतो वर्षति वासवः ॥ १७ ॥
ताः पिबन्ति सदा हृष्टा नदीर्जनपदास्तु ते ।
शुभाः शान्तवहाश्चैव प्रमोदा ये च ते शिवाः ॥ १८ ॥
आनन्दाश्च ध्रुवाश्चैव क्षेमकाश्च शिवैः सह ।

वर्णाश्रमाचारयुक्ताः प्रजास्तेष्वथ सर्वशः ॥ १८ ॥
सर्वेष्वरोगाः सुबलाः प्रजास्त्वामयवर्जिताः ।
अवसर्पिणी न तेष्वस्ति तथैवोत्सर्पिणी न च ॥ २० ॥
न तत्रास्ति युगावस्था चतुर्युगकृता क्वचित् ।
त्रेतायुगसमः कालः सर्वदा तत्र वर्त्तते ॥ २१ ॥
प्लक्षद्वीपादिषु ज्ञेयः पञ्चस्वेतेषु सर्वशः ।
देशस्यानुविधानेन कालस्यानुविधाः स्मृताः ॥ २२ ॥
पञ्चवर्षसहस्राणि तेषु जीवन्ति मानवाः ।
सुरूपाश्च सुवेषाश्च अरोगा बलिनस्तथा ॥ २३ ॥
सुखमायुर्बलं रूपमारोग्यं धर्म्म एव च ।
प्लक्षद्वीपादिषु ज्ञेयं शाकद्वीपान्तकेषु च ॥ २४ ॥
प्लक्षद्वीपः पृथुः श्रीमान् सर्वतो धनधान्यवान् ।
दिव्यौषधिफलोपेतः सर्वौषधिवनस्पतिः ॥ २५ ॥
आवृतः पशुभिः सर्व्वैः ग्रामारण्यैः सहस्रशः ।
जम्बूवृक्षेण संख्यातस्तस्य मध्ये द्विजोत्तमाः ।
प्लक्षो नाम्ना महावृक्षस्तस्य नाम्ना स उच्यते ॥ २६ ॥
स तत्र पूज्यते स्थाणुर्मध्येजनपदस्य हि ।
स चापीक्षुरसोदेशः प्लक्षद्वीपसमावृतः ॥ २७ ॥
प्लक्षद्वीपस्य चैवेह वैपुल्याद्विस्तरेण तु ।
इत्येष सन्निवेशो वः प्लक्षद्वीपस्य कीर्त्तितः ।
आनुपूर्व्या समासेन शाल्मलन्तन्निबोधत ॥ २८ ॥
ततस्तृतीयं द्वीपानां शाल्मलं द्वीपमुत्तमं ।
शाल्मलेन समुद्रस्तु द्वीपेनेक्षुरसोदकः ।

प्लक्षद्वीपस्य विस्ताराद् द्विगुणेन समावृतः ॥ २९ ॥
तत्रापि पर्वताः सप्त विज्ञेया रत्नयोनयः ।
रत्नाकरास्तथा नद्यस्तेषु वर्षेषु सप्तसु ॥ ३० ॥
प्रथमः सूर्य्यसङ्काशः कुमुदो नाम पर्वतः ।
सर्व्वधातुमयैः शृङ्गैः शिलाजालसमुन्नतैः ॥ ३१ ॥
द्वितीयः पर्वतस्तस्य उन्नतो नाम विश्रुतः ।
हरितालमयैः शृङ्गैर्दिवमावृत्य तिष्ठति ॥ ३२ ॥
तृतीयः पर्वतस्तस्य वलाहक इति श्रुतः ।
जात्यञ्जनमयैः शृङ्गैर्दिवमावृत्य तिष्ठति ॥ ३३ ॥
चतुर्थः पर्वतो द्रोणो यत्रौषध्यो महाबलाः ।
विशल्यकरणी चैव मृतसञ्जीवनी तथा ॥ ३४ ॥
कङ्कस्तु पञ्चमस्तत्र पर्वतः सुमहोदयः ।
दिव्यपुष्पफलोपेतो वृक्षवीरुत्समावृतः ॥ ३५ ॥
षष्ठस्तु पर्वतस्तत्र महिषो मेघसन्निभः ।
यस्मिन् सोऽग्निर्निवसति महिषो नाम वारिजः ॥ ३६ ॥
सप्तमः पर्वतस्तत्र ककुद्मान्नाम भाष्यते ।
तत्र रत्नान्यनेकानि स्वयं वर्षति वासवः ।
प्रजापतिमुपादाय प्राजापत्ये विधिस्स्वयं ॥ ३७ ॥
इत्येते पर्वताः सप्त शाल्मले मणिभूषिताः ।
तेषां वर्षाणि वक्ष्यामि सप्तैव तु शुभानि वै ।
कुमुदात् प्रथमं श्वेतमुन्नतस्य तु लोहितं ॥ ३८ ॥
वलाहकस्य जीमूतं द्रोणस्य हरितं स्मृतं ।
कङ्कस्य वैद्युतं नाम महिषस्य तु मानसं ॥ ३९ ॥

ककुद्‌ः सुप्रभं नाम सप्तैतानि तु सप्तधा ।
वर्षाणि पर्वतांश्चैव नदीस्तेषु निबोधत ॥ ४० ॥
पानितोया वितृष्णा च चन्द्रा शुक्रा विमोचनी ।
निवृत्तिः सप्तमी तासां प्रतिवर्षन्तु ताः स्मृताः ॥ ४१ ॥
तासां समीपगाश्चान्याः शतशोऽथ सहस्रशः ।
अशक्याः परिसंख्यातुं अज्ञेयास्तु बुभूषता ॥ ४२ ॥
इत्येष सन्निवेशो वः शाल्मलस्यापि कीर्त्तितः ।
प्लक्षवृत्तेण संख्यातस्तस्य मध्ये महाद्रुमः ॥ ४३ ॥
शाल्मलिर्विपुलस्कन्धस्तस्य नाम्ना स उच्यते ।
शाल्मलिस्तु समुद्रेण सुरोदेन समन्ततः ।
विस्ताराच्छाल्मलस्यैव समेन तु समन्ततः ॥ ४४ ॥
उत्तरेषु तु धर्मज्ञा द्वीपेषु शृणुत प्रजाः ।
यथाश्रुतं यथान्यायं ब्रुवतो मे निबोधत ॥ ४५ ॥
कुशद्वीपं प्रवक्ष्यामि चतुर्थं तं समासतः ।
सुरोदकः परिवृतः कुशद्वीपेन सर्वतः ॥ ४६ ॥
सप्तैव गिरयस्तत्र वर्ण्यमानान्निबोधत ।
शाल्मलस्य तु विस्ताराद्द्विगुणेन समन्ततः ॥ ४७ ॥
कुशद्वीपे तु विज्ञेयः पर्वतो विद्रुमोच्चयः ।
द्वीपस्य प्रथमस्तस्य द्वितीयो हेमपर्वतः ॥ ४८ ॥
तृतीयो द्युतिमान्नाम जीमूतसदृशो गिरिः ।
चतुर्थः पुष्पवान्नाम पञ्चमस्तु कुशेशयः ॥ ४९ ॥
षष्ठो हरिगिरिर्नाम सप्तमो मन्दरः स्मृतः ।
मन्दा इति ह्यपां नाम मन्दरो दारणादपां ॥ ५० ॥

तेषामन्तरविष्कम्भो द्विगुणः परिवारितः ।
उद्भिदं प्रथमं वर्षं द्वितीयं वेणुमण्डलं ॥ ५१ ॥
तृतीयं स्वैरथाकारं चतुर्थं लवणं स्मृतं ।
पञ्चमं धृतिमद्वर्षं षष्ठं वर्षं प्रभाकरं ।
सप्तमं कपिलं नाम सप्तैते वर्षपर्व्वताः ॥ ५२ ॥
एतेषु देवगन्धर्व्वाः प्रभास्तु जगदीश्वराः ।
विहरन्ति रमन्ते च दृश्यमानास्तु वर्षशः ॥ ५३ ॥
न तेषु दस्यवः सन्ति म्लेच्छजात्यस्तथैव च ।
गौरप्रायो जनः सर्व्वः क्रमाच्च म्रियते तथा ॥ ५४ ॥
तत्रापि नद्यः सप्तैव धुतपापाः शिवास्तथा ।
पवित्रा सन्ततिश्चैव द्युतिगर्भा मही तथा ॥ ५५ ॥
अन्यास्ताभ्यः परिज्ञाताः शतशोऽथ सहस्रशः ।
अभिगच्छन्ति ताः सर्व्वा यतो वर्षति वासवः ॥ ५६ ॥
घृतोदेन कुशद्वीपो बाह्यतः परिवारितः ।
विज्ञेयः स तु विस्तारात् कुशद्वीपसमेन तु ॥ ५७ ॥
इत्येष सन्निवेशो वः कुशद्वीपस्य वर्णितः ।
क्रौञ्चद्वीपस्य विस्तारं वक्ष्याम्यहमतः परं ॥ ५८ ॥
कुशद्वीपस्य विस्ताराद् द्विगुणः स तु वै स्मृतः ।
घृतोदकसमुद्रो वै क्रौञ्चद्वीपेन संवृतः ॥ ५९ ॥
तस्मिन् द्वीपे नगश्रेष्ठः क्रौञ्चस्थः प्रथमो गिरिः ।
क्रौञ्चात्परो वामनको वामनादन्धकारकः ॥ ६० ॥
अन्धकारात्परश्चापि दिवावृन्नाम पर्व्वतः ।
दिवावृतः परश्चापि द्विविन्दो गिरि रुच्यते ॥ ६१ ॥

द्विविन्दात्परतश्चापि पुण्डरीको महागिरिः ।
पुण्डरीकात्परश्चापि प्रोच्यते दुन्दुभिस्वनः ॥ ६२ ॥
एते रत्नमयाः सप्त क्रौञ्चद्वीपस्य पर्व्वताः ।
बहुवृक्षफलोपेता नानावृक्षलतावृताः ॥ ६३ ॥
परस्परेण द्विगुणा विष्कम्भाद्वर्षपर्व्वताः ।
वर्षाणि तत्र वक्ष्यामि नामतस्तु निबोधत ॥ ६४ ॥
क्रौञ्चस्य कुशलो देशो वामनस्य मनोनुगः ।
मनोनुगात्परश्चोष्णस्तृतीयो देश उच्यते ॥ ६५ ॥
उष्णात्परः प्रावरकः प्रावरादन्धकारकः ।
अन्धकारकदेशात्तु मुनिदेशः परः स्मृतः ॥ ६६ ॥
मुनिदेशात्परश्चैव प्रोच्यते दुन्दुभिस्वनः ।
सिद्धचारणसङ्कीर्णो गौरप्रायो जनः स्मृतः ॥ ६७ ॥
तत्रापि नद्यः सप्तैव प्रतिवर्षं स्मृताः शुभाः ।
गौरी कुमुद्वती चैव सन्ध्या रात्रिर्मनोजवा ।
ख्यातिश्च पुण्डरीका च गङ्गा सप्तविधा स्मृता ॥ ६८ ॥
तासां समुद्रगाश्चान्या नद्यो यास्तु समीपगाः (१) ।
अनुगच्छन्ति ताः सर्व्वा विपुलाः सुबहूदकाः ॥ ६९ ॥
क्रौञ्चद्वीपः समुद्रेण दधिमण्डोदकेन तु ।
आवृतः सर्व्वतः श्रीमान् क्रौञ्चद्वीपसमेन तु ॥ ७० ॥
प्लक्षद्वीपादयो ह्येते समासेन प्रकीर्त्तिताः ।
तेषां निसर्गो द्वीपानां आनुपूर्व्येण सर्व्वशः ॥ ७१ ॥
न शक्यं विस्तराद्वक्तुमपि वर्षशतैरपि ।

१ तासां चचाचगाश्चान्या नाद्यो यास्तु समुद्रगा इति ख० ।

निसर्गोऽयं प्रजानान्तु संहारो यश्च तासु वै ॥ ७२ ॥
अत ऊर्द्धं प्रवक्ष्यामि शाकद्वीपस्य यो विधिः ।
शाकद्वीपस्य कृत्स्नस्य यथावदिह निश्चयात् ।
शृणुध्वं वै यथातत्त्वं ब्रुवतो मे यथार्थवत् ॥ ७३ ॥
क्रौञ्चद्वीपस्य विस्तारात् द्विगुणस्तस्य विस्तरः ।
परिवार्य्य समुद्रं स दधिमण्डोदकं स्थितः ॥ ७४ ॥
तत्र पुण्या जनपदाश्चिराच्च म्रियते जनः ।
कुत एव तु दुर्भिक्षजराव्याधिभयं कुतः ॥ ७५ ॥
तत्रापि पर्व्वताः शुभ्राः सप्तैव मणिभूषिताः ।
रत्नाकरास्तथा नद्यस्तासां नामानि मे शृणु ॥ ७६ ॥
देवर्षिगन्धर्व्वयुतः प्रथमो मेरुरुच्यते ।
प्रागायतः ससौवर्ण उदयो नाम पर्व्वतः ॥ ७७ ॥
तत्र मेघास्तु वृष्ट्यर्थं प्रभवन्ति च यान्ति च ।
तस्यापरेण सुमहान् जलधारो महागिरिः ॥ ७८ ॥
तस्मान्नित्यमुपादत्ते वासवः परमं जलं ।
ततो वर्षं प्रभवति वर्षाकाले प्रजास्विह ॥ ७९ ॥
तस्यापरे रैवतको यत्र नित्यं प्रतिष्ठिता ।
रेवती दिवि नक्षत्रं पितामहकृतो गिरिः ॥ ८० ॥
तस्यापरेण सुमहान् श्यामो नाम महागिरिः ।
तस्मात्श्यामत्वमापन्नाः प्रजाः पूर्व्वमिमाः किल ॥ ८१ ॥
तस्यापरेण रजतो महानस्तो गिरिः स्मृतः ।
तस्यापरेणाम्बिकेयो दुर्गःशैलो हिमाचितः ॥ ८२ ॥
आम्बिकेयात्परो रम्यः सर्व्वौषधिसमन्वितः ।

स चैव केशरीत्युक्तो यतो वायुः प्रवायति ॥ ८३ ॥
शृणुध्वं नामतस्तानि यथावदनुपूर्व्वशः ।
उदयस्योदयं वर्षं जलदं नाम विश्रुतं ॥ ८४ ॥
द्वितीयं जलधारस्य सुकुमारमिति स्मृतं ।
रैवतस्य तु कौमारं श्यामस्य तु मणीचकं ॥ ८५ ॥
अस्तस्यापि शुभं वर्षं विज्ञेयं कुसुमोत्तरं ।
आम्बिकेयस्य मोदाकं केसरेषु महाद्रुमं ॥ ८६ ॥
द्वीपस्य परिमाणञ्च ह्रस्वदीर्घत्वमेव च ।
शाकद्वीपेन विख्यातस्तस्य मध्ये वनस्पतिः ।
शाको नाम महावृक्षस्तस्य पूजां प्रयुञ्जते ॥ ८७ ॥
एतेन देवगन्धर्व्वाः सिद्धाश्च सह चारणैः ।
विहरन्ति रमन्ते च दृश्यमानाश्च तैः सह ॥ ८८ ॥
तत्र पुण्या जनपदाश्चातुर्वर्ण्यसमन्विताः ।
तेषु नद्यश्च सप्तैव प्रतिवर्षं समुद्रगाः ।
विद्धि नाम्नश्च ताः सर्वा गङ्गास्ताः सप्तधा स्मृताः ॥ ८९ ॥
प्रथमा सुकुमारीति गङ्गा शिवजला तथा ।
अनुतप्ता च नाम्नैव नदी सम्परिकीर्त्तिता ॥ ९० ॥
कुमारी नामतः सिद्धा द्वितीया सा पुनः सती ।
नन्दा च पार्व्वती चैव तृतीया परिकीर्त्तिता ॥ ९१ ॥
शिवेतिका (१) चतुर्थी स्यात् त्रिदिवा च पुनः स्मृता ।
इक्षुश्च पञ्चमी ज्ञेया तथैव च पुनः क्रतुः ॥ ९२ ॥
धेनुका च मृता चैव षष्ठी संपरिकीर्त्तिता ।

१ शिविनीकेति क० । शिरेतिकेति ख० ।

एताः सप्त महागङ्गाः प्रतिवर्षं शिवोदकाः ।
भावयन्ति जनं सर्व्वं शाकद्वीपनिवासिनं ॥ ९३ ॥
अनुगच्छन्ति तास्त्वन्या नदीनंद्यः सहस्रशः ।
बहूदकपरिस्रावा (१) यतो वर्षति वासवः ॥ ९४ ॥
तासान्तु नामधेयानि परिमाणं तथैव च ।
न शक्यं परिसंख्यातुं पुण्यास्ताः सरिदुत्तमाः ।
ताः पिबन्ति सदा हृष्टा नदीर्जनपदास्तु ते ॥ ९५ ॥
शंशपायन विस्तीर्णो द्वीपोऽसौ चक्रसंस्थितः ।
नदीजलैः प्रतिच्छन्नः पर्व्वतैश्चाभ्रसन्निभैः ॥ ९६ ॥
सर्व्वधातुविचित्रैश्च मणिविद्रुमभूषितैः ।
पुरैश्च विविधाकारैः स्फीतैर्जनपदैरपि ॥ ९७ ॥
वृक्षैः पुष्पफलोपेतैः समन्ताद्धनधान्यवान् ।
क्षीरोदेन समुद्रेण सर्व्वतः परिवारितः ।
शाकद्वीपस्तु विस्तारात् समेन तु समन्ततः ॥ ९८ ॥
तस्मिन् जनपदाः पुण्याः पर्व्वतास्सरितो शुभाः ।
वर्णाश्रमसमाकीर्णा देशास्ते सप्त वै स्मृताः ॥ ९९ ॥
न सङ्करश्च तेष्वस्ति वर्णाश्रमकृतः क्वचित् ।
धर्मस्य चाव्यभीचारादेकान्तसुखिताः प्रजाः ॥ १०० ॥
न तेषु लोभो माया वा ईर्ष्या सूयाऽधृतिः कुतः ।
विपर्य्ययो न तेष्वस्ति एतत् स्वाभाविकं स्मृतं ॥ १०१ ॥
करोत्पत्तिर्न तेष्वस्ति न दण्डो न च दण्डकाः ।

---

बहूदका महाशय इति च० ।

स्वधर्म्मेणैव धर्म्मज्ञास्ते रक्षन्ति परस्परं ॥ १०२ ॥
एतावदेव शक्यं वै तस्मिन् द्वीपे निवासिनो ।
पुष्करं सप्तमं द्वीपं प्रवक्ष्यामि निबोधत ॥ १०३ ॥
पुष्करेण तु द्वीपेन वृतः क्षीरोदको वहिः ।
शाकद्वीपस्य विस्ताराद् द्विगुणेन समन्ततः ॥ १०४ ॥
पुष्करे पर्व्वतः श्रीमान् एक एव महाशिलः ।
चित्रैर्म्मणिमयैः शैलैः शिखरैस्तु समुच्छ्रितैः ॥ १०५ ॥
द्वीपस्य तस्य पूर्व्वार्द्धे चित्रसानुः स्थितो महान् ।
परिमण्डलसहस्राणि विस्तीर्णः पञ्चविंशतिः ॥ १०६ ॥
ऊर्द्ध्वञ्चैव चतुस्त्रिंशत्सहस्राणि समाचितः ।
द्वीपार्द्धस्य परिक्षेपः पर्व्वतो मानसोत्तमः ॥ १०७ ॥
स्थितो वेलासमीपे तु नवचन्द्र इवोदितः ।
योजनानां सहस्राणि ऊर्द्धं पञ्चाशदुच्छ्रितः ॥ १०८ ॥
तावदेव स विस्तीर्णः सर्व्वतः परिमण्डलः ।
स एवं द्वीपपश्चार्द्धे मानसः पृथिवीधरः ॥ १०९ ॥
एक एव महासानुः सन्निवेशाद् द्विधा कृतः ।
स्वादूदकेनोदधिना सर्व्वतः परिवारितः ॥ ११० ॥
पुष्करद्वीपविस्ताराद्विस्तीर्णोऽसौ समन्ततः ।
तस्मिन् द्वीपे स्मृतौ द्वौ तु पुण्यौ जनपदौ शुभौ ।
अभितो मानसस्याथ पर्व्वतस्यानुमण्डलौ ॥ १११ ॥
महावीतन्तु यद्वर्षं वाह्यतो मानसस्य तत् ।
तस्यैवाभ्यन्तरे यत्तु धातकीखण्डमुच्यते ॥ ११२ ॥
दशवर्षसहस्राणि तत्र जीवन्ति मानवाः ।

आरोग्यसुखभूयिष्ठा मानसीं सिद्धिमास्थिताः ॥ ११३ ॥
सममायुश्च रूपञ्च तस्मिन् वर्षद्वये स्थितं ।
अधमोत्तमौ न तेष्वास्तां तुल्यास्ते रूपशीलतः ॥ ११४ ॥
न तत्र वध्यको नेर्ष्या न स्तेया न भयं तथा ।
निग्रहो न च दण्डोऽस्ति न लोभो न परिग्रहः ॥ ११५ ॥
सत्यानृतं न तत्रास्ति धर्म्माधर्म्मौ तथैव च ।
वर्णाश्रमाणां वार्त्ता वा पाशुपाल्यं वणिक्क्रिया ॥ ११६ ॥
त्रयी विद्या दण्डनीतिः शुश्रूषा शल्यमेव च ।
वर्षद्वये सर्व्वमेतत् पुष्करस्य न विद्यते ॥ ११७ ॥
न तत्र नद्यो वर्षञ्च शीतोष्णं वा न विद्यते ।
उद्भिज्जान्युदकान्यत्र गिरिप्रस्रवणानि च ॥ ११८ ॥
उत्तराणां कुरूणाञ्च तुल्यकालो जनः सदा ।
सर्व्वत्र सुसुखस्तत्र जराक्लमविवर्ज्जितः ॥ ११९ ॥
इत्येष धातकीखण्डो महावीतं तथैव च ।
आनुपूर्व्व्याद्विधिः कृत्स्नः पुष्करस्य प्रकीर्त्तितः ॥ १२० ॥
स्वादूदकेनोदधिना पुष्करः परिवारितः ।
विस्तारान्मण्डलाच्चैव पुष्करस्य तथैव च ॥ १२१ ॥
एवं द्वीपाः समुद्रैस्तु सप्त सप्तभिरावृताः ।
द्वीपस्यानन्तरो यस्तु समुद्रस्तु समन्ततः ॥ १२२ ॥
एवं द्वीपसमुद्राणां वृद्धिर्ज्ञेया परस्परात् ।
अपाञ्चैव समुद्रेकात् समुद्रा इति संज्ञिताः ॥ १२३ ॥
ऋषयो निवसन्त्यस्मिन् प्रजा यस्माच्चतुर्विधाः ।
तस्माद्वर्षमिति प्रोक्तं प्रजानां सुखदन्तु तत् ॥ १२४ ॥

ऋष इत्येव ऋषयः (१) तृषः शक्तिप्रबन्धने ।
इतिप्रबन्धनात् (२) सिद्धं वर्षत्वं तेन तेषु तत् ॥ १२५ ॥
शुक्लपक्षे चन्द्रवृद्धौ समुद्रः पूर्य्यते तदा ।
प्रक्षीयमाणे बहुले क्षीयतेऽस्तमिते खगे ॥ १२६ ॥
आपूर्य्यमाणे उदधिः स्वत एवाभिपूर्य्यते ।
ततोऽपक्षीयमाणेऽपि स्वात्मनैवापकृष्यते ॥ १२७ ॥
उखास्थमग्निसंयोगात् जलमुद्रिच्यते यथा ।
तथा महोदधिगतं तोयमुद्रिच्यते ततः ॥ १२८ ॥
अन्यूना ह्यतिरिक्ताश्च वर्द्धन्त्यापो ह्रसन्ति च ।
उदयास्तमितेष्विन्दोः पक्षयोः शुक्लकृष्णयोः ।
क्षयवृद्धिरेवमुदधेः सोमवृद्धिक्षयात्पुनः ॥ १२९ ॥
दशोत्तराणि पञ्चैव अङ्गुलीनां शतानि तु ।
अपां वृद्धिः क्षयो दृष्टः समुद्राणान्तु पर्व्वसु ॥ १३० ॥
द्विरापत्वात् स्मृता द्वीपाः सर्व्वतश्चोदकावृताः ।
उदकस्याधानं यस्माच्च तस्मादुदधिरुच्यते ॥ १३१ ॥
अपर्वाणस्तु गिरयः पर्वभिः पर्व्वताः स्मृताः ।
प्लक्षद्वीपे तु गोमेदः पर्व्वतस्तेन चोच्यते ॥ १३२ ॥
शाल्मलिः शाल्मलद्वीपे पूज्यते च महाद्रुमः ।
कुशद्वीपे कुशस्तम्बस्तस्य नाम्ना स उच्यते ॥ १३३ ॥
क्रौञ्चद्वीपे गिरिः क्रौञ्चो मध्ये जनपदस्य ह ।
शाकद्वीपे द्रुमः शाकस्तस्य नाम्ना स उच्यते ॥ १३४ ॥
न्यग्रोधः पुष्करद्वीपे तत्र तैः स नमस्कृतः ।

---

१ पाठोऽयं न सङ्गतः ।		२ रतिप्रबन्धनादिति क० ।

महादेवः पुष्करे तु ब्रह्मा त्रिभुवनेश्वरः ॥ १३५ ॥
तस्मिन्निवसति ब्रह्मा साध्यैः सार्द्धं प्रजापतिः ।
उपासते तत्र देवास्त्रयस्त्रिंशन्महर्षिभिः ।
स तत्र पूज्यते चैव देवैर्देवोत्तमोत्तमः ॥ १३६ ॥
जम्बूद्वीपात्प्रवर्त्तन्ते रत्नानि विविधानि च ।
द्वीपेषु तेषु सर्व्वेषु प्रजानां हि क्रमाद्द्विजाः ॥ १३७ ॥
सर्व्वशो ब्रह्मचर्य्येण सत्येन च दमेन च ।
आरोग्यायुःप्रमाणाद्धि द्विगुणश्च समन्ततः ॥ १३८ ॥
एतस्मिन् पुष्करद्वीपे यदुक्तं वर्षकद्वयं ।
गोपायति प्रजास्तत्र स्वयं सज्जनमण्डिताः ॥ १३९ ॥
ईश्वरो दण्डमुद्यम्य ब्रह्मा त्रिभुवनेश्वरः ।
सविष्णुः सशिवो देवः सपिता सपितामहः ॥ १४० ॥
भोजनञ्चाप्रयत्नेन तत्र स्वयमुपस्थितं ।
षड्रसं सुमहावीर्य्यं भुञ्जते च प्रजाः सदा ॥ १४१ ॥
परेण पुष्करस्याथ आवृत्यावस्थितो महान् ।
स्वादूदकः समुद्रस्तु समन्तात्परिवेष्टितः ॥ १४२ ॥
परेण तस्य महती दृश्यते लोकसंस्थितिः ।
काञ्चनी द्विगुणा भूमिः सर्व्वा चैकशिलोपमा ॥ १४३ ॥
तस्मात्परेण शैलस्तु मर्यादान्तस्तु मण्डलं ।
प्रकाशश्चाप्रकाशश्च लोकालोकः स उच्यते ॥ १४४ ॥
आलोकस्तस्य चार्वाक्तु निरालोकस्ततः परं ।
योजनानां सहस्राणि दश तस्योच्छ्रयः स्मृतः ॥ १४५ ॥
तावांश्च विस्तरस्तस्य पृथिव्यां कामगश्च सः ।

आलोके लोकशब्दस्तु निरालोके सलोकता ।
लोकार्थं सम्मतो लोको निरालोकस्तु वाह्यतः ॥ १४६ ॥
लोकविस्तारमात्रन्तु आलोकः सर्व्वतो वहिः ।
परिच्छिन्नः समन्ताच्च उदकेनावृतश्च सः ।
निरालोकात्परश्चापि अण्डमावृत्य तिष्ठति ॥ १४७ ॥
अण्डस्यान्तस्त्विमे लोकाः सप्तद्वीपा च मेदिनी ।
भूर्लोकोऽथ भुवर्लोकः स्वर्लोकोऽथ महस्तथा ॥ १४८ ॥
जनस्तपस्तथा सत्य एतावान् लोकसंग्रहः ।
एतावानेव विज्ञेयो लोकान्तश्चैव तत्परः ॥ १४९ ॥
कुम्भस्थायी भवेद्यादृक् प्रतीच्यान्दिशि चन्द्रमाः ।
आदितः शुक्लपक्षस्य वपुरण्डस्य तद्विधं ॥ १५० ॥
अण्डानामीदृशानान्तु कोटयो ज्ञेयाः सहस्रशः ।
तिर्य्यगूर्ध्वमधस्ताच्च कारणस्याव्ययात्मनः ।
कारणैः प्राकृतैस्तत्र ह्यावृतं प्रतिसप्तभिः ॥ १५१ ॥
दशाधिक्येन चान्योन्यं धारयन्ति परस्परं ।
परस्परावृताः सर्व्वे उत्पन्नाश्च परस्परात् ॥ १५२ ॥
अण्डस्यास्य समन्तात्तु सन्निविष्टो घनोदधिः ।
समन्ताद्येन तोयेन धार्य्यमाणः स तिष्ठति ॥ १५३ ॥
वाह्यतो घनतोयस्य तिर्य्यगूर्द्ध्वानुमण्डलं ।
धार्य्यमाणं समन्तात्तु तिष्ठते घनतेजसा ॥ १५४ ॥
अयोगुड़निभो वह्निः समन्तान्मण्डलाकृतिः ।
समन्ताद्घनवातेन धार्य्यमाणः स तिष्ठति ।
घनवातस्तथाकाशन्धारयानस्तु तिष्ठति ॥ १५५ ॥

भूतादिश्च तथाकाशं भूताद्यश्चाप्यसौ महान् ।
महान्व्याप्तो ह्यनन्तेन अव्यक्तेन तु धार्य्यते ॥ १५६ ॥
अनन्तमपरिव्यक्तन्दशधा सूक्ष्म एव च ।
अनन्तमकृतात्मानमनादिनिधनञ्च तत् ॥ १५७ ॥
अतीत्य परतो घोरमनालम्बमनामयं ।
नैकयोजनसाहस्रं विप्रकृष्टं तमोवृतं ॥ १५८ ॥
तम एव निरालोकममर्य्यादमदेशिकं ।
देवानामप्यविदितं व्यवहारविवर्ज्जितं ॥ १५९ ॥
तमसोऽन्ते च विख्यातमाकाशान्ते च भास्वरं ।
मर्य्यादायामतस्तस्य शिवस्यायतनं महत् ॥ १६० ॥
त्रिदशानामगम्यन्तु स्थानं दिव्यमिति श्रुतिः ।
महतो देवदेवस्य मर्य्यादायां व्यवस्थितं ॥ १६१ ॥
चन्द्रादित्यावतमास्तु ये लोकाः प्रथिता बुधैः ।
ते लोका इत्यभिहिता जगतश्च न संशयः ॥ १६२ ॥
रसातलतलात् सप्त सप्तैवोर्द्धतलाः क्षितौ ।
सप्तस्कन्धास्तथा वायोः सब्रह्मसदना द्विजाः ॥ १६३ ॥
आपातालाद्दिवं यावदत्र पञ्चविधा गतिः ।
प्रमाणमेतज् जगत एष संसारसागरः ॥ १६४ ॥
अनाद्यन्ता प्रयात्येवं नैकजातिसमुद्भवा ।
विचित्रा जगतः सा वै प्रवृत्तिरनवस्थिता ॥ १६५ ॥
यथैतद्भौतिकं नाम निसर्गबहुविस्तरं ।
अतीन्द्रियैर्महाभागैः सिद्धैरपि न लक्ष्यते ॥ १६६ ॥
पृथिव्याश्चाग्निवायूनां महतस्तमसस्तथा ।

ईश्वरस्य तु देवस्य अनन्तस्य द्विजोत्तमाः ॥ १६७ ॥
क्षयो वा परिमाणं वा अन्तो वापि न विद्यते ।
अनन्त एष सर्व्वत्र सर्व्वस्थानेषु पठ्यते ।
तस्य चोक्तं मया पूर्व्वं तस्मिन्नामानुकीर्त्तने ॥ १६८ ॥
य एष शिवनाम्ना हि तद्वः कात्स्न्र्येन कीर्त्तितं ।
स एष सर्व्वत्र गतः सर्व्वस्थानेषु पूज्यते ॥ १६९ ॥
भूमौ रसातले चैव आकाशे पवनेऽनले ।
अर्णवेषु च सर्व्वेषु दिवि चैव न संशयः ॥ १७० ॥
तथा तपसि विज्ञेय एष एव महाद्युतिः ।
अनेकधा विभक्ताङ्गो महायोगी महेश्वरः ।
सर्व्वलोकेषु लोकेश इज्यते बहुधा प्रभुः ॥ १७१ ॥
एवं परस्परोत्पन्ना धार्य्यन्ते च परस्परान् ।
आधाराधेयभावेन विकारास्ते विकारिणः ॥ १७२ ॥
पृथ्व्यादयो विकारास्ते परिच्छिन्नाः परस्परं ।
परस्पराधिकाश्चैव प्रविष्टाश्च परस्परं ॥ १७३ ॥
यस्माद्विष्टाश्च तेऽन्योन्यं तस्मात् स्थैर्य्यमुपागताः (१) ।
प्रागासन् ह्यविशेषास्तु विशेषान्योन्यवेशनात् (२) ।
पृथिव्याद्याश्च वाय्वन्ताः परिच्छिन्नास्त्रयस्तु ते ॥ १७४ ॥
गुणापचयसारेण परिच्छेदो विशेषतः ।
शेषाणान्तु परिच्छेदः सौक्ष्म्यान्नेह विभाव्यते ॥ १७५ ॥

---

१ स्थैर्य्यं गुणमुपागता इति ख० ।
२ विशेषान्योन्यदर्शिन इति ख० ।

भूतेभ्यः परतस्तेभ्यो ह्यालोकः परतः स्मृतः ।
भूतान्यालोक आकाशे परिच्छिन्नानि सर्व्वशः ॥ १७६ ॥
पात्रे महति पात्राणि यथैवान्तर्गतानि तु ।
भवन्त्यन्योन्यहीनानि परस्परसमाश्रयात् ।
तथा ह्यालोक आकाशे भेदास्त्वन्तर्गता मताः ॥ १७७ ॥
कृत्स्नान्येतानि चत्वारि अन्योन्यस्याधिकानि तु ।
यावदेतानि भूतानि तावदुत्पत्तिरुच्यते ॥ १७८ ॥
जन्तूनामिह संस्कारो भूतेष्वन्तर्गतो मतः ।
प्रत्याख्याय च भूतानि कार्य्योत्पत्तिर्न विद्यते ॥ १७९ ॥
तस्मात्परिमिता भेदाः स्मृताः कार्य्यात्मकास्तु ते ।
कारणात्मकास्तथैव स्युर्भेदा ये महदादयः ॥ १८० ॥
इत्येष सन्निवेशो यो मया प्रोक्तो विभागशः ।
सप्तद्वीपसमुद्राया याथातथ्येन वै द्विजाः ॥ १८१ ॥
विस्तारान्मण्डलाच्चैव प्रसंख्यातेन चैव हि ।
वैश्वरूपं प्रधानस्य परिमाणैकदेशिकं ॥ १८२ ॥
अधिष्ठानं भगवतो यस्य सर्व्वमिदं जगत् ।
एवं भूतगणाः सप्त सन्निविष्टाः परस्परं ॥ १८३ ॥
एतावान् सन्निवेशस्तु मया शक्यः प्रभाषितुं ।
एतावदेव श्रोतव्यं सन्निवेशे तु पार्थिव ॥ १८४ ॥
सप्त प्रकृतयस्त्वेता धारयन्ति परस्परं ।
तास्त्वल्पपरिमाणेन प्रसंख्यातुमिहोच्यते ।
असंख्येयाः प्रकृतयस्तिर्य्यगूर्द्ध्वमधश्च याः ॥ १८५ ॥
तारकासन्निवेशश्च यावद्दिव्यन्तु मण्डलं ।

मर्य्यादासन्निवेशस्तु भूमेस्तदनुमण्डलं ।
अतः परं प्रवक्ष्यामि पृथिव्यां वै द्विजोत्तमाः ॥ १८६ ॥

इति श्रीमहापुराणे वायुप्रोक्ते भुवनविन्यासो नामै-
कोनपञ्चाशोऽध्यायः ।



## अथ पञ्चाशोऽध्यायः।

———000———

### ज्योतिःप्रचारः।

सूत उवाच। अथःप्रमाणमूर्द्धञ्च वर्ण्यमानं निबोधत।
पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमं।
अनन्तधातवो ह्येते व्यापकास्तु प्रकीर्त्तिताः ॥ १ ॥
जननी सर्व्वभूतानां सर्व्वभूतधरा धरा।
नानाजनपदाकीर्णा नानाधिष्ठानपत्तना ॥ २ ॥
नानानदनदीशैला नैकजातिसमाकुला।
अनन्ता गीयते देवी पृथिवी बहुविस्तरा ॥ ३ ॥
नदीनदसमुद्रस्थास्तथा क्षुद्राश्रयाः स्थिताः।
पर्व्वताकाशसंस्थाश्च अन्तर्भूमिगताश्च याः ॥ ४ ॥
आपोऽनन्ताश्च विज्ञेयास्तथाग्निः सर्व्वलौकिकः।
अनन्तः पठ्यते चैव (१) व्यापकः सर्व्वसम्भवः ॥ ५
तथाकाशमनालम्ब रम्यं नानाश्रयं स्मृतं।
अनन्तं प्रथितं सर्वं वायुश्चाकाशसम्भवः ॥ ६ ॥
आपः पृथिव्यामुदके पृथिवी चोपरि स्थिता।
आकाशञ्चापरमधः पुनर्भूमिः पुनर्जलं ॥ ७ ॥
एवमन्तमनन्तस्य भौतिकस्य न विद्यते।
पुरा सुरैरभिहितं निश्चितन्तु निबोधत ॥ ८ ॥

१ अनः संपठ्यते चैवेवि ष०

भूमिर्जलमथाकाशमिति ज्ञेया परम्परा ।
स्थितिरेषा तु विज्ञेया सप्तमेऽस्मिन् रसातले ॥ ९ ॥
दशयोजनसाहस्रमेकभौमं रसातलं ।
साधुभिः परिविख्यातमेकैकं बहुविस्तरं ॥ १० ॥
प्रथममतलञ्चैव (१) सुतलन्तु ततः परं ।
ततः परतरं विद्याद्वितलं बहुविस्तरं ॥ ११ ॥
ततो गभस्तलं नाम परतश्च महातलं ।
श्रीतलञ्च ततः प्राहुः पातालं सप्तमं स्मृतं ॥ १२ ॥
कृष्णभौमञ्च प्रथमं भूमिभागञ्च कीर्त्तितं ।
पाण्डुभौमं द्वितीयन्तु तृतीयं रक्तमृत्तिकं ॥ १३ ॥
पीतभौमञ्चतुर्थन्तु पञ्चमं शर्करातलं ।
षष्ठं शिलामयञ्चैव सौवर्णं सप्तमन्तलं ॥ १४ ॥
प्रथमे तु तले ख्यातमसुरेन्द्रस्य मन्दिरं ।
नमुचेरिन्द्रशत्रोर्हि महानादस्य चालयं ॥ १५ ॥
पुरञ्च शङ्कुकर्णस्य कबन्धस्य च मन्दिरं ।
निष्कुलादस्य च पुरं प्रहृष्टजनसङ्कुलं ॥ १६ ॥
राक्षसस्य च भीमस्य शूलदन्तस्य चालयं ।
लोहिताक्षकलिङ्गानां (२) नगरं श्वापदस्य तु ॥ १७ ॥
धनञ्जयस्य च पुरं माहेन्द्रस्य महात्मनः ।
कालियस्य च नागस्य नगरं कलसस्य च ॥ १८ ॥
एवं पुरसहस्राणि नागदानवरक्षसां ।

---

१ प्रथमं रसातलं नामेति ख० ।

२ लोहिताक्षकलिङ्गाभ्यामिति क०, ख०, घ० च ।

तले ज्ञेयानि प्रथमे कृष्णभौमे न संशयः ॥ १८ ॥
द्वितीयेऽपि तले विप्रा दैत्येन्द्रस्य सुरक्षसः ।
महाजम्भस्य च तथा नगरं प्रमथस्य तु ॥ २० ॥
हयग्रीवस्य कृष्णस्य निकुम्भस्य च मन्दिरं ।
शङ्खाख्येयस्य च पुरं नगरं गोमुखस्य च ॥ २१ ॥
राक्षसस्य च नीलस्य मेघस्य क्रथनस्य च ।
पुरञ्च कुरुपादस्य महोष्णीषस्य चालयं ॥ २२ ॥
कम्बलस्य च नागस्य पुरमश्वतरस्य च ।
कद्रुपुत्रस्य च पुरं तक्षकस्य महात्मनः ॥ २३ ॥
एवं पुरसहस्राणि नागदानवरक्षसां ।
द्वितीयेऽस्मिन् तले विप्राः पाण्डुभौमे न संशयः ॥ २४ ॥
तृतीये तु तले ख्यातं प्रह्लादस्य महात्मनः ।
अनुह्लादस्य च पुरं दैत्येन्द्रस्य महात्मनः ॥ २५ ॥
तारकाख्यस्य च पुरं पुरन्त्रिशिरसस्तथा ।
शिशुमारस्य च पुरं हृष्टपुष्टजनाकुलं ॥ २६ ॥
च्यवनस्य च विज्ञेयं राक्षसस्य च मन्दिरं ।
राक्षसेन्द्रस्य च पुरं कुम्भिलस्य खरस्य च ॥ २७ ॥
विराधस्य (१) च क्रूरस्य पुरमुल्कामुखस्य च ।
हेमकस्य च नागस्य तथा पाण्डुरकस्य च ॥ २८ ॥
मणिमन्त्रस्य च पुरं कपिलस्य च मन्दिरं ।
नन्दस्य चोरगपतेर्विशालस्य च मन्दिरं ॥ २९ ॥

१ विरावस्येति घ० ।

एवं पुरसहस्राणि नागदानवरक्षसां।
तृतीयेऽस्मिंस्तले विप्राः पीतभौमे न संशयः॥ ३०॥
चतुर्थे दैत्यसिंहस्य कालनेमेर्महात्मनः।
गजकर्णस्य च पुरं नगरं कुञ्जरस्य च॥ ३१॥
राक्षसेन्द्रस्य च पुरं सुमालेर्बहुविस्तरं।
मुञ्जस्य लोकनाथस्य वृकवक्त्रस्य चालयं॥ ३२॥
बहुयोजनसाहस्रं बहुपक्षिसमाकुलं।
नगरं वैनतेयस्य चतुर्थेऽस्मिन् रसातले॥ ३३॥
पञ्चमे शर्कराभौमे बहुयोजनविस्तृते।
विरोचनस्य नगरं दैत्यसिंहस्य धीमतः॥ ३४॥
वैदूर्यस्याग्निजिह्वस्य हिरण्याक्षस्य चालयं।
पुरञ्च विद्युज्जिह्वस्य राक्षसस्य च धीमतः॥ ३५॥
महामेघस्य च पुरं राक्षसेन्द्रस्य शालिनः।
कर्म्मारस्य च नागस्य स्वस्तिकस्य जयस्य च॥ ३६॥
एवं पुरसहस्राणि नागदानवरक्षसां।
पञ्चमेपि तथा ज्ञेयं शर्करानिलये सदा॥ ३७॥
षष्ठे तले दैत्यपतेः केसरेर्नगरोत्तमं।
सुपर्व्वणः सुलोम्नश्च नगरं महिषस्य च।
राक्षसेन्द्रस्य च पुरमुत्क्रोशस्य महात्मनः॥ ३८॥
तत्रास्ते सुरसापुत्रः शतशीर्षो मुदा युतः।
कश्यपस्य सुतः श्रीमान् वासुकिर्नाम नागराट्॥ ३९॥
एवं पुरसहस्राणि नागदानवरक्षसां।
षष्ठे तलेऽस्मिन् विख्याते शिलाभौमे रसातले॥ ४०॥

सप्तमे तु तले ज्ञेयं पाताले सर्व्वपश्चिमे ।
पुरं बलेः प्रमुदितं नरनारीसमाकुलं ॥ ४१ ॥
असुराशीविषैः पूर्णमुद्वृत्तैर्देवशत्रुभिः ।
मुचुकुन्दस्य दैत्यस्य तत्र वै नगरं महत् ॥ ४२ ॥
अनेकैर्दितिपुत्राणां समुदीर्णैर्महापुरैः ।
तथैव नागनगरैर्ऋद्धिमद्भिः सहस्रशः ॥ ४३ ॥
दैत्यानां दानवानाञ्च समुदीर्णैर्महापुरैः ।
उदीर्णैराक्षसावासैरनेकैश्च समाकुलं ॥ ४४ ॥
पातालान्ते च विप्रेन्द्रा विस्तीर्णे बहुयोजने ।
आस्ते रक्तारविन्दाक्षो महात्मा ह्यजरामरः ॥ ४५ ॥
धौतशङ्खोदरवपुर्नीलवासा महाभुजः ।
विशालभोगो द्युतिमांश्चित्रमालाधरो बली ॥ ४६ ॥
रुक्मशृङ्गावदातेन दीप्तास्येन विराजता ।
प्रभुर्मुखसहस्रेण शोभते वै स कुण्डली ॥ ४७ ॥
स जिह्वामालया देवो लोलज्वालानलार्च्चिषा ।
ज्वालामालापरिक्षिप्तः कैलास इव लक्ष्यते ॥ ४८ ॥
स तु नेत्रसहस्रेण द्विगुणेन विराजता ।
बालसूर्य्याभिताम्रेण शोभते स्निग्धमण्डलः ॥ ४९ ॥
तस्य कुन्देन्दुवर्णस्य अक्षमाला विराजते ।
तरुणादित्यमालेव श्वेतपर्व्वतमूर्द्धनि ॥ ५० ॥
जटाकरालो द्युतिमान् लक्ष्यते शयमासने ।
विस्तीर्ण इव मेदिन्यां ग्रहस्रशिखरो गिरिः ॥ ५१ ॥
महाभोगैर्महाभागैर्म्महानागैर्महाबलैः ।

उपास्यते महातेजा महानागपतिः स्वयं ॥ ५२ ॥
स राजा सर्व्वनागानां शेषो नाम महाद्युतिः ।
सा वैष्णवी ह्यहितनुर्मर्य्यादायां व्यवस्थिता ॥ ५३ ॥
सप्तैवमेते कथिता व्यवहार्य्या रसातलाः ।
देवासुरमहानागराक्षसाध्युषिताः सदा ॥ ५४ ॥
अतःपरमनालोक्यमगम्यं सिद्धसाधुभिः ।
देवानामप्यविदितं व्यवहारविवर्ज्जितं ॥ ५५ ॥
पृथिव्यग्न्यम्बुवायूनां नभसश्च द्विजोत्तमाः ।
महत्त्वमेवमृषिभिर्वर्ण्यते नात्र संशयः ॥ ५६ ॥
अत ऊर्द्ध्वं प्रवक्ष्यामि सूर्य्याचन्द्रमसोर्गतिं ।
सूर्य्याचन्द्रमसावेतौ भ्रमन्तौ यावदेव तु ।
प्रकाशतः स्वभाभिस्तौ मण्डलाभ्यां समास्थितौ ॥ ५७ ॥
सप्तानाञ्च समुद्राणां द्वीपानान्तु स विस्तरः ।
विस्तरार्द्धं पृथिव्यास्तु भवेदन्यत्र बाह्यतः ॥ ५८ ॥
पर्य्यासपारिमाण्यन्तु चन्द्रादित्यौ प्रकाशतः ।
पर्य्यासपारिमाण्येन भूमेस्तुल्यं दिवं स्मृतं ॥ ५९ ॥
अवति त्रीनिमान् लोकान् यस्मात् सूर्य्यः परिभ्रमन् ।
अवधातुः प्रकाशाख्यो ह्यवनात्स रविः स्मृतः ॥ ६० ॥
अतःपरं प्रवक्ष्यामि प्रमाणं चन्द्रसूर्य्ययोः ।
महितत्वान्महीशब्दो ह्यस्मिन् वर्षे निपात्यते ॥ ६१ ॥
अस्य भारतवर्षस्य विष्कम्भन्तु सुविस्तरं ।
मण्डलं भास्करस्याथ योजनानां निबोधत ॥ ६२ ॥
नवयोजनसाहस्रो विस्तारो भास्करस्य तु ।

विस्तारात्त्रिगुणश्चास्य परिणाहोऽथ मण्डलं।
विष्कम्भो मण्डलस्यैव भास्कराद्द्विगुणः शशी ॥ ६३ ॥
अतः पृथिव्यां वक्ष्यामि प्रमाणं योजनैः सह।
सप्तद्वीपसमुद्राया विस्तारो मण्डलञ्च यत् ॥ ६४ ॥
इत्येतदिह संख्यातं पुराणं परिमाणतः।
तद्वक्ष्यामि प्रसंख्याय साम्प्रतैरभिमानिभिः ॥ ६५ ॥
अभिमानिव्यतीता ये तुल्यास्ते साम्प्रतैरिह।
देवा ये वै ह्यतीतास्ते रूपैर्नामभिरेव च ॥ ६६ ॥
तस्मात्तु साम्प्रतैर्देवैर्वक्ष्यामि वसुधातलं।
दिवस्तु सन्निवेशो वै साम्प्रतैरेव कृत्स्नशः ॥ ६७ ॥
शतार्धकोटिविस्तारा पृथिवी कृत्स्नतः स्मृता।
तस्या वाधप्रमाणेन मेरोर्वै चातुरन्तरं ॥ ६८ ॥
पृथिव्या वाधविस्तारो योजनाग्रात्प्रकीर्त्तितः।
मेरुमध्यात् प्रतिदिशं कोटिरेकादश स्मृताः ॥ ६९ ॥
तथा शतसहस्राणि एकोननवतिः पुनः।
पञ्चाशच्च सहस्राणि पृथिव्या वाधविस्तरः ॥ ७० ॥
पृथिव्या विस्तरं कृत्स्नं योजनैस्तन्निबोधत।
तिस्रःकोट्यस्तु विस्तारः संख्यातः स चतुर्द्दिशं ॥ ७१ ॥
तथा शतसहस्राणामेकोनाशीतिरुच्यते।
सप्तद्वीपसमुद्रायाः पृथिव्यास्त्वेष विस्तरः ॥ ७२ ॥
विस्तारात्त्रिगुणञ्चैव पृथिव्यन्तस्य मण्डलं।
गणितं योजनाग्रन्तु कोट्यस्त्वेकादश स्मृताः ॥ ७३ ॥
तथा शतसहस्रन्तु सप्तत्रिंशाधिकानि तु।

इत्येतद्वै प्रसंख्यातं पृथिव्यन्तस्य मण्डलं ॥ ७४ ॥
तारकासन्निवेशस्य दिवि यावद्धि मण्डलं ।
पर्य्यासः सन्निवेशस्य भूमेस्तावत्तु मण्डलं ॥ ७५ ॥
पर्य्यासपारिमाण्येन भूमेस्तुल्यं दिवं स्मृतं ।
सप्तानामपि लोकानामेतन्मानं प्रकीर्त्तितं ॥ ७६ ॥
पर्य्यासपारिमाण्येन मण्डलानुगतेन च ।
उपर्य्युपरि लोकानां छत्रवत्परिमण्डलं ॥ ७७ ॥
संस्थितिर्विहिता सर्व्वा येषु तिष्ठन्ति जन्तवः ।
एतदण्डकटाहस्य प्रमाणं परिकीर्त्तितं ॥ ७८ ॥
अण्डस्यान्तस्त्विमे लोकाः सप्तद्वीपा च मेदिनी ।
भूर्लोकश्च भुवश्चैव तृतीयः स्वरिति स्मृतः ।
महर्लोको जनश्चैव तपः सत्यश्च सप्तमः ॥ ७९ ॥
एते सप्त कृता लोकाश्छत्राकारा व्यवस्थिताः ।
स्वकैरावरणैः सूक्ष्मैर्धार्य्यमाणाः पृथक् पृथक् ॥ ८० ॥
दशभागाधिकाभिश्च ताभिः प्रकृतिभिर्वहिः ।
धार्य्यमाणा विशेषैश्च समुत्पन्नैः परस्परं ॥ ८१ ॥
अस्याण्डस्य समन्ताच्च सन्निविष्टो घनोदधिः ।
पृथिवीमण्डलं कृत्स्नं घनतोयेन धार्य्यते ॥ ८२ ॥
घनोदधिपरेणाथ धार्य्यते घनतेजसा ।
वाह्यतो घनतेजस्तु तिर्य्यगूर्द्धन्तु मण्डलं ॥ ८३ ॥
समन्ताद्घनवातेन धार्य्यमाणं प्रतिष्ठितं ।
घनवातात्तथाकाशमाकाशञ्च महात्मना ॥ ८४ ॥
भूतादिना वृतं सर्व्वं भूतादिर्महता वृतः ।

वृतो महानन्तेन प्रधानेनाव्ययात्मना ॥ ८५ ॥
पुराणि लोकपालानां प्रवक्ष्यामि यथाक्रमं ।
ज्योतिर्गणप्रचारस्य प्रमाणं परिवक्ष्यते ॥ ८६ ॥
मेरोः प्राच्यां दिशि तथा मानसस्यैव मूर्द्धनि ।
वस्वोकसारा माहेन्द्री पुण्या हेमपरिष्कृता ॥ ८७ ॥
दक्षिणेन पुनर्मेरोर्मानसस्यैव मूर्द्धनि ।
वैवस्वतो निवसति यमः संयमने पुरे ॥ ८८ ॥
प्रतीच्यान्तु पुनर्मेरोर्मानसस्यैव मूर्द्धनि ।
सुखा नाम पुरी रम्या वरुणस्याथ धीमतः ॥ ८९ ॥
दिश्युत्तरस्यां मेरोस्तु मानसस्यैव मूर्द्धनि ।
तुल्या माहेन्द्रपुर्य्या तु सोमस्यापि विभावरी ॥ ९० ॥
मानसोत्तरपृष्ठे तु लोकपालाश्चतुर्द्दिशं ।
स्थिता धर्म्मव्यवस्थायै लोकसंरक्षणाय च ॥ ९१ ॥
लोकपालोपरिष्टात्तु सर्व्वतो दक्षिणायने ।
काष्ठागतस्य सूर्य्यस्य गतिर्या तां निबोधत ॥ ९२ ॥
दक्षिणे प्रक्रमे सूर्य्यः क्षिप्तेषुरिव सर्पति ।
ज्योतिषाञ्चक्रमादाय सततं परिगच्छति ॥ ९३ ॥
मध्यगश्चामरावत्यां यदा भवति भास्करः ।
वैवस्वते संयमने उदयस्तत्र उच्यते ॥ ९४ ॥
सुखायामर्द्धरात्रश्च मध्यगः स्याद्रविर्यदा ।
सुखायामथ वारुण्यामुत्तिष्ठन् स तु दृश्यते ॥ ९५ ॥
विभायामर्द्धरात्रं स्यात् माहेन्द्र्यामस्तमेति च ।
तदा दक्षिणपूर्व्वेषामपराह्णोविधीयते ॥ ९६ ॥

दक्षिणापरदेश्यानां पूर्व्वाह्नः परिकीर्त्त्यते ।
तेषामपररात्रश्च ये जना उत्तरापथे ॥ ९७ ॥
देशा उत्तरपूर्व्वा ये पूर्व्वरात्रस्तु तान् प्रति ।
एवमेवोत्तरेष्वर्क्को भवनेषु विराजते ॥ ९८ ॥
सुखायामथ वारुण्यां मध्याह्ने चार्य्यमा यदा ।
विभावर्य्यां सोमपुर्य्यामुत्तिष्ठति विभावसुः ॥ ९९ ॥
रात्र्यर्द्धं चामरावत्यामस्तमेति यमस्य च ।
सोमपुर्य्यां विभायान्तु मध्याह्ने स्याद्दिवाकरः ॥ १०० ॥
महेन्द्रस्यामरावत्यामुत्तिष्ठति यदा रविः ।
अर्द्धरात्रं संयमने वारुण्यामस्तमेति च ॥ १०१ ॥
स शीघ्रमेति पर्य्येति भास्करोऽलातचक्रवत् ।
भ्रमन् वै भ्रममाणानि ऋक्षाणि गगने रविः ॥ १०२ ॥
एवञ्चतुर्षु द्वीपेषु दक्षिणान्तेन सर्पति ।
उदयास्तमनेनासावुत्तिष्ठति पुनः पुनः ॥ १०३ ॥
पूर्व्वाह्ने चापराह्ने तु द्वौ द्वौ देवालयौ तु सः ।
तपत्येकन्तु मध्याह्ने तैरेव तु सरश्मिभिः ॥ १०४ ॥
उदितो वर्द्धमानाभिरामध्याह्नं तपन् रविः ।
अतः परं ह्रसन्तीभिर्गोभिरस्तं स गच्छति ॥ १०५ ॥
उदयास्तमयाभ्यां हि स्मृते पूर्व्वापरे दिशौ ।
यावत्पुरस्तात्तपति तावत् पृष्ठे तु पार्श्वयोः ॥ १०६ ॥
यत्रोद्यन् दृश्यते सूर्य्यस्तेषां स उदयः स्मृतः ।
यत्र प्रणाशमायाति तेषामस्तः स उच्यते ॥ १०७ ॥
सर्व्वेषामुत्तरे मेरुर्लोकालोकस्तु दक्षिणे ।

विदूरभावादर्कस्य भूमेर्लेखावृतस्य च ।
ह्रियन्ते रश्मयो यस्मात्तेन रात्रौ न दृश्यते ॥ १०८ ॥
ग्रहनक्षत्रताराणां दर्शनं भास्करस्य च ।
उच्छ्रयस्य प्रमाणेन ज्ञेयमस्तमनोदयं ॥ १०९ ॥
शुक्लच्छायोऽग्निरापश्च कृष्णच्छाया च मेदिनी ।
विदूरभावादर्कस्य उद्यतस्य विरश्मिता ।
रक्ताभावो विरश्मित्वाद्रक्तत्वाच्चाप्यनुष्णता ॥ ११० ॥
लेखयावस्थितः सूर्य्यो यत्र यत्र तु दृश्यते ।
ऊर्द्ध्वं गतः सहस्रन्तु योजनानां स दृश्यते ॥ १११ ॥
प्रभा हि सौरी पादेन अस्तङ्गच्छति भास्करे ।
अग्निमाविशते रात्रौ तस्माद्दूरात् प्रकाशते ॥ ११२ ॥
उदितस्तु पुनः सूर्य्यः अस्तमाग्नेयमाविशत् ।
संयुक्तो वह्निना सूर्य्यस्ततः स तपते दिवा ॥ ११३ ॥
प्राकाश्यञ्च तथौष्णञ्च सूर्य्याग्नेयौ च तेजसौ ।
परस्परानुप्रवेशादाप्यायेते दिवानिशं ॥ ११४ ॥
उत्तरे चैव भूम्यर्द्धे तथा तस्मिंश्च दक्षिणे ।
उत्तिष्ठति तथा सूर्य्ये रात्रिराविशते त्वपः ।
तस्मात्ताम्रा भवन्त्यापो दिवारात्रिप्रवेशनात् ॥ ११५ ॥
अस्तं याति पुनः सूर्य्ये दिनं वै प्रविशत्यपः ।
तस्माच्छुक्ला भवन्त्यापो नक्तमह्नः प्रवेशनात् ॥ ११६ ॥
एतेन क्रमयोगेन भूम्यर्द्धे दक्षिणोत्तरे ।
उदयास्तमनेऽर्कस्य (१) अहोरात्रं विशत्यपः ॥ ११७ ॥

---

१ उदयास्तमय नित्यमिति ४० ।

दिनं सूर्य्यप्रकाशाख्यं तामसी रात्रिरुच्यते ।
तस्माद्व्यवस्थिता रात्रिः सूर्य्यापेक्षमहः स्मृतं ॥ ११८ ॥
एवं पुष्करमध्येन यदा सर्पति भास्करः ।
त्रिंशांशकन्तु (१) मेदिन्या मुहूर्त्तेनैव गच्छति ॥ ११९ ॥
योजनाग्रान्मुहूर्त्तस्य इमां संख्यां निबोधत ।
पूर्णं शतसहस्राणामेकत्रिंशत्तु सा स्मृता ॥ १२० ॥
पञ्चाशत्तु तथान्यानि सहस्राण्यधिकानि तु ।
मौहूर्त्तिकी गतिर्ह्येषा सूर्य्यस्य तु विधीयते ॥ १२१ ॥
एतेन गतियोगेन यदा काष्ठान्तु दक्षिणां ।
पर्य्यागच्छेत्तदादित्यो माघे काष्ठान्तमेव हि ॥ १२२ ॥
सर्पते दक्षिणायान्तु काष्ठायां तन्निबोधत ।
नवकोट्यः प्रसंख्याता योजनैः परिमण्डलं ॥ १२३ ॥
तथा शतसहस्राणि चत्वारिंशच्च पञ्च च ।
अहोरात्रात्पतङ्गस्य गतिरेषा विधीयते ॥ १२४ ॥
दक्षिणाद्विनिवृत्तोऽसौ विषुवस्थो यदा रविः ।
क्षीरोदस्य समुद्रस्य उत्तरान्ता दिशश्चरन् । १२५ ॥
मण्डलं विषुवच्चापि योजनैस्तन्निबोधत ।
तिस्रः कोट्यस्तु विस्तीर्णा विषुवद्द्यापि सा स्मृता ॥ १२६ ॥
तथा शतसहस्राणामशीत्येकाधिका पुनः ।
श्रवणे चोत्तरां काष्ठाञ्चित्रभानुर्य्यदा भवेत् ।
शाकद्वीपस्य षष्ठस्य उत्तरान्ता दिशश्चरन् ॥ १२७ ॥
उत्तरायाश्च काष्ठायां प्रमाणं मण्डलस्य च ।

१ चांशांशकन्विति क० । चिंशद्भागन्विति घ० ।

योजनाग्रात्प्रसंख्याता कोटिरेका तु सा द्विजैः ॥ १२८ ॥
अशीतिर्नियुतानीह योजनानां तथैव च ।
अष्टपञ्चाशतञ्चैव योजनान्यधिकानि तु ॥ १२९ ॥
नागवीथ्युत्तरावीथी अजवीथी च दक्षिणा ।
मूलञ्चैव तथाषाढे ह्यजवीथ्युदयास्त्रयः ।
अभिजित्पूर्वतः स्वातिर्नागवीथ्युदयास्त्रयः ॥ १३० ॥
काष्ठयोरन्तरं यच्च तद्वक्ष्ये योजनैः पुनः ।
एतच्छतसहस्राणामेकत्रिंशोत्तरं शतं ॥ १३१ ॥
त्रयस्त्रिंशाधिकाश्चान्ये त्रयस्त्रिंशच्च योजनैः ।
काष्ठयोरन्तरं ह्येतद् योजनाग्रात् प्रतिष्ठितं ॥ १३२ ॥
काष्ठयोर्लेखयोश्चैव अन्तरे दक्षिणोत्तरे ।
ते तु वक्ष्यामि संख्याय योजनैस्तन्निबोधत ॥ १३३ ॥
एकैकमन्तरन्तस्या नियुतान्येकसप्ततिः ।
सहस्राण्यतिरिक्तानि ततोऽन्या पञ्चसप्ततिः ॥ १३४ ॥
लेखयोः काष्ठयोश्चैव वाह्याभ्यन्तरयोः स्मृतं ।
अभ्यन्तरन्तु पर्य्येति मण्डलान्युत्तरायणे ॥ १३५ ॥
वाह्यतो दक्षिणे चैव सततन्तु यथाक्रमं ।
मण्डलानां शतं पूर्णमशीत्यधिकमुत्तरं ॥ १३६ ॥
चरते दक्षिणे चापि तावदेव विभावसुः ।
प्रमाणं मण्डलस्याथ योजनाग्रान्निबोधत ॥ १३७ ॥
एकविंशद् योजनानां सहस्राणि समासतः ।
शते द्वे पुनरप्यन्ये योजनानां प्रकीर्त्तिते ॥ १३८ ॥
एकविंशतिभिश्चैव योजनैरधिकैर्हि ते ।

एतत्प्रमाणमाख्यातं योजनैर्मण्डलं हि तत् ॥ १३९॥
विष्कम्भो मण्डलस्यैष तिर्य्यक् स तु विधीयते।
प्रत्यहश्चरते तानि सूर्य्यो वै मण्डलक्रमं ॥ १४० ॥
कुलालचक्रपर्य्यन्तो यथा शीघ्रं निवर्त्तते।
दक्षिणे प्रक्रमे सूर्य्यस्तथा शीघ्रं निवर्त्तते ॥ १४१ ॥
तस्मात् प्रकृष्टां भूमिञ्च कालेनाल्पेन गच्छति।
सूर्य्यो द्वादशभिः शीघ्रं मुहूर्त्तैर्दक्षिणोत्तरे ॥ १४२ ॥
त्रयोदशार्द्धमृक्षाणामह्नानुचरते रविः।
मुहूर्त्तैस्तावदृक्षाणि नक्तमष्टादशैश्चरन् ॥ १४३ ॥
कुलालचक्रमध्यस्तु यथा मन्दं प्रसर्पति।
तथोदगयने सूर्य्यः सर्पते मन्दविक्रमः ॥ १४४ ॥
त्रयोदशार्द्धमर्द्धेन ऋक्षाणां चरते रविः।
तस्माद्दीर्घेण कालेन भूमिमल्पां निगच्छति ॥ १४५ ॥
अष्टादशमुहूर्त्तैस्तु उत्तरायणपश्चिमं।
अहर्भवति तच्चापि चरते मन्दविक्रमः ॥ १४६ ॥
त्रयोदशार्द्धमर्धेन ऋक्षाणाञ्चरते रविः।
मुहूर्त्तैस्तावदृक्षाणि नक्तमष्टादशैश्चरन् ॥ १४७ ॥
ततो मन्दतरं ताभ्याञ्चक्रं भ्रमति वै यथा।
मृत्पिण्ड इव मध्यस्थो ध्रुवो भ्रमति वै तथा ॥ १४८ ॥
त्रिंशन्मुहूर्त्तानेवाहुरहोरात्रं ध्रुवो भ्रमन्।
उभयोः काष्ठयोर्मध्ये भ्रमते मण्डलानि सः ॥ १४९ ॥
कुलालचक्रनाभिस्तु यथा तत्रैव वर्त्तते।
ध्रुवस्तथा हि विज्ञेयस्तत्रैव परिवर्त्तते ॥ १५० ॥

उभयोः काष्ठयोर्मध्ये भ्रमतो मण्डलानि तु।
दिवा नक्तञ्च सूर्य्यस्य मन्दा शीघ्रा च वै गतिः॥ १५१॥
उत्तरे प्रक्रमे त्विन्दोर्दिवा मन्दा गतिः स्मृता।
तथैव च पुनर्नक्तं शीघ्रा सूर्य्यस्य वै गतिः॥ १५२॥
दक्षिणे प्रक्रमे चैव दिवा शीघ्रं विधीयते।
गतिः सूर्य्यस्य नक्तं वै मन्दा चापि तथा स्मृता॥ १५३॥
एवं गतिविशेषेण विभजन् रात्र्यहानि तु।
तथा विचरते मार्गं समेन विषमेण च॥ १५४॥
लोकालोके स्थिता ये ते लोकपालाश्चतुर्द्दिशं।
अगस्त्यश्चरते तेषामुपरिष्टाज्ज्वेन तु।
भजन्नसावहोरात्रमेवङ्गतिविशेषणैः (१)॥ १५५॥
दक्षिणे नागवीथ्यायां लोकालोकस्य चोत्तरं।
लोकसन्तारको ह्येष वैश्वानरपथाद्वहिः॥ १५६॥
पृष्ठे यावत्प्रभा सौरी पुरस्तात् सम्प्रकाशते।
पार्श्वयोः पृष्ठतस्तावल्लोकालोकस्य सर्व्वतः॥ १५७॥
योजनानां सहस्राणि दशोर्द्धन्तूच्छ्रितो गिरिः।
प्रकाशश्चाप्रकाशश्च सर्व्वतः परिमण्डलः॥ १५८॥
नक्षत्रचन्द्रसूर्य्याश्च ग्रहास्तारागणैः सह।
अभ्यन्तरं प्रकाशन्ते लोकालोकस्य वै गिरेः॥ १५९॥
एतावानेव लोकस्तु निरालोकस्त्वतः परं।
लोकालोक एकधा तु निरालोकस्त्वनेकधा॥ १६०॥

---

१ गतिविभ्रमण इति क०

लोकालोकन्तु सन्धत्ते यस्मात् सूर्य्यः परिग्रहं ।
तस्मात्सन्ध्येति तामाहुरुषाव्युष्टोर्यदन्तरं ।
उषा रात्रिः स्मृता विप्रैर्व्युष्टिश्चापि त्वहः स्मृतं ॥ १६१ ॥
सूर्य्यं हि ग्रसमानानां सन्ध्याकाले हि रक्षसां ।
प्रजापतिनियोगेन शापस्तेषां दुरात्मनां ।
अक्षयत्वञ्च देहस्य प्रापिता मरणं तथा ॥ १६२ ॥
तिस्रः कोटास्तु विख्याता मन्देहा नाम राक्षसाः ।
प्रार्थयन्ति सहस्रांशुमुदयन्ति दिने दिने ।
तापयन्तो दुरात्मानः सूर्य्यमिच्छन्ति खादितुं ॥ १६३ ।
अथ सूर्य्यस्य तेषाञ्च युद्धमासीत् सुदारुणं ।
ततो ब्रह्मा च देवाश्च ब्राह्मणाश्चैव सत्तमाः ।
सन्ध्येति समुपासन्तः क्षेपयन्ति महाजलं ॥ १६४ ॥
ओंकारब्रह्मसंयुक्तं गायत्र्या चाभिमन्त्रितं ।
तेन दह्यन्ति ते दैत्या वज्रभूतेन वारिणा ॥ १६५ ॥
ततः पुनर्महातेजा महाद्युतिपराक्रमः ।
योजनानां सहस्राणि ऊर्द्धमुत्तिष्ठते शतं ॥ १६६ ॥
ततः प्रयाति भगवान् ब्राह्मणैः परिवारितः ।
वालखिल्यैश्च मुनिभिः कृतार्थैः समरीचिभिः ॥ १६७ ॥

काष्ठा निमेषा दश पञ्च चैव
त्रिंशच्च काष्ठा गणयेत् कलान्तं ।
त्रिंशत् कलाश्चैव भवेन्मुहूर्त-
स्तैस्त्रिंशता रात्र्यहनी समेते ॥ १६८ ॥

ह्रासवृद्धी त्वहर्भागैर्दिवसानां यथाक्रमं ।

सन्ध्या मुहूर्त्तमानन्तु ह्रासे वृद्धौ समा स्मृता ॥ १६९ ॥
लेखाप्रभृत्यथादित्ये त्रिमुहूर्त्तागते तु वै ।
प्रातस्तनः स्मृतः कालो भागस्त्वह्नः स पञ्चमः ॥ १७० ॥
तस्मात् प्रातस्तनात्कालात् त्रिमुहूर्त्तस्तु सङ्गवः ।
मध्याह्नस्त्रिमुहूर्त्तस्तु तस्मात्कालाच्च सङ्गवात् ॥ १७१ ॥
तस्मान्मध्यन्दिनात् कालादपराह्न इति स्मृतः ।
त्रय एव मुहूर्त्तास्तु तस्मात् कालाच्च मध्यमात् (१)॥ १७२ ॥
अपराह्णे व्यतीपाते कालः सायाह्न उच्यते ।
दशपञ्चमुहूर्त्ताहे मुहूर्त्तास्त्रय एव च ॥ १७३ ॥
दशपञ्चमुहूर्त्तं वै अहर्विषुवति स्मृतं ।
दशपञ्चमुहूर्त्ताहे रात्रिन्दिवमिति स्मृतं ॥ १७४ ॥
वर्द्धते ह्रसते चैव अयने दक्षिणोत्तरे ।
अहस्तु ग्रसते रात्रिं रात्रिस्तु ग्रसते त्वहः ॥ १७५ ॥
शरद्वसन्तयोर्मध्ये विषुवन्तद्विभाव्यते ।
अहोरात्रं कलाश्चैव सप्त सोमः समश्नुते ॥ १७६ ॥
तथा पञ्चदशाहानि पक्ष इत्यभिधीयते ।
द्वौ पक्षौ च भवेन्मासो द्वौ मासावर्कजावृतुः ।
ऋतुत्रयमयनं स्याद्द्वे अयने वर्षमुच्यते ॥ १७७ ॥
निमेषादिकृतः कालः काष्ठाया दश पञ्च च ।
कलायास्त्रिंशतः काष्ठा मात्राशीतिद्वयात्मिका ॥ १७८ ॥
शतञ्चैकोनकास्त्रिंशन्मात्रास्त्रिंशत् षडुत्तरा ।
द्विषष्टिभाक्त्रयोविंशन्मात्रायाश्च कला भवेत् ॥ १७९ ॥

---

१ पाठोऽयं पुनरुक्त एव प्रतिभाति ।

चत्वारिंशत् सहस्राणि शतान्यष्टौ च विद्युतिः ।
सप्ततिश्चापि तत्रैव नवतिं विद्धि निश्चये ॥ १८० ॥
चत्वार्य्येव शतान्याहुर्विद्युतौ वैधसंयुगे ।
चरांशो ह्येष विज्ञेयो नालिका चात्र कारणं ॥ १८१ ॥
संवत्सरादयः पञ्च चतुर्मानविकल्पिताः ।
निश्चयः सर्व्वकालस्य युग इत्यभिधीयते ॥ १८२ ॥
संवत्सरस्तु प्रथमो द्वितीयः परिवत्सरः ।
इद्वत्सरस्तृतीयस्तु चतुर्थश्चानुवत्सरः ।
पञ्चमो वत्सरस्तेषां कालस्तु परिसंज्ञितः ॥ १८३ ॥
विंशशतं (१) भवेत्पूर्णं पर्व्वणान्तु रवेर्युगं ।
एतान्यष्टादशस्त्रिंशदुदयो भास्करस्य च ॥ १८४ ॥
ऋतवस्त्रिंशतः सौरा अयनानि दशैव तु ।
पञ्चत्रिंशत् शतञ्चापि षष्टिर्मासाश्च भास्करः ॥ १८५ ॥
त्रिंशदेव त्वहोरात्रं स तु मासश्च भास्करः ।
एकषष्टिस्त्वहोरात्रा ऋतुरेको विभाव्यते ॥ १८६ ॥
अह्नान्तु त्राधिकाशीतिः शतञ्चाप्यधिकं भवेत् ।
मानन्तच्चित्रभानोस्तु विज्ञेयं भुवनस्य तु ॥ १८७ ॥
सौरसौम्यन्तु विज्ञेयं नक्षत्रं सावनन्तथा ।
नामान्येतानि चत्वारि यैः पुराणं विभाव्यते ॥ १८८ ॥
श्वेतस्योत्तरतश्चैव शृङ्गवान्नाम पर्व्वतः ।
त्रीणि तस्य तु शृङ्गाणि स्पृशन्तीव नभस्तलं ॥ १८९ ॥

---

१ त्रिंशच्छतमिति घ० ।

तेथापि शृङ्गवान्नाम सर्व्वतश्चैव विश्रुतः (१)।
एकमार्गश्च विस्तारो विष्कम्भश्चापि कीर्त्तितः॥ १९० ॥
तस्य वै सर्व्वतः शृङ्गं मध्यमन्तहिरण्मयं।
दक्षिणं राजतञ्चैव शृङ्गन्तु स्फटिकप्रभं ॥ १९१ ॥
सर्व्वरत्नमयञ्चैकं शृङ्गमुत्तरमुत्तमं ।
एवं कूटैस्त्रिभिः शैलैः शृङ्गवानिति विश्रुतः॥ १९२ ॥
यत्तद्विषुवतं शृङ्गन्तदर्कः प्रतिपद्यते।
शरद्वसन्तयोर्मध्ये मध्यमां गतिमास्थितः।
अहस्तुल्यामथो रात्रिं करोति तिमिरापहः॥ १९३ ॥
हरिताश्च हया दिव्यास्ते नियुक्ता महारथे।
अनुलिप्ता इवाभान्ति पद्मरक्तैर्गभस्तिभिः॥ १९४ ॥
मेषान्ते च तुलान्ते च भास्करोदयतः स्मृताः।
मुहूर्त्ता दश पञ्चैव अहोरात्रिश्च तावती॥ १९५ ॥
कृत्तिकानां यदा सूर्य्यः प्रथमांशगतो भवेत्।
विशाखानां तथा ज्ञेयश्चतुर्थांशे निशाकरः॥ १९६ ॥
विशाखायां यदा सूर्य्यश्चरतेंऽशं तृतीयकं ।
तदा चन्द्रं विजानीयात् कृत्तिकाशिरसि स्थितं॥१९७॥
विषुवन्तं तदा विद्यादेवमाहुर्महर्षयः।
सूर्य्येण विषुवं विद्यात्कालं सोमेन लक्षयेत्॥ १९८ ॥
समा रात्रिरहश्चैव यदा तद्विषुवद्भवेत्।
तदा दानानि देयानि पितृभ्यो विषुवत्यपि।
ब्राह्मणेभ्यो विशेषेण मुखमेतत्तु दैवतं॥ १९९ ॥

१ तेथापि शृङ्गैः स नगः शृङ्गवान्नाम विश्रुत इति ख०।

ऊनरात्राधिमासौ च कलाकाष्ठामुहूर्त्तकाः ।
पौर्णमासी तथा ज्ञेया अमावास्या तथैव च ।
सिनीवाली कुहूश्चैव राका चानुमतिस्तथा ॥ २०० ॥

तपस्तपस्यौ मधुमाधवौ च
शुक्रः शुचिश्चायनमुत्तरं स्यात् ।
नभो नभस्योऽथ इषुः सहोर्जः
सहःसहस्याविति दक्षिणं स्यात् ॥ २०१ ॥

संवत्सरास्ततो ज्ञेयाः पञ्चाब्दाः ब्रह्मणः सुताः (१) ।
तस्मात्तु ऋतवो ज्ञेया ऋतवो ह्यन्तराः स्मृताः ॥ २०२ ॥
तस्मादनुमुखा ज्ञेया अमावास्यास्य पर्व्वणः ।
तस्मात्तु विषुवं ज्ञेयं पितृदैवहितं सदा ॥ २०३ ॥
एवं ज्ञात्वा न मुह्येत दैवे पित्र्ये च मानवः ।
तस्मात् स्मृतं प्रजानां वै विषुवत्सर्व्वगं सदा ॥ २०४ ॥
आलोकान्तः स्मृतो लोको लोकान्तो लोक उच्यते ।
लोकपालाः स्थितास्तत्र लोकालोकस्य मध्यतः ॥ २०५ ॥
चत्वारस्ते महात्मानस्तिष्ठन्त्याभूतसंप्लवात् ।
सुधामा चैव वैराजः कर्द्दमः शङ्खपस्तथा ।
हिरण्यलोमा पर्ज्जन्यः केतुमान् जातनिश्चयः ॥ २०६ ॥
निर्द्वन्द्वा निरभीमाना निस्तन्द्रा निष्परिग्रहाः ।
लोकपालाः स्थिता ह्येते लोकालोके चतुर्द्दिशं ॥ २०७ ॥
उत्तरं यदगस्त्यस्य अजवीथ्याश्च दक्षिणं ।
पितृयानः स वै पन्था वैश्वानरपथाद्बहिः ॥ २०८ ॥

---

१ पञ्चाप्यब्दा ब्रह्मणः सुता इति क० ।

तत्रासते प्रजावन्तो मुनयो ह्यग्निहोत्रिणः ।
लोकस्य सन्तानकराः पितृयाने पथि स्थिताः ॥ २०९ ॥
भूतारम्भकृतं कर्म्म आशिषा ऋत्विगुच्यते ।
प्रारभन्ते लोककामास्तेषां पन्थाः सदक्षिणः ॥ २१० ॥
चलितन्ते पुनर्द्धर्म्मं स्थापयन्ति युगे युगे ।
सन्तत्या तपसा चैव मर्य्यादाभिः श्रुतेन च ॥ २११ ॥
जायमानास्तु पूर्व्वं वै पश्चिमानां गृहेषु च ।
पश्चिमाश्चैव जायन्ते पूर्व्वेषां निधनेष्वपि ।
एवमावर्त्तमानास्ते तिष्ठन्त्याभूतसंप्लवात् ॥ २१२ ॥
अष्टाशीतिसहस्राणि मुनीनां गृहमेधिनां ।
सवितुर्दक्षिणं मार्गं श्रिता ह्याचन्द्रतारकं ।
क्रियावतां प्रसंख्येया ये श्मशानानि भेजिरे ॥ २१३ ॥
लोकसंव्यवहारेण भूतारम्भकृतेन च ।
इच्छाद्वेषप्रकृत्या च मैथुनोपगमेन च ॥ २१४ ॥
तथा कायकृतेनेह सेवनाद्विषयस्य च ।
एतैस्तैः कारणैः सिद्धाः श्मशानानि हि भेजिरे ।
प्रजैषिणस्ते मुनयो द्वापरेष्विह जज्ञिरे ॥ २१५ ॥
नागवीथ्युत्तरे यच्च सप्तर्षिभ्यश्च दक्षिणं ।
उत्तरः सवितुः पन्था देवयानस्तु स स्मृतः ॥ २१६ ॥
यत्र ते वासिनः सिद्धा विमला ब्रह्मचारिणः ।
सततन्ते जुगुप्सन्ते तस्मान्मृत्युर्ज्जितस्तु तैः ॥ २१७ ॥
अष्टाशीतिसहस्राणि तेषामप्यूर्द्ध्वरेतसां ।
उदक्पन्थानमर्य्यम्णः श्रिता ह्याभूतसंप्लवात् ॥ २१८ ॥

इत्येतैः कारणैः शुद्धैस्तेऽमृतत्वं हि भेजिरे ।
आभूतसंप्लवस्थानाममृतत्वं विभाव्यते ॥ २१९ ॥
त्रैलोक्यस्थितिकालोऽयमपुनर्मार्गगामिनः ।
ब्रह्महत्याश्वमेधाभ्यां पुण्यपापकृतोऽपरं ।
आभूतसंप्लवान्ते तु क्षीयन्ते ह्यूर्द्धरेतसः ॥ २२० ॥
ऊर्द्धोत्तरमृषिभ्यस्तु ध्रुवो यत्रास्ति वै स्मृतं ।
एतद्विष्णुपदं दिव्यं तृतीयं व्योम्नि भास्वरं ॥ २२१ ॥
तत्र गत्वा न शोचन्ति तद्विष्णोः परमं पदं ।
धर्म्मध्रुवाद्यास्तिष्ठन्ति यत्र ते लोकसाधकाः ॥ २२२ ॥

इति श्रीमहापुराणे वायुप्रोक्ते ज्योतिःप्रचारो
नाम पञ्चाशोऽध्यायः ।

---

# अथैकपञ्चाशोऽध्यायः ।

———ooo@ooo———

ज्योतिःप्रचारः ।

सूत उवाच । स्वायम्भुवे निसर्गे तु व्याख्यातान्युत्तराणि तु ।
भविष्याणि च सर्व्वाणि तेषां वक्ष्याम्यनुक्रमं ॥ १ ॥
एतच्छ्रुत्वा तु मुनयः पप्रच्छुर्लोमहर्षणं ।
सूर्य्याचन्द्रमसोश्चारं ग्रहाणाञ्चैव सर्व्वशः ॥ २ ॥
ऋषय ऊचुः । भ्रमन्ते कथमेतानि ज्योतींषि दिवि मण्डलं ।
तिर्य्यग्व्यूहेन सर्व्वाणि तथैवासङ्करेण च ।
कश्च भ्रामयते तानि भ्रमन्ति यदि वा स्वयं ॥ ३ ॥
एतद्वेदितुमिच्छामस्तन्नो निगद सत्तम ।
भूतसम्मोहनञ्चैतच्छ्रोतुमिच्छा प्रवर्त्तते ॥ ४ ॥
सूत उवाच । भूतसम्मोहनं ह्येतद्ब्रुवतो मे निबोधत ।
प्रत्यक्षमपि दृश्यं यत्तत् संमोहयते प्रजाः ॥ ५ ॥
योऽसौ चतुर्दिशं पुच्छे शिशुमारे व्यवस्थितः ।
उत्तानपादपुत्रोऽसौ मेधीभूतो ध्रुवो दिवि ॥ ६ ॥
स हि भ्रमन् भ्रामयते चन्द्रादित्यौ ग्रहैः सह ।
भ्रमन्तमनुगच्छन्ति नक्षत्राणि च चक्रवत् ॥ ७ ॥
ध्रुवस्य मनसा चासौ सर्पते भगणः स्वयं (१) ।

१ ज्योतिषां गण इति ख०, छ० च ।

सूर्य्याचन्द्रमसौ तारा नक्षत्राणि ग्रहैः सह ॥ ८ ॥
वातानीकमयैर्बन्धैर्ध्रुवे बद्धानि तानि वै ।
तेषां योगश्च भेदाश्च कालचारस्तथैव च ॥ ९ ॥
अस्तोदयौ तथोत्पाता अयने दक्षिणोत्तरे ।
विषुवद्ग्रहवर्णाश्च ध्रुवात्सर्व्वं प्रवर्त्तते ॥ १० ॥
वर्षा घर्मो हिमं रात्रिः सन्ध्या चैव दिनं तथा ।
शुभाशुभं प्रजानाञ्च ध्रुवात्सर्व्वं प्रवर्त्तते ॥ ११ ॥
ध्रुवेणाधिकृतांश्चैव सूर्य्योऽपाहृत्य तिष्ठति ।
तदेष दीप्तकिरणः स कालाग्निर्द्दिवाकरः ॥ १२ ॥
परिवर्त्तक्रमाद्विप्रा भाभिरालोकयन् दिशः ।
सूर्य्यः किरणजालेन वायुयुक्तेन सर्व्वशः ।
जगतो जलमादत्ते कृत्स्नस्य द्विजसत्तमाः (१)॥ १३ ॥
आदित्यपीतं सूर्य्याग्नेः सोमं संक्रमते जलं ।
नाड़ीभिर्वायुयुक्ताभिर्लोकाधानं प्रवर्त्तते ॥ १४ ॥
यत् सोमात् स्रवते सूर्य्यस्तदभ्रेष्ववतिष्ठते ।
मेघा वायुनिघातेन विसृजन्ति जलम्भुवि ॥ १५ ॥
एवमुत्क्षिप्यते चैव पतते च पुनर्ज्जलं (२) ।
नानाप्रकारमुदकन्तदेव परिवर्त्तते ॥ १६ ॥
सन्धारणार्थं भूतानां मायैषा विश्वनिर्म्मिता ।
अनया मायया व्याप्तं त्रैलोक्यं सचराचरं ॥ १७ ॥
विश्वेशो लोककृद्देवः सहस्रांशुः प्रजापतिः ।
धाता कृत्स्नस्य लोकस्य प्रभुर्विष्णुर्द्दिवाकरः ॥ १८ ॥

१ कृत्स्नस्यास्य द्विजोत्तमा इति ग० । २ पतते चासकृज्जलं इति ठ० ।

सर्व्वलौकिकमम्भो वै यत्सोमान्नभसः स्रुतं (१) ।
सोमाधारं (२) जगत्सर्व्वमेतत्तथ्यं प्रकीर्त्तितं ॥ १९ ॥
सूर्य्यादुष्णं निस्रवते सोमाच्छीतं प्रवर्त्तते ।
शीतोष्णवीर्य्यौ द्वावेतौ युक्तौ धारयतो जगत् ॥ २० ॥
सोमाधारा नदी गङ्गा पविचा विमलोदका ।
सोमपुत्रपुरोगाश्च महानद्यो द्विजोत्तमाः ॥ २१ ॥
सर्व्वभूतशरीरेषु आपो ह्यनुगताश्च याः ।
तेषु सन्दह्यमानेषु जङ्गमस्थावरेषु च ।
धूमभूतास्तु ता आपो निष्क्रामन्तीह सर्व्वशः ॥ २२ ॥
तेन चाभ्राणि जायन्ते स्थानमभ्रामसां स्मृतं ।
आर्कन्तेजो हि भूतेभ्यो ह्यादत्ते रश्मिभिर्जलं ॥ २३ ॥
समुद्राद्वायुसंयोगाद्वहन्त्यापो गभस्तयः ।
यतस्त्वृतुवशात् काले परिवर्त्तो दिवाकरः ।
यच्छत्यपो हि मेघेभ्यः शुक्लाः शुक्लगभस्तिभिः ॥ २४ ॥
अभ्रस्थाः प्रपतन्त्यापो वायुना समुदीरिताः ।
सर्व्वभूतहितार्थाय वायुभिश्च समन्ततः ॥ २५ ॥
ततो वर्षति षण्मासान् सर्व्वभूतविवृद्धये ।
वायव्यं स्तनितञ्चैव वैद्युतञ्चाग्निसम्भवं ॥ २६ ॥
मेहनाच्च मिहेर्द्धातोर्मेघत्वं व्यञ्जयन्ति च ।
न भ्रश्यन्ति यतस्त्वापस्तदभ्रं कवयो विदुः ॥ २७ ॥
मेघानां पुनरुत्पत्तिस्त्रिविधा योनिरुच्यते ।
आग्नेया ब्रह्मजाश्चैव पक्षजाश्च पृथग्विधाः ।

१ च्युतं इति ठ० ।    २ साधारणमिति ख० ।

त्रिधा घनाः समाख्यातास्तेषां वक्ष्यामि सम्भवं ॥ २८ ॥
आग्नेयास्त्वर्णजाः प्रोक्तास्तेषां तस्मात् प्रवर्त्तनं ।
शीतदुर्द्दिनवाता ये स्वगुणास्ते व्यवस्थिताः ॥ २९ ॥
महिषाश्च वराहाश्च मत्तमातङ्गगामिनः ।
भूत्वा धरणिमभ्येत्य विचरन्ति रमन्ति च ॥ ३० ॥
जीमूता नाम ते मेघा एतेभ्यो जीवसम्भवाः ।
विद्युद्गुणविहीनाश्च जलधाराविलम्बिनः ॥ ३१ ॥
मूका घना महाकाया प्रवाहस्य वशानुगाः ।
क्रोशमात्राच्च वर्षन्ति क्रोशार्द्धादपि वा पुनः ॥ ३२ ॥
पर्व्वताग्रनितम्बेषु वर्षन्ति च रमन्ति च ।
वलाकागर्भदाश्चैव वलाकागर्भधारिणः ॥ ३३ ॥
ब्रह्मजा नाम ते मेघा ब्रह्मनिश्वाससम्भवाः ।
ते हि विद्युद्गुणोपेताः स्तनयन्ति स्वनप्रियाः ॥ ३४ ॥
तेषां शब्दप्रणादेन भूमिः स्वाङ्गरुहोद्गमा ।
राज्ञो राज्ञाभिषिक्तेव पुनर्यौवनमश्नुते ।
तेष्वियं प्रीतिमासक्ता भूतानां जीवितोद्भवा ॥ ३५ ॥
जीमूता नाम ते मेघा तेभ्यो जीवस्य सम्भवाः ।
द्वितीयं प्रवहं वायुं मेघास्ते तु समाश्रिताः ॥ ३६ ॥
एते योजनमात्राच्च सार्द्धार्द्धान्निष्कृतादपि ।
वृष्टिसर्गस्तथा तेषां धारासाराः प्रकीर्त्तिताः ।
पुष्करावर्त्तका नाम ये मेघाः पक्षसम्भवाः ॥ ३७ ॥
शक्रेण पक्षाश्छिन्ना ये पर्व्वतानां महौजसां ।
कामगानां प्रवृद्धानां भूतानां शिवमिच्छतां ॥ ३८ ॥

पुष्करा नाम ते मेघा बृहन्तस्तोयमत्सराः ।
पुष्करावर्त्तकास्तेन कारणेनेह शब्दिताः ॥ ३९ ॥
नानारूपधराश्चैव महाघोरतराश्च ते ।
कल्पान्तवृष्टेः स्रष्टारः सम्वर्त्ताग्नेर्नियामकाः ॥ ४० ॥
वर्षन्त्येते युगान्तेषु तृतीयास्ते प्रकीर्त्तिताः ।
अनेकरूपसंस्थानाः पूरयन्तो महीतलं ।
वायुं परं वहन्तः स्युराश्रिताः कल्पसाधकाः ॥ ४१ ॥
यान्यस्याण्डकपालस्य प्राकृतस्याभवंस्तदा ।
तस्माद्ब्रह्मा समुत्पन्नश्चतुर्व्वक्त्रः स्वयम्भुवः ।
तान्येवाण्डकपालस्य सर्व्वे मेघाः प्रकीर्त्तिताः ॥ ४२ ॥
तेषामाप्यायनं धूमः सर्व्वेषामविशेषतः ।
तेषां श्रेष्ठस्तु पर्ज्जन्यश्चत्वारश्चैव दिग्गजाः ॥ ४३ ॥
गजानां पर्व्वतानाञ्च मेघानां भोगिभिः सह ।
कुलमेकं पृथग्भूतं योनिरेका जलं स्मृतं ॥ ४४ ॥
पर्जन्यो दिग्गजाश्चैव हेमन्ते शीतसम्भवाः ।
तुषारवृष्टिं वर्षन्ति सर्व्वसस्यविवृद्धये ॥ ४५ ॥
श्रेष्ठः परिवहो नाम तेषां वायुरपाश्रयः ।
योऽसौ विभर्त्ति भगवान् गङ्गामाकाशगोचरां ।
दिव्याममृतजलां पुण्यां त्रिधा स्वर्गपथि स्थितां ॥ ४६ ॥
तस्याविष्यन्दजन्तोयं दिग्गजाः पृथुभिः करैः ।
शीकरं संप्रमुञ्चन्ति नीहार इति स स्मृतः ॥ ४७ ॥
दक्षिणेन गिरिर्योऽसौ हेमकूट इति स्मृतः ।
उदग्हिमवतः शैलादुत्तरस्य च दक्षिणे ।

पुण्ड्रं नाम समाख्यातं नगरं तत्र वै स्मृतं॥ ४८ ॥
तस्मिन्निपतितं वर्षं यत्तु चारसमुद्भवं ।
ततस्तद्दावहो वायुर्हिमशैलात् समुद्वहन् ।
आनयत्यात्मयोगेन सिच्यमानो महागिरिं ॥ ४९ ॥
हिमवन्तमतिक्रम्य वृष्टिशेषं ततः परं ।
इहाभ्येति ततः पश्चादपरान्तविवृद्धये॥ ५० ॥
मेघावाप्यायनश्चैव सर्व्वमेतत् प्रकीर्त्तितं ।
सूर्य्य एव तु वृष्टीनां स्रष्टा समुपदिश्यते ॥ ५१ ॥
ध्रुवेणावेष्टितः सूर्य्यस्ताभ्यां वृष्टिः प्रवर्त्तते ।
ध्रुवेणावेष्टितो वायुर्वृष्टिं संहरते पुनः ॥ ५२ ॥
ग्रह।निःसृत्य सूर्य्यात्तु कृत्स्ने नक्षत्रमण्डले ।
चारस्यान्ते विशत्यर्कं ध्रुवेण परिवेष्टितं ॥ ५३ ॥
अतः सूर्य्यरथस्याथ सन्निवेशं निबोधत ।
संस्थितेनैकचक्रेण पञ्चारेण त्रिनाभिना ॥ ५४ ॥
हिरण्मयेन भगवान् पर्व्वणा तु महौजसा ।
नष्टवर्त्माश्वकारेण षट्प्रकारैकनेमिना ।
चक्रेण भास्वता सूर्य्यः स्यन्दनेन प्रसर्पति॥ ५५ ॥
दशयोजनसाहस्रो विस्तारायामतः स्मृतः ।
द्विगुणोऽस्य रथोपस्थादीषादण्डप्रमाणतः ॥ ५६ ॥
स तस्य ब्रह्मणा सृष्टो रथो ह्यर्थवशेन तु ।
असङ्गः काञ्चनो दिव्यो युक्तः परमगैर्हयैः ॥ ५७ ॥
छन्दोभिर्वाजिरूपैस्तु यतः शुक्रस्ततः स्थितः ।
वरुणस्यन्दनस्येह लक्षणैः सदृशस्तु सः ।

तेनाऽसौ सर्पति व्योम्नि भास्वता तु दिवाकरः ॥ ५८ ॥
अथेमानि तु सूर्य्यस्य प्रत्यङ्गानि रथस्य तु ।
संवत्सरस्यावयवैः कल्पितानि यथाक्रमं ॥ ५९ ॥
अहस्तु नाभिः सूर्य्यस्य एकचक्रः स वै स्मृतः ।
अराः पञ्चर्त्तवस्तस्य नेमिः षडृतवः स्मृताः ॥ ६० ॥
रथनीडः स्मृतो ह्यब्दस्त्वयने कूवरावुभौ ।
मुहूर्त्ता बन्धुरास्तस्य शम्या तस्य कलाः स्मृता ॥ ६१ ॥
तस्य काष्ठाः स्मृता घोणा ईषादण्डः क्षणास्तु वै ।
निमेषाश्चानुकर्षोऽस्य ईषा चास्य लवाः स्मृताः ॥ ६२ ॥
रात्रिर्वरूथो धर्म्मोऽस्य ध्वज ऊर्द्ध्वसमुच्छ्रितः ।
युगाक्षकोटी ते तस्य अर्थकामावुभौ स्मृतौ ॥ ६३ ॥
सप्ताश्वरूपाश्छन्दांसि वहन्ते वामतो धुरं ।
गायत्री चैव त्रिष्टुप् च अनुष्टुप् जगती तथा ॥ ६४ ॥
पङ्क्तिश्च बृहती चैव उष्णिक् चैव तु सप्तमं ।
अक्षे चक्रं निबद्धन्तु ध्रुवे त्वक्षः समर्पितः ॥ ६५ ॥
सहचक्रो भ्रमत्यक्षः सहाक्षो भ्रमति ध्रुवः ।
अक्षः सहैव चक्रेण भ्रमतेऽसौ ध्रुवेरितः ॥ ६६ ॥
एवमर्थवशात्तस्य सन्निवेशो रथस्य तु ।
तथा संयोगभागेन संसिद्धो भास्वरो रथः ॥ ६७ ॥
तेनाऽसौ तरणिर्देवस्तरसा सर्पते दिवि ।
युगाक्षकोटिसम्बद्धौ रश्मी द्वौ स्यन्दनस्य हि ॥ ६८ ॥
ध्रुवेण भ्रमतो रश्मी विचक्रयुगयोस्तु वै ।
भ्रमतो मण्डलानि स्युः खेचरस्य रथस्य तु ॥ ६९ ॥

युगाक्षकोटी ते तस्य दक्षिणे स्यन्दनस्य तु ।
ध्रुवेण संगृहीते वै द्विचक्रश्वेतरज्जुवत् ॥ ७० ॥
भ्रमन्तमनुगच्छेतां ध्रुवं रश्मी तु तावुभौ ।
युगाक्षकोटी ते तस्य वातोर्मी स्यन्दनस्य तु ॥ ७१ ॥
कीलासक्तो यथा रज्जुर्भ्रमते सर्व्वतो दिशं ।
ह्रमतस्तस्य रश्मी तौ मण्डलेषूत्तरायणे ॥ ७२ ॥
वर्द्धेते दक्षिणे चैव भ्रमतो मण्डलानि तु ।
ध्रुवेण संगृहीतौ तु रश्मी वै नयतो रविं ॥ ७३ ॥
आकृष्येते यदा तौ वै ध्रुवेण समधिष्ठितौ ।
तदा सोऽभ्यन्तरं सूर्य्यो भ्रमते मण्डलानि तु ॥ ७४ ॥
अशीतिमण्डलशतं काष्ठयोरुभयोश्चरन् ।
ध्रुवेण मुच्यमानाभ्यां रश्मिभ्यां पुनरेव तु ॥ ७५ ॥
तथैव वाह्यतः सूर्य्यो भ्रमते मण्डलानि तु ।
उद्वेष्टयन् स वेगेन मण्डलानि तु गच्छति ॥ ७६ ॥

इति श्रीमहापुराणे वायुप्रोक्ते ज्योतिःप्रचारो नामैकपञ्चाशोऽध्यायः ।

---

## अथ द्विपञ्चाशोऽध्यायः ।

———000———

### ज्योतिःप्रचारः ।

सूत उवाच । स रथोऽधिष्ठितो देवैरादित्यैर्ऋषिभिस्तथा ।
गन्धर्वैरप्सरोभिश्च ग्रामणीसर्पराक्षसैः ॥ १ ॥
एते वसन्ति वै सूर्य्ये द्वौ द्वौ मासौ क्रमेण तु ।
धाताऽर्य्यमा पुलस्त्यश्च पुलहश्च प्रजापतिः ॥ २ ॥
उरगो वासुकिश्चैव सङ्कीर्णारश्च तावुभौ ।
तुम्बुरुर्नारदश्चैव गन्धर्व्वौ गायतां वरौ ॥ ३ ॥
क्रतुस्थल्यप्सराश्चैव तथा वै पुञ्जिकस्थलौ ।
ग्रामणी रथकृच्छ्रश्च तपोर्य्यश्चैव तावुभौ ॥ ४ ॥
रक्षो हेतिः प्रहेतिश्च यातुधानावुदाहृतौ ।
मधुमाधवयोरेष गणो वसति भास्करे ॥ ५ ॥
वासन्तौ ग्रैष्मिकौ मासौ मित्रश्च वरुणश्च ह ।
ऋषिरत्रिर्वशिष्ठश्च तक्षको रम्भ एव च ॥ ६ ॥
मेनका सहजन्या च गन्धर्व्वौ च हहा हुहूः ।
रथस्वनश्च ग्रामण्यो रथचित्रश्च तावुभौ ॥ ७ ॥
पौरुषेयो वधश्चैव यातुधानावुदाहृतौ ।
एते वसन्ति वै सूर्य्ये मासयोः शुचिशुक्रयोः ॥ ८ ॥
ततः सूर्य्ये पुनस्त्वन्या निवसन्तीह देवताः ।

इन्द्रश्चैव विश्वावसुश्च अङ्गिरा भृगुरेव च ॥ ९ ॥
एलापर्णस्तथा सर्पः शङ्खपालश्च तावुभौ ।
विश्वावसूग्रसेनौ च प्रातश्चैवारुणश्च ह ॥ १० ॥
प्रम्लोचेति च विख्याता निम्लोचेति च ते उभे ।
यातुधानस्तथा सर्पो व्याघ्रः श्वेतश्च तावुभौ ।
नभोनभसयोरेष गणो वसति भास्करे ॥ ११ ॥
शरद्दतौ पुनः शुभ्रा वसन्ति मुनिदेवताः ।
पर्जन्यश्चाथ पूषा च भरद्वाजः सगौतमः ॥ १२ ॥
विश्वावसुश्च गन्धर्वास्तथैव सुरभिश्च यः ।
विश्वाची च घृताची च उभे ते शुभलक्षणे ॥ १३ ॥
नाग ऐरावतश्चैव विश्रुतश्च धनञ्जयः ।
सेनजिच्च सुषेणश्च सेनानीर्ग्रामणीश्च तौ ॥ १४ ॥
आपो वातश्च तावेतौ यातुधानावुभौ स्मृतौ ।
वसन्त्येते तु वै सूर्य्ये मासयोश्च इषोर्जयोः ॥ १५ ॥
हैमन्तिकौ तु द्वौ मासौ वसन्ति तु दिवाकरे ।
अंशो भगश्च द्वावेतौ कश्यपश्च क्रतुश्च ह ॥ १६ ॥
भुजङ्गश्च महापद्मः सर्पः कर्कोटकस्तथा ।
चित्रसेनश्च गन्धर्व्व ऊर्णायुश्चैव तावुभौ ॥ १७ ॥
उर्व्वशी विप्रचित्तिश्च तथैवाप्सरसौ शुभे ।
तार्क्ष्यश्चारिष्टनेमिश्च सेनानीर्ग्रामणीश्च तौ ॥ १८ ॥
विद्युत्स्फूर्ज्जश्च तावुग्रौ यातुधानावुदाहृतौ ।
सहे चैव सहस्ये च वसन्त्येते दिवाकरे ॥ १९ ॥
ततः शैशिरयोश्चापि मासयोर्निवसन्ति वै ।

त्वष्टा विष्णुर्जमदग्निर्विश्वामित्रस्तथैव च ॥ २० ॥
काद्रवेयौ तथा नागौ कम्बलाश्वतरावुभौ ।
गन्धर्व्वौ धृतराष्ट्रश्च सूर्य्यवर्च्चास्तथैव च ॥ २१ ॥
तिलोत्तमाप्सराश्चैव देवी रम्भा मनोरमा ।
ऋतजित्सत्यजिच्चैव ग्रामण्यौ लोकविश्रुतौ ॥ २२ ॥
ब्रह्मोपेतस्तथा रक्षो यज्ञोपेतश्च स स्मृतः ।
एते देवा वसन्त्यर्के द्वौ मासौ तु क्रमेण तु ॥ २३ ॥
स्थानाभिमानिनो ह्येते गणा द्वादश सप्तकाः ।
सूर्य्यमाप्याययन्त्येते तेजसा तेज उत्तमं ॥ २४ ॥
ग्रथितैस्तैर्व्वचोभिस्तु स्तुवन्ति मुनयो रविं ।
गन्धर्व्वाप्सरसश्चैव गीतनृत्यैरुपासते ॥ २५ ॥
ग्रामणीयक्षभूतास्तु कुर्व्वते भीमसंग्रहं (१) ।
सर्पा वहन्ति सूर्य्यञ्च यातुधानानुयान्ति च (२) ।
वालखिल्या नयन्त्यस्तं परिचार्य्योदयाद्रविं ॥ २६ ॥
एतेषामेव देवानां यथावीर्य्यं यथातपः ।
यथायोगं यथासत्यं यथाधर्म्मं यथाबलं ॥ २७ ॥
यथा तपत्यसौ सूर्य्यस्तेषां सिद्धस्तु तेजसा ।
इत्येते वै वसन्तीह द्वौ द्वौ मासौ दिवाकरे ॥ २८ ॥
ऋषयो देवगन्धर्व्वाः पन्नगाप्सरसाङ्गणाः ।
ग्रामण्यश्च तथा यक्षा यातुधानाश्च भूयशः ॥ २९ ॥
एते तपन्ति वर्षन्ति भान्ति वान्ति सृजन्ति च ।
भूतानामशुभङ्कर्म्म व्यपोहन्तीह कीर्त्तिताः ॥ ३० ॥

१ भीत्तणमपहमितिख॰ । २ यातुधानास्तुवन्ति चेति ख॰

मानवानां शुभं ह्येते हरन्ति दुरितात्मनां।
दुरितं हि प्रचाराणां व्यपोहन्ति क्वचित् क्वचित्॥ २१॥
विमानेऽवस्थिता दिव्ये कामगा वातरंहसः।
एते सहैव सूर्य्येण भ्रमन्ति दिवसानुगाः॥ २२॥
वर्षन्तश्च तपन्तश्च ह्लादयन्तश्च वै प्रजाः।
गोपायन्ति तु भूतानि सर्व्वानीहामनुक्षयात्॥ २३॥
स्थानाभिमानिनामेतत् स्थानं मन्वन्तरेषु वै।
अतीतानागतानां वै वर्त्तन्ते साम्प्रतन्तु ये॥ २४॥
एवं वसन्ति वै सूर्य्ये सप्तकास्ते चतुर्द्दश।
चतुर्द्दशसु सर्गेषु गणा मन्वन्तरेषु च॥ २५॥
ग्रीष्मे हिमे च वर्षासु मुञ्चमानो
घर्मं हिमञ्च वर्षञ्च दिनं निशाञ्च।
कालेन गच्छत्यृतुवशात् परिवृत्तरश्मि-
र्देवान् पितॄंश्च मनुजांश्च तर्पयन् वै॥ २६॥
प्रीणाति देवानमृतेन सूर्य्यः
सोमं सुषुम्नेन विवर्द्धयित्वा।
शुक्ले तु पूर्णं दिवसक्रमेण
तं कृष्णपक्षे विबुधाः पिबन्ति॥ २७॥
पीतन्तु सोमं द्विकलावशिष्टं
कृष्णक्षये रश्मिभिस्तं क्षरन्तं।
सुधामृतं तत्पितरः पिबन्ति
देवाश्च सौम्याश्च तथैव कव्यं॥ २८॥
सूर्य्येण गोभिस्तु समुद्धृताभि-

रद्भिः पुनश्चैव समुद्भृताभिः ।
हृष्टातिहृष्टाभिरथौषधीभि-
र्मर्त्याः क्षुधन्त्वन्नपानैर्जयन्ति ॥ ३९ ॥
अमृतेन तृप्तिस्त्वर्द्धमासं सुराणां (१)
मासार्द्धतृप्तिः स्वधया पितॄणां ।
अन्नेन शश्वत्तु दधाति मर्त्यान्
सूर्य्यः स्वयं तच्च विभर्त्ति गोभिः ॥ ४० ॥
अयं हरिस्तैर्हरिभिस्तुरङ्गमै-
रयन् हि चापो हरतीति रश्मिभिः ।
विसर्गकाले विसृजंश्च ताः पुनः
विभर्त्ति शश्वत् सविता चराचरं ॥ ४१ ॥
हरिर्हरिद्भिर्ह्रियते तुरङ्गमैः
पिवत्यथापो हरिभिः सहस्रधा ।
ताः प्रमुञ्चन्त्यपि तास्त्वसौ हरिः
स मुह्यमानो हरिभिस्तुरङ्गमैः ॥ ४२ ॥
इत्येष एकचक्रेण सूर्य्यस्तूर्णं रथेन तु ।
भद्रैस्तैरक्षतैरश्वैः सर्पतेऽसौ दिवि क्षये ॥ ४३ ॥
अहोरात्राद्रथेनाऽसौ एकचक्रेण तु भ्रमन् ।
सप्तद्वीपसमुद्रान्तं सप्तभिः सप्तभिर्हयैः ॥ ४४ ॥
छन्दोभिरश्वरूपैस्तैर्यतश्चक्रन्ततः स्थितैः ।
कामरूपैः सकृद्युक्तैरमितैस्तैर्मनोजवैः ॥ ४५ ॥
हरितैरव्ययैः पिङ्गैरीश्वरैर्ब्रह्मवादिभिः ।

१ एतत्पाठ आदर्शानुमतो मुद्रितः परन्तु न समीचीनः ।

अशीतिमण्डलशतं भ्रमत्यब्देन ते ध्रुवाः ॥ ४६ ॥
बाह्यमभ्यन्तरञ्चैव मण्डलं दिवसक्रमात् ।
कल्पादौ सम्प्रयुक्तास्ते वहन्त्याभूतसंप्लवात् ।
आवृता वालखिल्यैस्ते भ्रमन्ते रात्र्यहानि तु ॥ ४७ ॥
ग्रथितैर्व्वचोभिरग्र्यैः स्तूयमानो महर्षिभिः ।
सेव्यते गीतनृत्यैश्च गन्धर्व्वैरप्सरोगणैः ।
पतङ्गः पतगैरश्वैर्भ्रममाणो दिवस्पतिः ॥ ४८ ॥
वीथ्याश्रयाणि चरति नक्षत्राणि तथा शशी ।
ह्रासवृद्धी तथैवास्य रश्मीनां सूर्य्यवत् स्मृते ॥ ४९ ॥
त्रिचक्रोभयपार्श्वस्थो विज्ञेयः शशिनो रथः ।
अपाङ्गर्भसमुत्पन्नो रथः साश्वः ससारथिः ।
शतारैश्च त्रिभिश्चक्रैर्युतः शुक्लैर्हयोत्तमैः ॥ ५० ॥
दशभिस्तु कृशैर्दिव्यैरसङ्गैस्तैर्मनोजवैः ।
सकृद्युक्ते रथे तस्मिन् वहन्ते चायुगक्षयात् ॥ ५१ ॥
संगृहीते रथे तस्मिन् श्वेतश्चक्षुःश्रवास्तु वै ।
अश्वास्तमेकवर्णास्ते वहन्ते शङ्खवर्चसं ॥ ५२ ॥
ययुश्च त्रिमनाश्चैव वृषो राजी बलो हयः ।
अश्वो वामस्तुरण्यश्च हंसो व्योमी मृगस्तथा ॥ ५३ ॥
इत्येते नामभिः सर्व्वे दश चन्द्रमसो हयाः ।
एते चन्द्रमसन्देवं वहन्ति दिवसक्षयात् ॥ ५४ ॥
देवैः परिवृतः सोम्यः पितृभिश्चैव गच्छति ।
सोमस्य शुक्लपक्षादौ भास्करे पुरतः स्थिते ।
आपूर्य्यते पुरस्तान्तः सततं दिवसक्रमात् ॥ ५५ ॥

देवैः पीतं क्षये सोममाप्याययति नित्यदा।
पीतं पञ्चदशाहन्तु रश्मिनैकेन भास्करः॥ ५६॥
आपूरयन् सुषुम्नेन भागं भागमहःक्रमात्।
सुषुम्नाप्यायमानस्य शुक्ला वर्द्धन्ति वै कलाः॥ ५७॥
तस्माद्ध्रसन्ति वै कृष्णे शुक्ला आप्याययन्ति च।
इत्येवं सूर्य्यवीर्य्येण चन्द्रस्याप्यायिता तनुः॥ ५८॥
पौर्णमास्यां स दृश्येत शुक्लः सम्पूर्णमण्डलः।
एवमाप्यायितः सोमः शुक्लपक्षे दिनक्रमात्॥ ५९॥
ततो द्वितीयाप्रभृति बहुलस्य चतुर्द्दशी।
अपां सारमयस्येन्दोरसमाभात्मकस्य च।
पिबन्त्यम्बुमयं देवा मधु सौम्यं सुधामयं॥ ६०॥
सम्भृतश्चार्द्धमासेन अमृतं सूर्य्यतेजसा।
भक्षार्थममृतं सौम्यं पौर्णमास्यामुपासते॥ ६१॥
एकरात्रं सुरैः सर्व्वैः पितृभिश्च महर्षिभिः।
सोमस्य कृष्णपक्षादौ भास्कराभिमुखस्य च॥ ६२॥
प्रक्षीयते परस्यान्तः पीयमानाः कलाः क्रमात्।
क्षीयन्ते तस्मात् कृष्णे याः शुक्ले ह्याप्याययन्ति ताः॥ ६३॥
एवं दिनक्रमातीते विबुधास्तु निशाकरं।
पीत्वाऽर्द्धमासङ्गच्छन्ति अमावास्यां सुरोत्तमाः।
पितरश्चोपतिष्ठन्ति अमावास्यां निशाकरं॥ ६४॥
ततः पञ्चदशे भागे किञ्चिच्छिष्टे कलात्मके।
अपराह्ने पितृगणैर्जघन्यः पर्य्युपास्यते॥ ६५॥
पिबन्ति द्विकलाकालं शिष्टा तस्य तु या कला।

निःसृतं तदमावास्याङ्गभस्तिभ्यः सुधामृतं ।
तां सुधां मासतृप्तौ तु पीत्वा गच्छन्ति तेऽमृतं ॥ ६६ ॥
सौम्या बर्हिषदश्चैव अग्निष्वात्तास्तथैव च ।
काव्याश्चैव (१) तु ये प्रोक्ताः पितरः सर्व्व एव ते ॥ ६७ ॥
संवत्सरास्तु वै काव्याः (२) पञ्चाब्दा ये द्विजैः स्मृताः ।
सौम्यास्तु ऋतवो ज्ञेया मासा बर्हिषदः स्मृताः ।
अग्निष्वात्तार्त्तवश्चैव पितृसर्गो हि वै द्विजाः ॥ ६८ ॥
पितृभिः पीयमानस्य पञ्चदश्यां कला तु वै ।
यावन्न क्षीयते तस्य भागः पञ्चदशस्तु सः ॥ ६९ ॥
अमावस्यान्तदा तस्य अन्तमापूर्य्यते परं ।
वृद्धिक्षयौ वै पक्षादौ षोडश्यां शशिनः स्मृतौ ॥ ७० ॥
एवं सूर्य्यनिमित्तैषा क्षयवृद्धिर्निशाकरे ।
ताराग्रहाणां वक्ष्यामि स्वर्भानोश्च रथं पुनः ॥ ७१ ॥
तोयतेजोमयः शुभ्रः सोमपुत्रस्य वै रथः ।
युक्तो हयैः पिशङ्गैस्तु अष्टाभिर्वातरंहसैः (३) ॥ ७२ ॥
सवरूथः सानुकर्षः सूतो दिव्यो रथो महान् ।
सोपासङ्गपताकस्तु सध्वजो मेघसन्निभः (४) ॥ ७३ ॥
भार्गवस्य रथः श्रीमान् तेजसा सूर्य्यसन्निभः ।
पृथिवीसम्भवैर्युक्तो नानावर्णैर्हयोत्तमैः ॥ ७४ ॥
श्वेतः पिशङ्गः सारङ्गो नीलः पीतो विलोहितः ।
कृष्णश्च हरितश्चैव पृषतः पृष्णिरेव च ।

---

१ काव्याश्चेति घ० ।　　२ काव्या इति घ० ।
३ अष्टाभिरनिलरंहसैरिति ङ० ।　　४ मेघसन्निभ इति ख० ।

दशभिस्तैर्महाभागैरकृशैर्वातवेगिभिः ॥ ७५ ॥
अष्टाश्वः काञ्चनः श्रीमान् सौमस्यापि रथोऽभवत् ।
असङ्गैर्लोहितैरश्वैः सर्व्वगैरग्निसम्भवैः ।
सर्पतेऽसौ कुमारो वै ऋजुवक्रानुचक्रगः ॥ ७६ ॥
ततस्त्वाङ्गिरसो विद्वान् देवाचार्य्यो वृहस्पतिः ।
गोणैरश्वैः काञ्चनेन स्यन्दनेन प्रसर्पति ॥ ७७ ॥
युक्तस्तु वाजिभिर्दिव्यैरष्टाभिर्वातसम्मितैः ।
नक्षत्रेऽब्दन्निवसति सर्वेगस्तेन गच्छति ॥ ७८ ॥
ततः शनैश्चरोऽप्यश्वैः शवलैर्व्योमसम्भवैः ।
कार्ष्णायसं समारुह्य स्यन्दनं याति वै शनैः ॥ ७९ ॥
स्वर्भानोस्तु तथैवाश्वाः कृष्णा ह्यष्टौ मनोजवाः ।
रथन्तमोमयन्तस्य सकृद्युक्ता वहन्त्युत ॥ ८० ॥
आदित्यान्निःसृतो राहुः सोमं गच्छति पर्व्वसु ।
आदित्यमेति सोमाच्च पुनः सौरेषु पर्वसु ॥ ८१ ॥
अथ केतुरथस्याश्वा अष्टाष्टौ वातरंहसः ।
पलालधूमसङ्काशाः शवला रासभारुणाः ॥ ८२ ॥
एते वाहा ग्रहाणां वै मया प्रोक्ताः (१) रथैः सह ।
सर्व्वे ध्रुवनिबद्धास्ते प्रबद्धा वातरश्मिभिः ॥ ८३ ॥
एते वै भ्राम्यमाणास्तु यथायोगं भ्रमन्ति वै ।
वायव्याभिरदृश्याभिः प्रबद्धा वातरश्मिभिः ॥ ८४ ॥
परिभ्रमन्ति तद्बद्धाश्चन्द्रसूर्य्यग्रहा दिवि ।
भ्रमन्तमनुगच्छन्ति ध्रुवन्ते ज्योतिषां गणाः ॥ ८५ ॥

१ क्रान्ता इति पा०।

यथा नद्युदके नौस्तु सलिलेन सहोह्यते ।
तथा देवालया ह्येते उह्यन्ते वातरश्मिभिः ।
तस्मात्सर्व्वेण दृश्यन्ते व्योम्नि देवगणास्तु ते ॥ ८६ ॥
यावत्यश्चैव तारास्तु तावन्तो वातरश्मयः ।
सर्व्वा ध्रुवनिबद्धास्ता भ्रमन्त्यो भ्रामयन्ति तं ॥ ८७ ॥
तैलपीड़ाकरं चक्रं भ्रमद्भ्रामयते यथा ।
तथा भ्रमन्ति ज्योतींषि वातबद्धानि सर्व्वशः ॥ ८८ ॥
अलातचक्रवद्यान्ति वातचक्रेरितानि तु ।
यस्माज्ज्योतींषि वहते प्रवहस्तेन स स्मृतः ॥ ८९ ॥
एवं ध्रुवनिबद्धोऽसौ सर्पते ज्योतिषां गणः ।
सैष तारामयो ज्ञेयः शिशुमारो ध्रुवो दिवि ।
यदह्ना कुरुते पापं दृष्ट्वा तं निशि मुच्यते ॥ ९० ॥
यावत्यश्चैव तारास्ताः शिशुमाराश्रिता दिवि ।
तावन्त्येव तु वर्षाणि जीवन्त्यभ्यधिकानि(१)तु ॥ ९१ ॥
शाश्वतः शिशुमारोऽसौ विज्ञेयः प्रविभागशः ।
उत्तानपादस्तस्याथ विज्ञेयो ह्युत्तरो हनुः ॥ ९२ ॥
यज्ञोऽधरस्तु विज्ञेयो धर्म्मो मूर्द्धानमाश्रितः ।
हृदि नारायणः साध्यः अश्विनौ पूर्व्वपादयोः ॥ ९३ ॥
वरुणश्चार्य्यमा चैव पश्चिमे तस्य सक्थिनि ।
शिश्नः संवत्सरस्तस्य मित्रोऽपाने समाश्रितः ॥ ९४ ॥
पुच्छेऽग्निश्च महेन्द्रश्च मरीचिः कश्यपो ध्रुवः ।
तारकाः शिशुमारस्य नास्तमेति चतुष्टयं ॥ ९५ ॥

---

१ ते जीवन्त्यधिकानीति क० । जीवन्तोऽपि तु सर्वदेति ख० ।

नक्षत्रचन्द्रसूर्य्याश्च ग्रहास्तारागणैः सह ।
उन्मुखाभिमुखाः सर्वे चक्रीभूताश्रिता दिवि ॥ ९६ ॥
ध्रुवेणाधिष्ठिताः सर्वे ध्रुवमेव प्रदक्षिणं ।
प्रयान्तीह वरं श्रेष्ठमेधीभूतं ध्रुवन्दिवि ॥ ९७ ॥
ध्रुवाग्निकश्यपानान्तु वरश्चासौ ध्रुवः स्मृतः ।
एक एव भ्रमत्येष मेरुपर्वतमूर्द्धनि ॥ ९८ ॥
ज्योतिषाञ्चक्रमेतद्धि सदा कर्षत्यवाङ्मुखः ।
मेरुमालोकयत्येष प्रयातीह प्रदक्षिणं ॥ ९९ ॥

इति श्रीमहापुराणे वायुप्रोक्ते ध्रुवचर्या नाम
द्विपञ्चाशोऽध्यायः ।

# अथ त्रिपञ्चाशोऽध्यायः।

———ooo———

## ज्योतिःसन्निवेशः।

शांशपायन उवाच। एतत् श्रुत्वा तु मुनयः पुनस्ते संशयान्विताः।
पप्रच्छुरुत्तरं भूयस्तदा ते लोमहर्षणं॥ १॥
ऋषय ऊचुः। यदेतदुक्तम्भवता गृहाण्येतानि विश्रुतं।
कथं देवगृहाणि स्युः कथं ज्योतींषि वर्णय॥ २॥
एतत्सर्व्वं समाचक्ष्व ज्योतिषाञ्चैव निश्चयं।
श्रुत्वा तु वचनं तेषां तदा सूतः समाहितः॥ ३॥
अस्मिन्नर्थे महाप्राज्ञैर्यदुक्तं ज्ञानबुद्धिभिः।
तद्वोऽहं सम्प्रवक्ष्यामि सूर्य्याचन्द्रमसोर्भवं।
यथा देवगृहाणीह सूर्य्याचन्द्रमसोर्गृहं॥ ४॥
अतःपरं त्रिविधाग्नेर्वक्ष्ये ह्यस्य समुद्भवं।
दिव्यस्य भौतिकस्याग्नेरथाग्नेः पार्थिवस्य च॥ ५॥
व्युष्टायास्तु रजन्यां वै ब्रह्मणोऽव्यक्तजन्मनः।
अव्याकृतमिदन्त्वासीन्नैशेन तमसावृतं॥ ६॥
चतुर्भूतावशिष्टेऽस्मिन् पार्थिवः सोऽग्निरुच्यते।
यश्चासौ तपते सूर्य्ये शुचिरग्निस्तु स स्मृतः॥ ७॥
वैद्युताग्न्यस्तु विज्ञेयस्तेषां वक्ष्येऽथ लक्षणं।

वैद्युतो जाठरः सौरो ह्यपाङ्गर्भास्त्रयोऽग्नयः।
तस्मादपः पिबन्सूर्य्यो गोभिर्दीप्यत्यसौ दिवि॥ ८॥
वैद्युतेन समाविष्टो वार्य्यो नाद्भिः प्रशाम्यति।
मानवानाञ्च कुक्षिस्थो नाद्भिः शाम्यति पावकः॥ ९॥
अर्च्चिष्मान् परमः सोऽग्निः प्रभवो जाठरः स्मृतः।
यश्चायं मण्डली शुक्लो निरूष्मा संप्रकाशते॥ १०॥
प्रभा हि सौरी पादेन ह्यस्तं याति दिवाकरे।
अग्निमाविशते रात्रौ तस्माद्दूरात् प्रकाशते॥ ११॥
उद्यन्तश्च पुनः सूर्य्यमौष्ण्यमाग्नेयमाविशत्।
पादेन पार्थिवस्याग्नेस्तस्मादग्निस्तपत्यसौ॥ १२॥
प्रकाशश्च तथौष्ण्यञ्च सौराग्नेये तु तेजसी।
परस्परानुप्रवेशादाप्यायेते दिवानिशं॥ १३॥
उत्तरे चैव भूम्यर्द्धे तस्मादस्मिंश्च दक्षिणे।
उत्तिष्ठति पुनः सूर्य्ये रात्रिराविशते त्वपः।
तस्मात्ताम्रा भवन्त्यापो दिवारात्रिप्रवेशनात्॥ १४॥
अस्तं याति पुनः सूर्य्ये अहर्वै प्रविशत्यपः।
तस्मान्नक्तं पुनः शुक्ला आपो विशन्ति (१)भास्करे॥ १५॥
एतेन क्रमयोगेन भूम्यर्द्धे दक्षिणोत्तरे।
उदयास्तमये नित्यमहोरात्रं विशत्यपः॥ १६॥
यश्चासौ तपते सूर्य्यं पिबन्नम्भो गभस्तिभिः।
पार्थिवो हि विमिश्रोऽसौ दिव्यः शुचिरिति स्मृतः॥ १७॥
सहस्रपादः सोऽग्निस्तु वृत्तः कुम्भनिभः शुचिः।

१ पाठोऽयं न समीचीनः।

आदत्ते तत् रश्मीनां (१) सहस्रेण समन्ततः ॥ १८ ॥
नादेयीश्चैव सामुद्रीः कौप्याश्चैव सधान्वनीः ।
स्थावरा जङ्गमाश्चैव यश्च सूर्य्यो हिरण्मयः ।
तस्य रश्मिसहस्रन्तु वर्षशीतोष्णनिस्रवं ॥ १९ ॥
तासाञ्चतुःशता नाड्यो वर्षन्ति चित्रमूर्त्तयः ।
वन्दनाश्चैव वन्द्याश्च ऋतना नूतनास्तथा ।
अमृता नामतः सर्व्वा रश्मयो वृष्टिसर्जनाः ॥ २० ॥
हिमवाहाश्च ताभ्योऽन्या रश्मयस्त्रिशताः पुनः ।
दृश्या मेध्याश्च वाह्याश्च ह्लादिन्यो हिमसर्जनाः ॥ २१ ॥
चन्द्रास्ता नामतः सर्व्वाः पीताभास्तु गभस्तयः ।
शुक्लाश्च ककुभश्चैव गावो विश्वभृतस्तथा ॥ २२ ॥
शुक्लास्ता नामतः सर्व्वास्त्रिशता घर्म्मसर्जनाः ।
समं बिभर्ति ताभिस्तु मनुष्यपितृदेवताः ॥ २३ ॥
मनुष्यानौषधेनेह स्वधया च पितॄनपि ।
अमृतेन सुरान् सर्व्वांस्त्रींस्त्रिभिस्तर्पयत्यसौ ॥ २४ ॥
वसन्ते चैव ग्रीष्मे च स तैः सुतपते त्रिभिः ।
वर्षास्वथो शरदि च चतुर्भिः सम्प्रकर्षति ॥ २५ ॥
हेमन्ते शिशिरे चैव हिमं स सृजते त्रिभिः ।
ओषधीषु बलन्धत्ते स्वधया च पितॄनपि ।
सूर्य्योऽमरत्वममृतत्रयन्त्रिषु नियच्छति ॥ २६ ॥
एवं रश्मिसहस्रन्तत् सौरं लोकार्थसाधकं ।
भिद्यते ऋतुमासाद्य जलशीतोष्णनिस्रवं ॥ २७ ॥

नाडीनामिति घ०, ठ० च ।

इत्येतन्मण्डलं शुक्लं भास्वरं सूर्य्यसंज्ञितं ।
नक्षत्रग्रहसोमानां प्रतिष्ठायोनिरेव च ।
ऋक्षचन्द्रग्रहाः सर्वे विज्ञेयाः सूर्य्यसम्भवाः ॥ २८ ॥
नक्षत्राधिपतिः सोमो ग्रहराजो दिवाकरः ।
शेषाः पञ्चग्रहा ज्ञेयाः ईश्वराः कामरूपिणः ॥ २९ ॥
पठ्यते चाग्निरादित्य उदकश्चन्द्रमाः स्मृतः ।
शेषाणां प्रकृतिं सम्यग्वर्ण्यमानां निबोधत ॥ ३० ॥
सुरसेनापतिः स्कन्दः पठ्यतेऽङ्गारको ग्रहः ।
नारायणं बुधं प्राहुर्देवं ज्ञानविदो विदुः (१) ॥ ३१ ॥
रुद्रो वैवस्वतः साक्षाद्यमो लोके प्रभुः स्वयं ।
महाग्रहो द्विजश्रेष्ठो मन्दगामी शनैश्चरः ॥ ३२ ॥
देवासुरगुरू द्वौ तु भानुमन्तौ महाग्रहौ ।
प्रजापतिसुतावेतावुभौ शुक्रबृहस्पती ।
दैत्यो महेन्द्रश्च तयोराधिपत्ये विनिर्मितौ ॥ ३३ ॥
आदित्यमूलमखिलं त्रिलोकं नात्र संशयः ।
भवत्यस्य जगत् कृत्स्नं सदेवासुरमानुषं ॥ ३४ ॥
रुद्रेन्द्रोपेन्द्रचन्द्राणां विप्रेन्द्राग्निदिवौकसां ।
द्युतिर्द्युतिमतां कृत्स्ना यत्तेजः सार्वलौकिकं ॥ ३५ ॥
सर्व्वात्मा सर्वलोकेशो मूलं परमदैवतं ।
ततः संजायते सर्व्वं तत्र चैव प्रलीयते ॥ ३६ ॥
भावाभावौ हि लोकानामादित्यान्निःसृतौ पुरा ।
जगज्ज्ञेयो ग्रहो विप्रा दीप्तिमान् सुग्रहो रविः ॥ ३७ ॥

१ ज्ञानविदो बुधा इति ख०, ट० च ।

यत्र गच्छन्ति निधनं जायन्ते च पुनः पुनः ।
क्षणा मुहूर्त्ता दिवसा निशाः पक्षाश्च कृत्स्नशः ।
मासाः संवत्सराश्चैव ऋतवोऽब्दयुगानि च ॥ ३८ ॥
तदादित्यादृते तेषां (१) कालसङ्ख्या न विद्यते ।
कालादृते न नियमो न दीक्षा नाह्निकक्रमः ॥ ३९ ॥
ऋतूनामविभागश्च पुष्पमूलफलं कुतः ।
कुतः शस्याभिनिष्पत्तिर्तृणौषधिगणादि वा ॥ ४० ॥
अभावो व्यवहाराणां देवानां दिवि चेह च ।
जगत्प्रतापनमृते भास्करं वारितस्करं ॥ ४१ ॥
स एव कालश्चाग्निश्च द्वादशात्मा प्रजापतिः ।
तपत्येष द्विजश्रेष्ठास्त्रैलोक्यं सचराचरं ॥ ४२ ॥
स एष तेजसां राशिः समस्तः सार्वलौकिकः ।
उत्तमं मार्गमास्थाय वायोर्भाभिरिदञ्जगत् ।
पार्श्वमूर्द्धमधश्चैव तापयत्येष सर्वशः (२) ॥ ४३ ॥
रवेरश्मिसहस्रं यत् प्राङ्मया समुदाहृतं ।
तेषां श्रेष्ठाः पुनः सप्त रश्मयो ग्रहयोनयः ॥ ४४ ॥
सुषुम्नो हरिकेशश्च विश्वकर्म्मा तथैव च ।
विश्वश्रवाः पुनश्चान्यः सम्पद्वसुरतः परं ।
अर्व्वावसुः (३) पुनश्चान्यो मया चात्र प्रकीर्त्तितः ॥ ४५ ॥
सुषुम्नः सूर्य्यरश्मिस्तु क्षीणं शशिनमेधयन् ।
तिर्य्यगूर्द्धप्रभावोऽसौ सुषुम्नः परिकीर्त्त्यते ॥ ४६ ॥

---

१ येषामिति ङ० ।　　२ तापयत्येष वै जगदिति ख० ।
३ सर्भावसुरिति ख० ।

हरिकेशः पुरस्ताद्या ऋक्षयोनिः प्रकीर्त्तते ।
दक्षिणे विश्वकर्म्मा तु रश्मिर्वर्द्धयते बुधं ॥ ४७ ॥
विश्वश्रवास्तु यः पश्चात् शुक्रयोनिः स्मृता बुधैः ।
सम्पद्वसुश्च यो रश्मिः सा योनिर्लोहितस्य च ॥ ४८ ॥
षष्ठस्त्वर्व्वावसू रश्मिर्योनिस्तु स बृहस्पतेः ।
शनैश्चरं पुनश्चापि रश्मिराप्यायते स्वराट् ॥ ४९ ॥
एवं सूर्य्यप्रभावेण ग्रहनक्षत्रतारकाः ।
वर्द्धन्ते विदिताः सर्व्वा विश्वञ्चेदं पुनर्जगत् ।
न क्षीयन्ते पुनस्तानि तस्मान्नक्षत्रता स्मृता ॥ ५० ॥
क्षेत्राण्येतानि वै पूर्व्वमापतन्ति गभस्तिभिः ।
तेषां क्षेत्राण्यथादत्ते सूर्य्यो नक्षत्रताङ्गतः ॥ ५१ ॥
तीर्णानां सुकृतेनेह सुकृतान्ते ग्रहाश्रयात् ।
ताराणां तारका ह्येताः शुक्लत्वाच्चैव तारकाः ॥ ५२ ॥
दिव्यानां पार्थिवानाञ्च नैशानाञ्चैव सर्वशः ।
आदानान्नित्यमादित्यस्तमसां तेजसां महान् ॥ ५३ ॥
सुवति स्पन्दनार्थे च धातुरेष विभाव्यते ।
सवनात्तेजसोऽपाञ्च तेनासौ सविता मतः ॥ ५४ ॥
बह्वर्थश्चन्द्र इत्येष ह्लादने धातुरिष्यते ।
शुक्लत्वे चामृतत्वे च शीतत्वे च विभाव्यते ॥ ५५ ॥
सूर्य्याचन्द्रमसोर्दिव्ये मण्डले भास्वरे खगे ।
ज्वलत्तेजोमये शुक्ले वृत्तकुम्भनिभे शुभे ॥ ५६ ॥
घनतोयात्मकं तत्र मण्डलं शशिनः स्मृतं ।
घनतेजोमयं शुक्लं मण्डलं भास्करस्य तु ॥ ५७ ॥

विशन्ति सर्व्वदेवास्तु स्थानान्येतानि सर्व्वशः ।
मन्वन्तरेषु सर्व्वेषु ऋक्षसूर्य्यग्रहाश्रयाः ॥ ५८ ॥
तानि देवगृहाण्येव तदाख्यास्ते भवन्ति च ।
सौरं सूर्य्यो विशत्स्थानं सौम्यं सोमस्तथैव च ॥ ५९ ॥
शौक्रं शुक्रो विशत्स्थानं षोड़शार्च्चिः प्रतापवान् ।
बृहद्बृहस्पतिश्चैव लौहितश्चैव लोहितः ।
शानैश्वरं तथा स्थानं देवश्चैव शनैश्वरः ॥ ६० ॥
आदित्यरश्मिसंयोगात् संप्रकाशात्मिकाः स्मृताः ।
नवयोजनसाहस्रो विष्कम्भः सवितुः स्मृतः ॥ ६१ ॥
त्रिगुणस्तस्य विस्तारो मण्डलस्य प्रमाणतः ।
द्विगुणः सूर्य्यविस्ताराद् विस्तारः शशिनः स्मृतः ॥ ६२ ॥
तुल्यस्तयोस्तु स्वर्भानुर्भूत्वाधस्तात् प्रसर्पति ।
उद्धृत्य पार्थिवच्छायां निर्म्मितो मण्डलाकृतिः ॥ ६३ ॥
स्वर्भानोस्तु बृहत् स्थानन्निर्म्मितं यत्तमोमयं ।
आदित्यात्तच्च निष्क्रम्य सोमङ्गच्छति पर्व्वसु ॥ ६४ ॥
आदित्यमेति सोमाच्च पुनः सौमेषु पर्व्वसु ।
स्वर्भासा नुदते यस्मात्ततः स्वर्भानुरुच्यते ॥ ६५ ॥
चन्द्रस्य षोड़शो भागो भार्गवस्य विधीयते ।
विष्कम्भान्मण्डलाच्चैव योजनाग्रात् प्रमाणतः ॥ ६६ ॥
भार्गवात्पादहीनस्तु विज्ञेयो वै बृहस्पतिः ।
बृहस्पतेः पादहीनौ कुजसौरावुभौ स्मृतौ ।
विस्तारान्मण्डलाच्चैव पादहीनस्तयोर्बुधः ॥ ६७ ॥
ताराणक्षत्ररूपाणि वपुष्मन्तीह यानि वै ।

बुधेन समतुल्यानि विस्तारान्मण्डलादथ ॥ ६८ ॥
प्रायशश्चन्द्रयोगानि विद्यादृक्षाणि तत्त्ववित् ।
तारानक्षत्ररूपाणि हीनानि तु परस्परं ॥ ६६ ॥
शतानि पञ्च चत्वारि त्रीणि द्वे चैव योजने ।
पूर्व्वापरनिकृष्टानि तारकामण्डलानि तु ।
योजनान्यर्द्धमात्राणि तेभ्यो ह्रस्वं न विद्यते ॥ ७० ॥
उपरिष्टात्त्रयस्तेषां ग्रहा ये दूरसर्पिणः ।
सौरोऽङ्गिराश्च वक्रश्च (१) ज्ञेया मन्दविचारिणः ॥ ७१ ॥
तेभ्योऽधस्तात्तु चत्वारः पुनरन्ये महाग्रहाः ।
सूर्य्यः सोमो बुधश्चैव भार्गवश्चैव शीघ्रगाः ॥ ७२ ॥
यावन्त्यस्तारकाः कोटास्तावदृक्षाणि सर्व्वशः ।
वीथीनां नियमाच्चैवमृक्षमार्गौ व्यवस्थितः ॥ ७३ ॥
गतिस्तास्त्वेव सूर्य्यस्य नीचोच्चत्वेऽयनक्रमात् ।
उत्तरायणमार्गस्थो यदा पर्व्वसु चन्द्रमाः ।
बौधं बौधोऽथ स्वर्भानुः स्वर्भानोः स्थानमाश्रितः ॥ ७४ ॥
नक्षत्राणि च सर्व्वाणि नक्षत्राणि विशन्त्युत ।
गृहाण्येतानि सर्व्वाणि ज्योतींषि सुकृतात्मनां ॥ ७५ ॥
कल्पादौ संप्रवृत्तानि निर्म्मितानि स्वयम्भुवा ।
स्थानान्येतानि तिष्ठन्ति यावदाभूतसंप्लवं ॥ ७६ ॥
मन्वन्तरेषु सर्व्वेषु देवतायतनानि वै ।
अभिमानिनोऽवतिष्ठन्ति यावदाभूतसंप्लवं ॥ ७७ ॥
अतीतैस्तु सहातीता भाव्या भाव्यैः सुरासुरैः ।

---

१ भौमोऽङ्गिरा अर्कजश्चेति ख० ।

वर्त्तन्ते वर्त्तमानैश्च स्थानानि स्वैः सुरैः सह ॥ ७८ ॥
अस्मिन् मन्वन्तरे चैव ग्रहा वैमानिकाः स्मृताः ।
विवस्वानदितेः पुत्त्रः सूर्य्यो वैवस्वतेऽन्तरे ॥ ७९ ॥
त्विषिमान् धर्म्मपुत्त्रस्तु सोमदेवो वसुः स्मृतः ।
शुक्रो देवस्तु विज्ञेयो भार्गवोऽसुरराजकः ॥ ८० ॥
बृहत्तेजाः स्मृतो देवो देवाचार्य्योऽङ्गिरःसुतः ।
बुधो मनोहरश्चैव त्विषिपुत्त्रस्तु (१) सः स्मृतः ॥ ८१ ॥
अग्निर्विकल्यात् संजज्ञे युवाऽसौ लोहिताधिपः ।
नक्षत्रऋक्षगामिन्यो दाक्षायण्यः स्मृतास्तु ताः ॥ ८२ ॥
स्वर्भानुः सिंहिकापुत्त्रो भूतसन्तापनोऽसुरः ।
सोमर्क्षग्रहसूर्य्येषु कीर्त्तितास्त्वभिमानिनः ॥ ८३ ॥
स्थानान्येतान्यथोक्तानि स्थानिन्यश्चैव देवताः ।
शुक्लमग्निमयं स्थानं सहस्रांशोर्विवस्वतः ॥ ८४ ॥
सहस्रांशोस्त्विषः स्थानमम्मयं शुक्लमेव च ।
अथ श्यामं मनोज्ञस्य पञ्चरश्मेर्गृहं स्मृतं ॥ ८५ ॥
शुक्रस्याप्यमयं स्थानं सद्म षोड़शरश्मिवत् ।
नवरश्मेस्तु यूनो हि लोहितस्थानमम्मयं । ८६ ॥
हरिदाभ्यं बृहस्चापि द्वादशांशोर्बृहस्पतेः ।
अष्टरश्मेर्गृहं प्रोक्तं कृष्णं बुधस्य अम्मयं ॥ ८७ ॥
स्वर्भानोस्तामसं स्थानं भूतसन्तापनालयं ।
विज्ञेयास्तारकाः सर्व्वास्त्वम्मयास्त्वेकरश्मयः ॥ ८८ ॥
आश्रयाः पुण्यकीर्त्तीनां सुशुक्लाश्चैव वर्णतः ।

१ त्विषिपुत्त्रस्त्विति ख० ।

घनतोयात्मिका ज्ञेयाः कल्पादौ वेदनिर्म्मिताः ॥ ८८ ॥
उच्चत्वाद्दृश्यते शीघ्रमभिव्यक्तैर्गभस्तिभिः ।
तथा दक्षिणमार्गस्थो नीचैर्वीथीसमाश्रितः ॥ ९० ॥
भूमिलेखावृतः सूर्य्यः पूर्णामावास्ययोस्तथा ।
न दृश्यते यथाकालं शीघ्रतोऽस्तमुपैति च ॥ ९१ ॥
तस्मादुत्तरमार्गस्थो ह्यमावास्यां निशाकरः ।
दृश्यते दक्षिणे मार्गे नियमाद् दृश्यते न च ॥ ९२ ॥
ज्योतिषां गतियोगेन सूर्य्याचन्द्रमसावुभौ ।
समानकालास्तमयौ विषुवत्सु समोदयौ ॥ ९३ ॥
उत्तरासु च वीथीषु व्यन्तरास्तमयोदयौ ।
पौर्णमावास्ययोर्ज्ञेयौ ज्योतिश्चक्रानुवर्त्तिनौ ॥ ९४ ॥
दक्षिणायनमार्गस्थो यदा भवति रश्मिमान् ।
तदा सर्व्वग्रहाणां स सूर्य्योऽधस्तात् प्रसर्पति ॥ ९५ ॥
विस्तीर्णं मण्डलं कृत्वा तस्योर्द्ध्वं चरते शशी ।
नक्षत्रमण्डलं कृत्स्नं सोमादूर्द्ध्वं प्रसर्पति ॥ ९६ ॥
नक्षत्रेभ्यो बुधश्चोर्द्ध्वं बुधादूर्द्ध्वं बृहस्पतिः ।
तस्माच्छनैश्चरश्चोर्द्ध्वस्तस्मात्सप्तर्षिमण्डलं ।
ऋषीणाञ्चैव सप्तानां ध्रुव ऊर्द्ध्वं व्यवस्थितः ॥ ९७ ॥
द्विगुणेषु सहस्रेषु योजनानां शतेषु च ।
ताराग्रहान्तराणि स्युरुपरिष्टाद्यथाक्रमं ॥ ९८ ॥
ग्रहाश्च चन्द्रसूर्य्यौ तु दिवि दिव्येन तेजसा ।
नित्यमृक्षेषु युज्यन्ते गच्छन्ति नियमक्रमात् ॥ ९९ ॥
ग्रहनक्षत्रसूर्य्यास्तु नीचोच्चमृदवस्थिताः ।

समागमे च भेदे च पश्यन्ति युगपत् प्रजाः ॥ १०० ॥
परस्परस्थिता ह्येते युज्यन्ते च परस्परं ।
असङ्करेण विज्ञेयस्तेषां योगस्तु वै बुधैः ॥ १०१ ॥
इत्येष सन्निवेशो वः पृथिव्यां ज्योतिषस्य च ।
द्वीपानामुदधीनाञ्च पर्व्वतानां तथैव च ॥ १०२ ॥
वर्षाणाञ्च नदीनाञ्च ये षु तेषु वसन्ति वै ।
एते चैव ग्रहाः पूर्व्वं नक्षत्रेषु समुत्थिताः ॥ १०३ ॥
विवस्वानदितेः पुत्रः सूर्य्यो वै चक्षुषेऽन्तरे ।
विशाखासु समुत्पन्नो ग्रहाणां प्रथमो ग्रहः ॥ १०४ ॥
त्विषिमान् धर्म्मपुत्रस्तु सोमो विश्वावसुस्तथा ।
शीतरश्मिः समुत्पन्नः कृत्तिकासु निशाकरः ॥ १०५ ॥
षोड़शार्च्चिर्भृगोः पुत्रः शुक्रः सूर्य्यादनन्तरं ।
ताराग्रहाणां प्रवरः (१) तिष्यक्षेत्रे समुत्थितः (२) ॥ १०६ ॥
ग्रहश्चाङ्गिरसः पुत्रो द्वादशार्च्चिर्बृहस्पतिः ।
फाल्गुनीषु समुत्पन्नः सर्व्वासु च जगद्गुरुः ॥ १०७ ॥
नवार्च्चिर्लोहिताङ्गस्तु प्रजापतिसुतो ग्रहः ।
आषाढ़ास्विह पूर्व्वासु समुत्पन्न इति श्रुतिः ॥ १०८ ॥
रेवतीष्वेव सप्तार्च्चिस्तथा सौरशनैश्चरः ।
रोहिनीषु समुत्पन्नौ ग्रहौ चन्द्रार्कमर्द्दनौ ॥ १०९ ॥
एते ताराग्रहाश्चैव बोद्धव्या भार्गवादयः ।
जन्मनक्षत्रपीड़ासु यान्ति वैगुण्यतां यतः ।
स्पृशन्ते तेन दोषेण ततस्ता ग्रहभक्तिषु ॥ ११० ॥

१ परम इति ख० ।　　२ पुष्यक्षेत्रे समुद्भव इति ख० ।

सर्वग्रहाणामेतेषामादिरादित्य उच्यते।
ताराग्रहाणां शुक्रस्तु केतूनाञ्चैव धूमवान् ॥ १११ ॥
ध्रुवः कालो ग्रहाणान्तु विभक्तानाञ्चतुर्द्दिशं।
नक्षत्राणां श्रविष्ठा स्यादयनानां तथोत्तरं ॥ ११२ ॥
वर्षाणाञ्चापि पञ्चानामाद्यः संवत्सरः स्मृतः।
ऋतूनां शिशिरश्चापि मासानां माघ एव च ॥ ११३ ॥
पक्षाणां शुक्लपक्षस्तु तिथीनां प्रतिपत्तथा।
अहोरात्रविभागानामहश्चापि प्रकीर्तितं ॥ ११४ ॥
मुहूर्त्तानां तथैवादिर्मुहूर्त्तो रुद्रदैवतः।
अक्षणोश्चापि दिमेषादिः कालः कालविदो मतः ॥ ११५ ॥
श्रवनान्तं श्रविष्ठादि युगं स्यात् पञ्चवार्षिकं।
भानोर्गतिविशेषेण चक्रवत् परिवर्त्तते ॥ ११६ ॥
दिवाकरः स्मृतस्तस्मात् कालस्तं विद्धि चेश्वरं।
चतुर्विधानां भूतानां प्रवर्त्तकनिवर्त्तकः ॥ ११७ ॥
इत्येष ज्योतिषामेव सन्निवेशोऽर्थनिश्चयात्।
लोकसंव्यवहारार्थमीश्वरेण विनिर्म्मितः ॥ ११८ ॥
उत्पन्नः श्रवणेनासौ (१) संक्षिप्तश्च ध्रुवे तथा।
सर्व्वतोऽन्तेषु विस्तीर्णो वृत्ताकार इतिस्थितिः ॥ ११९ ॥
बुद्धिपूर्व्वम्भगवता कल्पादौ संप्रकीर्तितः।
साश्रयः सोऽभिमानी च सर्वस्य ज्योतिषात्मकः।
विश्वरूपः प्रधानस्य परिणामोऽयमद्भुतः ॥ १२० ॥
नैव शक्यं प्रसंख्यातुं याथातथ्येन केनचित्।

१ पाठोऽयं न समीचीनः।

गतागतं मनुष्येषु ज्योतिषां मांसचक्षुषा ॥ १२१ ॥
आगमादनुमानाच्च प्रत्यक्षादुपपत्तितः ।
परीक्ष्य निपुणं भक्त्या श्रद्धातव्यं विपश्चिता ॥ १२२ ॥
चक्षुः शास्त्रं जलं लेख्यं गणितं बुद्धिसत्तमाः ।
पञ्चैते हेतवो ज्ञेया: ज्योतिर्गणविचिन्तने ॥ १२३ ॥

इति श्रीमहापुराणे वायुप्रोक्ते ज्योतिःसन्निवेशो नाम
त्रिपञ्चाशोऽध्यायः ।

---

# अथ चतुःपञ्चाशोऽध्यायः।

———ooo———

## नीलकण्ठस्तवः।

ऋषय ऊचुः। कस्मिन् देशे महापुण्यमेतदाख्यानमुत्तमं।
वृत्तं ब्रह्मपुरोगाणां कस्मिन् काले महाद्युते।
एतदाख्याहि नः सम्यग् यथा वृत्तं तपोधन॥ १॥
सूत उवाच। यथा श्रुतं मया पूर्व्वं वायुना जगदायुना (१)।
कथ्यमानं द्विजश्रेष्ठाः सत्रे वर्षसहस्रके॥ २॥
नीलता येन कण्ठस्य देवदेवस्य शूलिनः।
तदहं कीर्त्तयिष्यामि शृणुध्वं शंसितव्रताः॥ ३॥
उत्तरे शैलराजस्य सरांसि सरितो ह्रदः।
पुण्योद्यानेषु तीर्थेषु देवतायतनेषु च।
गिरिशृङ्गेषु तुङ्गेषु गह्वरोपवनेषु च॥ ४॥
देवभक्ता महात्मानो मुनयः शंसितव्रताः।
स्तुवन्ति च महादेवं यत्र यत्र यथाविधि॥ ५॥
ऋग्यजुःसामवेदैश्च नृत्यगीतार्च्चनादिभिः।
ओंकारेण नमस्कारैरर्च्चयन्ति सदा शिवं॥ ६॥
प्रवृत्ते ज्योतिषां चक्रे मध्यव्यापे दिवाकरे।
दैवता नियतात्मानः सर्व्वे तिष्ठन्ति तां कथां।

---

१ पाठोऽयं आदर्शसम्मतो मुद्रितः परन्तु जगदायुषा इत्ययं पाठः समीचीनः।

अथ नियमप्रवृत्ताश्च प्राणशेषव्यवस्थिताः ॥ ७ ॥
नमस्ते नीलकण्ठाय इत्युवाच सदागतिः ।
तच्छ्रुत्वा भावितात्मानो मुनयः शंसितव्रताः ।
वालखिल्येतिविख्याताः पतङ्गसहचारिणः ॥ ८ ॥
अष्टाशीतिसहस्राणि मुनीनामूर्द्धरेतसां ।
तस्मात् पृच्छन्ति वै वायुं वायुपर्णाम्बुभोजनाः ॥ ९ ॥
ऋषय ऊचुः । नीलकण्ठेतियत् प्रोक्तं त्वया पवनसत्तम।
एतद्गुह्यं पवित्राणां पुण्यं पुण्यकृतां वराः ॥ १० ॥
तद्वयं श्रोतुमिच्छामस्त्वत्प्रसादात् प्रभञ्जन ।
नीलता येन कण्ठस्य कारणेनाम्बिकापतेः ॥ ११ ॥
श्रोतुमिच्छामहे सम्यक्तव वक्त्राद्विशेषतः ।
यावद्वाचः प्रवर्त्तन्ते सार्थास्ताश्च त्वयेरिताः ॥ १२ ॥
वर्णस्थानगते वायौ वाग्विधिः संप्रवर्त्तते ।
ज्ञानं पूर्व्वमथोत्साहस्त्वत्तो वायो प्रवर्तते ॥ १३ ॥
त्वयि निष्पन्दमाने तु शेषा वर्णप्रवृत्तयः ।
यत्र वाचो निवर्तन्ते देहबन्धाश्च दुर्लभाः ॥ १४ ॥
तत्रापि तेऽस्ति सद्भावः सर्व्वगस्त्वं सदानिल ।
नान्यः सर्व्वगतो देवस्त्वद्दतेऽस्ति समीरण ॥ १५ ॥
एष वै जीवलोकस्ते प्रत्यक्षः सर्व्वतोऽनिल ।
वेत्थ वाचस्पतिं देवं मनोनायकमीश्वरं ॥ १६ ॥
ब्रूहि तत् कण्ठदेशस्य किंकृता रूपविक्रिया ।
श्रुत्वा वाक्यन्ततस्तेषामृषीणां भावितात्मनां ।
प्रत्युवाच महातेजा वायुर्लोकनमस्कृतः ॥ १७ ॥

वायुरुवाच। पुरा कृतयुगे विप्रो वेदनिर्णयतत्परः।
वसिष्ठो नाम धर्म्मात्मा मानसो वै प्रजापतेः॥ १८॥
पप्रच्छ कार्त्तिकेयं वै मयूरवरवाहनं।
महिषासुरनारीनां नयनाञ्जनतस्करं॥ १९॥
महासेनं महात्मानं मेघस्तनितनिस्वनं।
उमामनःप्रहर्षेण बालकं छद्मरूपिणं॥ २०॥
क्रौञ्चजीवितहर्त्तारं पार्वतीहृदि नन्दनं।
वसिष्ठः पृच्छते भक्त्या कार्त्तिकेयं महाबलं॥ २१॥
वसिष्ठ उवाच। (नमस्ते हरनन्दाय उमागर्भ नमोऽस्तु ते।
नमस्ते अग्निगर्भाय गङ्गागर्भ नमोऽस्तु ते॥ २२॥
नमस्ते शरगर्भाय नमस्ते कृत्तिकासुत।
नमो द्वादशनेत्राय षण्मुखाय नमोऽस्तु ते॥ २३॥
नमस्ते शक्तिहस्ताय दिव्यघण्टापताकिने।
एवं स्तुत्वा महासेनं पप्रच्छ शिखिवाहनं॥ २४॥
यदेतद् दृश्यते वर्णं शुभं शुभ्राञ्जनप्रभं।
तत्किमर्थं समुत्पन्नं कण्ठे कुन्देन्दुसंप्रभे॥ २५॥)
एतदाशाय भक्ताय दान्ताय ब्रूहि पृच्छते (१)।
कथां मङ्गलसंयुक्तां पवित्रां पापनाशिनीं।
मत्प्रियार्थं महाभाग वक्तुमर्हस्यशेषतः॥ २६॥
श्रुत्वा वाक्यं ततस्तस्य वसिष्ठस्य महात्मनः।
प्रत्युवाच महातेजाः सुरारिबलसूदनः॥ २७॥
शृणुष्व वदतां श्रेष्ठ कथ्यमानं वचो मम।

१ सु्हितं परिपृच्छते इति ख०।

उमोत्सङ्गनिविष्टेन मया पूर्वं यथा श्रुतं ॥ २८ ॥
पार्वत्या सह संवादः सर्वस्य च महात्मनः।
तदहङ्कीर्त्तयिष्यामि त्वत्प्रियार्थं महामुने ॥ २९ ॥
कैलासशिखरे रम्ये नानाधातुविचित्रिते।
नानाद्रुमलताकीर्णे चक्रवाकोपशोभिते ॥ ३० ॥
षट्पदोद्गीतबहुले धारासम्पातनादिते।
मत्तक्रौञ्चमयूराणां नादैरुद्घुष्टकन्दरे (१) ॥ ३१ ॥
अप्सरोगणसङ्कीर्णे किन्नरैश्चोपशोभिते।
जीवञ्जीवकजातीनां वीरुद्भिरुपशोभिते ॥ ३२ ॥
कोकिलारावमधुरे सिद्धचारणसेविते।
सौरभेयीनिनादाढ्ये अघस्तनितनिस्वने ॥ ३३ ॥
विनायकभयोद्विग्ने कुञ्जरैर्युक्तकन्दरे।
वीणावादित्रनिर्घोषैः श्रोत्रेन्द्रियमनोरमैः ॥ ३४ ॥
दोलालम्बितसम्पाते वनितासङ्घसेविते।
ध्वजैर्लम्बितदोलानां घण्टानां निनदाकुले ॥ ३५ ॥
मुखमर्द्दलवादित्रैर्बलिनां स्फोटितैस्तथा।
क्रीड़ारवविचाराणां निर्घोषैः पूर्णमन्दिरे (२) ॥ ३६ ॥
हासैः सन्त्रासजननैर्विकरालमुखैस्तथा।
देहगन्धैर्विचित्रैश्च प्रक्रीड़ितगणेश्वरैः ॥ ३७ ॥
वज्रस्फटिकसोपानचित्रपट्टशिलातलैः।
व्याघ्रसिंहमुखैश्चान्यैर्गजवाजिमुखैस्तथा ॥ ३८ ॥
विड़ालवदनैश्चोग्रैः क्रुष्टकाकारमूर्त्तिभिः।

१ नादैरद्भुतकन्दरे इति ट०।　　२ पूर्णकन्दरे इति ट०।

ह्रस्वैर्दीर्घैः कृशैः स्थूलैर्लम्बोदरमहोदरैः ॥ ३९ ॥
ह्रस्वजङ्घैश्च लम्बोष्ठैस्तालजङ्घैस्तथापरैः।
गोकर्णैरेककर्णैश्च महाकर्णैरकर्णकैः ॥ ४० ॥
बहुपादैर्महापादैरेकपादैरपादकैः।
बहुशीर्षैर्महाशीर्षैरेकशीर्षैरशीर्षकैः ॥ ४१ ॥
बहुनेत्रैर्महानेत्रैरेकनेत्रैरनेत्रकैः।
एवंविधैर्महायोगिभूतैर्भूतपतिर्वृतः ॥ ४२ ॥

विशुद्धमुक्तामणिरत्नभूषिते
शिलातले हेममये मनोरमे।
सुखोपविष्टं मदनाङ्गनाशनं
प्रोवाच वाक्यं गिरिराजपुत्री ॥ ४३ ॥

देव्युवाच। भगवन् भूतभव्येश गोवृषाङ्कितशासन।
तव कण्ठे महादेव भ्राजतेऽम्बुदसन्निभं ॥ ४४ ॥
नात्युल्वणं नातिशुभ्रं नीलाञ्जनचयोपमं।
किमिदन्दीप्यते देव कण्ठे कामाङ्गनाशन ॥ ४५ ॥
को हेतुः कारणं किञ्च कण्ठे नीलत्वमीश्वर।
एतत्सर्वं यथान्यायं ब्रूहि कौतूहलं हि मे ॥ ४६ ॥
श्रुत्वा वाक्यं ततस्तस्याः पार्वत्याः पार्वतीप्रियः।
कथां मङ्गलसंयुक्तां कथयामास शङ्करः ॥ ४७ ॥
मथ्यमानेऽमृते पूर्वं क्षीरोदे सुरदानवे.।
अग्रे समुत्थितं तस्मिन् विषङ्कालानलप्रभं ॥ ४८ ॥
त दृष्ट्वा सुरसङ्घाश्च दैत्याश्चैव वरानने।
विषन्नवदना: सर्वे गतास्ते ब्रह्मणोऽन्तिकं ॥ ४९ ॥

दृष्ट्वा सुरगणान् भीतान् ब्रह्मोवाच महाद्युतिः।
किमर्थं भो महाभागा भीता उद्विग्नचेतसः॥ ५० ॥
मयाष्टगुणमैश्वर्य्यं भवतां सम्प्रकल्पितं।
केन व्यावर्त्तितैश्वर्य्या यूयं वै सुरसत्तमाः॥ ५१ ॥
त्रैलोक्यस्येश्वरा यूयं सर्व्वे वै विगतज्वराः।
प्रजासर्गे न सोऽस्तीह आज्ञां यो मे निवर्त्तयेत्॥ ५२ ॥
विमानगामिनः सर्वे सर्व्वे स्वच्छन्दगामिनः।
अध्यात्मे चाधिभूते च अधिदैवे च निष्ठाः।
प्रजाः कर्म्मविपाकेन शक्ता यूयं प्रवर्त्तितुं॥ ५३ ॥
तत् किमर्थं भयोद्विग्ना मृगाः सिंहार्दिता इव।
किं दुःखं केन सन्तापः कुतो वा भयमागतं।
एतत्सर्वं यथान्यायं शीघ्रमाख्यातुमर्हथ॥ ५४ ॥
श्रुत्वा वाक्यं ततस्तस्य ब्रह्मणो वै महात्मनः।
ऊचुस्ते ऋषिभिः सार्द्धं सुरदैत्येन्द्रदानवाः॥ ५५ ॥
सुरासुरैर्मथ्यमाने पाथोधौ च महात्मभिः।
भुजङ्गभृङ्गसङ्काशं नीलजीमूतसन्निभं।
प्रादुर्भूतं विषं घोरं सम्वर्ताग्निसमप्रभं॥ ५६ ॥
कालमृत्युरिवोद्भूतं युगान्तादित्यवर्चसं।
त्रैलोक्योत्सादि सूर्य्याभं प्रस्फुरन्तं (१) समन्ततः॥ ५७ ॥
विषेणोत्तिष्ठमानेन कालानलसमत्विषा।
निर्दग्धो रक्तगौराङ्गः कृतकृष्णो जनार्दनः॥ ५८ ॥
दृष्ट्वा तं रक्तगौराङ्गं कृतकृष्णं जनार्दनं।

(१) पाठोऽयं न समीचीनः।

भीताः सर्वे वयं देवास्त्वामेव शरणङ्गताः॥ ५९॥
सुराणामसुराणाञ्च श्रुत्वा वाक्यं पितामहः।
प्रत्युवाच महातेजा लोकानां हितकाम्यया॥ ६०॥
शृणुध्वं देवताः सर्वे ऋषयश्च तपोधनाः।
यत्तदग्रे समुत्पन्नं मथ्यमाने महोदधौ॥ ६१॥
विषं कालानलप्रख्यं कालकूटेतिविश्रुतं।
येन प्रोद्भूतमात्रेण कृतकृष्णो जनार्द्दनः॥ ६२॥
तस्य विष्णुरहञ्चापि सर्व्वे ते सुरपुङ्गवाः।
न शक्नुवन्ति वै सोढुं वेगमन्ये तु शङ्करात्॥ ६३॥
इत्युक्त्वा पद्मगर्भाभः पद्मयोनिरयोनिजः।
ततस्तोतुं समारब्धो ब्रह्मा लोकपितामहः॥ ६४॥
नमस्तुभ्यं विरूपाक्ष नमस्तेऽनेकचक्षुषे।
नमः पिनाकहस्ताय वज्रहस्ताय वै नमः॥ ६५॥
नमस्त्रैलोक्यनाथाय भूतानाम्पतये नमः।
नमः सुरारिसंहर्त्रे तापसाय त्रिचक्षुषे (१)॥ ६६॥
ब्रह्मणे चैव रुद्राय विष्णवे चैव ते नमः।
साङ्ख्याय चैव योगाय भूतग्रामाय वै नमः॥ ६७॥
मन्मथाङ्गविनाशाय कालकालाय वै नमः।
रुद्राय च सुरेशाय देवदेवाय ते नमः (२)॥ ६८॥
कपर्द्दिने करालाय शङ्कराय कपालिने (१)।
विरूपायैकरूपाय शिवाय वरदाय च॥ ६९॥

१ सोमसूर्य्याग्निचक्षुष इति ड०। १ देवाय वायुरंहसे इति ष०।
२ हराय चेति ड०।

त्रिपुरघ्नाय वन्द्याय (१) मातृणाम्पतये नमः ।
बुद्धाय चैव शुद्धाय मुक्ताय केवलाय च ॥ ७० ॥
नमः कमलहस्ताय दिग्वासाय शिखण्डिने ।
लोकत्रयविधात्रे च चन्द्राय (२) वरुणाय च ॥ ७१ ॥
अग्राय चैव चोग्राय विप्रायानेकचक्षुषे ।
रजसे चैव सत्वाय तमसेऽव्यक्तयोमये ॥ ७२ ॥
नित्यायानित्यरूपाय नित्यानित्याय वै नमः ।
व्यक्ताय चैवाव्यक्ताय व्यक्ताव्यक्ताय वै नमः ॥ ७३ ॥
चिन्त्याय चैवाचिन्त्याय चिन्त्याचिन्त्याय वै नमः ।
भक्तानामार्त्तिनाशाय नरनारायणाय च (३) ॥ ७४ ॥
उमाप्रियाय शर्वाय नन्दिचक्राङ्किताय च (४) ।
पक्षमासार्द्धमासाय नमः संवत्सराय च ॥ ७५ ॥
बहुरूपाय मुण्डाय दण्डिनेऽथ वरूथिने ।
नमः कपालहस्ताय दिग्वासाय शिखण्डिने ॥ ७६ ॥
ध्वजिने रथिने चैव यमिने ब्रह्मचारिणे ।
ऋग्यजुःसामवेदाय पुरुषायेश्वराय च ।
इत्येवमादिचरितैस्तुभ्यं देव नमोऽस्तु ते ॥ ७७ ॥
श्रीमहादेव उवाच। एवं स्तुतस्ततो देवैः प्रणिपत्य वरानने (५) ॥७८॥
ज्ञात्वा तु भक्तिं मम देवदेवो
गङ्गाजलाप्लावितकेशदेशः ।

---

१ त्रिपुरघ्नमखघ्नायेति ट० ।	२ इन्द्रायेति ट० ।
३ प्रियनारायणाय चेति ख० ।	४ नन्दिमन्दपराय चेति ख० ।
५ अयं श्लोकार्द्धं पतितं प्रतिभाति ।

सूक्ष्मोऽतियोगातिशयादचिन्त्यो
न हि प्रुतो व्यक्तमुपैति चन्द्रः ॥ ७९ ॥
एवं भगवता पूर्व्वं ब्रह्मणा लोककर्त्तृणा ।
स्तुतोऽहं विविधैस्तोत्रैर्वेदवेदाङ्गसम्भवैः ॥ ८० ॥
ततः प्रीतोऽस्म्यहन्तस्मै ब्रह्मणे सुमहात्मने ।
ततोऽहं सूक्ष्मया वाचा पितामहमथाब्रुवं ॥ ८१ ॥
भगवन् भूतभव्येश लोकनाथ जगत्पते ।
किं कार्य्यं ते मया ब्रह्मन् कर्त्तव्यं वद सुव्रत ॥ ८२ ॥
श्रुत्वा वाक्यं ततो ब्रह्मा प्रत्युवाचाम्बुजेक्षणः ।
भूतभव्यभवन्नाथ श्रूयतां कारणेश्वर ॥ ८३ ॥
सुरासुरैर्मथ्यमाने पयोधावम्बुजेक्षण ।
भगवन्मेघसङ्काशं नीलजीमूतसन्निभं ॥ ८४ ॥
प्रादुर्भूतं विषङ्घोरं सम्वर्त्ताग्निसमप्रभं ।
कालमृत्युरिवोद्भूतं युगान्तादित्यवर्च्चसं ॥ ८५ ॥
त्रैलोक्योत्सादि सूर्य्याभं विस्फुरन्तं समन्ततः ।
अग्रे समुत्थितं तस्मिन् विषज्वालानलप्रभम् ॥ ८६ ॥
तं दृष्ट्वा तु वयं सर्व्वे भीताः सम्भ्रान्तचेतसः ।
तत् पिबस्व महादेव लोकानां हितकाम्यया ।
भवानग्रास्य भोक्ता वै भवांश्चैव वरः प्रभुः ॥ ८७ ॥
त्वामृतेऽन्यो महादेव विषं सोढुं न विद्यते ।
नास्ति कश्चित् पुमान् शक्तस्त्रैलोक्येषु च गीयते ॥ ८८
एवं तस्य वचः श्रुत्वा ब्रह्मणः परमेष्ठिनः ।
वाढ़मित्येव तद्वाक्यं प्रतिगृह्य वरानने ॥ ८९ ॥

ततोऽहं पातुमारब्धो विषमन्तकसन्निभं ।
पिवतो मे महाघोरं विषं सुरभयङ्करं ।
कण्ठः समभवत्तूर्णं कृष्णो मे वरवर्णिनि ॥ ८० ॥
तं दृष्ट्वोत्पलपत्राभं कण्ठे सक्तमिवोरगं ।
तक्षकं नागराजानं लेलिहानमिवस्थितं ॥ ८१ ॥
अथोवाच महातेजा ब्रह्मा लोकपितामहः ।
शोभसे त्वं महादेव कण्ठेनानेन सुव्रत ॥ ८२ ॥
ततस्तस्य वचः श्रुत्वा मया गिरिवरात्मजे ।
पश्यतां देवसङ्घानां दैत्यानाञ्च वरानने ॥ ८३ ॥
यक्षगन्धर्व्वभूतानां पिशाचोरगरक्षसां ।
धृतं कण्ठे विषं घोरं नीलकण्ठस्ततोऽस्म्यहं ॥ ८४ ॥

तत् कालकूटं विषभुग्रतेजः
कण्ठे मया पर्व्वतराजपुत्रि ।
निवेश्यमानं सुरदैत्यसङ्घो
दृष्ट्वा परं विस्मयमाजगाम ॥ ८५ ॥

ततः सुरगणाः सर्व्वे सदैत्योरगराक्षसाः ।
ऊचुः प्राञ्जलयो भूत्वा मत्तमातङ्गगामिनि ॥ ८६ ॥

अहो बलं वीर्य्यपराक्रमस्ते
अहो पुनर्योगबलं तवैव ।
अहो प्रभुत्वं तव देवदेव
गङ्गाजलास्फालितमुक्तकेश ॥ ८७ ॥
( त्वमेव विष्णुश्चतुराननस्त्वं
त्वमेव मृत्युर्वरदस्त्वमेव ।

त्वमेव सूर्य्यो रजनीकरश्च
त्वमेव भूमिः सलिलं त्वमेव ॥ ९८ ॥
त्वमेव यज्ञो नियमस्त्वमेव
त्वमेव भूतं भविता त्वमेव ।
त्वमेव चादिर्निधनं त्वमेव
स्थुलश्च सूक्ष्मः (१) पुरुषस्त्वमेव ॥ ९९ ॥
त्वमेव सूक्ष्मस्य परस्य सूक्ष्मः
त्वमेव वह्निः पवनस्त्वमेव ।
त्वमेव सर्व्वस्य चराचरस्य
लोकस्य कर्त्ता प्रलये च गोप्ता ॥ १०० ॥
इतीदमुक्त्वा वचनं सुरेन्द्राः
प्रगृह्य सोमं प्रणिपत्य मूर्द्धा ।
गता विमानैरनिगृह्य वेगै-
र्महात्मनो मेरुमुपेत्य सर्व्वे ॥ १०१ ॥
इत्येतत्परमं गुह्यं पुण्यात्पुण्यमहत्तरम् (२) ।
नीलकण्ठेति यत्प्रोक्तं विख्यातं लोकविश्रुतं (३) ॥ १०२ ॥
स्वयं स्वयम्भुवा प्रोक्तां पुण्यां पापप्रणाशनीं ।
यस्तु धारयते नित्यमिनां ब्रह्मोद्भवां कथां ।
तस्याहं संप्रवक्ष्यामि फलं वै विपुलं महत् ॥ १०३ ॥
विषं तस्य वरारोहे स्थावरं जङ्गमन्तथा ।
गात्रं प्राप्य च सुश्रोणि क्षिप्रं तत्प्रतिहन्यते ॥ १०४ ॥

---

१ त्वमेव सूक्ष्म इति ट० । २ पुण्यतरं महदिति घ० ।
३ त्रिषु लोकेषु विश्रुतमिति ठ० ।

अमयत्यशुभं घोरं दुःस्वप्नञ्चापकर्षति ।
स्त्रीषु वल्लभतां याति सभायां पार्थिवस्य च ॥ १०५ ॥
विवादे जयमाप्नोति युद्धे शूरत्वमेव च ।
गच्छतः क्षेममध्वानं गृहे च नित्यसम्पदः ॥ १०६ ॥
शरीरभेदे वक्ष्यामि गतिं तस्य वरानने ।
नीलकण्ठो हरित्श्मश्रुः शशाङ्काङ्कितमूर्द्धजः ॥ १०७ ॥
व्याघ्रस्त्रिशूलपाणिश्च वृषयानः पिनाकधृक् ।
नन्दितुल्यबलः श्रीमान् नन्दितुल्यपराक्रमः ॥ १०८ ॥
विचरत्यचिरात् सर्व्वान् सर्व्वलोकान्ममाज्ञया ।
न हन्यते गतिस्तस्य अनिलस्य यथाऽम्बरे ।
मम तुल्यबलो भूत्वा तिष्ठत्याभूतसंप्लवं ॥ १०९ ॥
मम भक्ता वरारोहे ये च शृण्वन्ति मानवाः ।
तेषां गतिं प्रवक्ष्यामि इह लोके परत्र च ॥ ११० ॥
ब्राह्मणो वेदमाप्नोति क्षत्रियो जयते महीं ।
वैश्यस्तु लभते लाभं शूद्रः सुखमवाप्नुयात् ॥ १११ ॥
व्याधितो मुच्यते रोगाद्बद्धो मुच्येत बन्धनात् ।
गुर्व्विणी लभते पुत्रं कन्या विन्दति सत्पतिं ।
नष्टञ्च लभते सर्व्वं इह लोके परत्र च ॥ ११२ ॥
गवां शतसहस्रस्य सम्यग्दत्तस्य यत्फलं ।
तत्फलं भवति श्रुत्वा विभोर्दिव्यामिमां कथां ॥ ११३ ॥
पादं वा यदि वाप्यर्द्धं श्लोकं श्लोकार्द्धमेव वा ।
यस्तु धारयते नित्यं रुद्रलोकं स गच्छति ॥ ११४ ॥
कथामिमां पुण्यफलादियुक्तां

निवेद्य देव्याः शशिबद्धमूर्द्धजः।
वृषस्य पृष्ठेन सहोमया प्रभु-
र्जगाम किष्किन्धगुहां गुहप्रियः॥ ११५॥
क्रान्तं मया पापहरं महापदं
निवेद्य तेभ्यः प्रददौ प्रभञ्जनः।
अधीत्य सर्व्वन्त्वखिलं सुलक्षणं
जगाम आदित्यपथं द्विजोत्तमः॥ ११६॥

इति श्रीमहापुराणे वायुप्रोक्ते नीलकण्ठस्तवो
नाम चतुःपञ्चाशोऽध्यायः।

---

# अथ पञ्चपञ्चाशोऽध्यायः।

———ooo@ooo———

## लिङ्गोद्भवस्तवः।

ऋषय ऊचुः। गुणकर्मप्रभावैश्च कोऽधिको वदतां वरः।
श्रोतुमिच्छामहे सम्यगाथर्य्यं गुणविस्तरं ॥ १ ॥
सूत उवाच। अत्राप्युदाहरन्तीममितिहासं पुरातनं।
महादेवस्य माहात्म्यं विभुत्वञ्च महात्मनः ॥ २ ॥
पूर्व्वं त्रैलोक्यविजये विष्णुना समुदाहृतं।
वलिं वद्धा महौजास्तु (१) त्रैलोक्याधिपतिः पुरा ॥ ३ ॥
प्रनष्टेषु च दैत्येषु प्रहृष्टे च शचीपतौ।
अथाजग्मुः प्रभुन्द्रष्टुं सर्व्वे देवाः सवासवाः ॥ ४ ॥
यत्रास्ते विश्वरूपात्मा चीरोदस्य समीपतः।
सिद्धब्रह्मर्षयो यचा गन्धर्व्वाप्सरसाङ्गणाः ॥ ५ ॥
नागा देवर्षयश्चैव नद्यः सर्व्वे च पर्वताः।
अभिगम्य महात्मानं स्तुवन्ति पुरुषं हरिं ॥ ६ ॥
त्वं धाता त्वञ्च कर्त्ताऽस्य त्वं लोकान् सृजसि प्रभो।
त्वत्प्रसादाच्च कल्याणं प्राप्तं त्रैलोक्यमव्ययं।
असुराश्च जिताः सर्व्वे वलिर्बद्धश्च वै त्वया ॥ ७ ॥

१ महातेजा इति ट०।

एवमुक्तः सुरैर्विष्णुः सिद्धैश्च परमर्षिभिः।
प्रत्युवाच ततो देवान् सर्व्वांस्तान् पुरुषोत्तमः ॥ ८॥
श्रूयतामभिधास्यामि कारणं सुरसत्तमाः।
यः स्रष्टा सर्व्वभूतानां कालः कालकरः (१) प्रभुः ॥ ९॥
येन हि ब्रह्मणा सार्द्धं सृष्टा लोकाश्च मायया।
तस्यैव च प्रसादेन आदौ सिद्धत्वमागतं॥ १० ॥
पुरा तमसि चाव्यक्ते (२) त्रैलोक्ये ग्रासिते मया।
उदरस्थेषु भूतेषु लोकेऽहं शयितस्तदा॥ ११ ॥
सहस्रशीर्षो भूत्वा सहस्राक्षः सहस्रपात् ।
शङ्खचक्रगदापाणिः शयितो विमलेऽम्भसि ॥ १२ ॥
एतस्मिन्नन्तरे दूरात् पश्यामि ह्यमितप्रभं।
शतसूर्य्यप्रतीकाशं ज्वलन्तं स्वेन तेजसा॥ १३ ॥
चतुर्वक्त्रं महायोगं पुरुषं काञ्चनप्रभं।
कृष्णाजिनधरं देवं कमण्डलुविभूषितं।
निमेषान्तरमात्रेण प्राप्तोऽसौ पुरुषोत्तमः॥ १४ ॥
ततो मामब्रवीद् ब्रह्मा सर्व्वलोकनमस्कृतः।
कस्त्वं कुतो वा किञ्चेह तिष्ठसे वद मे विभो॥ १५॥
अहं कर्त्ताऽस्मि लोकानां स्वयम्भूर्विश्वतोमुखः।
एवमुक्तस्तदा तेन ब्रह्मणाहमुवाच तं॥ १६ ॥
अहं कर्त्ता च लोकानां संहर्त्ता च पुनः पुनः।
एवं सम्भाषमाणाभ्यां परस्परजयैषिणां।
उत्तरां दिशमास्थाय ज्वाला दृष्टाप्यधिष्ठिता॥ १७ ॥

१ कालवर इति ट०। २ चाशक्ते इति ट०।

ज्वालान्ततस्तामालोक्य विस्मितौ च तदानयोः ।
तेजसा चैव तेनाथ सर्व्वं ज्योतिः कृतञ्ज्वलं ॥ १८ ॥
वर्द्धमाने तदा वह्नावत्यन्तपरमाद्भुते ।
अतिदुद्राव तां ज्वालां ब्रह्मा चाहञ्च सत्वरः १९ ॥
दिवं भूमिञ्च विष्टभ्य तिष्ठन्तं (१) ज्वालमण्डलं ।
तस्य ज्वालस्य मध्ये तु पश्यावो विपुलप्रभं ॥ २० ॥
प्रादेशमात्रमव्यक्तं लिङ्गं परमदीपितं ।
न च तत्काञ्चनं मध्ये न शैलं न च राजतं ॥ २१ ॥
अनिर्द्देश्यमचिन्त्यञ्च लक्ष्यालक्ष्यं पुनः पुनः ।
महौजसं महाघोरं वर्द्धमानं भृशं तदा ।
ज्वालामालायतं न्यस्तं सर्व्वभूतभयङ्करं ॥ २२ ॥
अस्य लिङ्गस्य योऽन्तं वै गच्छति मन्तकारणं ।
घोररूपिणमत्यर्थं भिदन्तमिव रोदसी ॥ २३ ॥
ततो मामब्रवीद् ब्रह्मा अधो गच्छत्वतन्द्रितः ।
अन्तमस्य विजानीमो लिङ्गस्य तु महात्मनः ॥ २४ ॥
अहमूर्द्धं गमिष्यामि यावदन्तोऽस्य दृश्यते ।
तदा तौ समयं कृत्वा गतावूर्द्ध्वमधश्च ह ॥ २५ ॥
ततो वर्षसहस्रन्तु अहं पुनरधो गतः ।
न च पश्यामि तस्यान्तं भीतश्चाहं न संशयः ॥ २६ ॥
तथा ब्रह्मा च श्रान्तश्च न चान्तन्तस्य पश्यति ।
समागतो मया सार्द्धं तत्रैव च महाम्भसि ॥ २७ ॥
ततो विस्मयमापन्नावुभौ (२) तस्य महात्मनः ।

१ पाठोऽयं न समीचीनः ।　　२ विस्मयमापन्नौ भीतानिति क० ।

मायया मोहितौ तेन नष्टसंज्ञौ व्यवस्थितौ ॥ २८ ॥
ततो ध्यानगतस्तत्र ईश्वरं सर्व्वतोमुखं।
प्रभवं निधनञ्चैव लोकानां प्रभुमव्ययं ॥ २९ ॥
ब्रह्माञ्जलिपुटो भूत्वा तस्मै शर्वाय शूलिने।
महाभैरवनादाय भीमरूपाय दंष्ट्रिणे।
अव्यक्ताय महान्ताय नमस्कारं प्रकुर्म्महे ॥ ३० ॥

नमोऽस्तु ते लोकसुरेश देव
नमोऽस्तु ते भूतपते महान्त।
नमोऽस्तु ते शाश्वत सिद्धयोने
नमोऽस्तु ते सर्व्वजगत्प्रतिष्ठ ॥ ३१ ॥

परमेष्ठी परं ब्रह्म अक्षरं परमं पदं।
श्रेष्ठस्त्वं वामदेवश्च रुद्रः स्कन्दः शिवः प्रभुः ॥ ३२ ॥
त्वं यज्ञस्त्वं वषट्कारस्त्वमोङ्कारः परं पदं।
स्वाहाकारो नमस्कारः संस्कारः सर्व्वकर्म्मणां ॥ ३३ ॥
स्वधाकारश्च जाप्यश्च (१) व्रतानि नियमास्तथा।
वेदा लोकाश्च देवाश्च भगवानेव सर्व्वगः॥ ३४ ॥
आकाशस्य च शब्दस्त्वं भूतानां प्रभवाव्ययं।
भूमेर्गन्धो रसश्चापां तेजोरूपं महेश्वर ॥ ३५ ॥
वायोः स्पर्शश्च देवश्च वपुश्चन्द्रमसस्तथा।
बुधो ज्ञानञ्च देवेश प्रकृतौ बीजमेव च ॥ ३६ ॥
त्वं कर्त्ता सर्व्वभूतानां कालो मृत्युर्यमोऽन्तकः।
त्वन्धारयसि लोकांस्त्रीस्त्वमेव सृजसि प्रभो ॥ ३७ ॥

---

१ नाप्यश्चेति ट०।

पूर्व्वेण वदनेन त्वमिन्द्रत्वञ्च प्रकाशसे ।
दक्षिणेन च वक्त्रेण लोकान् संक्षिपसे प्रभो(१) ॥ ३८ ॥
पश्चिमेन तु वक्त्रेण वरुणत्वं करोषि वै ।
उत्तरेण तु वक्त्रेण सौम्यत्वञ्च व्यवस्थितं ॥ ३९ ॥
राजसे (२) बहुधा देव लोकानां प्रभवाव्ययः ।
आदित्या वसवो रुद्रा मरुतश्चाश्विनौसुतौ ॥ ४० ॥
साध्या विद्याधरा नागाश्चारणाश्च तपोधनाः ।
वालखिल्या महात्मानस्तपःसिद्धाश्च सुव्रताः ॥ ४१ ॥
त्वत्तः प्रसूता देवेश ये चान्ये नियतव्रताः ।
उमा सीता सिनीवाली कुहूर्गायत्रिरेव च ॥ ४२ ॥
लक्ष्मीः कीर्त्तिर्धृतिर्मेधा लज्जा क्षान्तिर्वपुः स्वधा ।
तुष्टिः पुष्टिः क्रिया चैव वाचां देवी (३) सरस्वती ।
त्वत्तः प्रसूता देवेश सन्ध्या रात्रिस्तथैव च ॥ ४३ ॥

सूर्य्यायुतानामयुतप्रभा च
नमोऽस्तु ते चन्द्रसहस्रगोचर ।
नमोऽस्तु ते पर्व्वतरूपधारिणे
नमोऽस्तु ते सर्व्वगुणाकराय ॥ ४४ ॥
नमोऽस्तु ते पट्टिशरूपधारिणे
नमोऽस्तु ते चर्म्मविभूतिधारिणे ।
नमोऽस्तु ते रुद्रपिनाकपाणये
नमोऽस्तु ते शायकचक्रधारिणे (४) ॥ ४५ ॥

---

१ लोकान सर्व्वान् प्रकाशस इति ख०। २ रमस इति ख०, ङ०, ठ० च।
३ गा च देवीति ट०।                ४ शायकचापपाणय इति ट०।

नमोऽस्तु ते भस्मविभूषिताङ्ग
नमोऽस्तु ते कामशरीरनाशन ।
नमोऽस्तु ते देव हिरण्यवाससे
नमोऽस्तु ते देव हिरण्यबाहवे ॥ ४६ ॥
नमोऽस्तु ते देवहिरण्यरूप
नमोऽस्तु ते देव हिरण्यनाभ ।
नमोऽस्तु ते नेत्रसहस्रचित्र
नमोऽस्तु ते देव हिरण्यरेतः ॥ ४७ ॥
नमोऽस्तु ते देव हिरण्यवर्ण
नमोऽस्तु ते देवहिरण्यगर्भ ।
नमोऽस्तु ते देव हिरण्यचीर
नमोऽस्तु ते देव हिरण्यदायिने ॥ ४८ ॥
नमोऽस्तु ते देव हिरण्यमालिने
नमोऽस्तु ते देव हिरण्यवाहिने ।
नमोऽस्तु ते देव हिरण्यवर्मने
नमोऽस्तु ते भैरवनादनादिने ॥ ४९ ॥
नमोऽस्तु ते भैरववेगवेग
नमोऽस्तु ते शङ्कर नीलकण्ठ ।
नमोऽस्तु ते दिव्यसहस्रबाहो
नमोऽस्तु ते नर्त्तनवादनप्रिय ॥ ५० ॥

एवं संस्तूयमानस्तु व्यक्तो भूत्वा महामतिः ।
भाति देवो महायोगी सूर्य्यकोटिसमप्रभः ॥ ५१ ॥
अभिभाषस्तदा हृष्टो महादेवो महेश्वरः ।

वक्त्रकोटिसहस्रेण ग्रसमान इवापरं ॥ ५२ ॥
एकग्रीवस्त्वेकजटो नानाभूषणभूषितः ।
नानाचित्रविचित्राङ्गः (१) नानामाल्यानुलेपनः ॥ ५३ ॥
पिनाकपाणिर्भगवान् वृषभासनशूलधृक् (२) ।
दण्डकृष्णाजिनधरः कपाली घोररूपधृक् ॥ ५४ ॥
व्यालयज्ञोपवीती च सुराणामभयङ्करः ।
दुन्दुभिस्वननिर्घोषपर्जन्यनिनदोपमः ।
मुक्तो हासस्तदा तेन नभः सर्व्वमपूरयत् ॥ ५५ ॥
तेन शब्देन महता वयं भीता महात्मनः ।
तदोवाच महायोगी प्रीतोऽहं सुरसत्तमौ ॥ ५६ ॥
पश्येताञ्च महामायां भयं सर्व्वं प्रमुच्यतां ।
युवां प्रसूतौ गात्रेषु मम पूर्व्वं सनातनौ ॥ ५७ ॥
अयं मे दक्षिणो बाहुर्ब्रह्मा लोकपितामहः ।
वामो बाहुश्च मे विष्णुर्नित्यं युद्धेषु तिष्ठति ।
प्रीतोऽहं युवयोः सम्यग्वरं दद्मि यथेप्सितं ॥ ५८ ॥
ततः प्रहृष्टमनसौ प्रणतौ पादयोः पुनः ।
ऊचतुश्च महात्मानौ पुनरेव तदानघौ ॥ ५९ ॥
यदि प्रीतिः समुत्पन्ना यदि देयो वरश्च नौ ।
भक्तिर्भवतु नौ नित्यं त्वयि देव सुरेश्वर ॥ ६० ॥
भगवानुवाच । एवमस्तु महाभागौ सृजतां विविधाः प्रजाः ।
एवमुक्त्वा स भगवांस्तत्रैवान्तरधीयत ॥ ६१ ॥
एवमेष मयोक्तो वः प्रभावस्तस्य योगिनः ।

१ नानावस्त्रविचित्राङ्ग इति ट० । २ पट्टिशासनशूलभृगिति ट० ।

तेन सर्व्वमिदं सृष्टं हेतुमात्रा वयन्त्विह ॥ ६२ ॥
एतद्धि रूपमज्ञातमव्यक्तं शिवसंज्ञितं ।
अचिन्त्यं तदहश्यञ्च पश्यन्ति ज्ञानचक्षुषः ॥ ६३ ॥
तस्मै देवाधिपत्याय (१) नमस्कारं प्रयुङ्क्त ह ।
येन सूक्ष्ममचिन्त्यञ्च पश्यन्ति ज्ञानचक्षुषः ॥ ६४ ॥
महादेव नमस्तेऽस्तु महेश्वर नमोऽस्तु ते ।
सुरासुरवर श्रेष्ठ मनोहंस नमोऽस्तु ते ॥ ६५ ॥
सूत उवाच। एतच्छ्रुत्वा गताः सर्व्वे सुराः स्वं स्वं निवेशनं।
नमस्कारं प्रयुञ्जानाः शङ्कराय महात्मने ॥ ६६ ॥
इमं स्तवं पठेद्यस्तु ईश्वरस्य महात्मनः ।
कामांश्च लभते सर्व्वान् पापेभ्यस्तु विमुच्यते ॥ ६७ ॥
एतत्सर्व्वं सदा तेन विष्णुना प्रभविष्णुना ।
महादेवप्रसादेन उक्तं ब्रह्म सनातनं।
एतद्वः सर्व्वमाख्यातं मया माहेश्वरं बलं॥ ६८ ॥

इति श्रीमहापुराणे वायुप्रोक्ते लिङ्गोद्भवस्तवो नाम
पञ्चपञ्चाशोऽध्यायः ।

१ देवाधिदेवायेति ख० ॥

# अथ षट्पञ्चाशोऽध्यायः।

———ooo———

## पितृवर्णनं।

शांशपायन उवाच। अमावास्यां मासि मासि दिवं नृपः।
ऐड़ः पुरूरवाः सूत कथं वाऽतर्पयत् पितॄन् ॥ १ ॥
सूत उवाच। तस्य चाहं प्रवक्ष्यामि प्रभावं शांशपायन।
ऐड़स्यादित्यसंयोगं सोमस्य च महात्मनः ॥ २ ॥
अपांसारमयस्येन्दोः पक्षयोः शुक्लकृष्णयोः।
ह्रासवृद्धी पितृमतः पक्षस्य च विनिर्णयः ॥ ३ ॥
सोमाच्चैवामृतप्राप्तिः पितॄणान्तर्पणं तथा।
कव्याग्निश्वात्तसोमानां पितॄणाञ्चैव दर्शनं ॥ ४ ॥
यथा पुरूरवाश्चैड़स्तर्पयामास वै पितॄन्।
एतत्सर्व्वं प्रवक्ष्यामि पर्व्वाणि च यथा क्रमं ॥ ५ ॥
यदा तु चन्द्रसूर्य्यौ तौ नक्षत्रेण समागतौ।
अमावास्यान्निवसत एकरात्रैकमण्डले ॥ ६ ॥
स गच्छति तदा द्रष्टुं दिवाकरनिशाकरौ।
अमावस्याममावास्यां मातामहपितामहौ।
अभिवाद्य तदा तत्र कालापेक्षः (१) प्रतीक्षते ॥ ७ ॥

१ कालापेक्षः इति पाठः।

प्रमोद्‌मानात् सोमाच्च पित्रर्थं तत्परिस्रवात् ।
ऐलः पुरूरवा विद्वान् मासि मासि प्रयत्नतः (१) ।
उपास्ते पितृमन्तं तं ससोमं स दिवास्थितः ॥ ८ ॥
द्विलवं कुहुमात्रन्तु ते उभे तु विचार्य्य सः ।
सिनीवालीप्रमाणेन सिनीवालीमुपासकः ॥ ९ ॥
कुहुमात्रां कलाञ्चैव ज्ञात्वोपास्ते कुहूं पुनः ।
स तदा भानुमत्येककालाविच्चो प्रपश्यति ॥ १० ॥
सुधामृतं कुतः सोमात् प्रस्रवेन्मासतृप्तये ।
दशभिः पञ्चभिश्चैव सुधामृतपरिस्रवैः ॥ ११ ॥
कृष्णपक्षे तदा पीत्वा दुह्यमानं तथांशुभिः ।
सद्यः प्रक्षरता तेन सौम्येन मधुना च सः ॥ १२ ॥
निर्व्वापणार्थं दत्तेन पित्र्येण विधिना नृपः ।
सुधामृतेन राजेन्द्रस्तर्पयामास वै पितॄन् ।
सौम्या वर्हिषदः काव्या अग्निष्वात्तास्तथैव च ॥ १३ ॥
ऋतुरग्निस्तु यः प्रोक्तः स तु संवत्सरो मतः ।
जज्ञिरे ह्यृतवस्तस्मादृतुभ्यश्चार्त्तवाश्च ये ॥ १४ ॥
आर्त्तवा ह्यर्द्धमासाख्याः पितरो ह्यब्दसूनवः ।
ऋतुः पितामहा मासा ऋतुश्चैवाब्दसूनवः ॥ १५ ॥
प्रपितामहास्तु वै देवाः पञ्चाब्दाः ब्रह्मणः सुताः ।
सौम्यास्तु सौम्यजा ज्ञेयाः काव्याः ज्ञेया कवेः सुताः ॥१६॥
उपहूताः (२) स्मृता देवाः सोमजाः सोमपास्तथा ।
आज्यपास्तु स्मृताः काव्यास्तृप्यन्ति पितृजातयः ॥ १७ ॥

१ ततस्तु वै इति ख० ।    २ उपाहूता इति ङ० ।

काव्या वर्हिषदश्चैव अग्निष्वात्ताश्च ते त्रिधा ।
गृहस्था ये च यज्वाना ऋतुर्व्वर्हिषदो ध्रुवं ॥ १८ ॥
गृहस्थाश्चापि यज्वाना अग्निष्वात्तास्तथार्त्तवाः ।
अष्टकापतयः काव्याः पञ्चाब्दास्तान्निबोधत ॥ १९ ॥
एषां संवत्सरो ह्यग्निः सूर्य्यस्तु परिवत्सरः ।
सोम इद्वत्सरः प्रोक्तो वायुश्चैवानुवत्सरः ॥ २० ॥
रुद्रस्तु वत्सरस्तेषां पञ्चाब्दा ये युगात्मकाः ।
लेखाश्चैवोष्मपाश्चैव दिवाकीर्त्त्याश्च ते स्मृताः ॥ २१ ॥
एते पिवन्त्यमावास्यां मासि मासि सुधां दिवि ।
तांस्तेन तर्पयामास यावदासीत् पुरूरवाः ॥ २२ ॥
यस्मात् प्रस्रवते सोमान् मासि मासि निबोधत ।
तस्मात् सुधामृतं तद्वै पितृणां सोमपायिनां ॥ २३ ॥
एवं तदमृतं सौम्यं सुधा च मधु चैव ह ।
कृष्णपक्षे यथा चेन्दोः कलाः पञ्चदश क्रमात् ॥ २४ ॥
पिवन्त्यम्बुमयीर्द्देवास्त्रयस्त्रिंशत्तु छन्दजाः ।
पीत्वा च मासं गच्छन्ति चतुर्द्दश्यां सुधामृतं ॥ २५ ॥
इत्येवं पीयमानस्तु दैवतैश्च निशाकरः ।
समागच्छदमावास्यां भागे पञ्चदशे स्थितः ॥ २६ ॥
सुषुम्नाप्यायितश्चैव अमावास्यां यथाक्रमं ।
पिवन्ति द्विकलं कालं पितरस्ते सुधामृतं ॥ २७ ॥
ततः पीतक्षये सोमे सूर्य्योऽसावेकरश्मिना ।
आप्याययत्सुषुम्नेन पितृणां सोमपायिनां ॥ २८ ॥
निःशेषायां कलायान्तु सोममाप्याययत् पुनः ।

सुषुम्नाप्यायमानस्य भागं भागमहःक्रमात् ।
कलाः क्षीयन्ति ताः कृष्णाः शुक्लाश्चाप्याययन्ति च ॥२९
एवं सूर्य्यस्य वीर्य्येण चन्द्रस्याप्यायिता तनुः ।
दृश्यते पौर्णमास्यां वै शुक्लः सम्पूर्णमण्डलः ।
संसिद्धिरेवं सोमस्य पक्षयोः शुक्लकृष्णयोः ॥ ३० ॥
इत्येषः पितृमान् सोमः स्मृत इद्वत्सरः क्रमात् ।
क्रान्तः पञ्चदशैः सार्द्धं सुधामृतपरिस्रवैः ॥ ३१ ॥
अतः पर्व्वाणि वक्ष्यामि पर्व्वणां सन्धयस्तथा ।
ग्रन्थिमन्ति यथा पर्व्वाणीक्षुवेणोर्भवन्त्युत ॥ ३२ ॥
तथार्द्धमासपर्व्वाणि शुक्लकृष्णानि वै विदुः ।
पूर्णामावास्ययोर्भेदैर्ग्रन्थियो सन्धयश्च वै (१) ।
अर्द्धमासास्तु पर्वाणि तृतीयाप्रभृतीनि तु ॥ ३३ ॥
अग्न्याधानक्रिया यस्मात् क्रियते पर्व्वसन्धिषु ।
सायाह्ने प्रतिपच्चैव स कालः पौर्णमासिकः ॥ ३४ ॥
व्यतीपाते स्थिते सूर्य्ये लेखोर्द्धन्तु युगान्तरे ।
युगान्तरोदिते चैव लेखोर्द्धं शशिनः क्रमात् ॥ ३५ ॥
पौर्णमासे व्यतीपाते यदीक्षेते परस्परम् ।
यस्मिन् काले स सोमार्को स व्यतीपात एव तु ॥ ३६ ॥
कालं सूर्य्यस्य निर्द्देशं दृष्ट्वा संख्या तु सर्पति ।
स वै पर्वं क्रियाकालः कालात्ययो विधीयते ॥ ३७ ॥
पूर्णेन्दोः पूर्णपक्षे तु रात्रिसन्धिषु पूर्णिमा ।
यस्मात्तामनुपश्यन्ति पितरो दैवतैः सह ।

१ पौर्णमास्याममावास्यां भिदैर्या ग्रन्थिगुत्यश्च इति ख० ।

तस्मादनुमतिर्नाम पूर्णिमा प्रथमा स्मृता ॥ ३८ ॥
अत्यर्थं भ्राजते यस्मात् पौर्णमास्यान्निशाकरः ।
रञ्जनाच्चैव चन्द्रस्य राकेति कवयो विदुः ॥ ३९ ॥
अमा वसेतामृक्षे तु यदा चन्द्रदिवाकरौ ।
एकां पञ्चदशीं रात्रिममावास्या ततः स्मृता ॥ ४० ॥
ततोऽपरस्य तैर्व्यक्तः पौर्णमास्यां निशाकरः ।
यदीक्षते व्यतीपाते दिवा पूर्णं परस्परं ।
चन्द्रार्कावपराह्णे तु पूर्णात्मानौ तु पूर्णिमा ॥ ४१ ॥
विच्छिन्नां याममावास्यां पश्यतश्च समागतौ ।
अन्योन्यं चन्द्रसूर्य्यौ तौ यदा तद्दर्श उच्यते ॥ ४२ ॥
द्वौ द्वौ लवावमावास्यां यः कालः पर्व्वसन्धिषु ।
द्वाक्षरं कुहुमात्रन्तु एवं कालस्तु स स्मृतः ।
नष्टचन्द्राप्यमावास्या मध्यसूर्य्येण सङ्गता (१) ॥ ४३ ॥
दिवसार्द्धेन रात्र्यर्द्धं सूर्य्यं प्राप्य तु चन्द्रमाः ।
सूर्य्येण सहसा मुक्तिं गत्वा प्रातस्तनोत्सवौ (२) ।
द्वौ कालौ सङ्गमश्चैव मध्याह्ने निष्पतेद्रविः ॥ ४४ ॥
प्रतिपच्छुक्लपक्षस्य चन्द्रमाः सूर्य्यमण्डलात् ।
निर्मुच्यमानयोर्मध्ये तयोर्मण्डलयोस्तु वै ॥ ४५ ॥
स तदा ह्याहुतेः कालो दर्शस्य च वषट्क्रिया ।
एतदृतुमुखं ज्ञेयममावास्यास्य पर्व्वणः ॥ ४६ ॥
दिवा पर्व्वण्यमावास्यां क्षीणेन्दौ बहुले तु वै ।

---

१ मध्याह्नात् संप्रवर्त्तत इति ख० ।

२ पाठोऽयं आदर्शपुस्तके मुद्रितः परन्त्वस्मिन् पाठे न पूर्व्वपाठसङ्गतिरिति ।

त ..ाद्दिवा ह्यमावास्यां गृह्यतेऽसौ दिवाकरः ।
गृह्यते वै दिवा ह्यस्मादमावास्यां दिविचयैः ॥ ४७ ॥
कलानामपि वै तासां वहुमान्याजड़ात्मकैः ।
तिथीनां नामधेयानि विद्वद्भिः संज्ञितानि वै ॥ ४८ ॥
दर्शयेतामथान्योन्यं सूर्य्याचन्द्रमसावुभौ ।
निष्क्रामत्यथ तेनैव क्रमशः सूर्य्यमण्डलात् ॥ ४९ ॥
द्विलवेन ह्यहोरात्रं भास्करं स्पृशते शशी ।
स तदा ह्याहुतेः कालो दर्शस्य च वषट्क्रिया ॥ ५० ॥
कुहेति कोकिलेनोक्तो यः कालः परिच्छिन्नतः ।
तत्कालसंज्ञिता यस्मादमावास्या कुहुः स्मृता ॥ ५१ ॥
सिनीवालीप्रमाणेन क्षीणशेषो निशाकरः ।
अमावास्यां विशत्यर्कं सिनीवाली ततः स्मृता ॥ ५२ ॥
पर्व्वणः पर्व्वकालस्तु तुल्यो वै तु वषट्क्रिया ।
चन्द्रसूर्य्यव्यतीपाते उभे ते पूर्णिमे स्मृते ॥ ५३ ॥
प्रतिपत्पञ्चदश्योश्च पर्व्वकालो द्विमात्रकः ।
कालः कुहुसिनीवाल्योः समुद्रो द्विलवः स्मृतः ॥ ५४ ॥
अर्काग्निमण्डले सोमे पर्व्वकालः कलाश्रयः ।
एवं स शुक्लपक्षो वै रजन्याः पर्व्वसन्धिषु ॥ ५५ ॥
संपूर्णमण्डलः श्रीमान् चन्द्रमा उपरज्यते (१) ।
यस्मादाप्यायते सोमः पञ्चदश्यान्तु पूर्णिमा ॥ ५६ ॥
दशभिः पञ्चभिश्चैव कलाभिर्दिवसक्रमात् ।
तस्मात्कला पञ्चदशी सोमे नास्ति तु षोड़शी ।

१ उपपाद्यत इति ख० ।

तस्मात्सोमस्य भवति पञ्चदश्यां महाक्षयः ॥ ५७ ॥
इत्येते पितरो देवाः सोमपाः सोमवर्द्धनाः ।
आर्त्तवा ऋतवो यस्मात्ते देवा भावयन्ति च ॥ ५८ ॥
अतः पितॄन् प्रवक्ष्यामि मासश्राद्धभुजस्तु ये ।
तेषां गतिञ्च सत्त्वञ्च गतिं श्राद्धस्य चैव हि ॥ ५९ ॥
न मृतानाङ्गतिः शक्या विज्ञातुं पुनरागतिः ।
तपसापि प्रसिद्धेन किं पुनर्मांसचक्षुषा ॥ ६० ॥
श्राद्धदेवान् पितॄनेतान् पितरो लौकिकाः स्मृताः ।
देवाः सौम्याश्च यज्वानः सर्वे चैव ह्ययोनिजाः ॥ ६१ ॥
देवास्ते पितरः सर्व्वे देवास्तान् भावयन्त्युत ।
मनुष्याः पितरश्चैव तेभ्योऽन्ये लौकिकाः स्मृताः ॥ ६२ ॥
पिता पितामहश्चैव तथैव प्रपितामहः ।
यज्वानो ये तु सोमेन सोमवन्तस्तु ते स्मृताः ॥ ६३ ॥
ये यज्वानः स्मृतास्तेषां ते वै बर्हिषदः स्मृताः ।
कर्म्मस्वेतेषु युक्तास्ते तृप्यन्त्यादेहसम्भवात् ॥ ६४ ॥
अग्निष्वात्ताः स्मृतास्तेषां होमिनो याज्ययाजिनः ।
ये वाप्याश्रमधर्म्मेण प्रस्थानेषु व्यवस्थिताः ॥ ६५ ॥
अन्ते च नैव सीदन्ति श्रद्धायुक्तेन कर्म्मणा ।
ब्रह्मचर्य्येण तपसा यज्ञेन प्रजया च वै ॥ ६६ ॥
श्रद्धया विद्यया चैव प्रदानेन च सप्तधा ।
कर्म्मस्वेतेषु ये युक्ता भवन्त्यादेहपातनात् ॥ ६७ ॥
देवैस्तैः पितृभिः सार्द्धं सूक्ष्मकैः सोमपायकैः ।
स्वर्गता दिवि मोदन्ते पितृमन्तमुपासते ॥ ६८ ॥

प्रजावतां प्रशंसैव स्मृता सिद्धा क्रियावतां ।
तेषां निवापदत्तान्नं तत्कुलीनैश्च बान्धवैः ॥ ६८ ॥
मासं श्राद्धभुजस्तृप्तिं लभन्ते सोमलौकिकाः ।
एते मनुष्याः पितरो मासि श्राद्धभुजस्तु ते ॥ ७० ॥
तेभ्योऽपरे तु ये चान्ये सङ्कीर्णाः कर्म्मयोनिषु ।
भ्रष्टाश्चाश्रमधर्म्मेभ्यः स्वधास्वाहाविवर्ज्जिताः ॥ ७१ ॥
भिन्नदेहा दुरात्मानः प्रेतभूता यमक्षये ।
स्वकर्म्माण्येव शोचन्ति यातनास्थानमागताः ॥ ७२ ॥
दीर्घायुषोऽतिशुष्काश्च विवर्णाश्च (१) विवाससः ।
क्षुत्पिपासापरीताश्च विद्रवन्ति इतस्ततः ॥ ७३ ॥
सरित्सरस्तडागानि वापीश्चैव जलेप्सवः ।
परान्नानि च लिप्सन्ते काम्यमानास्ततस्ततः ॥ ७४ ॥
स्थानेषु पाच्यमानाश्च यातायातेषु तेषु वै ।
शाल्मलौ वैतरण्याञ्च कुम्भीपाकेषु तेषु च ॥ ७५ ॥
करम्भवालुकायाञ्च असिपत्रवने तथा ।
शिलासम्पेषणे चैव पात्यमानाः स्वकर्म्मभिः ॥ ७६ ॥
तत्र स्थानानि तेषां वै दुःखानामप्यनाकवत् ।
तेषां लोकान्तरस्थानां विविधैर्नामगोत्रतः ॥ ७७ ॥
भूम्यापसव्यदर्भेषु दत्त्वा पिण्डत्रयन्तु वै ।
पतितांस्तर्पयन्ते च प्रेतस्थानेष्वधिष्ठिताः ॥ ७८ ॥
अप्राप्ता यातनास्थानं सृष्टा ये भुवि पञ्चधा ।
पश्वादिस्थावरान्तेषु भूतानां तेषु कर्म्मसु ॥ ७९ ॥

१ स्मश्रुलाश्चेति ख० ।

नानारूपासु जातीषु (१) तिर्य्यग्योनिषु जातिषु।
यदाहारा भवन्त्येते तासु तास्विह योनिषु।
तस्मिंस्तस्मिंस्तदाहारं श्राद्धदत्तोपतिष्ठति (२) ॥ ८० ॥
काले न्यायागतं पात्रं विधिना प्रतिपादितं।
प्राप्नोत्यन्नं यथादत्तं बन्धुर्यंत्रावतिष्ठते ॥ ८१ ॥
यथा गोषु प्रनष्टासु वत्सो विन्दति मातरं।
तथा श्राद्धे तद्दिष्टानां मन्त्रः प्रापयते पितॄन् ॥ ८२ ॥
एवं ह्यविकलं श्राद्धं श्राद्धदत्तन्तु मन्त्रतः।
सनत्कुमारः प्रोवाच पश्यन् दिव्येन चक्षुषा।
गतागतिज्ञः प्रेतानां प्राप्तश्राद्धस्य चैव हि ॥ ८३ ॥
वह्नीकाश्चोष्मपाश्चैव दिवाकीर्त्याश्च ते स्मृताः।
कृष्णपक्षस्त्वहस्तेषां शुक्लः स्वप्नाय शर्व्वरी ॥ ८४ ॥
इत्येते पितरो देवा देवाश्च पितरश्च वै।
ऋतात्तेवा अनेके तु अन्योन्यपितरः स्मृताः ॥ ८५ ॥
एते तु पितरो देवा मानुषाः पितरश्च ये।
प्रीतेषु तेषु प्रीयन्ते श्रद्धायुक्तेन कर्म्मणा ॥ ८६ ॥
इत्येवं पितरः प्रोक्ताः पितॄणां सोमपायिनां।
एतत्पितृमतत्वं हि पुराणे निश्चयो मतः ॥ ८७ ॥
इत्यर्कपितृसोमानां ऐलस्य च समागमः।
सुधामृतस्य चावाप्तिः पितृणाञ्चैव तर्पणं ॥ ८८ ॥
पूर्णिमावास्ययोः कालः पितॄणां स्थानमेव च।
समासात्कीर्त्तितस्तुभ्यमेष सर्गः सनातनः ॥ ८९ ॥

१ दीर्घदकारान्तपाठ आर्षः। २ पाठोऽयं न समीचीनत्वेन प्रतिभाति।

वैश्वरूप्यन्तु सर्व्वस्य कथितस्त्वैकदेशिकं ।
न शक्यं परिसंख्यातुं श्रद्धेयं भूतिमिच्छता ॥ ९० ॥
स्वायम्भुवस्य ह्येत्येष (१) सर्गः क्रान्तो मयाद्य वै ।
विस्तरेणानुपूर्व्या च भूयः किं वर्णयाम्यहं ॥ ९१ ॥

इति श्रीमहापुराणे वायुप्रोक्ते पितृवर्णनं नाम
षट्पञ्चाशोऽध्यायः ।

१ स्वायम्भुवेऽन्तरे पूर्व्वं इति ख०।

## अथ सप्तपञ्चाशोऽध्यायः।

---000---

### यज्ञवर्णनं।

ऋषय ऊचुः। चतुर्युगानि यान्यासन् पूर्व्वं स्वायम्भुवेऽन्तरे।
तेषां निसर्गं तत्त्वञ्च श्रोतुमिच्छामि विस्तरात्॥ १॥
सूत उवाच। पृथिव्यादिप्रसङ्गेन यन्मया प्रागुदाहृतं।
तेषाञ्चतुर्युगं ह्येतत् प्रवक्ष्यामि निबोधत॥ २॥
संख्ययेह प्रसंख्याय विस्ताराच्चैव सर्व्वशः।
युगञ्च युगभेदञ्च युगधर्म्मन्तथैव च॥ ३॥
युगसन्ध्यंशकञ्चैव युगसन्धानमेव च।
षट्प्रकारयुगाख्यानां प्रवक्ष्यामीह तत्त्वतः॥ ४॥
लौकिकेन प्रमाणेन निष्पन्नोऽब्दस्तु मानुषः।
तेनाब्देन प्रसंख्याय वक्ष्यामीह चतुर्युगं॥ ५॥
निमेषकालः काष्ठा च कलाश्चापि मुहूर्त्तकाः।
निमेषकालतुल्यं हि विद्याल्लघ्वक्षरञ्च यत्॥ ६॥
काष्ठा निमेषा दश पञ्च चैव
त्रिंशच्च काष्ठा गणयेत् कलास्ताः।
त्रिंशत् कलाश्चैव भवेन्मुहूर्त्त-
स्तत्त्रिंशता रात्र्यहनी समेते॥ ७॥
अहोरात्रे विभजते सूर्य्यो मानुषदैविके।

तत्राहः कर्म्मचेष्टायां रात्रिः स्वप्नाय कल्पते ॥ ८ ॥
पित्र्य रात्र्यहणी मासः प्रविभागस्तयोः पुनः।
कृष्णपक्षस्त्वहस्तेषां शुक्लः स्वप्नाय शर्व्वरी ॥ ९ ॥
त्रिंशच्च मानुषा मासाः पित्र्यो मासश्च स स्मृतः।
शतानि त्रीणि मासानां षष्ट्या चाप्यधिकानि वै।
पित्र्यः संवत्सरो ह्येष मानुषेण विभाव्यते ॥ १० ॥
मानुषेणैव मानेन वर्षाणां यच्छतं भवेत्।
पितॄणां त्रीणि वर्षाणि संख्यातानीह तानि वै।
चत्वारश्चाधिका मासाः पित्र्ये चैवेह कीर्त्तिताः ॥ ११ ॥
लौकिकेनैव मानेन अब्दो यो मानुषः स्मृतः।
एतद्दिव्यमहोरात्रं शास्त्रेऽस्मिन् निश्चयो मतः ॥ १२ ॥
दिव्ये रात्र्यहणी वर्षं प्रविभागस्तयोः पुनः।
अहस्तत्रोदगयनं रात्रिः स्याद्दक्षिणायनं ॥ १३ ॥
ये ते रात्र्यहणी दिव्ये प्रसंख्याते तयोः पुनः।
त्रिंशच्च तानि वर्षाणि दिव्यो मासस्तु स स्मृतः ॥ १४ ॥
मानुषञ्च शतं विद्धि दिव्यमासास्त्रयस्तु ते।
दश चैव तथाहानि दिव्यो ह्येष विधिः स्मृतः ॥ १५ ॥
त्रीणि वर्षशतान्येव षष्टिवर्षाणि यानि च।
दिव्यः संवत्सरो ह्येष मानुषेण प्रकीर्त्तितः ॥ १६ ॥
त्रीणि वर्षसहस्राणि मानुषेण प्रमाणतः।
त्रिंशद्यानि तु वर्षाणि मतः सप्तर्षिवत्सरः ॥ १७ ॥
नव यानि सहस्राणि वर्षाणां मानुषाणि तु।
अन्यानि नवतिश्चैव क्रौञ्चः संवत्सरः स्मृतः ॥ १८ ॥

षट्त्रिंशत्तु सहस्राणि वर्षाणां मानुषाणि तु ।
वर्षानान्तु शतं ज्ञेयं दिव्यो ह्येष विधिः स्मृतः ॥ १९ ॥
त्रीण्येव नियुतान्येव वर्षाणां मानुषाणि च ।
षष्टिश्चैव सहस्राणि संख्यातानि तु संख्यया ।
दिव्यवर्षसहस्रन्तु प्राहुः संख्याविदो जनाः ॥ २० ॥
इत्येवमृषिभिर्गीतं दिव्यया संख्ययान्वितं ।
दिव्येनैव प्रमाणेन युगसंख्याप्रकल्पनं ॥ २१ ॥
चत्वारि भारते वर्षे युगानि कवयो विदुः ।
पूर्व्वं कृतयुगं नाम ततस्त्रेता विधीयते ।
द्वापरश्च कलिश्चैव युगान्येतानि कल्पयेत् ॥ २२ ॥
चत्वार्य्याहुः सहस्राणि वर्षाणान्तु कृतं युगं ।
तत्र तावच्छती सन्ध्या सन्ध्यांशश्च तथाविधः ॥ २३ ॥
इतरासु च सन्ध्यासु सन्ध्यांशेषु च वै त्रिषु ।
एकापायेन वर्त्तन्ते सहस्राणि शतानि च ॥ २४ ॥
त्रेता त्रीणि सहस्राणि संख्यैव परिकीर्त्त्यते ।
तस्यास्तु त्रिशती सन्ध्या सन्ध्यांशश्च तथाविधः ॥ २५ ॥
द्वापरं द्वे सहस्रे तु युगमाहुर्मनीषिणः ।
तस्यापि द्विशती सन्ध्या सन्ध्यांशः सन्ध्यया समः ॥ २६ ॥
कलिं वर्षसहस्रन्तु युगमाहुर्मनीषिणः ।
तस्याप्येकशती सन्ध्या सन्ध्यांशः सन्ध्यया समः ॥ २७ ॥
एषा द्वादशसाहस्री युगाख्या परिकीर्त्तिता ।
कृतन्त्रेता द्वापरश्च कलिश्चैव चतुष्टयं ॥ २८ ॥
अत्र संवत्सराः सृष्टा मानुषेण प्रमाणतः ।

कृतस्य तावद्वक्ष्यामि वर्षाणां तत्प्रमाणतः ॥ २९ ॥
सहस्राणां शतान्यत्र चतुर्दश तु संख्यया ।
चत्वारिंशत् सहस्राणि कलिकालयुगस्य तु ॥ ३० ॥
एवं संख्यातकालस्य कालेष्विह विशेषतः ।
एव चतुर्युगः कालो विना सन्ध्यांशकैः स्मृतः ॥ ३१ ॥
चत्वारिंशत्त्रीणि चैव नियुतानि च संख्यया ।
विंशतिश्च सहस्राणि ससन्ध्यांशश्चतुर्युगः ॥ ३२ ॥
एवं चतुर्युगाख्या तु साधिका ह्येकसप्ततिः ।
कृतत्रेतादियुक्ता सा मनोरन्तरमुच्यते ॥ ३३ ॥
मन्वन्तरस्य संख्या तु वर्षाग्रेण निबोधत ।
त्रिंशत्कोट्यस्तु वर्षाणां मानुषेण प्रकीर्तिताः ॥ ३४ ॥
सप्तषष्टिस्तथान्यानि नियुतान्यधिकानि तु ।
विंशतिश्च सहस्राणि कालोऽयं साधिकां विना ॥ ३५ ॥
मन्वन्तरस्य संख्यैषा संख्याविद्भिर्द्विजैः स्मृता ।
मन्वन्तरस्य कालोऽयं युगैः सार्द्धं प्रकीर्तितः ॥ ३६ ॥
चतुःसहस्रयुक्तं वै प्रथमन्तत् कृतं युगं ।
त्रेतावशिष्टं वक्ष्यामि द्वापरं कलिमेव च ॥ ३७ ॥
युगपत्समवेतार्थौ द्विधा वक्तुं न शक्यते ।
क्रमागतं मया ह्येतत्तुभ्यं प्रोक्तं युगद्वयं ।
ऋषिवंशप्रसङ्गेन व्याकुलत्वात्तथैव च ॥ ३८ ॥
तत्र त्रेतायुगस्यादौ मनुः सप्तर्षयश्च ते ।
श्रौतं स्मार्त्तञ्च धर्म्मञ्च ब्रह्मणा च प्रचोदितं ॥ ३९ ॥
दाराग्निहोत्रसंयोगमृग्यजुःसामसंज्ञितं ।

इत्यादिलक्षणं श्रौतं धर्म्मं सप्तर्षयोऽब्रुवन् ॥ ४० ॥
परम्परागतं धर्म्मं स्मार्त्तञ्चाचारलक्षणं ।
वर्णाश्रमाचारयुतं मनुः स्वायम्भुवोऽब्रवीत् ॥ ४१ ॥
सत्येन ब्रह्मचर्य्येण श्रुतेन तपसा च वै ।
तेषां सुतप्ततपसामार्षेयेण क्रमेण तु ॥ ४२ ॥
सप्तर्षीणां मनोश्चैव आद्ये त्रेतायुगस्य तु ।
अबुद्धिपूर्व्वकं तेषामक्रियापूर्व्वमेव च ॥ ४३ ॥
अभिव्यक्तास्तु ते मन्त्रास्तारकाद्यैर्निदर्शनैः ।
आदिकल्पे तु देवानां प्रादुर्भूतास्तु ते स्वयं ॥ ४४ ॥
प्रणाशे (१) त्वथ सिद्धीनामन्यासाञ्च प्रवर्तनं ।
आसन् मन्त्रा व्यतीतेषु ये कल्पेषु सहस्रशः ।
ते मन्त्रा वै पुनस्तेषां प्रतिभांससमुत्थिताः ॥ ४५ ॥
ऋचो यजूंषि सामानि मन्त्राश्चाथर्व्वणानि च ।
सप्तर्षिभिस्तु ते प्रोक्ताः स्मार्तं धर्म्मं मनुर्जगौ ॥ ४६ ॥
त्रेतादौ संहिता वेदाः केवला धर्म्मशेषतः ।
संरोधादायुषश्चैव व्यस्यन्ते द्वापरेषु ते ॥ ४७ ॥
ऋषयस्तपसा देवाः कलौ च द्वापरेषु वै ।
अनादिनिधना दिव्याः पूर्व्वं सृष्टाः स्वयम्भुवा ॥ ४८ ॥
सधर्म्माः सप्रजाः साङ्गा यथाधर्म्मं युगे युगे ।
विक्रीडन्ते समानार्था वेदवादा यथायुगं ॥ ४९ ॥
आरम्भयज्ञाः क्षत्रस्य हविर्यज्ञा विशाम्पतेः ।
परिचारयज्ञाः शूद्रास्तु जपयज्ञा द्विजोत्तमाः ॥ ५० ॥

---

पाठोऽयं न समीचीनः ।

तथा प्रमुदिता वर्णास्त्रेतायां धर्म्मपालिताः ।
क्रियावन्तः प्रजावन्तः समृद्धाः सुखिनस्तथा ॥ ५१ ॥
ब्राह्मणाननुवर्त्तन्ते क्षत्रियाः क्षत्रियान् विशः ।
वैश्यानुवर्त्तिनः शूद्राः परस्परमनुव्रताः ॥ ५२ ॥
शुभाः प्रवृत्तयस्तेषां धर्म्मा वर्णाश्रमास्तथा ।
सङ्कल्पितेन मनसा वाचोक्तेन स्वकर्म्मणा ।
त्रेतायुगे त्वविकलः कर्म्मारम्भः प्रसिध्यति ॥ ५३ ॥
आयुर्मेधा बलं रूपमारोग्यं धर्म्मशीलता ।
सर्व्वसाधारणा ह्येते त्रेतायां वै भवन्त्युत ॥ ५४ ॥
वर्णाश्रमव्यवस्थानं तेषां ब्रह्मा तथाऽकरोत् ।
पुनः प्रजास्तु ता मोहात्तान् धर्म्मान्न ह्यपालयन् ॥ ५५ ॥
परस्परविरोधेन मनुन्ताः पुनरन्वयुः ।
मनुः स्वायम्भुवो दृष्ट्वा याथातथ्यं प्रजापतिः ॥ ५६ ॥
ध्यात्वा तु शतरूपायाः पुमान् स उदपादयत् ।
प्रियव्रतोत्तानपादौ प्रथमन्तौ महीपती ॥ ५७ ॥
ततः प्रभृति राजान उत्पन्ना दण्डधारिणः ।
प्रजानां रञ्जनाच्चैव राजानस्त्वभवन्नृपाः ॥ ५८ ॥
प्रच्छन्नपापा ये जेतुमशक्या मनुजा भुवि ।
धर्म्मसंस्थापनार्थाय तेषां शास्ते नृपो मया ॥ ५९ ॥
वर्णानां प्रविभागाश्च त्रेतायां संप्रकीर्त्तिताः ।
संहिताश्च ततो मन्त्रा ऋषिभिर्ब्राह्मणैस्तु ते ॥ ६० ॥
यज्ञः प्रवर्त्तितश्चैव तदा ह्येव तु दैवतैः ।
यामैः शुक्लैर्जपैश्चैव सर्व्वसम्भारसंवृतैः ॥ ६१ ॥

सार्द्धं विश्वभुजा चैव देवेन्द्रेण महौजसा।
स्वायम्भुवेऽन्तरे देवैर्यज्ञास्ते प्राक् प्रवर्त्तिताः॥ ६२॥
सत्यं जपस्तपो दानं त्रेतायां धर्म्म उच्यते।
क्रिया धर्म्मश्च ह्रसते सत्यधर्म्मः प्रवर्त्तते॥ ६३॥
प्रजायन्ते ततः शूरा आयुष्मन्तो महाबलाः।
न्यस्तदण्डमहाभागा यज्वानो ब्रह्मवादिनः॥ ६४॥
पद्मपत्रायताक्षाश्च पृथूरस्काः सुसंहिताः।
सिंहान्तका महासत्त्वाः (१) मत्तमातङ्गगामिनः॥ ६५॥
महाधनुर्द्धराश्चैव त्रेतायां चक्रवर्त्तिनः।
सर्व्वलक्षणसम्पन्ना न्यग्रोधपरिमण्डलाः॥ ६६॥
न्यग्रोधौ तौ स्मृतौ बाहू व्यामो न्यग्रोध उच्यते।
व्यामेनैवोच्छ्रयाद् यस्य सम ऊर्द्धन्तु देहिनः।
समुच्छ्रयपरीणाहो ज्ञेयो न्यग्रोधमण्डलः (२)॥ ६७॥
चक्रं रथो मणिर्भार्य्या निधिरश्वा गजास्तथा।
प्रमातिशयरत्नानि सर्व्वेषाञ्चक्रवर्त्तिनां॥ ६८॥
चक्रं रथो मणिः खड्गं धनूरत्नञ्च पञ्चमं।
केतुर्निधिश्च सप्तैते प्राणहीनाः प्रकीर्त्तिताः॥ ६९॥
भार्य्या पुरोहितश्चैव सेनानी रथकृच्च यः।
मन्त्र्यश्वः कलभश्चैव प्राणिनः सप्तकीर्त्तिताः॥ ७०॥
रत्नान्येतानि दिव्यानि संसिद्धानि महात्मनां।
चतुर्द्दश विधेयानि सर्व्वेषां चक्रवर्त्तिनां॥ ७१॥

१ सिंहात्मका इति ख॰।
२ न्यग्रोधावित्यादिः न्यग्रोधपरिमण्डल इत्यन्तः पाठः ख॰, ङ॰ पुस्तकद्वये नास्ति।

विष्णोरंशेन जायन्ते पृथिव्यां चक्रवर्त्तिनः।
मन्वन्तरेषु सर्व्वेषु अतीतानागतेषु वै ॥ ७२॥
भूतभव्यानि यानीह वर्त्तमानानि यानि च।
त्रेतायुगादिकेष्वत्र जायन्ते चक्रवर्त्तिनः ॥ ७३ ॥
भद्राणीमानि तेषां वै भवन्तीह महीक्षितां।
अद्भुतानि च चत्वारि बलं धर्म्मः सुखन्धनं ॥ ७४ ॥
अन्योन्यस्याविरोधेन प्राप्यन्ते वै नृपैः समं।
अर्थो धर्म्मश्च कामश्च यशो विजय एव च ॥ ७५ ॥
ऐश्वर्य्येणाणिमाद्येन प्रभुशक्त्या तथैव च।
अन्येन तपसा चैव ऋषीनभिभवन्ति च।
बलेन तपसा चैव देवदानवमानुषान् ॥ ७६ ॥
लक्षणैश्चापि जायन्ते शरीरस्थैरमानुषैः।
केशस्थिता ललाटोर्णा जिह्वा चास्यप्रमार्जनी।
ताम्रप्रभोष्ठदन्तोष्ठाः श्रीवत्साश्चोर्द्ध्वरोमशाः ॥ ७७ ॥
आजानुबाहवश्चैव जालहस्ता वृषाङ्किताः।
न्यग्रोधपरिणाहाश्च सिंहस्कन्धाः सुमेहनाः।
गजेन्द्रगतयश्चैव महाहनव एव च ॥ ७८ ॥
पादयोश्चक्रमत्स्यौ तु शङ्खपद्मौ तु हस्तयोः।
पञ्चाशीतिसहस्राणि ते भवन्त्यजरा नृपाः ॥ ७९ ॥
असङ्गा गतयस्तेषाञ्चतस्रश्चक्रवर्त्तिनां।
अन्तरीक्षे समुद्रे च पाताले पर्व्वतेषु च ॥ ८० ॥
इज्या दानं तपः सत्यं त्रेतायां धर्म्म उच्यते।
तदा प्रवर्त्तते धर्म्मो वर्णाश्रमविभागशः ॥ ८१ ॥

मर्य्यादास्थापनार्थञ्च दण्डनीतिः प्रवर्त्तते ।
हृष्टपुष्टाः प्रजाः सर्व्वा अरोगाः पूर्णमानसाः ॥ ८२ ॥
एको वेदश्चतुष्पादस्त्रेतायुगविधौ स्मृतः ।
त्रीणि वर्षसहस्राणि तदा जीवन्ति मानवाः ॥ ८३ ॥
पुत्रपौत्रसमाकीर्णा म्रियन्ते च क्रमेण तु ।
एष त्रेतायुगे धर्म्मस्त्रेतासन्धौ निबोधत ॥ ८४ ॥
त्रेतायुगस्वभावस्तु सन्ध्यापादेन वर्त्तते ।
सन्ध्यायां वै स्वभावस्तु युगपादेन तिष्ठति ॥ ८५ ॥
शंश उवाच (१) । कथं त्रेतायुगमुखे यज्ञस्यासीत्प्रवर्तनं ।
पूर्व्वं स्वायम्भुवे सर्गे यथावत्तद्ब्रवीहि मे ॥ ८६ ॥
अन्तर्हितायां सन्ध्यायां सार्द्धं कृतयुगेन वै ।
कलाख्यायां प्रवृत्तायां प्राप्ते त्रेतायुगे तदा ।
वर्णाश्रमव्यवस्थानं कृतवन्तश्च वै पुनः ॥ ८७ ॥
सम्भारांस्तांश्च सम्भृत्य कथं यज्ञः प्रवर्तितः ।
एतत् श्रुत्वाऽब्रवीत्सूतः श्रूयतां शंशपायन ॥ ८८ ॥
यथा त्रेतायुगमुखे यज्ञस्यासीत्प्रवर्तनं ।
ओषधीषु च जातासु प्रवृत्ते वृष्टिसर्जने ।
प्रतिष्ठितायां वार्त्तायां गृहाश्रमपुरेषु च ॥ ८९ ॥
वर्णाश्रमव्यवस्थानं कृत्वा मन्त्रांश्च संहितां ।
मन्त्रान् संयोजयित्वाथ इहामुत्रेषु कर्म्मसु ॥ ९० ॥
तथा विश्वभुगिन्द्रस्तु यज्ञं प्रावर्तयत्तदा ।
दैवतैः सहितः सर्व्वैः सर्व्वसम्भारसम्भृतं ॥ ९१ ॥

---

१ शांशपायन उवाचेति क० । वैशम्पायन उवाचेति ख० ।

अथाश्वमेधे वितते समाजग्मुर्महर्षय: ।
यजन्ते पशुभिर्मेध्यै: हुत्वा (१) सर्व्वे समागता: ॥ ९२ ॥
कर्म्मव्यग्रेषु ऋत्विक्षु सतते यज्ञकर्म्मणि ।
सम्प्रगीतेषु तेष्वेवमागमेष्वथ सत्वरं ॥ ९३ ॥
परिक्रान्तेषु लघुषु अध्वर्य्युवृषभेषु च ।
आलब्धेषु च मेध्येषु तथा पशुगणेषु वै ॥ ९४ ॥
हविष्यग्नौ हूयमाने देवानां देवहोतृभिः ।
आहूतेषु च देवेषु यज्ञभाक्षु महात्मसु ॥ ९५ ॥
य इन्द्रियात्मका देवा यज्ञभाजस्तथा तु ये ।
तान्यजन्ते तदा देवाः कल्पादिषु भवन्ति ये ॥ ९६ ॥
अध्वर्य्यवः प्रैषकाले व्युत्थिता ये महर्षयः ।
महर्षयस्तु तान् दृष्ट्वा दीनान् पशुगणान् स्थितान् ।
पप्रच्छुरिन्द्रं सम्भूय कोऽयं यज्ञविधिस्तव ॥ ९७ ॥
अधर्म्मो बलवानेष हिंसाधर्म्मेप्सया तव ।
नेष्टः पशुवधस्त्वेष तव यज्ञे सुरोत्तम ॥ ९८ ॥
अधर्मो धर्म्मघाताय प्रारब्धः पशुभिस्त्वया ।
नायं धर्मो ह्यधर्मोऽयं न हिंसा धर्म्म उच्यते ॥ ९९ ॥
आगमेन भवान् यज्ञं करोतु यदिहेच्छसि ।
विधिदृष्टेन यज्ञेन धर्म्मेणाव्ययहेतुना ।
यज्ञवीजैः सुरश्रेष्ठ येषु हिंसा न विद्यते ॥ १०० ॥
त्रिवर्षपरमं कालमुषितैरप्ररोहिभिः ।
एष धर्मो महानिन्द्र स्वयम्भुविहितः पुरा ॥ १०१ ॥

---

१ जग्वरिति ङ० ।

एवं विश्वभुगिन्द्रस्तु मुनिभिस्तत्त्वदर्शिभिः ।
जङ्गमैः स्थावरैर्वेति कैर्यष्टव्यमिहोच्यते ॥ १०२ ॥
ते तु खिन्ना विवादेन तत्त्वयुक्ता महर्षयः ।
सन्धाय वाक्यमिन्द्रेण पप्रच्छुरीश्वरं वसुं ॥ १०३ ॥
ऋषय ऊचुः । महाप्राज्ञ कथं दृष्टस्त्वया यज्ञविधिर्नृप ।
उत्तानपादे प्रब्रूहि संशयं छिन्धि नः प्रभो ॥ १०४ ॥
श्रुत्वा वाक्यं ततस्तेषामविचार्य्य बलाबलं ।
वेदशास्त्रमनुस्मृत्य यज्ञतत्त्वमुवाच ह ।
यथोपदिष्टैर्यष्टव्यमितिहोवाच पार्थिवः ॥ १०५ ॥
यष्टव्यं पशुभिर्मेध्यैरथ वीजैः फलैस्तथा ।
हिंसास्वभावो यज्ञस्य इति मे दर्शयत्यसौ ॥ १०६ ॥
यथेह संहितामन्त्रा हिंसालिङ्गा महर्षिभिः ।
दीर्घेण तपसा युक्तैर्दर्शनैस्तारकादिभिः ।
तत्प्रामाण्यान्मया चोक्तं तस्मान्मा मन्तुमर्हथ ॥ १०७ ॥
यदि प्रमाणं तान्येव मन्त्रवाक्यानि वै द्विजाः ।
तदा प्रावर्त्ततां यज्ञो ह्यन्यथा नोऽनृतं वचः ।
एवं कृतोत्तरास्ते वै युक्तात्मानस्तपोधनाः ॥ १०८ ॥
अवश्य भवनं दृष्ट्वा तमथं वाग्यतो भव ।
मिथ्यावादी नृपो यस्मात् प्रविवेश रसातलं ॥ १०९ ॥
इत्युक्तमात्रे नृपतिः प्रविवेश रसातलं ।
ऊर्द्ध्वचारी वसुर्भूत्वा रसातलचरोऽभवत् ॥ ११० ॥
वसुधातलवासी तु तेन वाक्येन सोऽभवत् ।
धर्म्माणां संशयच्छेत्ता राजा वसुरधागतः ॥ १११ ॥

तस्मान्न वाच्यमेकेन बहुज्ञेनापि संशयः ।
बहुद्वारस्य धर्मस्य सूक्ष्मादुरमुपागतिः ॥ ११२ ॥
तस्मान्न निश्चयाद्वक्तुं धर्मः शक्यस्तु केनचित् ।
देवानृषीनुपादाय स्वायम्भुवमृते मनुं ॥ ११३ ॥
तस्मान्न हिंसा धर्मस्य द्वारमुक्तं महर्षिभिः ।
ऋषिकोटिसहस्राणि कर्मभिः स्वैर्दिवं ययुः ॥ ११४ ॥
तस्मान्न दानं यज्ञं वा प्रशंसन्ति महर्षयः ।
तुच्छं मूलं फलं शाकमुदपात्रं तपोधनाः ।
एवं दत्त्वा विभवतः स्वर्गलोके प्रतिष्ठिताः ॥ ११५ ॥
अद्रोहश्चाप्यलोभश्च दमो भूतदया तपः ।
ब्रह्मचर्य्यं तथा सत्यमनुक्रोशः क्षमा धृतिः ।
सनातनस्य धर्मस्य मूलमेतद्दुरासदं (१) ॥ ११६ ॥
धर्ममन्त्रात्मको यज्ञस्तपश्चानशनात्मकं।
यज्ञेन देवानाप्नोति वैराग्यं तपसा पुनः ॥ ११७ ॥
ब्राह्मण्यं कर्मसंन्यासाद्वैराग्यात् प्रेक्षते लयं ।
ज्ञानात् प्राप्नोति कैवल्यं पञ्चैता गतयः स्मृताः ॥ ११८ ॥
एवं विवादः सुमहान् यज्ञस्यासीत् पवर्त्तने ।
ऋषीणां देवतानाञ्च पूर्वं स्वायम्भुवेऽन्तरे ॥ ११९ ॥
ततस्ते ऋषयो दृष्ट्वाऽहृतं धर्म्मं बलेन तु ।
वसोर्वाक्यमनादृत्य जग्मुस्ते वै यथागताः ॥ १२० ॥
गतेषु देवसङ्घेषु देवा यज्ञमवाप्नुयुः ।
श्रूयन्ते हि तपःसिद्धा ब्रह्मक्षत्रमया नृपाः ॥ १२१ ॥

---

१ मूलमेतं पद बुधा इति ख० ।

प्रियव्रतोत्तानपादौ ध्रुवो मेधातिथिर्वसुः ।
सुमेधा विरजाश्चैव शङ्खपाद्रज एव च ।
प्राचीनवर्हिः पर्जन्यो हविर्धानादयो नृपाः ॥ १२२ ॥
एते चान्ये च बहवो नृपाः सिद्धा दिवङ्गताः ।
राजर्षयो महासत्त्वा येषां कीर्त्तिः प्रतिष्ठिता ॥ १२३ ॥
तस्माद्विशिष्यते यज्ञात्तपः सर्वेषु कारणैः ।
ब्रह्मणा तपसा सृष्टं जगद्विश्वमिदं पुरा ॥ १२४ ॥
तस्मान्नात्येति तद्यज्ञं तपोमूलमिदं स्मृतं ।
यज्ञप्रवर्त्तनं ह्येवमतः स्वायम्भुवेऽन्तरे ।
ततः प्रभृति यज्ञोऽयं युगैः सह व्यवर्तत (१) ॥ १२५॥

इति श्रीमहापुराणे वायुप्रोक्ते यज्ञप्रवर्त्तनं नाम
सप्तपञ्चाशोऽध्यायः ॥

---

१ युगैः सार्द्धं प्रवर्त्तत इति ख० ।

## अथाष्टपञ्चाशोऽध्यायः।

———000———

### चतुर्युगाख्यानं।

सूत उवाच। अत ऊर्द्धं प्रवक्ष्यामि द्वापरस्य विधिं पुनः।
तत्र त्रेतायुगे क्षीणे द्वापरं प्रतिपद्यते ॥ १ ॥
द्वापरादौ प्रजानान्तु सिद्धिस्त्रेतायुगे तु या।
परिवृत्ते युगे तस्मिन् ततः सा संप्रणश्यति ॥ २ ॥
ततः प्रवर्त्तते तासां प्रजानां द्वापरे पुनः।
लोभोऽधृतिर्वणिग्युद्ध तत्त्वानामविनिश्चयः। ३ ॥
सम्भेदश्चैव वर्णानां कार्य्याणाञ्चाविनिर्णयः।
यज्ञौषधेः पशोर्दण्डो मदो दम्भोऽक्षमाऽबलं।
एषां रजस्तमोयुक्ता प्रवृत्तिर्द्वापरे स्मृता ॥ ४ ॥
आद्ये कृते च धर्म्मोऽस्ति त्रेतायां सम्प्रपद्यते।
द्वापरे व्याकुलीभूत्वा प्रणश्यति कलौ युगे ॥ ५ ॥
वर्णानां विपरिध्वंसः संकीर्य्यते तथाश्रमः।
द्वैधमुत्पद्यते चैव युगे तस्मिन् श्रुतौ स्मृतौ ॥ ६ ॥
द्वैधात् श्रुतेः स्मृतेश्चैव निश्चयो नाधिगम्यते।
अनिश्चयाधिगमनाद्धर्म्मतत्त्वं निगद्यते।
धर्म्मतत्त्वे तु भिन्नानां मतिभेदो भवेन्नृणां ॥ ७ ॥
परस्परविभिन्नैस्तैर्दृष्टीनां (१) विभ्रमेण च।

---

१ आत्मनामिति ख०।

अयं धर्मो ह्ययं नेति निश्चयो नाभिगम्यते (१) ॥ ८ ॥
कारणानाञ्च वैकल्यात् कारणस्याप्यनिश्चयात् ।
मतिभेदे च तेषां वै दृष्टीनां विभ्रमो भवेत् ॥ ९ ॥
ततो दृष्टिविभिन्नैस्तैः कृतं शास्त्रकुलन्त्विदं ।
एको वेदश्चतुष्पादस्त्रेतास्विह विधीयते ॥ १० ॥
संरोधादायुषश्चैव दृश्यते द्वापरेषु च ।
वेदव्यासैश्चतुर्धा तु व्यस्यते द्वापरादिषु ॥ ११ ॥
ऋषिपुत्रैः पुनर्वेदा भिद्यन्ते दृष्टिविभ्रमैः ।
मन्त्रब्राह्मणविन्यासैः स्वरवर्णविपर्य्ययैः ॥ १२ ॥
संहिता ऋग्यजुःसाम्नां संहन्यन्ते श्रुतर्षिभिः ।
सामान्याद् वैकृताच्चैव दृष्टिभिन्नैः क्वचित्क्वचित् ॥१३॥
ब्राह्मणं कल्पसूत्राणि मन्त्रप्रवचनानि च ।
अन्ये तु प्रहितास्तेषैः केचित्तान् प्रत्यवस्थिताः ॥ १४ ॥
द्वापरेषु प्रवर्त्तन्ते भिन्नवृत्ताश्रमा द्विजाः ।
एकमाध्वर्य्यवं पूर्व्वमासीद्द्वैधं पुनस्ततः ॥ १५ ॥
सामान्यविपरीतार्थैः कृतं शास्त्रकुलन्त्विदं ।
आध्वर्य्यवस्य प्रस्तावैर्बहुधा व्याकुलं कृतं ॥ १६ ॥
तथैवाथर्वऋक्साम्नां विकल्पैश्चाप्यसंक्षयैः ।
व्याकुलं द्वापरे भिन्नं क्रियते भिन्नदर्शनैः ॥ १७ ॥
तेषां भेदाः प्रभेदाश्च विकल्पैश्चाप्यसंक्षयाः (२) ।
द्वापरे सम्प्रवर्तन्ते विनश्यन्ति पुनः कलौ ॥ १८ ॥

१ नाधिगम्यत इति ख० । २ संकल्पैश्चाप्र संक्षया इति ख० ।

तेषां विपर्य्ययाच्चैव भवन्ति द्वापरे पुनः ।
अवृष्टिर्मरणञ्चैव तथैव व्याध्युपद्रवाः ॥ १९ ॥
वाङ्मनःकर्म्मजैर्दुःखैर्निर्वेदो जायते पुनः ।
निर्व्वेदाज्जायते तेषां दुःखमोक्षविचारणा ॥ २० ॥
विचारणाच्च वैराग्यं वैराग्याद्दोषदर्शनं ।
दोषाणां दर्शनाच्चैव द्वापरे ज्ञानसम्भवः ॥ २१ ॥
तेषाञ्च (१) मानिनां पूर्वमाद्ये स्वायम्भुवेऽन्तरे ।
उत्पद्यन्ते हि शास्त्राणां द्वापरे परिपन्थिनः ॥ २२ ॥
आयुर्वेदविकल्पाश्च अङ्गानां ज्योतिषस्य च ।
अर्थशास्त्रविकल्पश्च हेतुशास्त्रविकल्पनं ॥ २३ ॥
स्मृतिशास्त्रप्रभेदाश्च प्रस्थानानि पृथक् पृथक् ।
द्वापरेष्वभिवर्त्तन्ते मतिभेदास्तथा नृणां ॥ २४ ॥
मनसा कर्म्मणा वाचा कृच्छ्राद्वार्त्ता प्रसिद्ध्यति ।
द्वापरे सर्व्वभूतानां कायक्लेशपुरस्कृता ॥ २५ ॥
लोभोऽधृतिर्वणिग्युद्धं तत्त्वानामविनिश्चयः ।
वेदशास्त्रप्रणयनं धर्म्माणां शङ्करस्तथा ॥ २६ ॥
द्वापरेषु प्रवर्तन्ते रोगो लोभो वधस्तथा ।
वर्णाश्रमपरिध्वंसाः कामद्वेषौ तथैव च ॥ २७ ॥
पूर्णे वर्षसहस्रे द्वे परमायुस्तथा नृणां ।
निःशेषे द्वापरे तस्मिन् तस्य सन्ध्या तु पादतः ॥ २८ ॥
प्रतिष्ठते गुणैर्हीनो धर्मोऽसौ द्वापरस्य तु ।
तथैव सन्ध्यापादेन अंशस्तस्यावतिष्ठते ॥ २९ ॥

---

१ तेषाञ्चेति ट० ।

द्वापरस्य च वर्षे या तिष्यस्य तु निबोधत ।
द्वापरस्यांशशेषे तु प्रतिपत्तिः कलेरतः ॥ ३० ॥
हिंसासूयानृतं माया वधश्चैव तपस्विनां ।
एते स्वभावास्तिष्यस्य साधयन्ति च वै प्रजाः । ३१ ॥
एष धर्म्मः क्षतः क्षत्स्नो धर्म्मश्च परिहीयते ॥
मनसा कर्म्मणा स्तुत्या वार्त्ता सिध्यति वा न वा ॥ ३२ ॥
कलौ प्रमारको रोगः सततं क्षुद्भयानि वै ।
अनावृष्टिभयं घोरं दर्शनञ्च विपर्य्ययं ॥ ३३ ॥
न प्रमाणं स्मृतेरस्ति तिष्ये लोके युगे युगे ।
गर्भस्थो म्रियते कश्चिद्यौवनस्थस्तथापरः ।
स्थाविरे मध्यकौमारे म्रियन्ते वै कलौ प्रजाः ॥ ३४ ॥
अधार्म्मिकास्त्वनाचारा मोहकोपाल्पतेजसः (१) ।
अनृतब्रुवश्च सततन्तिष्ये जायन्ति वै प्रजाः ॥ ३५ ॥
दुरिष्टैर्दुरधीतैश्च दुराचारैर्दुरागमैः ।
विप्राणां कर्म्मदोषैस्तैः प्रजानां जायते भयं ॥ ३६ ॥
हिंसा माया तथेर्ष्या च क्रोधोऽसूयाऽक्षमाऽनृतं ।
तिष्ये भवन्ति जन्तूनां रागो लोभश्च सर्व्वशः ॥ ३७ ॥
संक्षोभो जायतेऽत्यर्थं कलिमासाद्य वै युगं ।
नाधीयन्ते तदा वेदा न यजन्ते द्विजातयः ।
उत्सीदन्ति नराश्चैव क्षत्रियाः सविशः क्रमात् ॥ ३८ ॥
शूद्राणामन्त्ययोनेस्तु सम्बन्धा ब्राह्मणैः सह ।
भवन्तीह कलौ तस्मिन् शयनासनभोजनैः ॥ ३९ ॥

---

१ अधार्म्मिकादाचाराल्लोभक्रोधाल्पतेजस इति ख० ।

राजानः शूद्रभूयिष्ठा (१) पाषण्डानां प्रवर्त्तकाः।
भ्रूणहत्याः प्रजास्तत्र प्रजा एवं प्रवर्त्तते ॥ ४० ॥
आयुर्मेधा बलं रूपं कुलञ्चैव प्रहीयते।
शूद्राश्च ब्राह्मणाचाराः शूद्राचाराश्च ब्राह्मणाः ॥ ४१ ॥
राजवृत्ते स्थिताश्चौराश्चौरवृत्ताश्च पार्थिवाः।
भृत्याश्च नष्टसुहृदो युगान्ते पर्य्युपस्थिते ॥ ४२ ॥
अशीलिन्योऽव्रताश्चापि स्त्रियो मद्यामिषप्रियाः।
मायासाचा भविष्यन्ति युगान्ते प्रत्युपस्थिते ॥ ४३ ॥
श्वापदप्रबलत्वञ्च गवाञ्चैवाप्युपक्षयः।
साधूनां विनिवृत्तिश्च विद्यात्तस्मिन् कलौ युगे ॥ ४४ ॥
तदा सूक्ष्मे महोदर्को दुर्लभो भोगिनान्तथा (२)।
चतुराश्रमशैथिल्याद्धर्मः प्रविचलिष्यति ॥ ४५ ॥
तदा ह्यल्पफला देवी भवेद्भूमिर्महीयसी।
शूद्रास्तपश्चरिष्यन्ति युगान्ते प्रत्युपस्थिते ॥ ४६ ॥
तदा ह्येकाह्निको धर्मो द्वापरे यश्च मासिकः।
त्रेतायां वत्सरस्थश्च एकाह्नादतिरिच्यते ॥ ४७ ॥
अरक्षितारो हर्त्तारो बलिभागस्य पार्थिवाः।
युगान्तेषु भविष्यन्ति स्वरक्षणपरायणाः ॥ ४८ ॥
अक्षत्रियाश्च राजानो विप्राः शूद्रोपजीविनः।
शूद्राभिवादिनः सर्व्वे युगान्ते द्विजसत्तमाः ॥ ४९ ॥
पतयश्च भविष्यन्ति बहवोऽस्मिन् कलौ युगे।
चित्रवर्षी तदा देवो यदा स्यात्तु युगक्षयः ॥ ५० ॥

१ मद्यभूयिष्ठा इति ख०। २ दानमूलफलानिति क०, ङ० च।

सर्व्वे वाणिजकाश्चापि भविष्यन्त्यधमे युगे ।
भूयिष्ठं कूटमानैश्च पण्यविक्रीततेजनैः ॥ ५१ ॥
कुशीलचर्य्यां पाषण्डैर्वृथारूपैः समावृतं ।
पुरुषाल्पं बहुस्त्रीकं युगान्ते पर्य्युपस्थिते ॥ ५२ ॥
बहुयाचनको लोको भविष्यति परस्परं ।
अव्यादनः क्रूरवाक्यो नार्जवो नानसूयकः ॥ ५३ ॥
न कृते प्रतिकर्त्ता च चीणो लोको भविष्यति ।
अशङ्का चैव पतिते तद्युगान्तस्य लक्षणं ॥ ५४ ॥
नरशून्या वसुमती शून्या चैव भविष्यति ।
मण्डलानि भवन्त्यत्र देशेषु नगरेषु च ॥ ५५ ॥
अल्पोदका चाल्पफला भविष्यति वसुन्धरा ।
गोप्तारश्चाप्यगोप्तारः प्रभविष्यन्त्यशासनाः ॥ ५६ ॥
हर्त्तारः पररत्नानां परदारप्रधर्षकाः ।
कामात्मानो दुरात्मानो ह्यधर्म्मात्साहसप्रियाः ॥ ५७ ॥
प्रनष्टचेतनाः पुंसो मुक्तकेशास्तु चूलिकाः (१) ।
ऊनषोड़शवर्षाश्च प्रजायन्ते युगक्षये ॥ ५८ ॥
शुक्लदन्ताः (२) जिताक्षाश्च मुण्डाः काषायवाससः ।
शूद्रा धर्म्मञ्चरिष्यन्ति युगान्ते पर्य्युपस्थिते ॥ ५९ ॥
सस्यचौरा भविष्यन्ति तथा चैलाभिमर्शिनाः ।
चौराश्चौरस्य हर्त्तारो हर्त्तुर्हर्त्तार एव च ॥ ६० ॥
ज्ञानकर्म्मण्युपरते लोके निष्क्रियताङ्गते ।
कीटमूषिकसर्पाश्च धर्षयिष्यन्ति मानवान् ॥ ६१ ॥

१ नाड़िका इति ख० । २ शुक्लदन्ता इति ख० ।

सुभिक्षं क्षेममारोग्यं सामर्थ्यं दुर्लभं भवेत्।
कौशिकाः प्रतिवत्स्यन्ति देशान् क्षुद्भयपीड़ितान्॥ ६२॥
दुःखेनाभिप्लुतानाञ्च परमायुः शतं भवेत्।
दृश्यन्ते न च दृश्यन्ते वेदाः कलियुगेऽखिलाः॥ ६३॥
उत्सीदन्ति तथा यज्ञाः केवलाधर्म्मपीड़िताः।
कषायिणश्च निर्ग्रन्थास्तथा कापालिनश्च ह॥ ६४॥
वेदविक्रयिणश्चान्ये तीर्थविक्रयिणोऽपरे।
वर्णाश्रमाणां ये चान्ये पाषण्डाः परिपन्थिनः॥ ६५॥
उत्पद्यन्ते तथा ते वै संप्राप्ते तु कलौ युगे।
नाधीयन्ते तदा वेदाः शूद्रा धर्म्मार्थकोविदाः॥ ६६॥
यजन्ते नाश्वमेधेन राजानः शूद्रयोनयः।
स्त्रीवधं गोवधं कृत्वा हत्वा चैव परस्परं।
उपहन्युस्तदाऽन्योन्यं साधयन्ति तथा प्रजाः॥ ६७॥
दुःखप्रचारतोऽल्पायुर्देशोत्सादः सरोगता।
मोहो ग्लानिस्तथा सौख्यं तमोवृत्तं कलौ स्मृतं॥ ६८॥
प्रजा तु भ्रूणहत्यायामथ वै सम्प्रवर्त्तते।
तस्मादायुर्बलं रूपं कलिं प्राप्य प्रहीयते।
दुःखेनाभिप्लुतानां वै परमायुः शतं नृणां॥ ६९॥
दृश्यन्ते नाभिदृश्यन्ते वेदाः कलियुगेऽखिलाः।
उत्सीदन्ते तदा यज्ञाः केवला धर्म्मपीड़िताः॥ ७०॥
तदा त्वल्पेन कालेन सिद्धिं यास्यन्ति मानवाः।
धन्या धर्म्मं चरिष्यन्ति युगान्ते द्विजसत्तमाः॥ ७१॥
श्रुतिस्मृत्युदितं धर्म्मं ये चरन्त्यनसूयकाः।

त्रेतायां वार्षिको धर्म्मो द्वापरे मासिकः स्मृतः ।
यथाशक्ति चरन् प्राज्ञस्तदह्ना प्राप्नुयात् कलौ ॥ ७२ ॥
एषा कलियुगेऽवस्था सन्ध्यांशन्तु निबोध मे ।
युगे युगे तु हीयन्ते त्रींस्त्रीन् पादांश्च सिद्धयः ॥ ७३ ॥
युगस्वभावात्सन्ध्यास्तु तिष्ठन्तीमास्तु पादशः ।
सन्ध्यास्वभावाच्चांशेषु पादशस्ते प्रतिष्ठिताः ॥ ७४ ॥
एवं सन्ध्यांशके काले सम्प्राप्ते तु युगान्तिके ।
तेषां शास्ता ह्यसाधूनां भृगूणां निधनोत्थितः ॥ ७५ ॥
गोत्रेण वै चन्द्रमसो नाम्ना प्रमितिरुच्यते ।
माधवस्य तु सोंऽशेन पूर्व्वं स्वायम्भुवेऽन्तरे ॥ ७६ ॥
समाः स विंशतिं पूर्णाः पर्य्यटन् वै वसुन्धरां ।
आचकर्ष स वै सेनां सवाजिरथकुञ्जरां ॥ ७७ ॥
प्रगृहीतायुधैर्विप्रैः शतशोऽथ सहस्रशः ।
स तदा तैः परिवृतो म्लेच्छान् हन्ति सहस्रशः ॥ ७८ ॥
स हत्वा सर्व्वशश्चैव राज्ञस्तान् शूद्रयोनिजान् ।
पाषण्डान् स ततः सर्व्वान्निःशेषान् कृतवान् प्रभुः ॥ ७९ ॥
नात्यर्थं धार्म्मिका ये च तान् सर्व्वान् हन्ति सर्व्वशः ।
वर्णव्यत्यासजातांश्च ये च तानुपजीविनः ॥ ८० ॥
उदीच्यान्मध्यदेशांश्च पार्व्वतीयांस्तथैव च ।
प्राच्यान् प्रतीच्यांश्च तथा विन्ध्यपृष्ठापरान्तिकान् ॥ ८१ ॥
तथैव दाक्षिणात्यांश्च द्रविड़ान् सिंहलैः सह ।
गान्धारान्पारदांश्चैव पह्नवान् यवनान् तथा ॥ ८२ ॥
तुषारान् वर्व्वरांश्चीनान् शूलिकान् दरदान् खसान् ।

लम्पाकानथ केतांश्च किरातानाञ्च जातयः ॥ ८३ ॥
प्रवृत्तचक्रो बलवान् म्लेच्छानामन्तकृद्विभुः ।
अधृष्यः सर्व्वभूतानां चचाराथ वसुन्धरां ॥ ८४ ॥
माधवस्य तु सोंऽशेन देवस्य हि विजज्ञिवान् ।
पूर्व्वजन्मनि विष्णोश्च प्रमितिर्नाम वीर्य्यवान् ॥ ८५ ॥
गोत्रेण वै चन्द्रमसः पूर्व्वे कलियुगे प्रभुः ।
द्वात्रिंशेऽभ्युदिते वर्षे प्रक्रान्ते विंशतिं समाः ॥ ८६ ॥
विनिघ्नन् सर्व्वभूतानि मानवानि सहस्रसः ।
कृत्वा वीर्य्यावशेषान्तु पृथ्वीं क्रूरेण कर्म्मणा ।
परस्परनिमित्तेन कोपेनाकस्मिकेन तु ॥ ८७ ॥
स साधयित्वा वृषलान् प्रायशस्तानधार्म्मिकान् ।
गङ्गायमुनयोर्मध्ये निष्ठां प्राप्तः सहानुगः ॥ ८८ ॥
ततो व्यतीते तस्मिंस्तु अमात्ये सहसैनिके ।
उत्साद्य पार्थिवान् सर्व्वान् म्लेच्छांश्चैव सहस्रशः ॥ ८९ ॥
तत्र सन्ध्यांशके काले सम्प्राप्ते तु युगान्तिके ।
स्थितास्वल्पावशिष्टासु प्रजास्विह क्वचित् क्वचित् ॥ ९० ॥
अप्रग्रहास्ततस्ता वै लोकचेष्टास्तु वृन्दशः ।
उपहिंसन्ति चान्योन्यं प्रपद्यन्ते परस्परं ॥ ९१ ॥
अराजके युगवशात् संशये समुपस्थिते ।
प्रजास्ता वै ततः सर्व्वाः परस्परभयार्दिताः ॥ ९२ ॥
व्याकुलाश्च परिश्रान्तास्त्यक्त्वा दारान् गृहाणि च ।
स्वान्प्राणान् समवेक्षन्तो निष्ठां प्राप्ताः सुदुःखिताः ॥ ९३ ॥
नष्टे श्रौते स्मृते धर्म्मे परस्परहतास्तदा ।

निर्मर्य्यादा निराक्रन्दा निःस्नेहा निरपत्रपाः ॥ ९४ ॥
नष्टे वर्षे प्रतिहता कृत्स्नकाः पञ्चविंशकाः ।
हित्वा दारांश्च पुत्रांश्च विषादव्याकुलेन्द्रियाः ॥ ९५ ॥
अनावृष्टिहताश्चैव वार्त्तामुत्सृज्य दुःखिताः ।
प्रत्यन्तांस्तान्निषेवन्ते हित्वा जनपदान् स्वकान् ॥ ९६ ॥
सरितः सागरान् कूपान् सेवन्ते पर्व्वतांस्तदा ।
मधुमांसैर्मूलफलैर्वर्त्तयन्ति सुदुःखिताः ॥ ९७ ॥
चीरवस्त्राजिनधरा निष्प्रत्रा निष्परिग्रहाः ।
वर्णाश्रमपरिभ्रष्टाः सङ्करं घोरमास्थिताः ॥ ९८ ॥
एता काष्ठामनुप्राप्ता अल्पशेषास्तथा प्रजाः ।
जराव्याधिक्षुधाविष्टा दुःखान्निर्वेदमागमन् ॥ ९९ ॥
विचारणन्तु निर्वेदात् साम्यावस्था विचारणात् ।
साम्यावस्थासु सम्बोधः सम्बोधाद्धर्म्मशीलता ॥ १०० ॥
तासूपशमयुक्तासु कलिशिष्टासु वै स्वयं ।
अहोरात्रं तदा तासां युगन्तु परिवर्त्तते ॥ १०१ ॥
चित्तसम्मोहनं कृत्वा तासान्तैः सप्तमन्तु तत् ।
भाविनोऽर्थस्य च बलात्ततः कृतमवर्तत ॥ १०२ ॥
प्रवृत्ते तु पुनस्तस्मिंस्ततः कृतयुगे तु वै ।
उत्पन्नाः कलिशिष्टास्तु कार्तयुग्यः प्रजास्तदा ॥ १०३ ॥
तिष्ठन्ति चेह ये सिद्धाः सृष्टा विचरन्ति च ।
सदा सप्तर्षयश्चैव (१) तत्र ते च व्यवस्थिताः ॥ १०४ ॥

---

१　सप्त सप्तर्षयश्चैवेति ख०, छ० च ।

ब्रह्मक्षत्रविशः शूद्रा बीजार्थं ये स्मृता इह ।
कलिजैः सह ते सर्वे निर्विशेषास्तदाऽभवन् ॥ १०५ ॥
तेषां सप्तर्षयो धर्मं कथयन्तीतरेषु च ।
वर्णाश्रमाचारयुक्तः श्रौतः स्मार्त्तो द्विधा तु सः ॥ १०६ ॥
ततस्तेषु क्रियावन्तु वर्त्तन्ते वै प्रजाः कृते ।
श्रौतः स्मार्त्तः कृतानान्तु धर्मः सप्तर्षिदर्शितः ॥ १०७ ॥
तासु धर्मव्यवस्थार्थं तिष्ठन्तीहायुगक्षयात् ।
मन्वन्तराधिकारेषु तिष्ठन्ति मुनयस्तु वै ॥ १०८ ॥
यथा दावप्रदग्धेषु तृणेष्विह तपे ऋतौ ।
नवानां प्रथमं दृष्टस्तेषां मूले तु सम्भवः ॥ १०९ ॥
एवं युगाद्युगस्येह सन्तानस्तु परस्परं ।
वर्त्तते ह्यव्यवच्छेदाद् यावन्मन्वन्तरक्षयः ॥ ११० ॥
सुखमायुर्बलं रूपं धर्मार्थौ काम एव च ।
युगेष्वेतानि हीयन्ते(१)त्रीणि पादक्रमेण तु ॥ १११ ॥
ससन्ध्यांशेषु हीयन्ते युगानां धर्मसिद्धयः ।
इत्येष प्रतिसन्धिर्वः कीर्त्तितस्तु मया द्विजाः ॥ ११२ ॥
चतुर्युगानां सर्वेषामेतेनैव प्रसाधनं ।
एषा चतुर्युगावृत्तिरासहस्रात् प्रवर्त्तते(२) ॥ ११३ ॥
ब्रह्मणस्तदहः प्रोक्तं रात्रिश्च तावती स्मृता ।
अत्रार्जवं जडीभावो भूतानामायुगक्षयात् ॥ ११४ ॥
एतदेव तु सर्वेषां युगानां लक्षणं स्मृतं ।

---

१ युगे युगे प्रहीयन्त इति ग० । २ आचतुर्दशाद्गुणीकृतेति क०, ङ० च ।

एषा चतुर्युगाणान्तु गणना ह्येकसप्ततिः ।
क्रमेण परिवृत्ता तु मनोरन्तरमुच्यते ॥ ११५ ॥
चतुर्युगे तथैकस्मिन् भवतीह यथाश्रुतं ।
तथा चान्येषु भवति पुनस्तद्वै यथाक्रमं ॥ ११६ ॥
सर्गे सर्गे यथा भेदा उत्पद्यन्ते तथैव तु ।
पञ्चविंशत्परिमिता न न्यूना नाधिकास्तथा ॥ ११७ ॥
तथा कल्पयुगैः सार्द्धं भवन्ति समलक्षणाः ।
मन्वन्तराणां सर्वेषामेतदेव तु लक्षणं ॥ ११८ ॥
तथा युगानां परिवर्त्तनानि
चिरप्रवृत्तानि युगस्वभावात् ।
तथा न सन्तिष्ठति जीवलोकः
क्षयोदयाभ्यां परिवर्त्तमानः ॥ ११९ ॥
इत्येतल्लक्षणं प्रोक्तं युगानां वै समासतः ।
अतीतानागतानां वै सर्वमन्वन्तरेष्विह ॥ १२० ॥
अनागतेषु तद्वच्च तर्क्कः कार्य्यो विजानता ।
मन्वन्तरेषु सर्वेषु अतीतानागतेष्विह ॥ १२१ ॥
मन्वन्तरेण चैकेन सर्व्वाण्येवान्तराणि वै ।
व्याख्यातानि विजानीध्वं कल्पं कल्पेन चैव हि ॥१२२॥
अस्याभिमानिनः सर्व्वे नामरूपैर्भवन्त्युत ।
देवा ह्यष्टविधा ये च इह मन्वन्तरेश्वराः ॥ १२३ ॥
ऋषयो मनवश्चैव सर्व्वे तुल्याः प्रयोजनैः ।
एवं वर्णाश्रमाणान्तु प्रविभागो युगे युगे ॥ १२४ ॥
युगस्वभावाश्च तथा विधत्ते वै सदा प्रभुः ।

वर्णाश्रमविभागश्च युगानि युगसिद्धये ॥ १२५ ॥
अनुषङ्गः समाख्यातः सृष्टिसर्गं निबोधत ।
विस्तरेणानुपूर्व्व्या च स्थितिं वक्ष्ये युगेष्विह ॥ १२६ ॥

इति श्रीमहापुराणे वायुप्रोक्ते चतुर्युगाख्यानं
नामाष्टपञ्चाशोऽध्यायः ।



# अथोनषष्टतमोऽध्यायः ।

——:o:——

## ऋषिलक्षणम् ।

सूत उवाच । युगेषु यास्तु जायन्ते प्रजास्ता वै निबोधत ।
आसुरी सर्पगीपक्षिपैशाची यक्षराक्षसी ।
यस्मिन् युगे च सम्भूतिस्तासां यावत्तु जीवितं ॥ १ ॥
पिशाचासुरगन्धर्व्वा यक्षराक्षसपन्नगाः ।
युगमात्रन्तु जीवन्ति ऋते मृत्युवधेन ते ॥ २ ॥
मानुषाणां पशूनाञ्च पक्षिणां स्थावरैः सह ।
तेषामायुः परिक्रान्तं युगधर्म्मेषु सर्वशः ॥ ३ ॥
अस्थितिस्तु कलौ दृष्टा भूतानामायुषस्तु वै ।
परमायुः शतन्त्वेतन्मनुष्याणां कलौ स्मृतं ॥ ४ ॥
देवासुरप्रमाणात्तु सप्तसप्ताङ्गुलं ह्रसत् ।
अङ्गुलानां शतं पूर्णमष्टपञ्चाशदुत्तरं ॥ ५ ॥
देवासुरप्रामाणन्तदुच्छ्रायं कलिजैः स्मृतं ।
चत्वारश्चाप्यशीतिश्च कलिजैरङ्गुलैः स्मृतं ॥ ६ ॥
स्वेनाङ्गुलप्रमाणेन ऊर्द्ध्वमापादमस्तकं ।
इत्येष मानुषोत्सेधो ह्रसतीह युगान्तिके ॥ ७ ॥
सर्वेषु युगकालेषु अतीतानागतेष्विह ।
स्वेनाङ्गुलप्रमाणेन अष्टतालः स्मृतो नरः ॥ ८ ॥

आपादतो मस्तकन्तु नवतालो भवेत्तु यः।
संहताजानुबाहुस्तु स सुरैरपि पूज्यते ॥ ९ ॥
गवाश्वहस्तिनाञ्चैव महिषस्थावरात्मनां।
क्रमेणैतेन योगेन ह्रासवृद्धी युगे युगे ॥ १० ॥
षट्सप्तत्यङ्गुलोत्सेधः पशूनां ककुदन्तु वै।
अङ्गुलाष्टशतं पूर्णमुत्सेधः करिणां स्मृतः ॥ ११ ॥
अङ्गुलानां सहस्रन्तु चत्वारिंशाङ्गुलं विना।
पञ्चाशतं हुशानाञ्च उत्सेधः शाखिनां स्मृतः ॥ १२ ॥
मानुषस्य शरीरस्य सन्निवेशस्तु यादृशः।
तल्लक्षणस्तु देवानां दृश्यते तत्त्वदर्शनात् (१) ॥१३॥
बुद्ध्यातिशययुक्तञ्च देवानां कायमुच्यते।
देवानतिशयच्चैव मानुषं कायमुच्यते ॥ १४ ॥
इत्येते वै परिक्रान्ता भावा ये दिव्यमानुषाः।
पशूनां पक्षिणाञ्चैव स्थावराणां निबोधत ॥ १५ ॥
गावो ह्यजा महिष्योऽश्वा हस्तिनः पक्षिणो नगाः।
उपयुक्ताः क्रियास्तेते यज्ञियास्त्विह सर्व्वशः ॥ १६ ॥
देवस्थानेषु जायन्ते तद्रूपा एव ते पुनः।
यथाशयोपभोगास्तु देवानां शुभमूर्त्तयः ॥ १७ ॥
तेषां रूपानुरूपैस्तैः प्रमाणैस्थाणुजङ्गमैः।
मनोज्ञैस्तत्त्वभावज्ञैः सुखिनो ह्युपपेदिरे ॥ १८ ॥
अतः शिष्टान् प्रवक्ष्यामि सतः साधूंस्तथैव च।

---

१ दृश्यतेऽन्वयदर्शनादिति क०, ट० च।

सदिति ब्रह्मणः शब्दस्तद्वन्तो ये भवन्त्युत ।
सायुज्यं ब्रह्मणोऽत्यन्तं तेन सन्तः प्रचक्ष्यते ॥ १९ ॥
दशात्मके ये विषये कारणे चाष्टलक्षणे ।
न क्रुध्यन्ति न हृष्यन्ति जितात्मानस्तु ते स्मृताः ॥ २० ॥
सामान्येषु च धर्म्मेषु तथा वैशेषिकेषु च ।
ब्रह्मक्षत्रविशो युक्ता यस्मात्तस्माद्द्विजातयः ॥ २१ ॥
वर्णाश्रमेषु युक्तस्य स्वर्गगोसुखचारिणः ।
श्रौतस्मार्तस्य धर्म्मस्य ज्ञानाद्धर्म्मः स उच्यते ॥ २२ ॥
विद्यायाः साधनात्साधुर्ब्रह्मचारी गुरोर्हितः ।
क्रियाणां साधनाच्चैव गृहस्थः साधुरुच्यते ॥ २३ ॥
साधनात्तपसोऽरण्ये साधुर्वैखानसः स्मृतः ।
यतमानो यतिः साधुः स्मृतो योगस्य साधनात् ॥ २४ ॥
एवमाश्रमधर्म्माणां साधनात् साधवः स्मृताः ।
गृहस्थो ब्रह्मचारी च वानप्रस्थोऽथ भिक्षुकः ॥ २५ ॥
न च देवा न पितरो मुनयो न च मानवाः ।
अयन्धर्म्मो ह्ययं नेति ब्रुवन्तोऽभिन्नदर्शनाः ॥ २६ ॥
धर्म्माधर्म्माविह प्रोक्तौ शब्दावेतौ क्रियात्मकौ ।
कुशलाकुशलं कर्म्म धर्म्माधर्म्माविति स्मृतौ ॥ २७ ॥
धारणा धृतिरित्यर्थाद्धातोर्धर्म्मः प्रकीर्त्तितः ।
अधारणेऽमहत्त्वे च अधर्म्म इति चोच्यते ॥२८ ॥
अत्रेष्टप्रापका धर्म्मा आचार्य्यैरुपदिश्यते ।
वृद्धा ह्यलोलुपाश्चैव आत्मवन्तो ह्यदम्भकाः ।
सम्यग्विनीता ऋजवस्तानाचार्य्यान् प्रचक्षते ॥ २९ ॥

स्वयमाचरते यस्मादाचारं स्थापयत्यपि ।
आचिनोति च शास्त्रार्थान्यमैः सन्नियमैर्युतः ॥ ३० ॥
पूर्व्वेभ्यो वेदयित्वेह श्रौतं सप्तर्षयोऽब्रुवन् ।
ऋचो यजूंषि सामानि ब्रह्मणोऽङ्गानि च श्रुतिः ॥३१॥
मन्वन्तरस्यातीतस्य स्मृत्वाचारं पुनर्जगौ ।
तस्मात्स्मार्तः स्मृतो धर्म्मो वर्णाश्रमविभागजः ॥ ३२ ॥
स एष द्विविधो धर्म्मः शिष्टाचार इहोच्यते ।
शेषशब्दात् शिष्ट इति शिष्टाचारः प्रचक्ष्यते ॥ ३३ ॥
मन्वन्तरेषु ये शिष्टा इह तिष्ठन्ति धार्म्मिकाः ।
मनुः सप्तर्षयश्चैव लोकसन्तानकारणात् ।
धर्म्मार्थं ये च शिष्टा वै याथातथ्यं प्रचक्ष्यते ॥ ३४ ॥
मन्वादयश्च ये शिष्टा ये मया प्रागुदीरिताः ।
तैः शिष्टैश्चरितो धर्म्मः सम्यगेव युगे युगे ॥ ३५ ॥
त्रयी वार्ता दण्डनीतिरिज्या वर्णाश्रमास्तथा ।
शिष्टैराचर्य्यते यस्मान्मनुना च पुनः पुनः ।
पूर्व्वैः पूर्व्वगतत्वाच्च शिष्टाचारः स शाश्वतः ॥ ३६ ॥
दानं सत्यन्तपोऽलोभो विद्येज्याप्रजनो दया ।
अष्टौ तानि चरित्राणि शिष्टाचारस्य लक्षणं ॥ ३७ ॥
शिष्टा यस्माच्चरन्त्येनं मनुः सप्तर्षयश्च वै ।
मन्वन्तरेषु सर्व्वेषु शिष्टाचारस्ततः स्मृतः ॥ ३८ ॥
विज्ञेयः श्रवणात् श्रौतः स्मरणात् स्मार्त्त उच्यते ।
इज्यावेदात्मकः श्रौतः स्मार्तो वर्णाश्रमात्मकः ।
प्रत्यङ्गानि च वक्ष्यामि धर्म्मस्येह तु लक्षणं ॥ ३९ ॥

दृष्ट्वा प्रभूतमर्थं यः पृष्टो वै न निगूहति ।
यथा भूतप्रवादस्तु इत्येतत्सत्यलक्षणं ॥ ४० ॥
ब्रह्मचर्य्यं जपो मौनं निराहारत्वमेव च ।
इत्येतत् तपसो मूलं सुघोरं तद्दुरासदं ॥ ४१ ॥
पशूनां द्रव्यहविषामृक्सामयजुषां तथा ।
ऋत्विजां दक्षिणानाञ्च संयोगो योग उच्यते ॥ ४२ ॥
आत्मवत्सर्वभूतेषु यो हितायाहिताय च ।
समा प्रवर्त्तते दृष्टिः कृत्स्ना ह्येषा दया स्मृता ॥ ४३ ॥
आक्रुष्टोऽभिहतो वापि नाक्रोशेद्यो न हन्ति वा ।
वाङ्मनःकर्म्मभिः क्षान्तिस्तितिक्षैषा क्षमा स्मृता ॥४४॥
स्वामिनाऽरक्ष्यमाणानामुत्सृष्टानाञ्च मृत्सु च ।
परस्वानामनादानमलोभ इह कीर्त्यते ॥ ४५ ॥
मैथुनस्यासमाचारो ह्यचिन्तनमकल्पनं ।
निवृत्तिर्ब्रह्मचर्य्यं तदच्छिद्रं दम उच्यते ॥ ४६ ॥
आत्मार्थं वा परार्थं वा इन्द्रियाणीह यस्य वै ।
न मिथ्या सम्प्रवर्त्तन्ते शमस्यैतत्तु लक्षणं ॥ ४७ ॥
दशात्मके यो विषये कारणे चाष्टलक्षणे ।
न क्रुध्येत्तु प्रतिहतः स जितात्मा विभाव्यते ॥ ४८ ॥
यद्यदिष्टतमं द्रव्यं न्यायेनोपागतञ्च यत् ।
तत्तद्गुणवते देयमित्येतद्दानलक्षणं ॥ ४९ ॥
दानं त्रिविधमित्येतत्कनिष्ठज्येष्ठमध्यमं ।
तत्र नैःश्रेयसं ज्येष्ठं कनिष्ठं स्वार्थसिद्धये ।
कारुण्यात्सर्व्वभूतेभ्यः संविभागस्तु बन्धुषु ॥ ५० ॥

श्रुतिस्मृतिभ्यां विहितो धर्मो वर्णाश्रमात्मकः ।
शिष्टाचाराविरुद्धश्च धर्म्मः सत्साधुसङ्गतः ॥ ५१ ॥
अप्रद्वेषो ह्यनिष्टेषु तथेष्टानभिनन्दनं ।
प्रीतितापविषादेभ्यो विनिवृत्तिर्विरक्तता ॥ ५२ ॥
सन्न्यासः कर्म्मणो न्यासः कृतानामकृतैः सह ।
कुशलाकुशलानाञ्च प्रहाणं त्याग उच्यते ॥ ५३ ॥
अव्यक्ताद्योऽविशेषाश्च विकारोऽस्मिन्नचेतने ।
चेतनाऽचेतनान्यत्वविज्ञानं ज्ञानमुच्यते ॥ ५४ ॥
प्रत्यङ्गानान्तु धर्म्मस्य इत्येतल्लक्षणं स्मृतं ।
ऋषिभिर्धर्म्मतत्त्वज्ञैः पूर्वं स्वायम्भुवेऽन्तरे ॥ ५५ ॥
अत्र वो वर्त्तयिष्यामि विधिर्म्मन्वन्तरस्य यः ।
इतरेतरवर्णस्य चातुर्वर्णस्य चैव हि ।
प्रतिमन्वन्तरञ्चैव श्रुतिरन्या विधीयते ॥ ५६ ॥
ऋचो यजूंषि सामानि यथावत्प्रतिदैवतं ।
आभूतसंप्लवस्थापि वर्ज्ज्यैकं शतरुद्रियं ॥ ५७ ॥
विधिर्होत्रं तथा स्तोत्रं पूर्ववत्सम्प्रवर्त्तते ।
द्रव्यस्तोत्रं गुणस्तोत्रं कर्म्मस्तोत्रं तथैव च ।
चतुर्थमाभिजनिकं स्तोत्रमेतच्चतुर्विधं ॥ ५८ ॥
मन्वन्तरेषु सर्व्वेषु यथा देवा भवन्ति ये ।
प्रवर्त्तयति तेषां वै ब्रह्मस्तोत्रं चतुर्व्विधं ।
एवं मन्त्रगुणानाञ्च समुत्पत्तिश्चतुर्विधा ॥ ५९ ॥
अथर्व्वयजुषां साम्नां वेदेष्विह पृथक् पृथक् ।
ऋषीणान्तप्यतामुग्रन्तपः परमदुश्चरं ॥ ६० ॥

मन्त्राः प्रादुर्बभूवुर्हि पूर्व्वमन्वन्तरेष्विह ।
परितोषाद्भयाद् दुःखात्सुखाच्छोकाच्च पञ्चधा ॥ ६१ ॥
ऋषीणान्तपःकार्त्स्न्येन दर्शनेन यदृच्छया ।
ऋषीणां यदृषित्वं हि तद्वक्ष्यामीह लक्षणैः ॥ ६२ ॥
अतीतानागतानान्तु पञ्चधा ऋषिरुच्यते ।
अतस्त्वृषीणां वक्ष्यामि ह्यार्षस्य च समुद्भवं ॥ ६३ ॥
गुणसाम्ये वर्त्तमाने सर्वसम्प्रलये तदा ।
अतिचारे तु (१) देवानामनिर्देश्ये तयोर्यथा ॥ ६४ ॥
अबुद्धिपूर्व्वकं तद्वै चेतनार्थं प्रवर्त्तते ।
तेन ह्यबुद्धिपूर्वं तच्चेतनेन ह्यधिष्ठितं ॥ ६५ ॥
वर्त्तते च यथा तौ तु यथा मत्स्योदके उभे ।
चेतनाधिष्ठितन्तत्त्वं प्रवर्त्तति गुणात्मना ॥ ६६ ॥
कारणत्वात्तथा कार्य्यं तदा तस्य प्रवर्त्तते ।
विषये विषयित्वाच्च ह्यर्थेऽर्थित्वात्तथैव च ॥ ६७ ॥
कालेन प्रापणीयेन भेदास्तु कारणात्मकाः ।
संसिध्यन्ति तदा व्यक्ताः क्रमेण महदादयः ॥ ६८ ॥
महतश्चाप्यहङ्कारस्तस्माद्भूतेन्द्रियाणि च ।
भूतभेदास्तु भेदेभ्यो जज्ञिरे ते परस्परं ।
संसिद्धिकारणं कार्य्यं सद्य एव विवर्त्तते (२) ॥ ६९ ॥
यथोल्मुकस्तुटन्नूर्द्ध्वमेककालं प्रवर्त्तते ।
तथा विवृत्तः क्षेत्रज्ञः कालेनैकेन कर्म्मणा (३) ॥ ७० ॥

---

१ अविभागे त्विति क०, ट० च ।　　२ प्रवर्त्तत इति ख० ।
३ कालेनैतेनेति क०, ट० च ।

यथान्धकारे खद्योतः सहसा सम्प्रदृश्यते ।
तथा विवृत्तो ह्यव्यक्तात् खद्योत इव चोल्वनः (४) ॥७१॥
स महान् सशरीरस्तु यत्रैवाग्रे व्यवस्थितः ।
तत्रैव संस्थितो विद्वान् द्वारशालामुखे स्थितः ॥ ७२ ॥
महांस्तु तमसः पारे वैलक्षण्याद्विभाव्यते ।
तत्रैव संस्थितो विद्वांस्तमसोऽन्त इति श्रुतिः ॥ ७३ ॥
बुद्धिर्विवर्त्तमानस्य प्रादुर्भूता चतुर्विधा ।
ज्ञानं वैराग्यमैश्वर्य्यं धर्म्मश्चेति चतुष्टयं ॥ ७४ ॥
सांसिद्धिकान्यथैतानि सुप्रतीकानि तस्य वै ।
महतः सशरीरस्य वैवर्त्यात् सिद्धिरुच्यते ॥ ७५ ॥
अत्र शेते च यत्पुर्य्यां क्षेत्रज्ञानमथापि वा ।
पुरीशत्वाच्च पुरुषः क्षेत्रज्ञानात् समुच्यते ॥ ७६ ॥
क्षेत्रज्ञः क्षेत्रविज्ञानात् भगवान् मतिरुच्यते ।
यस्माद् बुद्ध्या तु शेते ह तस्माद् बोधात्मकः स वै ।
संसिद्धये परिगतं व्यक्ताव्यक्तमचेतनं ॥ ७७ ॥
एवं निवृत्तिः क्षेत्रज्ञा क्षेत्रज्ञेनाभिसंहिता ।
क्षेत्रज्ञेन परिज्ञातो भोग्योऽयं विषयस्त्विति ॥ ७८ ॥
ऋषीत्येष गतौ धातुः श्रुतौ सत्ये तपस्यथ ।
एतत्सन्नियते तस्मिन्ब्रह्मणा स ऋषिः स्मृतः ॥ ७९ ॥
निवृत्तिसमकालन्तु बुद्ध्याऽव्यक्तमृषिः स्वयम् ।
परं हि ऋषते यस्मात्परमर्षिस्ततः स्मृतः ॥ ८० ॥
गत्यर्थादृषतेर्धातोर्नामनिर्वृत्तिरादितः ।

४ चोल्मुक इति क०

यस्मादेष स्वयम्भूतस्तस्माच्चाप्यृषिता स्मृता ।
ईश्वराः स्वयमुद्भूता मानसाः ब्रह्मणः सुताः ॥ ८१ ॥
यस्मान्न हन्यते मानैर्महान् परिगतः पुरः ।
यस्मादृषन्ति ये धीरा महान्तं सर्व्वतो गुणैः ।
तस्मान्महर्षयः प्रोक्ता बुद्धेः परमदर्शिनः ॥ ८२ ॥
ईश्वराणां शुभास्तेषां मानसान्तरमाश्च ते ।
अहङ्कारं तमश्चैव त्यक्त्वा च ऋषिताङ्गताः ॥ ८३ ॥
तस्मात्तु ऋषयस्ते वै भूतादौ तत्त्वदर्शनाः ।
ऋषिपुत्रा ऋषीकास्तु मैथुनाद्गर्भसम्भवाः ॥ ८४ ॥
तन्मात्राणि च सत्यञ्च ऋषन्ते ते महौजसः ।
सत्यर्षयस्ततस्ते वै परमाः सत्यदर्शनाः ॥ ८५ ॥
ऋषीणाञ्च सुतास्ते तु विज्ञेया ऋषिपुत्रकाः ।
ऋषन्ति वै श्रुतं यस्माद्विशेषांश्चैव तत्त्वतः ।
तस्मात् श्रुतर्षयस्तेपि श्रुतस्य परिदर्शनाः ॥ ८६ ॥
अव्यक्तात्मा महात्मा चाहङ्कारात्मा तथैव च ।
भूतात्मा चेन्द्रियात्मा च तेषां तज्ज्ञानमुच्यते ।
इत्येता ऋषिजातीस्तु नामभिः पञ्च वै शृणु ॥ ८७ ॥
भृगुर्मरीचिरत्रिश्च अङ्गिराः पुलहः क्रतुः ।
मनुर्दक्षो वसिष्ठश्च पुलस्त्यश्चेति ते दश ।
ब्रह्मणो मानसा ह्येते उद्भूताः स्वयमीश्वराः ॥ ८८ ॥
प्रवर्त्तते ऋषेर्य्यस्मान्महांस्तस्मान्महर्षयः ।
ईश्वराणां सुतास्त्वेते ऋषयस्तान्निबोधत ॥ ८९ ॥
काव्यो बृहस्पतिश्चैव कश्यपश्चोशनास्तथा ।

उतथ्यो वामदेवश्च अपोऽस्यश्चैग्निजस्तथा ॥ ९० ॥
कर्द्दमो विश्रवाः शक्तिर्बालखिल्यस्तथा धराः (१) ।
इत्येते ऋषयः प्रोक्ता ज्ञानतो ऋषितां गताः ॥ ९१ ॥
ऋषिपुत्रानृषीकांस्तु गर्भोत्पन्नान्निबोधत ।
वत्सरो नग्नहूश्चैव भारद्वाजस्तथैव च ॥ ९२ ॥
बृहदुक्थः शरद्वांश्च अगस्त्यश्चौसिजस्तथा (२) ।
ऋषिर्दीर्घतमाश्चैव बृहदुक्थः शरद्वतः ॥ ९३ ॥
वाजश्रवाः सुवित्तश्च सुवाग्वेषपरायणः ।
दधीचः शङ्खमांश्चैव राजा वैश्रवणस्तथा ।
इत्येते ऋषिकाः प्रोक्तास्ते सत्यादृषितां गताः ॥ ९४ ॥
ईश्वरा ऋषिकाश्चैव ये चान्ये वै तथा स्मृताः ।
एते मन्त्रकृतः सर्वे कृत्स्नशस्तान्निबोधत ॥ ९५ ॥
भृगुः काव्यः प्रचेतास्तु दधीचो ह्यात्मवानपि ।
और्वोऽथ जमदग्निश्च विदः सारस्वतस्तथा ॥ ९६ ॥
अर्ष्टिषेणः (३) युरूपश्च वीतहव्यः (४) सुमेधसः ।
वैन्यः पृथुर्दिवोदासः प्रश्वारो गृत्समाह्नभः ।
एकानविंशदित्येते ऋषयो मन्त्रवादिनः ॥ ९७ ॥
अङ्गिरा वेधसश्चैव भारद्वाजोऽथ वाष्कलिः ।
तथाऽमृतस्तथा गार्ग्यः शिनी संहृतिरेव च (५) ॥ ९८ ॥
पुरुकुत्सोऽथ मान्धाता अम्बरीषस्तथैव च ।

---

१ तथा वरा इति ख० । २ अगस्त्योऽग्निजस्तथेति ख० ।
३ आर्ष्टिषेण इति ट० । आर्त्तिषेण इति ख० ।
४ वीतशोच इति ख० । ५ सन्नतिरेव चेति क० । सन्ततिरेव चेति ख० ।

आहार्य्योऽथाजमीढश्च ऋषभो वलिरेव च ॥ ९९ ॥
पृषदश्वो विरूपश्च कण्वश्चैवाथ मुद्गलः ।
युवनाश्वः पौरुकुत्सः त्रसदस्युः सदस्युमान् ॥ १०० ॥
उतथ्यश्च भरद्वाजस्तथा वाजश्रवा अपि ।
आयाप्यश्च सुवित्तिश्च वामदेवस्तथैव च ॥ १०१ ॥
औगजो वृहदुक्थश्च ऋषिर्दीर्घतपास्तथा ।
कक्षीवांश्च त्रयस्त्रिंशत् स्मृता अङ्गिरसो वराः ।
एते मन्त्रकृतः सर्वे काश्यपांस्तु निबोधत ॥ १०२ ॥
काश्यपश्चैव वत्सारो विभ्रमो रैभ्य एव च ।
असितो देवलश्चैव षडेते ब्रह्मवादिनः ॥ १०३ ॥
अत्रिरर्च्चिसनश्चैव श्यामावांश्चाथ निष्टुरः ।
वल्गूतको मुनिर्धीमांस्तथा पूर्वातिथिश्च यः ।
इत्येते चात्रयः प्रोक्ता मन्त्रकारा महर्षयः । ॥ १०४ ॥
वसिष्ठश्चैव शक्तिश्च तथैव च पराशरः ।
चतुर्थ इन्द्रप्रमतिः पञ्चमस्तु भरद्वसुः ॥ १०५ ॥
षष्ठस्तु मैत्रावरुणः कुण्डिनः सप्तमस्तथा ।
सुद्युम्नश्चाष्टमश्चैव नवमोऽथ बृहस्पतिः ।
दशमस्तु भरद्वाजो मन्त्रब्राह्मणकारकाः ॥ १०६ ॥
एते चैव हि कर्त्तारो विधर्म्मध्वंसकारिणः ।
लक्षणं ब्रह्मणश्चैतद्विहितं सर्व्वशाखिनां ॥ १०७ ॥
हेतुर्हितैः स्मृतो धातोर्य्यस्मिहन्त्युदितम्परैः ।
अथ वार्थपरिप्राप्तैर्हिनोतेर्गतिकर्मणः ॥ १०८ ॥
तथा निर्वचनं ब्रूयाद्वाक्यार्थस्यावधारणं ।

निन्दान्तामाहुराचार्य्या यद्दोषाविन्द्यते वचः ॥ १०९ ॥
प्रपूर्वाच्छंसतेर्धातोः प्रशंसा गुणवत्तया।
इदन्त्विदमिदन्नेदमित्यनिश्चित्य संशयः ॥ ११० ॥
इदमेव विधातव्यमित्ययं विधिरुच्यते।
अन्यस्यान्यस्य चोक्तत्वाद्बुधाः परकृतिः स्मृता ॥ १११ ॥
यो ह्यत्यन्ततरोक्तश्च पुराकल्पः स उच्यते।
पुराविक्रान्तवाचित्वात् पुराकल्पस्य कल्पना ॥ ११२ ॥
मन्त्रब्राह्मणकल्पैस्तु निगमैः शुद्धविस्तरैः।
अनिश्चित्य कृतामाहुर्व्यवधारणकल्पनां ॥ ११३ ॥
यथा ह्येतत्तथा तद्वै इदं वापि तथैव तत्।
इत्येष ह्युपदेशोऽयं दशमो ब्राह्मणस्य तु ॥ ११४ ॥
इतोऽतद् ब्राह्मणस्यादौ विहितं लक्षणम्बुधैः।
तस्य तद्वृत्तिरुद्दिष्टा व्याख्याप्यनुपदं द्विजैः ॥ ११५ ॥
मन्त्राणां कल्पनश्चैव विधिदृष्टेषु कर्मसु।
मन्त्रो मन्त्रयतेर्धातोर्ब्राह्मणो ब्रह्मणोऽवनात् ॥ ११६ ॥
अल्पाक्षरमसन्दिग्धं सारवद्विश्वतोमुखं।
अस्तोभमनवद्यञ्च सूत्रं सूत्रविदो विदुः ॥ ११७ ॥

इति श्रीमहापुराणे वायुप्रोक्ते ऋषिलक्षणं
नामोनषष्ट्यध्यायः।

---

## अथ षष्ठाध्यायः ।

——:o:——

### महास्थानतीर्थवर्णनम् ।

ऋषय ऊचुः । ऋषयस्तद्वचः श्रुत्वा सूतमाहुः सुदुस्तरं ।
कथं वेदाः पुरा व्यस्तास्तन्नो ब्रूहि महामते ॥ १ ॥
सूत उवाच । द्वापरे तु परावृत्ते मनोः स्वायम्भुवोऽन्तरे ।
ब्रह्मा मनुमुवाचेदन्तद्वदिष्व महामते ॥ २ ॥
परिवृत्ते युगे तात स्वल्पवीर्य्या द्विजातयः ।
संवृत्ता युगदोषेण सर्व्वे चैव यथाक्रमं ॥ ३ ॥
भ्रश्यमानं युगवशादल्पशिष्टं हि दृश्यते ।
दशसाहस्रभागेन ह्यवशिष्टं कृतादिदं ॥ ४ ॥
वीर्य्यं तेजो बलं वाक्यं सर्वञ्चैव प्रणश्यति ।
वेदवेदा हि कार्य्याः स्युर्माभूद्वेदविनाशनं ॥ ५ ॥
वेदे नाशमनुप्राप्ते यज्ञो नाशं गमिष्यति ।
यज्ञे नष्टे देवनाशस्ततः सर्वं प्रणश्यति ॥ ६ ॥
आद्यो वेदश्चतुष्पादः शतसाहस्रसंज्ञितः ।
पुनर्दशगुणः कृत्स्नो यज्ञो वै सर्वकामधुक् ॥ ७ ॥
एवमुक्तस्तथेत्युक्त्वा मनुर्लोकहिते रतः ।
वेदमेकं चतुष्पादं चतुर्धा व्यभजत्प्रभुः ॥ ८ ॥
ब्रह्मणो वचनात्तात लोकानां हितकाम्यया ।
तदिदं वर्तमानेन युष्माकं वेदकल्पनं ॥ ९ ॥

मन्वन्तरेण वक्ष्यामि व्यतीतानां प्रकल्पनं।
प्रत्यक्षेण परोक्षं वै तन्निबोधत सत्तमाः ॥ १० ॥
अस्मिन्युगे कृतो व्यासः पाराशर्य्यः परन्तपः।
द्वैपायन इतिख्यातो विष्णोरंशः प्रकीर्त्तितः ॥ ११ ॥
ब्रह्मणा चोदितः सोऽस्मिन् वेदं व्यस्तुं प्रचक्रमे।
अथ शिष्यान् स जग्राह चतुरो वेदकारणात् ॥ १२ ॥
जैमिनिञ्च सुमन्तुञ्च वैशम्पायनमेव च।
पैलन्तेषां चतुर्थन्तु पञ्चमं लोमहर्षणं ॥ १३ ॥
ऋग्वेदश्रावकं पैलञ्जग्राह विधिवद्द्विजं।
यजुर्वेदप्रवक्तारं वैशम्पायनमेव च ॥ १४ ॥
जैमिनिं सामवेदार्थश्रावकं सोऽन्वपद्यत।
तथैवाथर्ववेदस्य सुमन्तुमृषिसत्तमं ॥ १५ ॥
इतिहासपुराणस्य वक्तारं सम्यगेव हि।
माञ्चैव प्रतिजग्राह भगवानीश्वरः प्रभुः ॥ १६ ॥
एक आसीद्यजुर्वेदस्तञ्चतुर्द्धा व्यकल्पयत्।
चतुर्होत्रमभूत्तस्मिंस्तेन यज्ञमकल्पयत् ॥ १७ ॥
आध्वर्य्यवं यजुर्भिस्तु ऋग्भिर्होत्रं तथैव च।
उद्गात्रं सामभिश्चक्रे ब्रह्मत्वञ्चाप्यथर्वभिः।
ब्रह्मत्वमकरोद्यज्ञे वेदेनाथर्वणेन तु ॥ १८ ॥
ततः स ऋचमुद्धृत्य ऋग्वेदं समकल्पयत्।
होतृकं कल्प्यते तेन यज्ञवाहं जगद्धितं ॥ १९ ॥
सामभिः सामवेदञ्च तेनोद्गात्रमरोचयत्।
राज्ञस्त्वथर्ववेदेन सर्वकर्माण्यकारयत् ॥ २० ॥

आख्यानैश्चाप्युपाख्यानैर्गाथाभिः कुलकर्म्मभिः ।
पुराणसंहिताञ्चक्रे पुराणार्थविशारदः ॥ २१ ॥
यच्छिष्टन्तु यजुर्वेदे तेन यज्ञमथायुजत् ।
युञ्जानः स यजुर्वेद इति शास्त्रविनिश्चयः ॥ २२ ॥
पदानामुद्धृतत्वाच्च यजूंषि विषमाणि वै ।
स तेनोद्धृतवीर्य्यस्तु ऋत्विग्भिर्वेदपारगैः ।
प्रयुज्यते ह्यश्वमेधस्तेन वा युज्यते तु सः ॥ २३ ॥
ऋचो गृहीत्वा पैलस्तु व्यभजत्तद्द्विधा पुनः ।
द्विःकृत्वा संयुगे चैव शिष्याभ्यामददत्प्रभुः ॥ २४ ॥
इन्द्रप्रमतये चैकां द्वितीयां वाष्कलाय च ।
चतस्रः संहिताः कृत्वा वाष्कलिर्द्विजसत्तमः ।
शिष्यानध्यापयामास शुश्रूषाभिरतान् हितान् ॥२५॥
बोधन्तु प्रथमां शाखां द्वितीयामग्निमाठरं ।
पाराशरं तृतीयान्तु याज्ञवाल्क्यमथापराम् ॥ २६ ॥
इन्द्रप्रमतिरेकान्तु संहितां द्विजसत्तमः ।
अध्यापयन्महाभागं मार्कण्डेयं यशस्विनं ॥ २७ ॥
सत्यश्रवसमग्र्यन्तु पुत्रं स तु महायशाः ।
सत्यश्रवाः सत्यहितं पुनरध्यापयद् द्विजः ॥२८ ॥
सोऽपि सत्यतरं पुत्रं पुनरध्यापयद्विभुः ।
सत्यश्रियं महात्मानं सत्यधर्मपरायणं ॥ २९ ॥
अभवंस्तस्य शिष्या वै त्रयस्तु सुमहौजसः ।
सत्यश्रियस्तु विद्वांसः शास्त्रग्रहणतत्पराः ॥ ३० ॥
शाकल्यः प्रथमस्तेषां तस्मादन्यो रथान्तरः ।

बाष्कलिश्च भरद्वाज इतिशाखाप्रवर्तकाः ॥ ३१ ॥
देवमित्रस्तु शाकल्यो ज्ञानाहङ्कारगर्वितः ।
जनकस्य स यज्ञे वै विनाशमगमद्द्विजः ॥ ३२ ॥
शांशपायन उवाच(१)। कथं विनाशमगमत्स मुनिर्ज्ञानगर्वितः।
जनकस्याश्वमेधेन कथं वादो बभूव ह ॥ ३३ ॥
किमर्थञ्चाभवद्वादः केन सार्द्धमथापि वा ।
सर्वमेतद्यथावृत्तमाचक्ष्व विदितन्तव ।
ऋषीणान्तु वचः श्रुत्वा तदुत्तरमथाब्रवीत् ॥ ३४ ॥
सूतउवाच । जनकस्याश्वमेधे तु महानासीत्समागमः ।
ऋषीणांन्तु सहस्राणि तत्राजग्मुरनेकशः ।
राजर्षेर्जनकस्याथ तं यज्ञं हि दिदृक्षवः ॥ ३५ ॥
आगतान् ब्राह्मणान् दृष्ट्वा जिज्ञासास्याभवत्ततः ।
को न्वेषां ब्राह्मणः श्रेष्ठः कथं मे निश्चयो भवेत् ।
इति निश्चित्य मनसा बुद्धिं चक्रे जनाधिपः ॥ ३६ ॥
गवां सहस्रमादाय सुवर्णमधिकं ततः ।
ग्रामान् रत्नानि दासांश्च (२) मुनीन् प्राह नराधिपः ।
सर्वानहं प्रपन्नोऽस्मि शिरसा श्रेष्ठभागिनः ॥ ३७ ॥
यदेतदाहृतं वित्तं यो वः श्रेष्ठतमो भवेत् ।
तस्मै तदुपनीतं हि विद्यावित्तं द्विजोत्तमाः ॥ ३८ ॥
जनकस्य वचः श्रुत्वा मुनयस्ते श्रुतिक्षमाः ।
दृष्ट्वा धनं महासारं धनतृष्णा जिहृक्षवः ।

---

१ वैशम्पायन उवाचेति ख० । २ पाश्यान् दासीमश्वांश्चेति ख० ।

अश्वथा...न्योन्यं वेदज्ञानमदोल्वणाः ॥ ३९ ॥
मनसा ...विज्ञास्ते ममेदं धनमित्युत ।
ममैवैतत्त्वन्यो ब्रूहि किं वा विकल्पते ।
इत्येवं धनलोभेन वादांश्चक्रुरनेकशः ॥ ४० ॥
तथाऽन्यस्तत्र वै विद्वान् ब्रह्मवाहसुतः कविः ।
याज्ञवल्क्यो महातेजास्तपस्वी ब्रह्मवित्तमः ॥ ४१ ॥
ब्रह्मणोऽङ्गात् समुत्पन्नो वाक्यं प्रोवाच सुस्वरं ।
शिष्यं ब्रह्मविदां श्रेष्ठो धनमेतद्गृहाण भो ॥ ४२ ॥
नयस्व च गृहं वत्स ममैतन्नात्र संशयः ।
सर्ववेदेष्वहं वक्ता नान्यः कश्चित्तु मत्समः ।
यो वा न प्रीयते विप्रः स मे ह्वयतु माऽचिरं ॥ ४३ ॥
ततो ब्रह्मार्णवः क्षुब्धः समुद्र इव संप्लवे ।
तानुवाच ततः स्वस्थो याज्ञवल्क्यो हसन्निव ॥ ४४ ॥
क्रोधं माकार्षुर्विद्वांसो भवन्तः सत्यवादिनः ।
वदामहे यथायुक्तं जिज्ञासन्तः परस्परं ॥ ४५ ॥
ततोऽभ्युपागमंस्तेषां वादा जग्मुरनेकशः ।
सहस्रधा शुभैरर्थैः सूक्ष्मदर्शनसम्भवैः ॥ ४६ ॥
लोके वेदे तथाध्यात्मे विद्यास्थानैरलङ्कृताः ।
शापोत्तमगुणैर्युक्ता नृपोचपरिवर्जनाः (१) ।
वादाः समभवंस्तत्र धनहेतोर्महात्मनां ॥ ४७ ॥
ऋषयस्त्वेकतः सर्वे याज्ञवल्क्यस्तथैकतः ।

---

१ नृपकृपविवर्जना इति पा० ।

सर्वे ते मुनयस्तेन याज्ञवल्क्येन धीमता ।
एकैकशस्ततः पृष्टा नैवोत्तरमथाब्रुवन् ॥ ४८ ॥
तान्विजित्य मुनीन् सर्वान् ब्रह्मराशिर्महाद्युतिः ।
शाकल्यमिति होवाच वादकर्त्तारमच्युतम् ॥ ४९ ॥
साकल्य वद वक्तव्यं किं ध्यायन्नवतिष्ठसे ।
पूर्णस्त्वं जड़मानेन वाताध्मातो यथा दृतिः ॥ ५० ॥
एवं स धर्षितस्तेन रोषात्ताम्रास्यलोचनः ।
प्रोवाच याज्ञवल्क्यं तं परुषं मुनिसन्निधौ ॥ ५१ ॥
त्वमस्मांस्तृणवत्कृत्वा तथैवैमान् द्विजोत्तमान् ।
विद्याधनं महासारं स्वयंग्राहं जिघृक्षसि ॥ ५२ ॥
शाकल्येनैवमुक्तः स याज्ञवल्क्यः समब्रवीत् ।
ब्रह्मिष्ठानां बलं विद्धि विद्यातत्त्वार्थदर्शनम् ॥ ५३ ॥
कामसार्थेन सम्बद्धस्तेनार्थं कामयामहे ।
कामप्रश्नधना विप्राः कामप्रश्नान्वदामहे ॥ ५४ ॥
पणाश्चैषोऽस्य राजर्षेस्तस्मान्नीतं धनं मया ।
एतच्छ्रुत्वा वचस्तस्य शाकल्यः क्रोधमूर्च्छितः ।
याज्ञवल्क्यमथोवाच कामप्रश्नार्थमद्वचः ॥ ५५ ॥
ब्रूहीदानीं मयोद्दिष्टान् कामप्रश्नान् यथार्थतः ।
ततः समभवद्वादस्तयोर्ब्रह्मविदोर्महान् ॥ ५६ ॥
साग्रं प्रश्नसहस्रन्तु साकल्यस्तम चूचुदत् ।
याज्ञवल्क्योऽब्रवीत्सर्वान् ऋषीणां शृण्वतां तदा ॥ ५७ ॥
शाकल्ये चापि निर्व्वादे याज्ञवल्क्यस्तमब्रवीत् ।
प्रश्नमेकं ममापि त्वं वद शाकल्य कामिकं ।

शापः पणोऽस्य वादस्य अब्रुवन् मृत्युमाव्रजेत् ॥ ५८ ॥
अथ समोदितं प्रश्नं याज्ञवल्क्येन धीमता ।
शाकल्यस्तमविज्ञाय सद्यो मृत्युमवाप्नुयात् ॥ ५९ ॥
एवं मृतः स शाकल्यः प्रश्नव्याख्यानपीड़ितः ।
एवं वादश्च सुमहानासीत्तेषां धनार्थिभिः ।
ऋषीणां मुनिभिः सार्द्धं याज्ञवल्क्यस्य चैव हि ॥ ६० ॥
सर्व्वैः पृष्टांस्तु सम्प्रश्नान्शतशोऽथ सहस्रशः ।
व्याख्याय वै मुने तेषां प्रश्नसारं महागतिः ॥ ६१ ॥
याज्ञवल्क्यो धनं गृह्य यशो विख्याप्य चात्मनः ।
जगाम वै गृहं स्वस्थः शिष्यैः परिवृतो वशी ॥ ६२ ॥
देवमित्रस्तु शाकल्यो महात्मा द्विजसत्तमः ।
चकार संहिताः पञ्च बुद्धिमान् पदवित्तमः ॥ ६३ ॥
तत्शिष्या अभवन् पञ्च मुद्गलो गोलकस्तथा ।
खालीयश्च तथा मत्स्यः शैशिरेयस्तु पञ्चमः ॥ ६४ ॥
प्रोवाच संहितास्तिस्रः शाकपूर्णरथीतरः (१) ।
निरुक्तञ्च पुनश्चक्रे चतुर्थं द्विजसत्तमः ॥ ६५ ॥
तस्य शिष्यास्तु चत्वारः केतवो दालकिस्तथा ।
धर्म्मशर्म्मा देवशर्म्मा सर्व्वे व्रतधरा द्विजाः ॥ ६६ ॥
शाकल्ये तु मृते सर्व्वे ब्रह्मघ्नास्ते बभूविरे ।
तदा चिन्तां परां प्राप्य गतास्ते ब्रह्मणोऽन्तिकं ॥ ६७ ॥
तान् ज्ञात्वा चेतसा ब्रह्मा प्रेषितः पवने पुरे ।

१ पाठोऽयं न समीचीनः ।

तत्र गच्छत यूयं वः सद्यः पापं प्रणश्यति ॥ ६८ ॥
द्वादशार्कं नमस्कृत्य तथा वै वालुकेश्वरं ।
एकादश तथा रुद्रान् वायुपुत्रं विशेषतः ।
कुण्डे च तुष्टये स्नात्वा ब्रह्महत्यां तरिष्यथ ॥ ६९ ॥
सर्व्वे शीघ्रतरा भूत्वा तत् पुरं समुपागताः ।
स्नानं कृतं विधानेन देवानां दर्शनं कृतं ॥ ७० ॥
उत्तरेश्वरं नमस्कृत्य वाड़वानां प्रसादतः ।
सर्व्वे पापविनिर्मुक्ता गतास्ते सूर्य्यमण्डलं ॥ ७१ ॥
तदा प्रभृति तत्तीर्थं जातं पातकनाशनं ।
वायोः पुरं पवित्रञ्च वायुना निर्म्मितं पुरा ॥ ७२ ॥
अञ्जनागर्भसम्भूतहनुमान् पवनात्मजः ।
यदा जातो महादेवहनुमान् सत्यविक्रमः ।
तदेवं निर्म्मितं तीर्थं वायुना ब्रह्मयोनिना ॥ ७३ ॥
ऊर्व्यां जातास्तु ये शूद्रा ब्राह्मणानां निवेदिताः ।
हत्यर्थं ब्रह्मयज्ञार्थं करस्तेषु कृतो महान् ॥ ७४ ॥
अनेन विधिना जातं विप्राणां शासनं महत् ।
गोघ्नो वापि कृतघ्नो वा सुरापो गुरुतल्पगः ।
वाड़ादित्यं नमस्कृत्य सर्व्वपापैः प्रमुच्यते ॥ ७५ ॥

इति श्रीमहापुराणे वायुप्रोक्ते महास्थानतीर्थवर्णनं नाम षष्ट्यऽध्यायः ।

---

## अथैकषष्टऽध्यायः ।

——:o:——

प्रजापतिवंशानुकीर्त्तनं ।

ऋषय ऊचुः । भारद्वाजो याज्ञवल्क्यो गालविः शाकल्यस्तथा ।
धीमान् शतबलाकश्च नैगमश्च द्विजोत्तमः ॥ १ ॥
वाष्कलिश्च भरद्वाजस्तिस्रः प्रोवाच संहिताः ।
रथीतरो निरुक्तञ्च पुनश्चक्रे चतुर्थकं ॥ २ ॥
त्रयस्तस्याभवन् शिष्या महात्मानो गुणान्विताः ।
धीमान्नन्दायनीयश्च पन्नगारिश्च बुद्धिमान् ।
तृतीयश्चार्यवस्ते च तपसा संशितव्रताः ॥ ३ ॥
वीतरागा महातेजा संहिताज्ञानपारगाः ।
इत्येते बह्वृचा प्रोक्ताः संहिता यैः प्रवर्त्तिताः ॥ ४ ॥
वैशम्पायनगोत्रोऽसौ यजुर्वेदं व्यकल्पयत् ।
षड़शीतिस्तु येनोक्ताः संहिता यजुषां शुभाः ॥ ५ ॥
शिष्येभ्यः प्रददौ ताश्च जगृहुस्ते विधानतः ।
एकस्तत्र परित्यक्तो याज्ञवल्क्यो महातपाः ।
षड़शीतिश्च तस्यापि संहितानां विकल्पकाः ॥ ६ ॥
सर्वेषामेव तेषां वै त्रिधा भेदाः प्रकीर्त्तिताः ।
त्रिधा भेदास्तु ते प्रोक्ता भेदेऽस्मिन्नवमे शुभे ॥ ७ ॥
उदीच्या मध्यदेशाश्च प्राच्याश्चैव पृथग्विधाः ।
श्यामायनिरुदीच्यानां प्रधानः सम्बभूव ह ॥ ८ ॥

मध्यदेशप्रतिष्ठानामारुणिः प्रथमः स्मृतः ।
आलम्बिरादिः प्राच्यानाम्श्चैदश्याद्यस्तु(१)ते ॥ ९ ॥
इत्येते चरकाः प्रोक्ताः संहितावादिनो द्विजाः ।
ऋषयस्तद्वचः श्रुत्वा सूतं जिज्ञासवोऽब्रुवन् ॥ १० ॥
चरकाध्वर्य्यवः केन कारणं ब्रूहि तत्त्वतः ।
किञ्चीर्णं कस्य हेतोश्च वाचकत्वञ्च भेजिरे ।
इत्युक्तः प्राह तेषां स चरकत्वमभूद्यथा ॥ ११ ॥
सूत उवाच । कार्य्यमासीदृषीणाञ्च किञ्चिद् ब्राह्मणसत्तमाः ।
मेरुपृष्ठं समासाद्य तैस्तदा त्विति मन्त्रितं ॥ १२ ॥
यो नोऽत्र सप्तरात्रेण नागच्छेद्द्विजसत्तमाः ।
स कुर्य्याद् ब्रह्मवध्यां वै समयो नः प्रकीर्त्तितः ॥ १३ ॥
ततस्ते सगणाः सर्व्वे वैशम्पायनवर्ज्जिताः ।
प्रययुः सप्तरात्रेण यत्र सन्धिः कृतोऽभवत् ॥ १४ ॥
ब्राह्मणानान्तु वचनाद् ब्रह्मवध्याञ्चकार सः ।
शिष्यानथ समानीय स वैशम्पायनोऽब्रवीत् ॥ १५ ॥
ब्रह्मवध्याञ्चरध्वं वै मत्कृते द्विजसत्तमाः ।
सर्व्वे यूयं समागम्य ब्रूत मे तद्धितं वचः ॥ १६ ॥
याज्ञवल्क्य उवाच । अहमेव चरिष्यामि तिष्ठन्तु मुनयस्त्विमे ।
बलञ्चोत्थापयिष्यामि तपसा स्वेन भावितः ॥ १७ ॥
एवमुक्तस्ततः क्रुद्धो याज्ञवल्क्यमथाब्रवीत् ।
उवाच यत्त्वयाऽधीतं सर्व्वं प्रत्यर्पयस्व मे ॥ १८ ॥

---

१ पाठोऽयं न समीचीनः ।

एवमुक्तः स रूपाणि यजूंषि प्रददौ गुरोः ।
रुधिरेण तथाक्तानि छर्दित्वा ब्रह्मवित्तमः ॥ १९ ॥
ततः स ध्यानमास्थाय सूर्य्यमाराधयद् द्विजाः ।
सूर्य्यं ब्रह्म यदुच्छिन्नं(१) खङ्गत्वा प्रतितिष्ठति ॥ २० ॥
ततो यानि गतान्यूर्द्ध्वं यजूंष्यादित्यमण्डलं ।
तानि तस्मै ददौ तुष्टः सूर्य्यो वै ब्रह्मरीतये ।
अश्वरूपाय मार्त्तण्डो याज्ञवल्क्याय धीमते ॥ २१ ॥
यजूंष्यधीयन्ते यानि ब्राह्मणा येन केन च ।
अश्वरूपाय दत्तानि ततस्ते वाजिनोऽभवन् ॥ २२ ॥
ब्रह्महत्या तु यैश्चीर्णा चरणाच्चरकाः स्मृताः ।
वैशम्पायनशिष्यास्ते चरकाः समुदाहृताः ॥ २३ ॥
इत्येते चरकाः प्रोक्ता वाजिनस्तान्निबोधत ।
याज्ञवल्क्यस्य शिष्यास्ते कण्ववैधेयशालिनः ॥ २४ ॥
मध्यन्दिनश्च शापेयी विदिग्धश्चाप्य उद्दलः ।
ताम्रायणश्च वात्स्यश्च तथा गालवशैशिरी ।
आटवी च तथा पर्णी वीरणी सपरायणः ॥ २५ ॥
इत्येते वाजिनः प्रोक्ता दश पञ्च च संस्मृताः ।
शतमेकाधिकं कृत्स्नं यजुषां वै विकल्पकाः ॥ २६ ॥
पुत्रमध्यापयामास सुमन्तुमथ जैमिनिः ।
सुमन्तुश्चापि सुत्वानं पुत्रमध्यापयत्प्रभुः ।
सुकर्माणं सुतं सुत्वा पुत्रमध्यापयत्प्रभुः ॥ २७ ॥

---

१ तत् सूर्यं ब्रह्म यच्छिन्नमिति ड० ।

स सहस्रमधीत्याशु सुकर्माप्यथ संहिताः।
प्रोवाचाथ सहस्रस्य सुकर्मा सूर्य्यवर्च्चसः॥ २८॥
अनध्यायेष्वधीयानांस्तान् जघान शतक्रतुः।
प्रायोपवेशमकरोत्ततोऽसौ शिष्यकारणात्॥ २९॥
क्रुद्धं दृष्ट्वा ततः शक्रो वरमस्मै ददौ पुनः।
भाविनो ते महावीर्य्यौ शिष्यावनलवर्च्चसौ॥ ३०॥
अधीयानौ महाप्राज्ञौ सहस्रं संहितावुभौ।
एतौ सुरौ महाभागौ मा क्रुध्य द्विजसत्तम॥ ३१॥
इत्युक्त्वा वासवः श्रीमान् सुकर्माणं यशस्विनं।
शान्तक्रोधं द्विजं दृष्ट्वा तत्रैवान्तरधीयत॥ ३२॥
तस्य शिष्यो भवेद्धीमान् पौष्यञ्जी द्विजसत्तमाः।
हिरण्यनाभः कौशिक्यो द्वितीयोऽभून्नराधिपः॥ ३३॥
अध्यापयत्तु पौष्यञ्जी सहस्रार्द्धन्तु संहिताः।
तेनान्योदीच्यसामान्याः शिष्याः पौष्यञ्जिनः शुभाः॥३४॥
शतानि पञ्च कौशिक्यः संहितानाञ्च वीर्य्यवान्।
शिष्या हिरण्यनाभस्य स्मृतास्ते प्राच्यसामगाः॥ ३५॥
लोकाक्षी कुथुमिश्चैव कुशीती लाङ्गलिस्तथा।
पौष्यञ्जिशिष्याश्चत्वारस्तेषां भेदान्निबोधत॥ ३६॥

राणायनीयः सहितण्डिपुत्र-
स्तस्मादन्यो मूलचारी सुविद्वान्।
सकतिपुत्रः सहसात्यपुत्र
एतान् भेदान्वित्त लोकाक्षिणस्तु॥ ३७॥

त्रयस्तु कुथुमेः पुत्रा औरसो रसपासरः।

भार्गविस्त्रिश्च तेजस्वी त्रिविधाः कौथुमाः स्मृताः ॥ ३८॥
शौरिद्युः शृङ्गिपुत्रश्च द्वावेतौ चरितव्रतौ ।
राणायनीयः सौमित्रिः सामवेदविशारदौ ॥ ३९ ॥
प्रोवाच संहितास्तिस्रः शृङ्गिपुत्रो महातपाः ।
चैलः प्राचीनयोगश्च सुरालश्च द्विजोत्तमाः ॥ ४० ॥
प्रोवाच संहिताः षट् तु पाराशर्य्यस्तु कौथुमः ।
आसुरायणवैशाख्यौ वेदवृद्धपरायणौ ॥ ४१ ॥
प्राचीनयोगपुत्रश्च बुद्धिमांश्च पतञ्जलिः ।
कौथुमस्य तु भेदास्ते पाराशर्य्यस्य षट् स्मृताः ।
लाङ्गलिः शालिहोत्रश्च षट् षट् प्रोवाच संहिताः ॥ ४२ ॥
भालुकिः कामहानिश्च जैमिनिर्लोमगायिनः ।
कण्डश्च कोहलश्चैव षडेते लाङ्गलाः स्मृताः ।
एते लाङ्गलिनः शिष्याः संहिता यैः प्रसाधिताः ॥ ४३ ॥
ततो हिरण्यनाभस्य कृतशिष्यो नृपात्मजः ।
सोऽकरोच्च चतुर्विंशत्संहिताः द्विपदां वरः ।
प्रोवाच चैव शिष्येभ्यो येभ्यस्तांश्च निबोधत ॥ ४४ ॥
राडश्च महवीर्य्यश्च पञ्चमो वाहनस्तथा ।
तालकः पाण्डकश्चैव कालिको राजिकस्तथा ।
गौतमश्चाजवस्तश्च सोमराजाऽपतस्तत: ॥ ४५ ॥
पृष्टघ्नः परिकृष्टश्च उलूखलक एव च ।
यवीयसश्च वैशालो अङ्गुलीयश्च कौशिकः ॥ ४६ ॥
सालिमञ्जरिसत्यश्च कापीयः कानिकश्च यः ।
पराशरश्च धर्मात्मा इति कार्त्तास्तु सामगाः ॥ ४७ ॥

सामगानान्तु सर्वेषां श्रेष्ठौ द्वौ तु प्रकीर्त्तितौ ।
पौष्यजिश्च कृतिश्चैव संहितानां विकल्पकौ ॥ ४८ ॥
अथर्वाणं द्विधा कृत्वा सुमन्तुरददद्द्विजाः ।
कबन्धाय पुनः कृत्स्नं स च विद्याद्यथाक्रमं ॥ ४९ ॥
कबन्धस्तु द्विधा कृत्वा पथ्यायैकम्पुनर्ददौ ।
द्वितीयं वेदस्पर्शाय स चतुर्धाऽकरोत् पुनः ॥ ५० ॥
मोदो ब्रह्मबलश्चैव पिप्पलादस्तथैव च ।
शौक्लायनिश्च धर्मज्ञश्चतुर्थस्तपनः स्मृतः ।
वेदस्पर्शस्य चत्वारः शिष्यास्त्वेते दृढव्रताः ॥५१॥
पुनश्च त्रिविधं विद्धि पथ्यानां भेदमुत्तमं ।
जाजलिः कुमुदादिश्च तृतीयः शौनकः स्मृतः ॥ ५२ ॥
शौनकस्तु द्विधा कृत्वा ददावेकन्तु बभ्रवे ।
द्वितीयां संहितां धीमान् सैन्धवायनसंज्ञिते ॥ ५३ ॥
सैन्धवो मुञ्जकेशाय भिन्ना सा च द्विधा पुनः ।
नक्षत्रकल्पो वैतानस्तृतीयः संहिताविधिः ।
चतुर्थोऽङ्गिरसः कल्पो शान्तिकल्पश्च पञ्चमः ॥ ५४ ॥
श्रेष्ठस्त्वथर्वणो ह्येते संहितानां विकल्पनाः ।
षट्शः कृत्वा मयाप्युक्तं पुराणमृषिसत्तमाः ॥ ५५ ॥
आत्रेयः सुमतिर्धीमान् काश्यपो ह्यकृतव्रणः ।
भारद्वाजोऽग्निवर्चाश्च वशिष्ठो मित्रयुश्च यः ।
सावर्णिः सोमदत्तिस्तु सुशर्म्मा शांशपायनः ॥ ५६ ॥
एते शिष्या मम ब्रह्मन् पुराणेषु दृढव्रताः ।
त्रिभिस्तिस्रः कृतास्तिस्रः संहिताः पुनरेव हि ॥ ५७ ॥

काश्यपः संहिताकर्त्ता सावर्णिः शांशपायनः ।
सामिका च चतुर्थी स्यात्सा चैषा पूर्वसंहिता ॥ ५८ ॥
सर्वास्ताहि चतुष्पादाः सर्वाश्चैकार्थवाचिकाः ।
पाठान्तरे पृथग्भूता वेदशाखा यथा तथा ।
चतुःसाहस्त्रिकाः सर्व्वाः शांशपायनिकामृते ॥ ५९ ॥
लोमहर्षणिका मूलास्ततः काश्यपिकाः पराः ।
सावर्णिकास्तृतीयास्ता यजुर्वाक्यार्थपण्डिताः ॥ ६० ॥
शांशपायनिकाश्चान्या नोदनार्थविभूषिताः ।
सहस्राणि ऋचामष्टौ षट्शतानि तथैव च ॥ ६१ ॥
एताः पञ्चदशान्याश्च दशान्या दशभिस्तथा ।
वालिखिल्याः समप्रैषाः (१) ससावर्णाः प्रकीर्तिताः ।६२।
अष्टौ सामसहस्राणि सामानि च चतुर्द्दश ।
आरण्यकं सहोमञ्च एतद्गायन्ति सामगाः ॥ ६३ ॥
द्वादशैव सहस्राणि छन्द आध्वर्यवं स्मृतं ।
यजुषां ब्राह्मणानाञ्च यथा (२) व्यासो व्यकल्पयत् ॥ ६४ ॥
सग्रास्यारण्यकन्तस्मात् समन्त्रकरणं तथा ।
अतः परङ्कथानान्तु पूर्वा इति विशेषणं ॥ ६५ ॥
ग्राम्यारण्यं समन्त्रञ्च ऋग्ब्राह्मणयजुः स्मृतं ।
तथा हारिद्रवीयाणां खिलान्युपखिलानि च ।
तथैव तैत्तिरीयाणां परक्षुद्रा इतिस्मृतं ॥ ६६ ॥
द्वे सहस्रे शतन्यूने वेदे वाजसनेयके ।
ऋग्गणः परिसंख्यातो ब्राह्मणन्तु चतुर्गुणं ॥ ६७ ॥

---

१ सप्रैषा इति ख० । सप्रैषा इति ट० ।   २ तथेति क० ।

अष्टौ सहस्राणि शतानि चाष्टौ
अशीतिरन्यान्यधिकञ्च पादः ।
एतत्प्रमाणं यजुषामृचाञ्च
सशुक्रियं साखिलयाज्ञवल्क्यं ॥ ६८ ॥

तथा चरणविद्यानां प्रमाणं संहितां शृणु ।
षट्साहस्रमृचामुक्तामृचः षड्विंशतिः पुनः ।
एतावदधिकं तेषां यजुः कामं विवक्षति ॥ ६९ ॥
एकादश सहस्राणि दश चान्या दशोत्तराः ।
ऋचान्दश सहस्राणि अशीतिस्त्रिशतानि च ॥ ७० ॥
सहस्रमेकं मन्त्राणामृचामुक्तं प्रमाणतः ।
एतावद्भृगुविस्तारमन्यच्चाथर्व्विकं बहु ॥ ७१ ॥
ऋचामथर्व्वणां पञ्च सहस्राणि विनिश्चयः (१) ।
सहस्रमन्यद्विज्ञेयमृषिभिर्विशतिं विना ॥ ७२ ॥
एतदङ्गिरसा प्रोक्तन्तेषामारण्यकम्पुनः ।
इति संख्या प्रसंख्याता शाखाभेदास्तथैव च ॥ ७३ ॥
कर्त्तारश्चैव शाखानां भेदे हेतुस्तथैव च ।
सर्व्वमन्वन्तरेष्वेवं शाखाभेदाः समाः स्मृताः ॥ ७४ ॥
प्राजापत्या श्रुतिर्नित्या तद्विकल्पास्त्विमे स्मृताः ।
अनित्यभावाद्देवानां मन्त्रोत्पत्तिः पुनः पुनः ॥ ७५ ॥
मन्वन्तराणां क्रियते श्रुतानां नामनिश्चयः ।
द्वापरेषु पुनर्भेदाः श्रुतानां परिकीर्त्तिताः ॥ ७६ ॥
एवं वेदन्तदान्यस्य भगवानृषिसत्तमः ।

१ सहस्राणीति निश्चय इति ङ० ।

शिवेरथश्च पुनर्दृष्ट्वा तपस्तप्तुं गतो वनं ।
तस्य शिष्यप्रशिष्यैस्तु शाखाभेदास्त्विमे कृताः ॥ ७७ ॥
अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः ।
धर्म्मशास्त्रं पुराणञ्च विद्यास्त्वेताश्चतुर्दश ॥ ७८ ॥
आयुर्वेदो धनुर्वेदो गान्धर्व्वश्चैव ते त्रयः ।
अर्थशास्त्रं चतुर्थन्तु विद्यास्त्वष्टादशैव तु ॥ ७९ ॥
ज्ञेया ब्रह्मर्षयः पूर्वन्तेभ्यो देवर्षयः पुनः ।
राजर्षयः पुनस्तेभ्य ऋषिप्रकृतयस्त्रयः ।
तेभ्य ऋषिप्रकृतयो मुनिभिः संशितव्रतैः ॥ ८० ॥
काश्यपेषु वशिष्ठेषु तथा भृग्वङ्गिरोऽत्रिषु
पञ्चस्वेतेषु जायन्ते गोत्रेषु ब्रह्मवादिनः ।
यस्मादृषन्ति ब्रह्माणन्तेन ब्रह्मर्षयः स्मृताः ॥ ८१ ॥
धर्म्मस्याथ पुलस्त्यस्य क्रतोश्च पुलहस्य च ।
प्रत्यूषस्य प्रभासस्य काश्यपस्य तथा पुनः ॥ ८२ ॥
देवर्षयः सुतास्तेषां नामतस्तान्निबोधत ।
देवर्षी धर्म्मपुत्रौ तु नरनारायणावुभौ ॥ ८३ ॥
वालिखिल्याः क्रतोः पुत्राः कर्द्दमः पुलहस्य तु ।
कुवेरश्चैव पौलस्त्यः प्रत्यूषस्याचलः स्मृतः ॥ ८४ ॥
पर्वतो नारदश्चैव काश्यपस्यात्मजावुभौ ।
ऋषन्ति देवान्यस्मात्ते तस्माद् देवर्षयः स्मृताः ॥ ८५ ॥
मानवे वैश्ये वंशे ऐड़वंशे च ये नृपाः ।
ऐड़ा ऐक्ष्वाकनाभागा ज्ञेया राजर्षयस्तु ते ॥ ८६ ॥
ऋषन्ति रञ्जनाद्यस्मात्प्रजा राजर्षयस्ततः ।

ब्रह्मलोकप्रतिष्ठास्तु स्मृता ब्रह्मर्षयो मताः ॥ ८७ ॥
देवलोकप्रतिष्ठाश्च ज्ञेया देवर्षयः शुभाः ।
इन्द्रलोकप्रतिष्ठास्तु सर्वे राजर्षयो मताः ॥ ८८ ॥
अभिजात्या च तपसा मन्त्रव्याहरणैस्तथा ।
एवं ब्रह्मर्षयः प्रोक्ता दिव्या राजर्षयस्तु ये ॥ ८९ ॥
देवर्षयस्तथाऽन्ये च तेषां वक्ष्यामि लक्षणं ।
भूतभव्यभवज्ञानं सत्याभिव्याहृतं तथा ॥ ९० ॥
सम्बुद्धास्तु स्वयं ये तु सम्बद्धा ये च वै स्वयं ।
तपसेह प्रसिद्धा ये गर्भे यैश्च प्रनोदितं ॥ ९१ ॥
मन्त्रव्याहारिणो ये च ऐश्वर्यात्सर्व्वगाश्च ये ।
इत्येते ऋषिभिर्युक्ता देवद्विजनृपास्तु ये ॥ ९२ ॥
एतान् भावानधीयाना ये चैत ऋषयो मताः ।
सप्तैते सप्तभिश्चैव गुणैः सप्तर्षयः स्मृताः ॥ ९३ ॥
दीर्घायुषो मन्त्रकृत ईश्वरा दिव्यचक्षुषः ।
वृद्धाः प्रत्यक्षधर्म्माणो गोत्रप्रवर्तकाश्च ये ॥ ९४ ॥
षट्कर्माभिरता नित्यं शालिनो गृहमेधिनः ।
तुल्यैर्व्यवहरन्ति स्म अदृष्टैः कर्महेतुभिः ॥ ९५ ॥
अग्राम्यैर्वर्त्तयन्ति स्म रसैश्चैव स्वयंकृतैः ।
कुटुम्बिन ऋद्धिमन्तो वाह्यान्तरनिवासिनः ॥ ९६ ॥
कृतादिषु युगाख्येषु सर्व्वेष्वेव पुनः पुनः ।
वर्णाश्रमव्यवस्थानं क्रियन्ते प्रथमन्तु वै ॥ ९७ ॥
प्राप्ते त्रेतायुगमुखे पुनः सप्तर्षयस्त्विह ।
प्रवर्त्तयन्ति ये वर्णानाश्रमांश्चैव सर्वशः ।

तेषामेवान्वये वीरा उत्पद्यन्ते पुनः पुनः ॥ ९८ ॥
जायमाने पिता पुत्रे पुत्रः पितरि चैव हि ।
एवं समित्याविच्छेदाद् वर्त्तयन्त्यायुगक्षयात् ।
अष्टाशीतिसहस्राणि प्रोक्तानि गृहमेधिनां ॥ ९९ ॥
अर्य्यम्णो दक्षिणा ये तु पितृयाणं समाश्रिताः ।
दाराग्निहोत्रिणस्ते वै ये प्रजाहेतवः स्मृताः ॥ १०० ॥
गृहमेधिनाञ्च संख्येयाः श्मशानान्याश्रयन्ति ते ।
अष्टाशीतिसहस्राणि निहिता उत्तरायणे ॥ १०१ ॥
ये श्रूयन्ते दिवं प्राप्ता ऋषयो ह्यूर्द्धरेतसः ।
मन्त्रब्राह्मणकर्त्तारो जायन्ते ह युगक्षये ॥ १०२ ॥
एवमावर्त्तमानास्ते द्वापरेषु पुनः पुनः ।
कल्पानां भाष्यविद्यानां नानाशास्त्रकृतः क्षये ॥ १०३ ॥
भविष्ये द्वापरे चैव द्रौणिर्द्वैपायनः पुनः ।
वेदव्यासो ह्यतीतेऽस्मिन् भविता सुमहातपाः ॥ १०४ ॥
भविष्यन्ति भविष्येषु शाखाप्रणयनानि तु ।
तस्मै तद् ब्रह्मणा ब्रह्म तपसा प्राप्तमव्ययं ॥ १०५ ॥
तपसा कर्म्म सम्प्राप्तं कर्म्मणा हि ततो यशः ।
यशसा प्राप्य सत्यं हि सत्येनाप्तो हि चाव्ययः ॥ १०६ ॥
अव्ययादमृतं शुक्रममृतात् सर्व्वमेव हि ।
ध्रुवमेकाक्षरमिदं स्वात्मन्येव व्यवस्थितं ।
बृहत्वाद् बृंहणाच्चैव तद्ब्रह्मेत्यभिधीयते ॥ १०७ ॥
प्रणवावस्थितं भूयो भूर्भुवःस्वरिति स्मृतं ।
ऋग्यजुःसामाथर्वरूपिणे ब्रह्मणे नमः ॥ १०८ ॥

जगतः प्रलयोत्पत्तौ यत्तत्कारणसंज्ञितं ।
महत. परमं गुह्यं तस्मै सुब्रह्मणे नमः ॥ १०६ ॥
अगाधापरमक्षय्यं जगत्सम्मोहनालयं ।
सम्प्रकाशप्रवृत्तिभ्यां पुरुषार्थप्रयोजनं ॥ ११० ॥
सांख्यज्ञानवतां निष्ठा गतिः सूक्ष्मात्मनः ।
यत्तदव्यक्तममृतं प्रकृतिब्रह्म शाश्वतं ॥ १११ ॥
प्रधानमात्मयोनिश्च गुह्यं सत्त्वञ्च शब्द्यते ।
अविभागस्तथा शुक्रमक्षरं बहुवाचकं ।
परमब्रह्मणे तस्मै नित्यमेव नमो नमः ॥ ११२ ॥
कृते पुनःक्रिया नास्ति कुत एवाकृतक्रिया ।
सकृदेव कृतं सर्व्वं यद्वै लोके कृताकृतं ॥ ११३ ॥
श्रोतव्यं वै श्रुतं वापि तथैवासाधुसाधुता ।
ज्ञातव्यञ्चाथ मन्तव्यं स्प्रष्टव्यं भोज्यमेव च ।
द्रष्टव्यञ्चाथ श्रोतव्यं ज्ञातव्यं वाथ किञ्चन ॥ ११४ ॥
दर्शितं यदनेनैव ज्ञानं तद्वै सुरर्षिणां ।
यद्वै दर्शितवानेष कस्तदन्वेष्टुमर्हति ।
सर्वाणि सर्व्वान् सर्वाश्च भगवानेव सोऽब्रवीत् ॥ ११५ ॥
यदा यत्क्रियते येन तदा तत्सोऽभिमन्यते ।
येनेदं क्रियते पूर्व्वं तदन्येन विभावितं ॥ ११६ ॥
यदा तु क्रियते किञ्चित्केनचिद्वाङ्मयं क्वचित् ।
तेनैव तत्कृतं पूर्वं कर्त्तॄणां प्रतिभाति वै ॥ ११७ ॥
विरक्तश्चातिरिक्तश्च ज्ञानाज्ञाने प्रियाप्रिये ।
धर्म्माधर्म्मौ सुखं दुःखं मृत्युश्चामृतमेव च ।

ऊर्द्धन्तिर्य्यगधोभागस्तस्यैवादृष्टकारणं ॥ ११८ ॥
स्वायम्भुवोऽथ ज्येष्ठस्य ब्रह्मणः परमेष्ठिनः।
प्रत्येकत्रिविद्यम्भवति त्रेतास्विह पुनः पुनः ॥ ११९ ॥
व्यस्यते ह्येकविद्यस्तद् द्वापरेषु पुनः पुनः।
ब्रह्मा चैतदुवाचादौ तस्मिन्वैवस्वतेऽन्तरे ॥ १२० ॥
आवर्त्तमाना ऋषयो युगाख्यासु पुनः पुनः।
कुर्व्वन्ति संहिता ह्येते जायमानाः परस्परं ॥ १२१ ॥
अष्टाशीतिसहस्राणि श्रुतर्षीणां स्मृतानि वै।
ता एव संहिता ह्येते आवर्त्तन्ते पुनः पुनः ॥ १२२ ॥
श्रिता दक्षिणपन्थानं ये श्मशानानि भेजिरे।
युगे युगे तु ताः शाखा व्यस्यन्ते तैः पुनः पुनः ॥ १२३ ॥
द्वापरेष्विह सर्वेषु संहिताश्च श्रुतर्षिभिः।
तेषां गोत्रेष्विमाः शाखा भवन्तीह पुनः पुनः।
ताः शाखास्तत्र कर्त्तारो भवन्तीह युगक्षयात् ॥ १२४ ॥
एवमेव तु विज्ञेयं व्यतीतानागतेष्विह।
मन्वन्तरेषु सर्वेषु शाखाप्रणयनानि वै ॥ १२५ ॥
अतीतेषु अतीतानि वर्त्तन्ते साम्प्रतेषु च।
भविष्याणि च यानि स्युर्वर्त्स्यन्तेऽनागतेष्वपि ॥ १२६ ॥
पूर्व्वेण पश्चिमं ज्ञेयं वर्त्तमानेन चोभयं।
एतेन क्रमयोगेन मन्वन्तरविनिश्चयः ॥ १२७ ॥
एवं देवाश्च पितर ऋषयो मनवश्च ये।
मन्त्रैः सहोर्द्ध्वं गच्छन्ति ह्यावर्त्तन्ते च तैः सह ॥ १२८ ॥
जनलोकात्सुराः सर्वे पञ्चकल्पात्पुनः पुनः।

पर्य्याप्तकाले (१) सम्प्राप्ते सम्भूता नैव नश्य तु (२) ॥१२९॥
अवश्यम्भाविनार्थेन सम्बध्यन्ते तदा तु ते।
ततस्ते दोषवज्जन्म पश्यन्ते रागपूर्व्वकं॥ १३० ॥
निवर्त्तते तदा वृत्तिस्तेषामादोषदर्शनात्।
एवं देवयुगानीह दश कृत्वा निवर्त्तते ॥१३१॥
जनलोकात्तपोलोकं गच्छन्तीह्यानिवर्त्तनं।
एव देवयुगानीह व्यतीतानि सहस्रशः॥
निधनं ब्रह्मलोके वै गतानि मुनिभिस्सह॥ १३२ ॥
न शक्यमानुपूर्व्वेण तेषां वक्तुं सविस्तरान्।
अनादित्वाच्च कालस्य असंख्यानाच्च सर्व्वशः।
मन्वन्तराण्यतीतानि यानि कल्पैः पुरा सह।
पितृभिर्मुनिभिर्देवैः सार्द्धं सप्तर्षिभिश्च वै।
कालेन प्रतिसृष्टानां युगानाञ्च निवर्तनं॥ १३४ ॥
एतेन क्रमयोगेन कल्पमन्वन्तराणि तु।
सप्रजानि व्यतीतानि शतशोऽथ सहस्रशः॥ १३५ ॥
मन्वन्तरान्ते संहारः संहारान्ते च सम्भवः।
देवतानामृषीणाञ्च मनोः पितृगणस्य च॥ १३६ ॥
न शक्यमानुपूर्व्व्येण वक्तुं वर्षशतैरपि।
विस्तरस्तु निसर्गस्य संहारस्य च सर्वशः।
मन्वन्तरस्य संख्या तु मानुषेण निबोधत॥ १३७ ॥
देवतानामृषीणाञ्च संख्यानार्थविशारदैः।

---

१ पर्य्याप्तकाले इति क०।
२ पाठोऽयं आदर्शग्रन्थतो मुद्रितः परन्त्वयं न सतीचीनः।

त्रिंशत्कोट्यस्तु संपूर्णाः संख्याताः संख्यया द्विजैः ॥१३८॥
सप्तषष्टिस्तथान्यानि नियुतानि च संख्यया ।
विंशतिश्च सहस्राणि कालोऽयं सोऽधिकान् विना ॥१३९॥
मन्वन्तरस्य संख्यैषा मानुषेण प्रकीर्तिता ।
वत्सरेणैव दिव्येन प्रवक्ष्याम्यन्तरम्मनोः ॥ १४० ॥
अष्टौ शतसहस्राणि दिव्यया संख्यया स्मृतं ।
द्विपञ्चाशत्तथान्यानि सहस्राण्यधिकानि तु ॥ १४१ ॥
चतुर्दशगुणो ह्येष काल आहूतसंप्लवः ।
पूर्णं युगसहस्रं स्यात्तदहर्ब्रह्मणः स्मृतं ॥ १४२ ॥
तत्र सर्व्वाणि भूतानि दग्धान्यादित्यरश्मिभिः ।
ब्रह्माणमग्रतः कृत्वा सह देवर्षिदानवैः ।
प्रविशन्ति सुरश्रेष्ठं देवदेवं महेश्वरं ॥ १४३ ॥
स स्रष्टा सर्व्वभूतानि कल्पादिषु पुनः पुनः ।
इत्येष स्थितिकालो वै मनोर्देवर्षिभिः सह ॥ १४४ ॥
सर्व्वमन्वन्तराणां वै प्रतिसन्धिं निबोधत ।
युगाख्या या समुद्दिष्टा प्रागेवास्मिन् मया तव ॥ १४५ ॥
कृतत्रेतादिसंयुक्तं चतुर्युगमिति स्मृतं ।
तदेकसप्ततिगुणं परिवृत्तन्तु साधिकं ।
मनोरेकमधीकारं प्रोवाच भगवान् प्रभुः ॥१४६ ॥
एवं मन्वन्तराणान्तु सर्वेषामेव लक्षणं ।
अतीतानागतानां वै वर्त्तमानेन कीर्त्तितं ॥ १४७ ॥
इत्येष कीर्त्तितः सर्गो मनोः स्वायम्भुवस्य ह ।
प्रतिसन्धिन्तु वक्ष्यामि तस्य वै चापरस्य तु ॥ १४८ ॥

मन्वन्तरं यथा पूर्वमृषिभिर्दैवतैः सह।
अवश्यम्भाविनार्थेन यथा तद्वै निवर्त्तते ॥ १४९ ॥
अस्मिन् मन्वन्तरे पूर्वं त्रैलोक्यस्येश्वरास्तु ये।
सप्तर्षयश्च देवास्ते पितरो मनवस्तथा।
मन्वन्तरस्य काले तु सम्पूर्णे साधकास्तथा ॥ १५० ॥
क्षीणाधिकाराः संवृत्ता बुद्धा पर्य्यायमात्मनः।
महर्लोकाय ते सर्वे उन्मुखा दधिरे गतिं ॥ १५१ ॥
ततो मन्वन्तरे तस्मिन् प्रक्षीणा देवतास्तु ताः।
सम्पूर्णे स्थितिकाले तु तिष्ठन्त्येकं कृतं युगं ॥ १५२ ॥
उत्पद्यन्ते भविष्याश्च यावन्मन्वन्तरेश्वराः।
देवताः पितरश्चैव ऋषयो मनुरेव च ॥ १५३ ॥
मन्वन्तरे तु सम्पूर्णे यद्यन्यद् वै कलौ युगे।
सम्पद्यते कृतं तेषु कलिशिष्टेषु वै तदा ॥ १५४ ॥
यथा कृतस्य सन्तानः कलिपूर्वः स्मृतो बुधैः।
तथा मन्वन्तरान्तेषु आदिर्मन्वन्तरस्य च ॥ १५५ ॥
क्षीणे मन्वन्तरे पूर्वे प्रवृत्ते चापरे पुनः।
मुखे कृतयुगस्याथ तेषां शिष्टास्तु ये तदा ॥ १५६ ॥
सप्तर्षयो मनुश्चैव कालाविचास्तु ये स्थिताः।
मन्वन्तरं प्रतीक्षन्ते क्षीयन्ते तपसि स्थिताः ॥ १५७ ॥
मन्वन्तरव्यवस्थार्थं सन्तत्यर्थञ्च सर्व्वशः।
पूर्व्ववत् सम्प्रवर्त्तन्ते प्रवृत्ते वृष्टिसर्ज्जने ॥ १५८ ॥
द्वन्द्वेषु सम्प्रवृत्तेषु उत्पन्नास्वौषधीषु च।
प्रजासु च निकेतासु संस्थितासु क्वचित् क्वचित् ॥ १५९ ॥

वार्त्तायान्तु प्रवृत्तायां मद्धर्मे ऋषिभाविते ।
निरानन्दे गते लोके नष्टे स्थावरजङ्गमे ॥ १६० ॥
अग्रामनगरे चैव वर्णाश्रमविवर्जिते ।
पूर्वमन्वन्तरे शिष्टे ये भवन्तीह धार्म्मिकाः ।
सप्तर्षयो मनुश्चैव सन्तानार्थं व्यवस्थिताः ॥ १६१ ॥
प्रजार्थं तपतान्तेषां तपः परमदुश्चरं ।
उत्पद्यन्तीह सर्वेषां निधनेष्विह सर्वशः ॥ १६२ ॥
देवासुराः पितृगणा मुनयो मनवस्तथा ।
सर्पा भूताः पिशाचाश्च गन्धर्व्वा यक्षराक्षसाः ॥ १६३ ॥
ततस्तेषान्तु ये शिष्टाः शिष्टाचारान्प्रचक्षते ।
सप्तर्षयो मनुश्चैव आदौ मन्वन्तरस्य ह ।
प्रारभन्ते च कर्म्माणि मनुष्या दैवतैः सह ॥ १६४ ॥
मन्वन्तरादौ प्रागेव त्रेतायुगमुखे ततः ।
पूर्वं देवास्ततस्ते वै स्थिते धर्म्मे तु सर्व्वशः ॥ १६५ ॥
ऋषीणां ब्रह्मचर्य्येण गत्वाऽनृण्यन्तु वै ततः ।
पितॄणां प्रजया चैव देवानामिज्यया तथा ॥ १६६ ॥
शतं वर्षसहस्राणि धर्म्मे वर्णात्मके स्थिताः ।
त्रयीं वार्त्तां दण्डनीतिं धर्म्मान् वर्णाश्रमांस्तथा ।
स्थापयित्वाश्रमांश्चैव स्वर्गाय दधिरे मतीः ॥ १६७ ॥
पूर्व्वं देवेषु तेष्वेव स्वर्गाय प्रमुखेषु च ।
पूर्व्वं देवास्ततस्ते वै स्थिता धर्मेण कृत्स्नशः ॥ १६८ ॥
मन्वन्तरे परावृत्ते स्थानान्युत्सृज्य सर्व्वशः ।
मन्त्रैः सहोर्द्ध्वङ्गच्छन्ति महर्लोकमनामयं ॥ १६९ ॥

विनिवृत्तविकारास्ते मानसीं सिद्धिमास्थिताः ।
अवेक्षमाणा वशिनस्तिष्ठन्त्याभूतसंप्लवं ॥ १७० ॥
ततस्तेषु व्यतीतेषु सर्व्वेष्वेतेषु सर्वदा ।
शून्येषु देवस्थानेषु त्रैलोक्ये तेषु सर्वशः ।
उपस्थिता इहैवान्ये देवा ये स्वर्गवासिनः ॥ १७१ ॥
ततस्ते तपसा युक्ता स्थानान्यापूरयन्ति वै ।
सत्येन ब्रह्मचर्य्येण श्रुतेन च समन्विताः ॥ १७२ ॥
सप्तर्षीणां मनोश्चैव देवानां पितृभिः सह ।
निधनानीह पूर्व्वेषामादिना च भविष्यता ॥ १७३ ॥
तेषामत्यन्तविच्छेद इह मन्वन्तरक्षयात् ।
एवं पूर्वानुपूर्व्वेण स्थितिरेषाऽनवस्थिता ।
मन्वन्तरेषु सर्वेषु यावदाभूतसंप्लवं ॥ १७४ ॥
एवं मन्वन्तराणान्तु प्रतिसन्धानलक्षणं ।
अतीतानागतानान्तु प्रोक्तं स्वायम्भुवेन तु ॥ १७५ ॥
मन्वन्तरेष्वतीतेषु भविष्याणान्तु साधनं ।
एवमत्यन्तविच्छिन्नं भवत्याभूतसंप्लवात् ॥ १७६ ॥
मन्वन्तराणां परिवर्त्तनानि
एकान्ततस्तानि महर्गतानि ।
महर्जनश्चैव जनन्तपश्च
एकान्तगानि स्म भवन्ति सत्ये ॥ १७७ ॥
तद्भाविनां तत्र तु दर्शनेन
नानात्वदृष्टेश्च प्रत्ययेन ।
सत्ये स्थितानीह तदा तु तानि

प्राप्ते विकारे प्रतिसर्गकाले ॥ १७८ ॥
मन्वन्तराणां परिवर्त्तनानि
मुञ्चन्ति सत्यन्तु ततोऽपरान्ते ।
ततोऽभियोगाद्विषमप्रमाणं
विशन्ति नारायणमेव देवं ॥ १७९ ॥
मन्वन्तराणां परिवर्त्तनेषु
चिरप्रवृत्तेषु विधिस्वभावात् ।
क्षणं स्वं तिष्ठति जीवलोकः
क्षयोदयाभ्यां परिवर्त्तमानः ॥ १८० ॥
इत्युत्तराण्येवमृषिस्तुतानां
धर्म्मात्मनां दिव्यदृशां मनूनां ।
वायुप्रणीतान्युपलभ्य दृश्यं
दिव्यौजसा व्याससमासयोगैः ॥ १८१ ॥
सर्व्वाणि राजर्षिसुरर्षिमन्ति
ब्रह्मर्षिदेवोरगवन्ति चैव ।
सुरेशसप्तर्षिपितृप्रजेशै-
र्युक्तानि सम्यक् परिवर्त्तनानि ॥ १८२ ॥
उदारवंशाभिजनद्युतीनां
प्रकृष्टमेधाभिसमेधितानां ।
कीर्तिद्युतिख्यातिभिरन्वितानां
पुण्यं हि विख्यापनमीश्वराणां ॥ १८३ ॥
स्वर्गीयमेतत् परमं पवित्रं
पुत्रीयमेतच्च परं रहस्यं ।

जप्यं महत्वर्वसु चैतदग्रं
दुःस्वप्नशान्तिः परमायुषेयं ॥ १८४ ॥
प्रजेशदेवर्षिमनुप्रधानां
पुण्यप्रसूतिं प्रथितामजस्य ।
ममापि विख्यापनसंयमाय
सिद्धिं जुषध्वं सुमहेशतत्त्वं ॥ १८५ ॥
इत्येतदन्तरं प्रोक्तं मनोः स्वायम्भुवस्य तु ।
विस्तरेणानुपूर्व्वा च भूयः किं वर्णयाम्यहं ॥१८६॥

इति श्रीमहापुराणे वायुप्रोक्ते प्रजापतिवंशानुकीर्त्तनं नामैकषष्ट्यध्यायः ।

समाप्तम् प्रथमखण्डं ।

# BIBLIOTHECA INDICA:

## COLLECTION OF ORIENTAL WORKS

PUBLISHED BY

## THE ASIATIC SOCIETY OF BENGAL.

NEW SERIES, NOS. 457, 476, 488, 499, 528, 553, AND 681.

---

# THE VÁYU PURÁṆA,

## A SYSTEM OF HINDU MYTHOLOGY AND TRADITION,

VOLUME II.

EDITED BY

RÁJENDRALÁLA MITRA, LL. D., C. I. E.



CALCUTTA:

PRINTED BY G. H. ROUSE, BAPTIST MISSION PRESS.

1888.



# PREFACE.



The history of the Váyu Puráṇa is involved in considerable obscurity. From an early period in the annals of mediæval Indian literature, opinion has been divided regarding the class to which it belongs. The Matsya and the Bhágavata Puráṇas reckon it among the *Mahá* or 'the great' Puráṇas, while others relegate it to the class of 'minor' or *Upa Puráṇas*. Even its name is not free from confusion arising out of sundry aliases. The S'iva Puráṇa is said to be the same with the Váyu, and the Váyavíya Sañhitá is, according to one authority, the same with it, but quite different according to another. There is a S'iva Sañhitá which also lays claim to be the same with the Váyu or to be the Mahá Puráṇa which should occupy the place of the Váyu Extant Mss. in this respect come not to the aid of the enquirer. Instead of unravelling the mystery, hitherto they have only added to the confusion. Mss. are met with having all the different names, and their contents are different.

The traditional account of the Váyu is that it is 24,000 stanzas in extent, and those who take the S'iva Puráṇa to be the *locum-tenens* of the Váyu as a Mahápuráṇa assign to it the same extent; but they fail to show us any work of the name of S'iva Puráṇa, which in its entirety is 24,000 stanzas in extent.

The professed Váyu Puráṇa fails to unravel the confusion. It itself claims an extent of 23,000 ślokas (Vol. II, p. 558), but available Mss. do not bear out this claim. The six Mss. from which this edition is printed come from very distant parts of India; one of them is from the

Deccan College, Poonah; one from the Guzerat Peninsula, though got from one who lives in Bombay; one from Benares, and three from Bengal; but they all agree in giving the public substantially the same text, and that text is about one half of the extent of the traditional Váyu Puráṇa. The total number of stanzas in the present edition is 10,714. The practice, however, among Indians, when defining the extent of a work, is to reckon by stanzas of thirty-two syllables each, even when the said work is composed wholly or mainly in different measures, and as there are several stanzas in almost every canto of the work which are of a longer measure, and to count such prose lines as *Súta Uvácha* as a complete stanza, one may roughly in round numbers take the total extent at 12,000 ślokas. An attempt is sometimes made to explain the discrepancy by saying that in its entirety the work is made up of many appendices or Máhátmyas, of which the texts are lost, and if these could be put together, the traditional extent would be completed. This explanation, however, on the face of it involves a gross *petitio principii.* There is nothing to show that there are certain parts missing from our Mss., and that if they could be obtained, they would complete the traditional extent and no more. On the contrary the S'iva Sañhitá, which in some Mss. professes to be an appendix or part of the Váyu Puráṇa, numbers 24,000 stanzas. (*Notices of Sanskrit Mss.*, VII, p. 27.)

Not being at present in a position to attempt any solution of this difficulty, I offer this edition of the work as that of a leading Hindu Puráṇa without saying anything more definite, though I believe it to be a Mahápuráṇa. Certain it is that many highly respected mediæval Smṛitikáras obviously refer to it, and the quotations which are given in their digests are not to be met with except in this work.

It was my intention at one time to annex to this edition an analysis in English of the contents of the work, and that in

greater detail than what is supplied by the excellent essay of the late Professor Wilson, published in the Journal of the Asiatic Society of Bengal; but I abandon it. I am informed that a learned gentleman of Bombay is printing a complete translation of the entire work for Professor Max Müller's valuable serial, 'the Sacred Books of the East,' and it would be a mistake on my part to obtrude on the public with an analysis which, however copious, must fall quite short of a complete translation.

8 Maniktollah, } R. M.
*August* 18*th*, 1888. }

## CONTENTS.

### VOLUME I.

# वायुपुराणम्।



महर्षिवेदव्यासप्रणीतम्।



श्रील श्री

वङ्गदेशीयासियाटिक्सोसाइट्याख्यसमाजानुज्ञया

श्रीराजेन्द्रलालमित्रेण

परिशोधितम्।



द्वितीयः खण्डः।



कलिकाताराजधान्यां

बाप्टिष्टमिशनयन्त्रे मुद्रितम्।

संवत् १९४२।

# अथ वायुपुराण-द्वितीयखण्डानुक्रमणिका।



श्रीगणेशाय नमः ।

# वायुपुराणम् ।

## अथोत्तरभागे

### प्रथमोऽध्यायः ।

पृथिवीदोहनं ।



शांशपायन उवाच । क्रमं मन्वन्तराणान्तु ज्ञातुमिच्छामि तत्वतः ।
दैवतानाञ्च सर्वेषां ये च यस्यान्तरे मनोः ॥१॥
सूत उवाच । मन्वन्तराणां यानि स्युरतीतानागतानि ह ।
समासाद्विस्तराच्चैव ब्रुवतो वै निबोधत ॥ २ ॥
स्वायम्भुवो मनुः पूर्वं मनुः स्वारोचिषस्तथा ।
औत्तमस्तामसश्चैव तथा रैवतचाक्षुषौ ।
षडेते मनवोऽतीता वक्ष्याम्यष्टावनागतान् ॥ ३ ॥
सावर्णाः पञ्च रौच्यश्च भौत्यो वैवस्वतस्तथा[१] ।
वक्ष्याम्येतान् पुरस्तात्तु मनोर्वैवस्वतस्य ह ॥ ४ ॥
मनवः पञ्च येऽतीता मानवांस्तान् निबोधत ।
मन्वन्तरं मया चोक्तं क्रान्तं स्वायम्भुवस्य ह ॥ ५ ॥

---

१ सावर्णा मम्बरौचाश्चेति ट० ।

अत ऊर्द्ध्वं प्रवक्ष्यामि मनोः स्वारोचिषस्य ह।
प्रजासर्गं समासेन द्वितीयस्य महात्मनः ॥ ६ ॥
आसन् वै तुषिता देवा मनुस्वारोचिषेऽन्तरे।
पारावताश्च विद्वांसो द्वावेव तु गणौ स्मृतौ ॥ ७ ॥
तुषितायां समुत्पन्नाः क्रतोः पुत्राः स्वरोचिषः।
पारावताश्च शिष्टाश्च द्वादशौ तौ गणौ स्मृतौ।
छन्दजाश्च चतुर्विंशद्देवास्ते वै तदा स्मृताः ॥ ८ ॥
धैवस्यशोऽथ वामान्यो गोपा देवायतस्तथा[1]।
अजश्च भगवान् देवो दुरोणश्च महाबलः ॥ ९ ॥
आपश्चापि महाबाहुर्महौजाश्चापि वीर्यवान्।
चिकित्वान्[2] निभृतो यश्च अंशो यश्चैव पठ्यते।
इत्येते क्रतुपुत्रास्तु तदासन् सोमपायिनः ॥१०॥
प्रचेताश्चैव यो देवो विश्वेदेवास्तथैव च।
समञ्जो विश्रुतो यश्च अजिह्मश्चारिमर्द्दनः ॥ ११ ॥
अजिह्मानमहीयानौ विद्यावन्तौ तथैव च।
अजोषौ च[3] महाभागौ यवीयश्च महाबलः ॥१२॥
होता यज्वा च इत्येते पराक्रान्ताः[4] परावताः।
इत्येता देवता ह्यासन्मनुस्वारोचिषेऽन्तरे ॥१३॥
सोमपास्तु तदा ह्येतास्चतुर्विंशतिदेवताः।
तेषामिन्द्रस्तदा ह्यासीद्दैधश्च लोकविश्रुतः ॥१४॥

---

१ देवायनस्तथेति क०। २ विविस्वानिति ङ०।
३ आजाख्यौ चेति ख०। ४ पदक्रान्ता इति ङ०, ट० च।

ऊर्जो वसिष्ठपुत्रस्तु स्तम्भः काश्यप एव च ।
भार्गवश्च तदा द्रोणो ऋषभोऽङ्गिरसस्तथा ॥१५॥
पौलस्त्यश्चैव दत्तात्रिरात्रेयो निश्चलस्तथा ।
पौलहस्य च धावांस्तु एते सप्तर्षयः स्मृताः ॥१६॥
चैत्रः कविरुतश्चैव कृतान्तो विभृतो रविः[1] ।
बृहद्गुहो नवश्चैव सुताश्चैते[2] नव स्मृताः ॥१७॥
मनोः स्वारोचिषस्यैते पुत्रा वंशकराः स्मृताः ।
पुराणे परिसङ्ख्याता द्वितीयश्चैतदन्तरं ॥१८॥
सप्तर्षयो मनुर्देवाः पितरश्च चतुष्टयं ।
मूलं मन्वन्तरस्यैते तेषाञ्चैवान्तरे प्रजाः ॥१९॥
ऋषीणां देवताः पुत्राः पितरो देवसूनवः ।
ऋषयो देवपुत्राश्च इति शास्त्रविनिश्चयः ॥२०॥
मनोः क्षत्रं विशश्चैव सप्तर्षिभ्यो द्विजातयः ।
एतन्मन्वन्तरं प्रोक्तं समासान्न तु विस्तरात् ॥२१॥
स्वायम्भुवेन विस्तारो ज्ञेयः स्वारोचिषस्य तु ।
न शक्यो विस्तरस्तस्य वक्तुं वर्षशतैरपि ।
पुनरुक्तबहुत्वात्तु प्रजानां वै कुले कुले ॥२२॥
तृतीयस्त्वथ पर्य्याय औत्तमस्यान्तरे मनोः ।
पञ्च चैव गणाः प्रोक्तास्तान् वक्ष्यामि निबोधत ॥२३॥
सुधामानश्च देवाश्च ये चान्ये वशवर्त्तिनः ।

---

१ विश्रुतो रविरिति ङ० ।
२ शुभाश्चैत इति ट० ।

प्रतर्द्दनाः शिवाः सत्या गणा द्वादश वै स्मृताः ॥२४॥
सत्यो धृतिर्द्दमो दान्तः क्षमः क्षामो धृतिः शुचिः ।
इषोर्ज्जाश्च तथा ज्येष्ठो वपुश्मांश्चैव द्वादश ।
इत्येते नामभिः क्रान्ताः सुधामानस्तु द्वादश ॥२५॥
सहस्रधारो विश्वात्मा शमितारो बृहद्वसुः ।
विश्वधा विश्वकर्मा च मनस्वन्तो विराड्यशाः[१] ॥२६॥
ज्योतिश्चैव विभाव्यश्च कीर्त्तिवान् वंशकारिणः ।
अन्यानाराधितो देवो वसुधिष्णो विवस्वसुः[२] ॥२७॥
दिनक्रतुः सुधर्मा च धृतवर्मा यशस्विनः[३] ।
केतुमांश्चैव इत्येते कीर्तितास्तु प्रमर्द्दनाः ॥२८॥
हंसस्वरोऽथिहा चैव प्रतर्द्दनयशस्करौ ।
सुदानो वसुदानश्च सुमञ्जसविषावुभौ ॥२९॥
अन्तुवाहयतिश्चैव सुवित्तसुनयस्तथा ।
शिवा ह्येते तु विज्ञेया यज्ञिया द्वादशापराः ॥३०॥
सत्यानामपि नामानि निबोधत यथामतं ।
दिक्पतिर्वाक्पतिश्चैव विश्वः शम्भुस्तथैव च ॥३१॥
स्मृड़ीकोऽधिपश्चैव[४] वर्च्चोधा मुख्यसर्व्वशः[५] ।

---

१ विराड् यश इति ङ० ।
२ वसुधिष्ठो विवस्वसुरिति ङ० ।
३ यशस्विजा इति ङ०, ट० च ।
४ अमृताकोऽधिपश्चैवेति ग० ।
५ पाठोऽयं आदर्शसम्मतो मुद्रितः, परन्त्वयमादर्शदोषेण समीचीनो भवितुं नार्हतीति ।

वासवश्च सदाश्वश्च क्षेमानन्दौ तथैव च ॥२२॥
सत्या ह्येते परिक्रान्ता यज्ञिया द्वादशापराः ।
इत्येता देवता ह्यासन्नौत्तमस्यान्तरे मनोः ॥२३॥
अजश्च परशुश्चैव दिव्यो दिव्यौषधिर्नयः ।
देवानुजश्चाप्रतिमो महोत्साहौशिजस्तथा ॥२४॥
विनीतश्च सुकेतुश्च सुमित्रः सुबलः शुचिः ।
औत्तमस्य मनोः पुत्रास्त्रयोदश महात्मनः ।
एते क्षत्रप्रणेतारस्तृतीयञ्चैतदन्तरम् ॥२५॥
औत्तमे परिसङ्ख्यातः सर्गः स्वारोचिषेण तु ।
विस्तरेणानुपूर्व्या च तामसांस्तान्निबोधत ॥२६॥
चतुर्थे त्वथ पर्याये तामसस्यान्तरे मनोः ।
सत्याः स्वरूपाः सुधियो हरयश्चतुरो गणाः ॥२७॥
पुलस्त्यपुत्रस्य सुतास्तामसस्यान्तरे मनोः ।
गणस्तु तेषां देवानामेकैकः पञ्चविंशकः ॥२८॥
इन्द्रियाणां शतं यद्धि मुनयः प्रतिजानते ।
सत्यप्राणास्तु शीर्ष्यण्यास्तमस्यैवाष्टमस्तथा ।
इन्द्रियाणि तदा देवा मनोस्तस्यान्तरे स्मृताः ॥३९॥
तेषाञ्च प्रभुर्देवानां शिविरिन्द्रः प्रतापवान् ।
सप्तर्षयोऽन्तरे चैव तान्निबोधत सत्तमाः ॥४०॥
काव्यो हर्षस्तथा चैव काश्यपः पृथुरेव च ।
आत्रेयश्चाग्निरित्येव ज्योतिधामा च भार्गवः ॥४१॥
पौलहो वनपीठश्च गोत्रे वासिष्ठ एव च ।

चैत्रस्तथापि पौलस्त्य ऋषयस्तामसेऽन्तरे ॥४२॥
जनुघण्डस्तथा शान्तिर्नरः ख्यातिर्भयस्तथा ।
प्रियभृत्यो ह्यवक्षिश्च पृष्ठलोढो दृढोद्यतः[१] ।
ऋतश्च ऋतबन्धुश्च तामसस्य मनोः सुताः ॥४३॥
पञ्चमे त्वथ पर्य्याये मनोश्चारिष्णवेऽन्तरे ।
गणास्तु सुषमाख्याता देवतानां निबोधत ॥४४॥
अमृताभाभूतरजोविकुण्ठाः ससुमेधसः ।
चरिष्णोस्तु शुभाः पुत्रा वसिष्ठस्य प्रजापतेः ।
चतुर्द्दश च चत्वारो गणास्तेषान्तु भास्वराः ॥४५॥
स्वत्रविप्रोऽग्निभासश्च प्रत्येतिष्ठामृतस्तथा ।
सुमतिर्व्वाविरावश्च वाचिनोदः स्ववास्तथा ॥४६॥
प्रविराशी च वादश्च प्राशश्चेति[२] चतुर्द्दश ।
अमृताभाः स्मृता ह्येते देवाश्चारिष्णवेऽन्तरे ॥४७॥
मतिश्च सुमतिश्चैव ऋतसत्यौ तथैव च ।
आवृतिर्व्विवृतिश्चैव मदो विनय एव च ॥४८॥
जेता जिष्णुः सहश्चैव द्युतिमान् स्ववसस्तथा ।
इत्येतानीह नामानि आभूतरजसां विदुः ॥४९॥
वृषभेत्ता जयो भीमः शुचिर्दान्तो यशो दमः ।
नाथो विद्वानजेयश्च कृशो गौरो ध्रुवस्तथा ।
कीर्त्तितास्तु विकुण्ठा वै सुमेधास्तु निबोधत ॥५०॥

---

१ दृढ़ेषुर्द्ददिति ङ०, ट० च ।
२ शतश्चेतीति ङ०, ट० च ।

मेधा मेधातिथिश्चैव सत्यमेधास्तथैव च ।
पृश्निमेधाल्पमेधाश्च भूयोमेधादयः प्रभुः ॥५१॥
दीप्तिमेधा यशोमेधा स्थिरमेधास्तथैव च ।
सर्वमेधाश्वमेधाश्च प्रतिमेधाश्च यः स्मृतः ।
मेधावान् मेधहन्ता च कीर्त्तितास्तु सुमेधसः ॥५२॥
विभुरिन्द्रस्तदा तेषामासीद्विक्रान्तपौरुषः ।
पौलस्त्यो वेदबाहुश्च यजुर्नामा च काश्यपः ॥५३॥
हिरण्यरोमाङ्गिरसो वेदश्रीश्चैव भार्गवः ।
ऊर्द्धबाहुश्च वासिष्ठः पर्जन्यः पौलहस्तथा ।
सत्यनेत्रस्तथात्रेय ऋषयो रैवतान्तरे ॥५४॥
महापुराणसम्भाव्यः प्रत्यङ्गपरहा शुचिः ।
बलबन्धुर्निरामित्रः केतुशृङ्गो दृढव्रतः ।
चरिष्णवस्य पुत्रास्ते पञ्चमञ्चैतदन्तरं ॥५५॥
स्वारोचिषोत्तमश्चैव तामसो रैवतस्तथा ।
प्रियव्रतान्वया ह्येते चत्वारो मनवस्तथा ॥५६॥
षष्ठे खल्वथ पर्याये देवा ये चाक्षुषेऽन्तरे ।
आद्याः प्रसूता भाव्याश्च पृथुकाश्च दिवौकसः ।
महानुभावलेखाश्च पञ्च देवगणाः स्मृताः ॥५७॥
दिवौकसः सर्ग एष प्रोच्यते मातृनामभिः ।
अत्रेः पुत्रस्य नप्तार आरण्यस्य प्रजापतेः ।
गणाश्च तेषान्देवानामेकैको ह्यष्टकः स्मृतः ॥५८॥
अन्तरीक्षो वसुहयो ह्यतिथिश्च प्रियव्रतः ।

श्रोता मन्ता सुमन्ता च आद्या ह्येते प्रकीर्त्तिताः ॥५९॥
श्येनभद्रस्तथा पश्यः पश्यनेत्रो महायशाः ।
सुमनाश्च सुचेताश्च रेवतः सुप्रचेतसः ।
द्युतिश्चैव महासत्त्वः प्रसूताः परिकीर्त्तिताः ॥६०॥
विजयः सुजयश्चैव मनोद्यानो तथैव च ।
सुमतिः सुपरिश्चैव विज्ञातोऽर्थपतिश्च यः ।
भाव्या ह्येते स्मृता देवाः पृथुकांस्तु निबोधत ॥६१॥
अजिष्ठः शाकुनो देवो वानपृष्ठस्तथैव च ।
शाङ्करः सत्यधृष्णुश्च विष्णुश्च विजयस्तथा ।
अजितश्च महाभागः पृथुकास्ते दिवौकसः ॥६२॥
लेखांस्तथा प्रवक्ष्यामि ब्रुवतो मे निबोधत ।
मनोजवः प्रघासस्तु प्रचेतास्तु महायशाः ॥६३॥
वातो ध्रुवक्षितिश्चैव अद्भुतश्चैव वीर्यवान् ।
अवनो बृहस्पतिश्चैव लेखाः संपरिकीर्त्तिताः ॥६४॥
मनोजवो महावीर्य्यस्तेषामिन्द्रस्तदाऽभवत् ।
उन्नतो भार्गवश्चैव हविष्मानङ्गिरःसुतः ॥६५॥
सुधामा काश्यपश्चैव वाशिष्ठो विरजस्तथा ।
अतिमानश्च[१] पौलस्त्यः सहिष्णुः पौलहस्तथा ।
मधुरात्रेय इत्येते सप्त वै चाक्षुषेऽन्तरे ॥६६॥
ऊरुः पूरुः शतद्युम्नस्तपस्वी सत्यवाक् कृतिः ।
अग्निष्णुदतिरात्रश्च सुद्युम्नश्चेति ते नव ॥६७॥

---

१ अभिमानश्चेति ङ०, ट० च ।

अभिमन्युश्च दशमो नाड्वलेया मनोः सुताः ।
चक्षुषस्य सुता ह्येते षष्ठस्यैव तदन्तरम् ॥६८॥
वैवस्वतेन सञ्जातस्तस्य सर्गो महात्मनः ।
विस्तरेणानुपूर्व्या च कथितं वै मया द्विजाः ॥६९॥
ऋषय ऊचुः । चाक्षुषस्य तु दायादः सम्भूतः कश्यपान्वये ।
तस्यान्ववाये येऽप्यन्ये तन्नो ब्रूहि यथातथं ॥७०॥
सूत उवाच । चाक्षुषस्य निसर्गन्तु समासाच्छ्रोतुमर्हथ ।
तस्यान्ववाये सम्भूतः पृथुर्वैण्यः प्रतापवान् ॥७१॥
प्रजानां पतयश्चान्ये दक्षः प्राचेतसस्तथा ।
उत्तानपादं जग्राह पुत्रमत्रिः प्रजापतिः ॥७२॥
दत्तकस्य तु पुत्रोऽस्य राजा ह्यासीत् प्रजापतेः ।
स्वायम्भुवेन मनुना दत्तोऽत्रेः कारणं प्रति ॥७३॥
मन्वन्तरमथासाद्य भविष्यं चाक्षुषस्य ह ।
षष्ठन्तदनुवक्ष्यामि उपोद्घातेन वै द्विजाः[१] ॥७४॥
उत्तानपादाच्चतुरा सूनृता वित्तभाविनी ।
उत्पन्ना चाधिधर्म्मेण ध्रुवस्य जननी शुभा ।
धर्म्मस्य पत्न्यां लक्ष्म्यां वै उत्पन्ना सा शुचिस्मिता ॥७५॥
ध्रुवञ्च कीर्त्तिमन्तञ्च अयस्मन्तं वसुन्तथा ।
उत्तानपादोऽजनयत् कन्ये द्वे च शुचिस्मिते ।
मनस्विनीं स्वराञ्चैव[२] तयोः पुत्राः प्रकीर्त्तिताः ॥७६॥

---

१ सूत उवाचेत्यादिः उपोद्घातेन वै द्विजा इत्यन्तः पाठो न पूर्व्वापरसङ्गतः ।
२ मनस्वतीं स्वराञ्चैवेति ख० ।

ध्रुवो वर्षसहस्राणि दश दिव्यानि वीर्य्यवान् ।
तपस्तेपे निराहारः प्रार्थयन् विपुलं यशः[१] ॥७७॥
त्रेतायुगे तु प्रथमे पौत्रः स्वायम्भुवस्य सः ।
आत्मानं धारयन् योगात्[२] प्रार्थयन् सुमहद्यशः ॥७८॥
तस्मै ब्रह्मा ददौ प्रीतो ज्योतिषां स्थानमुत्तमं ।
आभूतसंप्लवं ह्यस्तोदयविवर्जितं ॥७९॥
तस्यातिमात्रामृद्धिञ्च महिमानं निरीक्ष्य ह ।
दैत्यासुराणामाचार्य्यः श्लोकमप्युशना जगौ ॥८०॥
अहोऽस्य तपसो वीर्य्यमहो श्रुतमहो कृतं ।
स्थिताः सप्तर्षयः कृत्वा यदेनमुपरि ध्रुवं ।
ध्रुवे दिवं समासक्तमीश्वरः स दिवस्पतिः ॥८१॥
ध्रुवात्पुष्टिञ्च भव्यञ्च[३] भूमिः सा सुषुवे नृपौ ।
स्वां छायामाह वै पुष्टिर्भव नारी तु तां विभुः ॥८२॥
सत्याभिव्याहृते तस्य सद्यः स्त्री साऽभवत्तदा ।
दिव्यसंहननाच्छाया दिव्याभरणभूषिता ॥८३॥
छायायां पुष्टिराधत्त पञ्च पुत्रानकल्मषान् ।
प्राचीनगर्भं वृषकं[४] वृकञ्च वृकलं धृतिं[५] ॥८४॥

---

१ सुमहद् यश इति ङ० ।
२ आत्मानं गौरवञ्चैवेति क० ।
३ ध्रुवात् पुष्टिञ्च धान्यञ्चेति ट०
४ वृषभमिति ङ० ।
५ द्युतिमिति ङ० ।

पत्नी प्राचीनगर्भस्य सुवर्चा सुषुवे नृपं।
नाम्नोदारधियं पुत्रमिन्द्रो यः पूर्वजन्मनि ॥८५॥
संवत्सरसहस्रान्ते सकृदाहारमाहरत्।
एवं मन्वन्तरं युक्तमिन्द्रत्वं प्राप्तवान्विभुः॥८६॥
उदारधेः सुतं भद्राऽजनयत्सा दिवञ्जयं।
रिपुं रिपुञ्जयं जज्ञे(१) वराङ्गी सा दिवञ्जयात्॥८७॥
रिपोराधत्त बृहती चाक्षुषं सर्वतेजसम्।
व्यजीजनत् पुष्करिण्यां वारुण्यां चाक्षुषो मनुम्।
प्रजापतेरात्मजायां अरण्यस्य महात्मनः॥८८॥
मनोरजायन्त दश नड्वलायां शुभाः सुताः।
कन्यायां वै महाभाग वैराजस्य प्रजापतेः॥८९॥
ऊरुः पुरुः शतद्युम्नस्तपस्वी सत्यवाक् कविः।
अग्निष्टुदतिरात्रश्च सुद्युम्नश्चेति ते नव।
अभिमन्युश्च दशमो नड्वलायां मनोः सुताः॥९०॥
ऊरोरजनयत् पुत्रान् षडाग्नेयी महाप्रभान्।
अङ्गं सुमनसं स्वातिं क्रतुमङ्गिरसं शिवं॥९१॥
अङ्गात् सुनीथाऽपत्यं वै वेणमेकं व्यजायत।
अपचारेण वेणस्य प्रकोपः सुमहानभूत्॥९२॥
प्रजार्थमृषयस्तस्य ममन्थुर्दक्षिणं करं।
वेणस्य पाणौ मथिते सम्बभूव महान्नृपः।
वैण्यो नाम महीपालो यः पृथुः परिकीर्त्तितः॥९३॥

---

१ जनधातोरकर्म्मकत्वेनात्र सकर्म्मकप्रयोग आर्षः।

स धन्वी कवची जातस्तेजसा प्रज्वलन्निव ।
पृथुर्वैण्यः सर्वलोकान् ररक्ष क्षत्रपूर्वजः ॥९४॥
राजसूयाभिषिक्तानामाद्यः स वसुधाधिपः ।
तस्य स्तवार्थमुत्पन्नौ निपुणौ सूतमागधौ ॥ ९५॥
तेनेयं गौर्महाराज्ञा दुग्धा सस्यानि धीमता ।
प्रजानां वृत्तिकामानां दैवैश्चर्षिगणैः सह ॥९६॥
पितृभिर्दानवैश्चैव गन्धर्व्वैरप्सरोगणैः ।
सर्व्वैः पुण्यजनैश्चैव वीरुद्भिः पर्वतैस्तथा ॥९७॥
तेषु तेषु तु पात्रेषु दुह्यमाना वसुन्धरा ।
प्रादाद्यथेप्सितं क्षीरं तेन लोकांस्त्वधारयत् ॥९८॥
ऋषय ऊचुः । विस्तरेण पृथोर्जन्म कीर्त्तयस्व महामते ।
यथा महात्मना दुग्धा पूर्व्वं तेन वसुन्धरा ॥९९॥
यथा देवैश्च नागैश्च यथा ब्रह्मर्षिभिः सह(१) ।
यथा यक्षैः सगन्धर्व्वैरप्सरोभिर्यथा पुरा ॥१००॥
तेषां पात्रविशेषांश्च दोग्धारं क्षीरमेव च ।
तथा वत्सविशेषांश्च तन्नः प्रब्रूहि(२) पृच्छतां ॥१०१॥
यस्मिंश्च कारणे पाणिर्वैण्यस्य मथितः पुरा ।
क्रुद्धैर्महर्षिभिः पूर्वं तत् सर्वं कथयस्व नः ॥१०२॥
सूत उवाच । वर्णयिष्यामि वो विप्राः पृथोर्वैण्यस्य सम्भवं ।
एकाग्राः प्रयताश्चैव शुश्रूषध्वं द्विजोत्तमा. ॥१०३॥

---

१ ब्रह्मर्षिभिश्च हेति ट० ।
२ तत्तत्त्वतः ब्रूहीति ट० ।

नाशुश्रूषवेऽनापि पापाय नाशिष्यायाहिताय च ।
वर्णयेयमिमं पुण्यं नाव्रताय कथञ्चन ॥१०४॥
स्वर्ग्यं यशस्यमायुष्यं पुण्यं वेदैश्च सम्मितं ।
रहस्यं ऋषिभिः प्रोक्तं शृणुयाद्यो न सूयकः ॥१०५॥
यश्चेमं श्रावयेन् मर्त्यः पृथोर्वैण्यस्य सम्भवं ।
ब्राह्मणेभ्यो नमस्कृत्य न स शोचेत्कृताकृतं ।
गोप्ता धर्मस्य राजाऽसौ बभूवात्रिसमः प्रभुः ॥१०६॥
अत्रिवंशसमुत्पन्नो ह्यङ्गो नाम प्रजापतिः ।
यस्य पुत्रोऽभवद्वेणो नात्यर्थं धार्म्मिकस्तथा ॥१०७॥
जातो मृत्युसुतायां वै सुनीथायां प्रजापतिः ।
स मातामहदोषेण वेणः कालात्मजात्मजः ॥१०८॥
स धर्म्मं पृष्ठतः कृत्वा कामाल्लोभे व्यवर्त्तत ।
स्थापनं स्थापयामास धर्म्मापेतं स पार्थिवः ॥१०९॥
वेदशास्त्राण्यतिक्रम्य ह्यधर्म्मे निरतोऽभवत् ।
निःस्वाध्यायवषट्काराः प्रजास्तस्मिन् प्रशासति ।
आसन् न च पपुः सोमं हुतं यज्ञेषु देवताः ॥११०॥
न यष्टव्यं न होतव्यमिति तस्य प्रजापतेः ।
आसीत् प्रतिज्ञा क्रूरेयं विनाशे प्रत्युपस्थिते ॥१११॥
अहमिज्यश्च पूज्यश्च सर्वयज्ञे द्विजातिभिः ।
मयि यज्ञो विधातव्यो मयि होतव्यमित्यपि ॥११२॥
तमतिक्रान्तमर्यादमाददानमसाम्प्रतं ।
ऊचुर्महर्षयः सर्वे मरीचिप्रमुखास्तथा ॥११३॥

वयं दीक्षां प्रवक्ष्यामः संवत्सरशतान् बहून् ।
माऽधर्मं वेण कार्षीस्त्वं नैष धर्मः सनातनः ।
निधने च प्रसूतोऽसि प्रजापतिरसंशयः ॥११४॥
पालयिष्ये प्रजाश्चेति त्वया पूर्वं प्रतिश्रुतं ।
तांस्तथा वादिनः सर्व्वान् ब्रह्मर्षीनब्रवीत्तदा ॥११५॥
स प्रहस्य तु दुर्बुद्धिरिदं वचनकोविदः ।
स्रष्टा धर्मस्य कश्चान्यः श्रोतव्यं कस्य वै मया ॥११६॥
वीर्यश्रुततपःसत्यैर्मया वा कः समो भुवि ।
महात्मानमनूनं मां यूयं जानीत तत्त्वतः ॥११७॥
प्रभवः सर्वलोकानां धर्माणाञ्च विशेषतः ।
इच्छन् दहेयं पृथिवीं प्लावयेयं जलेन वा ।
सृजेयं वा ग्रसेयं वा नात्र कार्या विचारणा ॥११८॥
यदा न शक्यते स्तम्भानमानाच्च भृशमोहितः ।
अनुनेतुं नृपो वेणस्ततः क्रुद्धा महर्षयः ॥११९॥
निगृह्य तं महाबाहुं विस्फुरन्तं यथाऽनलं ।
ततोऽस्य वामहस्तं ते ममन्थुर्भृशकोपिताः ॥१२०॥
तस्मात् प्रमथ्यमानाद्वै जज्ञे पूर्वमभिश्रुतः ।
ह्रस्वोऽतिमात्रं पुरुषः कृष्णश्चापि तथा द्विजाः ॥१२१॥
स भीतः प्राञ्जलिश्चैव स्थितवान् व्याकुलेन्द्रियः ।
तमार्त्तं विक्लवं दृष्ट्वा निषीदेत्यब्रुवन् किल ॥१२२॥
निषादवंशकर्त्ताऽसौ बभूवानन्तविक्रमः ।
धीवरानसृजत्सोऽपि वेणकल्मषसम्भवान् ॥१२३॥

ये चान्ये विन्ध्यनिलयास्तुम्बुरा:[१] तुवराः खसाः ।
अधर्मरुचयश्चापि सम्भूता वेणकल्मषात् ॥१२४॥
पुनर्महर्षयस्तस्य पाणिं वेणस्य दक्षिणं ।
अरणीमिव संरम्भान्ममन्थुर्जातमन्यवः ॥१२५॥
पृथुस्तस्मात् समुत्पन्नः करास्फालनतेजसः ।
पृथोः करतलाद्वापि यस्मात् जातः पृथुस्ततः ।
दीप्यमानः स्ववपुषा साक्षादग्निरिवोज्ज्वलन् ॥१२६॥
आद्यमाजगवं नाम धनुर्गृह्य महारवं ।
शरांश्च विभ्रद्रक्षार्थं कवचञ्च महाप्रभं ॥१२७॥
तस्मिन् जातेऽथ भूतानि संप्रहृष्टानि सर्वशः ।
समुत्पन्ने महाराज्ञि वेणश्च त्रिदिवङ्गतः ॥१२८॥
समुत्पन्नेन राजर्षिः स सत्पुत्रेण धीमता ।
पुरुषव्याघ्रः पुन्नाम्नो नरकात्त्रायते ततः ॥१२९॥
तं नद्यश्च समुद्राश्च रत्नान्यादाय सर्व्वशः ।
समागम्य तदा वैण्यमभ्यषिञ्चन्नराधिपं ।
महता राजराज्येन महाराजं महाद्युतिं ॥१३०॥
सोऽभिषिक्तो महाराजा देवैरङ्गिरसः सुतैः ।
आदिराजो महाराजः पृथुर्वैण्यः प्रतापवान् ॥१३१॥
पित्रापरञ्जितास्तस्य प्रजास्तेनानुरञ्जिताः ।
ततो राजेति नामास्य अनुरागादजायत ॥१३२॥
आपस्तस्तम्भिरे चास्य समुद्रमभियास्यतः ।

१ तुम्बरा इति ङ० ।

पर्वताश्च विशीर्यन्ते ध्वजभङ्गश्च नाभवत् ॥१३३॥
अकृष्टपच्या पृथिवी सिद्ध्यन्त्यन्नानि चिन्तया ।
सर्वकामदुघा गावः पुटके पुटके मधु ॥१३४॥
एतस्मिन्नेव काले च यज्ञे पैतामहे शुभे ।
सूतः सुत्यां समुत्पन्नः सौत्येऽहनि महामतिः ।
तस्मिन्नेव महायज्ञे जज्ञे प्राज्ञोऽथ मागधः ॥१३५॥
ऐन्द्रेण हविषा चापि हविः पृक्तं बृहस्पतेः ।
जुहावेन्द्राय देवेन ततः सूतो व्यजायत ॥१३६॥
प्रमादस्तत्र सञ्जज्ञे प्रायश्चित्तञ्च कर्म्मसु ।
शिष्यहव्येन यत् पृक्तं अभिभूतं गुरोर्हविः ।
अधरोत्तरचारेण जज्ञे तद्वर्णवैकृतं ॥१३७॥
यच्च चत्रात्समभवद् ब्राह्मण्यां हीनयोनितः ।
सूतः पूर्व्वेण साधर्म्मतुल्यधर्म्मः प्रकीर्त्तितः ॥१३८॥
मध्यमो ह्येष सूतस्य धर्म्मः चत्रोपजीवनं ।
रथनागाश्च चरितं जघन्यञ्च चिकित्सितं ॥१३९॥
पृथोस्तवार्थं तौ तत्र समाहूतौ सुरर्षिभिः ।
तामूचुर्मुनयः सर्व्वे स्तूयतामेष पार्थिवः ।
कर्म्मैतदनुरूपं वां पात्रं स्तोत्रस्य चाप्ययं ॥१४०॥
तावूचतुस्तदा सर्व्वांस्तानृषीन् सूतमागधौ ।
आवां देवानृषींश्चैव प्रीणयावः स्वकर्म्मभिः ॥१४१॥
न चास्य कर्म्म [illegible] विद्मः न तथा लक्षणं यशः ।
स्तोत्रं येनास्य कुर्य्यावो राज्ञस्तेजस्विनो द्विजाः ॥१४२॥

ऋषिभिस्तौ नियुक्तौ तु भविष्यैः स्तूयतामिति ।
दानधर्म्मरतो नित्यं सत्यवान् स जितेन्द्रियः ।
ज्ञानशीलो वदान्यस्तु संग्रामेष्वपराजितः ॥१४३॥
यानि कर्म्माणि कृतवान् पृथुश्चापि महाबलः ।
तानि शीलेन बद्धानि स्तुवद्भिः सूतमागधैः ॥१४४॥
ततस्तवान्ते सुप्रीतः पृथुः प्रादात् प्रजेश्वरः ।
अनूपदेशं सूताय मगधं मागधाय च ॥१४५॥
तदा वै पृथिवीपालाः स्तूयन्ते सूतमागधैः ।
आशीर्वादैः प्रबोध्यन्ते सूतमागधवन्दिभिः ॥१४६॥
तं दृष्ट्वा परमप्रीताः[१] प्रजा ऊचुर्महर्षयः ।
एष वो वृत्तिदो वैण्यो भवत्विति नराधिपः ॥१४७॥
ततो वैण्यं महाभागं प्रजाः समभिदुद्रुवुः ।
त्वन्नो वृत्तिं विधत्स्वेति महर्षेर्वचनात्तदा ।
सोऽभिद्रुतः प्रजाभिस्तु प्रजाहितचिकीर्षया ॥१४८॥
धनुर्गृहीत्वा वाणांश्च वसुधामार्द्दयद्बली ।
अस्यार्द्दनभयत्रस्ता गोर्भूत्वा प्राद्रवन्मही॥१४९॥
तां पृथुर्धनुरादाय द्रवन्तीमन्वधावत ।
सा लोकान् ब्रह्मलोकादीन् गत्वा वैण्यभयात्तदा ।
ददर्श चाग्रतो वैण्यं कार्मुकोद्यतधारिणं ॥१५०॥
ज्वलद्भिर्विशिखैर्वाणैर्दीप्ततेजसमच्युतं ।

---

१ तं दृष्ट्वा ब्रह्मभूयिष्ठमिति ख० ।

महायोगं महात्मानं दुर्द्धर्षममरैरपि ॥१५१॥
अलभन्ती तदा त्राणं वैण्यमेवान्वपद्यत ।
कृताञ्जलिपुटा देवी पूज्या लोकैस्त्रिभिः सदा[१] ॥१५२॥
उवाच वैण्यं नाधर्म्मं स्त्रीवधे परिपश्यसि ।
कथं धारयिता चासि प्रजा राजन्मया विना ॥१५३॥
मयि लोकाः स्थिता राजन् मयेदन्धार्य्यते जगत् ।
मद्दृते च विनश्येयुः प्रजाः पार्थिवसत्तम ॥१५४॥
न मामर्हसि वै हन्तुं श्रेयश्चेत्त्वं चिकीर्षसि ।
प्रजानां पृथिवीपाल शृणु चेदं वचो मम ॥१५५॥
उपायतः समारब्धाः सर्वे सिद्ध्यन्त्युपक्रमाः ।
हत्वापि मां न शक्तस्त्वं प्रजानां पालने नृप ॥१५६॥
अन्नभूता भविष्यामि जहि कोपं महाद्युते ।
अवध्याश्च स्त्रियः प्राहुस्तिर्य्यग्योनिगतेष्वपि ।
सत्वैवं पृथिवीपाल धर्म्मं न त्यक्तुमर्हसि ॥१५७॥
एवं बहुविधं वाक्यं श्रुत्वा राजा महामनाः ।
क्रोधं निगृह्य धर्मात्मा वसुधामिदमब्रवीत् ॥१५८॥
एकस्यार्थाय यो हन्यादात्मनो वा परस्य वा ।
एकं प्राणं बहून् वापि कामंस्तस्यास्ति पातकं ॥१५९॥
यस्मिंस्तु निहते भद्रे लभन्ते बहवः सुखं ।
तस्मिन् हते शुभे नास्ति पातकञ्चोपपातकं ॥१६०॥

---

१ दृष्टा लोकैस्त्रिभिस्तदेति ट० ।

सोऽहं प्रजानिमित्तन्त्वां बधिष्यामि वसुन्धरे ।
यदि मे वचनं नाद्य करिष्यसि जगद्धितं ॥१६१॥
त्वां निहत्याद्य बाणेन मच्छासनपराङ्मुखीं ।
आत्मानं प्रथयित्वेह धारयिष्याम्यहं प्रजाः[१] ॥१६२॥
सा त्वं वचनमासाद्य मम धर्मभृतां वरे ।
सञ्जीवय प्रजा नित्यं शक्ता ह्यसि न संशयः ॥१६३॥
दुहितृत्वञ्च मे गच्छ एवमेतं महद्वरं ।
नियच्छे त्वान्तु धर्मार्थं प्रयुक्तं घोरदर्शने ॥१६४॥
प्रत्युवाच ततो वैण्यं एवमुक्ता सती मही ।
एवमेतदहं राजन् विधास्यामि न संशयः ॥१६५॥
वत्सन्तु मम तं यच्छ क्षरेयं येन वत्सला ।
समाञ्च कुरु सर्वत्र मां त्वं धर्मभृतां वर ।
यथा विष्यन्दमानञ्च क्षीरं सर्वत्र भावये ॥१६६॥
तत उत्सारयामास शिलाजालानि सर्वशः ।
धनुःकोट्या ततो वैण्यस्तेन शैला विवर्द्धिताः ॥१६७॥
मन्वन्तरेष्वतीतेषु[२] विषमासीद्वसुन्धरा ।
स्वभावेनाभवंस्तस्याः समानि विषमानि च ॥१६८॥
न हि पूर्वनिसर्गे वै विषमे पृथिवीतले ।
प्रविभागः पुराणां वा ग्रामाणां वापि विद्यते ॥१६९॥

---

१ प्रजापालयिता स्वयमिति ख० ।

२ मन्वन्तरेषु सर्व्वेष्विति ख० ।

न सस्यानि न गोरक्षा न कृषिर्न्नवणिक्पथः ।
चाक्षुषस्यान्तरे पूर्वमेतदासीत् पुरा किल ।
वैवस्वतेऽन्तरे तस्मिन्[१] सर्वस्यैतस्य सम्भवः ॥१७०॥
समत्वं यत्र यत्रासीत् भूयस्तस्मिंस्तदेव हि ।
तत्र तत्र प्रजास्ता वै निवसन्तिस्म सर्वदा ॥१७१॥
आहारः फलमुलन्तु प्रजानामभवत्किल ।
वैण्यात् प्रभृति लोकेऽस्मिन् सर्वस्यैतस्य सम्भवः ॥१७२॥
कृच्छ्रेण महता सोऽपि प्रनष्टास्वोषधीषु वै ।
स कल्पयित्वा वत्सन्तु चाक्षुषं मनुमीश्वरः ।
पृथुर्दुदोह सस्यानि स्वतले पृथिवीं ततः ॥१७३॥
सस्यानि तेन दुग्धानि वैण्येन तु वसुन्धरां ।
मनुञ्च चाक्षुषं कृत्वा वत्सम्पात्रे च भूमये ।
तेनान्नेन तदा ता वै वर्त्तयन्ते प्रजाः सदा ॥१७४॥
ऋषिभिः स्तूयते वापि पूनर्दुग्धा वसुन्धरा ।
वत्सः सोमस्त्वभूत् तेषां दोग्धा चापि वृहस्पतिः ॥१७५॥
पात्रमासीत्तु च्छन्दांसि गायत्र्यादीनि सर्व्वशः ।
क्षीरमासीत्तदा तेषां तपो ब्रह्म च शाश्वतं ॥१७६॥
पुनस्तुत्वा देवगणैः पुरन्दरपुरोगमैः ।
सौवर्णं पात्रमादाय अमृतं दुदुहे तदा ।
ते नैव वर्त्तयन्ते च देवा इन्द्रपुरोगमाः ॥१७७॥

---

१ वैवस्वतेऽन्तरे पूर्व्वमिति ख० ।

नागैश्च श्रूयते दुग्धा विषं क्षीरं तदा मही ।
तेषाञ्च वासुकिर्दोग्धा काद्रवेया महौजसः ॥१७८॥
नागानां वै द्विजश्रेष्ठ सर्पाणाञ्चैव सर्व्वशः ।
तेनैव वर्त्तयन्त्युग्रा महाकाया महोल्वणाः ।
तदाहारास्तदाचारास्तद्वीर्य्यास्तु तदाश्रयाः ॥१७९॥
आमपात्रे पुनर्दुग्धा त्वन्तर्द्धानमियं मही ।
वत्सं वैश्रवणं कृत्वा यक्षैः पुण्यजनैस्तथा ॥१८०॥
दोग्धा च जतुनाभस्तु पिता मणिवरस्य सः ।
यक्षात्मजो महातेजा वशी स सुमहाबलः ।
तेन ते वर्त्तयन्तीति परमर्षिरुवाच ह ॥१८१॥
राक्षसैश्च पिशाचैश्च पुनर्दुग्धा वसुन्धरा ।
ब्रह्मोपेतस्तु दोग्धा वै तेषामासीत् कुवेरकः ॥१८२॥
रक्षः सुमाली बलवान् क्षीरं रुधिरमेव च ।
कपालपात्रे निर्दुग्धा अन्तर्द्धानञ्च राक्षसैः ।
तेन क्षीरेण रक्षांसि वर्त्तयन्तीह सर्वशः ॥१८३॥
पद्मपात्रे पुनर्दुग्धा गन्धर्व्वैरप्सरोगणैः ।
वत्सञ्चित्ररथङ्कृत्वा शुचीन् गन्धांस्तथैव च ॥१८४॥
तेषां विश्वावसुस्त्वासीद् दोग्धा पुत्रो मुनेः शुचिः ।
गन्धर्व्वराजोऽतिबलो महात्मा सूर्यसन्निभः ॥१८५॥
शैलैश्च श्रूयते दुग्धा पुनर्देवी वसुन्धरा ।
तत्रौषधीर्मूर्त्तिमती रत्नानि विविधानि च ।१८६॥
वत्सस्तु हिमवांस्तेषां मेरुर्दोग्धा महागिरिः ।

पात्रन्तु शैलमेवासीत्तेन शैलः प्रतिष्ठितः ॥१८७॥
स्रूयते वृक्षवीरुद्भिः पुनर्दुग्धा वसुन्धरा ।
पलाशपात्रमादाय दुग्धं छिन्नप्ररोहणं ॥१८८॥
कामधुक् पुष्पितः शैलः शक्रो वत्सो यशस्विनी ।
सर्व्वकामदुघा दोग्ध्री पृथिवी भूतभाविनी ॥१८९॥
सैषा धात्री विधात्री च धारणी च वसुन्धरा ।
दुग्धा हितार्थं लोकानां पृथुना इति नः श्रुतं ।
चराचरस्य लोकस्य प्रतिष्ठायोनिरेव च ॥१९०॥

इति श्रीमहापुराणे वायुप्रोक्ते पृथिवीदोहनं नाम
प्रथमोऽध्यायः ।

---

# अथ द्वितीयोऽध्यायः ।



पृथुवंशानुकीर्त्तनं ।

सूत उवाच । आसीदियं समुद्रान्ता मेदिनीति परिश्रुता ।
वसु धारयते यस्माद् वसुधा तेन चोच्यते ॥१॥
मधुकैटभयोः पूर्वं मेदसा संपरिप्लुता ।
ततोऽभ्युपगमाद्राज्ञः पृथोर्वैण्यस्य धीमतः ॥२॥
दुयश्चासीत् समुद्रान्ता मेदिनीति परिश्रुता ।
दुहितृत्वमनुप्राप्ता पृथिवीत्युच्यते ततः ॥३॥
प्रथिता प्रविभक्ता च शोभिता च वसुन्धरा ।
सस्याकरवती राज्ञा पत्तनाकरमालिनी ।
चातुर्वर्ण्यसमाकीर्णा रक्षिता तेन धीमता ॥४॥
एवं प्रभावो राजासीद्वैण्यः स नृपसत्तमः ।
नमस्यश्चैव पूज्यश्च भूतग्रामेण सर्व्वशः ॥५॥
ब्राह्मणैश्च महाभागैर्वेदवेदाङ्गपारगैः ।
पृथुरेव नमस्कार्यो ब्रह्मयोनिः सनातनः ॥६॥
पार्थिवैश्च महाभागैः प्रार्थयद्भिर्महद्यशः ।
आदिराजा नमस्कार्य्यः पृथुर्वैण्यः प्रतापवान् ॥७॥
योधैरपि च संग्रामे प्रार्थयानैर्जयं युधि ।
आदिकर्त्ता नराणां वै नमस्यः पृथुरेव हि ॥८॥

यो हि योद्धा रणं याति कीर्त्तयित्वा पृथुन्नृपं ।
स घोररूपे संग्रामे चेमी तरति कीर्त्तिमान् ॥९॥
वैश्यैरपि च राजर्षिर्वैश्यवृत्तिसमास्थितैः ।
पृथुरेव नमस्कार्य्यो वृत्तिदाता महायशाः ॥१०॥
एते वत्सविशेषाश्च दोग्धारः क्षीरमेव च ।
पात्राणि च मयोक्तानि सर्व्वाण्येव यथाक्रमं ॥११॥
ब्रह्मणा प्रथमं दुग्धा पुरा पृथ्वी महात्मना ।
वायुङ्कृत्वा तदा वत्सं वीजानि वसुधातले ॥१२॥
ततः स्वायम्भुवे पूर्वन्तदा मन्वन्तरे पुनः ।
वत्सं स्वायम्भुवं कृत्वा दुग्धा ग्रीष्मेण वै मही ॥१३॥
मनौ स्वारोचिषे दुग्धा मही चैत्रेण धीमता ।
मनुं स्वारोचिषं कृत्वा वत्सं सस्यानि वै पुरा[१] ॥१४॥
उत्तमेऽनुत्तमेनापि दुग्धा देवभुजेन तु ।
मनुङ्कृत्वोत्तमं वत्सं सर्वसस्यानि धीमता ॥१५॥
पुनश्च पञ्चमे[२] पृथ्वी तामसस्यान्तरे मनोः ।
दुग्धेयं तामसं वत्सं कृत्वा तु बलबन्धुना ॥१६॥
चारिष्णवस्य देवस्य संप्राप्ते चान्तरे मनोः ।
दुग्धा मही पुराणेन वत्सञ्चारिष्णवं प्रति ॥१७॥
चाक्षुषेऽपि च सम्प्राप्ते तदा मन्वन्तरे पुनः ।
दुग्धा मही पुराणेन वत्सं कृत्वा तु चाक्षुषं ॥१८॥

१ श्लोकोऽयं क्वचिल्लिखितपुस्तके नास्ति ।
२ तामसस्य चतुर्थमनुत्वात् पञ्चमे इत्ययं पाठो न समीचीनः ।

चाक्षुषस्यान्तरेऽतीते प्राप्ते वैवस्वते पुनः।
वैण्येनेयं मही दुग्धा यथा ते कीर्तितं मया ॥१८॥
एतैर्दुग्धा पुरा पृथ्वी व्यतीतेष्वन्तरेषु वै।
देवादिभिर्म्मनुष्यैश्च तथा भूतादिभिश्च या ॥२०॥
एवं सर्वेषु विज्ञेया ह्यतीतानागतेष्विह।
देवा मन्वन्तरेष्वस्य पृथोस्तु शृणुत प्रजाः ॥२१॥
पृथोस्तु पुत्रौ विक्रान्तौ जज्ञातेऽन्तर्द्धिपालिनौ।
शिखण्डिनी हविर्द्धानमन्तर्द्धानाद् व्यजायत ॥२२॥
हविर्द्धानात् षडाग्नेयी धिषणाऽजनयत् सुतान्।
प्रचीनवर्हिषं शुक्रं गयं कृष्णं व्रजाजिनौ[१] ॥२३॥
प्राचीनवर्हिर्भगवान् महानासीत् प्रजापतिः।
बलश्रुततपोवीर्यैः पृथिव्यामेकराड़सौ।
प्राचीनाग्राः कुशास्तस्य तस्मात् प्राचीनवर्ह्यसौ[२] ॥२४॥
समुद्रतनयायान्तु कृतदारः स वै प्रभुः।
महतस्तमसः पारे सवर्णायां प्रजापतेः।
सवर्णाऽधत्त सामुद्री दश प्राचीनवर्हिषः ॥२५॥
सर्व्वे प्रचेतसो नाम धनुर्वेदस्य पारगाः।
अपृथग्धर्म्मचरणास्तेऽतप्यन्त महत्तपः।
दशवर्षसहस्राणि समुद्रसलिलेशयाः ॥२६॥
तपश्चरत्सु पृथिवीं प्रचेतःसु महीरुहाः।
अरक्ष्यमानामावव्रुर्बभूवाथ प्रजाक्षयः ॥२७॥

---

१ व्रताजिनाविति क०, ङ० च। २ पाठोऽयं न समीचीनः।

प्रत्याहृते तदा तस्मिन् चाक्षुषस्यान्तरे मनोः ।
नाशकन्मारुतो वातुं वृतं खमभवद्द्रुमैः ।
दशवर्षसहस्राणि न शेकुश्चेष्टितुं प्रजाः ॥२८॥
तदुपश्रुत्य तपसा सर्वे युक्ताः प्रचेतसः ।
मुखेभ्यो वायुमग्निञ्च ससृजुर्ज्जातमन्यवः ॥२९॥
उन्मूलानथ तान् वृक्षान् कृत्वा वायुरशोषयत् ।
तानग्निरदहद्घोर एवमासीद्द्रुमक्षयः ॥३०॥
द्रुमक्षयमथो बुद्धा किञ्चिच्छेषेषु शाखिषु ।
उपगम्याब्रवीदेतान् राजा सोमः प्रचेतसः ॥३१॥
दृष्ट्वा प्रयोजनं सर्व्वं लोकसन्तानकारणात् ।
कोपन्त्यजत राजानः सर्व्वे प्राचीनवर्हिषः ॥३२॥
वृक्षाः क्षित्यां जनिष्यन्ति शाम्येतामग्निमारुतौ ।
रत्नभूता तु कन्येयं वृक्षाणां वरवर्णिनी ॥३३॥
भविष्यं जानता ह्येषा मया गोभिर्विवर्द्धिता ।
मारिषा नाम नाम्नैषा वृक्षैरेव विनिर्मिता ।
भार्य्या भवतु वो ह्येषा सोमगर्भविवर्द्धिता ॥३४॥
युष्माकं तेजसोऽर्द्धेन मम चार्द्धेन तेजसः ।
अस्यामुत्पत्स्यते विद्वान् दक्षो नाम प्रजापतिः ॥३५॥
स इमां दग्धभूयिष्ठां[१] युष्मत्तेजोमयेन वै ।
अग्निनाग्निसमो भूयः प्रजाः संवर्द्धयिष्यसि ॥३६॥
ततः सोमस्य वचनाज्जगृहुस्ते प्रचेतसः ।
संहृत्य कोपं वृक्षेभ्यः पत्नीं धर्मेण मारिषां ॥३७॥

---

१ दुःखभूयिष्ठामिति ख० ।

मारिषायां ततस्ते वै मनसा गर्भमादधुः।
दशभ्यस्तु प्रचेतोभ्यो मारिषायां प्रजापतिः ॥३८॥
दक्षो जज्ञे महातेजाः सोमस्यांशेन वीर्यवान्।
असृजन्मानसानादौ(१) प्रजा दक्षोऽथ मैथुनात् ॥३९॥
अचरांश्च चरांश्चैव द्विपदोऽथ चतुष्पदान्।
विसृज्य मनसा दक्षः पश्चादसृजत स्त्रियः ॥४०॥
ददौ स दश धर्माय कश्यपाय त्रयोदश।
कालस्य नयने युक्ताः सप्तविंशतिमिन्दवे ॥४१॥
एभ्यो दत्त्वा ततोऽन्या वै चतस्रोऽरिष्टनेमिने।
द्वे चैव बाहुपुत्राय द्वे चैवाङ्गिरसे तथा।
कन्यामेकां कृशाश्वाय तेभ्योऽपत्यं निबोधत ॥४२॥
अन्तरं चाक्षुषस्यात्र मनोः षष्ठन्तु हीयते।
मनोर्वैवस्वतस्यापि सप्तमस्य प्रजापतेः ॥४३॥
तासु देवाः खगा गावो नागा दितिजदानवाः।
गन्धर्वाप्सरसश्चैव जज्ञिरेऽन्याश्च जातयः ॥४४॥
ततः प्रभृति लोकेऽस्मिन् प्रजा मैथुनसम्भवाः।
सङ्कल्पाद्दर्शनात् स्पर्शात् पूर्वेषां सृष्टिरुच्यते ॥४५॥
ऋषय ऊचुः। देवानां दानवानाञ्च देवर्षीणाञ्च ते शुभः।
सम्भवः कथितः पूर्वं दक्षस्य च महात्मनः ॥४६॥
प्राणात् प्रजापतेर्जन्म दक्षस्य कथितं त्वया।
कथं प्राचेतसत्वञ्च पुनर्लेभे महातपाः ॥४७॥
एतन्नः संशयं सूत व्याख्यातुं त्वमिहार्हसि।

---

१ असृजन्मनसा चादाविति ट०।

स दौहित्रश्च सोमस्य कथं श्वशुरताङ्गतः ॥४८॥
सूत उवाच। उत्पत्तिश्च निरोधश्च नित्यं भूतेषु सत्तमाः।
ऋषयोऽत्र न मुह्यन्ति विद्यावन्तश्च ये नराः ॥४९॥
युगे युगे भवन्त्येते सर्व्वे दक्षादयो द्विजाः।
पुनश्चैव निरुध्यन्ते विद्वांस्तत्र न मुह्यति ॥५०॥
ज्यैष्ठ्यं कानिष्ठ्यमप्येषां पूर्वं नासीत् द्विजोत्तमाः।
तप एव गरीयोऽभूत् प्रभावश्चैव कारणं ॥५१॥
इमां विसृष्टिं यो वेद चाक्षुषस्य चराचरं।
प्रजानामायुरुत्तीर्णः स्वर्गलोके महीयते ॥५२॥
एष सर्गः समाख्यातश्चाक्षुषस्य समासतः।
इत्येते षड् विसर्गा हि क्रान्ता मन्वन्तरात्मकाः।
स्वायम्भुवाद्याः संक्षेपाच्चाक्षुषान्ता यथाक्रमं ॥५३॥
एते सर्गा[१] यथाप्रश्नं प्रोक्ता वै द्विजसत्तमाः।
वैवस्वतनिसर्गेण तेषां ज्ञेयस्तु विस्तरः ॥५४॥
अनन्ता नातिरिक्ताश्च सर्व्वे सर्गा विवस्वतः।
आरोग्यायुःप्रमाणेन धर्मतःकामतोऽर्थतः।
एतानेव गुणानेति यः पठत्यनसूयकः ॥५५॥
वैवस्वतस्य वक्ष्यामि साम्प्रतस्य महात्मनः।
समासाद्व्यासतः सर्गं ब्रुवतो मे निबोधत ॥५६॥

इति श्रीमहापुराणे वायुप्रोक्ते पृथुवंशानुकीर्त्तनं
नाम द्वितीयोऽध्यायः ॥

---

१ सर्व्वे इति क०।

# अथ तृतीयोऽध्यायः ।



वैवस्वतसर्गवर्णनं ।

सूत उवाच । सप्तमे त्वथ पर्य्याये मनोर्वैवस्वतस्य ह ।
मारीचात्कश्यपाद्देवा जज्ञिरे परमर्षयः ॥१॥
आदित्या वसवो रुद्रा साध्या विश्वे मरुद्गणाः ।
भृगवोऽङ्गिरसश्चैव ह्यष्टौ देवगणाः स्मृताः ॥२॥
आदित्या मरुतो रुद्रा विज्ञेयाः कश्यपात्मजाः ।
साध्याश्च वसवो विश्वे धर्म्मपुत्रास्त्रयो गणाः ॥३॥
भृगोस्तु भार्गवो देवो ह्यङ्गिरोऽङ्गिरसः सुतः ।
वैवस्वतेऽन्तरे ह्यस्मिन् नित्यं ते छन्दजाः सुराः ॥४॥
एष सर्गस्तु मारीचो विज्ञेयः साम्प्रतः शुभः ।
तेजस्वी साम्प्रतस्तेषामिन्द्रो नाम्ना महाबलः ॥५॥
अतीतानागता ये च वर्त्तन्ते ये च साम्प्रतं ।
सर्व्वे मन्वन्तरेन्द्रास्तु विज्ञेयास्तुल्यलक्षणाः ॥६॥
भूतभव्यभवन्नाथः सहस्राक्षः पुरन्दरः ।
मघवन्तश्च ते सर्व्वे शृङ्गिणो वज्रपाणयः ।
सर्व्वैः क्रतुशतेनेष्टं पृथक् शतगुणेन तु ॥७॥
त्रैलोक्ये यानि सत्त्वानि गतिमन्त्यबलानि च ।
अभिभूयावतिष्ठन्ते धर्म्माद्यैः कारणैरपि ॥८॥

तेजसा तपसा बुद्ध्या बलश्रुतपराक्रमैः ।
भूतभव्यभवन्नाथा यथा ते प्रभविष्णवः ।
एतत्सर्वं प्रवक्ष्यामि ब्रुवतो मे निबोधत ॥९॥
भूतं भव्यं भविष्यन्तत् स्मृतं लोकत्रयं द्विजैः ।
भूर्लोकोऽयं स्मृतो भूमिरन्तरीक्षं भुवं स्मृतं ।
भव्यं स्मृतं दिवं ह्येतत् तेषां वक्ष्यामि साधनं ॥१०॥
ध्यायता पुत्रकामेन ब्रह्मणाग्रे विभाषितं ।
भूरिति व्याहृतं पूर्वं भूर्लोकोऽयमभूत्तदा ॥११॥
भूसत्तायां स्मृतो धातुस्तथाऽसौ लोकदर्शने ।
भूतत्वाद्दर्शनत्वाच्च भूर्लोकोऽयमभूत्ततः ।
अतोऽयं प्रथमो लोको भूतत्वाद्भूर्द्विजैः स्मृतः ॥१२॥
भूतेऽस्मिन् भवदित्युक्तं द्वितीयं ब्रह्मणा पुनः ।
भवत्युत्पद्यमानेन कालशब्दोऽयमुच्यते ॥१३॥
भवनात्तु भुवर्लोको निरुक्तज्ञैर्निरुच्यते ।
अन्तरीक्षं भुवस्तस्मात् द्वितीयो लोक उच्यते ॥१४॥
उत्पन्ने तु भुवर्लोके तृतीयं ब्रह्मणा पुनः ।
भव्येति व्याहृतं यस्मात् भव्यो लोकस्तदाऽभवत् ॥१५॥
अनागते भव्य इति शब्द एष विभाव्यते ।
तस्माद्भव्यो ह्यसौ लोको नामतस्तु दिवं स्मृतं[१] ॥१६॥
स्वरित्युक्तं तृतीयोऽन्यो भाव्यो लोकस्तदाऽभवत् ।
भाव्य इत्येष धातुर्वै भाव्ये काले विभाव्यते ॥१७॥

---

१ भवनात्तु भुवर्लोक इत्यादिः दिवं स्मृतमित्यन्तः पाठः क०पुस्तके नास्ति ।

भूरितीयं स्मृता भूमिरन्तरीक्षं भुवं स्मृतं।
दिवं स्मृतं तथा भाव्यं त्रैलोक्यस्यैष संग्रहः ॥१८॥
त्रैलोक्ययुक्तैर्व्याहारैस्तिस्रो व्याहृतयोऽभवन्।
नाथ इत्येष धातुर्वै धातुज्ञैः पालने स्मृतः ॥१९॥
यस्माद्भूतस्य लोकस्य भव्यस्य भवतस्तदा।
लोकत्रयस्य नाथास्ते तस्मादिन्द्रा द्विजैः स्मृताः ॥२०॥
प्रधानभूता देवेन्द्रा गुणभूतास्तथैव च।
मन्वन्तरेषु ये देवा यज्ञभाजो भवन्ति हि ॥२१॥
यक्षगन्धर्व्वरक्षांसि पिशाचोरगदानवाः।
महिमानः स्मृता ह्येते देवेन्द्राणान्तु सर्व्वशः ॥२२॥
देवेन्द्रा गुरवो नाथा राजानः पितरो हि ते।
रक्षन्तीमाः प्रजाः सर्व्वा धर्म्मेणेह सुरोत्तमाः ॥२३॥
इत्येतल्लक्षणं प्रोक्तं देवेन्द्राणां समासतः।
सप्तर्षीन् सम्प्रवक्ष्यामि साम्प्रतं ये दिवि स्थिताः ॥२४॥
गाधिजः कौशिको धीमान् विश्वामित्रो महातपाः।
भार्गवो जमदग्निश्च ऊरुपुत्रः प्रतापवान् ॥२५॥
बृहस्पतिसुतश्चापि भारद्वाजो महातपाः।
औतथ्यो गौतमो विद्वान् शरद्वान्नाम धार्मिकः ॥२६॥
स्वायम्भुवोऽत्रिर्भगवान् ब्रह्मकोशस्तु पञ्चमः।
षष्ठो वाशिष्ठपुत्रस्तु वसुमान् लोकविश्रुतः ॥२७॥
वत्सारः काश्यपश्चैव सप्तैते साधुसम्मताः।
एते सप्तर्षयः सिद्धा वर्त्तन्ते साम्प्रतेऽन्तरे ॥२८॥

इक्ष्वाकुश्चैव नाभागो धृष्टः शर्यातिरेव च(१)।
नरिष्यन्तश्च विख्यातो नाभ उद्दिष्ट एव च ॥२९॥
करूषश्च पृषध्रश्च वसुमान् नवमः स्मृतः।
मनोर्वैवस्वतस्यैते नव पुत्राः प्रकीर्त्तिताः।
कीर्त्तिता वै मया ह्येते सप्तमश्चैतदन्तरं ॥३०॥
इत्येष वै मया पादो द्वितीयः कथितो द्विजाः।
विस्तरेणानुपूर्व्या च भूयः किं वर्णयाम्यहं ॥३१॥

इति श्रीमहापुराणे वायुप्रोक्ते वैवस्वतसर्गवर्णनं नाम तृतीयोऽध्यायः। समाप्तोऽयमनुषङ्गपादः।

---

१ यायातिरेव चेति क०, ङ०, ट० च।

# अथ चतुर्थोऽध्यायः ।

प्रजापतिवंशानुकीर्त्तनं ।

ऋषय ऊचुः । श्रुत्वा पादं द्वितीयन्तु क्रान्तं सूतेन धीमता ।
अतस्तृतीयं पप्रच्छ पादं वै शांशपायनः ॥१॥
पादः क्रान्तो द्वितीयोऽयमनुषङ्गेण यस्त्वया ।
तृतीयं विस्तरात्पादं सोपोद्घातं प्रकीर्त्तय ।
एवमुक्तोऽब्रवीत्सूतः प्रहृष्टेनान्तरात्मना ॥२॥
सूत उवाच । कीर्त्तयिष्ये तृतीयञ्च सोपोद्घातं सविस्तरं ।
पादं समुदयाद्विप्रा गदतो मे निबोधत ॥३॥
मनोर्वैवस्वतस्येमं साम्प्रतस्य महात्मनः ।
विस्तरेणानुपूर्व्या च निसर्गं शृणुत द्विजाः ॥४॥
चतुर्युगैकसप्तत्या सञ्जातः पूर्वमेव तु ।
सह देवगणैश्चैव ऋषिभिर्दानवैः सह ॥५॥
पितृगन्धर्व्वयक्षैश्च रक्षोभूतगणैस्तथा[१] ।
मानुषैः पशुभिश्चैव पक्षिभिः स्थावरैः सह ॥६॥
मन्वादिकं भविष्यान्तं आख्यानैर्बहुविस्तरं ।
वक्ष्ये वैवस्वतं सर्गं नमस्कृत्य विवस्वते ॥७॥
आद्ये मन्वन्तरेऽतीताः सर्गाः प्रावर्त्तकाश्च ये ।

१ रक्षोभूतगणैरपीति ख०, ङ० च ।

स्वायम्भुवेऽन्तरे पूर्वं सप्तासन् ये महर्षयः ।
चाक्षुषस्यान्तरेऽतीते प्राप्ते वैवस्वते पुनः ॥८॥
दक्षस्य च ऋषीणाञ्च भृग्वादीनां महौजसां ।
शापान्महेश्वरस्यासीत् प्रादुर्भावो महात्मनां ॥९॥
भूयः सप्तर्षयस्ते च उत्पन्नाः सप्त मानसाः ।
पुत्त्वे कल्पितांश्चैव स्वयमेव स्वयम्भुवा ॥१०॥
प्रजासन्तानकृद्भिस्तैरुत्पद्यद्भिर्महात्मभिः ।
पुनः प्रवर्त्तितः सर्गो यथापूर्वं यथाक्रमं ॥११॥
तेषां प्रसूतिं वक्ष्यामि विशुद्धज्ञानकर्म्मणां ।
समासव्यासयोगाभ्यां यथावदनुपूर्व्वशः ॥१२॥
येषामन्वयसम्भूतैर्लोकोऽयं सचराचरः ।
पुनः स पूरितः सर्गो ग्रहनक्षत्रमण्डितः ॥१३॥
एतत् श्रुत्वा वचस्तस्य मुनीनां संशयोऽभवत् ।
ततस्ते संशयाविष्टाः सूतं संशयनिश्चये ।
सत्कृत्य परि पप्रच्छुर्मुनयः शंसितव्रताः ॥१४॥
ऋषय ऊचुः । कथं सप्तर्षयः पूर्व्वमुत्पन्नाः सप्त मानसाः ।
पुत्त्वे कल्पितांश्चैव तन्नो निगद सत्तम ।
ततोऽब्रवीन्महातेजाः सूतः पौराणिकः शुभं ॥१५॥
कथं सप्तर्षयः सिद्धाः(१) ये वै स्वायम्भुवेऽन्तरे ।
मन्वन्तरं समासाद्य पुनर्वैवस्वतं किल ॥१६॥

---

१ शुद्धा इति ङ० ।

भवाभिशापात्संविद्धा अप्राप्तास्ते तदा तपः।
उपपन्ना जने लोके सकृदागामिनस्तु ते ॥१७॥
ऊचुः सर्वे ततोऽन्योन्यं जनलोके महर्षयः।
ऊचुरेव महाभागा वारुणे वितते क्रतौ ॥१८॥
सर्वे वयं प्रसूयामश्चाक्षुषस्यान्तरे मनोः।
पितामहात्मजाः सर्वे ततः श्रेयो भविष्यति ॥१९॥
स्वायम्भुवेऽन्तरे शप्ताः सप्तार्थं ते भवेन तु।
जज्ञिरे वै पुनस्ते ह जनलोकाद्दिवं गताः[१] ॥२०॥
देवस्य महतो यज्ञे[२] वारुणीं बिभ्रतस्तनुं।
ब्रह्मणो जुह्वतः शुक्रमग्नौ पूर्वं प्रजेप्सया।
ऋषयो जज्ञिरे पूर्वं द्वितीयमिति नः श्रुतं ॥२१॥
भृगुरङ्गिरा मरीचिः पुलस्त्यः पुलहः क्रतुः।
अत्रिश्चैव वसिष्ठश्च अष्टौ ते ब्रह्मणः सुताः ॥२२॥
तथास्य वितते यज्ञे देवाः सर्वे समागताः।
यज्ञाङ्गानि च सर्वाणि वषट्कारश्च मूर्त्तिमान् ॥२३॥
मूर्त्तिमन्ति च सामानि यजूंषि च सहस्रशः।
ऋग्वेदश्चाभवत्तत्र पदक्रमविभूषितः ॥२४॥
यजुर्वेदश्च वृत्ताढ्य ॐकारवदनोज्ज्वलः।
स्थितो यज्ञार्थसंपृक्तसूक्तब्राह्मणमन्त्रवान् ॥२५॥

---

१ जनलोकाद्दिहागता इति ख०, ङ०, ट० च।
२ देवस्य महतो यज्ञ इति ट०।

सामवेदश्च वृत्ताढ्यः सर्व्वगेयपुरःसरः ।
विश्वावस्वादिभिः सार्द्धं गन्धर्व्वैः सम्भृतोऽभवत् ॥२६॥
ब्रह्मवेदस्तथा घोरैः कृत्याविधिभिरन्वितः ।
प्रत्यङ्गिरसयोगैश्च द्विशरीरशिरोऽभवत्[१] ॥२७॥
लक्षणानि स्वरा स्तोभा निरुक्तस्वरभक्तयः ।
आश्रयस्तु वषट्कारो निग्रहप्रग्रहावपि ॥२८॥
दीप्ता दीप्तिरिला देवी दिशः प्रदिशगीश्वराः[२] ।
देवकन्याश्च पत्न्यश्च तथा मातर एव च ॥२९॥
आयुः सर्वत एवैते देवस्य यजतो मुखे ।
मूर्त्तिमन्तः स्वरूपाख्या वरुणस्य वपुर्भृतः ॥३०॥
स्वयम्भुवस्तु ता दृष्ट्वा रेतः समपतद्भुवि ।
ब्रह्मर्षिभावभूतस्य विधानाच्च न संशयः ॥३१॥
कृत्वा जुहाव स्रुग्भ्याश्च स्रुवेण परिगृह्य च ।
आज्यवज्जुहवाञ्चक्रे मन्त्रवच्च पितामहः ॥३२॥
ततः स जनयामास भूतग्रामं प्रजापतिः ।
तस्यार्व्वाक्तेजसस्तस्य यज्ञे लोकेषु तैजसं ।
तमसाभावव्याप्यत्वं तथा सत्त्वं तथा रजः[३] ॥३३॥
सगुणात्तेजसो नित्यं आकाशे तमसि स्थितं ।
तमसस्तेजसत्वाच्च सर्व्वभूतानि जज्ञिरे ॥३४॥

---

१ द्विशरीरस्थितोऽभवदिति ख० ।
२ पाठोऽयं न समीचीनः ।
३ तमसाभावमाप्यत्वमाप्यत्वञ्च तथा रज इति ट० ।

यदा तस्मिन्नजायन्त काले पुत्रास्तु कर्म्मजाः[१]।
आज्यस्थाल्यामुपादाय स्वशुक्रं कृतवांश्च ह ॥३५॥
शुक्रे कृतेऽथ तस्मिंस्तु प्रादुर्भूता महर्षयः।
ज्वलन्तो वपुषा युक्ताः सप्त वै प्रसवैर्गुणैः ॥३६॥
कृते चाग्नौ सकृच्छुक्रे ज्वालाया निःसृतः कविः।
हिरण्यगर्भस्तं दृष्ट्वा ज्वालां भित्त्वा विनिःसृतं।
भृगुस्त्वमिति होवाच यस्मात्तस्मात् स वै भृगुः ॥३७॥
महादेवस्तथोद्भूतं दृष्ट्वा ब्राह्मणमब्रवीत्।
ममैष पुत्रकामस्य दीक्षितस्य त्वऽयं प्रभो।
विजज्ञेऽथ भृगुर्द्देवो मम पुत्रो भवत्वऽयं ॥३८॥
तथेति समनुज्ञातो महादेवः स्वयम्भुवा।
पुत्रत्वे कल्पयामास महादेवस्तथा भृगुं।
वारुणा भृगवस्तस्मात् तदपत्यञ्च स प्रभुः ॥३९॥
द्वितीयन्तु ततः शुक्रमङ्गारेष्वपतत् प्रभुः।
अङ्गारेष्वङ्गिरोऽङ्गानि संहितानि ततोऽङ्गिराः ॥४०॥
सम्भूतिं तस्य तां दृष्ट्वा वह्निर्ब्रह्माणमब्रवीत्।
रेतोधास्तुभ्यमेवाहं द्वितीयोऽयं ममास्त्विति ॥४१॥
एवमस्त्विति सोऽप्युक्तो ब्रह्मणा सदसत्पतिः।
तस्मादङ्गिरसश्चापि आग्नेया इति नः श्रुतं ॥४२॥
षट्कृत्वस्तु पुनः शुक्रे ब्रह्मणा लोककारिणा[२]।

---

१ सगुणात्तेजस इत्यादिः कर्म्मजा इत्यन्तः पाठः क०, ट० पुस्तके नास्ति।
२ लोकधारिणेति ख०।

हुते समभवंस्तत्र षड्ब्रह्माण इति श्रुतिः ॥४३॥
मरीचिः प्रथमस्तत्र मरीचिभ्यः समुत्थितः ।
क्रतौ तस्मिन् सुतो जज्ञे यतस्तस्मात्स वै क्रतुः ॥४४॥
अहं तृतीय इत्यर्थस्तस्मादत्रिः स कीर्त्त्यते ।
केशैस्तु निशितैर्भूतः पुलस्त्यस्तेन स स्मृतः ॥४५॥
केशैर्लम्बैः(१) समुद्भूतस्तस्मात्तु पुलहः स्मृतः ।
वसुमध्यात् समुत्पन्नो वसुमान् वसुधाश्रयः ॥४६॥
वशिष्ठ इति तत्त्वज्ञैः प्रोच्यते ब्रह्मवादिभिः ।
इत्येते ब्रह्मणः पुत्रा मानसाः षण्महर्षयः ॥४७॥
लोकस्य सन्तानकरास्तैरिमा वर्द्धिताः प्रजाः ।
प्रजापतय इत्येवं पठ्यन्ते ब्रह्मणः सुताः ॥४८॥
अपरे पितरो नाम एतैरेव महर्षिभिः ।
उत्पादिता ऋषिगणाः सप्त लोकेषु विश्रुताः ॥४९॥
मारीचा भार्गवाश्चैव तथैवाङ्गिरसोऽपरे ।
पौलस्त्याः पौलहाश्चैव वाशिष्ठाश्चैव विश्रुताः ।
आत्रेयाश्च गणाः प्रोक्ताः पितॄणां लोकविश्रुताः ॥५०॥
एते समासतस्तात पुरैव तु गणास्त्रयः ।
अपूर्व्वाश्च(२) प्रकाशाश्च ज्योतिष्मन्तश्च विश्रुताः ॥५१॥
तेषां राजा यमो देवो यमैर्विहितकल्मषाः ।

---

१ केशैर्लालैरिति ङ०, ट० च ।
२ अमर्त्ताश्चेति ट० ।

अपरे प्रजानां पतयस्तान् शृणुध्वमतन्द्रिताः[१] ॥५२॥
कर्द्दमः कश्यपः शेषो विक्रान्तः सुश्रवास्तथा ।
बहुपुत्रः कुमारश्च विवस्वान् सशुचिस्रवाः ॥५३॥
प्रचेतसोऽरिष्टनेमिर्बहुलश्च प्रजापतिः ।
इत्येवमाद्योऽन्येऽपि बहवश्च प्रजेश्वराः ॥५४॥
कुशोच्चया बालखिल्याः सम्भूताः परमर्षयः ।
मनोजवाः सर्व्वगताः सार्व्वभौमाश्च तेऽभवन् ॥५५॥
जाता भस्मव्यपोहिन्यां ब्रह्मर्षिगणसम्मताः ।
वैखानसा मुनिगणास्तपःश्रुतपरायणाः ॥५६॥
श्रोतोभ्यस्तस्य चोत्पन्नावश्विनौ रूपसम्मितौ ।
विदुर्जन्माचरजसो विमला नेत्रसम्भवाः ॥५७॥
ज्येष्ठाः प्रजानां पतयः श्रोतोभ्यस्तस्य जज्ञिरे ।
ऋषयो रोमकूपेभ्यस्तथा स्वेदमलोद्भवाः ॥५८॥
दारुणा हि रुते मासा[२] निर्यासाः पत्रसन्धयः ।
वत्सरा ये त्वहोरात्राः पित्तं ज्योतिश्च दारुणं ॥५९॥
रौद्रं लोहितमित्याहुर्लोहितं कनकं स्मृतं ।
तम्मैत्रमिति विज्ञेयं धुमश्च पशवः स्मृताः ॥६०॥
येऽर्चिषस्तस्य ते रुद्रास्तथादित्याः समुद्भवाः ।
अङ्गारेभ्यः समुत्पन्ना ज्योतिषो दिव्यमानुषाः ॥६१॥

---

१ प्रजानां पतयः सर्व्वे तान् शृणुध्वं समाहिता इति ख० ।
२ पाठोऽयमादर्शसम्मतो मुद्रितः । परन्त्वयं न समीचीनः ।

आदिमानस्य लोकस्य ब्रह्मा ब्रह्मसमुद्भवः ।
सर्वकामदमित्याहुस्तत्र कन्यामुदाहरन् ॥६२॥
ब्रह्मा सुरगुरुस्तत्र त्रिदशैः संप्रसीदति ।
इमे वै जनयिष्यन्ति प्रजाः सर्वाः प्रजेश्वराः ॥६३॥
सर्वे प्रजानां पतयः सर्वे चापि तपस्विनः ।
तत्प्रसादादिमान् लोकान् धारयेयुरिमाः क्रियाः[१] ॥६४॥
इन्द्रं संवर्द्धयामास तत्र तेजो विवर्द्धनं ।
देवेषु वेदविद्वांसः[२] सर्वे राजर्षयस्तथा ॥६५॥
वेदमन्त्रपराः सर्वे प्रजापतिगुणोद्भवाः ।
अनन्तं ब्रह्म सत्यञ्च तपश्च परमं भुवि ॥६६॥
सर्वे हि वयमेते च तवैव प्रसवः प्रभो ।
ब्रह्म च ब्राह्मणाश्चैव लोकाश्चैव चराचराः ॥६७॥
मरीचिमादितः कृत्वा देवाश्च ऋषिभिः सह ।
अपत्यानीह सञ्चिन्त्य तेऽपत्यङ्कामयामहे ॥६८॥
तस्मिन् यज्ञे महाभागा देवाश्च ऋषिभिः सह ।
एतद्वंशसमुद्भूताः स्थानकालाभिमानिनः ॥६९॥
न च तेनैव रूपेण स्थापयेयुरिमाः प्रजाः ।
युगादिनिधनाश्चैव स्थापयेयुरिमाः प्रजाः ॥७०॥
ततोऽब्रवील्लोकगुरुः परमित्यविचारयन् ।

---

१ प्रजा इति ख० ।
२ सर्व्वे वै देवदेवेष्विति क० ।

एवं देवा विनिश्चित्य मया सृष्टा न संशयः ।
भवतां वंशसम्भूताः पुनरेते महर्षयः ॥७१॥
तेषां भृगोः कीर्तयिष्ये वंशं पूर्वमहात्मनः ।
विस्तरेणानुपूर्व्या च प्रथमस्य प्रजापतेः ॥७२॥
भार्या भृगोरप्रतिमे उत्तमेऽभिजने शुभे ।
हिरण्यकशिपोः कन्या दिव्या नाम परिश्रुता ।
पुलोम्नश्चापि पौलोमी दुहिता वरवर्णिनी ॥७३॥
भृगोस्त्वजनयद्दिव्या काव्यं वेदविदां वरं ।
देवासुराणामाचार्यं शुक्रङ्कविसुतं ग्रहं ॥७४॥
स शुक्रश्चोशनाः ख्यातः स्मृतः काव्योऽपि नामतः ।
पितॄणां मानसी कन्या सोमपानां यशस्विनी ।
शुक्रस्य भार्याङ्गी[१] नाम विजज्ञे चतुरः सुतान् ॥७५॥
ब्राह्मेण तेजसा युक्तः स जातो ब्रह्मवित्तमः ।
तस्यामेव तु चत्वारः पुत्राः शुक्रस्य जज्ञिरे ॥७६॥
त्वष्टा वरूत्री द्वावेतौ शण्डामर्कौ च तावुभौ ।
ते तदादित्यसङ्काशा ब्रह्मकल्पाः प्रभावतः ॥७७॥
रञ्जनः पृथुरश्मिश्च विद्वान्यश्च बृहद्गिराः ।
वरूत्रिणः सुता ह्येते ब्रह्मिष्ठाः सुरयाजकाः ७८॥
दृज्याधर्मविनाशार्थं मनुमेत्याभ्ययोजयन् ।
निरस्यमानं वै धर्मं दृष्ट्वेन्द्रो मनुमब्रवीत् ॥७९॥

---

१ पाठोऽयं आदर्शसम्मतो मुद्रितः ।

एतैरेव तु कामं त्वां प्रापयिष्यामि याजनं[१] ।
श्रुत्वेन्द्रस्य तु तद्वाक्यं तस्माद्देशादपाक्रमन् ॥८०॥
तिरोभूतेषु तेष्विन्द्रो धर्मपत्नीञ्च चेतनां ।
ग्रहेण मोचयित्वा तु ततः सोऽनुससार तां ॥८१॥
तत इन्द्रविनाशाय यतमानान्यतींस्तु तान् ।
तत्रागतान् पुनर्दृष्ट्वा दुष्टानिन्द्रः प्रहन्य तु ।
सुष्वाप देवदेवस्य वेद्यां वै दक्षिणे ततः ॥८२॥
तेषान्तु भक्षमाणानां तत्र शालावृकैः सह ।
शीर्षाणि न्यपतंस्तानि खर्जूराण्यभवंस्ततः ॥८३॥
एवं बहुक्षिणः पुत्रा इन्द्रेण निहताः पुरा ।
यजन्यान्देवयानी च शुक्रस्य दुहिताऽभवत् ॥८४॥
त्रिशिरा विश्वरूपस्तु त्वष्टुः पुत्रोऽभवन्महान् ।
विश्वरूपानुजश्चापि विश्वकर्म्मा यमः स्मृतः ॥८५॥
भृगोस्तु भृगवो देवा जज्ञिरे द्वादशात्मजाः ।
देव्यान्तान् सुषुवे सर्वान् काव्यस्यैवात्मजान्[२] प्रभुः ॥८६॥
भुवनो भावनश्चैव अन्यश्चान्यायतस्तथा ।
क्रतुः श्रवाश्च मूर्द्धा च व्यजयो व्यसुषश्च यः ।
प्रसवश्चाप्यजश्चैव द्वादशोऽधिपतिः स्मृतः ॥८७॥
इत्येते भृगवो देवाः स्मृता द्वादश याज्ञिकाः ।
पौलोम्यजनयत्पुत्रं ब्रह्मिष्ठं वसिनं विभुं ॥ ८८ ॥

---

१ याजयन्निति ख० ।
२ काव्यस्यैवानुजानिति ङ०, ढ० च ।

व्याधितः सोऽष्टमे मासि गर्भक्रूरेण कर्म्मणा।
च्यवनाच्च्यवनासोऽथ चेतनस्तु प्रचेतसः।
प्राचेतसाच्च्यवनक्रोधाद्ध्वानं पुरुषादजः[१] ॥८९॥
जनयामास पुत्रौ द्वौ सुकन्यायाञ्च भार्गवः।
आत्मवानं[२] दधीचञ्च[३] तावुभौ साधुसम्मतौ ॥९०॥
सारस्वतः सरस्वत्यां दधीचाच्चोपपद्यते।
रुची पत्नी[४] महाभागा आत्मवानस्य नाहुषी ॥९१॥
तस्य ऊर्वोर्च्चपिर्जज्ञे ऊरू भित्त्वा महायशाः।
और्व्वश्चासीदृचीकस्तु दीप्ताग्निसदृशप्रभः ॥९२॥
जमदग्निर्ऋचीकस्य सत्यवत्यां व्यजायत।
भृगोश्च रुचिपर्य्याये[५] रौद्रवैष्णवयोस्तथा ॥९३॥
जमनाद्वैष्णवस्याग्नेर्जमदग्निरजायत।
रेणुका जमदग्नेस्तु शक्रतुल्यपराक्रमं।
ब्रह्मक्षत्रमयं रामं सुषुवेऽमिततेजसं ॥९४॥
और्वस्यासीत्पुत्रशतं जमदग्निपुरोगमं।
तेषां पुत्रसहस्राणि भार्गवाणां परस्परात् ॥९५॥
अप्यन्तरेषु वै वाह्या वहवो भार्गवाः स्मृताः।

---

१ श्लोकार्द्धमिदं न समीचीनं।
२ आत्मानं वेति ङ०।
३ दधीचिश्चेति ख०।
४ रुचिपत्नीति ख०।
५ रुचिपर्य्याये इति ङ०।

वत्सो विश्वोऽश्विषेणश्च[१] पाण्डुः पथ्यः सशौनकः।
गोत्रेण सप्तमा ह्येते पञ्चा ज्ञेयास्तु भार्गवाः ॥९६॥
शृणुताङ्गिरसो वंशमग्नेः पुत्रस्य धीमतः।
यस्यान्ववाये सम्भूता भारद्वाजाः सगौतमाः।
देवाश्चाङ्गिरसो मुख्यास्त्रिषुमन्तो महौजसः ॥९७॥
सुरूपा चैव मारीची कार्द्दमी च तथा स्वराट्।
पथ्या च मानवी कन्या तिस्रो भार्य्यास्त्वथर्व्वणः।
इत्येताङ्गिरसः पत्न्यस्तासु वक्ष्यामि सन्ततिं ॥९८॥
अथर्व्वणस्तु दायादास्तासु जाताः कुलोद्वहाः।
उत्पन्ना महता चैव तपसा भावितात्मनां ॥९९॥
वृहस्पतिः सुरूपायां गौतमः सुषुवे स्वराट्।
अवन्ध्यं वामदेवञ्च उतथ्यमुशिजन्तथा ॥१००॥
धिष्णुः पुत्रस्तु पथ्यायां संवर्त्तश्चैव मानसः।
विचित्तश्च तथायस्यः शरद्वांश्चाप्युतथ्यजः ॥१०१॥
अशिजो दीर्घतमा वृहदुत्थो वामदेवजः।
धिष्णोः पुत्रः सुधन्वान ऋषभश्च सुधन्वनः ॥१०२॥
रथकाराः स्मृता देवा ऋषयो ये परिश्रुताः।
वृहस्पतेर्भरद्वाजो विश्रुतः सुमहायशाः ॥१०३॥
अङ्गिरसस्तु संवर्त्तो देवानङ्गिरसः शृणु।
वृहस्पतेर्यवीयांसो देवा ह्यङ्गिरसः स्मृताः ॥१०४॥
औरसाङ्गिरसः पुत्राः सुरूपायां विजज्ञिरे।

१ पाठोऽयं आदर्शसम्मतो मुद्रितः।

औदार्यायुर्दनुर्दक्षो दर्भः प्राणस्तथैव च ।
हविष्मांश्च हविष्णुश्च क्रतुः सत्यश्च ते दश ॥१०५॥
अयस्यस्तु उतथ्यश्च वामदेवस्तथोशिजः ।
भारद्वाजः शाङ्कृतिका गार्ग्यकान्वरथीतराः ॥१०६॥
मुद्गला विष्णुवृद्धाश्च हरिता वायवस्तथा ।
तथा भाक्षा भरद्वाजा आर्षभाः किम्भयास्तथा ॥१०७॥
एते ह्यङ्गिरसः पक्षा विज्ञेया दश पञ्च च ।
ह्यथ्यन्तरेषु वै वाह्या वहवोऽङ्गिरसः स्मृताः ॥१०८॥
मारीचं परिवक्ष्यामि वंशमुत्तमपूरुषम् ।
यस्यान्ववाये सम्भूतं जगत् स्थावरजङ्गमं ॥१०९॥
मरीचिरापस्चकमे ताभिध्यायन् प्रजेप्सया[१] ।
पुत्रः सर्व्वगुणोपेतः प्रजावान् सुरुचिर्द्दितिः ।
संपूज्यते प्रशस्तायां मनसा भाविता प्रभुः ॥११०॥
आहृताश्च ततः सर्वा आपः समवसत् प्रभुः ।
तासु प्रणिहितात्मानमेकः सोऽजनयत् प्रभुः ॥१११॥
पुत्रमप्रतिमन्नाम्नाऽरिष्टनेमिः प्रजापतिः ।
पुत्रं मरीचं सूर्याभं वधावेशा[२] व्यजीजनत् ॥११२॥
प्रध्यायन् हि सतां वाचं पुत्रार्थी सलिले स्थितः ।
सप्तवर्षसहस्राणि ततः सोऽप्रतिमोऽभवत् ॥११३॥
कश्यपः सवितुर्विद्वांस्तेन सः[३] ब्रह्मणः समः ।

---

१ प्रजेच्छयेति ख० ।
२ पाठोऽयमसमीचीनः ।
३ तेजसेति ख० ।

मन्वन्तरेषु सर्व्वेषु ब्राह्मणांशेन जायते ॥११४॥
कन्यानिमित्तमित्युक्ते दक्षेण कुपिताः प्रजाः ।
अपिवत्स तदा कश्यं कश्यं मद्यमिहोच्यते ॥११५॥
हास्येकथा हि[१] विज्ञेया ब्रह्मणः कश्य उच्यते ।
कश्यं मद्यं स्मृतं विप्रैः कश्यपानात्तु कश्यपः ॥११६॥
करोति नाम यद्वाचो वाचं क्रूरमुदाहृतं ।
दक्षाभिशप्तः कुपितः कश्यपस्तेन सोऽभवत् ॥११७॥
तस्माच्च कश्यपेनोक्तो ब्रह्मणा परमेष्ठिना ।
तस्माद्दक्षः कश्यपाय कन्यास्ताः प्रत्यपद्यत ।
सर्वास्च ब्रह्मवादिन्यः सर्वास्ता लोकमातरः ॥११८॥
इत्येतमृषिसर्गन्तु पुण्यं यो वेद वारुणं ।
आयुष्मान् पुण्यवान् शुद्धः सुखमाप्नोत्यनुत्तमं ।
धारणात् श्रवणाच्चैव सर्वपापैः प्रमुच्यते ॥११९॥
अथाब्रुवन् पुनः सर्वे मुनयो रोमहर्षणं ।
विनिवृत्ते प्रजासर्गे षष्ठे वै चाक्षुषस्य ह ।
निसर्गः सम्प्रवृत्तोऽयं मनोर्वैवस्वतस्य ह ॥१२०॥
सूत उवाच । प्रजाः सृजेति व्यादिष्टः स्वयं दक्षः स्वयम्भुवा ।
ससर्ज दक्षो भूतानि गतिमन्ति ध्रुवाणि च ।
उपस्थितेऽन्तरे ह्यस्मिन् मनोर्वैवस्वतस्य ह ॥१२१॥
ततः प्रवृत्तो दक्षस्तु प्रजाः स्रष्टुञ्चतुर्व्विधाः ।
जरायुजा अण्डजाश्च उद्भिज्जाः स्वेदजास्तथा ॥१२२॥

---

१ पाठोयमादर्शसम्मतो मुद्रितः । परन्त्वयमसमीचीनः ।

दशवर्षसहस्राणि तप्त्वा घोरं महत्तपः।
सम्भावितो योगबलैरणिमाद्यैर्विशेषतः ॥१२३॥
आत्मानं व्यभजत् श्रीमान् मनुष्योरगराक्षसान्।
देवासुरसगन्धर्वान् दिव्यसंहननप्रजान्।
ईश्वरानात्मनस्तुल्यान् रूपद्रविणतेजसा ॥१२४॥
तथैवान्यानि सुदितो गतिमन्ति ध्रुवाणि च।
मानसान्येव भूतानि सिसृक्षुर्विविधाः प्रजाः ॥१२५॥
ऋषीन् देवान् सगन्धर्वान् मनुष्योरगराक्षसान्।
यक्षभूतपिशाचांश्च वयःपशुमृगांस्तथा ॥१२६॥
यदास्य मनसा सृष्टा न व्यवर्द्धन्त ताः प्रजाः।
अपध्याता भगवता महादेवेन धीमता ॥१२७॥
मैथुनेन च भावेन सिसृक्षुर्विविधाः प्रजाः।
असिक्नीं[१] चावहत्पत्नीं वीरणस्य प्रजापतेः ॥१२८॥
सुतां सुमहता युक्तां तपसा लोकधारिणीं।
यया धृतमिदं सर्व्वं जगत् स्थावरजङ्गमं ॥१२९॥
अत्राप्युदाहरन्तीमौ श्लोकौ प्राचेतसं प्रति।
दक्षस्योद्वहतो भार्यामसिक्नीं वीरणीं परां[२] ॥१३०॥
रूपाणां नियुतं दक्षः सर्पिणां साभिमानिनां।
नदीगिरिषु सर्ज्जंस्ताः पृष्ठतोऽनुययौ प्रभुः ॥१३१॥
तं दृष्ट्वा ऋषिभिः प्रोक्तं प्रतिष्ठास्यति वै प्रजाः।

---

१ असृक्नीमिति ट०।
२ परेति ट०।

प्रथमात्र द्वितीया तु दक्षस्येह प्रजापतेः ॥१३१॥
तथागच्छद् यथाकालं कृपानां नियुते तु सः ।
असिक्नीं वैरिणीं यत्र दक्षः प्राचेतसोऽवहत् ॥१३३॥
अथ पुत्रसहस्रं स वैरिण्याममितौजसा ।
असिक्न्यां जनयामास दक्षः प्राचेतसः प्रभुः ॥१३४॥
तांस्तु दृष्ट्वा महातेजाः स विवर्द्धयिषून् प्रजाः ।
देवर्षिः प्रियसंवादो नारदो ब्रह्मणः सुतः ।
नाशाय वचनं तेषां शापायैवात्मनोऽब्रवीत् ॥१३५॥
यः स वै प्रोच्यते विप्रः कश्यपस्येति कृत्रिमः ।
दक्षशापभयाद्भीतो ब्रह्मर्षिस्तेन कर्म्मणा ॥१३६॥
यः कश्यपसुतस्याथ परमेष्ठी व्यजायत ।
मानसः कश्यपस्येह दक्षशापभयात् पुनः ॥१३७॥
तस्मात् स कश्यपस्याथ द्वितीयं मानसोऽभवत् ।
स हि पूर्व्वसमुत्पन्नो नारदः परमेष्ठिनः ॥१३८॥
येन दक्षस्य पुत्रास्ते हर्य्यश्वा इतिविश्रुताः ।
निन्दार्थं नाशिताः सर्व्वे विनष्टाश्च न संशयः ॥१३९॥
तस्योद्यतस्तदा दक्षः क्रुद्धो नाशाय वै प्रभुः ।
ब्रह्मर्षीन् वै पुरस्कृत्य याचितः परमेष्ठिना ॥१४०॥
ततोऽभिसन्धितं चक्रे दक्षस्तु परमेष्ठिना ।
कन्यायां नारदो मह्यं तव पुत्रो भवत्विति ॥१४१॥
ततो दक्षः सुतां प्रादात् प्रियां वै परमेष्ठिने ।
तस्मात् स नारदो जज्ञे भूयः शान्तो भयादृषिः ॥१४२॥

तदुपश्रुत्य विप्रास्ते जातकौतूहलाः पुनः।
अपृच्छन् वदतां श्रेष्ठं सूतं तत्त्वार्थदर्शिनं ॥१४३॥
ऋषय ऊचुः। कथं विनाशिताः पुत्रा नारदेन महात्मना।
प्रजापतिसुतास्ते वै प्रजाः प्राचेतसात्मजाः ॥१४४॥
स तथ्यं वचनं श्रुत्वा जिज्ञासासम्भवं शुभं[१]।
प्रोवाच मधुरं वाक्यं तेषां सर्वगुणान्वितं ॥१४५॥
दक्षपुत्राश्च हर्य्यश्वा विवर्द्धयिषवः प्रजाः।
समागता महावीर्या नारदस्तानुवाच ह ॥१४६॥
बालिशा बत यूयं वै न प्रजानीथ भूतलं।
अन्तमूर्द्धमधश्चैव कथं स्रक्ष्यथ वै प्रजाः ॥१४७॥
किं प्रमाणन्तु मेदिन्याः स्रष्टव्यानि तथैव च।
अविज्ञायेह स्रष्टव्यं अन्यथा किं नु स्रक्ष्यथ।
अल्पं वापि बहुर्वापि तत्र दोषस्तु दृश्यते ॥१४८॥
ते तु तद्वचनं श्रुत्वा प्रयाता सर्व्वतो दिशः।
वायुन्तु समनुप्राप्य[२] गतास्ते वै पराभवं ॥१४९॥
अद्यापि न निवर्त्तन्ते भ्रमन्तो वायुमिश्रिताः।
एवं वायुपथं प्राप्य भ्रमन्ते ते महर्षयः ॥१५०॥
स्वेषु पुत्रेषु नष्टेषु दक्षः प्राचेतसः पुनः।
वैरिण्यामेव पुत्राणां सहस्रमसृजत् प्रभुः ॥१५१॥
प्रजा विवर्द्धयिषवः शबलाश्वाः पुनस्तु ते।

---

१ पुनरिति ख०।

२ वायुन्तु नाशनं प्राप्येति ख०, ङ०, ट० च।

पूर्वमुक्तं वचस्तत्र श्राविता नारदेन ह ॥१५२॥
तच्छ्रुत्वा वचनं सर्व्वे कुमारास्ते महौजसः ।
अन्योऽन्यमूचुस्ते सर्व्वे सम्यगाह महानृषिः ।
भ्रातॄणां पदवी चैव गन्तव्या नात्र संशयः ॥१५३॥
ज्ञात्वा प्रमाणं पृथ्व्याश्च सुखं स्रक्ष्यामहे प्रजाः ।
तेऽपि तेनैव मार्गेण प्रयाताः सर्व्वतो दिशम् ।
अद्यापि न निवर्त्तन्ते समुद्रेभ्य इवापगाः ॥१५४॥
ततः प्रभृति वै भ्राता भ्रातुरन्वेषणे रतः ।
प्रयातो नश्यति तथा तन्न कार्य्यं विजानता ॥१५५॥
नष्टेषु शबलाश्वेषु दक्षः क्रुद्धोऽभवद्विभुः ।
नारदं नाशमेहीति गर्भवासं वसेति च ॥१५६॥
तथा तेष्वपि नष्टेषु महात्मसु पुरा किल ।
षष्टिकन्याऽसृजद्दक्षो वैरिण्यामेव विश्रुताः ॥१५७॥
तास्तदा प्रतिजग्राह पत्न्यर्थे कश्यपः प्रभुः ।
धर्म्मः सोमस्तु भगवांस्तथैवान्ये महर्षयः ॥१५८॥
इमां विसृष्टिं दक्षस्य कृत्स्नां यो वेद तत्त्वतः ।
आयुष्मान् कीर्त्तिमान् धन्यः प्रजावांश्च भवत्युत[१] ॥१५९॥

इति श्रीमहापुराणे वायुप्रोक्ते प्रजापतिवंशानुकीर्त्तनं नाम
चतुर्थोऽध्यायः ।

---

१ अत्राध्याये बहुषु स्थानेषु पूर्व्वापरसङ्गतिराहित्येनासमीचीनत्वेन च पाठः प्रतिभाति ।

# अथ पञ्चमोऽध्यायः ।

काश्यपीयप्रजासर्गः ।

ऋषय ऊचुः । देवानां दानवानाञ्च दैत्यानाञ्चैव सर्व्वशः ।
उत्पत्तिं विस्तरेणेह ब्रूहि वैवस्वतेऽन्तरे ॥१॥
सूत उवाच । धर्म्मस्य तावद् वक्ष्यामि निसर्गं तं निबोधत ।
अरुन्धती वसुर्यामी लम्बा भानुर्मरुत्वती ॥२॥
सङ्कल्पा च मुहूर्त्ता च साध्या विश्वा तथैव च ।
धर्म्मपत्न्यो दश त्वेता दक्षः प्राचेतसो ददौ ॥३॥
साध्या पुत्रांस्तु धर्मस्य साध्यान् द्वादश जज्ञिरे ।
साध्या नाम महाभागाश्छन्दजा यज्ञभागिनः ।
देवेभ्यस्तान् परान् देवान् देवज्ञाः परिचक्षिरे ॥४॥
ब्रह्मणो वै मुखात् सृष्टा जया देवाः प्रजेप्सया ।
सर्व्वे मन्त्रशरीरास्ते स्मृता मन्वन्तरेष्विह ॥५॥
दर्शश्च पौर्णमासश्च बृहच्चश्च रथन्तरं ।
चित्तिश्चैव विचित्तिश्च आकूतिः कूतिरेव च ॥६॥
विज्ञाता चैव विज्ञातो मनो यज्ञश्च ते स्मृताः ।
नामान्येतानि तेषां वै जयानां प्रथितानि च ॥७॥
ब्रह्मशापेन ते जाताः पुनः स्वायम्भुवे जिताः ।
स्वारोचिषे वै तुषिताः सत्याश्चैवोत्तमे पुनः ॥८॥
तामसे हरयो नाम वैकुण्ठा रैवताऽन्तरे ।

साध्याश्च चाक्षुषे नाम्ना छन्दजा जज्ञिरे सुराः ॥९॥
धर्म्मपुत्रा महाभागाः साध्या ये द्वादशामराः ।
पूर्वं स्म अनुसूयन्ते चाक्षुषस्यान्तरे मनोः ॥१०॥
स्वारोचिषेऽन्तरेऽतीता देवा ये वै महौजसः ।
तुषिता नाम तेऽन्योन्यमूचुर्वै चाक्षुषेऽन्तरे ॥११॥
किञ्चिच्छिष्टे तदा तस्मिन् देवा वै तुषिताऽब्रुवन् ।
इतरेतरं महाभागान् वयं साध्यान् प्रविश्य वै ।
मन्वन्तरे भविष्यामस्तन्नः श्रेयो भविष्यति ॥१२॥
एवमुक्ता तु ते सर्व्वे चाक्षुषस्याऽन्तरे मनोः ।
तस्माद्द्वादशसम्भूतान् धर्म्मान् स्वायम्भुवात् पुनः ॥१३॥
नरनारायणौ तत्र जज्ञाते पुनरेव हि ।
विपश्चिदिन्द्रो यस्यासीत् तथा सत्यो हरिश्च तौ ।
स्वारोचिषेऽन्तरे पूर्वमास्तान्तौ तुषितौ सुरौ ॥१४॥
तुषितानान्तु साध्यत्वे नामान्येतानि वक्ष्यते ।
मनोऽनुमन्ता प्राणश्च नरो यानश्च[१] वीर्यवान् ॥१५॥
चित्तिर्हयो नयश्चैव हंसो नारायणस्तथा ।
प्रभवोऽथ विभुश्चैव[२] साध्या द्वादश जज्ञिरे ॥१६॥
स्वायम्भुवेऽन्तरे पूर्वं ततः स्वारोचिषे पुनः ।
नामान्यासन् पुनस्तानि तुषितानां निबोधत ॥१७॥
प्राणोऽपानस्तथोदानः समानो व्यान एव च ।

---

१ नरोपानश्चेति ख०, ङ०, ट०, ठ० च ।
२ प्रभवो विभवश्चैवेति क० ।

चक्षुः श्रोत्रं तथा[१] प्राणः स्पर्शो बुद्धिर्मनस्तथा ॥१८॥
प्राणापानावुदानश्च समानो व्यान एव च।
नामान्येतानि पूर्व्वन्तु तुषितानां स्मृतानि ह ॥१९॥
वसोस्तु वसवः पुत्राः साध्यानामनुजाः स्मृताः।
धरो ध्रुवश्च सोमश्च आपश्चैवानलोऽनिलः।
प्रत्यूषश्च प्रभासश्च वसवोऽष्टौ प्रकीर्त्तिताः ॥२०॥
धरस्य पुत्रो द्रविणो हुतहव्यवहस्तथा।
ध्रुवपुत्रो भवो नाम्ना कालो लोकप्रकालनः ॥२१॥
सोमस्य भगवान् वर्चा बुधश्च ग्रहबोधनः।
रोहिण्यां तौ समुत्पन्नौ त्रिषु लोकेषु विश्रुतौ ॥२२॥
धारोर्मिकलिलाश्चैव त्रयश्चन्द्रमसः सुताः।
आपस्य पुत्रो वैतण्ड्यः श्रमः शान्तस्तथैव च ॥२३॥
स्कन्दः सनत्कुमारश्च जज्ञे पादेन तेजसः।
अग्निपुत्रः कुमारस्तु शरस्तम्बे व्यजायत।
तस्य शाखो विशाखश्च नैगमेयश्च पृष्ठजाः ॥२४॥
अनिलस्य शिवा भार्य्या तस्याः पुत्रो मनोजवः।
अविज्ञातगतिश्चैव द्वौ पुत्रावनिलस्य च ॥२५॥
प्रत्यूषस्य विदुः पुत्र ऋषिर्नाम्ना तु देवलः।
द्वौ पुत्रौ देवलस्यापि क्षमावन्तौ मनीषिणौ ॥२६॥
बृहस्पतेस्तु भगिनी वरस्त्री ब्रह्मचारिणी।

---

१ मनः इति ख०।

योगसिद्धा जगत्कृत्स्नमसक्ता विचरत्युत ॥२७॥
प्रभासस्य तु या भार्य्या वसूनामष्टमस्य ह ।
विश्वकर्मा सुतस्तस्या जातः शिल्पिप्रजापतिः ॥२८॥
स कर्त्ता सर्वशिल्पानां त्रिदशानाञ्च वर्द्धकिः ।
भूषणानाञ्च सर्वेषां कर्त्ता कारयिता च सः ॥२९॥
सर्वेषाञ्च विमानानि दैवतानां करोति सः ।
मानुषाश्चोपजीवन्ति यस्य शिल्पानि शिल्पिनः ॥३०॥
विश्वेदेवास्तु विश्वाया जज्ञिरे दश विश्रुताः ।
क्रतुर्दक्षः श्रवः सत्यः कालः कामो धुनिस्तथा[१] ॥३१॥
कुरुवान् प्रभवांश्चैव रोचमानश्च ते दश ।
धर्मपुत्राः स्मृता ह्येते विश्वायां जज्ञिरे शुभाः ॥३२॥
मरुत्वत्यां मरुत्वन्तो भानवो भानुजाः स्मृताः ।
मुहूर्त्ताश्च मुहूर्त्तायां घोषं लम्बा व्यजायत ॥३३॥
सङ्कल्पायान्तु संजज्ञे विद्यान् सङ्कल्प एव च ।
नागवीथ्यस्तु[२] जाम्याश्च पथत्रयसमाश्रिताः[३] ॥३४॥
पृथिवीविषयं सर्व्वमरुन्धत्यां व्याजायत ।
एष सर्गः समाख्यातो विद्वान् धर्मस्य शाश्वतः ॥३५॥
मुहूर्त्ताश्चैव तिथ्यश्च पतिभिः सह सुव्रताः ।
नामतः संप्रवक्ष्यामि ब्रुवतो मे विबोधत ॥३६॥

---

१ मधुस्तथेति ख० ।
२ नव वीथ्यस्त्विति ख०, ङ०, ट०, ठ० च ।
३ पथत्रयसमाश्रिता इति ङ० ।

अहोरात्रविभागश्च नक्षत्राणि समासतः ।
मुहूर्त्ताः सर्वनक्षत्रा अहोरात्रविदस्तथा ॥३७॥
अहोरात्रकलानान्तु षट्शतीत्यधिका स्मृता ।
रवेर्गतिविशेषेण सर्वेषु ऋतुमिच्छतः ॥३८॥
ततो वेदविदश्चैतां तिथिमिच्छन्ति पर्वसु ।
अविशेषेषु कालेषु योज्यः स पितृदानतः ॥३९॥
रौद्रः सार्वस्तथा मैत्रः पित्र्यावासव एव च ।
आप्योऽथ वैश्वदेवश्च ब्राह्मो मध्याह्नसंश्रितः ॥४०॥
प्राजापत्यस्तथा ऐन्द्रः[१] तथेन्द्रो निर्ऋतिस्तथा ।
वारुणश्च तथार्यम्णो भागाश्चापि दिनाश्रिताः ॥४१॥
एते दिनमुहूर्त्ताश्च दिवाकरविनिर्मिताः ।
शङ्कुच्छायाविशेषेण वेदितव्याः प्रमाणतः ॥४२॥
अजास्तथाहिर्बुध्नश्च पूषा हि यमदेवताः ।
आग्नेयश्चापि विज्ञेयः प्राजापत्यस्तथैव च ॥४३॥
ब्रह्मसौम्यस्तथादित्यो वार्हस्पत्योऽथ वैष्णवः ।
सावित्रोऽथ तथा त्वाष्ट्रो वायव्यश्चेति संग्रहः ॥४४॥
एकरात्रिमुहूर्त्ताः स्युः क्रमोक्ता दश पञ्च च ।
इन्दोर्गत्युदया ज्ञेया नालिकाः पादिकास्तथा ।
कालावस्थास्त्विमास्त्वेते मुहूर्त्ता देवताः स्मृताः ॥४५॥
सर्वग्रहाणां त्रीण्येव स्थानानि विहितानि च ।
दक्षिणोत्तरमध्यानि तानि विद्याद् यथाक्रमं ॥४६॥

---

१ तथोपेन्द्र इति क० ।

स्थानं जारद्गवं मध्ये तथैरावतमुत्तरं।
वैश्वानरं दक्षिणतो निर्द्दिष्टमिह तत्त्वतः ॥४७॥
अश्विनी कृत्तिका याम्या नागवीथिरिति स्मृता।
पुष्योऽश्लेषापुनर्व्वस्व वीथिरैरावती मता।
तिस्रस्तु वीथयो ह्येता उत्तरे मार्ग उच्यते ॥४८॥
पूर्वोत्तरे फाल्गुन्यौ च मघा चै वार्य्यमी स्मृता।
हस्तचित्रे तथा स्वाती गोवीथीत्यभिशब्दिता ॥४९॥
ज्येष्ठा विशाखानुराधा वीथी जारद्गवी स्मृता।
एतास्तु वीथयस्तिस्रो मध्यमे मार्ग उच्यते ॥५०॥
मूलश्चाषाढे द्वे चापि अजवीथ्यभिशब्दिता।
श्रवणश्च धनिष्ठा च गार्गी शतभिषक्तथा ॥५१॥
वैश्वानरी भाद्रपदे रेवती चैव कीर्त्तिता।
स्मृता वीथ्यस्तु तिस्रस्ता मार्गे वै दक्षिणे बुधैः ॥५२॥
सप्तविंशत्तु याः कन्या दक्षः सोमाय ता ददौ।
सर्व्वा नक्षत्रनाम्न्यस्ता ज्योतिषे चैव कीर्त्तिताः।
तासामपत्यान्यभवन् दीप्तान्यमिततेजसा ॥५३॥
यास्तु शेषास्तदा कन्याः प्रतिजग्राह कश्यपः।
चतुर्दश महाभागाः सर्व्वास्ता लोकमातरः ॥५४॥
अदितिर्दितिर्दनुः काला अरिष्टा सुरसा तथा[१]।
सुरभिर्विनता चैव ताम्रा क्रोधवशा इरा[२]।

---

१ अदितिर्दितिर्दनुर्दावा अरिष्टा नायुसस्तथेति ङ०, ट० च।
२ सुरभिर्विनता नाम्ना मुनिः क्रोधवशा इरेति ख०। क्रोधवशा इरेति ङ०।

कद्रुर्मुनिश्च धर्म्मज्ञः प्रजास्तासां निबोधत ॥५५॥
चारिष्णवेऽन्तरेऽतीते ये द्वादश पुरोगमाः ।
वैकुण्ठा नाम ते साध्या बभूवुश्चाक्षुषेऽन्तरे ॥५६॥
उपस्थितेऽन्तरे ह्यस्मिन् पुनर्वैवस्वतस्य च ।
आराधिता ह्यदित्या ते समेत्याहुः परस्परं ॥५७॥
एतामेव महाभागामदितिं संप्रविश्य वै ।
वैवस्वतेऽन्तरे ह्यस्मिन् योगादर्द्धेन चेतसः ॥५८॥
गच्छामः पुत्रतामस्यास्तन्नः श्रेयो भविष्यति ।
अदित्यास्तु प्रसूतानामादित्यत्वं भविष्यति ॥५९॥
एवमुक्ता तु ते सर्व्वे चाक्षुषस्याऽन्तरे मनोः ।
जज्ञिरे द्वादशादित्या मारीचात् कश्यपात्पुनः ॥६०॥
शतक्रतुश्च विष्णुश्च जज्ञाते पुनरेव हि ।
वैवस्वतेऽन्तरे ह्यस्मिन् नरनारायणौ सुरौ ॥६१॥
तेषामपि हि देवानां निधनोत्पत्तिरुच्यते ।
यथा सूर्यस्य लोकेऽस्मिन् उदयास्तमयावुभौ ।
प्रजापतेश्च विष्णोश्च भवस्य[१] च महात्मनः ॥६२॥
श्रेष्ठानुश्रविके यस्माच्छक्ताः शब्दादिलक्षणे ।
अष्टात्मकेऽणिमाद्ये च तस्मात्ते जज्ञिरे सुराः ॥६३॥
इत्येष विषये रागः सम्भूत्याः कारणं स्मृतं ।
ब्रह्मशापेन सम्भूता जयाः स्वायम्भुवे जिताः ॥६४॥
स्वारोचिषे वै तुषिताः सत्याश्चैवोत्तमे पुनः ।

१ च्यवस्येति ख० ।

तामसे हरयो देवा जातास्तारिष्णवे तु वै ।
वैकुण्ठाश्चाक्षुषे साध्या आदित्याः साम्प्रते पुनः ॥६५॥
धाताऽर्यमा च मित्रश्च वरुणोंऽशो भगस्तथा ।
इन्द्रो विवस्वान् पूषा च पर्जन्यो दशमः स्मृतः ॥६६॥
ततस्त्वष्टा ततो विष्णुरजघन्योऽजघन्यजः ।
इत्येते द्वादशादित्याः कश्यपस्य सुताः स्मृताः ॥६७॥
सुरभी कश्यपाद्रुद्रानेकादश विजज्ञिरे ।
महादेवप्रसादेन तपसा भाविता सती ॥६८॥
अङ्गारकं तथा सर्पं निर्ऋतिं सदसत्पतिं ।
अजैकपादहिर्बुध्न्यमूर्द्धकेतुं ज्वरं तथा ॥६९॥
भुवनश्चेश्वरं मृत्युं कपालश्चैव[१] विश्रुतं ।
देवानेकादशैतांस्तु रुद्रांस्त्रिभुवनेश्वरान् ।
तपसा तेन महता सुरभी तानजीजनत् ॥७०॥
ततो दुहितरावन्ये सुरभी द्वे व्यजायत ।
रोहिणी चैव रुद्राभा गान्धारी च[२] यशस्विनी ॥७१॥
रोहिण्यां जज्ञिरे कन्यास्चतस्रो लोकविश्रुताः ।
सुरूपा हंसकीला च[३] भद्रा कामदुघा तथा ।
सुषुवे कामदुघा तु सुरूपा तनयद्वयं ॥७२॥
हंसकीला नृपमृषीन्[४] भद्रायास्तु व्यजायत ।

---

१ कापालश्चैवेति ख० ।
२ गान्धर्व्वी चेति ङ० ।
३ हंसकाली चेति क० ।
४ पाठोऽयं न समीचीनः ।

विश्रुतास्तु महाभागा गन्धर्वा वाजिनः सुताः ॥७३॥
उच्चैःश्रवास्तदा जाताः खेचरास्ते मनोजवाः ।
श्वेताः श्येनाः पिशङ्गाश्च सारङ्गा हरिताजुनाः ।
रुद्रा देवोपवाह्यास्ते गन्धर्व्वयोनयो हयाः ॥७४॥
भूयो जज्ञे सुरभ्यास्तु श्रीमान् चन्द्राभसुप्रभः ।
स्रग्वी ककुद्मी द्युतिमानमृतालयसम्भवः ।
सुरभ्यनुमते दत्तो ध्वजो माहेश्वरस्तु सः ॥७५॥
इत्येते कश्यपसुता रुद्रादित्याः प्रकीर्त्तिताः ।
धर्मपुत्राः स्मृताः साध्या विश्वे च वसवस्तथा ॥७६॥
अरिष्टनेमिपत्नीनामपत्यानीह षोडश ।
बहुपुत्रस्य विदुषश्चतस्रो विद्युतः स्मृताः ।
प्रत्यङ्गिरसजाः श्रेष्ठा ऋचो ब्रह्मर्षिसत्कृताः ॥७७॥
कृशाश्वस्य तु देवर्षेर्देवप्रहरणाः स्मृताः ।
एते युगसहस्रान्ते जायन्ते पुनरेव हि ॥७८॥
सर्वे देवगणा विप्रास्त्रयस्त्रिंशत्तु छन्दजाः ।
एतेषामपि देवानां निरोधोत्पत्तिरुच्यते ॥७९॥
यथा सूर्यस्य लोकेऽस्मिन् उदयास्तमयावुभौ ।
एते देवनिकायास्ते सम्भवन्ति युगे युगे ॥८०॥
ऋषय ऊचुः । साध्याश्च वसवो विश्वे रुद्रादित्यास्तथैव च ।
अभिजात्या प्रभावैश्च कर्मभिश्चैव विश्रुताः ॥८१॥
प्रजापतेश्च विष्णोश्च भवस्य च महात्मनः ।
अन्तरं ज्ञातुमिच्छामो यश्च यस्माद् विशिष्यते ॥८२॥

यश्च यस्मात् प्रभवति यश्च यस्मिन् प्रतिष्ठितः ।
ज्यायान्यो मध्यमश्चैव कनीयान् यश्च तेषु वै ॥८३॥
प्रधानभूतो यस्तेषां गुणभूतश्च तेषु यः ।
कर्म्मभिश्चाभिजात्या च प्रभावेण च यो महान् ।
एतत् प्रब्रूहि नः सर्व्वं त्वं हि वेत्थ यथायथं ॥८४॥
सूत उवाच । अत्र वो वर्णयिष्येऽहमन्तरन्तेषु यत् स्मृतं ।
यद्ब्रह्मविष्णुरुद्राणां शृणुध्वं मे विवक्षतः ॥८५॥
राजसी तामसी चैव सात्त्विकी चैव ताः स्मृताः ।
तन्वः स्वयम्भुवः प्रोक्ताः काले काले भवन्ति याः ॥८६॥
एतासामन्तरं वक्तुं नैव शक्यं द्विजोत्तमाः ।
गुणवृद्धिनिबन्धत्वाद्विधानुग्रहबन्धतः ॥८७॥
प्रवृत्तिश्च निवृत्तिश्च गुणवृद्धिमिह द्विजाः ।
यथाशक्त्या प्रवक्ष्यामि तनूनां तन्निबोधत ॥८८॥
एका तु कुरुते तासां राजसी सर्व्वतः प्रजाः ।
एका चैवार्णवस्था तु सानुगृह्णाति सात्त्विकी ।
एका साक्षिपते काले तामसी ग्रसते प्रजाः ॥८९॥
रजसा तु समुद्रिक्तो ब्रह्मा सम्भवते यदा ।
पुरुषाख्या तदा तस्य सात्त्विकी विनिवर्त्तते ॥९०॥
यदा भवति कालात्मा उद्रेकात्तमसस्तु सः ।
ब्रह्माख्या सा तदा तस्य राजसी विनिवर्त्तते ॥९१॥
सत्त्वोद्रेकात्तु पुरुषो यदा भवति स प्रभुः ।
कालाख्या सा तदा तस्य पुनर्न भवतीति वै ॥९२॥

क्रमात्तस्य निवर्त्तन्ते रूपं नाम च कर्म च ।
त्रैलोक्ये वर्त्तमानस्य सर्वानुग्रहनिग्रहैः ॥८३॥
यदा भवति ब्रह्मा च तदा चान्तरमुच्यते ।
यदा च पुरुषो ब्रह्मा न चैव पुरुषस्तु सः ॥८४॥
मणिर्विभजते वर्णान् विचित्रान् स्फटिके यथा ।
वैमल्यादाश्रयवशात्तद्वर्णः स्यात्तदञ्जनः ॥८५॥
तदा गुणवशात्तस्य स्वयम्भोरनुरञ्जनं ।
एकत्वे च पृथक्त्वे च प्रोक्तमेतन्निदर्शनं ॥८६॥
एको भूत्वा यथा मेघः पृथक्त्वेनावतिष्ठते ।
रूपतो वर्णतश्चैव तथा गुणवशात्तु सः ॥८७॥
भवत्येको द्विधा चैव त्रिधा मूर्त्तिविनाशनात् ।
एको ब्रह्मान्तकश्चैव पुरुषश्चेति ते त्रयः ॥८८॥
एकस्यैताः स्मृतास्तिस्रस्तनवस्तु स्वयम्भुवः ।
ब्राह्मी च पौरुषी चैव अन्तकारी च ते त्रयः ॥८९॥
तत्र या राजसी तस्य तनुः सा वै प्रजाकरी ।
या तामसी तु कालाख्या प्रजाक्षयकरी तु सा ।
सात्त्विकी पौरुषी या तु सानुग्रहकरी स्मृता ॥१००॥
राजस्या ब्रह्मणोंऽशेन मरीचिः कश्यपोऽभवत् ।
तामसी चान्तकाद्या तु तदंशेनाभवद्भवः ॥१०१॥
सात्त्विकी पौरुषी या सा तस्याः शेषविष्णुरुच्यते ।
त्रैलोक्ये ताः स्मृतास्तिस्रस्तनवस्तु स्वयम्भुवः ॥१०२॥
नानाप्रयोजनार्थां हि कालोऽवस्थां करोति यः ।

ब्रह्मत्वेन प्रजाः सृष्ट्वा विष्णुत्वेनानुगृह्य च ।
वैष्णव्यानुगृहीतास्ता रौद्र्यानुग्रसते पुनः ॥१०३॥
एकः स्वयम्भुवः कालस्त्रिभिस्त्रीन् वै करोति सः ।
सृजते चानुगृह्णाति प्रजाः संहरते तथा ॥१०४॥
इत्येताः कथितास्तिस्रस्तनवस्तु स्वयम्भुवः ।
प्राजापत्या च रौद्री च वैष्णवी चैव ताः स्मृताः ॥१०५॥
एका तनुः स्मृता वेदे धर्मशास्त्रे पुरातने ।
साङ्ख्ययोगपरे वीरैः पृथक्त्वैकत्वदर्शिभिः ।
अभिजातप्रभावज्ञैर्ऋषिभिस्तत्त्वदर्शिभिः ॥१०६॥
एकत्वे च पृथक्त्वे च तासु भिन्नाः प्रजास्त्विह ।
इदं परमिदं नेति ब्रुवतो भिन्नदर्शनाः ॥१०७॥
ब्रह्माणं कारणं केचित् केचित् प्राहुः प्रजापतिं ।
केचिच्छिवं परत्वेन प्राहुर्विष्णुं तथाऽपरे ।
अविज्ञानेन संसक्ताः सक्ता रत्यादिचेतसा ॥१०८॥
तत्त्वं कालञ्च देशञ्च कार्य्याण्यावेक्ष्य तत्त्वतः ।
कारणञ्च स्मृता ह्येता नानार्थेष्विह देवताः ॥१०९॥
एकं निन्दति यस्तेषां सर्व्वानेव स निन्दति ।
एकं प्रशंसमानस्तु सर्वानेव प्रशंसति ।
एकं यो वेत्ति पुरुषं तमाहुर्ब्रह्मवादिनं ॥११०॥
अद्वेषस्तु सदा कार्य्यो देवतासु विजानता ।
न शक्यमीश्वरं ज्ञातुमैश्वर्येण व्यवस्थितं ॥१११॥
एकात्मा स त्रिधा भूत्वा सम्मोहयति यः प्रजाः ।

एतेषाञ्च त्रयाणान्तु विचरन्त्यन्तरं जनाः ॥११२॥
जिज्ञासन्तः परीचन्तः सक्ता रूपाविचेतसः ।
इदं परमिदं नेति वदन्ति भिन्नदर्शिनः ॥११३॥
यातुधानान् विशन्त्येताः पिशाचांश्चैव तान्नरान् ।
एकत्वेन पृथक्त्वेन स्वयम्भूर्व्यवतिष्ठते ॥११४॥
गुणमात्रात्मिकाभिस्तु तनुभिर्मोहयन् प्रजाः ।
तेष्वेकं [illegible]यजत्[illegible] स तदा यजते त्रयं ॥११५॥
तस्माद्[illegible]वा[illegible]यो ह्येते नैरन्तर्य्ये व्यवस्थिताः ।
तस्मात् [illegible]क्तमेकत्व[illegible] सङ्ख्यागतागतं ।
एकत्वं वा बहुत्वं वा तेषु को ज्ञातुमर्हति ॥११६॥
यस्मात् सृष्ट्वानुगृह्णीते ग्रसते चैव ते प्रजाः ।
गुणात्मकत्वात्त्रैकाल्ये तस्मादेकः स उच्यते ॥११७॥
रुद्रं ब्रह्माणमिन्द्रञ्च लोकपालान् ऋषीन् दनून् ।
देवं तमेकं बहुधा प्राहुर्नारायणं द्विजाः ॥११८॥
प्राजापत्या तनुर्या च तनुर्या चैव वैष्णवी ।
मन्वन्तरे च कल्पे च आवर्त्तन्ते पुनः पुनः ॥११९॥
तेजसा यशसा बुद्ध्या श्रुतेन च बलेन च ।
जायन्ते तत्समाश्चैव तानपीह निबोधत ॥१२०॥
राजस्या ब्राह्मणोऽंशेन मरीचिः कश्यपोऽभवत् ।
तामस्यास्तस्य चांशेन कालात्मा रुद्र उच्यते ।
सात्त्विक्या पुरुषांशेन यज्ञे विष्णुरभूत्तदा ॥१२१॥
त्रिषु कालेषु तस्यैता ब्रह्मणस्तनवोऽग्रजाः ।

कालो भूत्वा पुनस्त्वासौ रुद्रः संहरते प्रजाः ॥१२२॥
सम्प्राप्ते चैव कल्पान्ते सप्तरश्मिर्दिवाकरः ।
भूत्वा सम्वर्त्तकादित्यो लोकांस्त्रीन्स तदादहत् ॥१२३॥
विष्णुः प्रजानुगृह्णाति नामरूपविपर्यये ।
तस्यान्तस्यामवस्थायां तत्समुत्पत्तिकारणं ॥१२४॥
सत्त्वोद्रिक्ता तु या प्रोक्ता ब्रह्मणः पौरुषी तनुः ।
तस्यांशेन विजज्ञे स इह स्वायम्भुवेऽन्तरे ।
आकूत्यां मनसो देव उत्पन्नः प्रथमे वि ॥१२५॥
ततः पुनः स वै देवो प्राप्ते स्वारोचिषेऽन्तरे ।
तुषितायां समुत्पन्नो ह्यतीतस्तुषितैः सह ॥१२६॥
औत्तमे चान्तरे चैव तुषितस्तु विभुः स वै ।
वशवर्त्तिभिरुत्पन्नो वशवर्त्ती हरिः पुनः ॥१२७॥
सत्यायामभवत्सत्यः सत्यैः सह सुरोत्तमैः ।
तामसस्यान्तरे चापि सम्प्राप्ते पुनरेव हि ।
भार्य्यायां हरिभिः सार्द्धं हरिरेव बभूव ह ॥१२८॥
चारिष्णवेऽन्तरे चापि हरिर्देवः पुनस्तु सः ।
वैकुण्ठायामसौ जज्ञे ह्याभूतरजसैः सह ।
वैकुण्ठः स पुनर्देवः सम्प्राप्ते चाक्षुषेऽन्तरे ॥१२९॥
धर्मो नारायणः साध्यः साध्यैः सह सुरैरभूत् ।
स तु नारायणः साध्यः प्राप्ते वैवस्वतेऽन्तरे ॥१३०॥
मारीचात् कश्यपाद्विष्णुरदित्यां सम्बभूव ह ।
त्रिभिः क्रमैरिमान् लोकान् जित्वा विष्णुरुरुक्रमं ॥१३१॥

प्रत्यपादयदिन्द्राय देवेभ्यश्चैव स प्रभुः ।
इत्येतास्तनवस्तस्य व्यतीताः सप्त सप्तसु ।
मन्वन्तरेष्वतीतेषु याभिः संरक्षिताः प्रजाः ॥१२२॥
तस्माद्विष्टमिदं सर्वं वामनेनेह जायता ।
तस्मात्स वै स्मृतो विष्णुर्विशेर्धातोः प्रवेशनात् ॥१२३॥
इत्येते ब्रह्मणश्चैव वामनस्य महात्मनः ।
एकत्वञ्च पृथक्त्वञ्च विशिष्टत्वञ्च कीर्त्तितं ॥१२४॥
देवतानामिहांशेन जायन्ते यास्तु देवताः ।
तासान्तास्तेजसा बुद्ध्या श्रुतेन च बलेन च ।
जायन्ते तत्समाश्चैव ता वै तेषामनुग्रहात् ॥१२५॥
यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा ।
तत्तदेवावगच्छध्वं विष्णोस्तेजोंऽशसम्भवं ॥१२६॥
स एवं जायतेऽंशेन केचिदिच्छन्ति मानवाः ।
ततोऽपरे ब्रुवन्तीममन्योन्याऽंशेन जायते ॥१२७॥
एवं विवदमानास्ते दृष्ट्वा तान्वै ब्रुवन्ति ह ।
यस्मान्न विद्यते भेदो मनसश्चेतसश्च ह ।
तस्मादनुग्रहास्तेषां चेतज्ञास्ते भवन्त्युत ॥१२८॥
एकस्तु प्रभुशक्त्या वै बहुधा भवतीश्वरः ।
भूत्वा यस्माच्च बहुधा भवत्येकः पुनस्तु सः ॥१२९॥
तस्मात्तु मनसो भेदाज्जायन्ते तेजसश्च ह ।
मन्वन्तरेषु सर्वेषु प्रजाः स्थावरजङ्गमाः ।
सर्गादौ सकृदुत्पन्नास्तिष्ठन्तीह प्रसंशया ॥१४०॥

प्राप्ते प्राप्ते तु कल्पान्ते रुद्रः संहरति प्रजाः ।
जायन्ते मोहयन्तोऽन्यानीश्वरा योगमायया ॥१४१॥
ऐश्वर्य्येण चरन्तस्ते मोहयन्ति[१] ह्यनीश्वराः ।
तस्माद्दोषप्रचारेषु युक्तायुक्तं न विद्यते ॥१४२॥
भूतापवादिनो दुष्टा मध्यस्था भूतभाविनः[२] ।
भूतापवादिनः शक्तास्त्रयो वेदाः प्रवादिनां ॥१४३॥
दृढपूर्वश्रुतत्वाच्च प्रवादाच्चैव लौकिकात् ।
चतुर्भिः कारणैरेभिर्यथातत्त्वं न विन्दति ॥१४४॥
पूर्वमर्थान्तरे न्यस्ताः[३] कालान्तरगता अपि ।
तेनान्यात् सन्तमप्यर्थं द्वेषन्न प्रतिपद्यते ॥१४५॥
दर्शनानां द्रव्यभूतो यो गुणभूतस्तु तेषु यः ।
कर्म्मणां मनसां कर्त्ता अभिजात्या च यो महान् ।
श्रुतज्ञैः कारणैरेतैश्चतुर्भिः परिकीर्त्त्यते ॥१४६॥
अशक्तरुष्टो जानाति देवताः प्रविभागशः ।
इमौ चोदाहरन्त्यत्र श्लोकौ योगेश्वरं प्रति ॥१४७॥
आत्मनः प्रतिरूपाणि परेषाञ्च सहस्रशः ।
कुर्य्याद्योगबलम्प्राप्य तैश्च सर्वैः महाचरेत् ॥१४८॥
प्राप्नुयाद्विषयांश्चैव तथैवोग्रतपश्चरन् ।
संहरेच्च पुनः सर्वान् सूर्यतेजो गुणानिव ॥१४९॥

इति श्रीमहापुराणे वायुप्रोक्ते कश्यपीयप्रजासर्गो नाम पञ्चमोऽध्यायः ।

---

१ मादयन्तीति ङ० ।
२ भूतिभाविन इति ख० ।
३ पूर्व्वमन्वन्तरे न्यस्ता इति ख० ।

# अथ षष्ठोऽध्यायः ।

कश्यपीयप्रजासर्गः ।

ऋषय ऊचुः । एतच्छ्रुत्वा वचस्तस्य नैमिषेयास्तपस्विनः ।
पप्रच्छुर्ऋषयः श्रेष्ठं वचनस्य यथाक्रमं ॥१॥
सप्तस्विह कथं देवा जाता मन्वन्तरेष्विह ।
इन्द्रविष्णुप्रधानास्ते आदित्यास्तु महौजसः ।
एतत् प्रब्रूहि नः सर्वं विस्तराद्रोमहर्षण ॥२॥
एवमुक्तस्तदा सूतो विनयी ब्रह्मवादिभिः ।
उवाच वदतां श्रेष्ठो यथा पृष्टो महर्षिभिः ॥३॥
सूत उवाच । ब्रह्मणो वै मुखात् सृष्टा यथा देवाः प्रजेप्सया ।
सर्वे मन्त्रशरीरास्ते स्मृता मन्वन्तरेष्विह ॥४॥
दर्शश्च पौर्णमासश्च वृहद्यच्च रथन्तरं ।
आकूतः प्रथमस्तेषां ततस्त्वाकूतिरेव च ॥५॥
वित्तिश्चैव सुवित्तिश्च आकूतिः कूतिरेव च
अधीष्टस्तु ततो ज्ञेयः अधीतिश्चैव तत्त्वतः ।
विज्ञातिश्चैव विज्ञातो मानवो ये च द्वादश ॥६॥
ज्ञेयो द्वादशपुत्रश्च यश्चाब्देन(१) समाजयेत् ।
तं दृष्ट्वा चाब्रवीद्ब्रह्मा जया देवानसूयत ॥७॥
दाराग्निहोत्रसंयोगे मिथ्यामारभतेति च ।
एवमुक्त्वा तु तं ब्रह्मा तत्रैवान्तरधीयत ॥८॥

---

१ पश्चाब्देनेति ख० ।

ततस्ते नाभ्यनन्दन्त तद्वाक्यं परमेष्ठिनः ।
सत्यस्येह तु कर्माणि वाङ्मनःकर्मजानि तु ॥९॥
य एवाप्यवतिष्ठन्ते दोषं दृष्ट्वा तु कर्मसु ।
क्षयातिशययुक्तन्तु ते दृष्ट्वा कर्मणां फलं ॥१०॥
जुगुप्सन्तः प्रसूतिञ्च निस्तन्द्रा निर्ममाभवन् ।
अजस्रं काङ्क्षमाणास्ते विरक्ता दोषदर्शिनः ॥११॥
अर्थं धर्मञ्च कामञ्च हित्वा ते वै व्यवस्थिताः ।
पौरुषं ज्ञानमास्थाय तेजः संक्षिप्य चास्थिताः ॥१२॥
तेषाञ्च तमभिप्रायं ज्ञात्वा[१] ब्रह्मा चुकोप ह ।
तानब्रवीत्तदा ब्रह्मा निरुत्साहान् सुरानथ ॥१३॥
प्रजार्थमिह यूयं वै प्रजास्रष्टाऽस्मि नान्यथा ।
प्रसूयध्वं जयध्वञ्चेत्युक्तवानस्मि यत् पुरा ॥१४॥
यस्माद्वाक्यमनादृत्य मम वैराग्यमास्थिताः ।
जुगुप्समानाः स्वं जन्म सन्ततिं नाभिनन्दथ ॥१५॥
कर्मणाञ्च कृतो न्यासो ह्यमृतत्वाभिकाङ्क्षया ।
तस्माद्यूयमनादृत्य सप्तकल्पस्तु यास्यथ ॥१६॥
ते शप्ता ब्रह्मणा देवा जयास्तं वै प्रसादयन्[२] ।
क्षमास्माकं महादेव यदज्ञानात् कृतं विभो ॥१७॥
प्रणिपत्य सानुनयं ब्रह्मा तानब्रवीत् पुनः ।
लोके मयाननुज्ञातः कः स्वातन्त्र्यमिहार्हसि ॥१८॥

---

१ दृष्ट्वेति ख० ।
२ एकवचनान्तपाठो न समीचीनः ।

मया परिगतं सर्वं कथमच्छन्दतो मम ।
प्रतिपत्स्यन्ति भूतानि शुभं वा यदि वाऽशुभं ॥१९॥
लोके यदस्ति किञ्चिद्वै सत्त्वासत्त्वव्यवस्थितं ।
बुद्ध्यात्मना मया व्याप्तं को मां लोकेऽतिसन्धयेत् ॥२०॥
भूतानान्तर्कितं यच्च यच्चाप्येषां विधारितं ।
तथा विचारितं यच्च तत्सर्वं विदितं मम ॥२१॥
मया स्थितमिदं सर्वं जगत्स्थावरजङ्गमं ।
आशामयेन तत्त्वेन कथं च्छेत्तुमिहोत्सहे ॥२२॥
यस्माच्चाहं विवृत्तो वै सर्गार्थमिह नान्यथा ।
इह कर्म्माण्यनारभ्य को मे च्छन्दाद्विमोच्यते ॥२३॥
परिभाष्य ततो देवान् जयान् वै नष्टचेतसः ।
अब्रवीत्स पुनस्तान् वै धृतान् दण्डे प्रजापतिः ॥२४॥
यस्मान्ममाभिसन्धाय सन्न्यासो वः कृतः पुरा ।
यस्मात्स विफलोऽयत्नो ह्यपारस्त्वेष यः कृतः ।
भविताऽतः सुखोदर्को देवा भावेषु जायतां ॥२५॥
आत्मच्छन्देन वो जन्म भविष्यति सुरोत्तमाः ।
मन्वन्तरेषु संमूढाः षट्सु सर्वे गमिष्यथ ॥२६॥
वैवस्वतान्तेषु सुरास्तथा स्वायम्भुवादिषु ।
तान् ज्ञात्वा ब्रह्मणा तत्र श्लोको गीतः पुरातनः ॥२७॥
त्रयीं विद्यां ब्रह्मचर्य्यं प्रसूतिं श्राद्धमेव च ।
यज्ञञ्चैव तु दानञ्च एषामेव तु कुर्वतां ।
स हि स्म विरजा भूत्वा वसतेऽन्यप्रसंश्रया ॥२८॥

स एवं श्लोकं दृष्ट्वा तु जया देवानथाब्रवीत् ।
वैवस्वतेऽन्तरेऽतीते मत्समीपमिहेष्यथ ॥२९॥
ततो यूयं मया सार्द्धं सिद्धिं प्राप्स्यथ शाश्वतीं ।
एवमुक्त्वा तु तान् ब्रह्मा तत्रैवान्तरधीयत ॥३०॥
ततो देवास्तिरोभूते ईश्वरे ह्यकुतोभयं ।
प्रपन्ना अणिमाद्यैश्च युक्ता योगबलान्विताः ॥३१॥
ततस्तेषान्तु यास्तन्वस्ताऽभवन् द्वादश ह्रदाः ।
जया इति समाख्याताः जातास्तोदधिसन्निभाः ॥३२॥
ततः स्वायम्भुवे तस्मिन् सर्गे ते जज्ञिरे सुराः ।
अजितायां रुचेः पुत्रा अजिता द्वादशात्मकाः ॥३३॥
विधिश्च मुनयश्चैव क्षेमो नन्दोऽव्ययस्तथा ।
प्राणोऽपानः सुधामा च क्रतुशक्तिव्यवस्थिताः ।
इत्येते मानसाः सर्व्वे अजिता द्वादश स्मृताः ॥३४॥
ते च यज्ञे सुरैः सार्द्धं यज्ञभाजस्तदा स्मृताः ।
स्वायम्भुवेऽन्तरे पूर्वं ततः स्वारोचिषे पुनः ।
तुषितायां समुत्पन्नाः पुनः पुत्राः स्वरोचिषः ॥३५॥
तुषिता नाम ते ह्यासन् प्राणाख्या याज्ञिकाः सुराः ।
पुनस्ते तुषिता देवा उत्तमे ऽन्तरे स्वयं ॥३६॥
उत्तमस्य तु ते पुत्राः सत्यायां जज्ञिरे शुभाः ।
ततः सत्याः स्मृता देवा उत्तमे चान्तरे तदा ॥३७॥
अभजन् यज्ञभाजस्ते तृतीये द्वापरान्तरे ।
ते तु सत्याः पुनर्द्देवाः सम्प्राप्ते तामसेऽन्तरे ॥३८॥

हर्षा ये तमसः पुत्रा जज्ञिरे द्वादशैव तु ।
हरयो नाम ते देवा यज्ञभाजस्तथाऽभवन् ॥ ३९ ॥
ततस्ते हरयो देवाः प्राप्ते चारिष्णवेऽन्तरे ।
वैकुण्ठायां ततस्ते वै चरिष्णोर्जज्ञिरे सुराः ।
वैकुण्ठा नाम ते देवाः पञ्चमस्यान्तरे मनोः ॥ ४० ॥
ततस्ते वै पुनर्द्देवा वैकुण्ठाः प्राप्य चाक्षुषं ।
साध्यायां द्वादश सुता जज्ञिरे धर्म्मसूनवः ॥ ४१ ॥
ततस्ते वै पुनः साध्याः संक्षीणे चाक्षुषेऽन्तरे ।
उपस्थिते मनोः सर्गे पुनर्वैवस्वतस्य ह ॥ ४२ ॥
आद्ये त्रेतायुगमुखे प्राप्ते वैवस्वतस्य तु ।
अंशेन साध्यास्तेऽदित्यां मारीचात् कश्यपात् पुनः ॥ ४३ ॥
जज्ञिरे द्वादशादित्या वर्त्तमानेऽन्तरे पुनः ।
यदा त्वेते समुत्पन्नाश्चाक्षुषस्याऽन्तरे मनोः ॥ ४४ ॥
ततः स्वायम्भुवे साध्या जज्ञिरे द्वादशामराः ।
एवमाद्या जयास्ते वै शापात्सम्भवंस्तदा ॥ ४५ ॥
य इमां सप्तसम्भूतिं देवानां देवशासनात् ।
पठेद्यः श्रद्धया युक्तः प्रत्यवायं न गच्छति ॥ ४६ ॥
इत्येते भूतयः सप्त जयानां सप्तलक्षणाः ।
परिक्रान्ता मया चाद्य किम्भूयः श्रोतुमिच्छथ ॥ ४७ ॥
ऋषय ऊचुः । दैत्यानां दानवानाञ्च गन्धर्व्वोरगरक्षसां ।
सर्व्वभूतपिशाचानां पशूनां पक्षिवीरुधां ।
उत्पत्तिं निधनञ्चैव विस्तरात् कथयस्व नः ॥ ४८ ॥

एवमुक्तस्तदा सूत उवाच ऋषिसत्तमान्।
दितेः पुत्रद्वयं जज्ञे कश्यपादिति नः श्रुतं ॥४९॥
कश्यपस्यात्मजौ तौ वै सर्वेभ्यः पूर्वजौ स्मृतौ।
सूत्येऽहन्यतिरात्रस्य कश्यपस्याश्वमेधिके ॥५०॥
हिरण्यकशिपुर्नाम प्रथमं ऋत्विगासनं।
दित्या गर्भाद्विनिःसृत्य तत्रासीनोऽत्रसंसदि।
हिरण्यकशिपुस्तस्मात् कर्मणा तेन सः स्मृतः ॥५१॥
ऋषय ऊचुः। हिरण्यकशिपोर्नाम जन्म चैव महात्मनः।
प्रभावश्चैव दैत्यस्य विस्तराद्ब्रूहि नः प्रभो ॥५२॥
सूत उवाच। कश्यपस्याश्वमेधोऽभूत् पुण्यो वै पुष्करे पुरा।
ऋषिभिर्देवताभिश्च गन्धर्वैरुपशोभितः ॥५३॥
उत्कृष्टेनैव विधिना आख्यानादौ यथाविधिः।
आसनान्युपक्लृप्तानि काञ्चनानि तु पञ्च वै ॥५४॥
कुशपूतानि त्रीण्यत्र कूर्चफलकमेव च[१]।
मुख्यर्त्विजश्च चत्वारस्तेषान्तान्युपकल्पयेत् ॥५५॥
शुभं तत्रासनं यत्तु होतुरर्थे प्रकल्पितं।
हिरण्मयं तथा दिव्यं दिव्यास्तरणसंस्तृतं ॥५६॥
अन्तर्वत्नी दितिश्चैव पत्नीत्वं समुपागता।
दश वर्षसहस्राणि गर्भस्तस्या अवर्त्तत ॥५७॥
स तु गर्भाद्विनिःसृत्य मातुर्वै उदरात्तदा।
उपक्लृप्तासनं यत्तु होतुरर्थे हिरण्मयं।

---

१ पाठोऽयं न समीचीनः।

निषसाद सगर्भोऽत्र तत्रासीनः शशंस च ॥५८॥
आख्यानपञ्चमान् वेदान्[1] महर्षिः काश्यपो यथा ।
तं दृष्ट्वा मुनयस्तस्य नामाकुर्वंस्तु तद्विधं ॥५९॥
हिरण्यकशिपुस्तस्मात् कर्म्मणा तेन विश्रुतः ।
हिरण्याक्षोऽनुजस्तस्य सिंहिका तस्य चानुजा ।
राहोः सा जननी देवी विप्रचित्तेः परिग्रहात् ॥६०॥
हिरण्यकशिपुर्दैत्यश्चचार परमं तपः ।
शतं वर्षसहस्राणां निराहारो ह्यधःशिराः ॥६१॥
तं ब्रह्मा छन्दयामास दैत्यं तुष्टो वरेण तु ।
सर्व्वामरत्वं विप्रेभ्यः सर्व्वभूतेभ्य एव च ।
योगाद्देवान्विनिर्जित्य सर्व्वदेवत्वमास्थितः ॥६२॥
दानवाश्चासुराश्चैव देवाः समा भवन्तु वै ।
मारुतैर्यन्महैश्वर्य्यमेष मे दीयतां वरः ॥६३॥
एवमुक्तोऽथ ब्रह्मा तु तस्मै दत्त्वा यथेप्सितं ।
दत्त्वा तस्मै वरान् दिव्यान् तत्रैवान्तरधीयत ।
हिरण्यकशिपुर्दैत्यः श्लोकैर्गीतः पुरातनैः ॥६४॥
राजा हिरण्यकशिपुर्यां यामाशां निषेवते ।
तस्यास्तस्या दिशो देवा नमश्चक्रुर्महर्षिभिः ॥६५॥
एवं प्रभावो दैत्येन्द्रः[2] हिरण्यकशिपुर्द्विजाः ।

---

१ आख्यानं पञ्चमान् वेदानिति ख०, ग० च ।
२ दैत्यस्त्विति ङ० ।

तत्रासीन्नरसिंहः स विष्णुर्मृत्युः पुरा किल ।
नखैस्तु तेन निर्भिन्नस्ततः शुद्धा नखाः स्मृताः ॥६६॥
हिरण्याक्षसुताः पञ्च विक्रान्ताः सुमहाबलाः ।
उत्कुरः शकुनिश्चैव कालनाभस्तथैव च ॥६७॥
महानाभश्च विक्रान्तो भूतसन्तापनस्तथा ।
हिरण्याक्षसुता ह्येते देवैरपि दुरासदाः ॥६८॥
तेषां पुत्राश्च पौत्राश्च वाडेयः[१] संगणः स्मृतः ।
शतन्नानि सहस्राणि निहतास्तारकामये ॥६९॥
हिरण्यकशिपोः पुत्राश्चत्वारस्तु महाबलाः ।
प्रह्लादः पूर्व्वजस्तेषामनुह्लादस्तथैव च ।
संह्लादश्च ह्रदश्चैव ह्रदपुत्रान्निबोधत ॥७०॥
ह्रादो निसुन्दश्च तथा ह्रदपुत्रौ बभूवतुः ।
सुन्दोपसुन्दौ विक्रान्तौ निसुन्दतनयावुभौ ॥७१॥
ब्रह्मघ्नस्तु महावीर्य्यो मूकस्तु ह्रददायिनः[२] ।
मारीचः सुन्दपुत्रस्तु ताडकामुपपद्यते ॥७२॥
ताड़का निहता साऽथ राघवेण बलीयसा ।
मूको विनिहतश्चापि किराते सव्यसाचिना ॥७३॥
उत्पन्ना महता चैव तपसा भाविताः स्वयं ।
तिस्रः कोट्यस्तु तेषां वै मणिवर्त्तनिवासिनां ।

---

१ वालेय इति ख० ।
२ मूकयद्भस्तातताचिन इति ग० ।

अवध्या देवतानां वै निहताः सव्यसाचिना ॥७४॥
अनुह्रादसुतो वायुः शिनीवाली तथैव च ।
तेषान्तु शतसाहस्रो गणो हालाहलः स्मृतः ॥७५॥
वैरोचनस्तु प्राह्लादिः पञ्च तस्यात्मजाः स्मृताः ।
गवेष्ठी कालनेमिश्च जम्भो वाष्कल एव च[१] ।
शम्भुस्तु अनुजस्तेषां स्मृताः प्राह्लादिसूनवः ॥७६॥
यथाप्रधानं वक्ष्यामि तेषां पुत्रान् दुरासदान् ।
शुम्भश्चैव निशुम्भश्च विष्वक्सेनो महौजसः ॥७७॥
गवेष्ठिनः सुता ह्येते जम्भस्य शतदुन्दुभिः ।
तथा दक्षश्च खण्डश्च[२] त्रयस्तु जम्भसूनवः ॥७८॥
विरोधश्च मनुश्चैव वृक्षायुः[३] कुशलीमुखः ।
वाष्कलस्य सुता ह्येते कालनेमिसुतान् शृणु ॥७९॥
ब्रह्मजित् क्षत्रजिच्चैव देवान्तकनरान्तकौ ।
कालनेमिसुता ह्येते शम्भोस्तु शृणुत प्रजाः ॥८०॥
धनुको ह्यसिलोमा च नावलश्च सगोमुखः ।
गवाक्षश्चैव गोमांश्च शम्भोः पुत्राः प्रकीर्त्तिताः ॥८१॥
विरोचनस्य पुत्रस्तु बलिरेकः प्रतापवान् ।
बलेः पुत्रशतं जज्ञे राजानः सर्व्वे एव ते ॥८२॥

१ जम्भः पुष्कल एव चेति ग० ।
२ सुवाहश्चेति ङ० ।
३ वृकायुरिति ङ० ।

तेषां प्रधानाश्चत्वारो विक्रान्ताः सुमहाबलाः ।
सहस्रबाहुर्ज्येष्ठस्तु बाणो द्रविणसम्मतः ।
कुम्भनाभो गर्द्दभाचः कुक्षिरित्येवमादयः ॥८३॥
शकुनी पूतना चैव कन्ये द्वे तु बलेः सुते ।
बलेः पुत्राश्च पौत्राश्च शतशोऽथ सहस्रशः ॥८४॥
बलिर्या नामविख्यातो गणो विक्रान्तपौरुषः ।
बाणस्य चन्द्रमनसो लौहित्यमुपपद्यते ॥८५॥
दितिर्विनष्टपुत्रा वै तोषयामास कश्यपं ।
स कश्यपः प्रसन्नात्मा सम्यगाराधितस्तया ।
वरेण छन्दयामास सा च वव्रे वरन्ततः ॥८६॥
स तु तस्यै वरं प्रादात् प्रार्थितं भगवान् प्रभुः ।
किमिच्छसि मयि शुभ्रे मारीचस्तामभाषत ॥८७॥
मारीचं कश्यपं तुष्टं भर्त्तारं प्राञ्जलिस्तया ।
हतपुत्रास्मि भगवन् आदित्यैस्तव सूनुभिः ॥८८॥
शक्रहन्तारमिच्छेयं पुत्रं दीर्घतपोऽन्वितं ।
अहं तपश्चरिष्यामि गर्भमाधातुमर्हसि ॥८९॥
तस्यास्तद्वचनं श्रुत्वा मारीचः कश्यपस्तया ।
प्रत्युवाच महातेजा दितिं परमदुःखितां ॥९०॥
एवं भवतु भद्रन्ते शुचिर्भव तपोधने(१) ।
जनयिष्यति सत्पुत्रं शक्रहन्तारमाहवे ॥९१॥

---

१ तपोनिधे इति ख० ।

पूर्णे वर्षशतं तावत् शुचिर्यदि भविष्यसि ।
पुत्रं त्रिलोकप्रवरमथ त्वं जनयिष्यसि ॥९२॥
एवमुक्ता महातेजास्तया समवसत् प्रभुः ।
तामालिङ्ग्य त्रिभुवनं जगाम भगवानृषिः ॥९३॥
गते भर्त्तरि सा देवी दितिः परमहर्षिता ।
कुशलं वनमासाद्य तपस्तेपे सुदारुणं ॥९४॥
तपस्तस्यान्तु कुर्वन्त्यां परिचर्याञ्चकार ह ।
सहस्राक्षः सुरश्रेष्ठः परया गुणसम्पदा ॥९५॥
अग्निं समित्कुशं काष्ठं फलं मूलं तथैव च ।
न्यवेदयत् सहस्राक्षो यच्चान्यदपि किञ्चन ॥९६॥
गात्रसंवाहनैश्चैव श्रमापनयनैस्तथा ।
शक्रः सर्व्वेषु लोकेषु दितिं परिचचार ह ।
एवमाराधिता शक्रमुवाचाथ दितिस्तथा ॥९७॥
दितिरुवाच ॥ प्रीता तेऽहं सुरश्रेष्ठ दशवर्षाणि पुत्रक ।
अवशिष्टानि भद्रन्ते भ्रातरं द्रक्ष्यसे ततः ॥९८॥
जयलिप्सां समाधास्ये लब्ध्वाहं तादृशं सुतं ।
त्रैलोक्यविजयं पुत्र प्राप्स्यामि सह तेन वै ॥९९॥
एवमुक्ता दितिः शक्रमध्यं प्राप्ते दिवाकरे ।
निद्रयापहृता देवी जान्वोः कृत्वा शिरस्तदा ॥१००॥
दृष्ट्वा तामशुचिं शक्रः पादयोर्गतमूर्द्धजां ।
तस्यास्तदन्तरं लब्ध्वा जहास च मुमोद च ॥१०१॥
तस्याः शरीरं विवृतं विवेशाथ पुरन्दरः ।

प्रविश्य चामितं दृष्ट्वा गर्भमिन्द्रो महौजसं ।
अभिनत्स प्रधानन्तु कुलिशेन महायशाः ॥१०२॥
भिद्यमानस्तदा गर्भो वज्रेण शतपर्वणा ।
रुरोद सस्वरं भीमं वेपमानः पुनः पुनः ।
मारोदीरिति तं गर्भं शक्रः पुनरभाषत ॥१०३॥
तं गर्भं सप्तधाभूतं ह्येकैकं सप्तधा पुनः ।
कुलिशेन विभेदेन्द्रस्ततो दितिरबुध्यत ॥१०४॥
न हन्तव्यो न हन्तव्य इत्येवं दितिरब्रवीत् ।
निष्पपातोदराद्वज्री मातुर्वचनगौरवात् ।
प्राञ्जलिर्वज्रसहितो दितिं शक्रोऽभ्यभाषत ॥१०५॥
अशुचिर्देवि सुप्तासि पादयोर्गतमूर्द्धजा ।
तदन्तरमहं लब्ध्वा शक्रहन्तारमाहवे ।
भिन्नवान् गर्भमेतन्ते(१) बहुधा हन्तुमर्हसि ॥१०६॥
तस्मिंस्तु विफले गर्भे दितिः परमदुःखिता ।
सहस्राक्षं ततो वाक्यं मातुर्नयनमब्रवीत् ॥१०७॥
ममापराधाद्गर्भोऽयं यदि ते विफलीकृतः ।
नापराधोऽस्ति देवेश ऋषिपुत्र महाबल ॥१०८॥
शत्रोर्वधे न दोषोऽस्ति तेन त्वां न शपामि भो ।
प्रियन्तु कर्त्तुमिच्छामि श्रेयो गर्भस्य मे कुरु ॥१०९॥
भवन्तु मम पुत्राणां सप्त स्थानानि वै दिवि ।

---

१ भिन्नवानस्मि भीतस्ते इति ख०, ङ० च ।

वातस्कन्धानिमान् सप्त चरन्तु मम पुत्रकाः ।
मरुतश्चेति विख्याता गणास्ते सप्त सप्तकाः ॥११०॥
पृथिव्यां प्रथमस्कन्धो द्वितीयश्चैव भास्करे ।
सोमे तृतीयो विज्ञेयश्चतुर्थो ज्योतिषां गणे ॥१११॥
ग्रहेषु पञ्चमश्चैव षष्ठः सप्तर्षिमण्डले ।
ध्रुवे तु सप्तमश्चैव वातस्कन्धः परस्तु सः ॥११२॥
तान्येते विचरन्त्वद्य काले काले ममात्मजाः ।
वातस्कन्धानिमान् भूत्वा चरन्तु मम पुत्रकाः ॥११३॥
पृथिव्यां प्रथमस्कन्धो अमेघेभ्यो य आवहः ।
चरन्तु मम पुत्रास्ते प्रथमश्चरताङ्गणः ॥११४॥
द्वितीयश्चापि मेघेभ्य आसूर्य्यात् प्रवहस्तु यः ।
वातस्कन्धं द्वितीयन्तु द्वितीयश्चरताङ्गणः ॥११५॥
सूर्य्योर्द्धन्तु ततः सोमादुद्वहो यस्तु वै स्मृतः ।
वातस्कन्धन्तु तं प्राज्ञस्तृतीयश्चरताङ्गणः ॥११६॥
सोमादूर्द्धं तथर्क्षेभ्यश्चतुर्थः सुवहस्तु यः ।
चतुर्थो मम पुत्राणां गणस्तु चरतां विभो ॥११७॥
ऋक्षेभ्यश्च तथैवोर्द्धमाग्रहाद्विवहस्तु यः ।
पञ्चमं पञ्चमः सौम्यः स्कन्धस्तु चरताङ्गणः ॥११८॥
ऊर्द्धं ग्रहादृषिभ्यस्तु षष्ठो यो वै परावहः ।
चरन्तु मम पुत्रास्तु तत्र षष्ठे गणे तु ये ॥११९॥
सप्तर्षयस्तथैवोर्द्धमाध्रुवात् सप्तमस्तु यः ।
वातस्कन्धः परिवहस्तत्र तिष्ठन्तु मे सुताः ॥१२०॥

एतत् सर्व्वं चरन्त्वेते काले काले ममात्मजाः ।
तत्र तेन च नाम्ना वै भवन्तु मरुतस्त्विमे ॥१२१॥
ततस्तेषान्तु नामानि मातापुत्रौ प्रचक्रतुः ।
तत्कृते कर्मभिश्चैव मरुतो वै पृथक् पृथक् ॥१२२॥
सत्त्वज्योतिस्तथादित्यः सत्यज्योतिस्तथाऽपरः ।
तिर्यग्ज्योतिश्च सज्योतिर्ज्योतिश्चानपरस्तथा ॥१२३॥
प्रथमस्तु गणः प्रोक्तो द्वितीयं मे निबोधत ।
ऋतजित्सत्यजिच्चैव सुषेणः सेनजित्तथा ॥१२४॥
सत्यमित्रोऽभिमित्रश्च हरिमित्रस्तथाऽपरः ।
गण एष द्वितीयस्तु तृतीयं मे निबोधत ॥१२५॥
ऋतः सत्यो × × × ×[1] ध्रुवो धर्त्ता विधारयः ।
ध्वान्तश्चैव धुनिश्चैव ह्युग्रो भीमस्तथैव च ।
अभियुः साक्षिपश्चैवमाह्वयश्च गणः स्मृतः ॥१२६॥
ईदृक् चैव तथान्यादृक् यादृक् च प्रतिकृत्तथा ।
ऋत्तथा समितिश्चैव संरम्भश्च तथा गणः ॥१२७॥
ईदृक् च पुरुषश्चैव अन्यादृक्षाश्च चेतसः ।
समितासमितदृक्षाश्च प्रतिदृक्षाश्च वै गणाः ॥१२८॥
एते ह्येकोनपञ्चाशन्मरुतो[2] नामतः स्मृताः ।

---

१ अत्राक्षरचतुष्टयमादर्शपुस्तकेषु पतितं ।

२ "एते ह्येकोनपञ्चाशत्" इत्यादिलिखनस्वरसेन एतत्पूर्व्वमेकोनपञ्चाशन्नामप्राप्तिरावश्यकी परन्तु आदर्शपुस्तके तत्समुदायस्याप्राप्तत्वात् पूर्व्वं कतिपयश्लोकाः पतिताः प्रतिभान्ति ।

प्रसंख्यातास्तथा ताभ्यां दित्या चेन्द्रेण चैव हि ॥१२९॥
श्रुत्वा तेषान्तु नामानि दितिरिन्द्रमुवाच ह ।
वातस्कन्धं चरन्त्वेते मम पुत्राश्च पुत्रक ।
विचरन्तु च भद्रन्ते देवैः सह ममात्मजाः ॥१३०॥
तस्यास्तद्वचनं श्रुत्वा सहस्राक्षः पुरन्दरः ।
उवाच प्राञ्जलिर्भूत्वा मातुर्भवतु तत्तथा ॥१३१॥
सर्व्वमेतद्यथोक्तन्ते भविष्यति न संशयः ।
देवभूता महात्मानः कुमारा देवसम्मताः ।
देवैः सह भविष्यन्ति यज्ञभाजस्तथात्मजाः ॥१३२॥
तस्मात्ते मरुतो देवाः सर्व्वे चेन्द्रानुजामराः ।
विज्ञेयास्त्वामराः सर्व्वे दितिपुत्रास्तपस्विनः ॥१३३॥
एवन्तौ निश्चयं ज्ञात्वा मातापुत्रौ तपोधनौ ।
जग्मतुस्त्रिदिवं हृष्टौ शक्रोपि त्रिदिवं गतः ॥१३४॥
मरुतां हि शुभं जन्म शृणुयाद्यः पठेत वा ।
नावृष्टिभयमाप्नोति बह्वायुश्च भवेत्ततः ॥१३५॥

इति श्रीमहापुराणे वायुप्रोक्ते कश्यपीयप्रजासर्गो नाम

षष्ठोऽध्यायः ॥

---

# अथ सप्तमोऽध्यायः ।

## काश्यपीयप्रजासर्गः ।

सूत उवाच । अत ऊर्द्धं प्रवक्ष्यामि दनुपुत्रान्निबोधत ।
अभवन् दनुपुत्रास्तु वंशे ख्याता महासुराः ॥१॥
विप्रचित्तिप्रधानास्ते शतं तीव्रपराक्रमाः ।
सर्वे लब्धवराश्चैव सुतप्ततपसस्तथा ॥२॥
सत्यसन्धाः पराक्रान्ताः क्रूरा मायाविनश्च ते ।
महाबला अयज्वानो ह्यब्रह्मण्याश्च दानवाः ।
कीर्त्त्यमानान्मया सर्वान् प्राधान्येन निबोधत ॥३॥
द्विमूर्द्धा(१) शङ्कुवर्णश्च तथा शङ्कुनिरामयः ॥
शङ्कुकर्णो महाविश्वः(२) गवेष्ठिर्दुन्दुभिस्तथा ॥४॥
अजामुखोऽथ भगवान् शिलो वामनसस्तथा ।
मरीचिरत्तकश्चैव(३) महागार्ग्योऽङ्गिरावृतः(४) ॥५॥
विद्राभ्यश्च(५) सुकेतुश्च सुवीर्य्यः सुहृदस्तथा ।

---

१ त्रिमूर्द्धेति ख०, ग० घ ।
२ महाविघ्न इति ख० ।
३ मरीचिबन्धकश्चैवेति ख० ।
४ महात्मा ब्वङ्गिरावृत इति ख० ।
५ क्वचकेतुरिति ख० ।

इन्द्रजिद्विश्वजिच्चैव तथा सुरविमर्द्दनः ॥६॥
एकचक्रः सुबाहुश्च तारकश्च महाबलः ।
वैश्वानरः पुलोमा च प्रवीणोऽथ महाशिराः ॥७॥
स्वर्भानुर्वृषपर्वा च मुण्डकश्च महासुरः ।
धृतराष्ट्रश्च सूर्य्यश्च चन्द्र इन्द्रश्च तापिनः ॥८॥
सूक्ष्मश्चैव निचन्द्रश्च ऊर्णनाभो महागिरिः ।
असिलोमा सुकेशश्च सदश्च बलको दश ॥९॥
तथा गगनमूर्द्धा च कुम्भनाभः(१) महोदरः ।
प्रमोदाहश्च कुपथो हयग्रीवश्च वीर्य्यवान् ॥१०॥
असुरश्च विरूपाक्षः सुपथोऽथ महासुरः ।
अजो हिरण्मयश्चैव शतमायुश्च शम्बरः(२) ॥११॥
शरभः शलभश्चैव सूर्य्याचन्द्रमसावुभौ ।
असुराणां सुरावेतौ सुराणां साम्प्रताविमौ ॥१२॥
इति पुत्रा दनोर्वंशाः प्रधानाः परिकीर्त्तिताः ।
तेषामपरिसङ्ख्येयं पुत्रपौत्राद्यनन्तकं ॥१३॥
इत्येते ह्यसुराः प्रोक्ता दैतेया दानवाश्च ये ।
स्वर्भानुस्तु स्मृतो दैत्यो ह्यनुभानुर्दनोः सुतः ।
इमे तु वंशानुगता दनोः पुत्रास्तु ये स्मृताः ॥१४॥
एकाक्ष ऋषभोऽरिष्टः प्रबन्धनरकावपि ।
इन्द्रबाधनकेशी च मेरुः शम्बोऽथ धेनुकः ॥१५॥

---

१ कुम्भनाद इति ख० ।
२ सुखन इति ख० ।

गवेष्ठिश्च गवाक्षश्च तालकेतुश्च वीर्य्यवान् ।
एते मनुष्यधर्म्मास्तु दनोः पुत्रा मया स्मृताः ॥१६॥
दैत्यदानवसंहर्षे जाता भीमपराक्रमाः ।
सिंहिकायामथोत्पन्ना विप्रचित्तिसुतास्त्रिमे ॥१७॥
सैंहिकेया इति ख्यातास्त्रतुर्द्दश महासुराः ।
शतगालश्च(१) बलवान्व्यासः शाम्वस्तथैव च ॥१८॥
अनुलोमः शुचिश्चैव वातापिश्च सिताशुकः ।
हरः कल्पः कालनाभो भौमश्च नरकस्तथा ॥१९॥
राहुर्ज्येष्ठस्तु तेषां वै चन्द्रसूर्य्यप्रमर्दनः ।
इत्येते सिंहिकापुत्रा देवैरपि दुरासदाः ॥२०॥
दारुणाभिजनाः क्रूराः सर्वे ब्रह्मद्विषश्च ते ।
दशान्यानि सहस्राणि सैंहिकेयो गणः स्मृतः ॥२१॥
निहतो यामदग्न्येन भार्गवेण बलीयसा ।
स्वर्भानोस्तु प्रभा कन्या पुलोम्नोऽथ शची तथा ॥२२॥
उपदानवीयमस्यापि शर्मिष्ठा वार्षपर्वणी ।
पुलोमा कालिका चैव(२) वैश्वानरसुते उभे ॥२३॥
प्रभाया नहुषः पुत्रो जयन्तश्च शचीसुतः ।
पुरुं जज्ञेऽथ शर्मिष्ठा दुष्मन्तमुपदानवी ॥२४॥
वैश्वानरसुते ह्येते पुलोमा कालिका उभे ।
उभे ह्यपि तु ते कन्ये मारीचस्य परिग्रहे ॥२५॥

१ शतगाल्यश्चेति ङ० ।
२ कलिका चैवेति ग० ।

ताभ्यां पुत्रसहस्राणि षष्टिर्दानवपुङ्गवाः।
चतुर्द्दश तथान्यानि हिरण्यपुरवासिनां ॥२६॥
पौलोमाः कालकेयाश्च दानवाः सुमहाबलाः।
अवध्या दानवानां ते निहताः सव्यसाचिना ॥२७॥
मयस्य जाता ये पुत्राः सर्व्वे वीरपराक्रमाः।
मयावी दुन्दुभिश्चैव वृषश्च महिषस्तथा ॥२८॥
बालिको वज्रकर्णश्च कन्या मन्दोदरी तथा।
दैत्यानां दानवानाञ्च सर्ग एष प्रकीर्त्तितः ॥२९॥
दनायुषायाः[१] पुत्रास्तु स्मृताः पञ्च महाबलाः।
अरूरुर्बलिजम्भौ च विरत्तश्च विषस्तथा ॥३०॥
अरूरोस्तनयः क्रूरो धुन्धुर्नाम महासुरः।
निहतः कुवलाश्वेन उतङ्कवचनात् किल ॥३१॥
बलेः पुत्रौ महावीर्य्यौ तेजसाऽप्रतिमावुभौ।
कुम्भिलश्चक्रवर्म्मा[२] च स कर्णः पूर्वजन्मनि ॥३२॥
विरत्तस्यापि पुत्रौ द्वौ कालकश्च वरश्च तौ।
विषस्य त्वभवन् पुत्राश्चत्वारः क्रूरकर्म्मणः।
श्राद्धहा यज्ञहा चैव ब्रह्महा पशुहा तथा ॥३३॥
कान्ता दनायुषापुत्राः वृत्रस्यापि निबोधत।
जज्ञिरे श्वसनाद्घोराद्वृत्रस्येन्द्रेण युध्यतः ॥३४॥

---

१ अलम्बुषाया इति ख०, ग० च।
२ कुटिलश्चक्रधर्म्मा चेति ग०।

भर्त्तारो मनसा ख्याताः राक्षसाः सुमहाबलाः ।
शतश्वानि सहस्राणि महेन्द्रानुचराः स्मृताः ॥२५॥
सर्वे ब्रह्मविदः सौम्या धार्म्मिकाः सूक्ष्ममूर्त्तयः[१] ।
ब्राह्मन्तर्गताः सर्व्वे निवसन्ति सुधार्म्मिकाः ॥२६॥
दैत्यानां दानवाश्च सर्ग एष प्रकीर्त्तितः ।
प्रवाह्यजनयत् पुत्रान् यज्ञे वै गायनोत्तमान् ॥२७॥
सत्वनः सत्वात्मकश्चैव कलापश्चैव वीर्य्यवान् ।
कृतवीर्यो ब्रह्मचारी सुपाण्डुश्चैव सप्तमः ॥२८॥
पनश्चैव तरण्यश्च[२] सुचन्द्रो दशमस्तथा ।
इत्येते देवगन्धर्वा विज्ञेयाः परिकीर्त्तिताः ॥२९॥

इति श्रीमहापुराणे वायुप्रोक्ते कश्यपीयप्रजासर्गो नाम
सप्तमोऽध्यायः ।

---

१ सूर्य्यमूर्त्तय इति ख०, ग० च ।
२ पुनामश्चैव वन्यश्चेति ग० ।

# अथाष्टमोऽध्यायः ।

काश्यपीयप्रजासर्गः ।

सूत उवाच। गन्धर्वाप्सरसः पुण्या मौनेयाः[1] परिकीर्त्तिताः ।
चित्रसेनोग्रसेनश्च ऊर्णायुरनघस्तथा[2] ॥१॥
धृतराष्ट्रः पुलोमा च सूर्य्यवर्चास्तथैव च ।
युगपत्तृणपत्कालिर्दितिश्चित्ररथस्तथा ॥२॥
त्रयोदशो भ्रमिश्शिराः पर्जन्यश्च चतुर्दशः ।
कलिः पञ्चदशश्चैव नारदश्चैव षोड़शः ।
इत्येते देवगन्धर्वा मौनेयाः परिकीर्त्तिताः ॥३॥
चतुस्त्रिंशद्यवीयस्यस्तेषामप्सरसः शुभाः ।
अन्तरा दारवत्या च प्रियमुख्या सुरोत्तमा ॥४॥
मिश्रकेशी[3] तथा शाची पर्णिनी वाप्यलम्बुषा ।
मारीची पुत्रिका चैव विद्युद्वर्णा तिलोत्तमा ॥५॥
अद्रिका लक्षणा चैव देवी रम्भा मनोरमा ।
सुवरा च सुवाहुश्च पूर्णिता सुप्रतिष्ठिता ॥६॥
पुण्डरीका सुगन्धा च सुदन्ता सुरसा तथा ।

---

१ शैलेया इति ख०, ग० च।
२ ऊर्णनाभो धनञ्जय इति ग० ।
३ मिश्रकेशीति ख०।

हेमसारा सुती चैव सुदत्ता कमला च या ॥७॥
सुभुजा हंससारा च लौकिक्योऽप्सरसस्तथा ।
गन्धर्वाप्सरसो ह्येता मौनेयाः परिकीर्त्तिताः ॥८॥
गन्धर्व्वाणां दुहितरो मया याः परिकीर्त्तिताः ।
तासां नामानि सर्वासां कीर्त्यमानानि मे शृणु ॥९॥
सुयशा प्रथमा तासां गान्धर्वी तदनन्तरं ।
विद्यावती चारुमुखी[1] सुमुखी च वरानना ॥१०॥
तत्रेमे सुयशापुत्रा महाबलपराक्रमाः ।
प्रचेतसः सुता यक्षास्तेषां नामानि मे शृणु ॥११॥
कम्बलो हरिकेशश्च कपिलः काञ्चनस्तथा ।
मेघमाली तु यक्षाणां गण एष उदाहृतः ॥१२॥
सुयशाया दुहितरस्ततस्तोऽप्सरसः स्मृताः ।
तासां नामानि वै सम्यक् ब्रुवतो मे निबोधत ॥१३॥
लोहेयी त्वभवज्ज्येष्ठा भरता तदनन्तरं ।
कृशाङ्गी च विशाला च रूपेणाप्रतिमा तथा ॥१४॥
ताभ्योऽपरे यक्षगणाश्चत्वारः परिकीर्त्तिताः ।
उत्पादिता विशालेन विक्रान्तेन महात्मना ॥१५॥
लोहेयो भरतेयश्च कृशाङ्गेयश्च विश्रुतः ।
विशालेयश्च यक्षाणां पुराणे प्रथिता गणाः ॥१६॥
इत्येतैरसुरैर्घोरैर्महाबलपराक्रमैः ।
लोकैर्यक्षगणैर्व्याप्ता लोका लोकविदां वराः ॥१७॥

---

१ अश्वमुखीति ख० ।

गन्धर्वाश्चाथ वालेया विक्रान्तेन महात्मना ।
उत्पादिता महावीर्य्या महागन्धर्वनायकाः ॥१८॥
विक्रमौदार्य्यसम्पन्ना महाबलपराक्रमाः ।
तेषां नामानि वक्ष्यामि यथावदनुपूर्वशः ॥१९॥
चित्राङ्गदो महावीर्य्यश्चित्रवर्म्मा(१) तथैव च ।
चित्रकेतुर्महाभागः सोमदत्तोऽथ वीर्य्यवान् ।
तिस्रो दुहितरश्चैव तासां नामानि वक्ष्यते ॥२०॥
प्रथमा लम्बिका नाम कम्बला तदनन्तरं ।
तथा वसुमती नाम रूपेणाप्रतिमौजसः ॥२१॥
ताभ्यः परे कुमारेण गणा उत्पादितास्त्विमे ।
त्रयो गन्धर्वमुख्यानां विक्रान्ता युद्धदुर्मदाः ॥२२॥
आग्नेयाः काम्बलेयाश्च तथा वसुमतीसुताः ।
तैर्गणैस्त्रिविधैर्व्याप्तमिदं लोकचराचरं ॥२३॥
विद्यावन्तश्च तेनैव विक्रान्तेन महात्मना ।
उत्पादिता महाभागा रूपविद्याधनेश्वराः ॥२४॥
तेषामुदीर्णवीर्य्याणां गन्धर्वाणां महात्मनां ।
नामानि कीर्त्त्यमानानि शृणुध्वं मे विवक्षतः ॥२५॥
हिरण्यरोमा कपिलः सुलोमा मागधस्तथा ।
चन्द्रकेतुश्च वै गाङ्गो गोदश्चैव महाबलः ॥२६॥
महाविद्यावदातानां विक्रान्तानान्तपस्विनां ।

---

१ चित्रकर्म्मेति ख० ।

इत्येवमादिर्हि गणो ये चान्ये च सुलोचने ॥२७॥
शिवा च सुमनाश्चैव ताभ्यामपि महात्मना ।
उत्पादिता विश्रवसा विद्याचरणगोचराः ॥२८॥
ग्रैवेयाश्चैव विक्रान्तास्तथा सौमनसो गणाः ।
एतैर्व्याप्तमिदं लोकं विद्याधरगणैस्त्रिभिः ॥२९॥
एभ्योऽनेकानि जातानि अम्बरान्तरचारिणां ।
लोके गणशतान्येव विद्याधरविचेष्टितात् ॥३०॥
अश्वमुखाश्च तेनैव विक्रान्तेन महात्मना ।
उत्पादिता ह्यश्वमुखाः किन्नरांस्तान्निबोधत ॥३१॥
समुद्रः सेनः कालिन्दो महानेत्रो महाबलः ।
सुवर्णघोषः सुग्रीवो महाघोषश्च वीर्य्यवान् ॥३२॥
इत्येवमादिर्हि गणः किन्नराणां महात्मनां ।
हयाननानां विद्वद्भिर्विस्तीर्णः परिकीर्त्त्यते ॥३३॥
तथासमुत्थितेनैव विक्रान्तेन महात्मना ।
उत्पादिता नरमुखाः किन्नराः शांशपायनाः ॥३४॥
हरिषेणः सुषेणश्च वारिषेणश्च वीर्यवान् ।
रुद्रदत्तेन्द्रदत्तौ च चन्द्रद्रुममहाद्रुमौ ॥३५॥
विन्दुश्च विन्दुसारश्च चन्द्रवंशाश्च किन्नराः ।
इत्येते किन्नराः श्रेष्ठा लोके ख्याताः सुशोभनाः ॥३६॥
नृत्यगीतप्रगल्भानामेतेषां द्विजसत्तमाः ।
लोके गणशतान्येव किन्नराणां महात्मनां ॥३७॥
यशा यशोपशान्तश्च लोहेया रूपशालिनी ।

दुहिता सुरविन्द्रेति प्रकाशः सिद्धसम्मता ॥३८॥
उपायाकेतनस्याहि[१] स्वयमुत्पादितो गणः ।
करालकेन भूतानां तेषां नामानि मे शृणु ॥३९॥
भूता भूतगणैश्चैया आवेशकनिवेशकाः ।
इत्येवमादिर्हि गणो भूमिगोचरकः स्मृतः ॥४०॥
विज्ञेय इह लोकेऽस्मिन् भूतानां भूतनायकः ।
ये उत्कृष्टा भवन्त्येषामम्बरान्तरचारिणां ।
वृक्षाग्रमात्रमाकाशं ते चरन्ति न संशयः ॥४१॥
तत्रेमे देवगन्धर्व्वाः प्रायेण कथिता मया ।
देवोपस्थाननिरता विज्ञेयास्ते यशस्विनः ॥४२॥
नारायणं सुरगुरुं विरजं पुष्करेक्षणं ।
हिरण्यगर्भञ्च तथा चतुर्वक्त्रं स्वयम्भुवं ॥४३॥
शङ्करञ्च महादेवमीशानञ्च जगत्प्रभुं ।
इन्द्रपूर्वांस्तथादित्यान् रुद्रांश्च वसुभिः सह ॥४४॥
उपतस्थुः सगन्धर्वा नृत्यगीतविशारदाः ।
त्रिदशाः सर्वलोकस्था निपुणा गीतवादिनः ॥४५॥
हंसो ज्येष्ठः कनिष्ठोऽन्यो मध्यमौ च हहा हुहुः ।
चतुर्थो धिषणश्चैव ततो वाशिरुचिस्तथा ॥४६॥
षष्ठस्तु तुम्बुरुस्तेषां ततो विश्वावसुः स्मृतः ।
इमाश्चाप्सरसो दिव्या विहिताः पुण्यलक्षणाः ॥४७॥
सुषुवेऽष्टौ महाभागा वरिष्ठा देवपूजिताः ।

१ पाठोऽयमादर्शसम्मतो मुद्रितः । परन्त्वयं न समीचीनः

अनवद्यामनवशामन्वतां मदनप्रियां ।
अरूपां सुभगां भासीमरिष्टाऽष्टौव्यजायत ॥४८॥
मनोवती सुकेशा च तुम्बुरोस्तु सुते शुभे ।
पञ्चचूडास्त्विमा दिव्या दैविक्योऽप्सरसो दश ॥४९॥
मेनका सहजन्या च पर्णिनी पुञ्जिकस्थला ।
घृतस्थला घृताची च विश्वाची पूर्वचीत्यपि ।
प्रम्लोचेत्यभिविख्याताऽनुम्लोचन्ती तथैव च ॥५०॥
अनादिनिधनस्याथ जज्ञे नारायणस्य या ।
ऊरोः सर्वानवद्याङ्गी उर्वश्येकादशी स्मृता ॥५१॥
मेनस्य मेनका कन्या ब्रह्मणो हृष्टचेतसः ।
सर्व्वाश्च ब्रह्मवादिन्यो महायोगाश्च ताः स्मृताः ॥५२॥
गणा अप्सरसाञ्जाताः पुण्यास्ते वै चतुर्द्दश ।
आहृताः शोभयन्तश्च गणा ह्येते चतुर्दश ॥५३॥
ब्रह्मणो मानसाः कन्याः शोभयन्त्यो मनोः सुताः ।
वेगवन्त्यस्त्वरिष्टाया ऊर्ज्जायाश्चाग्निसम्भवाः ॥५४॥
आयुष्मन्त्यश्च सूर्यस्य रश्मिजाताः सुभास्वराः ।
वारिजा ह्यमृतोत्पन्ना अमृता नामतः स्मृताः ॥५५॥
वायूत्पन्ना मुदा नाम भूमिजाता भवास्तु वै ।
विद्युतश्च रुचो नाम मृत्योः कन्याश्च भैरवाः ॥५६॥
शोभयन्त्यः कामगुणा गणाः प्रोक्ता चतुर्द्दश ।
सेन्द्रोपेन्द्रैः सुरगणैः रूपातिशयनिर्मिताः ॥५७॥
शुभरूपा महाभागा दिव्या नारी तिलोत्तमा ।

ब्रह्मणश्चाग्निकुण्डाच्च देवन।
रूपयौवनसम्पन्ना उत्पन्ना लोका०
वेदीतलसमुत्पन्ना चतुर्वक्त्रस्य धीमतः ।
नाम्ना वेदवती नाम सुरनारी महा०
तथा यमस्य दुहिता रूपयौवनशालिनी ।
वरहेमविभा हेमा देवनारी सुलोचना ॥६०॥
इत्येते बहुसाहस्रं भास्वरा ह्यप्सरोगणाः ।
देवतानामृषीणाञ्च पत्न्यस्ता मातरश्च ह ॥६१॥
सुगन्धाश्चम्पवर्णाश्च सर्वाश्चाप्सरसः समाः ।
सम्प्रयोगे तु कान्तेन मद्यन्ति मदिरां विना ।
तासामाप्यायते स्पर्शादानन्दश्च विवर्द्धते ॥६२॥
विनतायास्तु पुत्रौ द्वावरुणो गरुडश्च ह ।
षट्त्रिंशत्तु स्वसारश्च यवीयस्यस्तु ताः स्मृताः ॥६३॥
गायत्र्यादीनि छन्दांसि सौपर्णेयाश्च पक्षिणः ।
इत्येवाहानि सर्वाणि दिक्षु सन्निहितानि च ॥६४॥
कद्रूर्नागसहस्रं वै परापरमजीजनत् ।
अनेकशिरसां तेषां खेचराणां महात्मनां ।
बहुधा नामधेयानां प्राधान्यस्तु निबोधत ॥६५॥
तेषां प्रधाननागाश्च शेषवासुकितक्षकाः ।
सकर्णीरश्च जम्भश्च(१) अञ्जनो वामनस्तथा(२) ॥६६॥

---

१ कर्णारश्चैव जम्भश्चेति ख० ।
२ मुञ्जनो वामनस्तथेति ख० । मुञ्जानो वामनस्तथेति ग०।

...श्वतरावुभौ ।

...(१) कर्कोटकधनञ्जयौ ॥६७॥

महानीलो धृतराष्ट्रबलाहकौ ।

...ष्पदन्तश्च सुमुखो दुर्मुखस्तथा ॥६८॥

शिलीमुखः(२) दधिमुखः कालीयः शालिपिण्डकः ।

विन्दुपादः(३) पुण्डरीको नागश्चापूरणस्तथा ॥६९॥

कपिलश्चाम्बरीषश्च धृतपादश्च कच्छपः ।

प्रह्लादः पद्मचित्रश्च गन्धर्व्वोऽथ नमस्विकः(४) ॥७०॥

नहुषः खररोमा च मणिरित्येवमादयः ।

काद्रवेया मया ख्याताः खशायांस्तु निबोधत ॥७१॥

खशा विजज्ञे पुत्रौ द्वौ विश्रुतौ पुरुषादकौ ।

ज्येष्ठं पश्चिमसन्ध्यायां पूर्वस्यां मनुजास्तथा ॥७२॥

विलोहितं विकर्णञ्च पूर्व्वं साऽजनयत्सुतं ।

चतुर्भुजं चतुष्पादं द्विमूर्द्धानं द्विधागतिं ॥७३॥

सर्वाङ्गकेशं स्थूलाङ्गं तुङ्गनासं महोदरं ।

स्थूलशीर्षं महाकर्णं मुञ्जाकेशं मनोरथं ॥७४॥

ह्रस्वोष्ठं दीर्घजङ्घञ्च अश्वदंष्ट्रं महाहनुं ।

रक्तजिह्वं जटाचञ्च स्थूलास्यं दीर्घनासिकं ॥७५॥

---

१ एलापत्रश्च शेषश्चेति ख०, ङ० च ।

२ शुचीमुख इति ख० ।

३ विल्वपाद इति ङ० ।

४ मनस्विन इति ख०, ग० च ।

गुह्यकं शितिकण्ठञ्च महानन्दं महामुखं ।
एवम्विधं खशा पुत्रं विजज्ञे साऽतिभीषणं ॥७६॥
तस्यानुजं द्वितीयन्तु खशा चैव व्यजायत ।
त्रिशीर्षञ्च त्रिपादञ्च त्रिहस्तं कृष्णलोचनं ॥७७॥
ऊर्द्ध्वकेशं हरित्श्मश्रुं शिलासंहननं दृढं ।
ह्रस्वकायं सुबाहुञ्च महाकायं महाबलं ॥७८॥
आकर्णदारितास्यञ्च लम्बभ्रूं स्थूलनासिकं ।
स्थूलोष्ठमष्टदंष्ट्रञ्च द्विजिह्वं शङ्कुकर्णकं ॥७९॥
पिङ्गलोद्वृत्तनयनं जटिलं पिङ्गलं तथा[१] ।
महाकर्णं महोरस्कं कटिहीनं कृशोदरं ।
नखिनं लोहितग्रीवं सा कनिष्ठं प्रसूयते ॥८०॥
सद्यः प्रसूतमात्रौ तु विवृद्धौ च प्रमाणतः ।
उपभोगसमर्थाभ्यां शरीराभ्यामुपस्थितौ ।
सद्योजातविवृद्धाङ्गौ मातरं पर्य्यभूष्यतां ॥८१॥
ज्यायांस्तयोस्तु यः क्रूरो मातरं सोऽभ्यकर्षत ।
अब्रवीन्मातरायाहि भक्षार्थे क्षुधयार्द्दितः ॥८२॥
न्यषेधयत् पुनर्ह्येनं ज्यायांसन्तु कनिष्ठकः ।
अब्रवीत् सोऽसकृत्तं वै रक्षेमां मातरं खशां ।
बाहुभ्यां परिगृह्यैनं मातरन्तां व्यमोचयत् ॥८३॥
एतस्मिन्नेव काले तु प्रादुर्भूतस्तयोः ध्रुवं ।
तौ दृष्ट्वा विकृताकारौ वसतां हीत्यभाषत ।

१ जटिलोऽलघु पिङ्गलमिति ख० ।

तौ तु तं पितरं दृष्ट्वा बलवन्तौ त्वरान्वितौ ।
मातुरेव पुनस्तर्कं प्रलपेतां स्वमायया ॥८५॥
अथोऽब्रवीद्दितिर्भार्यामाताभ्यामुक्तवत्यसि ।
पूर्व्वमाचक्ष्व तत्त्वेन तथैवाभ्यां व्यतिक्रमं ॥८६॥
मातुलं भजते पुत्रः पितॄन् भजति कन्यका ।
यथाशीला भवेन्माता तथाशीलो भवेत्सुतः ॥८७॥
यद्वर्णा तु भवेद्भूमिस्तद्वर्णं सलिलं ध्रुवं ।
मातॄणां शीलदोषेण तथा शीलगुणैः पुनः ।
विभिन्नास्तु प्रजाः सर्व्वास्तथा ख्यातिवशेन च ॥८८॥
बलशीलादिभिस्तासामदितिर्धर्म्मतत्परा ।
धर्म्मशीलादिभिश्चैव प्रबोधबलशालिनी ॥८९॥
गीतशीला तथाऽरिष्टा मायाशीला दनुः स्मृता ।
विनता तु पुनर्देवी वैहायसगतिप्रिया ॥९०॥
तपोमयेन शीलेन सुरभिः समलङ्कृता ।
क्रोधशीला तथा कद्रुः क्रोधेनासुखशीलका ॥९१॥
दनायुषायाः शीलं वै वैरानुग्रहलक्षणं ।
त्वञ्च देवि महाभागे क्रोधशीला मतासि मे ॥९२॥
इत्येतानि सशीलानि स्वभावालोकनान्नृणां ।
कर्म्मतो यत्नतो बुद्ध्या रूपतो बलतस्तथा ।
भिन्नानि भावितार्थबलेन च ॥९३॥
…ात्मभिर्विश्वरूपाः स्वभावतः ।
…नास्ते पुत्रका गुणात्मभिः ॥९४॥

इत्येवमुक्त्वा भगवान् खशामप्रतिमां तदा ।
पुत्रावाहूय सान्त्वा वै चक्रे सोममभीतयः[१] ॥९५॥
ताभ्याञ्च यत् कृतं तस्यास्तदाचष्ट तदा खशा ।
मात्रा यथा समाख्यातं कर्म्म ताभ्यां पृथक् पृथक् ।
तेन धात्वर्थयोगेन तत्त्वदर्शी चकार ह ॥९६॥
यत्त इत्येष धातुर्वै खादने क्षपणे च सः ।
यत्तयत्युक्तवान् यस्मात् तस्माद्यत्तो भवत्ययं ॥९७॥
रत्त इत्येष धातुर्यः पालने स विभाव्यते ।
उक्तवांश्चैव यस्मात् तु रत्त मे मातरं खशां ।
नाम्नाऽयं रात्तसस्तस्मात् भविष्यति तवात्मजः ॥९८॥
स तदा तद्विधान् दृष्ट्वा विस्मितः परिष्टज्य च[२] ।
तयोः प्रादिशदाहारं प्रजापतिरसृग्वसे ॥९९॥
पिता तो क्षुधितो दृष्ट्वा वरञ्चेमं तयोर्ददो ।
युवयोर्हस्तसंस्पर्शो नक्तमेव तु सर्वशः ॥१००॥
नक्ताहारविहारो च दिवा स्वप्नोपभोगिनो[३] ।
नक्तञ्चैव बलीयांसो दिवा सुप्तावुभो युवां ॥१०१॥
मातरं रत्ततश्चैव धर्म्मश्चैवानुशिष्यतां ।
इत्युक्त्वा कश्यपः पुत्रो तत्रैवान्तरधीयत ॥१०२॥
गते पितरि तो वीरो निसर्गादेव दारुणो ।

१ पाठोऽयं न समीचीनः।
२ परिष्टज्य चेति ख० ।
३ स्वप्नोपभोगिनाविति ख० ।

विपर्य्ययेण वर्त्तन्तौ किल्भचौ प्राणिहिंसकौ ॥१०३॥
महाबलौ महासत्त्वौ महाकायौ दुरासदौ ।
मायाविनौ च दृश्यौ तावन्तर्द्धानगतावुभौ ॥१०४॥
तौ कामरूपिणौ घोरौ विकृताङ्गौ स्वभावतः ।
रूपानुरूपैराहारैः प्रभवेतामुभावपि ॥१०५॥
देवासुरानृषींश्चैव गन्धर्वान् किन्नरानपि ।
पिशाचांश्च मनुष्यांश्च पन्नगान् पक्षिणः पशून् ॥१०६॥
भक्षार्थमपि लिप्सन्तौ सर्वतस्तौ निशाचरौ ।
इन्द्रेण तु वरौ चैव धृतौ दत्वा सुबध्यतां ॥१०७॥
यक्षस्तु न कदाचिद्वै निशीथे छोककश्चिरं ।
आहारं स परीप्सन् वै शब्देनानुचचार ह ॥१०८॥
आससाद पिशाचौ द्वौ जम्बुचण्डौ च तावुभौ ।
पिङ्गाक्षावूर्द्धरोमाणौ वृत्ताक्षौ तु सुदारुणौ ॥१०९॥
असृङ्मांसवसाहारौ पुरुषादौ महाबलौ ।
कन्याभ्यां सहितौ तौ तु ताभ्यां प्रियचिकीर्षया[1] ॥११०॥
द्वे कन्ये कामरूपिण्यौ तदाचारे च ते शुभे ।
आहारार्थमटन्तौ तौ कन्याभ्यां सहितावुभौ ॥१११॥
तेऽपश्यन् राक्षसं तत्र कामरूपं महाबलं ।
सहसा सन्निपाते तु दृष्ट्वा चैव परस्परं ॥११२॥
रक्षमाणौ ततोऽन्योन्यं परस्परजिघृक्षवः ।

---

१ भर्तृचिकीर्षयेति क०, ङ० च ।

पितरावूचतुः कन्ये युवामानयत द्रुतं ॥११३॥
जीवग्राहं विगृह्यैनं विस्फुरन्तं पदे पदे ।
ततः समभिद्रुत्यैनं कन्ये जगृहतुस्तदा ।
गृहीत्वा हस्तयोस्ताभ्यामानीते पितृसंसदि ॥११४॥
ताभ्यां करे गृहीतं तं पिशाचमथ राक्षसं ।
पृच्छतां कोऽसि कस्य त्वं स च सर्वमभाषत ॥११५॥
तस्य कर्माभिविज्ञातं ज्ञात्वा तौ राक्षसर्षभौ[१] ।
अजश्च खण्डं तस्यैते प्रत्यपादयतां सुते ।
तौ तुष्टौ कर्मणा तस्य कन्ये द्वे ददतुः सुते ॥११६॥
पैशाचेन विवाहेन सुदत्या बुद्धवाहनः[२] ।
अजः खण्डश्च ताभ्यां तौ तदाश्रावयतां धनं ॥११७॥
इयं ब्रह्मधना नाम मम कन्या स्थूलोमिका ।
ब्रह्मसत्त्वधनाहारा इति खण्डोऽभ्यभाषत ॥११८॥
इयं जन्तुधना नाम कन्या सर्वाङ्गसुन्दरी[३] ।
जन्तवोऽस्या धनाहारा स्तावश्रावयतां धनं ॥११९॥
सर्वाङ्गकेशी नाम्ना च कन्या जन्तुधना तथा ।
अकर्णान्ताप्यरोमा च कन्या ब्रह्मधना तु या ॥१२०॥
ब्रह्मधनं[४] प्रसूता सा धनानाश्चैव कन्यका ।

---

१ राक्षसावभाविति ख० ग० च
२ सुदुरासदाविति ख० ।
३ सर्व्वाङ्गगर्भिता इति ङ० ।
४ ब्रह्माध्यानमिति ङ० ।

एवं पिशाचकन्ये ते मिथुने द्वे प्रसूयतां।
तयोः प्रजाविसर्गञ्च ब्रुवतो मे निबोधत ॥१२१॥
हेति-प्रहेतिरुग्रश्च पौरुषेयो बधस्तथा।
विस्फूर्जिश्चैव[१] वातश्च आपो व्याघ्रस्तथैव च ॥१२२॥
सर्पश्च राक्षसा ह्येते यातुधानात्मजा दश।
सूर्य्यस्यानुचरा ह्येते सह तेन भ्रमन्ति च ॥१२३॥
हेतिपुत्रस्तथा लङ्कुर्लङ्कोर्द्वावेव चात्मजौ।
माल्यवांश्च सुमाली च प्रहेतितनयान् शृणु।
प्रहेतितनयः श्रीमान् पुलोमा नामविश्रुतः ॥१२४॥
बधपुत्रो निकुम्भश्च क्रूरो वै ब्रह्मराक्षसः।
वातपुत्रो विरागस्तु आपपुत्रस्तु जम्बुकः ॥१२५॥
व्याघ्रपुत्रो निरानन्दो जन्तूनां[२] विघ्नकारकः।
इत्येते वै परिक्रान्ताः क्रूराः सर्व्वे तु राक्षसाः ॥१२६॥
कीर्त्तिता यातुधानास्तु ब्रह्मधानान् निबोधत[३]।
यज्ञः पिता धुनिः क्षेमो ब्रह्मा पापोऽथ यज्ञहा ॥१२७॥
स्वाकोटकः कलिः सर्पो ब्रह्मधानात्मजा दश।
स्वसारो ब्रह्मराक्षस्यस्तेषाञ्चेमाः सुदारुणाः ॥१२८॥
रक्तकर्णा महाजिह्वाऽक्षया चैवोपहारिणी।
एतासामन्वये जाताः पृथिव्यां ब्रह्मराक्षसाः ॥१२९॥

---

१ विस्फूर्जश्चैवेति ग०।
२ मारो वै इति ख०। सर्पो वै इति ङ०।
३ ब्रह्मनाम्नि निबोधत इति ख०, ग० च।

श्लेष्मातकतरुष्वेते प्रायशस्तु कृतालयाः ।
इत्येते राक्षसाः क्रान्ताः[१] यक्षस्यापि निबोधत ॥१२०॥
चकमेऽप्सरसं यक्षः पञ्चस्थूलां क्रतुस्थलीं ।
तां लिप्सुश्चिन्तमानस्य नन्दनं स चचार ह ॥१२१॥
वैभ्राजं सुरभिश्चैव तथा चैत्ररथञ्च यत् ।
दृष्टवान् नन्दने तस्मिन्नप्सरोभिः सहासतीं ॥१२२॥
नोपायं विन्दते तत्र तस्या लाभाय चिन्तयन् ।
दूषितः स्वेन रूपेण कर्म्मणा तेन दूषितः ॥१२३॥
समोद्विजन्ते भूतानि भयात्तस्य सर्वशः ।
तत्कथं नाम चार्व्वङ्गीं प्राप्नुयामहमङ्गनां ॥१२४॥
दृष्टोपायं ततः सोऽथ शीघ्रकारी व्यवर्त्तत ।
कृत्वा रूपं बहुमतं[२] गन्धर्व्वस्य तु गुह्यकः ।
ततः सोऽप्सरसां मध्ये तां जग्राह क्रतुस्थलीं ॥१२५॥
बुद्धा च सुहृच्चिन्तं सा भावेनैवाभ्यवर्त्तत ।
संवृतः स तया सार्द्धं दृश्यमानोऽप्सरोगणैः ॥१२६॥
तत्र स सिद्धकरणः सद्यो जातः सुतोऽस्य वै ।
परिणाहोच्छ्रयैर्युक्तः सद्यो वृत्तो ज्वलन् श्रिया ॥१२७॥
राजाहमिति नाभिर्हिं[३]पितरं सोऽभ्यभाषत ।
तवात्र जाते न भीतिः पिता तं प्रत्युवाच ह ॥१२८॥

१ प्रोक्ता इति ख० ।
२ बहुवचे इति ङ० ।
३ नारीयामिति ख० ।

मात्रानुरूपो रूपेण पितुर्वीर्येण जायते।
जाते स तस्मिन् हर्षेण स्वरूपं प्रत्यपद्यत ॥१३९॥
स्वभावं प्रतिपद्यन्ते हृष्यन्तो यत्तराक्षसाः।
म्रियमाणाः प्रसुप्ताश्च क्रुद्धा भीताः प्रहर्षिताः ॥१४०॥
ततोऽब्रवीदप्सरसं स्मयमानः स गुह्यकः।
गृहं मे गच्छ सुश्रोणि सपुत्रा वरवर्णिनी ॥१४१॥
इत्युक्ता सहसा तस्य दृष्ट्वा स्वं रूपमास्थितं।
विभ्रान्ताः प्राद्रवन् भीताः क्रोधमानाऽप्सरोगणाः ॥१४२॥
गच्छन्तीरन्वगच्छद्या पुत्रस्तां सान्त्वयन् गिरा।
गन्धर्वाप्सरसां मध्ये तां नीत्वा स न्यवर्त्तत ॥१४३॥
ताश्च दृष्ट्वा समुत्पत्तिं यक्षस्याप्सरसां गणाः।
यक्षाणां त्वं जनित्रीति प्रोचुस्तां वै क्रतुस्थलीं ॥१४४॥
जगाम सह पुत्रेण ततो यक्षः स्वमालयं।
न्यग्रोधरोहिणं नाम गुह्यका यत्र शेरते।
तस्मान्निवासो यक्षाणां न्यग्रोधः सर्वतः प्रियः ॥१४५॥
यक्षो रजतनाभस्तु गुह्यकानां पितामहः।
अनुह्रादस्य दैत्यस्य भद्रामतिवरां सुतां।
उपयेमे स भद्रायां यस्यां मणिवरो वशी ॥१४६॥
जज्ञे सा मणिभद्रश्च शक्रतुल्यपराक्रमं।
तयोः पत्न्यौ भगिन्यौ तु[१] क्रतुस्थल्यात्मजे[२] शुभे ॥१४७॥

---

१ पाठोऽयं न पूर्वापरसङ्गतः।
२ क्रतुस्थल्याः सुते इति ग०।

माता पुण्यजनी चैव तथा देवजनी च या ।
विजज्ञे मणिभद्रात्तु पुत्रान् पुण्यजनी शुभान् ॥१४८॥
सिद्धार्थं सूर्यतेजञ्च सुमन्तं नन्दनं तथा ।
कन्यकं(१) यविकञ्चैव(२) मणिदत्तं वसुं तथा ॥१४९॥
सर्वानुभूतं(३) शङ्खञ्च पिङ्गाचं भीरुमेव च ।
तथा मन्दरशोभिञ्च पद्मं चन्द्रप्रभं तथा ॥१५०॥
मघपूर्णं सुभद्रञ्च प्रद्योतञ्च महौजसं(४) ।
द्युतिमन्केतुमन्तौ च मित्रं मौलिसुदर्शनौ ॥१५१॥
चत्वारो विंशतिश्चैव पुत्राः पुण्यजनाः शुभाः ।
जज्ञिरे मणिभद्रस्य ते सर्व्वे पुण्यलक्षणाः ।
तेषां पुत्राश्च पौत्राश्च यक्षाः पुण्यजनाः शुभाः ॥१५२॥
विजज्ञे देवजननी पुत्रान् मणिवरात्मजात् ।
पूर्णभद्रं हेमरथं(५) मणिमन्नन्दिवर्द्धनौ ॥१५३॥
कुस्तुम्बुरुं पिशङ्गाभं स्थूलकर्णं महाजयं ।
श्वेतञ्च विपुलश्चैव पुष्पवन्तं भयावहं ॥१५४॥
पद्मवर्णं सुनेत्रञ्च यक्षं बालं वकं तथा ।
कुमुदं चेमकञ्चैव वर्द्धमानं तथा दमं ॥१५५॥
पद्मनाभं वराङ्गञ्च सुवीरं विजयं कृतिं ।

---

१ कल्पकमिति ख० ।
२ पार्थिकश्चैवेति ख० । पथिकश्चैवेति ङ० ।
३ सर्व्वार्थभूतमिति ख०, ग० च ।
४ महोरसमिति ख० ।
५ हेमवन्तमिति ङ० ।

पूर्णमासं हिरण्याक्षं सुरूपञ्चैवमादयः ॥१५६॥
पुत्रा मणिवरस्यैते यक्षा वै गुह्यकाः स्मृताः ।
सुरूपाश्च विरूपाश्च स्रग्विनः प्रियदर्शनाः ।
तेषां पुत्राश्च पौत्राश्च शतशोऽथ सहस्रशः ॥१५७॥
खशायास्त्वपरे पुत्रा राक्षसाः कामरूपिणः ।
तेषां यथा प्रधानान् वै वर्ण्यमानान्निबोधत ॥१५८॥
लालाविः[१] कुथनो भीमः[२] सुमाली मधुरेव च ।
विस्फूर्जितो विद्युज्जिह्वो मातङ्गो धूम्रितस्तथा ॥१५९॥
चन्द्रार्कः सुकरो वुध्नः कपिलोमः प्रहासकः[३] ।
क्रीडः परशुनाभश्च चक्राक्षश्च[४] निशाचरः ॥१६०॥
त्रिशिराः शतदंष्ट्रश्च तुण्डकेशश्च राक्षसः ।
यक्षश्चाकम्पनश्चैव दुर्मुखश्च शिलीमुखः ॥१६१॥
इत्येते राक्षसवरा विक्रान्ता गणरूपिणः ।
सर्वलोकचरास्ते तु त्रिदशानां समक्रमाः ॥१६२॥
सप्त चान्या दुहितरस्ताः शृणुध्वं यथाक्रमं ।
तासाञ्च यः प्रजासर्गो येन चोत्पादिता गणाः ॥१६३॥
आलम्बा उत्कचा कृष्णा निर्ऋता कपिला शिवा ।
केशिनी च[५] महाभागा भगिन्यः सप्त याः स्मृताः ॥१६४॥

---

१ लालविरिति ख० ।
२ कुबलो भीम इति ख० ।
३ प्रभाकर इति ख० ।
४ वक्राक्षश्चेति क० ।
५ वेशिनी चेति ख०, ग० च ।

ताभ्यो लोकाभिषादश्च चत्वारो युद्धदुर्मदाः ।
उदीर्णा राक्षसगणा इमे उत्पादिताः प्रभाः ॥१६५॥
आलम्बेयो गणः क्रूर उत्कचेयो गणस्तथा ।
तथा कार्ष्णेयश्चैवेया राक्षसा ह्युत्तमा गणाः ॥१६६॥
तथैव नैर्ऋतो नाम त्र्यम्बकानुचरेण ह ।
उत्पादितः प्रजासर्गो गणेश्वरचरेण तु ॥१६७॥
उत्पादिता बलवता उदीर्णा यक्षराक्षसाः ।
विक्रान्ताः शौर्य्यसम्पन्ना नैर्ऋता देवराक्षसाः ।
येषामधिपतिर्युक्तो नाम्ना ख्यातो विरूपकः ॥१६८॥
तेषां गणशतानेका उद्धृतानां महात्मनां ।
प्रायेणानुचरन्त्येते शङ्करं जगतः प्रभुं ॥१६९॥
दैत्यराजेन कुम्भेन महाकाया महात्मना ।
उत्पादिता महावीर्य्या महाबलपराक्रमाः ॥१७०॥
कपिलेया महावीर्य्या उदीर्णा दैत्यराक्षसाः ।
कम्पनेन च यक्षेण केशिन्यास्ते परे जनाः ॥१७१॥
उत्पादिता महावाता उदीर्णा यक्षराक्षसाः ।
केशिनीदुहितुश्चैव नीलायाः क्षुद्रमानसाः ॥१७२॥
आलम्बेयेन जनिता नैकाः सुरसिकेन हि ।
नैला इति समाख्याता दुर्जया घोरविक्रमाः ॥१७३॥
चरन्ति पृथिवीं कृत्स्नां तत्र ते देवलौकिकाः ।
बहुत्वाच्चैव सर्गस्य तेषां वक्तुं न शक्यते ॥१७४॥
तस्यास्त्वपि च नीलाया विकचा नाम राक्षसी ।

दुहिता स्वभावविकचा मन्दसत्त्वपराक्रमा ॥१७५॥
तस्या अपि विरूपेण नैर्ऋतेनेह च प्रजाः।
उत्पादिताः सुरा घोराः शृणु तास्त्वनुपूर्वशः ॥१७६॥
दंष्ट्राकरालविवृता महाकर्णा महोदराः।
हारका भीषकाश्चैव तथैव क्रामकाः परे ॥१७७॥
वैनकाश्च पिशाचाश्च वाहकाः प्राशकाः परे।
भूमिराक्षसका ह्येते मन्दाः पुरुषविक्रमाः ॥१७८॥
चरन्त्यदृष्टपूर्वाश्च नानाकारा ह्यनेकशः।
उत्कृष्टबलसत्त्वा ये ते च वै खेचराः स्मृताः ॥१७९॥
लवमात्रेण चाकाशं स्वल्पाः स्वल्पं चरन्ति वै।
एतैर्व्याप्तमिमं लोकं शतशोऽथ सहस्रशः ॥१८०॥
भूमिराक्षसकैः सर्व्वैरनेकैः क्षुद्रराक्षसैः।
नानाप्रकारैराक्रान्ता नानादेशाः समन्ततः ॥१८१॥
समासाभिहताश्चैव ह्यष्टौ राक्षसमातरः।
अष्टौ विभागा ह्येषां हि विख्याता अनुपूर्वशः ॥१८२॥
भद्रका निकराः केचिद्यज्ञनिष्पत्तिहेतुकाः।
सहस्रशतसङ्ख्याता मर्त्यलोकविचारिणः ॥१८३॥
पूतना मातृसामान्यास्तथा भूतभयङ्कराः।
बालानां मानुषे लोके ग्रहा वैमानहेतुकाः ॥१८४॥
स्कन्दग्रहादयश्चैव आपकास्तामसकादयः।
कौमारास्ते तु विज्ञेया बालानां ग्रहहेतवः ॥१८५॥

स्कन्दग्रहविशेषाणां[1] मायिकानां तथैव च ।
पूतनानामभूतानां ये च लोकविनाशकाः ॥१८६॥
सहस्रशतसङ्ख्यानां मर्त्त्यलोकविचारिणां ।
एवं गणशतान्येव चरन्ति पृथिवीमिमां ॥१८७॥
यक्षाः पुण्यतमा नाम तथा ये केऽपि गुह्यकाः ।
यक्षा देवजनाश्चैव तथा पुण्यजनाश्च ये ॥१८८॥
गुह्यकानाञ्च सर्व्वेषामगस्त्या ये च राक्षसाः ।
पौलस्त्या राक्षसा ये च विश्वमित्राश्च ये स्मृताः ॥१८९॥
यक्षाणां राक्षसानाञ्च पौलस्त्यागस्त्ययश्च ये ।
तेषां राजा महाराजः कुवेरो ह्यलकाधिपः ॥१९०॥
यक्षा दृष्ट्वा पिवन्तीह नृणां मांसमसृग्वसां ।
रक्षांस्यनुप्रवेशेन पिशाचाः परिपीडनैः ॥१९१॥
सर्वलक्षणसम्पन्नाः समस्तैश्चाश्च दैवतैः ।
भास्वरा बलवन्तश्च ईश्वराः कामरूपिणः ॥१९२॥
अनाभिभक्षा विक्रान्ताः सर्व्वलोकनमस्कृताः ।
सूक्ष्माश्चौजस्विनो मेध्या वरदा यज्ञियाश्च ये ॥१९३॥
देवानां तुल्यधर्माणो ह्यसुराः सर्वशः स्मृताः ।
त्रिभिः पादैस्तु गन्धर्वा देवैर्हीनाः प्रभावतः ॥१९४॥
गन्धर्वेभ्यस्त्रिभिः पादैर्हीना वै सर्वगुह्यकाः ।
प्रभावतुल्या यक्षाणां विज्ञेयाः सर्व्वराक्षसाः ।
ऐश्वर्य्यहीना यक्षेभ्यः पिशाचास्त्रिगुणं पुनः ॥१९५॥

---

१ स्कन्देन च विशाखान'मिति ग० ।

एवं धनेन रूपेण आयुषा च बलेन च ।
धर्मैश्वर्य्येण बुद्ध्या च तपःश्रुतपराक्रमैः ॥१९६॥
देवासुरेभ्यो हीयन्ते त्रीन् पादान् वै परस्परं ।
गन्धर्वाद्याः पिशाचान्तास्तस्रो देवयोनयः ॥१९७॥
सूत उवाच। अतः शृणुत भद्रं वः प्रजाः क्रोधवशात्मकाः ।
क्रोधायां कन्यका जज्ञे द्वादश ह्यात्मसम्भवाः ।
ता भार्य्याः पुलहस्यासन्नामतस्ता निबोधत ॥१९८॥
मृगी च मृगमन्दा च हरिभद्रा इरावती ।
भूता च कपिशा दंष्ट्रा निशा तिर्य्या तथैव च ।
श्वेता चैव खरा चैव सुरसा चेति विश्रुताः ॥१९९॥
मृग्यास्तु हरिणाः पुत्रा मृगाश्चान्याः शशास्तथा ।
न्यङ्कवः शरभा ये च रुरवः पृषताश्च ये ॥२००॥
मृगराजा मृगमन्दाया गवयाश्चापरे तथा ।
महिषोष्ट्रवराहाश्च खड्गगौरमुखास्तथा(१) ॥२०१॥
हरेस्तु हरयः पुत्रा गोलाङ्गूलतरक्षवः ।
वानराः किन्नराश्चैव व्याघ्राः किम्पुरुषास्तथा ।
इत्येवमादयोऽन्येऽपि इरावत्या निबोधत ॥२०२॥
सूर्यस्याण्डकपाले द्वे समानीय तु भौवनः ।
हस्ताभ्यां परिगृह्याथ रथन्तरमगायत ॥२०३॥
साम्ना प्रसूयमानेन सद्य एव गजोऽभवत् ।

---

१ खड्गगौरमृगास्तथेति ङ० ।

स प्रायच्छदिरावत्यै पुत्रार्थे[१] स तु भौवनः ॥२०४॥
इरावत्याः सुतो यस्मात् तस्मादैरावतः स्मृतः ।
देवराजोपवाह्यत्वात् प्रथमः स मतङ्गराट् ।
शुभ्राभ्राभश्चतुर्दंष्ट्रः श्रीमानैरावतो गजः ॥२०५॥
अभ्रमुजस्यैकमूलस्य सुवर्णाभस्य हस्तिनः ।
षड्दन्तस्य हि भद्रस्य औपवाह्यस्य वै बलः ॥२०६॥
तस्य पुत्रोऽञ्जनश्चैव सुप्रतीकोऽथ वामनः ।
पद्मश्चैव चतुर्थोऽभूद्धस्तिनी चाभ्रमुस्तथा ॥२०७॥
दिग्गजांस्तांश्च चत्वारः श्वेताऽजनयताशुगान् ।
भद्रं मृगञ्च मन्दञ्च सङ्कीर्णं चतुरः सुतान् ॥२०८॥
सङ्कीर्णोऽप्यञ्जनो यस्तु उपवाह्यो यमस्य तु ।
भद्रो यः सुप्रतीकस्तु हरितः स ह्यपाम्पतेः ॥२०९॥
पद्मो मन्दस्तु यो गौरो द्विपो ह्यैलविलस्य[१] सः ।
मृगः श्यामस्तु यो हस्ती उपवाह्यः स पावकेः ॥२१०॥
पद्मोत्तरस्तु यः पद्मः[२] गजो वै वरुणो गणः ।
उपलेपनमेषश्च तस्याष्टौ जज्ञिरे सुताः ॥२११॥
उदग्रभावेनोपेता आयन्ते तस्य चान्वये ।
श्वेतबालनखाः पिङ्गा वर्ष्मवन्तो मतङ्गजाः ।
मतङ्गजान् प्रवक्ष्यामि नागानन्यानपि क्रमात् ॥२१२॥

---

१ पुत्रायेति ख०, ग० च ।
१ ह्यैडविडस्येति ङ० ।
२ पद्मोत्तरः पद्मवांश्चेति ङ० ।

कपिलः पुण्डरीकश्च सुमनाभो रथान्तरः ।
जातौ नाम्ना सुतौ ताभ्यां सुप्रतिष्ठप्रमर्द्दनौ ॥२१३॥
स्थूला: स्थूलाः शिरोदान्ताः शुद्धबालनखास्तथा ।
बलिनः शक्तिनश्चैव स्मृतास्त्वाकुलिका गजाः ॥२१४॥
पुष्पदन्तो वृहत्सामा षड्दन्तो दन्तपुष्पवान् ।
ताम्रवर्णी च तत्पुत्रः सहचारिविषाणितः[१] ॥२१५॥
अन्वये चास्य जायन्ते लम्बोष्ठाश्चारुदर्शिनः ।
श्यामाः सुदर्शनाश्चण्डा नानापीड़ायताननाः ॥२१६॥
वामदेवोऽञ्जनश्यामः साम्नो जज्ञेऽथ वामनः ।
भार्य्या चैवाङ्गदा तस्य नीलवक्त्रचणौ सुतौ ॥२१७॥
चण्डाश्चारुशिरोग्रीवा व्यूढोरस्कास्तरस्विनः ।
नरैर्बद्धाः कुले तेषां जायन्ते विक्रता गजाः ॥२१८॥
सुप्रतीकस्तु रूपेण नास्त्यस्य सदृशो गजः ।
तस्य प्रहारी सम्पाती पृथुश्चिन्तिसुतास्त्रयः ॥२१९॥
पशवो दीर्घताल्वोष्ठा सुविभक्तशिरोदराः ।
जायन्ते मृदुसम्भूता वंशे तस्य मतङ्गजाः ॥२२०॥
अञ्जनादञ्जना साम्नो विजज्ञे चाञ्जनावती ।
एवं माता तयोश्चापि प्रथितायुरजः सुतौ ॥२२१॥
महाविभक्तशिरसः स्निग्धजीमूतसन्निभाः ।

१ सहचारिविषादक इति ग० । सहचारिविषाणिन इति ख०, ङ० च ।

सुदर्शनाः सुवर्माणः पद्माभाः परिमण्डलाः।
शूनाः पीतायतमुखा गजास्तस्यान्वयेऽभवन् ॥२२२॥
जज्ञे चन्द्रमसः साम्नः पिङ्गला कुमुदद्युतिः।
पिङ्गलायाः सुतौ तस्या महापद्मोर्मिमालिनौ ॥२२३॥
समायतरदांस्तुण्डान् प्रवृद्धवलिनोदरान्।
हस्तियुद्धे प्रियान्नागान् विद्धि तस्य कुलोद्भवान् ॥२२४॥
एतान् देवासुरे युद्धे जयार्थं जगृहुः सुराः।
कृतार्थैश्च विसृष्टास्तैः पूर्वोक्ताः प्रययुर्दिशः ॥२२५॥
एतेषामन्वये जातान् विनीतांस्त्रिदशा ददुः।
अङ्गाय लोमपादाय सूत्रकाराय वै द्विपान् ॥२२६॥
द्विरदो द्विरदाभ्याञ्च हस्ताद्धस्ती करात् करी।
वरणाद्वारणो दन्ती दन्ताभ्यां गर्जनाद्गजः ॥२२७॥
कुञ्जरः कुञ्जचारित्वान्नागो नगविरोधतः।
मतङ्गादिति मातङ्गो द्विपो द्वाभ्यामपि स्मृतः।
सामजः सामजातत्वादिति निर्वचनक्रमः ॥२२८॥
एषां जिह्वापरावृत्तिरिवाक्षं[१] ह्यग्निशापजं।
बलस्यानवतो या तु[२] या चैषाङ्गूढमुष्कता।
उभयं दन्तिनामेतत् स्वयम्भूसुरशापजं ॥२२९॥
देवदानवगन्धर्वाः पिशाचोरगराक्षसाः।
कन्यासु जाता दिङ्नागैर्नानासत्त्वास्ततो गजाः ॥२३०॥

१ पाठोऽयं आदर्शसम्मतो मुद्रितः। परन्त्वयं न समीचीनः।
१ अयमप्यादर्शदोषेणासमीचीन एव मुद्रितः।

सम्भूतिश्च प्रभूतिश्च नामनिर्वचनन्तथा ।
एतद्गजानां विज्ञेयं येषां राजा विभावसुः ॥२३१॥
कौशिकाद्याः समुद्रान्तु गङ्गायास्तदनन्तरं ।
अञ्जनस्यैकमूलस्य प्राच्यान्नागवनन्तु तत् ॥२३२॥
उत्तरा तस्य विन्ध्यस्य गङ्गाया दक्षिणश्च यत् ।
गङ्गोद्भेदात्करूषेभ्यः सुप्रतीकस्य तद्वनं ॥२३३॥
अपरेणोत्कलाच्चैव ह्यावेदिभ्यश्च पश्चिमं ।
एकभूतात्मतस्यैतद्वामनस्य वनं स्मृतं ॥२३४॥
अपरेण तु लौहित्यमासिन्धोः पश्चिमेन तु ।
यमस्यैतद्वनं प्रोक्तमनुपर्वतमेव तत् ॥२३५॥
भूतिर्विजज्ञे भूतांश्च रुद्रस्यानुचरान् प्रभो ।
स्थूलान् कृशांश्च दीर्घांश्च वामनान् ह्रस्वकान् समान् ॥२३६॥
लम्बकर्णान् प्रलम्बोष्ठान् लम्बजिह्वास्तनोदरान् ।
एकरूपान् द्विरूपांश्च लम्बस्फिक्स्थूलपिण्डिकान् ॥२३७॥
सरोवरसमुद्रादिनदीपुलिनवासिनः ।
कृष्णान् गौरांश्च नीलांश्च श्वेतांश्च लोहितारुणान् ॥२३८॥
बभ्रून् वै शबलान् धूम्राम् कद्रून् रासभदारुणान् ।
मुञ्जकेशान् हृषीकेशान् सर्पयज्ञोपवीतिनः ॥२३९॥
विरूपाक्षान् विरूपाक्षान् कृशाक्षानेकलोचनान् ।
बहुशीर्षान् विशीर्षांश्च एकशीर्षांश्च शीर्षकान् ॥२४०॥
चण्डांश्च विकटांश्चैव विरोमान् रोमशांस्तथा ।
अन्धांश्च जटिलांश्चैव कुब्जान् छेपकवामनान् ॥२४१॥

सरोवरसमुद्रादिनदीपुलिनसेविनः ।
एककर्णान् महाकर्णान् शङ्कुकर्णानऽकर्णिकान् ॥२४२॥
दंष्ट्रिणो नखिनश्चैव निर्द्दन्तांश्च द्विजिह्वकान् ।
एकहस्तान् द्विहस्तांश्च त्रिहस्तांश्चाप्यहस्तकान् ॥२४३॥
एकपादान् द्विपादांश्च त्रिपादान् बहुपादकान् ।
महायोगान् महासत्त्वान् सुतपस्कान् महाबलान् ॥२४४॥
सर्वत्रगानऽप्रतिघान्(१) ब्रह्मज्ञान् कामरूपिणः ।
घोरान् क्रूरांश्च मेध्यांश्च शिवान् पुण्यान् सवादिनः(२)॥२४५॥
कुशहस्तान् महाजिह्वान् महाकर्णान्महाननान् ।
हस्तादांश्च मुखादांश्च शिरोऽदांश्च कपालिनः ॥२४६॥
धन्विनो मुद्गरधरानऽसिशूलधरांस्तथा ।
दीप्तास्यान् दीप्तनेत्रांश्च चित्रमाल्यानुलेपनान् ॥२४७॥
अन्नादान् पिशितादांश्च बहुरूपान् सुरूपकान् ।
रात्रिसन्ध्याचरान् घोरान् क्वचित्सौम्यान् दिवाचरान् ।
नक्तञ्चरान् सुदुःप्रेक्ष्यान् घोरांस्तान् वै निशाचरान् ॥२४८॥
परत्वे च भयं दैवं सर्वे ते गतमानसाः ।
नैषां भार्याऽस्ति पुत्रो वा सर्वे ते ह्यूर्द्ध्वरेतसः ॥२४९॥
शतन्तानि सहस्राणि भूतानामात्मयोगिनां ।
एते सर्वे महात्मानो भूत्याः पुत्राः प्रकीर्त्तिताः ॥२५०॥
कपिशा चैव कुश्माण्डी कुश्माण्डान् जज्ञिरे पुनः ।

---

१ सर्व्वत्रगानप्रतिमानिति ख० ।
२ पुण्यदान् सत्यवादिन इति ख० ।

मिथुनानि पिशाचानां वर्णेन कपिशेन च।
कपिशत्वात् पिशाचास्ते सर्वे च पिशिताशनाः[१] ॥२५१॥
युग्मानि षोड़शान्यानि वर्त्तमानास्तदन्वयाः।
नामतस्तान् प्रवक्ष्यामि पुरुषादांस्तदन्वयान्[२] ॥२५२॥
छगलः छगली चैव[३] वक्रो वक्रमुखी तथा।
षोडशानां गणा चैव सूची सूचीमुखस्तथा ॥२५३॥
कुम्भपात्रश्च कुम्भी च वज्रदंष्ट्रश्च दुन्दुभिः।
उपचारोपचारश्च उलूखल उलूखली ॥२५४॥
अनर्कश्च अनर्का च कुखण्डश्च कुखण्डिका।
पाणिपात्रः पाणिपात्री पांशुः पांशुमती तथा ॥२५५॥
नितुण्डश्च नितुण्डी च निपुणा निपुणस्तथा।
छलादोच्छेषणा चैव[४] प्रस्कन्दः स्कन्दिका तथा।
षोडशानां पिशाचानां गणाः प्रोक्तास्तु षोडश ॥२५६॥
अजामुखा वक्रमुखाः पूरिणः स्कन्दिनस्तथा।
विपादाङ्गारिकाश्चैव कुम्भपात्राः प्रकुन्दकाः ॥२५७॥
उपचारोलूखलिका ह्यनर्काश्च कुखण्डिकाः।
पाणिपात्राश्च नैतुण्डाः ऊर्णाशा निपुणास्तथा ॥२५८॥
सूचीमुखोच्छेषणादाः कुलान्येतानि षोडश।

---

१ पिशिताश्चङ्‌मदाशना इति ख०।
२ पृच्छाध्वं धरणीसुरा इति ग०।
३ गच्छलो गच्छलो चैवेति ङ०।
४ पाठोऽयं न समीचीनः।

इत्येता ह्यभिजातास्तु कुष्माण्डानां प्रकीर्त्तिताः ॥२५९॥
पिशाचास्ते तु विज्ञेयाः सुकल्या इति जज्ञिरे ।
वीभत्सं विकृताचारं पुत्रपौत्रमनन्तकं ।
अतस्तेषां पिशाचानां लक्षणञ्च निबोधत ॥२६०॥
सर्वाङ्गकेशा वृत्ताक्षा दंष्ट्रिणो नखिनस्तथा ।
तिर्य्यङ्गाः पुरुषादाश्च पिशाचास्ते ह्यधोमुखाः ॥२६१॥
अकेशका ह्यरोमाणस्त्वग्वसाश्चर्मवाससः ।
कुशाण्डिकाः पिशाचास्ते तिलभक्षाः सदामिषाः ॥२६२॥
वक्राङ्गहस्तपादाश्च वक्रशीलागतास्तथा ।
ज्ञेया वक्रपिशाचास्ते वक्रगाः कामरूपिणः ॥२६३॥
लम्बोदरास्तुण्डनाशा ह्रस्वकायशिरोभुजाः ।
नितुन्दकाः पिशाचास्ते तिलतक्षाः प्रियश्रवाः ॥२६४॥
वामनाकृतयश्चैव वाचालाः प्लुतगामिनः ।
पिशाचानर्कमर्कास्ते वृक्षवासादनप्रियाः ॥२६५॥
ऊर्द्धवाहूर्द्धरोमाण ऊर्द्धवृक्षास्तथालयाः ।
मुञ्चन्ति पांशूनङ्गेभ्यः पिशाचाः पांशवश्च ते ॥२६६॥
धमनीमतकाः[१] शुष्काः श्मश्रुलाश्चीरवाससः ।
उपवीराः पिशाचाश्च श्मशानायतनास्तथा ॥२६७॥
विष्टब्धाक्षा महाजिह्वा लेलिहाना ह्युदूखलाः[२] ।
ह्रस्वुद्धस्थूलशिरसो विरता बद्धपिण्डकाः ॥२६८॥

---

१ धमनीमन्तका इति क० ।
२ ह्युलूखला इति ङ० ।

पिशाचाः कुम्भपाचास्ते अदृष्टान्नानि भुञ्जते ।
सूक्ष्मास्तु रोमशाः पिङ्गा दृष्टादृष्टाश्चरन्ति वै ॥२६९॥
अयुक्ताश्च विशन्तीह निपुणास्ते पिशाचकाः ।
आकर्णदारितास्याश्च लम्बभ्रूस्थूलनाशिकाः ॥२७०॥
हस्तपादाक्रान्तगणा ह्रस्वकाः चितिदृष्टयः ।
बालादास्ते पिशाचा वै सूतिकागृहसेविनः ॥२७१॥
पृष्ठतः पाणिपादाश्च ह्रस्वका वातरंहसः ।
पिशितादाः पिशाचास्ते संग्रामे रुधिराशिनः ॥२७२॥
नग्नका ह्यनिकेताश्च लम्बकेशाश्च पिण्डकाः ।
पिशाचाः स्कन्दिनस्ते वै अन्या उच्छ्रसनाशिनः ।
षोडश जातयस्तेषां पिशाचानां प्रकीर्त्तिताः ॥२७३॥
एवं विधान् पिशाचांस्तु दीनान् दृष्ट्वानुकम्पया ।
तेभ्यो ब्रह्मा वरं प्रादात्कारुण्यादल्पचेतसः ।
अन्तर्द्धानं प्रजास्तेषां कामरूपत्वमेव च ॥२७४॥
उभयोः सन्ध्ययोश्चारं स्थानान्याजीवमेव च ।
गृहाणि यानि भग्नानि शून्यान्यल्पजनानि च ॥२७५॥
विध्वस्तानि च यानि स्युरनाचारोषितानि च ।
असंसृष्टोपलिप्तानि[१] संस्कारैर्वर्जितानि च ॥२७६॥
राजमार्गोपरथ्याश्च निष्कुण्ठाश्चत्वराणि च ।
द्वाराण्यट्टालकाश्चैव निर्ममान् संक्रमांस्तथा ॥२७७॥

---

१ असंस्पर्शोपलेपानीति ख० ।

पथो नद्योऽथ तीर्थानि चैत्यवृक्षान् महापथान् ।
पिशाचा विनिविष्टा वै स्थानेष्वेतेषु सर्वशः ॥२७८॥
अधार्मिका जनास्ते वै आजीवा विहिताः सुरैः ।
वर्णाश्रमाः सङ्करिकाः कारुशिल्पिजनास्तथा ॥२७९॥
अनृतोपमसत्त्वानां चौरविश्वासघातिनां ।
एतैरन्यैश्च बहुभिरन्यायोपार्ज्जितैर्धनैः ।
आरभन्ते क्रिया यास्तु पिशाचास्तत्र देवताः ॥२८०॥
मधुमांसौदनैर्दध्ना तिलचूर्णसुरासवैः ।
धूपैर्हारिद्रकृशरैस्तैलभद्रगुडौदनैः ॥२८१॥
कृष्णानि चैव वासांसि धूपाः सुमनसस्तथा ।
एवं युक्ताः सुबलयस्तेषां वै पर्वसन्धिषु ।
पिशाचानामनुज्ञाय ब्रह्मा सोऽधिपतिर्ददौ ॥२८२॥
सर्वभूतपिशाचानां गिरिशं शूलपाणिनं ।
दृष्ट्वा त्वजनयत् पुत्रान् व्याघ्रान् सिंहांश्च भामिनी[१]॥२८३॥
द्वीपिनश्च सुतास्तस्या व्यालेयाश्चामिषाशिनः ।
ऋषयश्चापि कार्त्स्न्येन प्रजासर्गं निबोधत ।
तस्या दुहितरः पञ्च तासान्नामानि मे शृणु ॥२८४॥
मीना माता तथा वृत्ता परिवृत्ता तथैव च ।
अनुवृत्ता तु विज्ञेया तासां वै शृणुत प्रजाः ॥२८५॥
सहस्रदन्ता मकराः पाठीनास्तामरोहिताः ।

---

१ भाविनीति ख० ।

इत्येवमादिर्हि गणो मैनो विस्तीर्ण उच्यते ॥२८६॥
ग्राहाश्चतुर्विधा ज्ञेया तथानुज्येष्ठका अपि।
निष्कांश्च शिशुमारांश्च माता व्यजनयत् प्रजाः ॥२८७॥
वृत्ता कूर्मविकाराणि नैकानि जलचारिणां।
तथा शङ्खविकाराणि जनयामास नैकशः ॥२८८॥
मण्डूकानां विकाराणि अनुवृत्ता व्यजायत।
ऐणेयानां विकाराणि शम्बूकानां तथैव च ॥२८९॥
तथा शुक्तिविकाराणि वराटककृतानि च।
तथा शङ्खविकाराणि[१] परिवृत्ता व्यजायत ॥२९०॥
कालकूटविकाराणि जलौकविहितानि च।
इत्येष हि ऋषेर्वंशः पञ्चशाखाः प्रकीर्त्तिताः ॥२९१॥
तिर्य्यक् हेतुकमाद्याऊर्वङ्कलं वंशविस्तरं।
संस्वेदजविकाराणि यथा येभ्यो भवन्ति ह ॥२९२॥
स्वस्तिपिकशरीरेभ्यो जायन्त्युत्पादका द्विजाः।
मनुष्याः स्वेदमलजाः[२] उशना नाम जन्तवः।
नानापिपीलिकगणाः कीटका बहुपादकाः ॥२९३॥
शङ्खोपलविकाराणि कीलकाचारकाणि च।
इत्येवमादिबहुलाः स्वेदजाः पार्थिवा गणाः ॥२९४॥
तथा घर्मादितप्ताभ्यस्त्वद्भ्यो वृष्टिभ्य एव च।

१ "तथा शङ्खविकाराणि" इत्ययं पाठः स्थानद्वये स्थितत्वादेकत्रासङ्गतः।
२ स्वेदजलजा इति ङ०।

नैका मृगशरीरेभ्यो जायन्ते जन्तवस्त्विमे ॥२९५॥
मीनकाः पिप्पला दंशास्तथा तिन्तिरपुत्रिकाः ।
नीलमित्तिकाश्च जायन्ते ह्युलका बहुविस्तराः ॥२९६॥
जलजाः स्वेदजाश्चैव जायन्ते जन्तवस्त्विमे ।
काशतो यज्ञकाः कीटनलदा वहुपादकाः ॥२९७॥
सिंहला रोमलाश्चैव पिच्छलाः परिकीर्त्तिताः ।
इत्येवमादिर्हि गणो जलजः स्वेदजः स्मृतः ॥२९८॥
सर्पिर्भ्यो माषमुद्गानां जायन्ते क्रमशस्तथा ।
जम्बुबिल्वाम्रपूगेभ्यः फलेभ्यश्चैव जन्तवः ॥२९९॥
मुद्गेभ्यः पनसेभ्यश्च तण्डुलेभ्यस्तथैव च ।
तथा कोटरशुष्केभ्यो निहितेभ्यो भवन्ति हि ॥३००॥
अन्येभ्योऽपि च जायन्ते न हि तेभ्यश्चिरं सदा ।
जन्तवस्तुरगादिभ्यो विषादिभ्यस्तथैव च ॥३०१॥
वह्न्यहानि निक्षिप्ते सम्भवन्ति च गोमये ।
जायन्ते क्रमशो विप्रा काष्ठेभ्यश्च घुणादयः ॥३०२॥
क्रमा द्रुमाणां जायन्ते विविधा नीलमक्षिकाः ।
तथा शुष्कविकारेभ्यः पुत्रिकाः प्रभवन्ति च ॥३०३॥
कालिका शतिकेभ्यश्च[१] सर्पा जायन्ति सर्वशः ।
संस्वेदजाश्च जायन्ते वृश्चिकाः शुष्कगोमयात् ॥३०४॥
गोभ्यो हि महिषेभ्यश्च जायन्ते जन्तवः प्रभो ।

---

१ पाठोऽयं न समीचीनः ।

मत्स्यादयश्च विविधा अण्डकुच्चौ विशेषतः ॥२०५॥
चैवीरिकाश्च जायन्ते तथा गोजाकुलानि च ।
तथान्यानि च सूक्ष्माणि जलौकादीनि जातयः ॥२०६॥
मक्षिकाणां विकाराणि जायन्ते जातयोऽपरे ।
प्रायेण तु वसन्त्यस्मिन् उच्छिष्टोदककर्द्दमे ॥२०७॥
मशकानां विकाराणि भ्रमराणां तथैव च ।
तृणेभ्यश्चैव जायन्ते पुत्रिकापुत्र × × (१) सकाः ॥२०८॥
मणिच्छेदास्तथा व्यालाः पोतजाः परिकीर्त्तिताः ।
शतवेरिविकाराणि किरीषेभ्यो भवन्ति च ॥२०९॥
एवमादिरसंख्यातो गणः संस्वेदजो मया ।
समासाभिहितो ह्येष प्राक्कर्म्मवशजः स्मृतः ॥२१०॥
तथाऽन्ये नैर्ऋताः सत्त्वास्ते स्मृता उपसर्गजाः ।
भूतास्तु योनिजाः केचित्केचिदौत्पत्तिकाः स्मृताः ॥२११॥
प्रायेण देवाः सर्वे वै विज्ञेया ह्युपपत्तिजाः ।
केचित्तु योनिजा देवाः केचिद्देवानिमित्ततः ॥२१२॥
तुलालाघश्च कोलश्च शिवा कन्या तथैव च ।
अपत्यं सरमायास्तु गणा वै सरमादयः ॥२१३॥
श्यामश्च शबलश्चैव अर्जुनो हरितस्तथा ।
कृष्णो धूम्रारुणश्चैव तुलालाघश्च कद्रुकाः ॥२१४॥
सुरसाऽथ विजज्ञे तु शतमेकं शिरो मतं ।

---

१ अथाक्षरद्वयं सर्व्वेष्वादर्शपुस्तकेषु पतितं ।

सर्पाणान्तक्षको राजा नागानाञ्चापि वासुकिः ।
तमोवस्थल इत्येष गणः क्रोधवशात्मकः ॥२१५॥
पुलहस्यात्मजात्सर्गंस्ताम्रायास्तन्निबोधत ।
षट्कन्यास्त्वभिविख्यातास्ताम्रायाश्च विजज्ञिरे ॥२१६॥
श्येनी भासी तथा क्रौञ्ची धृतराष्ट्री शुकी तथा ।
अरुणस्य भार्या श्येनी तु वीर्यवन्तौ महाबलौ ।
सम्पातिश्च जटायुश्च प्रसूता पक्षिसत्तमौ ॥२१७॥
सम्पातिरजनत् पुत्रं कन्यामेकान्तथैव च ।
जटायुषश्च ये पुत्राः काकगृध्राश्वकर्णिनः ॥२१८॥
भार्य्या गरुत्मतश्चापि भासी क्रौञ्ची तथा शुकी ।
धृतराष्ट्री च भद्रा च तास्वपत्यानि वक्ष्यते ॥२१९॥
शुकी गरुत्मतः पुत्रान् सुषुवे षट् परिश्रुतान् ।
त्रिशिरं सुमुखञ्चैव बलं पृष्ठं महाबलं ॥२२०॥
त्रिशङ्कुनेत्रं सुमुखं सुरूपं सुरसं बलं ।
एषां पुत्राश्च पौत्राश्च गरुडानां महात्मनां ॥२२१॥
चतुर्दश सहस्राणि क्रूराणां पन्नगाशिनां ।
पुत्रपौत्रविसर्गाच्च तेषां वै वंशविस्तरः ॥२२२॥
व्याप्तानि यानि देशानि तानि वक्ष्ये यथाक्रमं ।
शाल्मलिद्वीपमखिलं देवकूटञ्च पर्वतं ॥२२३॥
मणिमन्तञ्च[१] शैलेन्द्रं सहस्रशिखरं तथा ।

---

१ मणियन्तञ्चेति ङ० ।

पर्णमालं सुवेशञ्च शतशृङ्गं तथाऽचलं ॥२२४॥
कौरजं पद्मशिखरं हेमकूटञ्च पर्व्वतं ।
प्रचण्डवायुप्रभवैर्द्दीपितैः पद्मरागिभिः ॥२२५॥
शैलजालानि व्याप्तानि गारुडैस्तैर्महात्मभिः ।
भासीपुत्राः स्मृता भासा उलूकाः काककुक्कुटाः[१] ॥२२६॥
मयूराः कलविङ्काश्च कपोता लावतित्तिराः ।
क्रौञ्ची वार्द्ध्रीणसान् श्येनी कुररान् सारसान् वकान्॥२२७॥
इत्येवमाद्योन्येऽपि क्रव्यादा ये च पक्षिणः ।
धृतराष्ट्री च हंसांश्च कलहंसांश्च भामिनी ॥२२८॥
चक्रवाकांश्च विहगान् सर्वांश्चैवादकान् द्विजान् ।
एतानेव विजज्ञेऽथ पुत्रपौत्रमनन्तकं ॥२२९॥
गरुडस्यात्मजाः प्रोक्ता इरायाः शृणुत प्रजाः ।
इरा प्रजज्ञे कन्या वै तिस्रः कमललोचनाः ॥२३०॥
वनस्पतीनां वृक्षाणां वीरुधाञ्चैव मातरः ।
लता चैवाथ वल्ली च वीरुधा चेति तास्तु वै ॥२३१॥
लता वनस्पतीन् जज्ञे ह्यपुष्पान् पुलिनस्थितान् ।
युक्तान् पुष्पफलैर्वृक्षान् लता वै सम्प्रसूयते ॥२३२॥
अथ वल्ली तु गुल्मांश्च त्वक्सारास्तृणजातयः ।
वीरुधा तदपत्यानि वंशश्चात्र समाप्यते ॥२३३॥
एते कश्यपदायादा व्याख्याताः स्थाणुजङ्गमाः ।

---

१ उलूकाश्चैव कुक्कुटा इति ख० ।

तेषां पुत्राश्च पौत्राश्च येरिदं पूरितं जगत् ॥२२४॥
इति सर्गैकदेशस्य कीर्त्तितोऽवयवो मया ।
मारीचोऽयं प्रजासर्गः समासेन प्रकीर्त्तितः ।
न शक्यं व्यासतो वक्तुमपि वर्षशतैर्द्विजाः ॥२२५॥
अदितिर्धर्म्मशीला तु बलशीला दितिः स्मृता ।
तपःशीला तु सुरभिर्मायाशीला दनुः स्मृता ॥२२६॥
क्रूरशीला तथा कद्रुः क्रोधाऽथ श्रुतिशालिनी ।
इरा ग्रहणशीला तु दनायुर्भक्षणे रता ॥२२७॥
वाहशीला तु विनता ताम्रा वै पाशशालिनी ।
स्वभावा लोकमातॄणां शीलान्येतानि सर्वशः ॥२२८॥
धर्मतः शीलतो बुद्ध्या क्षमया बलरूपतः ।
रजःसत्त्वतमोवृत्ता धार्मिकाधार्मिकास्तु वै ॥२२९॥
मातृतुल्याश्चाभिजाताः कश्यपस्यात्मजाः प्रजाः ।
देवतासुरगन्धर्वा यक्षराक्षसपन्नगाः ।
पिशाचाः पशवश्चैव मृगाः पतङ्गवीरुधः ॥२३०॥
यस्माद्दाक्षायणीष्वेते जज्ञिरे मानुषीष्विह(१) ।
मन्वन्तरेषु सर्वेषु तस्माच्छ्रेष्ठास्तु मानुषाः ॥२३१॥
धर्मार्थकाममोक्षाणां मानुषाः साधकास्तु वै ।
ततोऽधःस्रोतसस्ते वै उत्पद्यन्ते सुरासुराः ॥२३२॥
जायन्ते कार्यसिद्ध्यर्थं मानुषेषु पुनः पुनः ।

---

१ मद्दिशीष्विहेति ख० ।

इत्येव वंशप्रभवः प्रसङ्ख्यातस्तपस्विनां ॥२४३॥
सुराणामसुराणाञ्च गन्धर्व्वाप्सरसां तथा ।
यक्षरक्षःपिशाचानां सुपर्णोरगपक्षिणां ॥२४४॥
व्यालानां शिखिनाञ्चैव(१) ओषधीनाञ्च सर्वशः ।
कृमिकीटपतङ्गानां क्षुद्राणां जलजाश्च ये ।
पशूनां ब्राह्मणानाञ्च श्रीमतां पुण्यलक्षणं ॥२४५॥
आयुष्यश्चैव धन्यश्च श्रीमान् हितसुखावहः ।
श्रोतव्यश्चैव सततं ग्राह्यश्चैवानुसूयता ॥२४६॥

इमन्तु वंशं नियमेन यः पठेत्
महात्मनां ब्राह्मणवैद्यसंसदि ।
अपत्यलाभं हि लभेत् सुपुष्कलं
श्रियं धनं प्रेत्य च शोभनां गतिं ॥२४७॥

इति श्रीमहापुराणे वायुप्रोक्ते कश्यपीयप्रजासर्गो नामाष्टमोऽध्यायः ।

---

१ व्यालानाञ्चैव सर्व्वेषामिति ख० ।

# अथ नवमोऽध्यायः।

ऋषिवंशानुकीर्त्तनं।

सूत उवाच। एवं प्रजासु सृष्टासु कश्यपेन महात्मना।
प्रतिष्ठितासु सर्वासु स्थावरासु चरासु च ॥१॥
अभिषिच्याधिपत्येषु तेषां मुख्यः प्रजापतिः।
ततः क्रमेण राज्यानि व्यादेष्टुमुपचक्रमे ॥२॥
द्विजातीनां वीरुधाञ्च नक्षत्राणां ग्रहैः सह।
यज्ञानां तपसाञ्चैव सोमं राज्येऽभ्यषेचयत् ॥३॥
बृहस्पतिन्तु विश्वेषां ददावङ्गिरसां पतिं।
भृगूणामधिपञ्चैव काव्यं राज्येऽभ्यषेचयत् ॥४॥
आदित्यानां पुनर्विष्णुं वसूनामथ पावकं।
प्रजापतीनां दक्षञ्च मरुतामथ वासवं ॥५॥
दैत्यानामथ राजानं प्रह्लादं दितिनन्दनं।
नारायणन्तु साध्यानां रुद्राणां वृषभध्वजं ॥६॥
विप्रचित्तिञ्च राजानं दानवानामथादिशत्।
अपान्तु वरुणं राज्ये राज्ञां वैश्रवणं पतिं।
यक्षाणां राक्षसानाञ्च पार्थिवानां धनस्य च ॥७॥
वैवस्वतं पितॄणाञ्च यमं राज्येऽभ्यषेचयत्।
सर्वभूतपिशाचानां गिरिशं शूलपाणिनं ॥८॥

शैलानां हिमवन्तञ्च नदीनामथ सागरं।
गन्धर्वाणामधिपतिं चक्रे चित्ररथं तदा ॥९॥
उच्चैःश्रवसमश्वानां राजानञ्चाभ्यषेचयत्।
मृगाणामथ शार्दूलं गोवृषञ्च चतुष्पदां ॥१०॥
पक्षिणामथ सर्वेषां गरुड़ं पततां वरं।
गन्धानां मातुलञ्चैव भूतानामशरीरिणां ॥११॥
शब्दाकाशबलानाञ्च वायुं बलवतां वरं।
सर्वेषां दंष्ट्रिणां शेषं नागानामथ वासुकिं ॥१२॥
सरीसृपाणां सर्पाणां नागानाञ्चैव तक्षकं।
सागराणां नदीनाञ्च मेघानां वर्षितस्य च[1]।
आदित्यानामन्यतमं पर्जन्यमभिषिक्तवान् ॥१३॥
सर्वाप्सरोगणानाञ्च कामदेवं तथैव च[2]।
ऋतूनामथ मासानामार्त्तवानां तथैव च ॥१४॥
पक्षाणाञ्च विपक्षाणां मुहूर्त्तानाञ्च पर्वणां।
कलाकाष्ठाप्रमाणानां गतेरयनयोस्तथा।
गणितस्याथ योगस्य चक्रे संवत्सरं प्रभुं ॥१५॥
प्रजापतिर्वै रजसः पूर्वस्यान्दिशि विश्रुतं।
पुत्रं नाम्ना सुधामानं राजानं सोऽभ्यषेचयत् ॥१६॥
पश्चिमस्यान्दिशि तथा रजसः पुत्रमच्युतं।
केतुमन्तं महात्मानं राजानं सोऽभ्यषेचयत् ॥१७॥

---

१ पाठोऽयं न समीचीनः।
२ तथा प्रसुमिति ख०।

मनुष्याणामधिपतिं चक्रे चैव सुतं मनुं ।
तैरियं पृथिवी सर्वा सप्तद्वीपा सपत्तना ।
यथाप्रदेशमद्यापि धर्मेण परिपाल्यते ॥१८॥
स्वायम्भुवेऽन्तरे पूर्वं ब्रह्मणा तेऽभिषेचिताः ।
नृपा ह्येतेऽभिषिच्यन्ते मनवो ये भवन्ति वै ॥१९॥
मन्वन्तरेष्वतीतेषु गता ह्येतेषु पार्थिवाः ।
एवमन्येऽभिषिच्यन्ते प्राप्ते मन्वन्तरे पुनः ।
अतीतानागताः सर्वे स्मृता मन्वन्तरेश्वराः ॥२०॥
राजसूयेऽभिषिक्तश्च पृथुरेभिर्नरोत्तमैः ।
वेददृष्टेन विधिना कृतो राजा प्रतापवान् ॥२१॥
एतानुत्पाद्य पुत्रांस्तु प्रजासन्तानकारणात् ।
पुनरेव महाभागः प्रजानां पतिरीश्वरः ॥२२॥
कश्यपो गोत्रकामस्तु चचार परमन्तपः ।
पुत्रौ गोत्रकरौ मह्यं भवेतामित्यऽचिन्तयत् ॥२३॥
तस्य प्रध्यायमानस्य कश्यपस्य महात्मनः ।
ब्रह्मणोंऽशौ सुतौ पश्चात् प्रादुर्भूतौ महौजसौ ॥२४॥
वत्सारश्चासितश्चैव तावुभौ ब्रह्मवादिनौ ।
वत्साराद्मिध्रुवो जज्ञे रैभ्यश्च स महायशाः ॥२५॥
रैभ्यस्य रैभ्या विज्ञेया निध्रुवस्य निबोधत ।
च्यवनस्य सुकन्यायां सुमेधाः समपद्यत ॥२६॥
निध्रुवस्य तु या पत्नी माता वै कुण्डपायिनां ।
असितस्यैकपर्णायां ब्रह्मिष्ठः समपद्यत ॥२७॥

शाण्डिल्यानां वचः श्रुत्वा देवलः सुमहायशाः ।
निध्रुवाः शाण्डिल्या रैभ्यास्त्रयः पश्चात्तु काश्यपाः ॥२८॥
वरप्रभृतयो देवा देवलस्य प्रजास्त्विमाः ।
चतुर्युगे त्वतिक्रान्ते मनोर्ह्येकादशे प्रजाः ।
अथावशिष्टे तस्मिंस्तु द्वापरे सम्प्रवर्तते ॥२९॥
मानसस्य चरिष्यन्तस्तस्य पुत्रो दमः किलः ।
मानसस्तस्य दायादस्तृणविन्दुरिति श्रुतः[१] ॥३०॥
त्रेतायुगमुखे राजा तृतीये सम्बभूव ह ।
तस्य कन्या त्विड़िविला रूपेणाप्रतिमा भवेत् ।
पुलस्त्याय स राजर्षिस्तां कन्यां प्रत्यपादयत् ॥३१॥
ऋषिरिड़िविलायान्तु विश्रवाः समपद्यत ।
तस्य पत्न्यश्चतस्रस्तु पौलस्त्यकुलवर्द्धनाः ॥३२॥
बृहस्पतेर्बृहत्कीर्तिर्देवाचार्यस्य कीर्तितः ।
कन्यान्तस्योपयमे स नाम्ना वै देववर्णिनी ॥३३॥
पुष्पोत्कटाश्च वाकाश्च सुते माल्यवतः स्थितौ ।
केकसी[२] मालिनः कन्यां तासान्तु शृणुत प्रजाः[३]॥३४॥
ज्येष्ठं वैश्रवणन्तस्य सुषुवे देववर्णिनी ।
दिव्येन विधिना युक्तमार्षेणैव श्रुतेन च ।

१ स्मृत इति ख०, ग० च ।
२ कैकसिमिति ङ० । कैकयीमिति क० ।
३ कन्यान्तस्योपयेमे स इत्यादिः शृण्वुत प्रजा इत्यन्तः पाठः न पूर्वापर-सङ्गतः ।

राक्षसेन च रूपेण आसुरेण बलेन च ॥२५॥
(त्रिपादं सुमहाकायं स्थूलशीर्षं महाननं ।
अष्टदंष्ट्रं हरित्श्मश्रुं शङ्कुकर्णं विलोहितं ॥२६॥
ह्रस्वबाहुं प्रबाहुञ्च पिङ्गलं सुविभीषणं ।
वेदज्ञानसम्पन्नं सम्बुद्धं ज्ञानसम्पदा ॥२७॥
एवंविधं सुतं दृष्ट्वा विश्वरूपधरं तथा ।
पिता दृष्ट्वाब्रवीत् तत्र कुवेरोऽयमिति स्वयं ॥ २८॥
कुत्सायां क्वितिशब्दोऽयं शरीरं वेरमुच्यते ।
कुवेरः कुशरीरत्वान्नाम्ना तेन च सोऽङ्कितः ॥२९॥
यस्माद्विश्रवसोऽपत्यं सादृश्याद्विश्रवा इव ।
तस्माद्वैश्रवणो नाम नाम्ना लोके भविष्यति ॥४०॥)
ऋद्ध्यां कुवेरोऽजनयद्विश्रुतं नलकूवरं ।
रावणं कुम्भकर्णञ्च कन्यां शूर्पनखान्तथा ।
विभीषणं चतुर्थांस्तान् कैकस्यजनयत् सुतान् ॥४१॥
शङ्कुकर्णो दशग्रीवः पिङ्गलो रक्तमूर्द्धजः ।
चतुष्पाद्विंशतिभुजो महाकायो महाबलः ॥४२॥
जात्याञ्जननिभो दंष्ट्री लोहितग्रीव एव च ।
राजसेनो जययुक्तः(१) रूपेण च बलेन च ॥४३॥
सत्यबुद्धिर्दृढतनूराक्षसैरेव(२) रावणः ।
निसर्गाद्दारुणः क्रूरो रावणाद्रावणस्तु सः ॥४४॥

---

१ राजसेनोऽज्ञसायुक्त इति ङ० ।
२ सत्यबुद्धिः श्रुतैर्यच्चैराक्षसैरेवेति ङ० ।

हिरण्यकशिपुस्त्वासीत् स राजा पूर्वजन्मनि[१] ।
चतुर्युगानि राजाच[२] त्रयोदश स राक्षसः ॥४५॥
ताः पञ्चकोट्यो वर्षाणामाख्याताः सङ्ख्यया द्विजैः ।
नियुतान्येकषष्टिश्च सङ्ख्याविद्भिरुदाहृता ॥४६॥
षष्टिशतसहस्राणि वर्षाणान्तु स रावणः ।
देवतानां ऋषीणाञ्च घोरं कृत्वा प्रजागरं ॥४७॥
त्रेतायुगे चतुर्विंशे रावणस्तपसः क्षयात् ।
रामं दाशरथिं प्राप्य सगणः क्षयमीयिवान् ॥४८॥
महोदयः[३] प्रहस्तश्च महापार्श्वखरस्तथा[४] ।
पुष्पोत्कटायाः पुत्रास्ते कन्या कुम्भीनसी तथा ॥४९॥
त्रिशिरा दूषणश्चैव विद्युज्जिह्वश्च राक्षसः ।
कन्या ह्यसलिका चैव[५] वाकायाः प्रसवाः स्मृताः ॥५०॥
इत्येते क्रूरकर्म्माणः पौलस्त्या राक्षसा दश ।
दारुणाभिजनाः सर्वे देवैरपि दुरासदाः ॥५१॥
सर्वे लब्धवराश्चैव पुत्रपौत्रसमन्विताः ।
यक्षाणाञ्चैव सर्वेषां पौलस्त्या ये च राक्षसाः ॥५२॥
आगस्त्यवैश्वामित्राणां क्रूराणां ब्रह्मरक्षसां ।

---

१ पूर्व्वकर्म्मणीति ख० ।
२ राजेन्द्रेति ख० ।
३ महोदर इति ङ० ।
४ महाबलिवरः प्राज्ञो महाप्रांशुपुरस्तथेति ख० ।
५ कन्या श्यामालिका चैवेति ख० ।

वेदाध्ययनशीलानां तपोव्रतनिषेविणां ॥५३॥
तेषामैडविलो राजा पौलस्त्यः सव्यपिङ्गलः ।
इतरे वै यज्ञमुखास्तेन रक्षोगणास्त्रयः ॥५४॥
यातुधाना ब्रह्मधाना वार्त्तास्चैव दिवाचराः ।
निशाचरगणास्तेषां चत्वारः कविभिः स्मृताः ॥५५॥
पौलस्त्या नैर्ऋतास्चैव आगस्त्याः कौशिकास्तथा ।
इत्येताः सप्त तेषां वै जातयो राक्षसाः स्मृताः ॥५६॥
तेषां रूपं प्रवक्ष्यामि स्वभावेन व्यवस्थितं ।
वृत्ताक्षाः पिङ्गलास्चैव महाकाया महोदराः ॥५७॥
अष्टदंष्ट्राः शङ्कुकर्णाः ऊर्द्धरोमाण एव च ।
आकर्णदारितास्याश्च मुञ्जधूमोर्द्धमूर्द्धजाः ॥५८॥
स्थूलशीर्षाः सिताभाश्च[१] ह्रस्वकाश्च प्रवाहुकाः[२] ।
ताम्रास्या लम्बजिह्वोष्ठा लम्बभ्रूस्थूलनासिकाः ॥५९॥
नीलाङ्गा लोहितग्रीवा गम्भीराक्षा विभीषणाः ।
महाघोरस्वरास्चैव विकटा बद्धपिण्डिकाः ॥६०॥
स्थूलाश्च तुङ्गनासाश्च शिलासंहनना दृढाः ।
दारुणाभिजनाः क्रूराः प्रायशः क्लिष्टकर्मिणः ॥६१॥
सकुण्डलाङ्गदापीडा मुकुटोष्णीषधारिणः ।
विचित्रवस्त्राभरणाश्चित्रस्रगनुलेपनाः[३] ॥६२॥

---

१ स्थूलकण्ठा इति ख० ।
२ ह्रस्वशस्त्राः प्रवाह्वव इति ङ० ।
३ चित्रगन्धानुलेपना इति ख० ।

अन्नादाः पिशितादाश्च पुरुषादाश्च ते स्मृताः ।
इत्येतद्रूपसाधर्म्यं(१) राक्षसानां बुधैः स्मृतं ।
न समस्तबलं बुद्धं यतो मायाकृतं हि तत् ॥६३॥
पुलहस्य मृगाः पुत्राः सर्वे व्यालाश्च दंष्ट्रिणः ।
भूताः पिशाचाः सर्पाश्च भ्रमरा हस्तिनस्तथा ॥६४॥
वानराः किन्नराश्चैव यमकिम्पुरुषास्तथा(२) ।
येऽन्ये चैव परिक्रान्ता मायाक्रोधवशानुगाः ॥६५॥
अनपत्यः क्रतुस्तस्मिन् स्मृतो वैवस्वतेऽन्तरे ।
न तस्य पुत्रः पौत्रो वा तेजः सङ्क्षिप्य वा स्थितः ॥६६॥
अत्रेर्वंशं प्रवक्ष्यामि तृतीयस्य प्रजापतेः ।
तस्य पत्न्यश्च सुन्दर्य्यो दशैवासन्पतिव्रताः ॥६७॥
भद्राश्वस्य घृताच्यां वै दशाप्सरसि सूनवः ।
भद्रा शूद्रा च मद्रा च शलदा मलदा तथा ॥६८॥
वेला खला च सप्तैता या च गोचपला स्मृता ।
तथा मानरसा चैव रत्नकूटा च ता दश ॥६९॥
आत्रेयवंशकृत्तासां भर्त्ता नाम्ना प्रभाकरः ।
भद्रायां जनयामास सोमं पुत्रं यशस्विनं ॥७०॥
स्वर्भानुना हते सूर्य्ये पतमानो दिवो महीं ।
तमोऽभिभूते लोकेऽस्मिन् प्रभा येन प्रवर्त्तिता ॥७१॥
स्वस्ति तेऽस्त्विति चोक्तः स पतन्निह दिवाकरः ।

---

१ इत्येतद्रूपसारूप्यमिति ख० ।
२ मया किम्पुरुषास्तथेति ग० । मयराः किम्पुरुषास्तथेति ङ० ।

अह्मर्षेर्वचनात्तस्य न पपात दिवो महीं ॥७२॥
अत्रिश्रेष्ठानि गोत्राणि यश्चकार महातपाः ।
अज्ञेष्वत्रिघनश्चैव सुरैर्यस्य प्रवर्त्तितः ॥७३॥
स तास्वजनयत् पुत्रानात्मतुल्याननामकान् ।
दश तास्वेव महता तपसा भावितप्रभाः ॥७४॥
स्वस्त्यात्रेया इति ख्याता ऋषयो वेदपारगाः ।
तेषां द्विख्यातयशसौ ब्रह्मिष्ठौ सुमहौजसौ ॥७५॥
दत्तात्रेयस्तस्य ज्येष्ठो दुर्वासास्तस्य चानुजः ।
यवीयसी सुता तस्यामबला ब्रह्मवादिनी ।
अत्राप्युदाहरन्तीमं श्लोकं पौराणिकाः पुरा ॥७६॥
अत्रेः पुत्रं महात्मानं शान्तात्मानमकल्मषं ।
दत्तात्रेयं तनुं विष्णोः पुराणज्ञाः प्रचक्षते ॥७७॥
तस्य गोत्रान्वये जातास्चत्वारः प्रथिता भुवि ।
श्यामाश्च मुद्गलाश्चैव बलारकगविष्ठिराः ।
एते नृणान्तु चत्वारः स्मृताः पक्षा महौजसां ॥७८॥
कश्यपान्नारदश्चैव पर्वतोऽरुन्धती तथा ।
जज्ञिरे च त्वरुन्धत्यास्तान्निबोधत सत्तमाः ॥७९॥
नारदस्तु वशिष्ठायारुन्धतीं प्रत्यपादयत् ।
ऊर्द्धरेता महातेजा दक्षशापात्तु नारदः ॥८०॥
पुरा देवासुरे तस्मिन् संग्रामे तारकामये ।
अनावृष्ट्या हते लोके व्यग्रे शक्रे सुरैः सह ।
वशिष्ठस्तपसा धीमान् धारयामास वै प्रजाः ॥८१॥

अत्रैाषधं मूलफलमोषधीश्च प्रवर्त्तयन् ।
तांस्तेन जीवयामास कारुण्यादौषधेन तु ॥८२॥
अरुन्धत्यां वसिष्ठस्तु शक्तिमुत्पादयद्[1] द्विजाः ।
सागरञ्जनयत्[2] शक्तेरदृश्यन्ती पराशरं ॥८३॥
काली पराशराज्जज्ञे कृष्णद्वैपायनं प्रभुं ।
द्वैपायनादरण्यां वै शुको जज्ञे गुणान्वितः ॥८४॥
उत्पद्यन्ते च पीवर्य्यां षड़िमे शुकसूनवः ।
भूरिश्रवाः प्रभुः शम्भुः कृष्णो गौरश्च पञ्चमः ॥८५॥
कन्या कीर्त्तिमती चैव योगमाता दृढव्रता ।
जननी ब्रह्मदत्तस्य पत्नी सात्त्वगुहस्य च[3] ॥८६॥
श्वेताः कृष्णाश्च गौराश्च श्यामा धूम्राः समूलिकाः[4] ।
उश्रपाः[5] दारकाश्चैव नीलाश्चैव पराशराः ।
पराशराणामष्टौ ते पक्षाः प्रोक्ता महात्मनां ॥८७॥
अत ऊर्द्धं निबोधध्वमिन्द्रप्रतिमसम्भवं ।
वसिष्ठस्य कपिञ्जल्यां घृताच्यां समपद्यत ।
कुशीतियः[6] समाख्यात इन्द्रप्रतिम उच्यते ॥८८॥
पृथोः सुतायाः सम्भूतः पुत्रस्तस्याभवद्वसुः ।

---

१ प्रयोगोऽयमार्षः ।
२ अयमप्यार्षप्रयोगः ।
३ सात्त्वशुहस्य चेति ङ० । सात्वशुहस्य चेति ख० ।
४ समौलिका इति ख०, ग० च ।
५ उश्मादा इति क०, ङ० च ।
६ कुशीतिय इति क० ।

उपमन्युः सुतस्तस्य यस्येमे उपमन्यवः ॥८९॥
मित्रावरुणयोश्चैव कुण्डिनो ये परिश्रुताः ।
एकार्षेयास्तथैवान्ये वसिष्ठा नाम विश्रुताः ।
एते पत्ता वसिष्ठानां स्मृता एकादशैव तु ॥९०॥
इत्येते ब्रह्मणः पुत्रा मानसा ह्यष्ट विश्रुताः ।
भ्रातरः सुमहाभागा येषां वंशाः प्रतिष्ठिताः ॥९१॥
त्रीन् लोकान् धारयन्तीमान् देवर्षिगणसङ्कुलान् ।
तेषां पुत्राश्च पौत्राश्च शतशोऽथ सहस्रशः ।
यैर्व्याप्ता पृथिवी सर्वा सूर्य्यस्येव गभस्तिभिः ॥९२॥

इति श्रीमहापुराणे वायुप्रोक्ते ऋषिवंशानुकीर्त्तनं नाम
नवमोऽध्यायः ।

---

# अथ दशमोऽध्यायः ।



श्राद्धप्रक्रियारम्भः ।

एतत् श्रुत्वा वचस्तस्य सूतस्य विदितात्मनः ।
उत्तरं परिपप्रच्छुः सूतपुत्रं द्विजातयः ॥१॥
शांशपायन उवाच। कथं द्वितीयमुत्पन्ना भवानी प्राक्सती तु या ।
आसीद्दाक्षायणी पूर्वमुमा कथमजायत ॥२॥
मेनायां पितृकन्यायां जनयामास शैलराट् ।
के चैते पितरश्चैव येषां मेना तु मानसी ॥३॥
मैनाकश्चैव दौहित्रो दौहित्री च तथा ह्युमा ।
एकपर्णा तथा चैव तथा या चैकपाटला ॥४॥
गङ्गा चैव सरित्श्रेष्ठा सर्वासां पूर्वजा तथा ।
पूर्वमेव मयोद्दिष्टं शृणुध्वं मम सर्वशः ॥५॥
अनेके पितरश्चैव वर्त्तन्ते क्व च वा पुनः ।
श्रोतुमिच्छामि भद्रन्ते श्राद्धस्य च परं विधिं ॥६॥
पुत्राश्च ते स्मृताः केषां कथञ्च पितरस्तु ते ।
पितरः कथमुत्पन्नाः कस्य पुत्राः किमात्मकाः ॥७॥
स्वर्गे तु पितरोऽन्ये ये देवानामपि देवताः ।
एवं वै श्रोतुमिच्छामि पितॄणां सर्गमुत्तमं ।
यथावद्दत्तमस्माभिः श्राद्धं प्रीणाति वै पितॄन् ॥८॥

यदर्थं ते न दृश्यन्ते तच्च किं कारणं स्मृतं ।
स्वर्गे हि के तु वर्त्तन्ते पितरो नरके तु के ॥९॥
अभिसन्धाय पितरं पितुश्च पितरस्तथा ।
पितुः पितामहश्चैव त्रिषु पिण्डेषु नामतः ॥१०॥
कानि श्राद्धानि देयानि कथं गच्छन्ति वै पितॄन् ।
कथञ्च शक्तास्ते दातुं नरकस्थाः फलं पुनः ॥११॥
के चेह पितरो नाम कान् यजामो वयं पुनः ।
देवा अपि पितॄन् स्वर्गे यजन्तीति हि नः श्रुतं ॥१२॥
एतदिच्छामि वै श्रोतुं विस्तरेण बहुश्रुत ।
स्पष्टाभिधानमर्थं वै तद्भवान् वक्तुमर्हति ॥१३॥
ऋषीणान्तु वचः श्रुत्वा सूतस्तत्त्वार्थदर्शिवान् ।
आचचक्षे यथाप्रश्नं ऋषीणां मानसं ततः ॥१४॥
सूत उवाच। अत्र वो वर्णयिष्यामि यथाप्रश्नं यथाश्रुतम् ।
मन्वन्तरेषु जायन्ते पितरो देवसूनवः ॥१५॥
अतीतानागते ज्येष्ठाः कनिष्ठाः क्रमशस्तु ते ।
देवैः सार्द्धं पुरातीताः पितरो येऽन्तरेषु वै ।
वर्त्तन्ते साम्प्रतं ये तु तान्वै वक्ष्यामि निश्चयात् ॥१६॥
श्राद्धश्चैषां मनुष्याणां श्राद्धमेव प्रवर्त्तते ।
देवानसृजत ब्रह्मा नायजन्निति वै पुनः[1] ।
समुत्सृज्य तदात्मानमसृजंस्ते फलार्थिनः ॥१७॥
ते शप्ता ब्रह्मणा मूढा नष्टसंज्ञा भविष्यथ ।

१ दिवा चासृजत ब्रह्मा रात्रौ संहरते पुनरिति ग० ।

न स्म किञ्चिद्विजानन्ति ततो लोको ह्यमुह्यत ॥१८॥
ते भूयः प्रणताः सर्वे याचन्ति स्म पितामहं।
अनुग्रहाय लोकानां पुनस्तानब्रवीत् प्रभुः ॥१९॥
प्रायश्चित्तं चरध्वं वै व्यभिचारो हि यः कृतः।
पुत्रान् स्वान् परिपृच्छध्वं ततो ज्ञानमवाप्स्यथ ॥२०॥
ततस्ते स्वान् सुतांश्चैव प्रायश्चित्तजिघृक्षवः।
अपृच्छन् संयतात्मानो विधिवच्च मिथो मिथः ॥२१॥
तेभ्यस्ते नियतात्मानः पुत्राः शंसुरनेकधा।
प्रायश्चित्तानि धर्मज्ञा वाङ्मनःकर्म्मजानि तु ॥२२॥
ते पुत्रानब्रुवन् प्रीता लब्धसंज्ञा दिवौकसः।
यूयं वै पितरोऽस्माकं ये वयं प्रतिबोधिताः।
धर्मज्ञानञ्च कामश्च को वरो वः प्रदीयतां ॥२३॥
पुनस्तानब्रवीद्ब्रह्मा यूयं वै सत्यवादिनः।
तस्माद्यदुक्तं युष्माभिस्तत्तथा न तदन्यथा ॥२४॥
उक्ताश्च पितरोऽस्माकमिति वै तनयाः स्वकाः।
पितरस्ते भविष्यन्ति तेभ्योऽयं दीयतां वरः ॥२५॥
तेनैव वचसा पुत्रा ब्रह्मणः परमेष्ठिनः।
पुत्राः पितृत्वमाजग्मुः पुत्रत्वं पितरः पुनः ॥२६॥
तस्मात्ते पितरः पुत्राः पितृत्वे तेषु तत् स्मृतं।
एवं सृष्ट्वा पितॄन् पुत्रान् पुत्रांश्च पितरस्तथा।
व्याजहार पुनर्ब्रह्मा पितॄनात्मविवृद्धये[१] ॥२७॥

१ पितॄनात्मविसृज्जय इति ख०।

यो ह्यनिष्ट्वा पितॄन् श्राद्धे क्रियाङ्काञ्चित्करिष्यति ।
राक्षसा दानवाश्चैव फलं प्राप्स्यन्ति तस्य तत् ॥२८॥
श्राद्धैराप्यायिताश्चैव पितरः सोममव्ययम् ।
आप्याय्यमाना युष्माभिर्वर्द्धयिष्यन्ति नित्यशः ॥२९॥
श्राद्धैराप्यायितः सोमो लोकानाप्याययिष्यति ।
कृत्स्नं सपर्व्वतवनं जङ्गमाजङ्गमैर्वृतं ॥३०॥
श्राद्धानि पुष्टिकामाश्च ये करिष्यन्ति मानवाः ।
तेभ्यः पुष्टिं प्रजाश्चैव दास्यन्ति पितरः सदा ॥३१॥
श्राद्धे येभ्यः प्रदास्यन्ति त्रीन्पिण्डान्नामगोचतः ।
सर्वत्र वर्त्तमानास्ते पितरः प्रपितामहं ।
तेषामाप्याययिष्यन्ति श्राद्धदानेन वै प्रजाः ॥३२॥
एवमाज्ञा कृता पूर्वं ब्रह्मणा परमेष्ठिना ।
तेनैतत् सर्वथा सिद्धं दानमध्ययनन्तपः ॥३३॥
ते तु ज्ञानप्रदातारः पितरो वो न संशयः ।
इत्येते पितरो देवा देवाश्च पितरः पुनः ।
अन्योन्यं पितरो ह्येते देवाश्च पितरश्च ह ॥३४॥
एतद् ब्रह्मवचः श्रुत्वा सूतस्य विदितात्मनः ।
पप्रच्छुर्मुनयो भूयः सूतं तस्माद्यदुत्तरं ॥३५॥
ऋषय ऊचुः । कियन्तो वै पितृगणाः[१] कस्मिन्काले च ते गणाः ।
वर्त्तन्ते देवप्रवरा देवानां सोमवर्द्धनाः ॥३६॥
सूत उवाच । एतदोऽहं प्रवक्ष्यामि पितृसर्गमनुत्तमं ।
शंयुः पप्रच्छ यत् पूर्वं पितरं वै बृहस्पतिं ॥३७॥

---

१ मुनिगणा इति क० ।

बृहस्पतिमुपासीनं सर्वज्ञानार्थकोविदं ।
पुत्रः शंयुरिमं प्रश्नं पप्रच्छ विनयान्वितः ॥३८॥
क एते पितरो नाम कियन्तः के च नामतः ।
समुद्भूताः कथञ्चैते पितृत्वं समुपागताः ॥३९॥
कस्माच्च पितरं पूर्वं यज्ञे युज्यन्ति नित्यशः ।
क्रियास्तु सर्वा वर्त्तन्ते श्राद्धपूर्वा महात्मनां ॥४०॥
कस्मै श्राद्धानि देयानि किञ्च दत्तं महाफलं ।
केषु वाप्यक्षयं श्राद्धं तीर्थेषु च नदीषु च ॥४१॥
केषु वै सर्व्वमाप्नोति श्राद्धं कृत्वा द्विजोत्तमः ।
कश्च कालो भवेच्छ्राद्धे विधिः कश्चानुवर्त्तते ॥४२॥
एतदिच्छामि भगवन् विस्तरेण यथातथं ।
व्याख्यातुमानुपूर्व्व्येण यच्च चोदाहृतं मया ॥४३॥
बृहस्पतिरिदं सम्यगेवं पृष्टो महामतिः ।
व्याजहारानुपूर्व्व्येण प्रश्नं प्रश्नविदां वरः ॥४४॥
बृहस्पतिरुवाच । कथयिष्यामि ते तात यन्मां त्वं परिपृच्छसि ।
विनयेन यथान्यायं गम्भीरं प्रश्नमुत्तमं ॥४५॥
द्यौरन्तरीक्षं पृथिवी नक्षत्राणि दिशस्तथा ।
सूर्य्याचन्द्रमसौ चैव तथाहोरात्रमेव च ॥४६॥
न बभूवुस्तदा तात तमोभूतमिदं जगत् ।
ब्रह्मैको दुश्चरं तत्र चचार परमं तपः ॥४७॥
शंयुस्तमब्रवीद्भूयः पितरं ब्रह्मवित्तमं ।
सर्व्वदेव व्रतस्नातं सर्वज्ञानविदां वरं ॥४८॥

कीदृशं सर्वभूतेभ्यस्तपस्तेपे प्रजापतिः ।
एवमुक्तो बृहत्तेजा बृहस्पतिरुवाच तं ॥४९॥
सर्वेषां तपसां युक्तिस्तपोयोगमनुत्तमं ।
ध्यायंस्तदा तद्भगवांस्तेन लोकानवासृजत् ॥५०॥
भूतभव्यानि ज्ञानानि लोकान् वेदांश्च कृत्स्नशः ।
योगमाविश्य तत्सृष्टं ब्रह्मणा योगचक्षुषा ॥५१॥
लोकाः सान्तानिका नाम यत्र तिष्ठन्ति भास्वराः ।
ते वैराजा इतिख्याता देवानां दिवि देवताः ॥५२॥
योगेन तपसा युक्तः पूर्वमेव तदा प्रभुः ।
देवानसृजत ब्रह्मा योगं युक्त्वा सनातनम् ॥५३॥
आदिदेवा इति ख्याता महासत्त्वा महौजसः ।
सर्वकामप्रदाः पूज्या देवदानवमानवैः ॥५४॥
तेषां सप्त समाख्याता गणास्त्रैलोक्यपूजिताः ।
अमूर्त्तयस्त्रयस्तेषां चत्वारस्तु समूर्त्तयः ॥५५॥
उपरिष्टात् त्रयस्तेषां वर्त्तन्ते भावमूर्त्तयः ।
तेषामधस्ताद्वर्त्तन्ते चत्वारः सूक्ष्ममूर्त्तयः ॥५६॥
ततो देवास्ततो भूमिरेषा लोकपरम्परा ।
लोके वर्त्तन्ति ते ह्यऽस्मिन्तेभ्यः पर्जन्यसम्भवः ।
वृष्टिर्भवति तैर्वृष्ट्या लोकानां सम्भवः पुनः ॥५७॥
आप्याययन्ति ते यस्मात् सोमञ्चान्नञ्च योगतः ।
तस्मात्ते पितरः लोकानां लोकसत्तमाः ॥५८॥
मनोजवाः स्वधाभक्षाः सर्वकामपरिच्छदाः ।

लोभमोहभयापेता निस्पृहाः शोकवर्जिताः ॥५९॥
एते योगं परित्यज्य प्राप्ता लोकान् सुदर्शनान् ।
दिव्याः पुण्या महात्मानो विपाप्मानो भवन्त्युत ॥६०॥
ततो युगसहस्रान्ते जायन्ते ब्रह्मवादिनः ।
प्रतिलभ्य पुनर्योगं मोक्षं गच्छन्त्यमूर्त्तयः ॥६१॥
व्यक्ताव्यक्तं परित्यज्य महायोगबलेन वा ।
नश्यन्त्युल्केव गगने क्षीणविद्युत्प्रभेव च ॥६२॥
उत्सृज्य देहजातानि महायोगबलेन च ।
निराख्योपाख्यतां यान्ति सरितः सागरे यथा ॥६३॥
क्रियया गुरुपूजाभिर्ये च कुर्वन्ति नित्यशः ।
ताभिराप्याययन्त्येते पितरो योगवर्द्धनाः ॥६४॥
श्राद्धे प्रीताः पुनः सोमं पितरो योगमास्थिताः ।
आप्याययन्ति योगेन त्रैलोक्यं येन जीवति ॥६५॥
तस्माच्छ्राद्धानि देयानि योगिभ्यो यत्नतः सदा ।
पितॄणां हि बलं योगो योगात् सोमः प्रवर्त्तते ॥६६॥
सहस्रशस्तु विप्रान्वै भोजयेद्यावदागतान् ।
एकस्तु योगवित् प्रीतः सर्व्वानर्हति तत्क्षणं ॥६७॥
कल्पितानां सहस्रेण स्नातकानां शतेन च ।
योगाचार्य्येण यद्भुक्तं त्रायते महतो भयात् ॥६८॥
गृहस्थानां सहस्रेण वानप्रस्थशतेन च ।
ब्रह्मचारिसहस्रेण योगी ह्येको विशिष्यते ॥६९॥
नास्तिको वा विकर्मा वा सङ्कीर्णस्तस्करोऽपि वा ।

नान्यच्च कारणं दानं योगेष्वाह प्रजापतिः ७०॥
पितरस्तस्य तुष्यन्ति सुवृष्टेनेव कर्षकाः ।
पुत्रो वाप्यथ वा पौत्रो ध्यानिनं भोजयिष्यति ॥७१॥
अलाभे ध्यानिमित्तूणां भोजयेद् ब्रह्मचारिणौ ।
तदलाभे एदासीनं गृहस्थमपि भोजयेत् ॥७२॥
यस्तिष्ठेदेकपादेन वायुभक्षः शतं समाः ।
ध्यानयोगी परस्तस्मादिति ब्रह्मानुशासनं ॥७३॥
सिद्धा हि विप्ररूपेण चरन्ति पृथिवीमिमां ।
तस्मादतिथिमायान्तमभिगच्छेत् कृताञ्जलिः ॥७४॥
पूजयेच्चार्घ्यपात्रेण वेश्मना भोजनेन च ।
उर्व्वीं सागरपर्य्यन्तां देवा योगेश्वराः सदा ।
नानारूपैश्चरन्त्येते प्रजा धर्म्मेण पालयन् ॥७५॥
तस्माद्दद्याच्च वै दानं विप्रायातिथये नरः ।
प्रदानानि प्रवक्ष्यामि फलञ्चैषां तथैव च ॥७६॥
अश्वमेधसहस्रेण राजसूयशतेन च ।
पुण्डरीकसहस्रेण योगिष्वावसथो वरं ॥७७॥
आद्य एष गणः प्रोक्तः पितृणाममितौजसाम् ।
भावयन्सप्तकालान् वै स्थित एष गणस्तदा ॥७८॥
अत ऊर्द्धं प्रवक्ष्यामि सर्व्वान् पितृगणान् पुनः ।
सन्ततिं संस्थितिञ्चैव भावनाञ्च यथाक्रमं ॥७९॥

इति श्रीमहापुराणे वायुप्रोक्ते श्राद्धप्रक्रियारम्भो नाम दशमोऽध्यायः ।

---

## अथैकादशोऽध्यायः ।



श्राद्धकल्पः ।

सूत उवाच । सप्त मेधावतां श्रेष्ठाः स्वर्गे पितृगणाः स्मृताः ।
चत्वारो मूर्त्तिमन्तश्च त्रयस्तेषाममूर्त्तयः ।
तेषां लोकविसर्गन्तु कीर्त्तयिष्ये निबोधत ॥१॥
या वै दुहितरस्तेषां दौहित्राश्चैव ये स्मृताः ।
धर्म्ममूर्त्तिधरास्तेषां ये त्रयः परमा गणाः ॥२॥
नामानि लोकसर्गञ्च तेषां वच्ये समासतः ।
लोका विरजसो नाम्ना यत्र तिष्ठन्ति भास्वराः ॥३॥
अमूर्त्तयः पितृगणाः पुत्रास्ते वै प्रजापतेः ।
विरजस्य द्विजाः श्रेष्ठा वैराजा इति विश्रुताः ।
एष वै प्रथमः कल्पो वैराजानां प्रकीर्त्तितः ॥४॥
तेषान्तु मानसी कन्या मेना नाम महागिरेः ।
पत्नी हिमवतः शुभ्रा यस्यां मैनाक उच्यते ॥५॥
जातः सर्व्वौषधिधरः सर्व्वरत्नाकरात्मवान् ।
पर्वतः प्रवरः पुण्यः क्रौञ्चस्तस्यात्मजोऽभवत्(१) ॥६॥
तिस्रः कन्यास्तु मेनायां जनयामास शैलराट् ।
अपर्णामेकपर्णाञ्च तृतीयामेकपाटलां ॥७॥

---

१ तस्यानुजोऽभवदिति ङ० ।

आश्रिते द्वे ह्यपर्णा तु अनिकेता तपोऽचरत् ।
न्यग्रोधमेकपर्णी तु पाटलामेकपाटला ।
शतं वर्षसहस्राणि दुश्चरं देवदानवैः ॥८॥
आहारमेकपर्णेन एकपर्णी समाचरत् ।
पाटलेनैव चैकेन विदध्यादेकपाटला ॥९॥
पूर्णे पूर्णे सहस्रे द्वे आहारं वै प्रचक्रतुः ।
एका तत्र निराहारा तां माता प्रत्यभाषत ॥१०॥
निषेधयन्ती ह्युमेति माता स्नेहेन दुःखिता ।
सा तथोक्तया देवी मात्रा दुश्चरचारिणी ॥११॥
उमेति सा महाभागा त्रिषु लोकेषु विश्रुता ।
तथेति नाम्ना तेनासौ निरुक्ता कर्मणा शुभा ॥१२॥
एतत्तु त्रिकुमारीकं जगत् स्थास्यति शाश्वतं ।
एतासान्तपसा दृप्तं यावद्भूमिर्द्धरिष्यति ॥१३॥
तपःशरीरास्ताः सर्वास्तिस्रो योगबलान्विताः ।
देव्यस्ताः सुमहाभागाः सर्व्वास्च स्थिरयौवनाः ॥१४॥
सर्वास्च ब्रह्मवादिन्यः सर्वास्चैवोर्द्ध्वरेतसः ।
उमा तासां वरिष्ठा च श्रेष्ठा च वरवर्णिनी ॥१५॥
महायोगबलोपेता महादेवमुपस्थिता ।
दत्तकाव्योशनास्तस्याः पुत्रो वै भृगुनन्दनः ॥१६॥
असितस्यैकपर्णी तु पत्नी साध्वी दृढव्रता ।
दत्ता हिमवता तस्मै योगाचार्य्याय धीमते ।
देवलं सुषुवे सा तु ब्रह्मिष्ठं मानसं सुतं ॥१७॥

या चैतासां कुमारीणां तृतीया त्वेकपाटला ।
पुत्रं शतशिलाकस्य जैगीषव्यमुपस्थिता ॥१८॥
तस्यापि शङ्खलिखितौ स्मृतौ पुत्रावयोनिजौ ।
इत्येता वै महाभागाः कन्या हिमवतः शुभाः ॥१९॥
रुद्राणी सा तु प्रवरा स्वगुणैरतिरिच्यते ।
अन्योन्यप्रीतिरनयोरुमाशङ्करयोर्यथा ॥२०॥
श्लेषं संशक्तयोर्ज्ञात्वा शङ्कितः किल वृत्रहा ।
ताभ्यां मैथुनसक्ताभ्यामपत्योद्भवभीरुणा ।
तयोः सकाशमिन्द्रेण प्रेषितो हव्यवाहनः ॥२१॥
अनयोः रतिविघ्नञ्च त्वमाचर हुताशन[1] ।
सर्वत्र गत एव त्वं न दोषो विद्यते तदा ॥२२॥
इत्येवमुक्ते तु तथा वह्निना च तथा कृतं ।
उमादेहं समुत्सृज्य शुक्रं भूमौ विसर्जितं ॥२३॥
ततो रुषितया देव्या शप्तोऽग्निः शांशपायन ।
इदं चोक्तवती वह्निं रोषगद्गदया गिरा ॥२४॥
यस्मान्मय्यवितृप्तायां रतिविघ्नं हुताशन ।
कृतवानस्यकर्त्तव्यं तस्मात् त्वमसि दुर्मते ॥२५॥
यदेवं[2] विधृतं गर्भं रौद्रं शुक्रं महाप्रभं ।
गर्भं त्वं धारयस्वैवमेषा ते दण्डधारणा ॥२६॥
स शापरोषाद्रुद्राण्या अन्तर्गर्भो हुताशनः ।

१ वर त्वन्तु हुताशनेति ङ० ।
२ यदेतमिति ख० । तदेवमिति क० ।

बहून् वर्षगणान् गर्भं धारयामास वै द्विजाः ॥२७॥
स गङ्गामुपगम्याह श्रूयतां सरिदुत्तमे ।
सुमहान् परिखेदो मे गर्भधारणकारणात् ॥२८॥
मद्धितार्थमिमं गर्भमतो धारय निम्नगे ।
मत्प्रसादाच्च खेदो वै मन्दस्तव भविष्यति ॥२९॥
तथेत्युक्त्वा तदा सा तु सम्प्रहृष्टा महानदी ।
तं गर्भं धारयामास दह्यमानेन चेतसा[१] ॥३०॥
सापि कृच्छ्रेण महता खिद्यमाना महानदी ।
कालं प्रकृष्टं सुमहद्गर्भधारणतत्परा ॥३१॥
तया परिगतं गर्भं कुक्षौ हिमवतः शुभे ।
शुभं शरवणं नाम चित्रं पुष्पितपादपं ।
तत्र तं व्यसृजद्गर्भं दीप्यमानमिवानलं ॥३२॥
रुद्राग्निगङ्गातनयस्तत्र जातोऽरुणप्रभः ।
आदित्यशतसङ्काशो महातेजाः प्रतापवान् ॥३३॥
तस्मिन् जाते महाभागे कुमारे जाह्नवीसुते ।
विमानयानैराकाशं पतत्रिभिरिवावृतं ॥३४॥
देवदुन्दुभयो नेदुराकाशे मधुरस्वराः ।
मुमुचुः पुष्पवर्षञ्च खचराः सिद्धचारणाः ॥३५॥
जगुर्गन्धर्व्वमुख्याश्च सर्व्वशस्तत्र तत्र ह ।
यक्षा विद्याधराः सिद्धाः किन्नराश्चैव सर्वशः ॥३६॥

---

१ तेजसेति ङ, छ० च ।

महानागसहस्राणि प्रवराश्च पतत्रिणः ।
उपतस्थुर्महाभागमाग्नेयं(१) शङ्करात्मजं ।
प्रभावेण तदा तेन(२) दैत्यदानवराक्षसाः ॥३७॥
सहसप्तर्षिभार्य्याभिरादावेवाग्निसम्भवः ।
अभिषेकप्रयाताभिर्दृष्टो वर्ज्य त्वरुन्धतीं ॥३८॥
ताभिः स बालार्कनिभो रौद्रः परिवृतः प्रभुः ।
स्निह्यमानाभिरत्यर्थं स्वकाभिरिव मातृभिः ॥३९॥
युगपत्सर्वदेवीर्हि दिदृक्षुर्जाह्नवीसुतः ।
षण्मुखो व्यसृजत् श्रीमांस्तासां प्रीत्या महाद्युतिः ॥४०॥
श्रीमान् कमलपत्राक्षस्तरुणादित्यसन्निभः ।
येन जातेन लोकानामाक्षेपस्तेजसा कृतः ॥४१॥
तेन जातेन महता देवानामसहिष्णवः ।
स्कन्दिता दानवगणास्तस्मात् स्कन्दः प्रतापवान् ॥४२॥
कृत्तिकाभिस्तु यस्मात् स वर्द्धितः स पुरातनः ।
कार्त्तिकेय इति ख्यातस्तस्मादसुरसूदनः ॥४३॥
जृम्भतस्तस्य दैत्यारेर्ज्वालामालाकुलात्तदा ।
मुखाद्विनिर्गता तस्य स्वशक्तिरपराजिता ॥४४॥
क्रीड़ार्थञ्चैव स्कन्दस्य विष्णुना प्रभविष्णुना ।
गरुड़ादिति सृष्टौ हि पक्षिणौ हि प्रभद्रकौ ॥४५॥

---

१ उपतस्थुर्महाभागममेयमिति क्व० ।
२ प्रभावमहता तेनेति क्व० ।

मयूरः कुक्कुटश्चैव पताका चैव वायुना ।
यस्य दत्ता सरस्वत्या महावीणा महास्वना ।
अजः स्वयम्भुवा दत्तो मेषो दत्तश्च शम्भुना ॥४६॥
मायाविहरणे(१) विप्रा गिरौ क्रौञ्चे निपातिते ।
तारके चासुरवरे समुदीर्णे निपातिते ॥४७॥
सेन्द्रोपेन्द्रैर्महाभागैर्देवैरग्निसुतः प्रभुः ।
सेनापत्येन दैत्यारिरभिषिक्तः प्रतापवान् ॥४८॥
देवसेनापतिस्त्वेवं पद्यते नरनायकः ।
देवारिस्कन्दनः स्कन्दः सर्वलोकेश्वरः प्रभुः ॥४९॥
प्रमथैर्विविधैर्देवैस्तथा भूतगणैरपि ।
मातृभिर्विविधाभिश्च विनायकगणैस्तथा ॥५०॥
सा त्वपश्यद्विमानानि पतन्ती सा दिवश्च्युता ।
त्रसरेणुप्रमाणानि तेष्वपश्यच्च्युतान् पितॄन् ॥५१॥
सुसूक्ष्मानपरित्यक्तानग्नीनग्निष्विवाहितान् ।
त्रायध्वमित्युवाचाथ पतन्ती तानवाक्शिराः ॥५२॥
तैरुक्ता सा तु माभैषीरित्युक्ताधिष्ठिताभवत् ।
ततः प्रासादयत् सा वै पितॄंस्तान् दीनया गिरा ॥५३॥
ऊचुस्ते पितरः कन्यां भ्रष्टैश्वर्यां व्यतिक्रमात् ।
भ्रष्टैश्वर्या स्वदोषेण तपसि त्वं शुचिस्मिते ॥५४॥
यैः क्रियन्ते च कर्माणि शरीरैरिह दैवतैः ।

---

१ महाविहरणे इति ख० ।

तैरेव तत्कर्म्मफलं प्राप्नुवन्तीह देवताः ॥ ५५ ॥
सद्यः फलन्ति कर्माणि देवत्वे प्रेत्य मानुषे ।
तस्मादमावसौपत्यं[१] त्वं प्रेत्य प्राप्स्यसे फलं ॥ ५६ ॥
इत्युक्तया वै पितरः पुनस्ते तु प्रसादिताः ।
ध्यात्वा प्रसादं सञ्चक्रुस्तस्यास्ते त्वनुकम्पया ॥ ५७ ॥
अवश्यम्भाविनं दृष्ट्वा ह्यर्थमूचुस्ततः सुराः ।
सोमपाः पितरः कन्यां राज्ञस्त्वेव ह्यमावसोः ॥ ५८ ॥
उत्पन्नस्य पृथिव्यान्तु मानुषत्वे महात्मनः ।
कन्या भूत्वा त्विमान् लोकान् पुनः प्राप्स्यसि स्वानिति ॥ ५९ ॥
अष्टाविंशे भवित्री त्वं द्वापरे मत्स्ययोनिजा ।
अस्यैव राज्ञो दुहिता अद्रिकायां ह्यमावसोः ॥ ६० ॥
पराशरस्य दायादं ऋषेस्त्वं जनयिष्यसि ।
स वेदमेकं विप्रर्षिश्चतुर्धा वै करिष्यति ॥ ६१ ॥
महाभिषस्य[२] पुत्त्रौ द्वौ शन्तनोः कीर्त्तिवर्द्धनौ ।
विचित्रवीर्य्यं धर्मज्ञं त्वमेवोत्पादयिष्यसि ॥ ६२ ॥
चित्राङ्गदञ्च राजानं तेजोबलगुणान्वितं ।
एतानुत्पाद्य पुत्रं स्वं पुनर्लोकानवाप्स्यसि ॥ ६३ ॥
व्यतिक्रमात् पितॄणां त्वं प्राप्स्यसे जन्म कुत्सितं ।
तस्यैव राज्ञस्त्वं कन्या अद्रिकायां भविष्यसि ॥ ६४ ॥
कन्या भूत्वा ततश्च त्वमिमान्लोकानवाप्स्यसि ।

---

१ पाठोऽयमादर्शसम्मतो मुद्रितः । परन्त्वयं न समीचीनः ।
२ महानिषस्येति क० । महाषिषस्येति ङ० ।

एवमुक्ता तु दासेयी जाता सत्यवती तु सा ॥६५॥
अद्रिकायां सुता मत्स्यां सुता जाता ह्यमावसोः ।
अद्रिकामत्स्यसम्भूता गङ्गायामनुसङ्गमे ॥६६॥
तस्य राज्ञो हि सा कन्या राज्ञो वीर्य्ये सदैव हि ।
विरजा नाम ते लोका दिवि रोचन्ति ते गणाः ॥६७॥
अग्निष्वात्ताः स्मृतास्तत्र पितरो भास्वरप्रभाः ।
तान् दानवगणा यक्षा रक्षोगन्धर्व्वकिन्नराः ।
भूतसर्पपिशाचाश्च भावयन्ति फलार्थिनः ॥६८॥
एते पुत्राः समाख्याताः पुलहस्य प्रजापतेः ।
त्रय एते गणाः प्रोक्ता धर्ममूर्त्तिधराः शुभाः ॥६९॥
एतेषां मानसी कन्या पीवरी नाम विश्रुता ।
योगिनी योगपत्नी च योगमाता तथैव च ॥७०॥
भविता द्वापरं प्राप्य अष्टाविंशन्तु दैवतं ।
पराशरकुलोद्भूतः शुको नाम महातपाः ॥७१॥
श्रीमान्योगी महायोगी योगस्तस्माद्द्विजोत्तमः ।
व्यासादरण्यां सम्भूतो विधूम इव पावकः ॥७२॥
स तस्यां पितृकन्यायां योगाचार्यान् परिश्रुतान् ।
कृष्णं गौरं प्रभुं शम्भुं तथा भूरिश्रुतं सवौ ॥७३॥
कन्यां कीर्त्तिमतीञ्चैव योगिनीं योगमातरं ।
ब्रह्मदत्तस्य जननी महिषी त्वणुहस्य तु ॥७४॥
एतानुत्पाद्य धर्मात्मा पुत्रान् योगमवाप्य च ।
महायोगतपाश्चैव अपरावर्त्तिनीं गतिं ॥७५॥

आदित्यकिरणोपेतं त्वपुनर्भावमास्थितः ।
सर्व्वव्यापी विनिर्मुक्तो भविष्यति महामुनिः ॥७६॥
अमूर्त्तिमन्तः पितरो धर्ममूर्त्तिधरास्तु ये ।
त्रय एते गणास्तेषां चत्वारोऽन्ये निबोधत ॥७७॥
यान् वक्ष्यामि द्विजश्रेष्ठा मूर्त्तिमन्तो महाप्रभाः ।
उत्पन्नास्ते स्वधायास्तु कन्या ह्यग्नेः कवेः सुताः ॥७८॥
पितरो देवलोकेषु ज्योतिर्भासिषु भास्वराः ।
सर्व्वकामसमृद्धेषु द्विजास्तान् भावयन्त्युत ॥७९॥
एतेषां मानसी कन्या गौर्नाम दिवि विश्रुता ।
दत्तसेना कुमारेण शुक्रस्य महिषी प्रिया ॥८०॥
एकत्रिंशच्च विख्याता भृगूनां कीर्त्तिवर्द्धनाः ।
मरीचिगर्भास्ते लोकाः समावृत्य दिवि स्थिताः ॥८१॥
एते ह्यङ्गिरसः पुत्राः साध्यैः सह विवर्द्धिताः ।
उपहूताः स्मृतास्ते तु पितरो भास्वरा दिवि ।
तान् क्षत्रियगणान् दृष्ट्वा भावयन्ति फलार्थिनः ॥ ८२॥
एतेषां मानसी कन्या यशोदा नाम विश्रुता ।
पत्नी सा विश्वमहतः स्नुषा वै विश्वशर्म्मिणः[१] ॥८३॥
राजर्षेर्जननी देवी खट्वाङ्गस्य महात्मनः ।
यस्य यज्ञे पुरा गीता गाथा गीतैर्महर्षिभिः ॥८४॥
अग्नेर्जन्म तथा दृष्ट्वा शाण्डिल्यस्य महात्मनः ।

---

१ विश्वकर्म्मणः इति ङ० । विश्वशर्म्मिणामिति क० ।

यजमानं दिलीपं ये पश्यन्ति सुसमाहिताः ।
सत्यव्रतं महात्मानं ते स्वर्गजयिनोऽमराः ॥८५॥
आज्यपा नाम पितरः कर्दमस्य प्रजापतेः ।
समुत्पन्नस्य पुलहादुत्पन्नास्तस्य वै पुनः ॥८६॥
लोकेष्वेतेषु वर्त्तन्ते कामगेषु विहङ्गमाः ।
एतान् वैश्यगणाः श्राद्धे भावयन्ति फलार्थिनः ॥८७॥
एतेषां मानसी कन्या विरजा नाम विश्रुता ।
ययातेर्जननी साध्वी पत्नी सा नहुषस्य तु ॥८८॥
सुकाला नाम पितरो वसिष्ठस्य प्रजापतेः ।
हिरण्यगर्भस्य सुताः शूद्रास्तान् भावयन्त्युत ॥८९॥
मानसा नाम ते लोका वर्त्तन्ते यत्र ते दिवि ।
एतेषां मानसी कन्या नर्मदा सरितां वरा ॥९०॥
सा भावयति भूतानि दक्षिणापथगामिनी ।
जननी त्रसदस्योर्हि पुरुकुत्सपरिग्रहः ॥९१॥
एतेषामभ्युपगमान्मातुर्मन्वन्तरेश्वरः ।
मन्वन्तरादौ श्राद्धानि प्रवर्त्तयति सर्वशः ॥९२॥
पितृणामानुपूर्व्व्येण सर्व्वेषां द्विजसत्तमाः ।
तस्मादिह स्वधर्मेण श्राद्धं देयन्तु श्रद्धया ॥९३॥
सर्व्वेषां राजतैः पात्रैरपि वा रजतान्वितैः ।
दत्तं स्वधां पुरोधाय तथा प्रीणाति वै पितॄन् ॥९४॥
सोमस्याप्यायनं कृत्वा ह्यग्नेर्वैवस्वतस्य च ।
उदगायनश्चाग्नौ च अश्वमेधस्तदाप्नुयात् ॥९५॥

पितॄन् प्रीणाति वै भक्त्या पितरः प्रीणयन्ति तं।
पितरः पुष्टिकामस्य प्रजाकामस्य वा पुनः।
पुष्टिं प्रजाञ्च स्वर्गञ्च प्रयच्छन्ति न संशयः ॥९६॥
देवकार्य्यादपि सदा पितृकार्य्यं विशिष्यते।
देवताभ्यः पितॄणां हि पूर्व्वमाप्यायनं स्मृतम् ॥९७॥
न हि योगगतिः सूक्ष्मा पितॄणामपि दृश्यते।
तपसा हि प्रसिद्धेन दृश्यन्ते मांसचक्षुषा ॥९८॥
इत्येते पितरश्चैव लोका दुहितरश्च वै।
दौहित्रा यजमानाश्च प्रोक्ता ये भावयन्ति तान् ॥९९॥
चत्वारो मूर्त्तिमन्तश्च त्रयस्तेषाममूर्त्तयः।
तेभ्यः श्राद्धानि सत्कृत्य देवाः कुर्व्वन्ति यत्नतः ॥१००॥
भक्ताः प्राञ्जलयः सर्व्वे सेन्द्रास्तद्गतमानसाः।
विश्वे च सिकताश्चैव पृश्निजाः शृङ्गिनस्तथा ॥१०१॥
कृष्णाः श्वेतास्त्वजाश्चैव विधिवत्पूजयन्त्युत।
प्रजास्ता वातरशना दिवाकीर्त्त्यास्तथैव च ॥१०२॥
लेखाश्च मरुतश्चैव ब्रह्माद्याश्च दिवौकसः।
अत्रिभृग्वङ्गिराद्याश्च ऋषयः सर्व्व एव च ॥१०३॥
यक्षा नागाः सुपर्णाश्च किन्नरा राक्षसैः सह।
पितॄंस्त्वपूजयन् सर्व्वे नित्यमेव फलार्थिनः ॥१०४॥
एवमेते महात्मानः श्राद्धे सत्कृत्य पूजिताः।
सर्वान् कामान् प्रयच्छन्ति शतशोऽथ सहस्रशः ॥१०५॥
हित्वा त्रैलोक्यसंसारं जरामृत्युभयं तथा।

मोक्षं योगमथैश्वर्य्यं प्रयच्छन्ति पितामहाः ॥१०६॥
मोक्षोपायमथैश्वर्य्यं सूक्ष्मदेहाश्च देवताः ।
कृत्स्नं वैराग्यमानन्त्यं प्रयच्छन्ति पितामहाः ॥१०७॥
ऐश्वर्य्यं विहितं योगमैश्वर्य्यं वित्तमुत्तमम् ।
योगैश्वर्य्यादृते मोक्षः कथञ्चिन्नोपपद्यते ॥१०८॥
अपक्षस्येव गमनं गगने पक्षिणो यथा ।
वरिष्ठः सर्वधर्म्माणां मोक्षो धर्म्मः सनातनः ॥१०९॥
विमानानां सहस्राणि युक्तान्यप्सरसाङ्गणैः ।
सर्वकामप्रसिद्धानि प्रयच्छन्ति पितामहाः ॥११०॥
प्रजा पुष्टिः स्मृतिर्मेधा राज्यमारोग्यमेव च ।
पितॄणां हि प्रसादेन प्राप्यते सुमहात्मना ॥१११॥
मुक्तावैदूर्य्यवासांसि वाजिनागायुतानि च ।
कोटिशश्चापि रत्नानि प्रयच्छन्ति पितामहाः ॥११२॥
हंसबर्हिणयुक्तानि मुक्तावैदूर्य्यवन्ति च ।
किङ्किणीजालनद्धानि सदा पुष्पफलानि च ।
प्रीत्या नित्यं प्रयच्छन्ति मनुष्याणां पितामहाः ॥११३॥

इति श्रीमहापुराणे वायुप्रोक्ते श्राद्धकल्पो नामै-
कादशोऽध्यायः ।

# अथ द्वादशोऽध्यायः ।



श्राद्धकल्पः ।

बृहस्पतिरुवाच। सौवर्णं राजतं ताम्रं पितॄणां पात्रमुच्यते ।
रजतं रजताक्तं वा पितॄणां पात्रमुच्यते ॥१॥
रजतस्य कथा चापि दर्शनं दानमेव च ।
अनन्तमक्षयं स्वर्ग्यं पितॄणां दानमुच्यते ।
पितॄनेतेन दानेन सत्पुत्रास्तारयन्त्युत ॥२॥
राजते हि स्वधा दुग्धा पात्रेऽस्मिन् पितृभिः पुरा ।
स्वधादायार्थिभिस्तात तस्मिन् दत्ते तदक्षयं ॥३॥
कृष्णाजिनस्य सान्निध्यं दर्शनं दानमेव वा[1] ।
रक्षोघ्नं ब्रह्मवर्चस्यं पितॄंस्तत्तद्धितारयेत्[2] ॥४॥
काञ्चनं राजतं ताम्रं[3] दौहित्रं कुतपस्तिलाः ।
वस्त्रञ्च पावनीयानि त्रिदण्डो योगमेव च ॥५॥
श्राद्धकर्मण्ययं श्रेष्ठो विधिर्ब्राह्म्यः सनातनः ।
आयुः कीर्त्तिः प्रजाश्चैव प्रज्ञासन्ततिवर्द्धनः ॥६॥
दिशि दक्षिणपूर्वस्यां विदिक्स्थानं विशेषतः[4] ।
सर्वतो रत्निमात्रन्तु चतुरस्रं सुसंहितं ॥७॥

---

१ दानमेव चेति क० ।
२ पितॄंस्तु भुवि भावयेदिति ख० ।
३ पात्रमिति क० ।
४ विदिक्स्थानानि वेशयेदिति ङ०, च० च ।

वक्ष्यामि विधिवत् स्नानं पितॄणामनुशासनात् ।
धन्यमारोग्यमायुष्यं बलवर्णविवर्द्धनं ॥८॥
तत्र गर्त्तास्त्रयः कार्य्यास्त्रयो दण्डाश्च खादिराः ।
रत्निमात्रास्तु ते कार्य्या रजतेन विभूषिताः ।
ते वितस्त्यायताः कार्य्याः सर्व्वतश्चतुरङ्गुलाः ॥९॥
प्रागुदक्षिणमुखान् भूमौ स्थितानसुषिरांस्तथा ।
अद्भिः पवित्रपूताभिः प्लावयेत्सततं शुचिः ॥१०॥
पयसा त्वाजगव्येन शोधनं वाग्भिरेव तु ।
तर्पणात् सततं ह्येवं तृप्तिर्भवति शाश्वती ॥११॥
इह चामुत्र च श्रीमान् सर्वकर्मसमन्वितः ।
एवं त्रिषवणस्नातो योऽर्चयेत पितॄन् सदा ।
मन्त्रेण विधिवत् सम्यगश्वमेधफलं लभेत् ॥१२॥
तत्स्थापयेदमावास्याङ्गर्त्ते भूचतुरङ्गुले ।
त्रिःसप्तसंज्ञास्ते यस्मास्त्रैलोक्यन्धार्य्यते तु वै ॥१३॥
तस्य पुष्टिरथैश्वर्य्यमायुः सन्ततिरेव च ।
विचित्रा भजते लक्ष्मीर्मोक्षञ्च लभते क्रमात् ॥१४॥
पाप्मापहं पावनीयमश्वमेधफलं तथा ।
अश्वमेधफलं ह्येतत् द्विजैः सत्कृत्य पूजितं ।
मन्त्रं वक्ष्याम्यहं तस्मादमृतं ब्रह्मनिर्मितं ॥१५॥
देवतेभ्यः पितृभ्यश्च महायोगिभ्य एव च ।
नमः स्वधायै स्वाहायै नित्यमेव भवन्त्युत ॥१६॥
आद्यावसाने श्राद्धस्य त्रिरावर्त्तं जपेत्तदा ।

पिण्डनिर्वपणे चैव जपेदेतत् समाहितः ।
पितरः क्षिप्रमायान्ति राक्षसाः प्रद्रवन्ति च ॥१७॥
पितॄंस्त्रिषु लोकेषु मन्त्रोयन्तारयत्युत ।
पठ्यमानः सदा श्राद्धे नियतं ब्रह्मवादिभिः ॥१८॥
राज्यकामो जपेदेनं सदा मन्त्रमतन्द्रितः ।
वीर्य्यशौचार्थसत्त्वश्च श्रीरायुर्बलवर्द्धनं ॥१९॥
प्रीयन्ते पितरो येन जप्येन नियमेन च ।
सप्तार्च्चिषं प्रवक्ष्यामि सर्वकामप्रदं शुभं ॥२०॥
अमूर्तानां समूर्तानां पितॄणान्दीप्ततेजसां ।
नमस्यामि सदा तेभ्यो ध्यानिभ्यो योगचक्षुषा ॥२१॥
इन्द्रादीनां जनयितारो भृगुमारीचयोस्तथा ।
सप्तर्षीणां पितॄणाञ्च तान् नमस्यामि कामदान् ॥२२॥
मन्वादीनां सुरेशानां सूर्य्याचन्द्रमसोस्तथा ।
तान् नमस्कृत्य सर्वान् वै पितॄन् कुशलदायकान् ॥२३॥
नक्षत्राणाञ्चरादीनां पितॄनथ पितामहान् ।
द्यावापृथिव्योश्च तथा नमस्यामि कृताञ्जलिः ॥२४॥
देवर्षीणाञ्जनयितॄंश्च सर्वलोकनमस्कृतान् ।
अभयस्य सदा दातॄन्नमस्येऽहं कृताञ्जलिः ॥२५॥
प्रजापतेः कश्यपाय सोमाय वरुणाय च ।
योगयोगेश्वरेभ्यश्च नमस्यामि कृताञ्जलिः ॥२६॥
पितृगणेभ्यः सप्तभ्यो नमो लोकेषु सप्तसु ।
स्वयम्भुवे नमस्चैव ब्रह्मणे योगचक्षुषे ॥२७॥

एतदुक्तं सप्तर्षिब्रह्मर्षिगणपूजितं ।
पवित्रं परमं[१] ह्येतत् श्रीमद्रक्षोविनाशनं ॥२८॥
अनेन विधिना युक्तः स्त्रीन् वरान् लभते नरः ।
अन्नमायुः सुतांश्चैव ददते पितरो भुवि ॥२९॥
भक्त्या परमया युक्तः श्रद्दधानो जितेन्द्रियः ।
सप्तार्चिषं जपेद्यस्तु नित्यमेव समाहितः ।
सप्तद्वीपसमुद्रायां पृथिव्यामेकराड्भवेत् ॥३०॥
यत्किञ्चित् पच्यते गेहे भक्ष्यं वा भोज्यमेव च ।
अनिवेद्य न भोक्तव्यं तस्मिन्नायतने सदा ॥३१॥
क्रमशः कीर्त्तयिष्यामि बलिपात्राण्यतःपरं ।
येषु यच्च फलं प्रोक्तं तन्मे निगदतः शृणु ॥३२॥

इति श्रीमहापुराणे वायुप्रोक्ते श्राद्धकल्पो नाम
द्वादशोऽध्यायः ।

---

१ पवित्रमपरमिति च० ।

# अथ चयोदशोऽध्यायः ।

श्राद्धकल्पः ।

वृहस्पतिरुवाच । पालाशं ब्रह्मवर्चस्यमश्वत्थे राज्यभावना ।
सर्वभूताधिपत्यञ्च[1] प्लक्षे नित्यमुदाहृतं ॥१॥
पुष्टिकामञ्च न्यग्रोधं बुद्धिं प्रज्ञां धृतिं स्मृतिं ।
रक्षोघ्नञ्च यशस्यञ्च काश्मर्य्यं पात्रमुच्यते ॥२॥
सौभाग्यमुत्तमं लोके मधुके समुदाहृतं ।
फल्गुपात्रे च कुर्वाणः सर्वान् कामानवाप्नुयात् ॥३॥
परा द्युतिरर्थो कर्तुः प्राकाम्यञ्च विशेषतः ।
विल्वे लक्ष्मीस्तथा मेधा नित्यमायुष्यमेव च ॥४॥
क्षेत्रारामतडागेषु सर्वसस्येषु चैव हि ।
वर्षेदजस्रं पर्जन्यो वेणुपात्रेषु कुर्व्वतः ॥५॥
एतेष्वेव सुपात्रेषु ये चैवाग्रयणं ददुः ।
सकृदप्यत्र यज्ञानां सर्वेषां फलमुच्यते ॥६॥
पितृभ्यो यस्तु माल्यानि सुगन्धीनि च सर्वशः ।
सदा दद्याच्छ्रिया युक्तः स विभाति दिवाकरः ॥७॥
गुग्गुलादींस्तथा धूपान् पितृभ्यो यः प्रयच्छति ।
संयुक्तान् मधुसर्पिर्भ्यां सोऽश्वमेधफलं लभेत् ॥८॥
धूपं गन्धगुणोपेतं कान्तं पितृपरायणं ।

---

१ सर्व्वभूम्याधिपत्यञ्चेति क० ।

लभते स्त्रीष्वपत्यानि इह चामुत्र चोभयोः ।
दद्यादेव पितृभ्यस्तु नित्यमेव ह्यतन्द्रितः ॥९॥
दीपं पितृभ्यः प्रयतः सदा यस्तु प्रयच्छति ।
स लोके प्रतिभं चक्षुः सदा च लभते शुभं ॥१०॥
तेजसा यशसा चैव कान्त्या चैव बलेन च ।
भुवि प्रकाशो भवति भ्राजते च त्रिविष्टपे ।
अप्सरोभिः परिवृतो विमानाग्रे स मोदते ॥११॥
गन्धान् पुष्पाणि धूपांश्च दद्यादाज्याहुतीश्च वै ।
फलमूलनमस्कारैः पितॄणां प्रयतः शुचिः ।
पूर्वं कृत्वा द्विजान् पश्चात् पूजयेदन्नसम्पदा ॥१२॥
श्राद्धकाले तु सततं वायुभूताः पितामहाः ।
आविशन्ति द्विजान् दृष्ट्वा तस्मादेतद्ब्रवीमि ते ॥१३॥
वस्त्रैरन्नैः प्रदानैस्तैर्भक्ष्यपेयैस्तथैव च ।
गोभिरश्वैस्तथा ग्रामैः पूजयित्वा द्विजोत्तमान् ॥१४॥
भवन्ति पितरः प्रीता पूजितेषु द्विजातिषु ।
तस्मादन्नेन विधिवत् पूजयेद्द्विजसत्तमान् ॥१५॥
सव्योत्तराभ्यां पाणिभ्यां कुर्य्यादुल्लेखनं द्विजः ।
प्रोक्षणञ्च तथा कुर्य्यात् श्राद्धकर्म्मण्यतन्द्रितः ॥१६॥
दर्भान् पिण्डांस्तथा भक्ष्यान् पुष्पाणि विविधानि च ।
गन्धदानमलङ्कारमेकैकं निर्वपेद्बुधः ॥१७॥
पोषयित्वा जमं सम्यग् वैश्वः स्यादुत्तरो द्विजः ।
अभ्यङ्गदर्भपिञ्जूलैस्त्रिभिः कुर्याद्यथाविधि ॥१८॥

अपसव्यं पितृभ्यश्च दद्याद्वत्रमनुत्तमं[1] ।
तमुद्धार्य्याथ सर्व्वेषां वस्त्रार्थं सूत्रमेव च[2] ॥१९॥
खण्डनं पेषणञ्चैव[3] तथैवोल्लेखनं तथा ।
सकृदेव हि देवानां पितॄणां त्रिभिरुच्यते ॥२०॥
एकं पवित्रं हस्तेन पितॄन् सर्व्वान् सकृत् सकृत् ।
चैलमन्त्रेण पिण्डेभ्यो दत्त्वा दर्भनजं हितं ॥२१॥
सदा सर्पिस्तिलैर्युक्तांस्त्रीन् पिण्डान्निर्वपेद्भुवि ।
जानु कृत्वा तथा सव्यं भूमौ पितृपरायणः ॥२२॥
पितॄन् पितामहांश्चैव तथैव प्रपितामहान् ।
आहूय च पितॄन् प्राज्ञान् पितृतीर्थेन यत्नतः ।
पिण्डान् परिक्षिपेत् सम्यगपसव्यमतन्द्रितः ॥२३॥
अन्नेनाद्भिश्च पुष्पैश्च भक्ष्यैश्चैव पृथग्विधैः ।
पृथक् मातामहानान्तु केचिदिच्छन्ति मानवाः ॥२४॥
त्रीन् पिण्डानानुपूर्व्व्येण साङ्गुष्ठान् पुष्टिवर्द्धनान् ।
जान्वन्तराभ्यां यत्नेन पिण्डान् दद्याद् यथाक्रमं ॥२५॥
सव्योत्तराभ्यां पाणिभ्यां धर्म्मे मन्त्रे च पर्य्ययः ।
नमो वः पितरः सूक्तैः सदा ह्येवमतन्द्रितः ॥२६॥
दक्षिणस्यान्तु पाणिभ्यां प्रथमं पिण्डमुत्सृजेत् ।
नमो वः पितरः सौम्याः पठन्नित्यमतन्द्रितः ॥२७॥

---

१ दद्यादन्नमनुत्तममिति ङ० ।
२ श्लोकार्द्धं न समीचीनं ।
३ लेपञ्चैवेति ख० ।

सव्योत्तराभ्यां पाणिभ्यां धर्मे सर्व्वमतन्द्रितः ।
उलूखलस्य लेखायामुदपात्राच्च सेवनं ॥२८॥
क्षौमसूत्रं नवं दद्यात् शोणं कार्पासिकं तथा ।
पत्रोर्णं पितृसूत्रञ्च कौशेयं परिवर्जयेत् ॥२९॥
वर्जयेत्तद्दशां यज्ञे यद्यप्यहतवस्त्रजां ।
न प्रीणन्ति तथैतानि दातुराप्यायतो भवेत् ॥३०॥
श्रेष्ठमाञ्जनिकं कुङ्कुमञ्जनं नित्यमेव च ।
कृष्णेभ्यश्च तिलेभ्यश्च यत्तैलं परिरक्षितं ॥३१॥
चन्दनागुरुणी चोभे तमालोशीरपद्मकं ।
धूपञ्च गुग्गुलश्रेष्ठं तुरुष्कं धूपमेव च ॥३२॥
शुक्लाः सुमनसः श्रेष्ठास्तथा पद्मोत्पलानि च ।
गन्धवन्त्युपपन्नानि यानि चान्यानि कृत्स्नशः ॥३३॥
जवासुमनसो भण्डीरूपकामकुरण्डकाः ।
पुष्पाणि वर्जनीयानि श्राद्धकर्मणि नित्यशः ॥३४॥
यानि गन्धादपेतानि उग्रगन्धीनि यानि च ।
वर्जनीयानि पुष्पाणि भूतिमन्विच्छता तदा ॥३५॥
द्विजातयस्तथाभ्यिष्टा नियताः स्युरुदङ्मुखाः ।
पूजयेद्यजमानस्तु विधिवद्दक्षिणामुखः ॥३६॥
तेषामभिमुखो दद्याद्दर्भान् पिण्डांश्च यत्नतः ।
अनेन विधिना साचादर्चयेत् स्वान् पितामहान् ॥३७॥
हरिता वै सपिञ्जल्याः पुष्पस्निग्धाः समाहिताः ।
रत्निमात्रप्रदानेन पितृतीर्थेन संस्थिताः ॥३८॥

उपमूले तथा नीलाः प्रस्तराद्यकुलोद्यमाः[१]।
तथा श्यामाकनीवारा दूर्वाराः समुदाहृताः ॥३९॥
पूर्व्वकीर्त्तितवान् श्रेष्ठो बभूवाथ प्रजापतिः।
तस्य बाला निपतिता भूमौ चाकाशमार्गतः ॥४०॥
तस्मान् मेध्याः समाकाशाः श्राद्धकर्मणि पूजिताः।
पिण्डनिर्वपणान्तेषु कर्त्तव्यं भूतिमिच्छता ॥४१॥
प्रजापुष्टिर्द्युतिः कीर्त्तिः प्रजाकान्तिसमन्विता।
भवन्ति रुचिरा नित्यं विपाप्मानोऽघवर्जिताः ॥४२॥
सकृद्देवास्तरेद्दर्भान् पिण्डार्थं दक्षिणामुखः।
प्रागदक्षिणाग्रनियतो विधिश्चाप्यनुवक्ष्यति ॥४३॥
न दीनो वापि वा क्रुद्धो न चैवान्यमना नरः।
एकाग्रमाधाय मनः श्राद्धं कुर्य्यात् सदा बुधः ॥४४॥
निहन्मि सर्व्वं यदमेध्यवद्भवे-
द्धताश्च सर्व्वे सुरदानवा मया।
रक्षांसि यक्षाश्च पिशाचसङ्घा
हता मया यातुधानाश्च सर्व्वे ॥४५॥
एवं पित्रे दृष्टमन्त्रं हि यस्य
तस्यासुरा वर्जयन्तीह सर्व्वे।
यस्मिन् देशे पठ्यते एष मन्त्र-
स्तं वै देशं राक्षसा वर्जयन्ति ॥४६॥
अनेन विधिना नित्यं श्राद्धं कुर्य्याद् द्विजः सदा।

---

१ पाठोऽयं न समीचीनः।

मनसा काङ्क्षितं यद्यत् तत्तद्द्युः पितामहाः ॥४७॥
पितरो दुष्टमनसो रक्षांसि विमनांसि च ।
भवन्त्येव कृते श्राद्धे नित्यमेव प्रयत्नतः ॥४८॥
शूद्राः श्राद्धे चीरघास्तु[१] बल्वजास्तरवस्तथा ।
वारणाश्च लवाश्चैव लवणाश्च नित्यशः ।
एवमादीन्यथान्यानि तृणानि परिवर्जयेत् ॥४९॥
अञ्जनाभ्यञ्जनागन्धामानुप्रलयनं[२] तथा ।
काशैः पुनर्भवैः कार्य्यं सर्व्वमेव फलं भवेत् ॥५०॥
काशाः पुनर्भवा ये च वर्द्धणा उपवर्द्धणाः ।
अथ ते पितरो देवा देवाश्च पितरः पुनः ॥५१॥
पुष्पगन्धादिधूपानामेष मन्त्र उदाहृतः ।
आहृत्य दक्षिणायान्तु होमार्थे विप्रयत्नतः ॥५२॥
सोमाय वै पितृमते स्वधा अङ्गिरसे नमः ।
अस्वर्ग्यं लौकिकं वापि जुहुयात् कर्म्मसिद्धये ॥५३॥
अन्तराधाय समिधं तथा होमो विधीयते ।
समाहितेन मनसा प्रयताग्निः प्रयत्नतः ॥५४॥
अग्नये कव्यवाहाय स्वधा अङ्गिरसे नमः ।
यमाय चैवाङ्गिरसे स्वधा नम इति ब्रुवन् ॥५५॥
इत्येते वै होममन्त्रा मन्त्राणामनुपूर्व्वशः ।
दक्षिणातोऽग्नये नित्यं सोमायान्तरतस्तथा ॥५६॥
एतयोरन्तरं नित्यं जुहुयाद्वै विवस्वते ।

१ पाठोऽयमादर्शसम्मते मुद्रितः । परन्त्वयं न समीचीनः।
२ अयमपि पाठो न समीचीनः ।

उपचारं स्वधाकारं तथैवोल्लेखनञ्च यत् ॥५७॥
होमजप्ये नमस्कारः प्रोक्षणञ्च विशेषतः ।
अञ्जनाभ्यञ्जने चैव पिण्डसंवपनं तथा ॥५८॥
अश्वमेधफलेनैव[1] तत् स्मृतं मन्त्रपूर्व्वकं ।
क्रियाः सर्व्वा यथोद्दिष्टाः प्रयत्नेन समाचरेत् ॥५९॥
बहुहव्यलमेवाग्नौ सुसमिद्धे विशेषतः ।
विधूमे लेलिहाने च होतव्यं कर्मसिद्धये ॥६०॥
अप्रबुद्धे सधूमे च जुहुयाद्यो हुताशने ।
यजमानो भवेदन्धः सोऽपुत्र इति नः श्रुतं ॥६१॥
अल्पेन्धनो वा रूक्षो वा विस्फुलिङ्गश्च सर्व्वशः ।
ज्वालाधूमोपसेव्यश्च स तु वह्निर्न सिद्धये ॥६२॥
दुर्गन्धश्चैव नीलश्च कृष्णश्चैव विशेषतः ।
भूमिं विगाहते यत्र तत्र विद्यात् पराभवं ॥६३॥
अर्चिष्मान् पिण्डितशिखः[2] सर्पिःकाञ्चनसन्निभः ।
स्निग्धः प्रदक्षिणश्चैव वह्निः स्यात् कार्य्यसिद्धये ॥६४॥
नरनारीगणेभ्यश्च पूजां प्राप्नोति शाश्वतीं ।
अक्षयाः पूजितास्तेन भवन्ति पितरोऽव्ययाः ॥६५॥
खाद्युदुम्बरपात्राणि फलानि समिधस्तथा ।
श्राद्धे चातिपवित्राणि मेध्यानीति विशेषतः ॥६६॥
पवित्रं वा द्विजश्रेष्ठ शुद्धये जन्मकर्म्मसु ।

---

१ अश्वमेधफलस्यैवेति ख० ।
२ नद्धितशिख इति क० ।

पात्रेषु फलमुद्दिष्टं यन्मया श्राद्धकर्म्मणि ॥६७॥
तदेव कृत्स्नं विज्ञेयं समित्सु च यथाक्रमं ।
कृत्वा समाहितं चित्तमग्नये वै करोम्यहं ॥६८॥
अनुज्ञातः कुरुष्वेति तथैव द्विजसत्तमैः ।
पत्नीमादाय पुत्रांश्च जुहुयाद्धव्यवाहनं ॥६९॥
समानप्लक्षन्यग्रोधप्लक्षाश्वत्थविकङ्कताः ।
उदुम्बरास्तथा विल्वचन्दना यज्ञियाश्च ते ॥७०॥
सरलो देवदारुश्च शालश्च खदिरस्तथा ।
समिदर्थं प्रशस्ताः स्युरेते वृक्षा विशेषतः ॥७१॥
ग्राम्याः कण्टकिनश्चैव यज्ञिया येन केन च ।
पूजिताः समिदर्थे तु पितॄणां वचनं तथा ॥७२॥
समिद्भिः कल्मषेयाभिर्जुहुयाद्यो हुताशनं ॥
फलं यत् कर्मणस्तस्य तन्मे निगदतः शृणु ॥७३॥
आयसं सर्व्वकामीयमश्वमेधफलं हि तत् ।
श्लेष्मातको नक्तमालः कपित्थः शाल्मलिस्तथा ॥७४॥
नीपो विभीतकश्चैव शमीभिश्च तथैव च ।
शकुनानां निवासश्च वर्जयेच्च महीरुहान् ।
अयज्ञीयाः स्मृता ह्येते च वृक्षांश्चैव तु वर्जयेत् ॥७५॥
स्वधेति चैव मन्त्राग्नौ पितॄणां वचनं तथा ।
स्वाहेति चैव देवानां यज्ञकर्मण्युदाहृतं ॥७६॥

इति श्रीमहापुराणे वायुप्रोक्ते श्राद्धकल्पो नाम
चयोदशोऽध्यायः ।

# अथ चतुर्दशोऽध्यायः ।

श्राद्धकल्पः ।

सूत उवाच । देवाश्च पितरश्चैव तेभ्योऽन्ये पितरस्तथा ।
आथर्वणविधिर्ह्येष प्रत्युवाच बृहस्पतिः ॥१॥
पूजयेच्च पितॄन् पूर्व्वं देवांश्चापि विशेषतः ।
देवेभ्योऽपि पितॄन् पूर्वमर्चयन्तीह यत्नतः ॥२॥
दक्षस्य दुहिता ख्याता लोके विश्वेति नामतः ।
विधिना सा तु धर्म्मज्ञ दत्ता धर्म्माय धर्म्मतः ।
तस्याः पुत्रा महात्मानो विश्वेदेवा इति श्रुतिः ॥३॥
प्रख्यातास्त्रिषु लोकेषु सर्व्वलोकनमस्कृताः ।
समस्तास्ते महात्मानस्तेपुरुग्रं महत्तपः ॥४॥
हिमवच्छिखरे रम्ये देवगन्धर्वसेविते ।
सर्व्वाप्सरोभिश्चरितं देवगन्धर्व्वसेवितं ॥५॥
शुद्धेन मनसा प्रीताः पितरस्तानथाब्रुवन् ।
वरं वृणीध्वं प्रीताः स्म कं कामं करवामहे ॥६॥
एवमुक्ते तु पितृभिस्तदा त्रैलोक्यभावनः ।
प्रजानामधिपो ब्रह्मा विश्वानितीदमब्रवीत् ॥७॥
ब्रह्मा उवाच । महातेजा महादेवस्तपसा तैस्तु तापितः ।
तपसा तेन सुप्रीतः कं कामं विदधामि वः ॥८॥
एवमुक्तास्तदा विश्वे ब्रह्मणा लोककर्तृणा ।

ऊचुस्ते सहिताः सर्व्वे ब्रह्माणं लोकभाविनं ॥९॥
श्राद्धेऽस्माकं भवेदंशो ह्येष नः काङ्क्षितो वरः ।
प्रत्युवाच ततो ब्रह्मा तान्वै त्रिदिवपूजितान् ॥१०॥
भविष्यत्येवमेवेति काङ्क्षितो वो वरस्तु यः ।
पितृभिस्तु तथेत्युक्ता एवमेतन्न संशयः ॥११॥
सहास्माभिस्तु वो भाव्यं यत्किञ्चित् क्रियते त्विह ।
अस्माकं कल्पिते श्राद्धे युष्मानग्रासनं ह वै ॥१२॥
भविष्यति मनुष्येषु सत्यमेतद् ब्रवीमि ते ।
माल्यैर्गन्धैस्तथान्नेन युष्मानग्रेऽर्चयिष्यति ॥१३॥
प्रदाता चेति युष्माकमस्माकं दास्यते ततः ।
विसर्जनमथास्माकं पूर्व्वं पश्चात्तु देवताः ॥१४॥
रक्षणञ्चैव श्राद्धस्य आतिथ्यञ्च विधिद्वयं ।
भूतानां देवतानाञ्च पितॄणां श्राद्धकर्मणि ।
एवं विधिकृतः सम्यक् सर्व्वमेतद् भविष्यति ॥१५॥
एवं[१] दत्त्वा वरं तेषां ब्रह्मा पितृगणैः सह ।
भूतानुग्रहकृद्देवः सञ्चचार यथासुखं ॥१६॥
वेदे पञ्च महायज्ञा नराणां समुदाहृताः ।
एतान् पञ्च महायज्ञान्निर्वपेत्सततं नरः ॥१७॥
यत्र यास्यन्ति दातारः संस्थानं वै निबोधत ।
निर्भयं निरहङ्कारं निःशोकं निर्व्ययक्रमं ।
ब्रह्मस्थानमवाप्नोति सर्वकामपुरस्कृतं ॥१८॥

१ एनमिति ड० ।

शूद्रेणापि प्रकर्त्तव्याः पञ्चैते मन्त्रवर्जिताः ।
अतोऽन्यथा तु यो भुङ्क्ते स ऋणं नित्यमश्नुते ॥१९॥
ऋणञ्च भुङ्क्ते पापात्मा यः पचेदात्मकारणात् ।
तस्मान्निर्वर्त्तयेत् पञ्च महायज्ञान् सदा बुधः ॥२०॥
नैवेद्यं केचिदिच्छन्ति जीवत्यपि प्रयत्नतः ।
उदकपूर्व्वं बलिं कुर्यादुदकुम्भं तथैव च ॥२१॥
बलिं सुविदितं कुर्यादुच्चादुच्चतरं चिपेत् ।
पराङ्मुखगवां पूर्व्वं बलिं सूक्ष्मं समुत्चिपेत्[१] ॥२२॥
न निवेद्यो भवेत् पिण्डः पितॄणां यस्तु जीवति ।
दृष्टेनान्नेन भक्ष्यैश्च भोजयेत यथाविधि ।
विधानं वेदविहितमेतद्वक्ष्यामि यत्नतः ॥२३॥
देवदेवा महात्मानो ह्येतेपि पितरो ह्युत ।
इच्छन्ति किञ्चिदाचार्य्याः पश्चात् पिण्डनिवेदनं ॥२४॥
पूजनञ्चैव विप्राणां सर्व्वमेव हि[२] नित्यशः ।
तद्विधर्मार्थकुशलानित्युवाच बृहस्पतिः ॥२५॥
पूर्व्वं निवेदयेत्पिण्डं पश्चाद्विप्रांश्च भोजयेत् ।
योगात्मानो महात्मानः पितरो योगसम्भवाः ।
सोममाप्याययन्त्येते पितरो योगमास्थिताः ॥२६॥
तस्माद्दद्याच्छुचिः पिण्डान् योगिभ्यस्तत्परायणः ।
पितॄणां हि भवेदेतत्साचादिव कृतं हविः ॥२७॥

---

१ तथा चिपेदिति ख० ।
२ पर्व्वमेवहीनि क० । ऊर्द्धमेवहीति ख० ।

ब्राह्मणानां सहस्रेभ्यो योगी चाग्रासने यदि ।
यजमानञ्च भोक्तृंश्च नौरिवाम्भसि तारयेत् ॥२८॥
असतां प्रग्रहो यत्र सताञ्चैव विमानना ।
दण्डो देवकृतस्तत्र सद्यः पतति दारुणः ॥२९॥
हित्वागमं सधर्माणं बालिशं यत्र भोजयेत् ।
आदिकर्म समुत्सृज्य दाता तत्र विनश्यति ॥३०॥
पिण्डमग्नौ सदा दद्याद्भोगार्थी तु प्रयत्नतः ।
प्रजार्थी पतये[१] दद्यान्मध्यमं तत्र पूर्वकं ॥३१॥
उत्तमां द्युतिमन्विच्छन्गोषु नित्यं प्रयच्छति ।
प्रज्ञां पूजां यशः कीर्त्तिं गोषु नित्यं प्रयच्छति ॥३२॥
प्रार्थयन्दीर्घमायुश्च[२] वायसेभ्यः प्रयच्छति ।
सौकुमार्यमथान्विच्छन् कुक्कुटेभ्यः प्रयच्छति ॥३३॥
एवमेतत्समुद्दिष्टं पिण्डनिर्वपणात् फलं ।
आकाशं गमयेद्वापि स्थितो सुदक्षिणामुखः ।
पितॄणां स्थानमाकाशं दक्षिणा चैव दिग्भवेत् ॥३४॥
एकं विप्राः पुनः प्राहुः पिण्डोद्धरणमग्रतः ।
अनुज्ञाते तु तैर्विप्रैर्वानमुद्धियतामिति ॥३५॥
पुष्पाणाञ्च फलानाञ्च भक्ष्याणामन्नतस्तथा ।
अग्रमुद्धृत्य सर्वेषां जुहुयाज्जातवेदसि ॥३६॥
भक्ष्यमन्नं तथा पेयमनुक्तमफलानि च ।

---

१ पत्नये इति ङ०, च० च । परन्त्वयं पाठो न समीचीनः ।
२ वीर्य्यमायुश्चेति ख० ।

हुत्वा चाग्नौ ततः पिण्डान्निर्वपेद्दक्षिणामुखः ॥३७॥
स्निग्धैर्भक्ष्यैः सुगन्धैश्च तर्पयेत रसैस्तथा।
एकाग्रः पर्युपासीत प्रयतः प्राञ्जलिस्थितः।
तत्परः श्रद्दधानश्च कामानाप्नोति मानवः ॥३८॥
अक्षुद्रत्वं कृतज्ञत्वं दाक्षिण्यं सत्कृतश्च यत्।
ततो यशश्च दानञ्च प्रयच्छन्ति पितामहाः ॥३९॥
अतः परं विधिं सौम्यं भुक्तवत्सु द्विजातिषु।
आनुपूर्व्वेण विधिना तन्मे निगदतः शृणु ॥४०॥
प्रोक्ष्य भूमिमथोद्धृत्य पूर्व्वं पितृपरायणः।
ततोऽत्र विकिरं कुर्यात् विधिदृष्टेन कर्मणा ॥४१॥
स्वधां वाच्य ततो विप्रा विधिवद्भूरिदक्षिणान्।
अन्नशेषमनुज्ञाप्य सत्कृत्य द्विजसत्तमान्।
प्राञ्जलिः प्रयतश्चैव अनुगम्य विसर्जयेत् ॥४२॥

इति श्रीमहापुराणे वायुप्रोक्ते श्राद्धकल्पो नाम
चतुर्दशोऽध्यायः।

# अथ पञ्चदशोऽध्यायः ।



श्राद्धकल्पः ।

बृहस्पतिरुवाच । सकृदभ्यर्चिताः प्रीता भवन्ति पितरोऽव्ययाः ।

योगात्मानो महात्मानो विपाप्मानो महौजसः ॥१॥

प्रेत्य च स्वर्गलाभाय[१] कामैश्वर्यं सुविस्तरं ।

येषाञ्चाप्यनुतिष्ठन्ति मोक्षप्राप्तिक्रमेण तु ॥२॥

तानि वक्ष्याम्यहं सौम्याः सरांसि सरितस्तथा ।

तीर्थानि चैव पुण्यानि देशान् शैलान् तथाश्रमान् ॥३॥

पुण्यो यस्त्रिषु लोकेषु सरकण्टकपर्वतः ।

पर्व्वतः प्रवरः पुण्यः सिद्धचारणसेवितः ॥४॥

यत्र वर्षसहस्राणि प्रयुतान्यर्बुदानि च ।

तपः सुदुश्चरन्तेपे भगवानङ्गिराः पुरा ॥५॥

यत्र मृत्योर्गतिर्नास्ति तथैवासुररक्षसां ।

न भयञ्चैव वालक्ष्मीर्यावद् भूमिर्धरिष्यति ॥६॥

तेजसा यशसा चैव भ्राजते स नगोत्तमः ।

शृङ्गमाश्रवतो नित्यं वह्निः संवर्तको यथा ॥७॥

मृदवश्च सुगन्धाश्च हेमाभाः प्रियदर्शनाः ।

शान्ताः कुशा इति ख्याताः पिवन्[२] दक्षिणनर्मदां ॥८॥

---

१ स्वर्गलोकायेति ख० ।

२ पाठोऽयं न समीचीनः ।

दृष्टवान् स्वर्गसोपानं भगवानङ्गिराः पुरा ।
अग्निहोत्रे महातेजाः प्रस्तरार्थंकुशोत्तमान् ॥९॥
तेषु दर्भेषु यः पिण्डान् मरकण्टकपर्व्वते ।
दद्यात्सकृदपि प्राज्ञस्तस्य वक्ष्यामि यत् फलं ॥१०॥
तद्भवत्यक्षयं श्राद्धं पितॄणां प्रीतिवर्द्धनं ।
अन्तर्द्धानञ्च गच्छन्ति क्षेत्रमासाद्य तत् सदा ॥११॥
तत्र ज्वालारसः पुण्यो दृश्यतेऽद्यापि सर्व्वशः ।
सशल्यानाञ्च सत्त्वानां विशल्यकरणी नदी ॥१२॥
प्रागदक्षिणा तु सावर्त्ता वापी सा पर्वतोत्तमे ।
कलिङ्गदेशपार्श्वार्द्धे पितॄणां प्रीतिवर्द्धनं ॥१३॥
सिद्धक्षेत्रमृषिश्रेष्ठा यदुक्तं परमं भुवि ।
सम्मतो देवदैत्यानां श्लोकमप्युशना जगौ ॥१४॥
धन्यास्ते पुरुषा लोके ये प्राप्यामरकण्टकं ।
पितॄन्सन्तर्पयिष्यन्ति श्राद्धे पितृपरायणाः ॥१५॥
अल्पेन तपसा सिद्धिं गमिष्यन्ति न संशयः ।
सकृदेवार्चितास्तत्र स्वर्गममरकण्टके(१) ॥१६॥
महेन्द्रपर्व्वते रम्ये पुण्यं शक्रनिषेवितं ।
तत्रारुह्य भवेत् प्रीतिः श्राद्धञ्चैव महत्फलं ॥१७॥
विन्ध्याधःशिखरे युक्ता दिव्यं चक्षुः प्रवर्त्तते ।
अदृश्यश्चैव भूतानां देववच्चरते महीं ॥१८॥
सप्तगोदावरे चैव गोकर्णे च तपोवने ।

१सर्व्वत्र कण्टकस्थाने कङ्कटेति पाठः ङ० च० पुस्तकद्वये वर्त्तते ।

अश्वमेधफलं तत्र स्नात्वा च लभते नरः ॥१९॥
धूतपापस्थलं प्राप्य पूतः स्नात्वा भवेन्नरः ।
रुद्रस्तत्र तपस्तेपे देवदेवो महेश्वरः ॥२०॥
गोकर्णे वर्णितं विप्रैर्नास्तिकानां निदर्शनं ।
अब्राह्मणस्य सावित्री पठतः सम्प्रणश्यति ॥२१॥
देवर्षिभवने शृङ्गे सिद्धचारणसेविते ।
आरुह्य तन्तु नियमात्ततो यान्ति त्रिविष्टपं ॥२२॥
दिव्यैश्चन्दनवृक्षैश्च पादपैरुपशोभितं ।
आपः स्वादनसम्पृक्ता वहन्ति सततं यतः ॥२३॥
नदी प्रवर्त्तते ताभ्यस्ताम्रपर्णीति नामतः ।
योषेव समहाखेदा दक्षिणं याति सागरं ॥२४॥
नद्यास्तस्यास्तु या आपो मूर्च्छमाना महोदधौ ।
शङ्खा भवन्ति मुक्ताश्च जायन्ते शङ्खमुक्तिकाः ॥२५॥
उदकानयनं कृत्वा शङ्खमौक्तिकसंयुतं ।
आधिभिर्व्याधिभिश्चैव मुक्ता यान्त्यमरावतीं ॥२६॥
चन्दनेभ्यः प्रयुक्तानां शङ्खानां मौक्तिकस्य च ।
पापकर्तृनपि पितृंस्तारयन्ति यथाश्रुति ॥२७॥
चन्द्रतीर्थे कुमार्य्यान्तु कावेर्य्यां प्रभवेऽक्षये ।
श्रीपर्व्वतस्य तीर्थेषु वेङ्कते च तथा गिरौ ॥२८॥
एकस्या यत्र दृश्यन्ते वृक्षा स्त्रौशिरपर्व्वते ।
पालाशाः खादिरा विल्वा प्लक्षाश्वत्थविकङ्कताः ॥२९॥
एतद्धि मण्डलं सिद्धं यज्ञीयं द्विजसत्तमाः ।

अस्मिन् मुक्त्वा जनोऽङ्गानि क्षिप्रं यात्यमरावतीं ॥२०॥
कर्म्माणि सुप्रयुक्तानि सिध्यन्ति प्रभवाव्यये।
दुःप्रसक्तानि पितृषु प्रयुक्तानि भवन्त्युत ॥२१॥
पितॄणां दुहिता पुण्या नर्मदा सरितां वरा।
तत्र श्राद्धानि दत्तानि अक्षयाणि भवन्त्युत ॥२२॥
माठरस्य[१] वने पुण्ये सिद्धचारणसेविते।
अन्तर्द्धानं न गच्छन्ति सक्तास्तस्मिन् महागिरौ ॥२३॥
विन्ध्ये चैव गिरौ पुण्ये धर्माधर्मनिदर्शनं।
पापधारां न पश्यन्ति धाराम्पश्यन्ति साधवः ॥२४॥
तस्यां न दृश्यते पापं केषाञ्चित् पापकर्मणां।
स्पष्टा भवति सा धारा प्रायशः शुभकर्मणां ॥२५॥
कोशलायां मतङ्गस्य वापी पापनिसूदनी।
स्नातास्तस्यां दिवं यान्ति कामचारविहङ्गमाः ॥२६॥
कुमारकोशलातीर्थे पर्व्वते पालपञ्जरे।
पाण्डुकूले समुद्रान्ते पण्डारकवने तथा ॥२७॥
विमले च विपाये च[२] सतृतत्य प्रभवेऽभये।
श्रीवृक्षे गृध्रकूटे च जम्बूमार्गे च नित्यशः ॥२८॥
असितस्य गुरोः पुण्ये योगाचार्य्यस्य धीमतः।
तत्रापि श्राद्धमानन्त्यमसितायाश्च नित्यशः ॥२९॥
पुष्करेष्वक्षयं श्राद्धं तपश्चैव महाफलं।

---

१ याचकस्येति ख०।
२ विपाके चेति ख०।

महोदधौ प्रभासे च तस्माद्देवं विनिर्द्दिशेत् ॥४०॥
देविकायां वृषो नाम कूपः सिद्धनिषेवितः ।
समुत्पतन्ति तस्यापो गवां शब्देन नित्यशः ॥४१॥
योगेश्वरैः सदा जुष्टः सर्व्वपापवहिष्कृतैः ।
दद्याच्छ्राद्धन्तु यस्तस्मिंस्तस्य वक्ष्यामि यत् फलं ॥४२॥
अक्षयं सार्व्वकामीयं[१] श्राद्धं प्रीणाति वै पितॄन् ।
जातवेदः शिला तत्र सावाड्शैः सनातनी ॥४३॥
यस्त्वग्निं प्रविशेत् तत्र नाकपृष्ठे स मोदते ।
अग्निः शान्तः पुनर्जातस्तस्मिन् दत्तं तदक्षयं ॥४४॥
दशाश्वमेधिके तीर्थे तीर्थे पञ्चाश्वमेधिके ।
यथोद्दिष्टं फलं तेषां क्रतूनां नात्रसंशयः ॥४५॥
ख्यातं हयशिरो नाम तीर्थं सद्योवरप्रदं ।
श्राद्धं तत्र तदाक्षयं दत्वा स्वर्गे च मोदते ॥४६॥
श्राद्धं कुम्भे विमुञ्चन्ति ज्ञेयं पापनिषूदनं ।
श्राद्धं तत्राक्षयं प्रोक्तं जयहोमतपांसि च[२] ॥४७॥
अजतुङ्गे शुभे[३] तीर्थे तर्पयेत्सततं पितॄन् ।
दृश्यते पर्व्वसु च्छाया यत्र नित्यं दिवौकसां ।
पृथिव्यामक्षयं दत्तं निरुजा यत्र पाण्डवाः ॥४८॥
योगेश्वरैः सदा जुष्टं सर्व्वपापवहिष्कृतैः ।
दद्याच्छ्राद्धन्तु यस्तस्मिन् तस्य वक्ष्यामि यत् फलं ॥४९॥

१ अयं वै सर्व्वकाम इति ख० ।
२ जपहोमतपांसि चेति ग० ।
३ अज तुङ्गे शुभाविति क० ।

अर्चितास्तेन वै शाखाद्भवन्ति पितरः सदा ।
अस्मिन् लोके वशी यः स्यात्[१] प्रेत्य स्वर्गे स मोदते ॥५०॥
प्रायशः प्रवरः पुण्यः शिवो नाम ह्रदस्तथा ।
तत्र व्यासरः पुण्यं दिव्यं ब्रह्मसरस्तथा ॥५१॥
उज्जन्तः[२] पर्व्वतः पुण्यो यस्मिन् योगेश्वरालये ।
तत्रैव चाश्रमः पुण्यो वसिष्ठस्य महात्मनः ॥५२॥
ऋग्यजुःसामशिरसः कापोतः पुण्यशाक्रयः[३] ।
आख्यातो[४] पञ्चमो वेदो दृष्टा ह्येतेषु ब्रह्मणा ॥५२॥
गत्वैतान् मुच्यते पापात् द्विजो वह्निः सनातनः ।
श्राद्धस्नानन्यमेतेषु जप्य[५]होमतपांसि च ॥५३॥
पुण्डरीके महातीर्थे पुण्डरीकसमं फलं ।
ब्रह्मतीर्थे महातीर्थे अश्वमेधफलं लभेत् ॥५४॥
सिन्धुसागरसम्भेदे तथा पञ्चनदेऽव्ययं ।
कीरकात्मा[६] ततः पुण्यो मण्डपायाश्च पर्व्वते ॥५५॥
देयं सप्तरदे[७] श्राद्धं मानसे च विशेषतः ।
महाकूटे च वन्दे च[८] गिरौ त्रिककुदे तथा ॥५६॥

१ च स्यात् इति ङ०। तस्मात् इति ख०। क पुस्तके एतच्छ्लोको नास्ति।
२ अजन्तः इति ग० ।
३ पुण्यपाक्रय इति ग० ।
४ आख्यानेति वा क्वचित् ।
५ जपहोमेति ग० ।
६ कोर्इकात्मास्ततः इति क० । कीराकात्मेति च० ।
७ सप्तपदे इति ग० ।
८ देवगिरौ इति ग० तथा ज० ।

सन्ध्यायाञ्च मदाभेयां दृश्यते महदद्भुतं ।
अग्रञ्जुधाणामग्राभ्येति साभ्येति च धृतव्रताम् ॥५७॥
जातवेदः शिला तत्र साक्षादग्नेः सनातनी ।
श्राद्धानि चाग्निकार्य्यञ्च तत्र कुर्य्यात् सदाक्षयं ॥५८॥
संस्पर्शयित्वैकमेकेन सायाह्नं प्रति नित्यशः ।
तस्मिन् देयं सदा श्राद्धं पितॄणामक्षयार्थिना ॥५९॥
कृतात्मा वाकृतात्मा वा यत्र विशायते नरः ।
स्वर्ग्यमार्गप्रदं नाम तीर्थं सद्योवरप्रदं ।
वैराग्युत्सृज्य तस्मिंस्तु दिवं सप्तर्षयो गताः ॥६०॥
अद्यापि तानि दृश्यन्ते वैराण्येव गतानि तु ।
स्नात्वा स्वर्गमवाप्नोति तस्मिन् तीर्थोत्तमे नरः ॥६१॥
ख्यातमायतनं तत्र नन्दिसिद्धनिषेवितं ।
नन्दीश्वरस्य या मूर्त्तिर्दुराचारैर्न दृश्यते ॥६२॥
दृश्यन्ते काञ्चना यूपाः सन्निध्ये भास्करोदये ।
कृत्वा प्रदक्षिणन्ते तु गच्छन्त्यन्तर्हिता दिवं[1] ॥६३॥
सर्व्वतश्च कुरुक्षेत्रं सुतीर्थञ्च विशेषतः ।
पुण्यं सनत्कुमारस्य योगेशस्य महात्मनः ।
कीर्त्यते च तिलान्,दत्वा पितॄणां वै सदाक्षयं ॥६४॥
योजने चाक्षयं श्राद्धं धर्म्मराजनिवेशने[2] ।
श्राद्धं दत्तममावस्यां विधिना च यथाक्रमं ॥६५॥

---

१ दृश्यन्ते काञ्चनायूपा सन्निध्ये भास्करोदये। कृत्वा प्रदक्षिणं तान्तु गच्छन्त्यन्तर्हितादिवमिति ग० ।
२ धर्म्मराजनिवेशके इति ख० ।

पुनः सन्निहितानां वै कुरुक्षेत्रे विशेषतः ।
सर्व्वदा पितरस्तत्र सत्पुत्रस्त्वनृणो भवेत् ॥६६॥
विनशने सरस्वत्यां प्लक्षप्रस्रवणे तथा ।
व्यासतीर्थे सरस्वत्यां(१) ब्रह्मक्षेत्रे(२) विशेषतः ॥६७॥
देयमोङ्कारपठनैः श्राद्धमक्षयमिच्छता ।
सर्व्वतश्चैव गङ्गायां मैनाके च नगोत्तमे ॥६८॥
यमुनाप्रभवे चैव सर्व्वपापैः प्रमुच्यते ।
अगुष्णाश्चातिशीताश्च आपस्तत्र निदर्शनं ॥६९॥
यमस्य भगिनी पुण्या मार्त्तण्डदुहिता तथा ।
तत्राक्षय्यं तदा श्राद्धं पितृभिः पूर्व्वकीर्त्तितं ॥७०॥
ब्रह्मानुगह्रदे स्नात्वा सद्यो भवति ब्राह्मणः ।
तस्मिन् हि श्राद्धमानन्त्यं जपहोमतपांसि च ॥७१॥
स्थाणुभूतश्चरंस्तत्र वशिष्ठो वै महातपाः ।
अद्यापि यत्र दृश्यन्ते पादपा मणिचर्च्चिताः ॥७२॥
तुला तु दृश्यते यत्र धर्म्माधर्म्मनिदर्शिनी ।
यया वै तुलितं विप्रैस्तीर्थानां फलमुत्तमं ॥७३॥
पितॄणां दुहिता योगा गन्धकालीति विश्रुता ।
चतुर्थी ब्रह्मणश्चांशः पराशरकुलोद्वहा ॥७४॥
व्यस्य त्वेकं चतुर्द्धा तु वेदं धीमान् महामुनिः ।
महायोगं महात्मानं यो व्यासं जनयिष्यति ॥७५॥
अच्छोदकं नाम सरो यत्राच्छोदा समुच्छ्रिता ।

१ एतत् पाठः प्रायशो वर्त्तते क्वचिदस्पष्टः परन्तु कुत्रापि न समीचीनः
२ विशल्ये च ङ० । श्राद्धपक्षे ग० ।

मत्स्यदोर्मा पुनर्जाता नियोगाद्दारुणेन तु ॥७६॥
तस्मा यथाश्रमः पुण्यः पुण्यकृद्भिर्निषेवितः।
सद्बृन्दन्तु वै श्राद्धमक्षयं समुदाहृतं।
तस्यां योगसमाधाने दत्तं युगपदुद्भवेत्॥७७॥
कुबेरतुङ्गे व्यामोघे[1] व्यासतीर्थे तथैव च।
पुण्यः स ब्राह्मणो दद्याच्छ्राद्धमानन्त्यमक्षयं॥७८॥
सिद्धैस्तु सेविता नित्यं दृश्यते नाकृतात्मभिः।
अग्निवर्त्तमन्तु नन्दायां वेद्यां प्रागुत्तरे दिशि॥७९॥
सिद्धक्षेत्रं तु वै जुष्टं यत् प्राप्य न निवर्त्तते।
महालये पदं न्यस्तं महादेवेन धीमता॥८०॥
देव्यालये तपस्तप्ता एकपादेन ईश्वरः।
नीहारस्य युगन्दिव्यमुमातुङ्गे स्थितं जलं॥८१॥
उमातुङ्गे भृगोस्तुङ्गे ब्रह्मतुङ्गे महालये।
कादम्बर्यां[2] च शाण्डिल्यां गुहायां वामनस्य च॥८२॥
गत्वा चैतानि पूतः स्याच्छ्राद्धमक्षयमेव च।
जपो होम स्तथा ध्यानं यत्किञ्चित् सुकृतं भवेत्॥८३॥
ब्रह्मचर्य्यं यजन्ते वै गुरुभक्ताः शतं समाः।
एवमादीनि सद्य स्तां स्नात्वा प्राप्नोति सत् फलं॥८४॥
कुमारधारा तत्रैव दृष्टा पापप्रणाशनी।
यानासनं[3] च तत्रैव सद्यः स्वायत् प्रदृश्यते॥८५॥

---

१ व्यामोघे इति ख०।
२ कादम्बर्यामिति पश्चस्य पुस्तकेषु पाठः।
३ पनासनमिति ग०।

शैलकीर्त्तिपुराभ्याशे कामानाप्नोति पुष्कलान् ।
अदृश्यः सार्व्वभूतानां देववच्चरते महीं ॥८६॥
काश्यपस्य महातीर्थं कालसर्पिरिति श्रुतं ॥
तत्र श्राद्धानि देयानि नित्यमक्षयमिच्छता ॥८७॥
अक्षयं तु भवेच्छ्राद्धं शालग्रामसमन्ततः ।
दृष्ट्वा न दृश्यते तत्र प्रत्यक्षमकृतात्मना ॥८८॥
प्रत्यादेशो ह्यशिष्टानां शिष्टानाञ्च निवेशनं ।
तत्र चैव ह्रदे पुण्ये दिव्यो वै नागराड्यतः ॥८९॥
पिण्डं गृह्णाति हि सतां न गृह्णात्यसतां हि सः ।
अतिप्रदीप्तैर्भुजगैर्भोक्तुमन्नं न शक्यते ॥९०॥
प्रत्यक्षं दृश्यते धर्म्मस्तीर्थयोरनयोर्द्वयोः ।
देवदारुवने चापि चारयेत्तं निदर्शनं ॥९१॥
विधूतानि तु पापानि दृश्यन्ते सुकृतात्मना ।
भागीरथ्यां प्रयागे च नित्यमक्षयमुच्यते ॥९२॥
कालञ्जरे दशार्णायां नैमिषे कुरुजाङ्गले ।
वाराणस्यां नगर्य्यान्तु देयं श्राद्धन्तु यत्नतः ॥९३॥
तस्यां योगेश्वरो नित्यं तत्तस्यां दत्तमक्षयं ।
दत्वा चैतेषु पूतः स्याच्छ्राद्धमानन्त्यमेव च ॥९४॥
तपोहोमस्तथा ध्यानं यत् किञ्चित्सुकृतं भवेत् ।
लौहित्ये वैतरण्यां वै स्वर्णवेद्यां तथैव च ॥९५॥
सकृदेव समुद्रान्ते दृश्यते पुण्यकर्म्मभिः ।
गयायां धर्म्मपृष्ठे च सरसि ब्रह्मणस्तथा ॥९६॥

गयायां गृध्रकूटे च श्राद्धं दत्तं महाफलं ।
हिमञ्च पतते तत्र समन्तात् पञ्चयोजनं ॥९७॥
भरतस्याश्रमे पुण्येऽरण्यं पुण्यतमं स्मृतं ।
मतङ्गस्य पदं तत्र दृश्यते मांसचक्षुषा ॥९८॥
ख्यापितं धर्म्मसर्व्वस्वं लोकस्यास्य निदर्शनं ।
एवं पञ्चवनं[१] पुण्यं पुण्यकृद्भिर्निषेवितं ।
यस्मिन् पाण्डुविशालेति तीर्थं सद्यो निदर्शनं ॥९९॥
तुलामानैस्तथा चापैः शास्त्रैश्च विविधैस्तथा ।
उन्मज्जन्ति तथा लग्ने ये वै पापकृतो जनाः[२] ॥१००॥
तृतीयायां तथा पादे निःस्वरे पावमण्डले ।
महाह्रदे वै कौशिक्यां दत्तं श्राद्धं महाफलं ॥१०१॥
मुण्डपृष्ठे[३] पदं न्यस्तं महादेवेन धीमता ।
बहून् देवयुगांस्तप्त्वा तपस्तीव्रं सुदुश्चरं ॥१०२॥
अल्पेनाप्यत्र कालेन नरो धर्म्मपरायणः ।
पाप्मानमुत्सृजत्याशु जीर्णत्वचमिवोरगः ॥१०३॥
सिद्धानां प्रीतिजननैः पापानाञ्च भयङ्करैः ।
लेलिहानैर्महाभोगै रचितन्तु दिवानिशं ॥१०४॥
नाम्ना कनकनन्दीति तीर्थं त्रैलोक्यविश्रुतं ।
उदीच्यां मुण्डपृष्ठस्य देवर्षिगणसेवितं ।

---

१ पञ्चवनमिति क॰ ख॰ ङ॰ ।
२ पापकृतेक्रिया इति ग॰ ।
३ कुण्डपृष्ठे इति ख॰ ।

तत्र स्नात्वा दिवं यान्ति कामचारा विहङ्गमाः ॥१०५॥
दत्तं चापि तथा श्राद्धमक्षयं समुदाहृतं ।
ऋणैस्त्रिभिस्तदा स्नात्वा निर्म्मोक्षति नरोत्तमः ॥१०६॥
तीरे तु सरसस्तत्र देवस्यायतनं महत् ।
आहृत्य तत्तपंस्तत्र सिद्धो याति दिवं ततः ॥१०७॥
उत्तरं(१) मानसं गत्वा सिद्धिं प्राप्नोत्यनुत्तमां ।
तत्र गत्वा परश्रेष्ठं दृश्यते महदद्भुतं ॥१०८॥
तस्मिन्निर्वर्त्तयेच्छ्राद्धं यथाशक्ति यथाबलम् ।
कामान् स लभते दिव्यान् मोक्षोपायश्च नित्यशः ॥१०९॥
मानसे सरसि श्रेष्ठे दृश्यते महदद्भुतं ।
दिवश्च्युता महाभागा ह्यन्तरिक्षे विराजते ॥११०॥
गङ्गा त्रिपथगा देवी सोमपादाच्युता भुवि(२) ।
आकाशे दृश्यते तत्र तोरणं सूर्य्यसन्निभं ॥१११॥
जाम्बूनदमयं दिव्यं स्वर्गद्वारमिवायतं ।
यतः प्रवर्त्तते भूयः पूर्व्वसागरसन्निभं ॥११२॥
पावनी सर्व्वभूतानां धर्म्मज्ञानां विशेषतः ।
चन्द्रभागा च सिन्धुश्च उभौ मानससन्निभौ ।
सागरं पश्चिमं याति दिव्यसिन्धुर्नदीवरः ॥११३॥
पर्व्वतो हिमवान्नाम नानाधातुविभूषितः ।
योजनानां सहस्राणि आयतोऽशीतिरुच्यते ॥११४॥

---

१ उत्तममिति ग० ।
२ सोमपदा च्युताभवदिति ग० ।

सिद्धचारणसङ्कीर्णः सिद्धचारणसेवितः ।
तत्र पुष्करिणी रम्या सुषुम्ना नाम विश्रुता ॥१०९॥
दशवर्षसहस्राणि तत्र जातस्तु जीवति ।
श्राद्धं भवति चानन्त्यं तस्यां दत्तं महोदयं ।
तारयेच्च यदा श्राद्धं दशपूर्व्वान् दशापरान् ॥११०॥
सर्व्वं पुण्यं हिमवतो गङ्गा पुण्या च सर्व्वतः ।
समुद्रगाः समुद्राश्च सर्व्वे पुण्याः समन्ततः ॥१११॥
एवमादिषु सर्व्वेषु श्राद्धं निर्वर्त्तयेद्बुधः ।
पूतो भवति स्नात्वा तु(१) दत्त्वा दत्त्वा तथैव च(२) ॥११२॥
शैलसानुषु तुङ्गेषु कन्दरेषु गुहासु च ।
उपह्वरनितम्बेषु तथा प्रस्रवणेषु च(३) ॥११३॥
पुलिनेष्वापगानाञ्च(४) तथैव प्रभवे शुभे ।
महोदधौ गवां गोष्ठे सङ्गमेषु वनेषु च ॥११४॥
असंसृष्टोपलिप्तासु ह्रद्यासु सुरभीषु च ।
गोमयेनोपलिप्तेषु विविक्तेषु गृहेषु च ॥११५॥
कुर्य्याच्छ्राद्धमथैतेषु नित्यमेव यथाविधि ।
प्रदक्षिणं दिशं गत्वा सर्व्वकामचिकीर्षवः ॥११६॥
एवमेतेषु सर्व्वेषु श्राद्धं कुर्य्यादतन्द्रितः ।

---

१ प्रीतो भवति दत्वा च इति ग० ।
२ दत्त्वा कृत्वा तथैवच इति ख० ।
३ नित्यमेव यथा विधि इति ग० ।
४ पुलिने चापगानामिति क० ।

एवमेव तु मेधावी ब्राह्मीं सिद्धिमवाप्नुयात् ॥११७॥
त्रैवर्ण्ये विहिते स्थाने धर्म्मवर्णाश्रमे तथा ।
कोपस्थानस्य संत्यागात् प्राप्यते पितृपूजनं[१] ॥११८॥
तीर्थान्यनुसरन् धीरः श्रद्दधानो जितेन्द्रियः ।
कृतपापस्य शुद्ध्येत किं पुनः शुभकर्म्मकृत् ॥११९॥
तिर्य्यग्योनिं न गच्छेच्च कुदेशे न च जायते ।
स्वर्गी भवति वै विप्रो मोक्षोपायञ्च विन्दति ॥१२०॥
अश्रद्दधानाः पाप्मानो नास्तिकाः स्थितसंशयाः ।
हेतुद्रष्टा च[२] पञ्चैते न तीर्थफलमश्नुते ॥१२१॥
गुरुतीर्थे परा सिद्धिस्तीर्थानां परमं पदं ।
ध्यानं तीर्थपरं तस्माद्ब्रह्मतीर्थं सनातनं ॥१२२॥
उपवासात्परं ध्यानमिन्द्रियाणां निवर्त्तनं ।
उपवासनिबद्धा हि[३] प्राणैरिह[४] पुनः पुनः ॥१२३॥
प्राणापानौ समौ कृत्वा विषयाणीन्द्रियाणि च ।
बुद्धिं मनसि संयम्य सर्व्वेषान्तु निवर्त्तनं ॥१२४॥
प्रत्याहारं पुनर्विद्धि मोक्षोपायमसंशयं ।
इन्द्रियाणां मनोधारं बुद्ध्यादीनां प्रवर्त्तनं[५] ॥१२५॥
अनाहारात् क्षयं यान्ति विद्याद्दनशनं तपः ।

---

१ बहुषु पुस्तकेषु कोपस्थानाच्च संत्यागादिति पाठो दृश्यते परन्तु न युक्तः।
२ हेतुद्रष्टाश्चेति पाठः सर्व्वत्र। अयं पाठो न सङ्गतः।
३ उपमाननिबन्धा हीति क० ज०।
४ प्राणायामैरिति पाठोऽयुक्तः।
५ निवर्त्तनमिति पाठो बहुषु पुस्तकेषु वर्त्तते। नायं सुसङ्गतः।

निग्रहाद्बुद्धिमनसो रम्या बुद्धिस्तु जायते॥१२६॥
क्षीणेषु सर्व्वपापेषु क्षीणेष्वेवेन्द्रियेषु च।
परिनिर्वाति शुद्धात्मा यथा वह्निर्निरिन्धनः॥१२७॥
कारणेभ्यो गुणेभ्योऽथ व्यक्ताव्यक्तस्य कृत्स्नशः।
वियोजयति क्षेत्रज्ञं तेभ्यो योगेन योगवित्॥१२८॥
तस्य नास्ति गतिस्थानं व्यक्ताव्यक्तं न संशयः।
आसन्नः[१] सदसन्नेव नैव किञ्चित् स्थित इति॥१२९॥

इति श्रीमहापुराणे वायुप्रोक्ते श्राद्धकल्पे तीर्थयात्रा नाम
पञ्चदशोऽध्यायः।

---

१ नासन्नेति लिपिः सर्व्वत्र। सा सम्यक्तेन न प्रतिभाति।

# अथ षोडशोऽध्यायः ।

श्राद्धकल्पः ।

बृहस्पतिरुवाच । अतः परं प्रवक्ष्यामि दानानि च फलानि च ।
श्राद्धकर्म्माणि मेध्यानि वर्जनीयानि यानि च ॥१॥
हिमप्रपतने कुर्य्यादाहरेद्वा हिमन्ततः ।
अग्निहोत्रमतः पुण्यं परमं हि ततः स्मृतं ॥२॥
नक्तन्तु वर्जयेच्छ्राद्धं राहोरन्यत्र दर्शनात् ।
सर्व्वस्वेनापि कर्त्तव्यं क्षिप्रं वै राहुदर्शने ॥३॥
उपरागे न कुर्य्याद्यः पङ्के गौरिव सीदति ।
कुर्व्वाणस्तूद्धरेत् पापात् मग्नान्नौरिव सागरे ॥४॥
विश्वदेवश्च सौम्यश्च बह्मांसपरं हविः ।
विषाणं वर्जयेत् खाड़्गमस्नयानाशनाय वै ॥५॥
त्वष्टा वै वार्य्यमाणस्तु[१] देवेशेन महात्मना ।
पिवन् शचीपतेः सोमं पृथिव्यामपतत्पुरा[२] ॥६॥
श्यामाकास्तु तथोत्पन्नाः पित्रर्थमपि पूजिताः ।
विप्रुषस्तस्य नासाभ्यामसक्ताभ्यां तथैव च ॥७॥
स्रेष्माणः शीतला हृद्या मधुराश्च तथेक्षवः ।

---

१ वार्य्यमाणेनेति लिखनं सर्व्वत्र तन्न युक्तं ।
२ -मभवत् पुरा इति ख० ग० ।

श्यामाकैरिक्षुभिश्चैव पितॄणां सार्व्वकामिकं ।
कुर्य्यादाग्रयणं यस्तु स शीघ्रं सिद्धिमाप्नुयात् ॥८॥
श्यामाका हस्तिनामा च पटोलं बृहतीफलं ।
अगस्त्यस्य शिखा तीव्रा कषायाः सर्व्व एव च ॥९॥
एवमादीनि चान्यानि स्वादूनि मधुराणि च ।
नागरञ्चात्र वै देयं दीर्घमूलकमेव च ॥१०॥
वंशीकरीराः सुरसाः सर्ज्जकं भूस्तृणानि च ।
वर्जनीयानि वक्ष्यामि श्राद्धकर्म्मणि नित्यशः ॥११॥
लशुनं गृञ्जनश्चैव पलाण्डुः पिण्डमूलकं ।
करम्भाद्यानि चान्यानि हीनानि रसगन्धतः ॥१२॥
श्राद्धकर्म्मणि वर्ज्यानि कारणञ्चात्र वक्ष्यते ।
पुरा देवासुरे युद्धे निर्जितस्य बलेः सुरैः ॥१३॥
व्रणेभ्यो विस्फुरन्तो वै पतिता रक्तविन्दवः ।
तत एतानि वर्ज्यानि श्राद्धकर्म्मणि नित्यशः ॥१४॥
अथ वेदोक्तनिर्य्यासान् लवणान्यूषराणि च ।
श्राद्धकर्म्मणि वर्ज्यानि याश्च नार्य्यो रजस्वलाः ॥१५॥
दुर्गन्धं फेनिलञ्चैव तथा वै पल्वलोदकं ।
न लभेद्यत्र गौस्तृप्तिं[1] नक्तं यच्चैव गृह्यते ॥१६॥
आविकं मार्गमौष्ट्रञ्च सर्व्वमेकशफञ्च यत् ।
माहिषञ्चामरञ्चैव पयो वर्ज्यं विजानता ॥१७॥
अतः परं प्रवक्ष्यामि वर्ज्यान् देशान् प्रयत्नतः ।

---

१ न भवेद्यत्र गोस्तृप्तिरिति क० ।

आद्यं कृतयुगं प्रोक्तन्त्रेता तु क्षत्रियं स्मृतं ॥३६॥
वैश्यं द्वापरमित्याहुः शूद्रं कलियुगं स्मृतं ।
पितर ऊचुः । वेदाः कृतयुगे पूज्यास्त्रेतायान्तु सुरास्तथा ॥३७॥
युद्धानि द्वापरे नित्यं पाषण्डाश्च कलौ युगे ।
अपमानापवित्रश्च कुक्कुटो ग्रामशूकरः ॥३८॥
श्वा चैव दर्शनादेव हन्ति श्राद्धं न संशयः ।
शावसूतकसंस्पृष्टो दीर्घरोगिभिरेव च ॥३९॥
मलिनैः पतितैश्चैव न द्रष्टव्यं कथञ्चन ।
अन्नं पश्येयुरेते वै नैतत्स्याद्धव्यकव्ययोः ॥४०॥
तत्संसृष्टं प्रधानार्थं संस्कारश्चापदोभवेत् ।
हविषां संहतानान्तु पूर्व्वमेव विवर्जितं ।
मृत्संयुक्ताभिरद्भिश्च प्रोक्षणञ्च विधीयते ॥४१॥
सिद्धार्थकैः कृष्णतिलैः कार्य्यं वाप्यवकीरणं(१) ।
गुरुसूर्य्याग्निवस्तूनां दर्शनं वापि(२) यत्नतः ॥४२॥
आसनारूढमानेषु पादोपहतमेव च ।
अमेध्यैर्जङ्गमैर्दृष्टं शुष्कं पर्य्युषितञ्च यत् ॥४३॥
अग्नितं परिदुष्टञ्च तथैवाग्रावलेहितं ।
शर्कराकेशपाषाणैः कीटैर्य्यच्चाप्युपद्रुतं ॥४४॥
पिण्याकमथितञ्चैव तथा तिलयवादिषु ।
सिद्धाचताश्च येभक्ष्याः प्रत्यचलवणीकृताः ॥४५॥

१ अवकीर्णमितिवक्तव्ये अवकीरणमित्यार्षं ।
२ दर्शनञ्चापीति क०।

वाससा चावधूतानि वर्ज्यानि श्राद्धकर्म्मणि ।
सन्ति वेदविरोधेन केचिद्विज्ञानमानिनः ॥४६॥
अजाश्वपतयो नाम ते श्राद्धस्य यथा रजः ।
दधि शाकं तथाऽभक्ष्याः शुक्तश्चैव(१) विवर्ज्जितं ॥४७॥
वार्त्ताकुं वर्जयेद्धयात् सर्वानभिषवानपि(२) ।
सैन्धवं लवणं यच्च तथा मानससम्भवं ॥४८॥
पवित्रं परमं ह्येतत् प्रत्यक्षमपि वर्त्तते ।
अग्नौ निक्षिप्य बध्नीयाद्धस्तौ(३) प्रक्षिप्य यत्नतः ॥४९॥
गमयेन्मस्तकं चैव ब्रह्मतीर्थं हि तत् स्मृतं ।
द्रव्याणां प्रोक्षणं कार्य्यं तथैवातपनं पुनः ॥५०॥
निधाय चाद्भिः सिञ्चेत तथैवाप्सु निवेशनं ।
अरिष्टतुल्ले विल्वं लिकुचस्वदनान्यपि ॥५१॥
विदलानाञ्च सर्व्वेषां धर्मवच्छौचमिष्यते ।
तथा दन्तास्थिदारूणां शृङ्गानाञ्चावलेखनं ॥५२॥
सर्व्वेषां मृण्मयानान्तु पुनर्दाह उदाहृतः ।
मणिवज्रप्रवालानां मुक्ताशङ्खमणेस्तथा ॥५३॥
सिद्धार्थकानां कल्केन तिलकल्केन वा पुनः ।
स्याच्छौचं सर्ववालानामाविकानाञ्च सर्वशः ॥५४॥
आविकानाञ्च सर्व्वेषां मृद्भिरद्भिर्विधीयते ।

---

१ शुक्तमिति ख० ग० ।
२ अत्र सर्व्वानानभिषानपेति पाठः सुसङ्गतः ।
३ बध्नीयाद्धस्तौ इति पाठः सर्व्वत्र दृश्यते ।

आद्यन्तयोस्तु शौचानामद्भिः प्रक्षालनं पुनः ॥५५॥
तथा कार्पासिकानाञ्च भस्मना समुदाहृतं ।
फलपुष्पशलाकानां प्लावनञ्चाद्भिरिष्यते ॥५६॥
संमार्जनं प्रोक्षणञ्च भूमेश्चैवोपलेपनं ।
निष्क्रम्य वाह्यतोग्रामाद्वायुपूता वसुन्धरा ॥५७॥
धनुश्शतप्रक्षिप्ताञ्चैव मृद्भिः[१] शौचं विधीयते ।
एवमेष समुद्दिष्टः शौचानां विधिरुत्तमः ।
अतः परं प्रवक्ष्यामि तन्मे निगदतः शृणु ॥५८॥
प्रातर्गृहात् पश्चिमदक्षिणेन इषुक्षेपञ्चाक्षमात्रं पदञ्च ।
कुर्य्यात् पुरीषं शिरोवगुण्ठ्य न च स्पृशेत्तत्र शिरः करेण॥५९॥
शुष्कैस्तृणैर्वा काष्ठैर्वा पत्रैर्वेणुदलेन वा ।
मृण्मयैर्भाजनैर्वापि तिरोधाय वसुन्धरां ॥६०॥
उद्धृतोदकमादाय मृत्तिकाञ्चैव वाग्यतः ।
दिवा उदङ्मुखः कुर्य्यात् रात्रौ वै दक्षिणामुखः ॥६१॥
दक्षिणेन च हस्तेन गृह्णीयाद्वै कमण्डलुं ।
शौचञ्च वामहस्तेन गुदे तिस्रस्तु मृत्तिकाः ॥६२॥
दश चापि पुनर्दद्याद्वामहस्तक्रमेण तु ।
द्वाभ्यां वापि पुनर्दद्याद्धस्तानां पञ्च मृत्तिकाः ॥६३॥
मृदा प्रक्षाल्य पादौ च आचम्य च यथाविधि ।
आपस्त्वाभ्यास्तथैव सूर्य्याग्निपवनाम्भसां ॥६४॥

---

१ मक्षिरिति क० ग० ।

कुर्य्यात् सन्निहितं नित्यं प्राज्ञस्तीर्थे कमण्डलुं ।
असत्कार्यं कार्यमेतैर्यथावत् पादधावनं ॥६५॥
आचमनं द्वितीयेन देवकार्यं ततः परं ।
उपवासस्त्रिरात्रन्तु दुष्टहस्ते ह्युदाहृतः ॥६६॥
विप्रदुष्टेन कृच्छ्रेण प्रायश्चित्तमुदाहृतं ।
स्पृष्ट्वाश्वानं श्वपाकं वा तप्तकृच्छ्रं समाचरेत् ॥६७॥
मानुषास्थीनि संस्पृश्य उपोष्यं शुद्धिकारणं ।
त्रिरात्रमुक्तं सस्नेहमेकरात्रमतोऽन्यथा ॥६८॥
कारस्कराः पुलिन्दाश्च तथान्ध्रशवरादयः ।
पीत्वा चापोभूतिलये गत्वा चैव युगन्धरां ॥६९॥
सिन्धोरुत्तरपर्य्यन्तं तथा दिव्यन्तरे गतं ।
पापदेशाश्च ये केचित् पापैरध्युषिता जनैः ॥७०॥
शिष्टैश्च वर्जिता ये च ब्राह्मणैर्वेदपारगैः ।
गत्वा देशानपुण्यांस्तु कृत्स्नं पापं समश्नुते ॥७१॥
मनोध्यक्ति(१) रथाग्निश्च काले चैवोपलेपनं ।
विख्यापनञ्च(२) शौचानां नित्यमज्ञानमेव च ॥७२॥
अतोऽन्यथा तु यः कुर्यान्मोहाच्छौचस्य सङ्करं ।
पिशाचान् यातुधानांश्च फलं गच्छत्यसंशयं ॥७३॥
शौचमश्रद्दधानस्य म्लेच्छजातिषु जायते ।

---

१ मनोध्यग्निरिति ङ० च० ।
२ प्रत्याख्यानमिति पाठान्तरः ।

अयशश्चैव पापो वा तिर्य्यग्योनिगतोऽपि वा ॥७४॥
शौचेन मोचं कुर्व्वाणः स्वर्गवासी भवेन्नरः ।
शुचिकामा हि देवा वै देवैरेतदुदाहृतं ॥७५॥
बीभत्समशुचिञ्चैव वर्जयन्ति सुराः सदा ।
श्रीणि शौचानि कुर्वन्ति न्यायतः शुभकर्मणः ॥७६॥
ब्राह्मणायातिथेयाय शौचयुक्ताय धीमते ।
पितृभक्ताय दान्ताय सानुक्रोशाय च द्विजाः ॥७७॥
तैस्तैः प्रीताः प्रयच्छन्ति पितरोयोगवर्द्धनाः ।
मनसा काङ्क्षितान् कामांस्त्रैलोक्यप्रभवानिति ॥७८॥

इति श्रीमहापुराणे वायुप्रोक्ते श्राद्धकल्पो नाम
षोड़शोऽध्यायः ।

———

# अथ सप्तदशोऽध्यायः।



श्राद्धकल्पः।

ऋषय ऊचुः। अहो धीमंस्त्वया सूत श्राद्धकल्पस्तु कीर्त्तितः।
श्रुतेन(?)ः श्राद्धकल्पोवै ऋषिभिः परिकीर्त्तितः॥१॥
अतीवविस्तरोयस्य विशेषेण प्रकीर्तितः।
वद शेषं महाप्राज्ञ ऋषेस्तस्य यथामतं॥२॥
सूत उवाच। कीर्तयिष्यामि ते विप्रा ऋषेस्तस्य मतन्तु तत्।
श्राद्धं प्रति महाभागास्तन्मे शृणुत विस्तरात्॥३॥
उक्तं श्राद्धं मयापूर्वं विधिश्च श्राद्धकर्म्मणि।
परिशिष्टं प्रवक्ष्यामि ब्राह्मणानां यथाक्रमं॥४॥
न मीमांस्याः सदा विप्राः पवित्रं ह्येतदुत्तमं।
दैवे पित्रे च सततं श्रूयते वै परीक्षणं॥५॥
यस्मिन् दोषाः प्रदृश्येरन् सद्भिर्वा वर्जितस्तु यः।
जानीयाद्वापि संवासाद्वर्ज्जयेत्तं प्रयत्नतः॥६॥
अविज्ञातं द्विजं श्राद्धे परीक्षेत सदा बुधः।
सिद्धा हि विप्ररूपेण चरन्ति पृथिवीमिमां॥७॥
तस्मादतिथिमायान्तमभिगच्छेत् कृताञ्जलिः।
पूजयेच्चापि पाद्येन पादाभ्यञ्जनभोजनैः॥८॥

उर्व्वीं सागरपर्य्यन्तां देवा योगेश्वरास्तथा ।
नानारूपैश्चरन्त्येते प्रजा धर्म्मेण पालयन् ॥९॥
अर्च्चयित्वा तुतोदद्याद्विप्रायातिथये नरः ।
व्यञ्जनानि च भक्ष्याणि फलन्तेषां तथैव च ॥१०॥
अग्निष्टोमन्तु पयसा प्राप्नुयाद्वै तथामृतं ।
सर्पिषा तु शुभं चक्षुः षोडशाहफलं लभेत् ।
मधुना त्वतिरात्रस्य फलञ्च समवाप्नुयात् ॥११॥
तत् प्राप्नुयाच्छ्रद्दधानोनरोवै सर्वैः कामैर्भोजयेद्यस्तु विप्रान् ।
सर्व्वार्थदः सर्वविप्रातिथीयः फलं भुङ्क्ते सर्व्वमेधस्य नित्यं ॥१२॥
यस्तु श्राद्धेऽतिथिं प्राप्य दैवे वाप्यवमन्यते ।
तं वै देवा निरस्यंति होता यद्वत् परां वसुं ॥१३॥
देवाश्च पितरश्चैव वह्निश्चैव हि तान् द्विजान् ।
आविश्य भुञ्जते तद्वै लोकानुग्रहकारणात् ॥१४॥
अपूजिता दहन्त्येते दद्युः कामांश्च पूजिताः ।
सर्वस्वेनापि तस्माद्वै पूजयेदतिथीन् सदा ॥१५॥
वानप्रस्थोगृहस्थश्च गृहमभ्यागतोथवा ।
वालाः खिन्ना(१) यतिश्चैव जानीयादतिथीन् सदा ॥१६॥
अभ्यागतोयाचकः स्यादतिथिः स्यादयाचकः ।
अतिथेरतिथिः श्रेष्ठः सोतिथिर्योग उच्यते ॥१७॥
न घोरो नापि संकीर्णोनाविद्योनविशेषवित् ।

---

१ वालखिल्या इति पाठः क, छ, ज, पुस्तकेषु दृश्यते ।

न च सक्तोन सम्हृष्टेन सेवी नाचरेऽतिथिः ॥१८॥
पिपासिताय श्रान्ताय भ्रान्तायातिबुभुक्षते ।
तस्मै सत्कृत्य दातव्यं यज्ञस्य फलमिच्छता ॥१९॥
आरुह्य भृगुतुङ्गेषु गत्वा पुण्यां सरस्वतीं ।
आपगान्तु नदीपुण्यां गङ्गा देवी महानदी ॥२०॥
हिमवत्प्रभवा नद्यो यास्त्वान्या ऋषिपूजिताः ।
सरस्वीर्थाभिसम्भेद्या नदी नववहास्तथा ॥२१॥
गत्वैतान् मुच्यते पापैः स्वर्गे नित्यं महीयते ।
दशरात्रमशौचन्तु प्रोक्तं वै मृतसूतके ॥२२॥
ब्राह्मणस्य विशेषेण क्षत्रिये द्वादश स्मृतं ।
अर्द्धं मासन्तु वैश्यस्य मासाच्छूद्रस्तु शुध्यति ॥२३॥
उदक्या सर्ववर्णानां त्रिरात्रेण तु शुध्यति ।
उदक्यां सूतिकाञ्चैव श्वानमन्त्यावसायिनं ॥२४॥
नग्नादीन् मृतहारांश्च स्पृष्ट्वाऽशौचं विधीयते ।
स्नात्वा सचेलोमृद्भिस्तु द्वादशभिस्तु शुद्ध्यति ॥२५॥
एतदेव भवेच्छौचं मैथुने नवभि[१]स्तथा ।
मृदा प्रक्षाल्य हस्तौ तु कुर्याच्छौचविधिन्नरः ॥२७॥
प्रक्षाल्य चाद्भिर्हस्तौ च स्नात्वा चैव मृदा पुनः ।
मृदं गुह्ये ततोद्भिस्तु पुनरेव मृदं बुधः ॥२८॥
एवं शौचविधिर्दृष्टः सर्व्ववर्णेषु नित्यदा ।
परिदद्यान्मृदस्तिस्रोहस्तपादावसेचनं ॥२९॥

---

१ वसने इति क० ख० छ० पुस्तकेषु दृश्यते ।

आरण्यं शौचमेतत्तु ग्राम्यं वक्ष्याम्यतः परं।
मृदस्तिस्रः पादयोस्तु हस्तयोस्तिस्र एव च ॥२०॥
मृदः पञ्चदशामेध्ये हस्तादीनां विभागशः।
अनिर्णिक्ते मृदं दद्यान्मृदन्ते त्वद्भिरेव तु ॥२१॥
कण्ठं शिरोवा प्रावृत्य रथ्यापादगतस्तु वा।
अकृत्वा पादयोः शौचमाचान्तोऽप्यशुचिर्भवेत् ॥२२॥
प्रक्षाल्य पात्रं निक्षिप्य आचम्याभ्युक्षणं पुनः।
द्रव्यस्यान्यस्य तु तथा कुर्य्यादभ्युक्षणं पुनः ॥२३॥
पुष्पादीनां तृणानाञ्च प्रोक्षणं हविषान्तथा।
पराहृतानां द्रव्याणां निधायाभ्युक्षणं तथा ॥२४॥
प्रोक्षितन्तु हरेत् किञ्चिच्छ्राद्धे दैवे तथा पुनः।
उत्तरेणाहरेद्देर्भ्यां दक्षिणेन विसर्जयेत् ॥२५॥
विच्छिन्नं स्यादिपर्य्यासे दैवे पित्र्ये तथैव च।
दक्षिणेन तु हस्तेन दक्षिणां(१) वेदमालिखेत् ॥२६॥
कराभ्यामेव देवानां पितॄणां विकरं शुभं।
क्षुभितस्वप्नयोश्चैव तथा मूत्रपुरीषयोः ॥२७॥
निष्ठीविते तथा व्यक्ते भुक्त्वा विपरिधाय च।
उच्छिष्टस्य च संस्पर्शे तथा पादावसेचने ॥२८॥
उत्सृष्टस्य तु सम्भाषे ह्यशुचिं प्रयतस्य च।
सन्देहेषु च सर्व्वेषु शिखां मुक्त्वा तथैव च ॥२९॥
विना यज्ञोपवीतेन मोहात्तु यद्युपस्पृशेत्।

१ दक्षिणावेदमिति क०।

ओष्ठस्य दन्तसंस्पर्शे दर्शने चान्त्यवासिनां ॥४०॥
जिह्वयाचैव संस्पृश्य दन्तासक्तं तथैव च ।
सशब्दमङ्गुलीभिश्च प्रणतश्चावलोकयन् ॥४१॥
यश्चाधर्मे स्थितोमोहादाचान्तोऽप्यशुचिर्भवेत् ।
उपविश्य शुचौ देशे प्रणतः प्रागुदङ्मुखः ॥४२॥
पादौ प्रक्षाल्य हस्तौ तु अन्तर्जानुरुपस्पृशेत् ।
प्रसन्नास्त्रिः पिबेदापः प्रयतः सुसमाहितः ॥४३॥
द्विरेव मार्जनं कुर्य्यात् सकृदभ्युक्षणं ततः ।
खानि मूर्द्धानमात्मानं हस्तौ पादौ तथैव च ॥४४॥
अभ्युक्षणं तथा तस्य यच्चमीमांसितं भवेत् ।
एवमाचमनं तस्य वेदा यज्ञास्तपांसि च ॥४५॥
दानानि ब्रह्मचर्य्यञ्च भवन्ति सफलास्तथा ।
क्रियां यः कुरुते मोहादनाचम्यैव नास्तिकः ॥४६॥
भवन्ति च वृथा तस्य क्रिया ह्येता न संशयः ।
वाग्भावशुद्धिनिर्निक्तमदुष्टं वाप्यनिन्दितं ॥४७॥
मेध्यान्येतानि ज्ञेयानि दुष्टमेभ्योविपर्य्ययः ।
न वक्तव्यः सदा विप्रः क्षुधितोनास्ति किञ्चन ॥४८॥
तस्मै सत्कृत्य यो दद्यादयूपो[१] यज्ञ उच्यते ।
अतुष्टान्नं शूद्रानान्नु[२] कृशवृत्ति[३]मयाचकं[४] ॥४९॥

(१) दयूप इति क० छ० ज० ।
(२) छ्यीकान्नमिति ङ० च० छ० । छ्यीकाग्नमिति क० ज० ।
(३) कुशवृत्तिमिति ङ० । (४) मयावक्रमिति क० ।

एकान्तशीलं हीमन्तं सदा श्राद्धेषु भोजयेत्।
योऽददात्यग्निभ्यश्च स ब्रह्मघ्नोदुरात्मवान् ॥५०॥
अपि ज्ञातिशतङ्कृत्वा न स मुच्येत किल्बिषात्।
विषमं भोजयेद्विप्रानेकपंक्त्याञ्च योनरः ॥५१॥
नियुक्तोवानियुक्तोवा पंक्त्या हरति दुष्कृतं।
पापेन गृह्यते क्षिप्रमिष्टापूर्त्तं च नश्यति ॥५२॥
यतिस्तु सर्व्वविप्राणां सर्व्वेषामग्र्य उच्यते।
इतिहासपञ्चमान् वेदान् यः पठेत्तु द्विजोत्तमः ॥५३॥
अनन्तरं यथायोग्यं नियोक्तव्योविजानता।
त्रिवेदोनन्तरस्तस्य द्विवेदस्तदनन्तरः ॥५४॥
एकवेदस्तथा पश्चाद्ध्यायाध्यायी(१) ततः परं।
पावनार्थेव पंक्त्या वै तान् प्रवक्ष्ये निबोधत ॥५५॥
य एते पूर्व्वनिर्दिष्टाः सर्व्वे ते ह्यनुपूर्व्वशः।
षडङ्गी विनयी योगी सर्व्वतन्त्रस्तथैव च ॥५६॥
यायावरश्च पञ्चैते विज्ञेयाः पङ्क्तिपावनाः।
अष्टादशानां विद्यानामेकस्मिन् पारगोपि यः ॥५७॥
यथावद्वर्त्तमानश्च सर्वे ते पङ्क्तिपावनाः।
त्रिनाचिकेतास्त्रैविद्योयश्च धर्मान् पठेद्द्विजः ॥५८॥
बार्हस्पत्ये तथा शास्त्रे पारं यश्च द्विजोगतः।
सर्वे ते पावना विप्राः पङ्क्तीनां समुदाहृताः ॥५९॥
आमन्त्रितस्तु यः श्राद्धे योषितं सेवते द्विजः।

---

(१) पश्चाद्ध्याध्यायी चेति ख० ग०।

पितरस्तस्य तं मासं तस्य रेतसि शेरते ॥६०॥
श्राद्धं दत्वा च भुक्त्वा च मैथुनं योनिषेवते ।
पितरस्तस्य तं मासं रेतःस्था नात्र संशयः ॥६१॥
तस्मादतिथये देयं भोजयेद्ब्रह्मचारिणं ।
ध्याननिष्ठाय दातव्यं सानुक्रोशाय धार्म्मिकं ॥६२॥
यतिं वा वालखिल्यान् वा भोजयेच्छ्राद्धकर्म्मणि ।
वानप्रस्थोपकुर्व्वाणः पूजामात्रेण तोषितः ॥६३॥
गृहस्थं भोजयेद्यस्तु विश्वेदेवास्तु पूजिताः ।
वानप्रस्थेन ऋषयोवालखिल्यैः पुरन्दरः ॥६४॥
यतीनां पूजने चापि साक्षाद्ब्रह्मा तु पूजितः ।
आश्रमाः पावनाः पञ्च उपधाभिरनाश्रमाः ॥६५॥
चत्वार आश्रमाः पूज्याः श्राद्धे दैवे तथैव च ।
चतुराश्रमवाह्येभ्यः श्राद्धं नैव प्रदापयेत् ॥६६॥
स तिष्ठेद्वा बुभुक्षुस्तु चतुराश्रमवह्यतः ।
अयतिर्मोक्षवादी च उभौ तौ पङ्क्तिदूषकौ ॥६७॥
वृथामुण्डाश्च जटिलाः सर्व्वे कार्प्पटिकास्तथा ।
निर्घृणान् भिन्नवृत्तांश्च सर्वभक्षान् विवर्जयेत् ॥६८॥
कारुकादीननाचारान् सर्ववेदवहिष्कृतान् ।
गायनान् देववृत्तांश्च हव्यकव्येषु वर्जयेत् ॥६९॥
द्विजेष्वपि क्षतं नित्यं[१] श्राद्धकर्म्मणि वर्जयेत्।

---

(१) दृष्टेति ख०।

एतेषु वर्त्तते यश्च कृतत्स्नवर्णं[१] स गच्छति ।
योऽश्नाति सह शूद्रेण सर्वे ते पङ्क्तिदूषकाः ॥७०॥

व्यापादनं[२] शक्तिनिवर्हणं कृषि-
वाणिज्यकार्य्यं पशुपालनञ्च ।
शुश्रूषणं वाप्यगुरोरहोवा
कार्य्यं नैतद्विद्यते ब्राह्मणस्य ॥७१॥

ये तु विप्रा स्थिता नित्यं ज्ञानिनोध्यानिनस्तथा ।
मिथ्यासङ्कल्पिनः सर्वे दुर्वृत्ता वा द्विजातयः ॥७२॥
मिथ्यातत्त्वविदोवर्ज्ज्यास्तथा दम्भविसूचकाः ।
उपपातकसंयुक्ताः पातकैश्च विशेषतः ॥७३॥
वेदे नियोगदातारोलोभमोहफलार्थिनः ।
ब्रह्मविक्रयिणश्चैव श्राद्धकर्म्मणि वर्जिताः ॥७४॥
न नियोगोस्ति वेदानां योनियुङ्क्ते स पापकृत् ।
भोक्ता वेदफलाद्भ्रश्येद्दाता दानफलात्तथा ॥७५॥
भृतोऽध्यापयते यस्तु भृतकाध्यापितस्तु यः ।
नार्हतस्तावपि श्राद्धं ब्रह्मणः क्रयविक्रयी[३] ॥७६॥
क्रयविक्रयिणौ चैव जीवितार्थं विगर्हितौ ।
वृत्तिरेषा तु वैश्यस्य ब्राह्मणस्य तु पातकं ॥७७॥
प्राङ्र्वेदान् वेदविदो वेदान् यश्चोपजीवति ।

---

(१) कृष्णावर्णमिति पाठः सर्व्वत्र ।
(२) व्याकर्षणमिति पाठः सर्व्वत्र दृश्यते ।
(३) ब्रह्मण्यक्रयविक्रयीति क० ।

उभौ तौ नार्हतः श्राद्धं पुत्रिकापतिरेव च ॥७८॥
वृथा दारांश्च योगच्छेद्योयजेत वृथाध्वरे ।
नार्हतस्तावपि श्राद्धं द्विजोयश्चैव नास्तिकः ॥७९॥
आत्मार्थं यः पचेदन्नं न देवातिथिकारकः ।
नार्हतस्तावपि श्राद्धं पतितौ ब्रह्मराक्षसौ ॥८०॥
स्त्रियोनक्तं परा येषां परदाररताश्च ये ।
अर्थकामरताश्चैव न तान् श्राद्धेषु भोजयेत् ॥८१॥
वर्णाश्रमाणां धर्मेषु विरुद्धाः श्राद्धकर्म्मणि ।
स्तेनश्च सर्वयाजी च सर्वे ते पङ्क्तिदूषकाः ॥८२॥
यस्य शूद्रकरवद्भुङ्क्ते यस्य पाणितले द्विजः ।
न तदश्नन्ति पितरोयस्य वाम[1] समश्नुते ॥८३॥
स्त्रीशूद्रायानुपेताय श्राद्धोच्छिष्टं न दापयेत् ।
योदद्याद्रागमोहात्तु न तद्गच्छेत् पितॄन् सदा ॥८४॥
तस्मान्न देयमुच्छिष्टं अन्नाद्यं श्राद्धकर्म्मणि ।
अन्यत्र दधिसर्प्पिभ्यां शिष्ये पुत्राय नान्यथा ॥८५॥
अनुच्छिष्टन्तु दातव्यं अन्नाद्यं वै विशेषतः ।
पुष्पमूलफलैर्वापि तुष्टिं गच्छन्ति चान्नतः ॥८६॥
यावन्त्यन्नानि पूतानि[2] यावदुष्णं न मुञ्चति ।
तावदश्नन्ति पितरोयावदश्नन्ति वाग्यताः ॥८७॥
दानं प्रतिग्रहोहोमोभोजनं बलिरेव च ।

---

(१) वायुमिति क० ङ० च० छ० ज० ।
(२) यावन्न पूयते चान्नमिति ख० ङ० च० ।

साङ्गुष्ठेन तथा कार्य्यं नासुरेभ्योयथा भवेत् ॥८८॥
एतान्येव च सर्व्वाणि दानादीनि विशेषतः।
अन्तर्जान्वविशेषेण तद्दाचमनं भवेत् ॥८९॥
मुण्डान् जटिलकाषायान् श्राद्धकालेऽपि वर्ज्जयेत्।
शिखिभ्योवा चिदण्डिभ्यः श्राद्धं यत्नात् प्रदापयेत् ॥९०॥
ये तु व्रते स्थिता नित्यं ज्ञानिनोध्यानिनस्तथा।
देवभक्ता महात्मानः पुनीयुर्दर्शनादपि ॥९१॥
सर्व्वं योगेश्वरैर्व्याप्तं त्रैलोक्यं वै निरन्तरं।
तस्मात् पश्यन्ति ते सर्व्वं यत्किञ्चिज्जगतीगतं ॥९२॥
व्यक्ताव्यक्तं वशीकृत्य सर्व्वस्यापि(१) च यत्परं।
सदसच्चेति यैर्दृष्टं(२) सदसच्च महात्मनां ॥९३॥
सर्व्वज्ञानानि दृष्टानि मोक्षादीनि महात्मनां।
तस्मात्तेषु सदासक्तः प्राप्नोत्यनुत्तमं(३) शुभं ॥९४॥

ऋचोहि योवेद स वेद वेदान्
यजूंषि योवेद स वेद यज्ञं।
सामानि योवेद स वेद ब्रह्म
योमानसं वेद स वेद सर्व्वम् ॥९५॥

इति श्रीमहापुराणे वायुप्रोक्ते श्राद्धकल्पे ब्राह्मणपरीक्षानाम सप्तदशोऽध्यायः।

---

(१) सर्व्वव्यापि चेति ख०।
(२) येर्जुष्टमिति ख० ग०। गैर्दृष्टमिति क० ज०।
(३) प्राप्नोत्यनुपममिति क०।

# अथ अष्टादशोऽध्यायः ।



श्राद्धकल्पे दानफलं ।

बृहस्पतिरुवाच । अतः परं प्रवक्ष्यामि दानानि च फलानि च ।

तारणं सर्व्वभूतानां स्वर्गमार्गं सुखावहं ॥१॥

लोके श्रेष्ठतमं सर्व्वमात्मनश्चापि यत् प्रियं ।

सर्व्वं पितॄणां दातव्यं तेषामेवाक्षयार्थिना ॥२॥

जाम्बूनदमयं दिव्यं विमानं सूर्य्यसन्निभं ।

दिव्याप्सरोभिः सङ्कीर्णमन्नदो लभते फलं ॥३॥

आच्छादनन्तु यो दद्यादाहतं(१) श्राद्धकर्म्मणि ।

आयुः प्रकाममैश्वर्य्यं रूपञ्च लभते सुतं ॥४॥

उपवीतन्तु यो दद्याच्छ्राद्धकालेषु धर्म्मवित् ।

पानञ्च सर्व्वविप्राणां ब्रह्मदानस्य यत् फलं ॥५॥

छत्रं विप्रेषु यो दद्याच्छ्राद्धकाले कमण्डलुं ।

मधुक्षीरस्रवा धेनुर्दातारमुपतिष्ठति ॥६॥

चक्राविद्धन्तु यो दद्याच्छ्राद्धकाले कमण्डलुं ।

धेनुं स लभते दिव्यां पयोदां कामदोहिनीं ॥७॥

पूर्णशय्यान्तु(२) यो दद्यात् पुष्पमालाविभूषितां ।

प्रासादो ह्युत्तमो भूत्वा गच्छन्तमनुगच्छति ॥८॥

---

(१) दद्यादक्षतमिति ख॰ ग॰ ।

(२) पूर्णपर्य्यामिति च॰ ।

भवनं रत्नसम्पूर्णं शय्यासनभोजनं ।
श्राद्धे दत्त्वा यतिभ्यस्तु नाकपृष्ठे स मोदते ॥९॥
मुक्ताविदूर्य्यवासांसि रत्नानि विविधानि च ।
वाहनानि च दिव्यानि अयुतान्यर्ब्बुदानि च ॥१०॥
सुमहज्ज्वलनप्रख्यं रत्नकामसमन्वितं ।
सूर्य्यचन्द्रप्रभन्दिव्यं विमानं लभतेऽक्षयं ॥११॥
अप्सरोभिः परिवृतं कामगन्तु मनोजवं ।
वसते स विमानाग्रे स्तूयमानः समन्ततः ॥१२॥
दिव्यैर्गन्धैः प्रसिञ्चन्ति पुष्पवृष्टिभिरेव च[1] ।
गन्धर्व्वाप्सरसस्तत्र गायन्ते वादयन्ति च ॥१३॥
कन्या युवतयो मुख्याः सहिताश्चाप्सरोगणैः ॥
सुस्वरैस्तं विबुध्यन्ते सततं हि मनोरमैः ॥१४॥
अश्वदानसहस्रेण रथदानशतेन च ।
दन्तिनाञ्च सहस्रेण योगिणा वसते नरः ॥१५॥
दद्यात् पितृभ्योयोगिभ्यो यस्तूज्ज्वलनमम्भसि[2] ।
अथ निष्कसहस्राणां फलं प्राप्नोति मानवः ॥१६॥
जीवितस्य प्रदानाद्धि नान्यद्दानं विशिष्यते ।
तस्मात् सर्वप्रयत्नेन देयं प्राणाभिरक्षणं ॥१७॥
अहिंसा सर्व्वदेवेभ्यः पवित्रा सर्व्वदायिनी ।
दानं हि जीवितस्याहुः प्राणिनां परमं बुधाः ॥१८॥

---

(१) दिव्यैः पुष्पैः प्रसिञ्चन्ति पूर्णवृष्टिभिरेव च इति पाठः सर्व्वत्र ।
(२) जलाङ्करयमम्भसीति पाठः सर्व्वस्मादर्शपुस्तकेषु दृश्यते ।

लवणानि सुवर्णानि श्राद्धे पात्राणि दापयेत् ।
रथास्तमुपतिष्ठन्ति भव्याः सौभाग्यमेव च ॥१९॥
पात्रं वै तैजसन्दद्यान्मनोज्ञं श्राद्धभोजने ।
पात्रं भवति कामानां रूपस्य च धनस्य च ॥२०॥
राजतं काञ्चनं वापि दद्याच्छ्राद्धे तु कर्म्मणि ।
दत्त्वा तु लभते दाता प्रकामं[१] धर्म्ममेव च ॥२१॥
धेनुं श्राद्धे तु योदद्याद्दृष्टिकुम्भोपदोहनां ।
गावस्तमुपतिष्ठन्ति गवां पुष्टिस्तथैव च ॥२२॥
शिशिरेषु तथाल्वग्निं बहुकाष्ठं तथैव च ।
इन्धनानि तु योदद्याद्द्विजेभ्यः शिशिरागमे[२] ॥२३॥
नित्यञ्जयति संग्रामे श्रियायुक्तश्च दीप्यते ।
सुरभीणि च माल्यानि गन्धवन्ति तथैव च ॥२४॥
पूजयित्वा तु पात्राणि श्राद्धे सत्कृत्य दापयेत् ।
गन्धवाहा महानद्यः सुखानि विविधानि च ॥२५॥
दातारमुपतिष्ठन्ति युवत्यश्च मनोरमाः ।
शयनासनानि रम्याणि भूमयोवाहनानि च ॥ २६ ॥
श्राद्धेऽप्येतानि योदद्यादश्वमेधफलं लभेत् ।
श्राद्धकाले निवेद्यञ्च दर्शश्राद्ध उपस्थिते ॥२७॥
विप्राणां गुणयुक्तानां स्मृतिं मेधां च विन्दति ।

(१) प्राकाम्यमिति क० ख० ग० ङ० ञ० । च चिह्नितपुस्तके एष श्लोको नास्ति ।
(२) कायामिदीप्तिः प्राकाम्ये रूपं सौभाग्यमेव चेति ख० ग० ङ० च० ।

सर्पिःपूर्णानि पात्राणि श्राद्धे सत्कृत्य दापयेत् ॥२८॥
कुम्भदोहनधेनूनां बह्वीनाञ्च फलं लभेत् ।
अस्मिंस्तु मोदते लोके स्यन्दनैश्च सुवाहनैः ॥२९॥
श्राद्धे यथेप्सितं दत्वा पुण्डरीकस्य यत् फलं ।
रम्यमावसथं दत्वा राजसूयफलं लभेत् ॥३०॥
वनं पुष्पफलोपेतं दत्त्वा सौरभमश्नुते ।
कूपारामतड़ागानि क्षेत्रघोषगृहानि च ॥३१॥
दत्वैतान् मोदते स्वर्गे नित्यमाचन्द्रतारकं ।
आस्तीर्णशयनं दत्वा श्राद्धे रत्नविभूषितं ॥३२॥
पितरस्तस्य तुष्यन्ति स्वर्गं चानन्त्यमश्नुते ।
राजभिः पूज्यते चापि धनधान्यैश्च वर्द्धते ॥३३॥
ऊर्णाकौशेयवस्त्राणि तथा प्रवरकम्बलौ ।
अजिनं काञ्चनं पट्टं प्रवेणी मृगलोमकं ॥३४॥
दानान्येतानि विप्रेभ्योभोजयित्वा यथाविधि ।
प्राप्नोति श्रद्दधानस्तु वाजपेयशतं फलं(१) ॥३५॥
बह्वीर्नार्य्यः सुरूपास्तु पुत्रा भृत्याश्च किंकराः ।
वशे तिष्ठन्ति भूतानि अस्मिंल्लोके त्वनामयं ॥३६॥
कौशेयं क्षौमकार्पासं दुकूलमहितं तथा ।
श्राद्धेष्वेतानि योदद्यात् कामानाप्नोति पुष्कलान् ॥३७॥
लक्ष्मीं विनुदत्याशु तमः सूर्य्योदये यथा ।

---

(१) वाजपेयफलं लभेत् इति ख० ग० । परन्त्वेष पाठोऽसंगतः ।

भ्राजते स विमानाग्रे नक्षत्रेष्विव चन्द्रमाः ॥३८॥
वासोहि सर्वदैवत्यं सर्वदेवैरभिष्टुतं ।
वस्त्राभावे क्रिया नास्ति यज्ञा वेदास्तपांसि च ॥३९॥
तस्माद्वस्त्राणि देयानि श्राद्धकाले विशेषतः ।
तानि सर्वाण्यवाप्नोति यज्ञवेदतपांसि[१] च ॥४०॥
नित्यं श्राद्धेषु योदद्यात् प्रयतस्तत्परायणः ।
सर्वान् कामानवाप्नोति स्वर्गं राज्यं तथैव च ॥४१॥
सर्वकामसमृद्धस्य यज्ञस्य फलमश्नुते ।
भक्ष्यान् धानाः करम्भांश्च पिष्टकान् घृतशर्कराः ॥४२॥
कृशरान् मधुपर्कंश्च पयः पायसमेव च ।
स्निग्धांश्च पूपान् योदद्यादग्निष्टोमस्य यत् फलं ॥४३॥
दधि गव्यमसंसृष्टं भक्ष्या नानाविधास्तथा ।
तदन्नं शोचति श्राद्धे वर्षासु च मघासु च ॥४४॥
घृतेन भोजयेद्विप्रान् घृतं भूमौ समुत्सृजेत् ।
गयायां[२] हस्तिनश्चैव दत्वा श्राद्धे न शोचति ॥४५॥
ओदनं पायसं सर्पिर्मधुमूलफलानि च ।
भक्ष्यांश्च विविधान् दत्वा प्रेत्य चेह च मोदते ॥४६॥
शर्कराक्षीरसंयुक्तं पृथुकं नित्यमक्षयं ।
यश्च संवत्सरं प्रीत्या कृशरैर्मसुरेण च ॥४७॥
सक्तुलाजास्तथा पूपाः कुल्माषव्यञ्जनैस्तथा ।

---

(१) यज्ञवेदतपांसीत्यारभ्य कामानवाप्नोतीत्यन्तः पाठः च॰ पुस्तके नास्ति।
(२) छायायामिति क॰ ख॰ घ॰ ।

सर्पिःस्निग्धानि हृद्यानि दध्ना सक्तूंस्तु भोजयेत्।
श्राद्धेष्वेतानि योदद्यात् पद्मानि लभते निधिं ॥४८॥
नवसस्यानि योदद्यात् श्राद्धे सत्कृत्य यत्नतः।
सर्वभोगानवाप्नोति पूज्यते च दिवं गतः ॥४९॥
भक्ष्यभोज्यानि चोष्याणि पेयलेह्यतराणि च।
सर्वश्रेष्ठानि योदद्यात् सर्व्वश्रेष्ठोभवेन्नरः ॥५०॥
वैश्वदेवं च सौम्यं च खाङ्गमांसं परं हविः।
विषाणं वर्ज्जयेत् खाङ्गं असूयां नाशयामहे ॥५१॥
भोजनेऽग्रासनं दद्यादतिथिभ्यः कृताञ्जलिः।
सर्वयज्ञक्रियाणां स फलं प्राप्नोत्यनुत्तमं ॥५२॥
चिप्रमत्युष्णमक्लिष्टं दद्याच्चान्नं बुभुक्षते।
व्यञ्जनं च तथा स्निग्धं भक्त्या सत्कृत्य यत्नतः॥५३
तरुणादित्यसंकाशं विमानं हंसवाहनं।
अन्नदोलभते तिस्रः कल्पकोटीस्तथैव च[१] ॥५४॥
अन्नदानात्परं दानं विद्यते नेह किञ्चन।
अन्नाद्भूतानि जायन्ते जीवन्ति च न संशयः ॥५५॥
जीवदानात् परं दानं न किञ्चिदिह विद्यते।
अन्नैर्जीवति त्रैलोक्यमन्नस्यैव हि तत् फलं ॥५६॥
अन्ने लोकाः प्रतिष्ठन्ति लोकदानस्य तत्फलं।

---

(१) कन्याकोटीस्तथैव च इति पाठः ङ० पुस्तकव्यतिरिक्तेषु सर्व्वेषु दृश्यते।

अन्नं प्रजापतिः साक्षात्तेन सर्व्वमिदं ततं ।
तस्मादन्नसमं दानं न भूतं न भविष्यति ॥५७॥
यानि रत्नानि मेदिन्यां वाहनानि स्त्रियस्तथा ।
क्षिप्रं प्राप्नोति तत् सर्वं पितृभक्तोहि मानवः ॥५८॥
प्रतिश्रयं सदा दद्यादतिथिभ्यः कृताञ्जलिः ।
देवास्ते संप्रतीच्छंते दिव्यातिथ्यैः सहस्रशः ॥५९॥
सर्वाण्येतानि योदद्यात् पृथिव्यामेकराड्भवेत् ।
त्रिभिर्द्वाभ्यामथैकेन दानेन तु सुखी भवेत् ॥६०॥
दानानि परमोधर्म्मः सद्भिः सत्कृत्य पूजितः ।
त्रैलोक्यस्याधिपत्यं हि दानादेव व्यवस्थितं ॥६१॥
राजा तु लभते राज्यमधनश्चोत्तमं धनं ।
क्षीणायुर्लभते चायुः पितृभक्तः सदा नरः ।
यान् कामान् मनसाऽर्थेत तांस्तस्य पितरोविदुः ॥६२॥

इति श्रीमहापुराणे वायुप्रोक्ते श्राद्धकल्पे दानफलं नाम
अष्टादशोऽध्यायः ॥

———

# अथ ऊनविंशोऽध्यायः।



श्राद्धकल्पे तिथिविशेषे श्राद्धफलं।

बृहस्पतिरुवाच। अत ऊर्द्धं प्रवक्ष्यामि श्राद्धकर्म्मणि पूजितं।
काम्यनैमित्तिकाजस्रं श्राद्धकर्म्मणि नित्यशः ॥१॥
पुत्रदारधनमूला अष्टकास्तिस्र एव च।
पूर्वपक्षोवरिष्ठोहि पूर्वा चित्री उदाहृता ॥२॥
प्राजापत्या द्वितीया स्यात् तृतीया वैश्वदेवकी।
आद्या पूपैः सदा कार्या मांसैरन्या भवेत्सदा ॥३॥
शाकैरन्या तृतीया स्यादेवंद्रव्यगतोविधिः।
अन्वष्टका पितॄणां वै नित्यमेव विधीयते ॥४॥
यद्यन्या च चतुर्थी स्यात्तास्त्र कुर्य्याद्विशेषतः।
तासु श्राद्धं बुधः कुर्य्यात् सर्व्वस्वेनापि नित्यशः ॥५॥
परत्रेह च सर्व्वेषु नित्यमेव सुखीभवेत्।
पूजकानां सदोत्कर्षोनास्तिकानामधोगतिः ॥६॥
पितरः सर्व्वकालेषु तिथिकालेषु देवताः।
सर्व्वे पुरुषमायान्ति निपानमिव धेनवः ॥७॥
मा स्म ते प्रतिगच्छेयुरष्टकाः सुरपूजिताः।
मोघस्तस्य भवेल्लोकोलब्धश्चास्य विनश्यति ॥८॥
देवांस्तु दायिनोयान्ति तिर्य्यग्गच्छन्त्यदायिनः।
प्रजां पुष्टिं स्मृतिं मेधां पुत्रानैश्वर्य्यमेव च ॥९॥

कुर्व्वाणः पौर्णमास्याञ्च पूर्व्वं[१] पूर्णं समश्नुते ।
प्रतिपद्धनलाभाय लब्धं चास्य न नश्यति ॥१०॥
द्वितीयायान्तु यः कुर्य्याद्द्विपदाधिपतिर्भवेत् ।
वरार्थिना तृतीया तु[२] शत्रुघ्नी पापनाशिनी ॥११॥
चतुर्थ्यां कुरुते श्राद्धं शत्रोश्छिद्राणि पश्यति ।
पञ्चम्यां वै प्रकुर्वाणः प्राप्नोति महतीं श्रियं ॥१२॥
षष्ठ्यां श्राद्धानि कुर्वाणं द्विजास्तं पूजयन्त्युत ।
कुरुते यस्तु सप्तम्यां श्राद्धानि सततं नरः ॥१३॥
महासत्रमवाप्नोति गणानामधिपो भवेत् ।
सम्पूर्णामृद्धिमाप्नोति योऽष्टम्यां कुरुते नरः ॥१४॥
श्राद्धं नवम्यां कुर्वाण ऐश्वर्य्यं काङ्क्षितां स्त्रियं ।
कुर्वन् दशम्यान्तु नरो ब्राह्मीं श्रियमवाप्नुयात् ॥१५॥
वेदांश्चैवाप्नुयात् सर्वान् प्रणाशमेनसस्तथा ।
एकादश्यां परं दानमैश्वर्य्यं सततं तथा ॥१६॥
द्वादश्यां राष्ट्रलाभन्तु जयमाहुर्वसूनि च ॥१७॥
प्रजां बुद्धिं पशून् मेधां स्वातन्त्र्यं पुष्टिमुत्तमां ॥१८॥
दीर्घमायुरथैश्वर्य्यं कुर्व्वाणस्तु त्रयोदशीं ॥१९॥
युवानश्च मृता यस्य गृहे तेषां प्रदापयेत् ।
शस्त्रेण तु हता ये वै तेषां दद्याच्चतुर्दशीं ॥२०॥

---

(१) सर्व्वमिति ख० ।
(२) वरां स्त्रिनां तृतीयान्तु इति ग० ।

तथा विषमजातानां यमलानां तु सर्वशः ।
अमावास्यां प्रयत्नेन श्राद्धं कुर्य्याच्छुचिः सदा ॥२१॥
सर्व्वान् कामानवाप्नोति स्वर्गमानन्त्यमश्नुते ।
स्मृतं दद्यादमावास्यां सोममाप्यायनं महत् ॥२२॥
एवमाप्यायितः सोमस्त्रीन् लोकान् धारयिष्यति ।
सिद्धचारणगन्धर्व्वैस्तूयमानस्तु नित्यशः ॥२३॥
स्तवैः पुष्पैर्मनोज्ञैश्च सर्व्वकामपरिच्छदैः ।
नृत्यवादित्रगीतैश्च अप्सरोभिः सहस्रशः ॥२४॥
उपक्रीडैर्व्विमानैस्तु पितृभक्तं दृढव्रतं ।
स्तुवन्ति देवगन्धर्व्वाः सिद्धसङ्घाश्च तं सदा ॥२५॥
पितृभक्तस्त्वमावस्यां सर्वान् कामानवाप्नुयात् ।
प्रत्यक्षमर्च्चितास्तेन भवन्ति पितरः सदा ॥२६॥
पितृदेवा मघा यस्मात् तस्मात्तास्वक्षयं स्मृतं ।
पित्र्यं कुर्व्वन्ति तस्यान्तु विशेषेण विचक्षणः ॥२७॥
तस्मान्मघां वै वाञ्छन्ति पितरोनित्यमेव हि ।
पितृदैवतभक्ता ये तेऽपि यान्ति परां गतिं ॥२८॥

इति श्रीमहापुराणे वायुप्रोक्ते श्राद्धकल्पे तिथिविशेषे श्राद्ध-फलवर्णनं नाम ऊनविंशोऽध्यायः समाप्तः ।

---

# अथ विंशोऽध्यायः ।

—◦❖◦—

श्राद्धकल्पे नक्षत्रविशेषे श्राद्धफलं ।

बृहस्पतिरुवाच । यमस्तु यानि श्राद्धानि प्रोवाच शशविन्दवे[१] ।
तानि मे शृणु कार्त्स्न्येन नक्षत्रेषु पृथक् पृथक् ॥१॥
श्राद्धं यः कृत्तिकायोगे करोति सततं नरः ।
अग्नीनाधाय सापत्योजायते स गतज्वरः ॥२॥
अपत्यकामोरोहिण्यां सौम्येनौजस्विता भवेत् ।
प्रायशः क्रूरकर्म्मा तु चार्द्रायां श्राद्धमाचरेत् ॥३॥
क्षेत्रभागी भवेत् पुत्री श्राद्धं कुर्व्वन् पुनर्व्वसौ ।
धनधान्यसमाकीर्णः पुत्रपौत्रसमाकुलः ॥४॥
तुष्टिकामः पुनस्तिष्ये श्राद्धं कुर्वीत मानवः ।
अश्लेषासु पितॄनर्च्च्य वीरान् पुत्रानवाप्नुयात् ॥५॥
श्रेष्ठोभवति ज्ञातीनां मघासु श्राद्धमाचरन्[२] ।
फल्गुनीषु पितॄनर्च्च्य सौभाग्यं लभते नरः ॥६॥
प्रधानशीलः सापत्यः उत्तरासु करोति यः ।
स सत्सु मुख्योभवति हस्ते यस्तर्पयेत्पितॄन् ॥७॥
चित्रायां चैव यः कुर्यात् पश्येद्रूपवतः सुतान् ।
स्वातिना चैव यः कुर्याद्विद्यांल्लाभ[३] मवाप्नुयात् ॥८॥

---

(१) शशविन्दवे इति ख० ञ०, शिशिविन्दवे इति ङ० च० ।
(२) माचरेदिति च० ।
(३) विद्वान् काममिति क० ।

पुत्रार्थन्तु विशाखासु श्राद्धमीहेत मानवः।
अनुराधासु कुर्व्वाणोनरश्चक्रं प्रवर्त्तयेत् ॥९॥
आधिपत्यं लभेच्छ्रैष्ठ्यं ज्येष्ठायां सततं तु यः।
मूलेनारोग्यमिच्छन्ति आषाढ़ासु महद्यशः ॥१०॥
आषाढ़ाभिस्तोत्तराभिर्वीतशोकोभवेन्नरः।
श्रवणायां सुलोकेषु प्राप्नुयात् परमां गतिं ॥११॥
राज्यभागी[१] धनिष्ठासु प्राप्नुयाद्विपुलं धनं।
श्राद्धं त्वभिजिता कुर्वन् विन्दतेऽजाविकं फलं[२] ॥१२॥
नक्षत्रे वारुणे कुर्व्वन् भिषक्सिद्धिमवाप्नुयात्।
पूर्व्वे प्रोष्ठपदे कुर्व्वन् विन्दतेऽजाविकं फलं[३] ॥१३॥
उत्तरास्वनतिक्रम्य विन्देद्गावः सहस्रशः।
बहुरूपकृतं द्रव्यं विन्देत् कुर्व्वंस्तु रेवतीं।
अश्वांश्चैवाश्विनीयुक्तोभरण्यामायुरुत्तमं ॥१४॥
इमं श्राद्धविधिं कुर्व्वन् शशविन्दुर्महीमिमां।
कृत्स्नान्तु लेभे स कृत्स्नां लब्ध्वा च प्रशशंस तं ॥१५॥

इति श्रीमहापुराणे वायुप्रोक्ते नक्षत्रविशेषे श्राद्धफलवर्णनं नाम विंशोऽध्यायः समाप्तः।

---

(१) राष्ट्रभागिति ज०।
(२) सदा सम्मानमाप्नुयादिति क०।
(३) वाञ्छितं फलमिति ज०।

# अथ एकविंशोऽध्यायः ।



श्राद्धकल्पे भिन्नकालिकतृप्तिसाधनद्रव्यविशेष-गयाश्राद्धादिफल-ब्राह्मणपरीक्षादिकथनं ।

शंयुरुवाच । किञ्चिद्दत्तं पितृणां तु धिनोति वदतां वर ।
किं हि स्विच्चिररात्राय किञ्चानन्त्याय कल्प्यते ॥१॥
बृहस्पतिरुवाच । हवींषि श्राद्धकाले तु यानि श्राद्धविदोविदुः ।
तानि मे शृणु सर्वाणि फलं चैषां यथाबलं ॥२॥
तिलैर्व्रीहियवैर्माषैरद्भिर्मूलफलेन च ।
दत्तेन मासं प्रीयन्ते श्राद्धेन तु पितामहाः ॥३॥
मत्स्यैः प्रीणन्ति द्वौ मासौ त्रीन्मासान् हारिणेन तु ।
शाशन्तु[1] चतुरोमासान् पञ्च प्रीणाति शाकुनं ॥४॥
वाराहेण तु षण्मासान् छागलं सप्तमासिकं ।
अष्टमासिकमित्युक्तं यच्च पार्षतकं भवेत् ॥५॥
रौरवेण तु प्रीयन्ते नवमासान् पितामहाः ।
गवयस्य तु मांसेन तृप्तिः स्याद्दशमासिकी ॥६॥
कूर्मस्य चैव मांसेन मासानेकादशैव तु ।
श्राद्धमेव विजानीयाद्गव्यं संवत्सरं भवेत् ॥७॥
तथा गव्यसमायुक्तं पायसं मधुसर्पिषा ।
बध्रीणसस्य मांसेन तृप्तिर्द्वादशवार्षिकी ॥८॥

---

(१) मेषन्त्विति ख० ग० ।

आनन्त्याय भवेद्युक्तं खड्गमांसैः पितृक्षये ।
कृष्णाच्छागस्तथा गोधा[१] आनन्त्यायैव कल्प्यते ॥९॥
अत्र गाथाः पितृगीताः कीर्त्तयन्ति पुराविदः ।
तास्तेऽहं संप्रवक्ष्यामि यथावत्संनिबोधत ॥१०॥
अपि नः स्वकुले जायाद्योऽन्नं दद्यात्त्रयोदशीं ।
पायसं मधुसर्पिर्भ्यां छायायां कुञ्जरस्य तु ॥११॥
आजेन सर्व्वलोहेन वर्षासु च मघासु च ।
एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत् ।
गौरीं वाप्युद्वहेद्भार्य्यां नीलं वा वृषमुत्सृजेत् ॥१२॥
शंयुरुवाच । गयादीनां फलं तात प्रब्रूहि समपृच्छतः ।
पितॄणां चैव यत्पुण्यं निखिलेन ब्रवीहि मे ॥१३॥
वृहस्पतिरुवाच । गयायामक्षयं श्राद्धं जपहोमतपांसि च ।
पितृक्षयाहे ते[२] पुत्र तस्मात्तत्राक्षयं स्मृतं ॥१४॥
पुनीयादेकविंशन्तु गौर्य्यामुत्पादितः सुतः ।
मातामहांस्तु षड्भूय इति तस्याः फलं स्मृतं ॥१५॥
फलं वृषस्य वक्ष्यामि गदतोमे निबोधत ।
वृषोत्सृष्टा पुनात्येव दशातीतान् दशावरान् ॥१६॥
यत्किञ्चित् स्पृश्यते तोयैरुत्तीर्णेन जलान्महीं ।
वृषोत्सर्गे पितॄणां तु अक्षयं समुदाहृतं ॥१७॥

---

(१) गोह (गोह्?) इति क० ज०। लोह इति ख० ग० ङ० च०। गोधा इति पाठः कल्पितः।
(२) पितृक्षये स्थिते इति क० छ० च० क० ज०।

यद्यद्धि संस्पृशेत्तोयं लांगूलादिभिरन्ततः ।
सर्व्वं तदक्षयं तस्य पितॄणां नात्र संशयः ॥१८॥
शृङ्गैः खुरैर्वा यद्भूमिमुल्लिखत्यनिशं वृषः ।
मधुकुल्याः पितॄंस्तस्य अक्षयास्ता भवन्ति वै ॥१९॥
सहस्रनल्वमात्रेण तड़ाकेन यथा श्रुतिः ।
तृप्तिस्तृप्तिः पितॄणां वै तद्वृषस्याधिकोच्यते ॥२०॥
योददाति गुड़ैर्मिश्रांस्तिलान् वै श्राद्धकर्मणि ।
मधुना मधुमिश्रान् वा[१] अक्षयं सर्व्वमेव तत् ॥२१॥
वृहस्पतिरुवाच । न ब्राह्मणान् परीक्षेत सदा दैये तु मानवः ।
दैवे कर्मणि पित्र्ये च श्रूयते वै परीक्षणं ॥२२॥
सर्ववेदव्रतस्नाताः पङ्क्तीनां पावना द्विजाः ।
ये च भाष्यविदो[२] मुख्या ये च व्याकरणे रताः ॥२३॥
अधीयते पुराणं च धर्म्मशास्त्रं तथैव च ।
त्रिणाचिकेतपञ्चाग्निस्त्रिसुपर्णः षडङ्गवित् ॥२४॥
ब्रह्मदेयसुतश्चैव छन्दोगोज्येष्ठसामगः ।
पुण्येषु येषु तीर्थेषु अभिषेककृतव्रताः ॥२५॥
मुख्येषु येषु सत्रेषु भवन्त्यवभृथप्लुताः[३] ।
ये च सत्योव्रता नित्यं स्वकर्म्मनिरताश्च ये ॥२६॥
अक्रोधनाः शांतिपरास्तान् वै श्राद्धे निमन्त्रयेत् ।

---

(१) मधुमांससुमिश्रान् वा इति ख० ग० ।
(२) भरथविदो इति ङ० च० ।
(३) अवभृतप्लुता इति ङ० च० छ० ज० ।

ये चापि नित्यं दमसु सुकृतेषु व्यवस्थिताः ॥२७॥
एतेषु दत्तमक्षय्यमेते वै पङ्क्तिपावनाः ।
अद्धेया ब्राह्मणा ये तु योगधर्ममनुव्रताः ॥२८॥
धर्माश्रमवरिष्ठास्ते हव्यकव्येषु ते वराः ।
त्रयोऽपि पूजितास्तेन ब्रह्मविष्णुमहेश्वराः ॥२९॥
पितृभिः सह लोकाश्च योह्येतान् पूजयेन्नरः ।
पवित्राणां पवित्रश्च मङ्गलानां च मङ्गलं ॥३०॥
प्रथमः सर्वधर्माणां योगधर्मोनिगद्यते ।
अपाङ्क्त्यांस्तु वक्ष्यामि गदतोमे निबोधत ॥३१॥
कितवोमद्यपोयक्ष्मी पशुपालोनिराकृतिः ।
ग्रामप्रेष्योवार्द्धुषिकोगायनोवणिजस्तथा ॥३२॥
आगारदाही[१] गरदः कुण्डाशी सोमविक्रयी ।
समुद्रयायी दुश्चर्मा तैलिकः कूटकारकः ॥३३॥
पित्रा विवदमानश्च[२] यस्य चोपपतिर्गृहे ।
अभिशस्तस्तथास्तेनः शिल्पैर्यश्चोपजीवति ॥३४॥
सूचकः पर्वकारी च यस्तु मित्रेषु द्रुह्यति ।
गणयाचनकश्चैव नास्तिकोवेदवर्जितः ॥३५॥
उन्मत्तः षण्डकशठौ भ्रूणहा गुरुतल्पगः ।
भिषक्जीवः प्रैषणिकः परस्त्रीं यश्च गच्छति ॥३६॥
विक्रीणाति च योब्रह्म व्रतानि च तपांसि च ।

---

(१) अङ्गारदाही इति क० ङ० च० ।
(२) पुत्रा विवदमानाश्चेति ङ० च० ।

नष्टं स्यान्नास्तिके दत्तं कृतघ्ने चैव शंसके ॥३७॥
यच्च वाणिजके चैव नेह नामुत्र तद्भवेत् ।
निक्षेपहारिणे चैव कितवे वेदनिन्दके ॥३८॥
तथा वाणिजके चैव कारुके धर्मवर्जिते ।
निन्दन् क्रीणाति पण्यानि विक्रीणंश्च प्रशंसति ॥३९॥
अनृतस्य समावासोन वणिक् श्राद्धमर्हति ।
भस्मनीव हुतं हव्यं दत्तं पौनर्भवे द्विजे ॥४०॥
षष्टिं काणः शतं षण्डः श्वित्री यावत् प्रपश्यति ।
पापरोगी सहस्रस्य दातुर्नाशयते फलं ॥४१॥
भ्रश्यते सत्फलात्तस्माद्दाता यस्य तु बालिशः ।
योवेष्टितशिरा भुङ्क्ते योभुङ्क्ते दक्षिणामुखः ॥४२॥
सोपानत्कश्च योभुङ्क्ते यच्च दद्यात्तिरस्कृतं ।
सर्वं तदसुरेन्द्राणां ब्रह्मा भागमकल्पयत् ॥४३॥
श्वानश्च यातुधानाश्च नावेक्षेरन् कथञ्चन ।
तस्मात्परिवृतिं दद्यात्तिलैश्चान्ववकीरयन् ॥४४॥
राक्षसानां तिलाः प्रोक्ताः[१] शुनां परिवृतिस्तथा ।
दर्शनाच्छूकरोहन्ति पक्षपातेन कुक्कुटः ॥४५॥
रजस्वलानुस्पर्शेन क्रुद्धोयश्च प्रयच्छति ।
यस्य मित्रप्रदेयानि श्राद्धानि च हवींषि च ।
न प्रीणाति पितॄन् देवान् स्वर्गं न च स गच्छति ॥४६॥

---

(१) कार्य्या इति ङ० च० ।

नदीतीरेषु रम्येषु सरित्सु च सरस्सु च ।
विविक्तेषु च प्रीयन्ते दत्तेनेह पितामहाः ॥४७॥
न चास्त्रं पातयेज्जातु न शुक्तोवाचमीरयेत् ।
न च कुर्व्वीत भुञ्जानः अन्योऽन्यं मत्सरस्तदा[१] ॥४८॥
अपसव्ये कृते तेन विधिवद्दर्भपाणिना ।
पित्र्यमानिधनं कार्य्यमेवं प्रीणाति वै पितृन् ॥४९॥
अनुमत्यादितोविप्रानग्नौ कुर्यादृयथाविधि ।
पितॄणां निर्व्वपेद्भूमौ सूर्पे वा दर्भसंस्तरे ॥५०॥
शुक्लपक्षस्य पूर्व्वाह्णे श्राद्धं कुर्यादिचक्षणः ।
कृष्णपक्षेऽपराह्णे तु रौहिणं न विलङ्घयेत् ॥५१॥
एवमेते महात्मानोमहायोगा महौजसः ।
सदा वै पितरः पूज्या द्रष्टारोदेशकालयोः ॥५२॥
पितृभक्तिरतोनित्यं योगं प्राप्नोत्यनुत्तमं ।
ध्यानेन मोक्षं गच्छन्ति हित्वा कर्म्म शुभाशुभं ॥५३॥
यस्माद्देतोर्यदुद्धृत्य मोहयित्वा जगत्तदा ।
गुहायां निहतं योगं कश्यपेन महात्मना ॥५४॥
अमृतं गुह्यमुद्धृत्य योगं योगविदांवर[२] ।
प्रोक्तं सनत्कुमारेण महत्तद्धर्म्मशाश्वतं[३] ॥५५॥
देवानां परमं गुह्यं ऋषीणां च परायणं ।

---

(१) सक्तदिति ख० ।
(२) यत्नविदाम्बर इति क० ।
(३) महाधर्म्मार्थशाश्वतमिति ख० ग० ।

पितृभक्त्या प्रयत्नेन पितृभक्तैश्च नित्यशः ॥५६॥
तस्य योगं समासेन पितृभक्तास्तु कृत्स्नशः ।
प्रयत्नात्प्राप्नुयात्तत्र सर्वमेव न संशयः ॥५७॥
यस्मै श्राद्धानि देयानि यच्च दत्तं महाफलं ।
येषु वाप्यक्षयं श्राद्धं तीर्थेषु च नदीषु च ।
येषु च स्वर्गमाप्नोति तत्ते प्रोक्तं समन्ततः ॥५८॥
बृहस्पतिरुवाच । श्रुत्वैवं श्राद्धकल्पं तु योऽसूयां कुरुते नरः ।
स मज्जेन्नरके घोरे नास्तिकस्तमसावृतः ॥५९॥
महारोगावसायस्तु स यः संयतमानसः[१] ।
वेदाश्रमान्मुक्तचित्तः कुम्भीकानधिगच्छति ।
जिह्वाच्छेदं स्तेनमेत्य प्राप्नुयुस्तेन चैव ह ॥६०॥
सीदन्ति ते सागरे लोष्ट्रभूता
योगद्विषः स्यायन्ते यावदुर्व्वी ।
तस्मात् श्राद्धे धर्म्म उद्दिष्ट एष
नित्यं कार्यः श्रद्दधानेन पुंसा ॥६१॥
परिवादोन कर्त्तव्यो योगिनां च विशेषतः ।
परिवादात् कृमिर्भूत्वा तत्रैव परिवर्त्तते ॥६२॥
योगं परिवदेद्यस्तु ध्यानिनां मोक्षकारणं ।
स गच्छेन्नरकं घोरं श्रोता यश्च न संशयः ॥६३॥

---

(१) संयतमानसः इति पाठः आदर्शपुस्तकमात्रेषु दृश्यते परन्तु न सम्यक् । सन्दिग्धमानसः इति पाठः समुचितः ।

आवृतं तमसा सर्वं नरकं घोरदर्शनं ।
योगीश्वरपरीवादान्निरयं याति मानवः ॥६४॥
योगेश्वराणामाक्रोशं शृणुयाद्योयतात्मनां ।
स हि कालं चिरं मज्जेत् कुम्भीपाके न संशयः ॥६५॥
मनसा कर्मणा वाचा द्वेषं योगिषु वर्ज्जयेत् ।
प्रेत्यानन्यं तत्फलं(१) भुङ्क्ते इह चैव न संशयः ॥६६॥
न पारगो विन्दति पारमात्मन-
स्त्रिलोकमध्ये चरति स्वकर्मभिः ।
ऋचोयजुःसामतदङ्गपारगो-
त्रिकारमेव ह्यनवाप्य सीदति ॥६७॥
विकारपारः प्रकृतेश्च पारगः
त्रयी गुणानां(२) त्रिगुणान्तपारगा ।
तत्त्वश्चतुर्विंशतियोगपारगं
स पारगोयस्त्वयनान्तपारगः ॥६८॥
कृत्स्नं यथा तत्त्वविसर्गमात्मन-
स्तथैव भूयः प्रलयं सदात्मनः ।
प्रत्याहरेद्योगबलेन योगवित्
स सर्वपारक्रमयानगोचरः ॥६९॥
वेदस्य वेदिता योवै वेद्यं विन्दति योगवित् ।
तं वै वेदविदं प्राहुस्तं प्राहुर्वेदपारगं ॥७०॥

---

(१) प्रेत्यानन्तफलमिति ख० ङ० च० ज० ।
(२) गुणानामिति पाठः सर्व्वत्रैवास्ति। जनानामिति पाठोऽत्र समुचितः ।

वेदश्च वेदितव्यश्च विदित्वा वै यथाविधि ।
एवं वेदविदं प्राहुस्ततोऽन्ये वेदचिन्तकाः ॥७१॥
यज्ञान् वेदांस्तथा कामान् स्नानानि विविधानि च ।
प्राप्नोत्यायुः प्रजाश्चैव पितृभक्तो धनानि च ॥७२॥
श्राद्धे यः श्राद्धकल्पं वै पश्चिमं नियतं पठेत् ।
सर्वाण्येतान्यवाप्नोति तीर्थे दानफलानि च ॥७३॥
स पङ्क्तिपावनश्चैव द्विजानामग्रभुग्भवेत् ।
अध्याप्य वा द्विजान् सर्वान् सर्वान् कामानवाप्नुयात्॥७४॥
यश्चैव शृणुयान्नित्यं आनन्त्यं स्वर्गमश्नुते ।
अनसूयोजितक्रोधोलोभमोहविवर्जितः ॥७५॥
तीर्थानाञ्च फलं कृत्स्नं दानादीनां तथैव च ।
मोक्षोपायोह्ययं श्रेष्ठः स्वर्गोपायोह्ययं परः ।
इह चापि परा तुष्टिस्तस्मान् कुर्व्वीत यत्नतः ॥७६॥
इमं विधिं योहि पठेदतन्द्रितः
समाहितः संसदि पर्व्वसन्धिषु ।
अपत्यभाग्भवति परेण तेजसा
दिवौकसां स व्रजते सलोकतां ॥७७॥
येन प्रोक्तस्त्वयं कल्पोनमस्तस्मै स्वयम्भुवे ।
महायोगेश्वरेभ्यश्च सदा च प्रणतोह्यहं ॥७८॥
इत्येते पितरस्तात देवानामपि देवताः ।
सप्तस्वेतेषु ते नित्यं स्थानेषु पितरोऽव्ययाः ॥७९॥
प्रजापतिसुता ह्येते सर्व्वे चैव महात्मनः ।

आद्योगणस्तु योगानां स नित्योयोगवर्द्धनः ॥८०॥
द्वितीयोदेवतानान्तु तृतीयोदेवताऽरिणां।
शेषास्तु वर्णिनां ज्ञेया इति सर्वे प्रकीर्त्तिताः ॥८१॥
देवास्त्वेतान् यजन्ते वै सर्वेष्वेतेष्ववस्थिताः।
आश्रमास्तु यजन्त्येतान् चत्वारस्तु यथाक्रमं ॥८२॥
वर्णाश्चापि यजन्त्येतांश्चत्वारस्तु यथाविधि।
तथा सङ्करजाताश्च म्लेच्छाश्चैव यजन्ति वै ॥८३॥
पितॄंश्च योयजेद्भक्त्या पितरः पूजयन्ति तं।
पितरः पुष्टिकामस्य प्रजाकामस्य वा पुनः।
पुष्टिं प्रजाश्च स्वर्गञ्च प्रयच्छन्ति पितामहाः ॥८४॥
देवकार्यादपि सूनोः पितृकार्यं विशिष्यते।
देवतानां हि पितरः पूर्वमाप्यायनं स्वयं ॥८५॥
न हि योगगतिः सूक्ष्मा पितॄणाञ्च परा गतिः।
तपसा विप्रकृष्टेन दृश्यते मांसचक्षुषा ॥८६॥
सर्वेषां राजतं पात्रमथवा रजतान्वितं।
पावनं ह्युत्तमं प्रोक्तं देवानां पितृभिः सह ॥८७॥
येषां दास्यन्ति पिण्डांस्त्रीन् बान्धवा नामगोत्रतः।
भूमौ कुशोत्तरायाञ्च अपसव्यविधानतः ॥८८॥
सर्वत्र वर्त्तमानास्ते पिण्डाः प्रीणन्ति वै पितॄन्।
यदाहारोभवेज्जन्तुराहारः सोऽस्य जायते ॥८९॥
यथा गोष्ठे प्रणष्टां वै वत्सोविन्दति मातरं।
तथा तं नयते मन्त्रोजन्तुर्यत्रावतिष्ठते ॥९०॥

नाम गोत्रञ्च मन्त्रश्च दत्तमन्नं नयन्ति तं ।
अपि योनिशतं प्राप्तांस्तृप्तिस्ताननुगच्छति ॥८१॥
एवमेषा स्थिता संस्था ब्रह्मणा परमेष्ठिना ।
पितॄणामादिसर्गस्तु लोकानामक्षयार्थिनां ॥८२॥
इत्येते पितरोदेवा देवाश्च पितरः पुनः ।
दौहित्रा यजमानाश्च प्रोक्तास्त्वेव मयाऽनघाः(१) ॥८३॥
लोका दुहितरश्चैव दौहित्राश्च सुतास्तथा ।
दानानि सह शौचेन तीर्थानि च फलानि च ॥८४॥
अक्षयत्वं द्विजाश्चैव यायावरविधिस्तथा ।
प्रोक्तं सर्वं यथान्यायं यथा ब्रह्माऽब्रवीत्पुरा ॥८५॥
बृहस्पतिरुवाच । इत्येतदङ्गिराः प्राह ऋषीणां शृण्वतां तदा ।
पृष्टस्तु संशयं सर्वं पितॄणां प्राह संसदि ॥८६॥
सत्रे वै वितते पूर्वं तदा वर्षसहस्रिके(२) ।
यस्मिन् गृहपतिश्चासीद्ब्रह्मा वै देवता प्रभुः ॥८७॥
संवत्सरशतान्यत्र(३) तत्रोपेता इति श्रुतिः ।
श्लोकाश्चात्र पुरा गीता ऋषिभिर्ब्रह्मवादिभिः ॥८८॥
दीक्षितस्य तदा सत्रे ब्रह्मणः परमात्मनः ।
तत्रैव जातमत्युग्रं पितॄणामक्षयार्थिना ।

---

(१) मयाऽनघ इति क० ।
(२) दशसहस्रिके इति ख० ग० ।
(३) संवत्सरशताम् पञ्च इति ङ० ।

लोकानाञ्च हितार्थाय ब्रह्मणा परमेष्ठिना ॥९९॥
सूत उवाच। एवं बृहस्पतिः पूर्वं पृष्टः पुत्रेण धीमता।
प्रोवाच पितृवंशन्तु यत्तद्वै समुदाहृतं।
अत ऊर्द्धं प्रवक्ष्यामि वरुणस्य निबोधत ॥१००॥

इति श्रीमहापुराणे वायुप्रोक्ते श्राद्धकल्पे भिन्नकालिकतृप्तिसाधन-द्रव्यविशेष-गयाश्राद्धादिफल-ब्राह्मणपरीक्षादिकथनं नाम एकविंशोऽध्यायः समाप्तः ॥

# अथ द्वाविंशोऽध्यायः ।

आद्धकल्पे वरुणवंशवर्णनं ।

ऋषयस्त्वेवमुक्तास्तु परं हर्षमुपागताः ।
परं शुश्रूषवोभूयः पप्रच्छुस्तदनन्तरं ॥१॥
ऋषय ऊचुः । वंशानामानुपूर्व्वेण राज्ञाञ्चामिततेजसां ।
स्थितिश्चैषां प्रभावञ्च ब्रूहि नः परिपृच्छतां ॥२॥
एवमुक्तस्ततः सूतस्तथाऽसौ लोमहर्षणः ।
शुश्रूषामुत्तराख्याने ऋषीणां वाक्यकोविदः ॥३॥
आख्यानकुशलोभूयः परं वाक्यमुवाच ह ।
ब्रुवतोमे निबोधध्वं ऋषिराह यथा मम ॥४॥
वंशानामानुपूर्व्येण राज्ञाञ्चामिततेजसां ।
स्थितिश्चैषां प्रभावञ्च ब्रुवतोमे निबोधत ॥५॥
वरुणस्य पत्नी सामुद्री शुनोदेवीत्युदाहृता ।
तस्याः पुत्रौ कलिर्वैद्यः सुता च सुरसुन्दरी ॥६॥
कलिपुत्रौ महावीर्यौ जयश्च विजयश्च ह ।
वैद्यपुत्रौ घृणिश्चैव मुनिश्चैव महाबलौ ॥७॥
प्रजानामत्तुकामानामन्योन्यस्य प्रभक्षिणौ ।
भक्षयित्वा तावन्योन्यं विनाशं समवापतुः ॥८॥
कलिः सुरायां सञ्जज्ञे तस्य पुत्रोमदः स्मृतः ।
स्वाङ्गो हिंसा कलेर्भार्य्या ज्येष्ठा या निकृतिः स्मृता ॥९॥

प्रस्वनान्यान् कलेः पुत्रांश्चतुरः पुरुषादकान् ।
नाकं विघ्नञ्च विख्यातं सद्मं(१) विधमन्तथा ॥१०॥
अशिरस्कस्तयोर्विघ्नोनाकस्यैवाशरीरवान् ।
सद्मस्यैकहस्तोऽभूद्विधमस्यैकपात् स्मृतः ॥११॥
सद्मस्य तथा पत्नी तामसी पूतना स्मृता ।
रेवती विधमस्यापि तयोः पुत्राः सहस्रशः ॥१२॥
नाकस्य शकुनिः पत्नी विघ्नस्य च अयोमुखी ।
राक्षसास्तु महाशीर्षाः(२) सन्ध्याद्वयविचारिणः ॥१३॥
रेवतीपूतनापुत्रा नैर्ऋता नामतः स्मृताः ।
ग्रहास्ते राक्षसाः सर्वे बालानान्तु विशेषतः ।
स्कन्दस्तेषामधिपतिर्ब्रह्मणोनुमते प्रभुः ॥१४॥
बृहस्पतेर्या भगिनी वरस्त्री ब्रह्मचारिणी ।
योगसिद्धा जगत्कृत्स्नमसक्ता चरते सदा ॥१५॥
प्रभासस्य तु सा भार्या वसूनामष्टमस्य तु ।
(विश्वकर्मा सुतस्तस्या जातः शिल्पिप्रजापतिः ॥१६॥
त्वष्टा विराजोरूपाणां धर्म्मपौत्र उदारधीः ।
कर्त्ता शिल्पसहस्राणां त्रिदशानाञ्च वास्तुकृत् ॥१७॥)
यः सर्वेषां विमानानि देवतानाञ्चकार ह ।
मानुषाश्चोपजीवन्ति यस्य शिल्पं महात्मनः ॥१८॥

---

(१) समुद्रमिति क० ख० ग० भद्रमिति ङ० च० ।
(२) महावीर्य्या इति ख० ग० ङ० च० छ० ।

प्रह्लादी विश्रुता तस्य त्वष्टुः पत्नी विरोचना ।
विरोचनस्य भगिनी माता चित्रिरसस्तु सा ।१९॥
देवाचार्यस्य महतोविश्वकर्मस्य धीमतः ।
विश्वकर्मात्मजस्यैव विश्वकर्ममयः स्मृतः ॥२०॥
सुरेणुरिति विख्याता स्वसा तस्य यवीयसी ।
(त्वाष्ट्री सा सवितुर्भार्य्या पुनः संज्ञेति विश्रुता ॥२१॥
असूत तपसा सा तु मनुं ज्येष्ठं विवस्वतः ।
यमौ पुनरसूतासौ यमश्च यमुनाश्च ह ॥२२॥
सा तु गत्वा कुरून् देवी वड़वारूपधारिणी ।
सवितुश्चाश्वरूपस्य नासिकाभ्यां तु तौ स्मृतौ ॥२३॥
असूत सा महाभागा त्वन्तरीक्षेऽश्विनौ किल ।
नासत्यश्चैव दस्रश्च मार्त्तण्डस्यात्मजावुभौ ॥२४॥ )
ऋषय ऊचुः । कस्मान्मार्त्तण्ड इत्येष विवस्वानुच्यते बुधैः ।
किमर्थं साऽश्वरूपा वै नासिकाभ्यामसूयत ।
एतद्वेदितुमिच्छामस्तत्त्वं विब्रूहि पृच्छतां ॥२५॥
सूत उवाच (चिरोत्पन्नमतिभिन्नमण्डं त्वष्ट्रा विदारितं ।
दृष्ट्वा गर्भवधाद्भीतः कश्यपोदुःखितोऽभवत् ॥२६॥
अण्डे द्विधाकृते त्वण्डं(१) दृष्ट्वा त्वष्टारमब्रवीत् ।
नैतदण्डं भवान्नूनं मार्त्तण्डस्त्वं भवानघ ॥२७॥
न खल्वयं मृतोऽण्डस्थ इति स्नेहात् पिताऽब्रवीत् ।

(१) त्वखण्डमितिपाठः सर्व्वत्र । परन्तु त्वन्तरितिपाठः समीचीनः ।

तस्य तद्वचनं श्रुत्वा नामान्यर्थमुदाहरत् ॥२८॥
यस्मान्मार्त्तण्डोभवेत्युक्तः पिताऽण्डे वै द्विधाकृते।
तस्माद्विवस्वान्मार्त्तण्डः पुराणज्ञैर्विभाव्यते ॥२९॥
ततः प्रजाः प्रवक्ष्यामि मार्त्तण्डस्य विवस्वतः।
विजज्ञे सवितुः संज्ञाभार्यायान्तु त्रयं पुरा ॥३०॥
मनुर्यवीयान् सावर्णिः संज्ञायाञ्च तथाश्विनौ।
शनैश्चरश्च सप्तैते मार्त्तण्डस्यात्मजाः स्मृताः ॥३१॥
विवस्वान् कश्यपाज्जज्ञे दाक्षायण्यां महायशाः।
तस्य भार्याऽभवत् त्वाष्ट्री महादेवी विवस्वतः।
सुरेणुरिति विख्याता पुनः संज्ञेति विश्रुता ॥३२॥
सा तु भार्या भगवतोमार्त्तण्डस्याततेजसः।
नातुष्यद्गुष्टरूपेण रूपयौवनशालिनी ॥३३॥
आदित्यस्य हि तद्रूपं मार्त्तण्डस्य हि तेजसा।
गोत्रेषु प्रतिरुद्धं वै नातिकान्तमिवाभवत् ॥३४॥
न खल्वयं मृतोह्यण्डे इति स्नेहात्तमब्रवीत्।
अज्ञानः कश्यपः स्नेहात् मार्त्तण्ड इति चोच्यते ॥३५॥
तेजस्त्वभ्यधिकं तस्य नित्यमेव विवस्वतः।
येनापि तापयामास त्रीँल्लोकान् कश्यपात्मजः ॥३६॥
त्रीण्यपत्यानि संज्ञायां जनयामास वै रविः।
द्वौ सुतौ तु महावीर्यौ कन्यां कालिन्दिमेव च ॥३७॥
मनुर्विवस्वतोज्येष्ठः श्राद्धदेवः प्रजापतिः।
ततोयमोयमी चैव यमजौ संबभूवतुः ॥३८॥

शातवर्णन्तु तद्रूपं दृष्ट्वा संज्ञा विवस्वतः ।
असहन्ती स्वकां छायां सवर्णां निर्ममे पुनः ॥३९॥
महीमयी तु सा नारी तस्याश्छायासमुद्गता ।
प्राञ्जलिः प्रयता भूत्वा पुनः संज्ञामभाषत ॥४०॥
वदस्व किं मया कार्यं सा संज्ञा तामथाब्रवीत् ।
अहं यास्यामि भद्रन्ते स्वमेव भवनं पितुः ॥४१॥
त्वयेह भवने मह्यं वस्तव्यं निर्विशङ्कया ।
इमौ च बालकौ मह्यं कन्या च वरवर्णिनी ॥४२॥
भर्त्रे वै नैवमाख्येयमिदं भगवते त्वया ।
एवमुक्ताब्रवीत्संज्ञां संज्ञायाः पार्थिवी तु सा ॥४३॥
आकाशग्रहणाद्देवि आशपं नैव कर्हिचित् ।
आख्यास्यामि मतं तुभ्यं गच्छ देवि स्वमालयं ॥४४॥
समाधाय च तां संज्ञा तथेत्युक्ता तया च सा ।
त्वष्टुः समीपमगमद्व्रीडितेव तपस्विनी ॥४५॥
पिता तामागतां दृष्ट्वा क्रुद्धः संज्ञामथाब्रवीत् ।
भर्तुः समीपङ्गच्छ त्वं मा जुगुप्स दिवाकरं ॥४६॥
सैवमुक्ता तदा पित्रा नियुक्ता च पुनः पुनः ।
वर्षाणान्तु सहस्रं वै वसति स्म पितुर्गृहे ॥४७॥
भर्तुः समीपं गच्छ त्वं नियुक्ता च पुनः पुनः ।
अगमद्वडवा भूत्वाच्छाद्य रूपमनिन्दिता ।
उत्तरान् सा कुरून् गत्वा तृणान्यथ चचार सा ॥४८॥
द्वितीयायान्तु संज्ञायां संज्ञेयमिति चिन्त्यतां ।

आदित्योजनयामास पुत्रावादित्यवर्चसौ ॥४९॥
पूर्व्वजस्य मनोस्तुल्यौ सादृश्येन तु तौ प्रभू ।
श्रुतश्रुवन्तु धर्म्मज्ञं श्रुतकर्म्माणमेव च ॥५०॥
श्रुतश्रवा मनुः सोऽपि सावर्णिर्वै भविष्यति ।
श्रुतकर्म्मा तु विज्ञेयो ग्रहोवै यः शनैश्वरः ॥५१॥
मनुरेवाभवत्स वै सावर्ण्य इति बुध्यते ।
संज्ञा तु पार्थिवी सा वै स्वस्य पुत्रस्य वै तदा ॥५२॥
चकाराभ्यधिकं स्नेहं न तथा पूर्वजेषु वै ।
मनुस्तत्क्षान्तमत्सर्वं यमस्तद्वै न चाक्षमत् ॥५३॥
बहुशोयस्य मानस्तु सापत्न्याददितिदुःखितः ।
तां वै रोषाच्च बाल्याच्च भाविनोऽर्थस्य वै बलात् ॥५३॥
पदा सन्तर्जयामास सञ्ज्ञाञ्चैव स्वतोयमः ।
सा शशाप ततः क्रोधात् सवर्णा जननी यमं ॥५४॥
पदा तर्जयसे यस्मात् पितृभार्यां यशस्विनीं ।
तस्मात्तवैष चरणः पतिष्यति न संशयः ॥५५॥
यमस्तु तेन शापेन भृशं पीड़ितमानसः ।
मनुना सह धर्म्मात्मा पितुः सर्व्वं न्यवेदयत् ॥५६॥
भृशं शापभयोद्विग्नः संज्ञावाक्यैर्विनिर्जितः ।
बाल्याद्वा यदि वा मोहान्मांभवांस्त्रातुमर्हति ॥५७॥
शप्तोहमस्मिँल्लोकेश जनन्या तपतांवर ।
तव प्रसादोनस्त्रातु ह्येतस्मान्महतोभयात् ॥५८॥
विवस्वानेवमुक्तस्तु यमं प्रोवाच वै प्रभुः ।

असंशयं पुत्र महद्भविष्यं तत्र कारणं ॥५८॥
येन त्वामाविशत्क्रोधो धर्म्मज्ञं सत्यवादिनं ।
न शक्यमेतन्मिथ्या तु कर्त्तुं मातुर्वचस्तव ॥६०॥
क्रिमयो मांसमादाय यास्यन्ति तु महीं तव ।
ततः पादं महाप्राज्ञ पुनः संप्राप्स्यसे सुखं ॥६१॥
कृतमेवं वचः सत्यं मातुस्तव भविष्यति ।
शापस्य परिहारेण त्वं च त्रातो भविष्यसि ॥६२॥
आदित्यस्त्वब्रवीत् संज्ञां किमर्थं तनयेषु वै ।
तुल्येष्वप्यधिकः स्नेह एकस्मिन् क्रियते त्वया ॥६३॥
सा तत्परिहरन्ती वै नाचचक्षे विवस्वतः ।
आत्मना स समाधाय योगन्तथ्यमपश्यत ॥६४॥
तां शप्तुकामो भगवान् नाशाय कुपितः प्रभुः ।
सा तत्सर्वं यथातत्त्वमाचचक्षे विवस्वतः ॥६५॥
विवस्वानथ तच्छ्रुत्वा क्रुद्धस्त्वष्टारमभ्ययात् ।
त्वष्टा तु तं यथान्यायमर्च्चयित्वा विभावसुं ॥६६॥
निर्द्दग्धुकामं रोषेण सान्त्वयामास वै शनैः ।
तवातितेजसा युक्तमिदं रूपं न शोभते ॥६७॥
असहन्ती तु तत् संज्ञा वने चरति शाद्वले ।
द्रक्ष्यते तां भवानद्य स्वां भार्यां शुभचारिणीं ॥६८॥
श्लाघ्यां यौवनसम्पन्नां[१] योगमास्थाय गोपते ।
अनुकूलं भवेद्देवं यदि स्यात् सम्मतो मतः ॥६९॥

---

(१) श्लाघ्ययौवनसम्पन्नामिति ख० ग० ।

रूपं निवर्त्तयेयन्ते आद्यं श्रेष्ठमरिन्दम ।
रूपं विवस्वतस्त्वासीत्तिर्यगूर्द्ध्वमधस्तथा ॥७०॥
तेनासौ व्रीड़ितो देवो रूपेण तु दिवस्पतिः ।
तस्मात्त्वष्टा स चक्रन्तु बहु मेने महातपाः ॥७१॥
अनुज्ञातस्ततस्त्वष्टा रूपनिवर्त्तनाय तु ।
ततोऽभ्युपगमात्त्वष्टा मार्त्तण्डस्य विवस्वतः ॥७२॥
भ्रमिमारोप्य तत्तेजः शातयामास तस्य वै ।
तत्तु निर्भासितन्तेजस्तेजसापहृतेन तु ॥७३॥
कान्तात् कान्ततरं द्रष्टुमशुभं शुशुभे ततः ।
ददर्श योगमास्थाय स्वाम्भार्य्यां वड़वां तथा ॥७४॥
अदृश्यां सर्वभूतानां तेजसा नियमेन च ।
अश्वरूपेण मार्त्तण्डः तां मुखे समभावयत् ॥७५॥
मैथुनाय विचेष्टन्ती परपुंसोपशङ्कया ।
सा तन्निरधमच्छुक्रं नासिकाभ्यां विवस्वतः ॥७६॥
देवौ तस्मादजायेतामश्विनौ भिषजां वरौ ।
नासत्यश्चैव दस्रश्च स्मृतौ द्वावश्विनाविति ॥७७॥
मार्त्तण्डस्य सुतावेतावष्टमस्य प्रजापतेः ।
तान्तु रूपेण कान्तेन दर्शयामास भास्करः ॥७८॥
सा तं दृष्ट्वा तदा भार्य्या तुतोष च मुमोह च ।
यमस्तु तेन शापेन भृशम्पीड़ितमानसः ॥७९॥
धर्म्मेण रञ्जयामास धर्म्मराजस्ततस्तु सः ।
सोऽलभत् कर्मणा तेन शुभेन परमद्युतिः ॥८०॥

पितॄणामाधिपत्यञ्च लोकपालत्वमेव च ।
मनुः प्रजापतिश्चैव सावर्णः स महायशाः ॥८१॥
भाव्यसौ नागते तस्मिन् मनुः सावर्णिकेऽन्तरे ।
मेरुपृष्ठे सुरम्ये वै अद्यापि चरते प्रभुः ॥८२॥
भ्राता शनैश्चरस्तस्य ग्रहत्वं स तु लब्धवान् ।
त्वष्टाऽनु तेनरूपेण विष्णोश्चक्रमकल्पयत् ।
महाऽप्रतिहतं युद्धे दानवप्रतिवारणे ॥८३॥
यवीयसी तयोर्या तु यमुना च यशस्विनी ।
अभवत् सा सरित्श्रेष्ठा यमुना लोकभाविनी ॥८४॥
यस्तु ज्येष्ठोमहातेजाः सर्गोयस्य तु साम्प्रतं ।
विस्तरं तस्य वच्यामि मनोर्वैवस्वतस्य ह ॥८५॥
इदन्तु जन्म देवानां शृणुयाद्वा पठेत वा ।
वैवस्वतस्य पुत्राणां सप्तानान्तु महौजसां ।
आपदं प्राप्य मुच्येत प्राप्नुयाच्च महद्यशः ॥८६॥

इति श्रीमहापुराणे वायुप्रोक्ते श्राद्धकल्पे वरुणवंशवर्णनं नाम
द्वाविंशोऽध्यायः समाप्तः ।

---

## अथ त्रयोविंशोऽध्यायः ।



आद्धकल्पे वैवस्वतमनुवंशवर्णनं ।

सूत उवाच । ततोमन्वन्तरेऽतीते चाक्षुषे दैवतैः सह ।
वैवस्वताय महते पृथिवीराज्यमादिशत् ॥१॥
तस्य वैवस्वतोवक्ष्ये साम्प्रतस्य महात्मनः ।
आनुपूर्व्वेण वै विप्राः कीर्त्त्यमानं निबोधत ॥२॥
मनोर्वैवस्वतस्येह सर्गमादाय साम्प्रतं ।
मनोः प्रथमजस्यासन् नवपुत्रास्तु तत्समाः ॥३॥
इक्ष्वाकुर्नहुषस्यैव[1] धृष्टः शर्यातिरेव च ।
नरिष्यन्तस्तथा प्रांशुर्नाभागोरिष्ट एव च ।
करूषस्य पृषध्रस्य नवैते मानवाः स्मृताः ॥४॥
ब्रह्मणा तु मनुः पूर्वं चोदितस्तु निबोधत ।
स्रष्टुं प्रचक्रमे कामं निष्फलं समवर्त्तत[2] ॥५॥
अथाकरोत्पुत्रकामः परामिष्टिं प्रजापतिः ।
मित्रावरुणयोरंशे मनुराहुतिमावपत् ॥६॥
तत्र दिव्याम्बरधरा दिव्याभरणभूषिता ।
दिव्यसन्नहना[3] चैव इड़ा जज्ञे इति श्रुतिः ॥७॥

---

(1) नहुलस्यैवेति च० । नहुवस्यैवेति ङ ।
तत् प्रकीर्त्तितमितिपाठो यद्यपि सर्व्वत्रैव वर्त्तते तथापि लिपिकर-
प्रमादजनित एव ।
(3) दिव्यसंहनना इति ङ० च० ।

तामिलेत्यथ होवाच मनुर्द्दण्डधरः सुतः।
अनुगच्छामि[१] भद्रन्ते तमिला प्रत्युवाच ह ॥८॥
धर्मयुक्तमिदं वाक्यं पुत्रकामं प्रजापतिं।
मित्रावरुणयोरंशे जातास्मि वदतां वर ॥९॥
तयोः सकाशं यास्यामि मानोधर्मोहतोऽवधीत्[२]।
सैवमुक्ता पुनर्द्देवी[३] तयोरन्तिकमागमत् ॥१०॥
गत्वान्तिकं वरारोहा प्राञ्जलिर्वाक्यमब्रवीत्।
अंशेऽस्मि युवयोर्जाता देवौ किं करवाणि च ॥११॥
मनुनैवाहमुक्तास्मि अनुगच्छस्व मामिति।
तथा तु वदतीं साध्वीमिडामाश्रित्य तावुभौ ॥१२॥
देवौ च मित्रावरुणाविदं वचनमूचतुः।
अनेन तव धर्मज्ञे प्रश्रयेण दमेन च ॥१३॥
सत्येन चैव सुश्रोणि प्रीतौ स्वोवरवर्णिनि।
आवयोस्त्वं महाभागे ख्यातिं कन्या प्रयास्यसि[४] ॥१४॥
सुद्युम्न इति विख्यातस्त्रिषु लोकेषु पूजितः।
जगत्प्रियोधर्मशीलोमनोर्वंशविवर्द्धनः ॥१५॥
मानवः स तु सुद्युम्नः स्त्रीभावमगमत्[५] प्रभुः[६]।

---

(१) परन्तु अनुगच्छस्वेति पाठदर्शनादत्रापि अनुगच्छस्व इति पाठोयुक्तः।
(२) अवधीदित्यत्र अन्यथा इति पाठः प्रयोक्तुं शक्यः।
(३) महादेवीति ख० ग०।
(४) कन्येति यास्यसि इति पाठः समीचीनः।
(५) प्राप्स्यतीति पाठः समुचितः।
(६) पुनरिति ख० ङ० ञ०।

सा तु देवी वरं लब्ध्वा निवृत्ता पितरं प्रति ॥१६॥
बुधेनान्तरमासाद्य मैथुनायोपमन्त्रिता ।
सोमपुत्राद्बुधाच्चास्या ऐलो जज्ञे पुरूरवाः ॥१७॥
बुधात् सा जनयित्वा तु सुद्युम्नं पुनरागता ।
सुद्युम्नस्य तु दायादास्त्रयः परमधार्म्मिकाः ॥१८॥
उत्कलस्य गयश्चैव विनताश्व(१) स्तथैव च ।
उत्कलस्योत्कलं राष्ट्रं विनताश्वस्य पश्चिमं ।
दिक्षु वातस्य राजर्षेर्गयस्य तु गयापुरी ॥१९॥
प्रविष्टे मनौ तस्मिन् प्रजाः सृष्ट्वा दिवाकरः(२) ।
दशधा तद्दधत् क्षेत्रमकरोत् पृथिवीमिमां ॥२०॥
इक्ष्वाकुरेव दायादानन्यान् दश समाप्नुयात् ।
कन्याभावात्तु सुद्युम्नो नैनं भागमवाप्नुयात् ॥२१॥
वशिष्ठवचनाच्चासीत् प्रतिष्ठा नो महाद्युतिः ।
प्रतिष्ठा धर्म्मराजस्य सुद्युम्नस्य महात्मनः ॥२२॥
तत् पुरूरवसे प्रादात् राष्ट्रं प्राप्य महायशाः ।
मानवेभ्यो महाभागा स्त्रीपुंसोर्लक्षणं प्रति ।
मानवः स तु सुद्युम्नः स्त्रीभावमगमत् पुनः ॥२३॥
एतच्छ्रुत्वा तु ऋषयः पप्रच्छुस्तदनन्तरं ।
मानवः स तु सुद्युम्नः स्त्रीभावमगमत् कथं ॥२४॥

---

वितताश्व इति ख० घ० ।

प्रविष्टे मनावित्यादि श्लोकस्य पूर्व्वश्लोकेन सह सङ्गतिविरहात् एतत् श्लोक पूर्व्वं कतिश्लोकाः आदर्श्पुस्तकेषु पतिताः प्रतिभान्ति ।

सूत उवाच। प्रोवाच वचनं देवी प्रियहेतोः प्रियं प्रिया।
वने ममाश्रमे देव यः पुमान् संप्रवेक्ष्यति।
भविष्यति ध्रुवं नारी सा तुल्याप्सरसां शुभा ॥२५॥
तथ सर्वाणि भूतानि पिशाचाः पन्नगाश्च ये।
स्त्रीभूताः सह रुद्रेण क्रीडन्त्यप्सरसो यथा ॥२६॥
उमावनं प्रविष्टस्तु स राजा मृगयाकुलः।
सह पिशाचैर्भूतैस्तु रुद्रैः स्त्रीभावमास्थिते ॥२७॥
तस्मात् स राजा सुद्युम्नः स्त्रीभावं लब्धवान् पुनः।
महादेवप्रसादाच्च गाणपत्यमवाप्नुयात् ॥२८॥

इति श्रीमहापुराणे वायुप्रोक्ते वैवस्वतमनोः सृष्टिकथनं नाम त्रयोविंशोऽध्यायः समाप्तः॥

---

# अथ चतुर्विंशोऽध्यायः।

तत्र वैवस्वतमनुवंशगान्धर्व्वमूर्च्छनाकथनं।

सूत उवाच। निसर्गं मनुपुत्राणां विस्तरेण निबोधत।
पृषध्रोर्हिंसयित्वा तु गुरोर्गोवमभक्षयत् ॥१॥
शापाच्छूद्रत्वमापन्नश्च्यवनस्य महात्मनः।
करूषस्य तु कारूषः क्षत्रियोयुद्धदुर्मदः ॥२॥
सहस्रक्षत्रियगणविक्रान्तः संबभूव ह।
नाभागारिष्टपुत्रस्तु विद्वानासीद्भलन्दनः ॥३॥
भलन्दनस्य पुत्रोऽभूत् प्रांशुर्नाम महाबलः।
प्रांशोरेकोभवत् पुत्रः प्रजानिरिति विश्रुतः ॥४॥
प्रजानेरभवत् पुत्रः खनित्रोनाम वीर्य्यवान्।
तस्य पुत्रोऽभवत् श्रीमान् क्षुपोनाम महायशाः ॥५॥
क्षुपस्य विंशः पुत्रस्तु प्रतिमा न(१) बभूव ह।
विंशपुत्रस्तु कल्याणोविविंशोनाम धार्म्मिकः ॥६॥
विविंशपुत्रोधर्म्मात्मा खनिनेत्रः प्रतापवान्।
करन्धमस्तस्यपुत्रस्त्रेतायुगमुखेऽभवत् ॥७॥
करन्धमसुतश्चापि आविक्षिन्नाम वीर्य्यवान्।
आविक्षितोव्यतिक्रामत् पितरं गुणवत्तया ॥८॥

---

(१) प्रतिमानमिति ङ० च०।

मनुन्तो[१] नाम धर्म्मात्मा चक्रवर्त्तिसमोनृपः । ८६०
संवर्त्तेन द्विजश्रीतः समुद्धत् सह बान्धवैः ॥९॥
विवादोऽत्र महानासीत् संवर्त्तस्य वृहस्पतेः ।
ऋद्धिं दृष्ट्वा तु यज्ञस्य क्रुद्धस्तस्य वृहस्पतिः ॥
संवर्त्तेन कृते यज्ञे चुकोप सुभृशन्तदा ।
लोकानां स हि नाशाय दैवतैर्हि प्रसादितः ॥११
मनुन्तश्चक्रवर्त्ती स नरिष्यन्तमवाप्तवान् ।
नरिष्यन्तस्य दायादोराजा दण्डधरोदमः ॥१२॥
तस्य पुत्रस्तु विक्रान्तोराजासीद्राष्ट्रवर्द्धनः ।
सुधृती तस्य पुत्रस्तु नरः सुधृतिनः सुतः ॥१३॥
केवलस्तस्य पुत्रस्तु बन्धुमान् केवलात्मजः ।
अथ बन्धुमतः पुत्रोधर्म्मात्मा वेगवान् नृपः ॥१४॥
बुधोवेगवतः पुत्रस्तृणविन्दुर्बुधात्मजः ।
त्रेतायुगमुखे राजा तृतीये संबभूव ह ॥१५॥
कन्या तु तस्य द्रविडा माता विश्रवसोहि सा ।
पुत्रश्चास्य विशालोभूत् राजा परमधार्म्मिकः ॥१६॥
विशालस्य समुत्पन्ना विशाला नयनिर्म्मिता[२] ।
विशालस्य सुतोराजा हेमचन्द्रोमहाबलः ॥१७॥
सुचन्द्र इति विख्यातोहेमचन्द्रादनन्तरं ।
सुचन्द्रतनयोराजा धूम्राश्व इति विश्रुतः ॥१८॥

---

(१) मरुत्त इति ङ० च० ।
(२) येन निर्म्मिता इति ख० ।

भूत्वा वततयोविद्वान् सृञ्जयः समपद्यत ।
सृञ्जयस्य सुतः श्रीमान् सहदेवः प्रतापवान् ॥१९॥
साम्बः सहदेवस्य पुत्रः परमधार्म्मिकः ।
साम्बस्य महातेजाः सोमदत्तः प्रतापवान् ॥२०॥
सोमदत्तस्य राजर्षेः सुतोभूत् जनमेजयः ।
जनमेजयात्मजश्चैव प्रमति[१] र्नाम विश्रुतः ॥२१॥
तृणविन्दुप्रसादेन सर्व्वे वैशालका नृपाः ।
दीर्घायुषोमहात्मानोवीर्य्यवन्तः सुधार्म्मिकाः ॥२२॥
शर्य्यातेर्मिथुनं त्वासीत् आनार्त्तोनाम विश्रुतः ।
पुत्रः सुकन्या कन्या च भार्य्या या च्यवनस्य तु ॥२३॥
आनार्त्तस्य[२] तु दायादोरेवोनाम्ना तु वीर्य्यवान् ।
आनार्त्तोविषयेयस्य पुरी चापि कुशस्थली ॥२४॥
रेवस्य रैवतः पुत्रः ककुद्मी नाम धार्म्मिकः ।
ज्येष्ठोभ्रातृशतस्यासीत् राजा प्राप्य कुशस्थलीं ॥२५॥
कन्यया सह श्रुत्वा च गान्धर्वं ब्रह्मणोऽन्तिके ।
मुहूर्त्तं देवदेवस्य मार्त्यं बहुयुगं विभोः ॥२६॥
आजगाम युवा चैव स्वां पुरीं यादवैर्वृतां ।
कृतां द्वारवतीं नाम बहुद्वारां मनोरमां ॥२७॥
भोजवृष्ण्यन्धकैर्गुप्तां वसुदेवपुरोगमैः ।

---

(१) प्रमातिरिति क० ज० । प्रमितिरिति ख० ।
(२) आदर्शपुस्तकेष्वेकैकस्मिन् कुत्रचिदानार्त्तः क्वचिदानर्त्त इति पाठ-द्वयं दृश्यते ।

ताङ्कथां रैवतः श्रुत्वा यथातत्त्वमरिन्दमः ॥२८॥
कन्यान्तु बलदेवाय सुव्रतां नाम रेवतीं ।
दत्त्वा जगाम शिखरं मेरोस्तपसि संस्थितः ॥२९॥
रेमे रामश्च धर्म्मात्मा रेवत्या सहितः किल ।
तां कथां ऋषयः श्रुत्वा प्रपच्छुस्तदनन्तरं ॥३०॥
ऋषय ऊचुः । कथं बहुयुगे काले व्यतीते सूतनन्दन ।
न जरां रेवती प्राप्ता पलितश्च कुतः प्रभो ॥३१॥
मेरुं गतस्य वा तस्य शर्य्यातेः सन्ततिः कथं ।
स्थिता पृथिव्यामद्यापि श्रोतुमिच्छामि तत्त्वतः ॥३२॥
कियन्तोवा सुरगणा गन्धर्व्वास्तत्र कीदृशाः ।
यच्छ्रुत्वा रैवतः कालान् मुहूर्त्तमिवमन्यते ॥३३॥
सूत उवाच । न जरा क्षुत्पिपासा वा न च मृत्युभयं ततः ।
न च रोगः प्रभवति ब्रह्मलोकगतस्य हि ॥३४॥
गान्धर्व्वं प्रति यच्चापि पृष्टस्तु मुनिसत्तमाः ।
ततोऽहं संप्रवक्ष्यामि यथातथ्येन सुव्रताः ॥३५॥
सप्तस्वरास्त्रयोग्रामा मूर्च्छनास्त्वेकविंशतिः ।
तानाश्चैकोनपञ्चाशदित्येतत्स्वरमण्डलं ॥३६॥
षड्जर्षभौ च गान्धारोमध्यमः पञ्चमस्तथा ।
धैवतश्चापि विज्ञेयस्तथा चापि निषादवान् ॥३७॥
सौविरी मध्यमग्रामोहरिणाश्वा तथैव च ।
स्यात्कलोपबलोपेता चतुर्थी शुद्धमध्यमा ॥३८॥
शार्ङ्गी च पावनी चैव दृष्टाका च यथाक्रमं ।

मध्यमग्रामिकाः ख्याताः षड्जग्रामं निबोधत ॥३९॥
उत्तरमन्द्रा रजनी तथा या चोत्तरायता ।
शुद्धषड्जा तथा चैव आनीयात् सप्तमीं च तां ॥४०॥
गान्धारग्रामिकांस्त्वन्यान् कीर्त्यमानान् निबोधत ।
आग्निष्टोमिकमाद्यन्तु द्वितीयं वाजपेयिकं ॥४१॥
तृतीयं पौण्ड्रकं प्रोक्तं चतुर्थं चाश्वमेधिकं ।
पञ्चमं राजसूयञ्च षष्ठञ्च क्रसुवर्णकं[1] ॥४२॥
सप्तमं गोसवं नाम महावृष्टिकमष्टमं[2] ।
ब्रह्मदानञ्च नवमं प्राजापत्यमनन्तरं ॥४३॥
नागपक्षाश्रयं[3] विद्याद्गोतरञ्च तथैव च ।
हयक्रान्तं मृगक्रान्तं विष्णुक्रान्तं मनोहरं ॥४४॥
सूर्य्यक्रान्तं वरेण्यञ्च मत्तकोकिलवादिनं ।
सावित्रमर्द्धसावित्रं सर्व्वतोभद्रमेव च ॥४५॥
सुवर्णञ्च सुतन्द्रञ्च[4] विष्णुर्वैष्णुवरावुभौ ।
सागरं विजयञ्चैव सर्व्वभूतमनोहरं ॥४६॥
हंसं ज्येष्ठं विजानीमस्तुम्बुरुप्रियमेव च ।
मनोहरमथाव्यञ्च गन्धर्वानुगतञ्च यः ॥४७॥
अलम्बुषेष्टञ्च तथा नारदप्रिय एव च ।

---

(१) कुसुवर्णकमिति क० छ० ज० ।
(२) महावृत्तिकमिति ख० ।
(३) नागयक्षाश्रयमिति ख० छ० ।
(४) सुभद्रञ्चेति ख० छ० ।

कथितोभीमसेनेन नागराणां यथा प्रियः[(१)] ॥४८॥
विकलोपनीतविनता[(२)] श्रीराख्योभार्गवप्रियः[(३)] ।
विंशतिर्मध्यमग्रामः षड्जग्रामश्चतुर्दश[(४)] ॥४९॥
तथा पञ्चदशेच्छन्ति गान्धारग्रामसंस्थिताम् ।
सवौवीरा तु गान्धारी ब्रह्मणा ह्युपगीयते[(५)] ॥५०॥
उत्तरादिस्वरश्चैव ब्रह्मा वै देवताऽच च[(६)] ।
हरिदेशसमुत्पन्ना हरिणाख्या व्यजायत ।
मूर्च्छना हरिणाश्चैव ब्रह्मा इन्द्रोऽधिदैवतं[(७)] ॥५१॥
करोपनीतविनता मरुद्भिः स्वरमण्डले[(८)] ।

---

(१) भयाप्रियः इति ख० ।
(२) करोपनीतविनता इति पाठः समीचीनः ।
(३) अत्र ख० पुस्तके, अभिरम्यश्च शुभश्च पुण्यः पुण्यारकः स्मृतः इति पाठोवर्त्तते ।
(४) विंशत्यादिस्थाने क० ञ० पुस्तके अपाचियः गान्धारग्रामसंस्थिता इत्यादि खण्डितास्पष्टपाठोवर्त्तते ।
(५) ससौवीरा ब्रह्मणोत् ह्युपगीयते इति क० ञ०। ससावीरान्तसौवीरी ब्रह्मणामुपनीयते इति ख० । ब्राह्मणोह्युपगीयते इति छ० ।
(६) उत्तरादिस्वरश्चैव ब्रह्मा वै देवताय च इति ख० । देवतान्त च इति छ० ।
(७) मूर्च्छना हरिणा चैव इन्द्रस्याप्याधिदैवतं इति क० ञ० । हरिणाख्या-प्यजायत । मूर्च्छना हरिणा चैव इन्द्रश्चास्याधिदैवतं इति ख० । मूर्च्छना हरिणाश्चैव इन्द्रस्याप्याधिदैवतं इति छ० ।
(८) विचता मनुभिः स्वरमण्डले इति क० ञ० । विचिता मरुभिः स्वर-मण्डले ख० । विचता मनुद्भिः स्वरमण्डले इति छ० ।

सा कलोपनता तस्मान्मारुतस्याश्च दैवतं[१] ॥५१॥
मनुदेशसमुत्पन्ना[२] मूर्च्छना शुद्धमध्यमा ।
मध्यमोऽत्र स्वरः शुद्धोगन्धर्वश्चास्य देवता ॥५२॥
मृगैः सह सञ्चरते[३] सिद्धानां मार्गदर्शने ।
यस्मात्तस्मात् स्मृता मार्गी[४] मृगेन्द्रोऽस्याश्च दैवता ।५४॥
सा चाश्रमसमायुक्ता[५] अनेकान् पौरवान् स्वान् ।
मूर्च्छना योजना ज्ञेया रजसा रजनी ततः[६] ॥५५॥
तास्व[७] उत्तरमन्द्रायाः षड्जदैवतकां विदुः ।
तस्मादुत्तरतायश्च प्रथमं स्वायतं विदुः[८] ।
तस्मादुत्तरमन्द्रेयं देवतास्य ध्रुवोध्रुवं[९] ॥५६॥
अपानादुत्तरत्वाच्च[१०] धैवतस्योत्तरायणः [११] ।

(१) साकस्योपनता तस्मान्मातुस्याश्च देवता० इति क० ज० । तस्मान्मनु-तस्याश्च दैवतं इति छ० ।
(२) मवदेशसमुत्पन्नेति ख० ।
(३) मृगैः श्रुतसाहस्य इति ख० ।
(४) मायी इति क० ज० । मार्ग्री इति छ० । मात्रा इति क० ।
(५) चाश्रमसमायुक्ता इति छ० ।
(६) स्याद्रजसा रजनी ततः इति क० छ० ज० ।
(७) तानि इति क० ख० छ० ज० ।
(८) तस्मादुत्तरता च प्रथमं स्वायमं विदुरिति क० ज० । तस्मादुत्तराश्च वै प्रथमं स्वायतमं विदुरिति ख० । तस्मादुत्तरतायाश्च प्रथमं स्वायतं विदुरिति छ० ।
(९) तमोदुत्तरमन्द्रेयं देवतास्या ध्रुवे ध्रुवा इति क० छ० ज० । तमोदुत्तर-मन्द्रेयं देवतास्या भवेद्ध चेति ख० ।
(१०) आयामदुत्तरत्वाच्च इति क० छ० । आयामादुत्तरत्वाच्च इति ज० ।
(११) धैवतस्यायतोऽपि चेति ख० ।

स्यादियं मूर्च्छना ह्येवं पितरः श्राद्धदेवताः(१) ॥५७॥
शुद्धषड्जस्वरं कृत्वा यस्माद्दृप्ति(२) महर्षयः।
उपतिष्ठन्ति तस्मात्तं जानीयात् शुद्धषड्जिकं(३) ॥५८॥
यः सतां मूर्च्छनां कृत्वा पञ्चमस्वरकोभवेत्(४)।
यक्षीणां मूर्च्छना सा तु(५) याक्षिका मूर्च्छना स्मृता ॥५९॥
नागदृष्टि(६) विषा गीता(७) नोपसर्पन्ति मूर्च्छनां।
भवन्तीव हृता ह्येते ब्रह्मणा नागदेवताः(८)।
अहीनां मूर्च्छना ह्येषा वरुणश्चात्र देवता(९) ॥६०॥
शकुन्तकानां कृत्वा च उपमां यान्ति किन्नराः।
उत्तमा मूर्च्छना तस्मात् पक्षिराजोऽत्र देवता ॥६१॥
गान्धाररागशब्देन गां धारयतेऽर्थतः।

---

(१) स्यादियं मूर्च्छनां सैरमिति क० ज०।

(२) शुद्धस्वर्गमयं कृत्वा यस्मादग्नी इति ख०।

(३) तस्मात्तां जानीयात् शुषड्जषड्जिकामिति क० ज०। शुद्धयाज्ञिकामिति ख०। तस्मात्तां रजनी स्यात् शुद्धषड्गिनीति छ०।

(४) नियतां मूर्च्छनां मूर्च्छां यस्य मत्सरकोभवेदिति ख०। यः सभां मूर्च्छनां कृत्वा पञ्चम स्वरकोभवेदिति छ०। यः सतां पूर्व्वशां कृत्वा यस्य मध्यकोभवेदिति क० ज०।

(५) यक्षीणां मूर्च्छनां श्रुत्वा इति क० ज०। यक्षीणां मूर्च्छनां श्रुत्वा ख० छ०।

(६) नागादृष्टिरिति क० ख० छ० ज०।

(७) मथागीतमिति ख०।

(८) भवतीव हृताह्येते ब्रह्मणोनागदैवतामिति ज०। भवभीतकृताह्येते ब्राह्मणा नागदेवता इति क० छ०। भूभीतकृताह्येति ब्राह्मणा नागदेवता इति ज०।

(९) अहीनामित्यादि वरुणदेवता इत्यन्तं केवलं ख० पुस्तके पाठोऽस्ति।

तस्मादिमृदुर्गान्धारी गन्धर्व्वश्चाधिदैवतं ॥६२॥
गान्धारान्तरं गत्वा स्पृष्टेयं मूर्च्छना यतः ।
तस्मादुत्तरगान्धारी वसवश्चात्र देवताः ॥६३॥
येयं खलु महाभूता पितामहमुपस्थिता ।
षड्जेयं मूर्च्छना तस्मात् स्मृता ह्यनलदेवता ॥६४॥
द्विधेयं चायता तेन[१] मन्दषष्टा च मूर्च्छने ।
निवृत्तगुणनामानं[२] पञ्चमश्चात्र दैवतं ॥६५॥
पूर्णाः सप्तस्वरा ह्येवं[३] मूर्च्छनाः संप्रकीर्त्तिताः ।
नानासाधारणाश्चैव षड्जेवानुविदस्तथेति[४] ॥६६॥

इति श्रीमहापुराणे वायुप्रोक्ते वैवस्वतमनुवंशगान्धर्व्वमूर्च्छना-
लक्षणकथनं नाम चतुर्विंशोऽध्यायः समाप्तः ।

---

(१) द्विधं पञ्चायतानेन इति ख० ङ० ।
(२) निवृत्ते गुणनामानामिति ख० ।
(३) ह्येषु इति ख० ।
(४) नानासाधारणा देवे षड्जेवानविदस्तथा इति क० । षड्जेवात्र विहस्तथा इति ङ० ।

## अथ पञ्चविंशोऽध्यायः ।



तत्र गीतालङ्कारनिर्द्देशः ।

पूर्व्वाचार्य्यमतं बुद्ध्वा[१] प्रवक्ष्याम्यनुपूर्व्वशः ।
चिशतं[२] वै अलङ्कारास्तान्मे[३] निगदतः शृणु ॥१॥
अलङ्कारास्तु वक्तव्याः स्वैः स्वैर्वर्णैः प्रहेतवः[४] ।
संस्थानयोगैश्च तथा पादानां चान्ववेक्षया[५] ॥२॥
वाक्यार्थपदयोगार्थैरलङ्कारस्य पूरणं[६] ।
पदानि गीतकस्याङ्गः पुरस्तात् पृष्ठतोऽथवा[७] ॥३॥
स्थानानि चीणि जानीयादुरःकण्ठशिरस्तथा ।
एतेषु चिषु स्थानेषु प्रवृत्तोविधिरुत्तमः ॥४॥

---

(१) ज्ञात्वेति छ० ।
(२) चिशतानीतिपाठोयुक्तः ।
(३) तन्मे इति क० ख० छ० ञ० ।
(४) प्रहेतवाः इति क० ञ० ।
(५) संस्थानयोगैश्च तथा पादानां चान्ववेक्षया इति क० ञ० । चानुवेक्षया इति ख० ।
(६) रलङ्कारस्य पूरणमिति क० ख० छ० ञ० ।
(७) पुरतोऽथवा इति छ० । पृष्ठतोऽथवा इति ग० ञ० । पृष्ठतोपिवा इति ग० ।

चत्वारः प्रकृतौ वर्णाः प्रविचारश्चतुर्विधः[१] ।
विकल्पमष्टधा चैव[२] देवाः षोडशधा विदुः[३] ॥५॥
स्थायी वर्णः प्रसंचारी तृतीयमवरोहणं[४] ।
आरोहणं चतुर्थन्तु वर्णं वर्णविदोविदुः[५] ॥६॥
तत्रैकः[६] संचरस्थायी सचरास्तपरीभवम्[७] ।
अथ रोहणवर्णानामवरोहं विनिर्दिशेत् ॥७॥
आरोहणेन चारोहवर्णं[८] वर्णविदोविदुः ।
एतेषामेव वर्णानामलङ्कारान्निबोधत ॥८॥
अलङ्कारास्तु चत्वारः स्थापनी[९] क्रमरेजिनः[१०] ।
प्रमादश्चाप्रमादश्च तेषां वक्ष्यामि लक्षणं ॥९॥
विश्वरोष्ट्रकलाश्चैव[११] स्थानादेकान्तरं गताः ।
आवर्त्तस्याक्रमोत्पत्ती द्वे कार्य्ये[१२] परिमाणतः[१३] ॥१०॥

---

(१) परिचारश्चतुर्विधः इति ख० ।
(२) विकल्पमष्टा इति क० ज० ।
(३) स्मृता इति ख० ग० ।
(४) मन्द्ररोहणमिति छ० ।
(५) ब्रह्मविन्दुरिह स्मृतः इति ख० ग० ।
(६) तत्रैवः इति छ० ।
(७) सचराक्षचरीभवदिति क० छ० ज० ।
(८) चारोहावर्णमिति क० ख० । चारोहीवर्णमिति छ० ।
(९) स्थायेना इति क० ज० । स्थापया इति ख० ।
(१०) क्रमवाजिनः इति ख० ।
(११) विश्वरोष्टकलाश्चैवेति छ० ज० । विश्वराकृकलाश्चैवेति ख० ।
(१२) देवकार्य्यः इति क० ज० । आवर्त्तस्य क्रमेभत्वौ द्वे कार्य्ये इति ख० ।
आवर्त्तस्याक्रमोत्पत्तौदेवार्य्य इति छ० ।
(१३) परिणामतः इति ख० ।

कुमारमपरं विद्याद्विस्वरमन्तं गतं(१) ।
एष वै चाप्यपाङ्गस्तु(२) कुमारेकः कलाधिकः(३) ॥१ १॥
श्येनस्त्वेकान्तरे(४) जातः कलामात्रान्तरे स्थितः(५) ।
तस्मिंश्चैव स्वरे वृद्धिस्तिष्ठते तद्विलक्षणा(६) ॥१ २॥
श्येनस्तु अपरोऽहस्तु उत्तरः परिकीर्त्तितः ।
कलाकलप्रमाणाच्च सविन्दुर्नाम(७) जायते ॥१ ३॥
विन्दुरेककला कार्य्या वर्णान्तस्थायिनी भवेत्(८) ।
विपर्य्ययस्वरोऽपि स्यात्तस्य दुर्घटितोऽपि न(९) ॥१ ४॥
एकान्तरा तु चाद्यन्तु षड्जतः(१०) परमः स्वरः(११) ।
आक्षेपास्कन्दनं कार्य्यं(१२) काकस्येवोत्पुष्कलं(१३) ॥१ ५॥

---

(१) कुमारं सपरं विद्याद्विस्वरमनागतमिति ख० । विस्वरं क्रमं गता इति छ० ।
(२) एष वै वास्यपाङ्गस्तु इति क० ज० ।
(३) एष चैवामपाय्यस्य कुमावेकः कलाधिपः इति ख० । एष वै चास्यपाङ्गस्तु कुमारेकः कलाधिकः उति छ० ।
(४) श्येनस्त्वेषान्तरे इति क० ज० । स्वेम स्वेकान्तरे इति ख० ।
(५) कलामभिन्तरेस्थितः इति क० छ० ज० ।
(६) तद्विलक्षणमिति क० ख० छ० ज० ।
(७) सविदुरिति क० ज० । सवितुर्रिति ख० ।
(८) वर्णतुस्थापिनोभवेत् इति क० छ० ज० । वर्णयिस्यामि नो भवेदिति ख० ।
(९) यस्या दुर्घटितोमम इति क० छ० ज० । यस्य दुर्जटिलोऽपि न इति ख० ।
(१०) एकान्तरा खलु खड्गतः इति क० ज० । एकान्तरायन्तु खड्गतः इति छ० ।
(११) खड्गन्तु परमेश्वरः इति ख० ।
(१२) अक्षेपमं स्कन्दनं कार्य्य इति क० छ० ज० ।
(१३) कावास्योयच पुष्कलमिति ख० छ० । काकस्योपचपुष्कलमिति ज० । काकस्योत्कपुष्कलमिति ख० ।

सञ्चारौ तौ तु सञ्चार्यौ[1] कार्य्यं वा कारणं तथा ।
आक्षिप्तमवरोहश्चापि[2] प्रोक्तमध्यस्तथैव च[3] ॥१६॥
द्वादशश्च कलास्थान[4]मेकान्तरगतस्ततः ।
प्रेङ्खोलितमलङ्कारमेवंस्वरसमन्वितं[5] ॥१७॥
स्वरसंक्रामकश्चैव[6] ततः प्रोक्तन्तु पुष्कलं[7] ।
प्रक्षिप्तमेव कलया पादान्तरयोर्भवेत्[8] ॥१८॥
द्विकलं वा यथा भूतं यत्तत् प्लावितमुच्यते[9] ।
उच्चाराद्विस्वरारूढा[10] तथा चाष्टस्वरान्तरं[11] ॥१९॥
यस्तु स्यादवरोहेवा[12] तारतोमन्द्रतोऽपि वा ।
एकान्तरचिता ह्येते तमेव स्वरमन्ततः[13] ॥२०॥

---

(१) सवार्य्यौ इति क० । स वर्य्यौ इति ज० । ससन्धौ तु संयोगौ इति ख०।
(२) आक्षिप्तवामाश्चापीति क० ज० ।
(३) प्रोक्तमध्यस्तथैव चेति ख० ।
(४) द्वादशपञ्चकलास्थानमिति ख० ।
(५) प्रोक्षितश्च मनश्चारमेवं स्वरसन्निभमिति ख० ।
(६) स्वरासंक्रामकाश्चेति ख० ।
(७) अत्र क० ज० पुस्तकेषु अर्थशून्यवाक्यानि विद्यन्ते ।
(८) पादान्तरयोर्भवेदिति ख० छ० ।
(९) यत्तत्प्लावितमुच्यते इति ख० छ० ।
(१०) विस्वरारूपः इति ख० ।
(११) चाष्टस्वरात् परमिति क० ज० । चाष्टस्वरात पश्चमिति छ०।
(१२) वायः स्यादेवरोहोधा इति क० ज० । वायः स्यादेवरोहेवा इति छ०।
वायव्यां वयवोहोमा इति ख० ।
(१३) स्वरसन्तत इति क० छ० ज० । सर्व्वे ह्येते वसुवसन्ततः । इति ख०।

सन्धिप्रच्छेदनोनाम[1] चतुष्कलगणः स्मृतः ।
अलङ्कारा भवन्त्येते त्रिंशद्वै प्रकीर्त्तिताः ।
वर्णस्थानप्रयोगेण कलामात्राप्रमाणतः ॥२१॥
संस्थानञ्च प्रमाणञ्च विकारो लक्षणन्तथा ।
चतुर्विधमिदं ज्ञेय[2]मलङ्कारप्रयोजनं ॥२२॥
यथात्मनो ह्यलङ्कारो[3]विपर्यस्तोऽतिगर्हितः ।
वर्णमेवाप्यलंकर्त्तुं विषमं ह्यात्मसम्भवात्[4] ॥२३॥
नानाभरणसंयोगाद्यथा नार्या विभूषणं ।
वर्णस्य चैवालङ्कारो[5]विपर्यस्तोऽतिगर्हितः ॥२४॥
न पादे कुण्डले दृष्टे न कण्ठे रसना यथा ।
एवमेव ह्यलङ्कारोविपर्यस्तोविगर्हितः ॥२५॥
क्रियमाणोऽप्यलङ्कारो[6] रागं यस्यैव दर्शयेत् ।
यथोद्दिष्टस्य मार्गस्य कर्त्तव्यस्य विधीयते ॥२६॥
लक्षणं पर्य्यवस्यापि वर्णिकाभिः प्रवर्त्तनं ।
यथातथ्येन वक्ष्यामि मार्गोद्भवमुखोद्भवे[7] ॥२७॥
चयोविंशत्यशीतिस्तु तेषामेतद्विपर्ययः ।

---

(१) सन्धिप्रच्छेदजोनाम इति क॰ ञ॰ । सन्धिप्रच्छेदनोनाम इति ख॰ ।
(२) चतुर्विधञ्च संस्थानमिति ख॰ ।
(३) वर्णस्य चैवालङ्कारो इति ख॰ ।
(४) ह्यात्मसम्भव इतिपाठोयुक्तः ।
(५) अत्र विन्यस्तोऽतिमनोहर इतिपाठोवक्तुं समुचितः ।
(६) क्रियमाणेऽप्यलङ्कारे इतिपाठोऽन्वितार्थो दृश्यते ।
(७) मार्गोद्भवतदुद्भवे इति ख॰ ।

षड्जपक्षोऽपि तत्रादौ मध्योदीनस्वरोभवेत् ॥२८॥
षड्जमध्यमयोश्चैव ग्रामयोः पर्य्ययस्तथा ।
मानेयोत्तरमन्द्रस्य(१) षड्वेवाऽपाविकस्य(२) च ॥२९॥
स्वराणंप्रत्ययश्चैव(३) सर्व्वेषां प्रत्ययः स्मृतः ।
अनुगम्य वहिर्गीतं(४) विज्ञातं पञ्चदैवतं ॥३०॥
गोरूपाणां(५) पुरस्तात्तु मध्यमांशस्तु पर्य्ययः ।
तयोर्विभागोगीतानां लावण्य(६)मार्गसंस्थितः ॥३१॥
अनुषंगं मयोद्दिष्टं स्वधारश्च स्वरान्तरं ।
पर्य्ययः संप्रवर्त्तेत सप्तस्वरपदक्रमं ॥३२॥
गान्धारांशेन गीयन्ते चत्वारि मद्रकाणि च(७) ।
पञ्चमोमध्यमस्यैव धैवते तु(८) निषादजैः ।
षड्जर्षभैस्तु(९) आनीमोमद्रकेष्वेव मान्तरे ॥३३॥

---

(१) ह्युत्तरमन्द्रस्येतिपाठः समीचीनः ।
(२) अत्र क० ख० छ० ज० पुस्तके अर्थशून्यपाठत्रयं वर्त्तते । यथा, षड्वेवो- न्नावकस्य च, षोड़वेवार्त्रविकस्य च, षड्वेवान्नावकस्य च । षड्वेवान्नाव- कस्य च इत्यत्र षड्वेवाम्नायकस्य चेतिपाठः कथञ्चित् सङ्गतोभवेत् ।
(३) स्वराणां प्रत्ययस्यैवेतिपाठः समीचीनः ।
(४) वहिर्गीतामिति ख० ।
(५) अत्र नगोनामिति क० छ० । नगोनामित्यत्र नागानामितिपाठः सम्भवति ।
(६) अत्र क० ज० पुस्तके लानण्यो । छ०पुस्तके लावण्येत्यसम्बद्धपाठो- वर्त्तते ।
(७) अत्र क० ख० छ० ज० पुस्तके चत्वारो इतिभ्रमात्मकपाठोऽस्ति ।
(८) धैवतस्तु इतिपाठः सङ्गतः ।
(९) क० ख० ग० छ० ज० पुस्तकेषु षड्वर्षभैश्चेति अर्थविहीनपाठोऽस्ति ।

द्वे चापरान्तिके विद्यात् द्वयष्टाष्टकस्य तु[१] ।
प्राकृते वैणवेश्चैव गान्धारांशे प्रयुज्यते ॥ २४ ॥
पदस्य तु चयं रूपं[२] सप्तरूपन्तु कौशिकं ।
गान्धारांशेन कार्त्स्न्येन पर्यंयस्य विधिः स्मृतः ।
एवञ्चैव क्रमोदिष्टोमध्यमांशस्य मध्यमः ॥ २५ ॥
यानि गीतानि प्रोक्तानि रूपेण तु विशेषतः ।
तत्तु सप्तस्वरं कार्य्यं सप्तरूपञ्च कौशिकं ॥ २६ ॥
अङ्गदर्शनमित्याहुर्मानेद्वे समके तथा[३] ।
द्वितीयभावाचरणा[४] मात्रा नाभिप्रतिष्ठिता ॥ २७ ॥
उत्तरे च प्रकृत्येवं मात्रा तत्नीयते तथा ।
चत्वारः[५] पिण्डकोयत्र मात्रायां नातिवर्त्तते[६] ॥ २८ ॥
पादेनैकेन मात्रायां पादानामतिवीरणा[७] ।
संख्यायाश्चोपहननं तच्च यान[८]मिति स्मृतं ॥ २९ ॥

---

(१) अत्र क० ख० छ० ज० एषु चतुर्षु पुस्तकेष अर्थशून्यपाठत्रयं वर्त्तते। यथा, द्वेषावरन्तिके विद्याद्वयमुक्ताष्टकस्य तु, द्वे वापरन्तिके विद्या-द्वयसुक्ताष्टकस्य तु, वमसर्गाष्टकस्य तु ।
(२) पदस्वरूपं रूपस्तु इति ख० छ० ।
(३) ममके तथेति ख० छ० ।
(४) अत्र क० ख० छ० ज०० पुस्तकेषु त्रयोऽर्थरहितपाठाः सन्ति । यथा, द्वितीयभावायना, द्वितीयभाषा चवना, द्वितीयभावा यदि गा ।
(५) चत्वारो इति क० छ० ज० ।
(६) न निवर्त्तते इति ख० ।
(७) पादानामभिधारणा इति ख०। पादानामतिवीरणा इतिपाठः समीचीनः।
(८) तत्र घातमिति ख० ।

द्वितीयं पादभङ्गञ्च[1] यद्देवाभिप्रतिष्ठितं ।
पूर्व्वमष्टतृतीये तु द्वितीयञ्चापरीतके[2] ॥४०॥
अर्द्धेन पादसाम्यस्य[3] पादभागाच्च पञ्चके[4] ।
पादभागं सपादं तु प्रश्नत्यामपि संस्थितं ॥४१॥
चतुर्थमुत्तरे चैव मद्रवत्यां च मद्रके ।
मद्रके दक्षिणस्यापि यथोक्ता वर्त्तते कला ॥४२॥
पूर्व्वमेवानुयोगन्तु द्वितीया बुद्धिरिष्यते ।
पादौ चाहरणञ्चास्मात् पारं नात्र विधीयते ॥४३॥
एकत्वमुपयोगस्य[5] द्वयोर्यद्धि द्विजोत्तम ।
अनेकसमवायस्तु पताकाहरिणं स्मृतं ॥४४॥
त्रिमूर्णाश्चैव वृत्तीनां वृत्तौ वृत्ता च दक्षिणा ।
अष्टौ तु समवायास्ते सौवीरा मूर्च्छना तथा ।
कुशल्यनुत्तरः[6] सत्यं सप्तसत्वस्वरं तु यः[7] ॥४५॥

इति श्रीमहापुराणे वायुप्रोक्ते गीतालङ्कारनिर्द्देशोनाम
पञ्चविंशोऽध्यायः समाप्तः ॥

---

(१) पादभागच्च इति ख० ग० ।
(२) चापराङ्गिके इति ख० चापराङ्गिकमिति ग० । चापराम्बिके इति ङ० ।
(३) पादसामस्येति क० ङ० अ० ।
(४) पादभागाय चम्पके इति ख० ।
(५) एकत्वमभ्युपयोगस्येति क० अ० । एकत्वमुपयोगस्येति ख० ग० ।
(६) कशल्यामुत्तर इति ङ० अ० ।
(७) पूर्वं सप्तसुवर्णसः इति ख० ग० ।

# अथ षड्विंशोऽध्यायः ।

वैवस्वतमनुवंशवर्णनं ।

(१)सूत उवाच । ककुद्मिनस्तु तं लोकं रैवतस्य गतस्य ह ।
हताः पुण्यजनैः सर्व्वा राक्षसैः सा कुशस्थली ॥१॥
तद्वै भ्रातृशतं तस्य धार्म्मिकस्य महात्मनः ।
निवध्यमाना(२) रक्षोभिर्दिशः संप्राद्रवन् भयात् ॥२॥
तेषान्तु ते भयाक्रान्ताः क्षत्रियास्तत्र तत्र हि ।
अन्ववायस्तु(३) सुमहान् मर्हास्तत्र द्विजोत्तमाः ॥३॥
प्रयता(४) इतिविख्याता दिक्षु सर्व्वासु धार्म्मिकाः ।
৩। धृष्टस्य धार्ष्टकं क्षत्रं रणधृष्टं(५) बभूव ह ॥४॥
त्रिसाहस्रन्तु सगणं क्षत्रियाणां महात्मनां ।
৮। नभगस्य च दायादोनाभागोनाम वीर्य्यवान् ॥५॥
अम्बरीषस्तु नाभागिर्विरूपस्तस्य चात्मजः ।
पृषदश्वोविरूपस्य तस्य पुत्रोरथीतरः(६) ॥६॥

---

(१) सूत उवाच इत्यतः प्राक् ख॰ ग॰ पुस्तके एतच्छ्लोकार्द्धमस्ति । विनष्टाख्यासुतं तस्य धार्म्मिकस्य महात्मनः। किन्तु पूर्व्वापरसङ्गतिविरहादपपाठ एव ।

(२) ते बध्यमाना इति च॰ ङ॰ छ॰ ।

(३) अनुवादस्तु इति ख॰ ग॰ ।

(४) आयाता इति ङ॰ च॰ ।

(५) क्षेत्रं वाक्षद्रष्टमिति ख॰ ग॰ ।

(६) रथोत्तर इति क॰ ज॰ । रथीनरः इति ख॰ ।

एते क्षत्रप्रसूता वै पुनश्चाङ्गिरसः स्मृताः ।
रथीतराणां प्रवराः क्षात्रोपेता द्विजातयः ॥७॥
क्षुवतस्तु मनोः पूर्व्वमिक्ष्वाकुरभिनिःसृतः ।
तस्य पुत्रशतं त्वासीत् इक्ष्वाकोर्भूरिदक्षिणं ॥८॥
तेषां ज्येष्ठो(१) विकुक्षिश्च नेमिर्दण्डश्च ते त्रयः ।
शकुनिप्रमुखास्तस्य पुत्राः पञ्चाशत(२)स्तु ते(३) ॥९॥
उत्तरापथदेशस्य रक्षितारो महीक्षितः ।
चत्वारिंशत्तथाष्टौ च दक्षिणायाश्च ते दिशि ॥१०॥
विंशतिप्रमुखास्ते तु दक्षिणापथरक्षिणः ।
इक्ष्वाकुस्तु विकुक्षिं वै अष्टकायामथादिशत् ॥११॥
राजोवाच । मांसमानय श्राद्धेयं मृगान् हत्वा महाबल ।
श्राद्धमद्य नु कर्तव्यमष्टकायां न संशयः ॥१२॥
स गतस्तु मृगव्यां वै वचनात्तस्य धीमतः ।
मृगान् सहस्रशो हत्वा परिश्रान्तश्च वीर्य्यवान् ।
भक्षयच्छशकन्तत्र विकुक्षिर्मृगयाकृतः ॥१३॥
आगते स विकुक्षौ तु समांसे सहसैनिके ।

---

(१) ज्येष्ठो इति ग० घ० ङ० । खेद्यो इति छ० । खेष्यो इति झ० ।
(२) पञ्चाशतः बहुवचनमार्षं । पञ्चाशतः इत्यत्र पञ्चशतः इति पाठः ङ० च० पुस्तके वर्त्तते ।
(३) विकुक्षिश्चेत्यादि पञ्चाशतस्तु ते इत्यन्तपाठस्य विनिमये ख० ग० पुस्तके अयं पाठो वर्त्तते । यथा, विकुक्षी च तथैव च पुनः पुनः । शकुनिः प्रमुखाश्चैव पञ्चाशत् जगतान्तु वै । इत्यशुद्धपाठएव ।

वसिष्ठश्चोदयामास मांसं प्रोक्ष्यतामिति[1] ॥१४॥
तथेति चोदितोराज्ञा विधिवत्समुपस्थितः ।
स दृष्ट्वोपहतं मांसं क्रुद्धोराजानमब्रवीत् ॥१५॥
क्रूरेणोपहतं मांसं पुत्त्रेण तव पार्थिव ।
अभक्ष्याद्भोज्यं वै तव मांसं महाद्युते ॥१६॥
शशोदुरात्मना पूर्वमरण्ये भक्षितोऽनघ ।
तेन मांसमिदं दुष्टं पितॄणां नृपसत्तम ॥१७॥
इक्ष्वाकुस्तु ततः क्रुद्धोविकुक्षिमिदमब्रवीत् ।
पितृकर्म्मणि निर्द्दिष्टोमया त्वं मृगयाङ्गतः ।
शशं भक्षयसेऽरण्ये निर्घृणः पूर्व्वमद्य नु ॥१८॥
तस्मात्परित्यजामि त्वां गच्छ त्वं स्वेन कर्म्मणा ।
एवमिक्ष्वाकुना त्यक्तोवसिष्ठवचनात् सुतः ॥१९॥
इक्ष्वाकौ संस्थिते तस्मिन् शशी स[2] पृथिवीमिमां ।
प्राप्तः परमधर्म्मात्मा स चायोध्याधिपोऽभवत् ॥२०॥
तदाकरोत्स राज्यं वै वसिष्ठपरिनोदितः[3] ।
ततस्तेनेन सा पूर्णा राज्यावस्था महीपतेः ॥२१॥
कालेन गतवांस्तत्र स च न्यूनतराङ्गतिं ।
ज्ञात्वैवमेतदाख्यानं ना विधिर्भक्षयेन्नु[4] वै ॥२२॥

---

(१) प्रोक्षीयतामिति, ख० ग० ङ० च० पुस्तकेषु पाठोवर्त्तते ।
(२) शशाद इति ख० ग० ङ० च० छ० ।
(३) वसिष्ठपरिचोदितः इति ख० ।
(४) भक्ष्ये नु इति च० ङ० ।

मां स भक्षयितासुत यस्य मांसमिहाप्यहं ।
एतन्मांसस्य मांसत्वं प्रवदन्ति मनीषिणः ॥२३॥
शशादस्य तु दायादः ककुत्स्थोनाम वीर्य्यवान् ।
इन्द्रस्य वृषभूतस्य ककुत्स्थोजायते पुरा ॥२४॥
पूर्व्वमाडीवके[1] युद्धे ककुत्स्थ[2]स्तेन स स्मृतः ।
अनेनास्तु ककुत्स्थस्य पृथुरामेन सः[3] स्मृतः ॥२५॥
वृषदश्वः[4] पृथोः पुत्रस्तस्मादन्ध्रस्तु वीर्य्यवान् ।
आंध्रस्तु युवनाश्वस्तु श्रावस्तस्य चात्मजः ॥२६॥
जज्ञे श्रावस्तकोराजा श्रावस्ती येन निर्मिता ।
श्रावस्तस्य तु दायादोवृहदश्वोमहायशाः ॥२७॥
वृहदश्वसुतश्चापि कुवलाश्व इति श्रुतिः ।
यः स धुन्धुवधाद्राजा धुन्धुमारत्वमागतः ॥२८॥
ऋषय ऊचुः। धुन्धुवधं महाप्राज्ञ श्रोतुमिच्छामि विस्तरात् ।
यदर्थं कुवलाश्वः स धुन्धुमारत्वमागतः ॥२९॥
सूत उवाच । वृहदश्वस्य पुत्राणां सहस्राण्येकविंशतिः ।
सर्व्वे विद्यासु निष्णाता बलवन्तोदुरासदाः ॥३०॥

---

(१) पूर्व्वं गावड्डीवके इति क० ।
(२) ककुस्थ इति पाठः आदर्शपुस्तकमात्रेऽस्ति ।
(३) पृथुवानेन च इति ख० । एतच्छ्लोकार्द्धं ग० पुस्तके नास्ति । पृथुरोनेनसः इति ङ० । पृथुरोमेन स इति छ० । एते यावन्तः पाठा लिपिकरप्रमादजनिताः । अत्रायं पाठः सम्भाव्यते । अनेनैव ककुत्स्थेन जातः पुत्रः पृथुः स्मृतः ।
(४) दृषदश्वः इति क० छ० ।

बभूवुर्द्धार्मिकाः सर्वे यज्वानोभूरिदक्षिणाः ।
कुवलाश्वं महावीर्य्यं शूरमुत्तमधार्मिकम् ॥२१॥
बृहदश्वोऽभ्यषिञ्चत्तं तस्मिन् राष्ट्रे नराधिपः ।
पुत्रसङ्क्रामितश्रीस्तु वनं राजा विवेश ह ॥२२॥
बृहदश्वं महाराजं शूरमुत्तमधार्म्मिकं ।
प्रयातं तमुतङ्कस्तु ब्रह्मर्षिः प्रत्यवारयत् ॥२३॥
उत्तङ्क उवाच । भवतो[१] रक्षणं[२] कार्य्यं तत्तावत् कर्त्तुमर्हति ।
निरुद्विग्नस्तपः कर्त्तुं[३] न हि शक्नोमि पार्थिव ॥२४॥
ममाश्रमसमीपेषु समेषु मरुधन्वसु[४] ।
समुद्रोवालुकापूर्णस्तत्र तिष्ठति भूपते[५] ॥२५॥
देवतानामवध्यस्तु महाकायोमहाबलः ।
अन्तर्भूमिगतस्तत्र वालुकान्तर्हितोमहान् ॥२६॥
समनोस्तनयः क्रूरोधुन्धुर्नाम सुदारुणः ।
शेते[६] लोकविनाशाय तप आस्थाय दारुणं ॥२७॥
संवत्सरस्य पर्य्यन्ते स निश्वासं प्रमुञ्चति[७] ।

---

(१) भवता इति क० ङ० च० छ० ज० । एतत्पाठोन समीचीनः
(२) इवेतावेत्त्वमिति ख० ग० । इति तु भ्रान्तानां पाठः ।
(३) तपस्त्तुमिति क० ङ० च० ज० ।
(४) परितस्तु वै इति छ० ज० ।
(५) उज्जानक इति श्रुतिः इति ङ० च० ।
(६) शेते इति ङ० च० । अयं पाठोलेखकप्रमादजनित एव ।
(७) समनोस्तनय इत्यादि स निश्वासं प्रमुञ्चति इत्यन्तपाठः क० छ० ज० पुस्तकेषु न विद्यते ।

यदा तदा मही तत्र चलति स्म सकानना[१] ॥३८॥
तस्य निश्वासवातेन रज उद्धूयते महत्।
आदित्यपथमावृत्य सप्ताहं भूमिकंपनं ॥३९॥
सविस्फुलिङ्गं सज्वालं सधूममतिदारुणं।
तेन राजन्न शक्नोमि तस्मिन् स्थातुं स्व आश्रमे ॥४०॥
तं वारय[२] महावाहो लोकानां हितकाम्यया।
तेजस्ते सुमहाविष्णुस्तेजसाप्याययिष्यति ॥४१॥
लोकाः स्वस्था भवंतस्तु तस्मिन् विनिहतेऽसुरे।
त्वं हि तस्य बधायाद्य समर्थः पृथिवीपते ॥४२॥
विष्णुना च वरोदत्तोमम पूर्व्वं ततोनघ।
न हि धुन्धुर्महावीर्य्यस्तेजसाल्पेन शक्यते ॥४३॥
निर्द्दग्धुं पृथिवीपाल अपि वर्षशतैरिह।
वीर्य्यं हि सुमहत्तस्य देवैरपि दुरासदं ॥४४॥
एवमुक्तस्तु राजर्षिरुतङ्केन महात्मना।
कुवलाश्वं सुतं प्रादात्तस्मिन् धुन्धुनिवारणे ॥४५॥
राजा संन्यस्तशस्त्रोऽहमयन्तु तनयोमम।
भविष्यति द्विजश्रेष्ठ धुन्धुमारोन संशयः ॥४६॥
स तं व्यादिश्य तनयं धुन्धुमारणमुद्यतं[३]।

(१) ममाश्रमसमीपेषु इत्यादि चलति स्म सकानना इत्यन्तपाठः ख० ग० पुस्तकयोर्नास्ति।

(२) तद्वारय इति क० ञ०।

(३) धुन्धुमारस्य उद्यतं इतिपाठोऽत्र सङ्गतार्थः।

जगाम पर्व्वतायैव तपसे शंसितव्रतः ॥४७॥
कुवलाश्वस्तु धर्मात्मा पितुर्वचनमाश्रितः(१)।
सहस्रैरेकविंशत्या पुत्राणां सह पार्थिवः।
प्रायादुत्तंकसहितो धुन्धोस्तस्य निवारणे ॥४८॥
तमाविशत्ततो विष्णुर्भगवान् स्वेन तेजसा।
उतङ्कस्य नियोगात्तु लोकानां हितकाम्यया ॥४९॥
तस्मिन् प्रयाते दुर्द्धर्षे दिवि शब्दो महानभूत्।
अद्यप्रभृत्येष नृपो धुन्धुमारो भविष्यति ॥५०॥
दिव्यैः पुष्पैश्च तं देवाः सममंसत अद्भुतं(२)।
स गत्वा पुरुषव्याघ्रस्तनयैः सह वीर्य्यवान् ॥५१॥
समुद्रं खनयामास बालुकार्णवमव्ययं।
नारायणेन राजर्षिस्तेजसाप्यायितो हि स(३)।
बभूवातिबलो भूय उतङ्कस्य वशे स्थितः ॥५२॥
तस्य पुत्रैः खनद्भिश्च वालुकान्तर्हितस्तदा(४)।
धुन्धुरासादितस्तत्र दिशमाश्रित्य पश्चिमां ॥५४॥
मुखजेनाग्निना क्रुद्धो लोकानुद्वर्त्तयन्निव।

---

(१) माश्रितः इति ख०।
(२) समं मास तदुद्भुतमिति ङ० च०। समं मासस्तु तद्भुतमिति क० छ० ज०। सगन्धर्व्वास्तदद्भुतमिति ख० ग०। एते तावन्तः पाठा लेखकप्रमादोत्पन्नाः।
(३) हि स इत्यत्र रिह इतिभ्रमात्मकपाठो ङ० च० छ० पुस्तकेषु दृश्यते।
(४) नारायणेन राजर्षिरित्यादि वालुकान्तर्हितस्तदेति सार्द्धैकश्लोको ङ० च० छ० व्यतिरिक्तादर्शपु[illegible] दृश्यते।

वारि सुस्राव योगेन महोदधिरिवोदये ॥५५॥
सोमस्य सोमपश्रेष्ठ धारोर्मिकलिलो महान् ।
तस्य पुत्रास्तु निर्दग्धास्त्रिभिरूनास्तु राक्षसाः ॥५६॥
ततः स राजातिबलो धुन्धुबन्धुनिबर्हणः ।
तस्य वारिमयं वेगमपिबत् स नराधिपः ॥५७॥
योगी योगेन वह्निं वा शमयामास वारिणा(१) ।
निरस्य तं महाकायं बलेनोदकराक्षसं ॥५८॥
उत्तङ्कं दर्शयामास कृतकर्मा नराधिपः ।
उत्तङ्कस्तु वरं प्रादात्तस्मै राज्ञे महात्मने ॥५९॥
अदात्तस्याक्षयं वित्तं शत्रुभिश्चाप्यधृष्यतां ।
धर्मे रतिञ्च सततं स्वर्गे वासं तथाक्षयं ।
पुत्राणां चाक्षयाँल्लोकान् स्वर्गे ये(२) राक्षसाहताः ॥६०॥
तस्य पुत्रास्त्रयः शिष्टा दृढाश्वो(३) ज्येष्ठ उच्यते ।
भद्राश्वः कपिलाश्वश्च कनीयांसौ तु तौ स्मृतौ ॥६१॥
धौन्धुमारिर्दृढाश्वस्तु(४) हर्यश्वस्तस्य चात्मजः ।
हर्यश्वस्य निकुम्भोऽभूत् क्षत्रधर्मरतः सदा ॥६२॥

---

(१) अत्र क॰ ख॰ छ॰ ञ॰ पुस्तकेषु भ्रान्तियुक्तपाठोवर्त्तते । यथा, धारवाः, धारिवा । ग॰ ङ॰ च॰ पुस्तकेषु योगी योगेनेतिश्लोकार्द्धस्य सद्भावोनास्ति ।

(२) ते इति च॰ छ॰ । ङ॰ पुस्तके स्वर्येते इति चार्थशून्यपाठोवर्त्तते । क॰ ग॰ ञ॰ पुस्तकेषु पुत्राणामितिश्लोकार्द्धस्याभावोदृश्यते ।

(३) दृढाश्वो इति क॰ ञ॰ ।

(४) ख॰ ञ॰ पुस्तकयोः कथया विदृढश्चेति चार्थरहितपाठोवर्त्तते ।

संहताश्वो निकुम्भस्य सुतो रणविशारदः(१) ।
अक्षाश्वश्चाक्षयाश्वश्च(२) संहताश्वसुतावुभौ ॥६३॥
तस्य पत्नी हैमवती सतां मतिदृषद्वती(३) ।
विख्याता त्रिषु लोकेषु पुत्रस्तस्याः प्रसेनजित् ॥६४॥
युवनाश्वः सुतस्तस्य त्रिषु लोकेष्वतिद्युतिः ।
अत्यन्तधार्मिको(४) गौरी तस्य पत्नी पतिव्रता ॥६५॥
अभिशप्ता तु सा भर्त्रा नदी सा बाहुदा कृता ।
तस्यास्तु गौरिकः पुत्रश्चक्रवर्त्ती बभूव ह ॥६६॥
मान्धाता यौवनाश्वो वै त्रैलोक्यविजयी नृपः ।
अत्राप्युदाहरन्तीमौ श्लोकौ पौराणिका द्विजाः ॥६७॥
यावत् सूर्य्य उदयति यावच्च प्रतितिष्ठति ।
सर्वं तत् यौवनाश्वस्य मान्धातुः क्षेत्रमुच्यते ॥६८॥
अत्राप्युदाहरन्तीमं श्लोकं वंशविदो जनाः ।
यौवनाश्वं महात्मानं यज्वानममितौजसं ।
मान्धाता तु तनुर्विष्णोः पुराणज्ञाः प्रचक्षते ॥६९॥
तस्य चैत्ररथी भार्य्या शशविन्दोः सुताभवत् ।

---

(१) ग० ङ० च० छ० ज० पुस्तकेषु भ्रान्तियुक्तपाठौ स्तः । यथा, श्रोतोरणविशारदः, श्रुतोरणविशारदः । कृतोरणविशारदः इति ख० ।
(२) श्वाक्षयाश्वश्चेति क० ङ० च० छ० ज० ।
(३) माता दृषद्वतीति क० छ० ज० । सतां माता दृढ़व्रता इति ख० । सतामतिदृषद्वतीति ङ० । माता इत्यत्र मान्या इति पाठो युक्तः ।
(४) अत्यन्तधार्म्मिका इति ख० । अभिमानात्मजा इति ङ० च० ।

साध्वी बिन्दुमती नाम रूपेणाप्रतिमा भुवि ॥७०॥
पतिव्रता च ज्येष्ठा[१] च भ्रातॄणामयुतस्य सा ।
तस्यामुत्पादयामास मान्धाता त्रीन् सुतान् प्रभुः ॥७१॥
पुरुकुत्समम्बरीषं मुचुकुन्दञ्च[२] विश्रुतं ।
अम्बरीषस्य दायादो युवनाश्वोऽपरः स्मृतः ॥७२॥
हरितो युवनाश्वस्य[३] हारिताः शूरयः[४] स्मृताः ।
एते ह्यङ्गिरसः पुत्राः क्षात्रोपेता[५] द्विजातयः ॥७३॥
पुरुकुत्सस्य दायादस्त्रसदस्यु[६] र्महायशाः ।
नर्मदायां समुत्पन्नः सम्भूतस्तस्य चात्मजः ॥७४॥
सम्भूतस्यात्मजः पुत्रो ह्यनरण्यः प्रतापवान् ।
रावणो निहतो[७] येन त्रिलोकीविजये[८] पुरा ॥७५॥
त्रसदश्वोऽनरण्यस्य हर्य्यश्वस्तस्य चात्मजः ।
हर्य्यश्वात्तु दृषद्वत्यां जज्ञे वसुमतो नृपः ॥७६॥
तस्य पुत्रोऽभवद्राजा त्रिधन्वा नाम धार्मिकः ।

---

(१) श्रेष्ठा इति छ० ।
(२) मुचकुन्दश्चेति ङ० ।
(३) हरितो युवनाश्वस्य इत्यादिसार्द्धैकश्लोकं क० छ० ज० पुस्तकेषु न विद्यते ।
(४) भूरयः इति ङ० च० । मारीताः शूरयः ख० ग० । एतावर्थशून्य-पाठावुपलभ्येते ।
(५) क्षत्रोपेता इति ख० ङ० च० । किन्तु न सम्यक् ।
(६) स एदास्युरिति ख० ।
(७) न हतो इति ङ० च० । निर्ज्जितो इति ख० ।
(८) त्रिलोकविजये क० ख० ङ० च० छ० ज० ।

आसीत् पैधन्वनस्यापि विदांस्त्रय्यां रथप्रभुः[१] ॥७७॥
तस्य सत्यव्रतोनाम कुमारोऽभून्महाबलः ।
तेन भार्या विदर्भस्य हृता हत्वा दिवौकसान् ॥७८॥
पाणिग्रहणमन्त्रेषु[२] निष्ठांसम्प्रापितेष्विह ।
विष्णुवृद्धः सुतस्तस्य विष्णुवृद्धायतः स्मृतः[३] ।
एते ह्यङ्गिरसः पुत्राः क्षात्रोपेताः समाश्रिताः ॥७९॥
कामाद्बलाच्च मोहाच्च सङ्घर्षणबलेन च[४] ।
भाविनोऽर्थस्य च बलात् तत्कृतं तेन धीमता ॥८०॥
तमधर्म्मेण संयुक्तं पिता त्रय्यीगुणोऽत्यजत्[५] ।
अपध्वंसेति बहुशोऽवदत् क्रोधसमन्वितः ॥८१॥
पितरं सोऽब्रवीद्देकः क्व गच्छामीति वै मुहुः ।
पिता चैनमथोवाच श्वपाकैः सह वर्त्तय ॥८२॥
नाहं पुत्रेण पुत्रार्थी त्वयाद्य कुलपांसन ।
इत्युक्तः स निराक्रामन्नगराद्वचनाद्विभो ॥८०॥

---

(१) निरय्यारुणयः रथप्रभुरिति क० । आसीत् साम्रधनुस्यापि विस्तुर्यारुयः प्रभुरिति ख० । ग० पुस्तके एतच्छ्लोकार्द्धस्य सद्भावोनास्ति । विद्वारुणय्यारथप्रभुरिति ङ० च० । विदांरयारुणयरथप्रभुरिति छ० । विरय्यारुणयः रथप्रभुरिति ज० । एते भ्रान्तानां पाठाः ।
(२) पाणिग्रहणमन्त्रेष्वितिश्लोकार्द्धस्य पूर्व्वापरसङ्गतिविरहात् अत्र श्लोकः श्लोकार्द्धं वा पतितत्वेनोपलभ्यते ।
(३) विष्णुवृद्धोयतोऽभवदितिपाठः समीचीनः ।
(४) संहर्षेण बलेन च इति ख० । संहर्षणबलेन वा इति ङ० च० छ० । सम्प्रहर्षणबलेन च इति ज० । आदिमौ द्वावपपाठौ अन्तिमोऽक्रमसंयुक्तः ।
(५) त्रयगुणोत्यजत् इति क० । त्रय्यारुणोभवदिति ख० ङ० च० । त्रयगुणोत्यजत् इति छ० ज० । एते भ्रान्तिमतां पाठाः ।

न चैनं धारयामास वसिष्ठोभगवानृषिः ।
स तु सत्यव्रतोधीमान् श्वपाकावसथान्तिकं ।
पित्रा मुक्तोऽवसद्वीरः पिता चास्य वनं ययौ ॥८४॥
तस्मिंस्तु विषये तस्य नावर्षत् पाकशासनः ।
समा द्वादश संपूर्णास्तेनाधर्म्मेण वै तदा ॥८५॥
दारांस्तु तस्य विषये विश्वामित्रोमहातपाः ।
सन्न्यस्य सागरानूपे चचार विपुलं तपः ॥८६॥
तस्य पत्नी गले बध्वा मध्यमं पुत्रमौरसं ।
शिष्टया(१) भरणार्थाय व्यक्रीणाद्गोशतेन(२) वै ॥८७॥
तं तु बद्धगले दृष्ट्वा विक्रीतं तं(३) नरोत्तमः ।
महर्षिपुत्रं धर्म्मात्मा मोचयामास सुव्रतः ॥८८॥
सत्यव्रतोमहाबुद्धिर्भरणं तस्य चाकरोत् ।
विश्वामित्रस्य तुष्ट्यर्थमनुकंपार्थमेव च ॥८९॥
सोऽभवद्गालवोनाम गले बद्धोमहातपाः ।
महर्षिः कौशिकस्तातस्तेन(४) वीर्येण मोचितः ॥९०॥
तस्य व्रतेन भक्त्या च कृपया च प्रतिज्ञया ।

---

(१) शिष्टानामिति ख० ।
(२) विक्रीणाति शतेन इति ख० । अयन्त्वपपाठः ।
(३) व्यक्रीणात्तमिति क० ज० । अयन्तु न सम्यक् । विक्रीयन्तमिति ख० । अस्मिन् पक्षे गलेबद्धमिति विक्रीयन्तमिति च स्त्रीजनस्य विशेषणं । विक्रीयन्तमितिपाठे पूर्व्वश्लोके व्यक्रीणादित्यत्र विक्रेतुमितिपाठः सङ्गतार्थः ।
(४) स्तस्मात्तेन इति ख० ।

विश्वामित्रकलत्रञ्च बभार विनये स्थितः ॥८१॥
हत्वा मृगान् वराहांश्च महिषांश्च वनेचरान् ।
विश्वामित्राश्रमाभ्याशे तन्मांसमुपचक्रमे(?) ॥८२॥
उपांशुव्रतमास्थाय दीक्षां द्वादशवार्षिकीं ।
पितुर्नियोगादभजन्नृपे तु वनमाश्रिते ॥८३॥
अयोध्याञ्चैव राज्यञ्च तथैवान्तःपुरं मुनिः ।
याज्योपाध्यायसंयोगात् वशिष्ठः परिरक्षितः ॥८४॥
सत्यव्रतस्तु बाल्यात्तु भाविनोऽर्थस्य वै बलात् ।
वशिष्ठेऽभ्यधिकं मन्युं धारयामास मन्युना ॥८५॥
पित्रा हृदं[१] तदा राष्ट्रात् परित्यक्तं स्वमात्मजं ।
न वारयामास मुनिः वशिष्ठः कारणेन वै ॥८६॥
पाणिग्रहणमन्त्राणां निष्ठा स्यात् सप्तमे पदे ।
एवं सत्यव्रतस्तान् वै हृतवान् सप्तमे पदे ॥८७॥
जानन् धर्मान् वशिष्ठस्तु न च मन्त्रानिहेच्छति ।
इति सत्यव्रते रोषं वशिष्ठोमनसाकरोत् ॥८८॥
गुरुर्बुद्ध्या तु भगवान् वशिष्ठः कृतवांस्तदा ।
न तु सत्यव्रतोबुध्या[२] उपांशुव्रतमस्य वै ॥८९॥
तस्मिंस्तोपरते योयत्पितुरासीन्[३] महामनाः ।
तेन द्वादशवर्षाणि नावर्षत् पाकशासनः ॥१००॥

(१) हृदन्तमिति वक्तव्ये हृदमित्यार्षप्रयोगः ।
(२) न तु सत्यव्रतोबुध्या इति श्लोकार्द्धे वाक्यस्य साकाङ्क्षत्वात् समाप्ति-सूचकपदसंयुक्तश्लोकार्द्धाभावोऽत्र वर्त्तते ।
(३) सत्यव्रत आसीदिति पाठः समीचीनः ।

तेन त्विदानीं बहुधा दीक्षां तां दुर्बलां[1] भुवि ।
कुलस्य निष्कृतिः स्वस्य[2] कृतेयञ्च[3] भवेदिति ॥१०१॥
ततोवसिष्ठोभगवान् पित्रा त्यक्तं न्यवारयत् ।
अभिषेक्ष्याम्यहं राज्ये पश्चादेनमिति प्रभुः ॥१०२॥
स तु द्वादशवर्षाणि दीक्षान्तामुद्वहन् बली ।
अविद्यमाने मांसे तु वसिष्ठस्य महात्मनः ॥१०३॥
सर्व्वकामदुघां धेनुं संदृश्य नृपात्मजः ।
तां वै क्रोधाच्च मोहाच्च श्रमाच्चैव क्षुधान्वितः ॥१०४॥
दस्युधर्म्मं गतोदृष्ट्वा जघान बलिनां वरः ।
स तु मांसं स्वयं चैव विश्वामित्रस्य चात्मजान् ॥१०५॥
भोजयामास तच्छ्रुत्वा वसिष्ठस्तं तदात्यजत् ।
प्रोवाच चैव भगवान् वसिष्ठस्तं नृपात्मजं ॥१०६॥
पातये क्रूर हे क्रूर तव शङ्कुमयोमयं ।
यदि ते त्रीणि शङ्कूनि न स्युर्हि पुरुषाधम ॥१०७॥
पितुश्चापरितोषेण गुरोर्दोग्ध्रीवधेन च ।
अप्रोक्षितोपयोगाच्च[4] त्रिविधस्ते व्यतिक्रमः ॥१०८॥

---

(१) अत्र क्रियाया ऊहनीयत्वेन दीक्षा सा दुर्बला इति प्रथमान्तपाठो-युक्तः। अथवा श्लोकार्द्धोनिपतितः।

(२) निष्कृतिस्तस्येतिपाठः सुसङ्गतः।

(३) आदर्शपुस्तकमात्रे कृतेयच्च, कृतेयच्च इत्यसम्बद्धपाठो यः। अत्र कृतेऽस्मिन्निति पाठः सङ्गतार्थः।

(४) अत्र क० ख० ग० ङ० च० ज० पुस्तकेषु भ्रान्तियुक्तपाठा वर्त्तन्ते। यथा, प्रोक्षणीप्रयोगाच्च, प्रोषितोप्रयोगाच्च, प्रोषितोपायोनगाच्च,

एवं स चीर्णि शङ्कूनि कृष्ट्वा तस्य महातपाः ।
त्रिशङ्कुरिति होवाच त्रिशङ्कुस्तेन स स्मृतः ॥१०९॥
विश्वामित्रस्तु दाराणामागतोभरणे कृते ।
ततस्तस्मै वरं प्रादात्तदा प्रीतस्त्रिशङ्कवे ॥११०॥
छन्द्यमानो[१]वरेणाथ गुरुं वव्रे नृपात्मजः ।
अनावृष्टिभये तस्मिन् गते द्वादशवार्षिके[२] ॥१११॥
अभिषिच्य राज्येपित्र्ये[३] याजयामास तं[४] मुनिः ।
मिषतां देवतानाञ्च वशिष्ठस्य च कौशिकः ।
सशरीरं तदा तं वै दिवमारोपयत् प्रभुः ॥११२॥
मिषतस्तु वशिष्ठस्य तदद्भुतमिवाभवत् ।
अत्राप्युदाहरन्तीमौ श्लोकौ पौराणिका जनाः ॥११३॥
विश्वामित्रप्रसादेन त्रिशङ्कुर्दिवि राजते ।
देवैः सार्द्धं महातेजानुग्रहात्तस्य धीमतः ॥११४॥

---

चप्रोक्षितोप्रयोगाच, चप्रोषितोप्रयोगाच । छ० पुस्तके एतच्छ्लोकार्द्धस्याभावोवर्त्तते ।

(१) लक्ष्यमानो इति क० ज० । अयन्तु न सम्यक् ।

(२) अनावृष्टिभयस्तस्मिन् गतोद्वादशवार्षिकः इतिपाठोऽत्र साधीयान् । अथवा अत्र श्लोके वव्रे इत्यनेनापेक्षितस्य सत्यव्रतप्रार्थितविषयस्याभावदर्शनात् अस्मात् श्लोकात् परं कतिपयश्लोकपतनं सम्भावनीयं ।

(३) अत्र छन्दोभङ्गात् पितृराज्ये इतिपाठोयुक्तः ।

(४) अत्र क० ख० ग० ङ० च० छ० ज० पुस्तकेषु असमपूर्णपाठाः सन्ति। यथा, अभिषिच्या राज्यपित्र्ये यायाजयामास, अभिषिच्ये तदा राज्ये योजनामास, अभिषिच्य तदा राज्ये मोजयामास, अभिषिच्य राज्ये पित्र्ये याचयामास, अभिषिच्य सुराज्ये पित्र्ये याजयामास, अभिषिच्या राज्ये पित्र्ये यायाजयामास ।

अनेर्यात्यबला रम्या हेमंते चन्द्रमण्डिता।
अलङ्कृता त्रिभिर्भावैस्त्रिभङ्गुपदभूषिता ॥११५॥
तस्य सत्यरता नाम भार्य्या केकयवंशजा।
कुमारं जनयामास हरिश्चन्द्रमकल्मषं ॥११६॥
स तु राजा हरिश्चन्द्रस्त्रैशङ्कव इति श्रुतः।
आहर्त्ता राजसूयस्य सम्राडिति परिश्रुतः ॥११७॥
हरिश्चन्द्रस्य तु सुतोरोहितोनाम वीर्य्यवान्।
हरितोरोहितस्याथ चञ्चुर्हारीत उच्यते ॥११८॥
विजयस्य सुदेवस्य चञ्चुपुत्रौ बभूवतुः।
जेता सर्व्वस्य चत्रस्य विजयस्तेन स स्मृतः ॥११९॥
रुरुक[1]स्तनयस्तस्य[2] राजा धर्म्मार्थकोविदः।
रुरुकात् धृतकः पुत्रस्तस्माद्बाहुस्तु जज्ञिवान् ॥१२०॥
हैहयैस्तालजङ्घैश्च निरस्तोव्यसनी नृपः।
शकैर्यवनकाम्बोजैः पारदैः पल्हवैस्तथा ॥१२१॥
नात्यर्थं धार्म्मिकोभूत् स धर्म्म्ये सत्ययुगे[3] तथा[4]।
सगरस्तु सुतोबाहोर्जज्ञे सह गरेण वै।
भृगोराश्रममासाद्य तुर्वेण[5] परिरक्षितः ॥१२२॥

---

(१) गुरुक इति क० ज०। तुरुक इति छ०।
(२) तस्येतिपाठः साधुः।
(३) धर्म्मे सत्रियुगे इति क० ज०। धर्म्मे सतियुगे इति ख०ङ०च०छ०। पाठावेतौ लिपिकरप्रमादजनितौ। एष श्लोको ग०पुस्तके नास्ति।
(४) सत इति पाठः समीचीनः।
(५) कुर्व्वेणेति क०छ०ज०। गन्धर्व्वेणेति ख०। अत्र ग०पुस्तके न कश्चित् पाठोवर्त्तते। परन्तु श्रौर्व्वेणेति पाठदर्शनादत्र श्रौर्व्वेणेति पाठोयुक्तः।

आग्नेयमस्त्रं लब्ध्वा तु भार्गवात् सगरोनृपः ।
जघान पृथिवीङ्गत्वा तालजङ्घान् सहैहयान् ॥१२३॥
शकानां पल्हवानाञ्च धर्मान्निरसदच्युतः(१) ।
क्षत्रियाणां तथा तेषां पारदानाञ्च धर्मवित् ॥१२४॥
ऋषय ऊचुः । कथं स सागरोराजा गरेण सह जज्ञिवान् ।
किमर्थञ्च शकादीनं क्षत्रियाणां महौजसां ।
धर्मान् कुलोचितान् क्रुद्धोराजा निरसदच्युतः(२) ॥१२५॥
सूत उवाच । बाहोर्व्यसनिनस्तस्य हृतं राज्यं पुरा किल ।
हैहयैस्तालजङ्घैश्च शकैः सार्द्धं समागतैः ॥१२६॥
यवनाः पारदाश्च काम्बोजाः पल्हवास्तथा ।
हैहयार्थं पराक्रान्ता एते पञ्चगणास्तदा ॥१२७॥
हृतं राज्यं बलीयोभिरेभिः क्षत्रियपुङ्गवैः ।
हृतराज्यस्तदा बाहुः संन्यस्य नु तदा नृपः ।
वनं प्रविश्य धर्मात्मा सह पत्न्या तपोऽचरत् ॥१२८॥
कस्यचित्त्वथ कालस्य तोयार्थं प्रस्थितोनृपः ।
वृद्धत्वाद्दुर्बलत्वाच्च अन्तरा स ममार च ॥१२९॥
पत्नी तु यादवी तस्य सगर्भा पृष्ठतोऽन्वगात्(३) ।
सपत्न्या तु गरस्तस्यै दत्तोगर्भजिघांसया ॥१३०॥
सा तु भर्तुश्चितां कृत्वा वह्निं तां समरोहयत्(४) ।

(१) निरसयत्ततः इतिपाठोविशुद्धः ।
(२) निरसयत् तत इतिपाठोऽत्र प्रयोक्तुं समुचितः ।
(३) पृष्ठतोऽन्वयात् इति ख० ग० ।
(४) समरोहदित्यर्थे समरोहयदित्यार्षः ।

और्वस्तां भार्गवो दृष्ट्वा कारुण्याद्विन्यवर्त्तयत् ॥१२१॥
तस्याश्रमे तु तद्गर्भं सा गरेण तदा सह।
व्याजायत[१] महाबाहुं सगरं नाम धार्मिकं ॥१२२॥
और्वस्तु जातकर्मादीन् कृत्वा तस्य महात्मनः।
अध्याप्य वेदशास्त्राणि ततोऽस्त्रं प्रत्यपादयत् ॥१२३॥
जामदग्न्यात्तदाग्नेयममरैरपि दुःसहं।
स तेनास्त्रबलेनैव बलेन च समन्वितः।
जघान हैहयान् क्रुद्धो रुद्रः पशुगणानिव ॥१२४॥
ततः शकान् सयवनान् काम्बोजान् पारदांस्तथा।
पल्हवांश्चैव निःशेषान् कर्त्तुं व्यवसितो नृपः ॥१२५॥
ते बध्यमाना वीरेण सगरेण महात्मना।
वसिष्ठं शरणं सर्व्वे प्रपन्नाः शरणैषिणः ॥१२६॥
वसिष्ठस्तान् तथेत्युक्त्वा समयेन[२] महामुनिः।
सगरं वारयामास तेषान्दत्त्वाऽभयन्तदा ॥१२७॥
सगरः स्वाम्प्रतिज्ञाञ्च गुरोर्वाक्यं निशम्य च।
धर्म्मं जघान तेषां वै वेषान्यत्वं चकार ह ॥१२८॥
अर्द्धं शकानांशिरसो मुण्डयित्वा व्यसर्जयत्।
यवनानां शिरः सर्व्वं काम्बोजानान्तथैव च ॥१२९॥
पारदा मुक्तकेशाश्च पल्हवाः श्मश्रुधारिणः।

---

(१) जनयामासेत्यर्थे व्याजायत इत्यार्षः।
(२) वसिष्ठश्चैवमुक्त्वा तु विनयेन महामुनिरिति ख० छ० ञ०। वसिष्ठस्तान् ततो दृष्ट्वा नियमेन तदा मुनिरिति ख० ग०।

निःस्वाध्यायवषट्काराः कृतास्तेन महात्मना ॥१४०॥

शका यवनकाम्बोजाः पल्लवाः पारदैः सह ।

कोलिसर्पा माहिषिका दार्वाश्चोलाः खशास्तथा[१] ॥१४१॥

सर्व्वे ते क्षत्रियगणा धर्म्मस्तेषां निराकृतः ।

वशिष्ठवचनात्पूर्वं सगरेण महात्मना ॥१४२॥

स धर्मविजयी राजा विजित्येमां वसुन्धरां ।

अश्वं विचारयामास वाजिमेधाय दीक्षितः ॥१४३॥

तस्य चारयतः[२] सोऽश्वः समुद्रे पूर्वदक्षिणे ।

वेलासमीपेऽपहृतो भूमिञ्चैव प्रवेशितः ॥१४४॥

स तद्देशं सुतैः सर्वैः खनयामास पार्थिवः ।

आसेदुश्च ततस्तस्मिन् तदन्तस्ते महार्णवे ॥१४५॥

तमादिपुरुषं देवं हरिं कृष्णं प्रजापतिं ।

विष्णुं कपिलरूपेण हंसं नारायणं प्रभुं ॥१४६॥

तस्य चक्षुः समासाद्य तेजस्तत् प्रतिपद्यते ।

दग्धाः पुत्रास्तदा सर्वे चत्वारस्त्ववशेषिताः ॥१४७॥

बर्हिकेतुः सुकेतुश्च तथा धर्म्मरतस्त्वयः[३] ।

---

(१) कलिस्पसा माहिविषां कादार्वाला खसास्तथा इति क० । कलिस्पृसा माहिषका दार्वा घ्योनाः खसास्तथा इति ख० । कलिस्पर्धा महिषका व्योमम्बोगाखसास्तथा इति ग० । कलिस्पर्शा माहिषिका दार्वालाः खसास्तथा इति च० । कलिस्पसां माहिविषा कादार्वालाः खसास्तथा इति ज० । एषां लिपिकरप्रमादजनितत्वेऽपि संशोध्य तथ्यमवधार्य्यतां ।

(२) वारयतः इति क० ज० ।

(३) च य इति ख० ग० ङ० च० छ० ज० ।

शूरः पञ्चवनश्चैव तस्य वंशकाराः प्रभो ॥१४८॥
प्रादाच्च तस्य भगवान् हरिर्नारायणोवरान् ।
अयथत्वं स्ववंशस्य वाजिमेधशतं तथा ।
विभुं पुत्रं समुद्रञ्च स्वर्गे वासं तथाक्षयं ॥१४९॥
स समुद्रोऽश्वमादाय ववन्दे सरितांपतिः ।
सागरत्वं च लेभे स कर्मणा तेन तस्य वै ॥१५०॥
तं चाश्वमेधिकं सोऽश्वं समुद्रात् प्राप्य पार्थिवः ।
आजहाराश्वमेधानां शतं चैव पुनः पुनः ॥१५१॥
षष्टिपुत्रसहस्राणि दग्धान्यश्वानुसारिणां ।
तेषां नारायणं तेजः प्रविष्टानां महात्मनां ।
पुत्राणान्तु सहस्राणि षष्टिस्तु इति नः श्रुतं ॥१५२॥
ऋषय ऊचुः । सगरस्यात्मजा राज्ञः कथं जाता महाबलाः ।
विक्रान्ताः षष्टिसाहस्रा विधिना केन वा वद ॥१५३॥
सूत उवाच । द्वे पत्न्यौ सगरस्यास्तां तपसा दग्धकिल्बिषे ।
ज्येष्ठा विदर्भदुहिता केशिनी नाम नामतः ॥१५४॥
कनीयसी तु या तस्य पत्नी परमधर्मिणी ।
अरिष्टनेमिदुहिता रूपेणाप्रतिमा भुवि ॥१५५॥
और्वस्ताभ्यां वरं प्रादात् तपसाराधितः प्रभुः ।
एका जनिष्यते पुत्रं वंशकर्त्तारमीप्सितं ।
षष्टिपुत्रसहस्राणि द्वितीया जनयिष्यति ॥१५६॥
मुनेस्तु वचनं श्रुत्वा केशिनी पुत्रमेककं ।
वंशस्य कारणं श्रेष्ठा जग्राह नृपसंसदि ॥१५७॥

षष्टिपुत्रसहस्राणि सुपर्णभगिनी तथा ।
महात्मनस्तु जग्राह सुमतिः[१] सुमतिर्यथा[२] ॥१५८॥
अथ काले गते ज्येष्ठा ज्येष्ठं पुत्रं व्यजायत ।
असमञ्ज इति ख्यातं काकुत्स्थं सगरात्मजं ॥१५९॥
सुमतिस्त्वपि जज्ञे वै गर्भतुम्बं यशस्विनी ।
षष्टिपुत्रसहस्राणि तुम्बमध्यात् विनिःसृताः[३] ॥१६०॥
घृतपूर्णेषु कुम्भेषु तान् गर्भान् न्यदधत्ततः ।
धात्रीश्चैकैकशः प्रादात् तावतीः पोषणे नृपः ॥१६१॥
ततोनवसु मासेषु समुत्तस्थुर्यथासुखं ।
कुमारास्ते महाभागाः सगरप्रीतिवर्द्धनाः ॥१६२॥
कालेन महता चैव यौवनं प्रतिपेदिरे ।
षष्टिपुत्रसहस्राणि तेषामश्वानुसारिणां ॥१६३॥
स तु ज्येष्ठोनरव्याघ्रः सगरस्यात्मसम्भवः ।
असमञ्ज इतिख्यातोवर्द्धकेतुर्महाबलः ॥१६४॥
पौराणामहिते युक्तः पित्रा निर्वासितः पुरा ।
तस्य पुत्रोऽंशुमान्नाम असमञ्जस्य वीर्यवान् ॥१६५॥
तस्य पुत्रस्तु धर्मात्मा दिलीप इति विश्रुतः ।
दिलीपात्तु महातेजा वीरोजातोभगीरथः[४] ॥१६६॥

---

(१) महात्मा तु समस्ततोजग्राह इति ङ० च० ज० ।
(२) सुमतिस्तथाइति ङ० । सुमता तथा इति च० ज० ।
(३) सर्व्वेष्वादर्शपुस्तकेषु विनिःसृताः इतिपाठोवर्त्तते । परन्त्वत्र विनिर्ययुः इतिप्रयोगोविशुद्धः ।
(४) महारथः इति ङ० च० ।

येन गङ्गा सरिच्छ्रेष्ठा विमानैरुपशोभिता ।
ईजाऽनेन[1] समुद्रान्ते दुहितृत्वेन कल्पिता ।
अत्राप्युदाहरन्तीमं श्लोकं पौराणिका जनाः ॥१६७॥
भगीरथस्तु तां गङ्गामानयामास कर्म्मभिः ।
तस्माद्भागीरथी गङ्गा कथ्यते वंशवित्तमैः ॥१६८॥
भगीरथसुतश्चापि श्रुतोनाम बभूव ह ।
नाभागस्तस्य दायादोनित्यं धर्म्मपरायणः ॥१६९॥
अम्बरीषः सुतस्तस्य सिन्धुद्वीपस्ततोऽभवत् ।
एवं वंशपुराणज्ञा गायन्तीतिपरिश्रुतं ॥१७०॥
नाभागेरम्बरीषस्य भुजाभ्यां परिपालिता ।
बभूव वसुधात्यर्थं तापत्रयविवर्ज्जिता ॥१७१॥
आयुतायुः सुतस्तस्य सिन्धुद्वीपस्य वीर्य्यवान् ।
आयुतायोस्तु दायाद ऋतुपर्णोमहायशाः ॥१७२॥
दिव्याक्षहृदयज्ञोऽसौ राजा नलसखोबली ।
नलौ द्वाविति विख्यातौ पुराणेषु दृढ़व्रतौ ॥१७३॥
वीरसेनात्मजश्चैव यश्चेक्ष्वाकुकुलोद्वहः ।
ऋतुपर्णस्य पुत्रोऽभूत् सर्व्वकामोजनेश्वरः ॥१७४॥
सुदासस्तस्य तनयोराजा षंसमुखो[2] भवत् ।

---

(१) इज्याऽनेन इति ङ० च० ।
(२) क०पुस्तकव्यतिरिक्तादर्शपुस्तकेषु अत्र भ्रान्तिजनितपाठान्तराणि यथा, राजा षासमुखो इति ख०, राजशेखसमुखो इति ग०, राजार्षी समखो इति ङ०, राजार्षो सुमुखो इति च० छ० ज० ।

सुदासस्य सुतः प्रोक्तः सौदासोनाम पार्थिवः ॥१७५॥
ख्यातः कल्माषपादोवै नाम्ना मित्रसहस्र सः ।
वशिष्ठस्तु महातेजाः क्षेत्रे कल्माषपादके ।
अश्मकं जनयामास इक्ष्वाकुकुलवृद्धये ॥१७६॥
अश्मकस्योरकामस्तु मूलकस्तत्सुतोऽभवत् ।
अत्राप्युदाहरन्तीमं मूलकं वै नृपं प्रति ॥१७७॥
स हि रामभयाद्राजा स्त्रीभिः परिवृतोऽवसत् ।
विवस्त्रस्त्राणमिच्छन् वै नारीकवचमीश्वरः[१] ॥१७८॥
मूलकस्यापि धर्म्मात्मा राजा शतरथः स्मृतः ।
तस्मात् शतरथाद्‌जज्ञे राजा चैड़िविड़ोबली ॥१७९॥
आसीत्त्वैडिविडः श्रीमान् कृतशर्म्मा प्रतापवान् ।
पुत्रोविश्वमहत्तस्य[२] पुत्रीकस्त्वजायत[३] ॥१८०॥
दिलीपस्तस्य पुत्रोभूत् षट्वाङ्ग[४] इति श्रुतिः ।
येन स्वर्गादिहागम्य मुहूर्त्तं प्राप्य जीवितं ।

---

(१) माश्रित इति ख० ।

(२) ख० ग० पुस्तकयोरेतच्छ्लोकार्द्धंन विद्यते । क० ङ० च० छ० ज०-पुस्तकेषु विश्वमहत्तस्येतिपाठोवर्त्तते । अत्र विश्वमहांस्तस्येतिपाठः समीचीनः ।

(३) पुत्रीकस्य अजायत इति ङ० च० छ० । पुत्रीकस्य व्यजायता इति क० ज० । अनयोर्भ्रमजनितत्वेन वाक्यार्थप्रतिपत्तिर्न घटते । पुत्रिकायां अजायत इति प्रयुक्ते तु सुलभैव ।

(४) खट्वाङ्ग इति ङ० । षट्वाङ्ग इति च० । अत्र षड्ङ्गः अथवा खट्वाङ्गः इतिपाठः सम्भवितुमर्हति ।

यथोऽभिसंहिता लोका बुध्या सत्येन चैव हि ॥१८१॥
दीर्घबाहुः सुतस्तस्य रघुस्तस्मादजायत ।
अजः पुत्रोरघोश्चापि तस्माद्जज्ञे स वीर्य्यवान् ।
राजा दशरथोनाम इक्ष्वाकुकुलनन्दनः ॥१८२॥
रामोदाशरथिर्वीरोधर्म्मज्ञोलोकविश्रुतः ।
भरतोलक्ष्मणश्चैव शत्रुघ्नश्च महाबलः ॥१८३॥
माधवं लवणं हत्वा गत्वा मधुवनञ्च तत् ।
शत्रुघ्नेन पुरी तस्य मथुरा सन्निवेशिता ॥१८४॥
सुबाहुः शूरसेनश्च शत्रुघ्नसहितावुभौ ।
पालयामासतुः सुतौ वैदेह्यो मथुरां पुरीं ॥१८५॥
अङ्गदश्चन्द्रकेतुश्च लक्ष्मणस्यात्मजावुभौ ।
हिमवत्पर्व्वताभ्यासे स्फीतौ जनपदौ तयोः ॥१८६॥
अङ्गदस्याङ्गदीया तु देशे कारपथे पुरी ।
चन्द्रकेतोस्तु मल्लस्य चन्द्रवक्रा[१] पुरी शुभा ॥१८७॥
भरतस्यात्मजौ वीरौ तक्षः पुष्कर एव च ।
गान्धारविषये सिद्धे तयोः पुर्य्यौ महात्मनोः ॥१८८॥
तक्षस्य दिक्षु विख्याता रम्या तक्षशिला पुरी ।
पुष्करस्यापि वीरस्य विख्याता पुष्करावती ॥१८९॥
गाथां चैवात्र गायन्ति ये पुराणविदोजनाः ।
रामे निबद्धास्तत्त्वार्था माहात्म्यात्तस्य धीमतः ॥१९०॥

---

(१) चन्द्रचक्रा इति क० ञ० । चन्द्रचन्द्रा इति ख० ।

श्यामोयुवा लोहिताक्षोदीप्तास्योमितभाषितः(१)।
आजानुबाहुः सुमुखः सिंहस्कन्धोमहाभुजः ॥१८१॥
दशवर्षसहस्राणि रामोराज्यमकारयत्।
ऋक्सामयजुषां घोषोज्याघोषश्च महास्वनः ॥१८२॥
अविच्छिन्नोऽभवद्राष्ट्रे(२) दीयतां भुज्यतामिति।
जनस्थाने वसं कार्य्यं त्रिदशानाञ्चकार सः ॥१८३॥
तमागस्कारिणं पूर्व्वं पौलस्त्यं मनुजर्षभः।
सीतायाः पदमन्विच्छन् निजघान महायशाः ॥१८४॥
सत्त्ववान् गुणसम्पन्नोदीप्यमानः स्वतेजसा।
अति सूर्य्यञ्च वह्निञ्च रामोदाशरथिर्बभौ ॥१८५॥
एवमेव महाबाहुरिक्ष्वाकुकुलनन्दनः।
रावणं सगणं हत्वा दिवमाचक्रमे विभुः ॥१८६॥
श्रीरामस्यात्मजोजज्ञे कुश इत्यभिधीयते।
लवश्चान्योमहावीर्य्य(३) स्तयोर्देशौ निबोधत ॥१८६॥
कुशस्य कोशला राज्यं पुरी वापि कुशस्थली।
रम्या निवेशिता(४) तेन विन्ध्यपर्व्वतसानुषु ॥१८७॥
उत्तराकोशले राज्यं लवस्य च महात्मनः।

---

(१) मितभाषिता इति क० ङ० च० छ० ज०।
(२) राष्ट्रे इति ख० ग० घ०।
(३) रिक्ष्वाकुकुलनन्दन इत्यादि लवश्चान्योमहावीर्य्य इत्यन्तं क० ङ० च० छ० ज० पुस्तकेषु पतितं।
(४) निवासिता इति ख० ग०।

श्रावस्ती लोकविख्याता कुशवंशं निबोधत ॥१९८॥

कुशस्य पुत्रोधर्म्मात्मा ह्यतिथिः सुप्रियातिथिः।
अतिथेरपि विख्यातोनिषधोनाम पार्थिवः ॥१९९॥

निषधस्य नलः पुत्रोनभः पुत्रोनलस्य तु।
नभसः पुण्डरीकस्तु क्षेमधन्वा ततः स्मृतः ॥२००॥

क्षेमधन्वसुतोराजा देवानीकः प्रतापवान्।
आसीदहीनगुर्नाम देवानीकात्मजः प्रभुः ॥२०१॥

अहीनगोस्तु दायादः पारिपात्रो[१] महायशाः।
दलस्तस्यात्मजश्चापि तस्माज्जज्ञे बलो[२]नृपः ॥२०२॥

औक्थोनाम स धर्म्मात्मा बलपुत्रोबभूव ह।
वज्रनाभः सुतस्तस्य शङ्खनस्तस्य चात्मजः ॥२०३॥

शङ्खनस्य सुतोविद्वान् व्युषिताश्व इति श्रुतः।
व्युषिताश्वसुतश्चापि राजा विश्वसहः[३] किल ॥२०४॥

हिरण्यनाभः कौशल्योवसिष्ठस्तत्सुतोऽभवत्।
पौत्रस्य जैमिनेः शिष्यः स्मृतः सर्व्वेषु शर्म्मसु ॥२०५॥

शतानि संहितानान्तु पञ्च योऽधीतवांस्ततः।
तस्मादधिगतोयोगोयाज्ञवल्क्येन धीमता ॥२०६॥

(१) पारियात्रो इति ङ० च० छ०। एषश्लोकः ख० ग० पुस्तकयोर्निपतितः।

(२) सबो इति क० ङ० च०। सतो इति छ० ज०। किन्तु इतोऽग्रेव परश्लोके बलपुत्र इति प्रयोगोऽस्ति।

(३) विश्वमहः इति क० ज०।

पुष्यस्तस्य सुतोविद्वान् ध्रुवसन्धिश्च तत्सुतः ।
सुदर्शनस्तस्य सुतो अग्निवर्णः सुदर्शनात् ॥२०७॥
अग्निवर्णस्य शीघ्रस्तु शीघ्रकस्य मनुः[1] स्मृतः । मरुः
मनुस्तु योगमास्थाय कलापग्राम[2] मास्थितः ।
एकोनविंशप्रयुगे चत्रप्रावर्त्तकः प्रभुः ॥२०८॥
प्रसुश्रुतोमनोः पुत्रः सुसन्धिस्तस्य चात्मजः ।
सुसन्धेश्च तथामर्षः सहस्वान्नाम नामतः ॥२०९॥
आसीत्सहस्वतः पुत्रोराजा विश्रुतवानिति ।
तस्यासीत् विश्रुतवतः पुत्रोराजा वृहद्बलः ॥२१०॥
एते इक्ष्वाकुदायादाः राजानः प्रायशः स्मृताः ।
वंशे प्रधानाः ये तेऽस्मिन् प्राधान्येन तु कीर्त्तिताः ॥२११॥
पठन् सम्यगिमां सृष्टिमादित्यस्य विवस्वतः ।
प्रजावानेति सायोज्यं मनोर्वैवस्वतस्य सः ॥२१२॥
श्राद्धदेवस्य देवस्य प्रजानां पुष्टिदस्य च ।
विपाप्मा विरजाश्चैव आयुष्मान् भवतेच्युतः ॥२१३॥

इति श्रीमहापुराणे वायुप्रोक्ते वैवस्वतमनुवंशवर्णनं नाम षड्विंशोऽध्यायः समाप्तः ॥

---

(१) मरुरिति ङ० च० । अनयोरुत्तरत्र मनोः पुत्र इतिपाठदर्शनादत्रापि मनुरितिपाठोयुक्तः ।
(२) कलापग्राममिति क० च० ।

## अथ सप्तविंशोऽध्यायः ।

वैवस्वतमनुवंशकीर्त्तनं ।

सूत उवाच । अनुजस्य विकुक्षेस्तु निमेर्वंशं निबोधत ।
योऽसौ निवेशयामास पुरन्देवपुरोपमं ॥१॥
जयन्तमिति विख्यातं गौतमस्याश्रमाभितः ।
यस्यान्ववाये यज्ञे वै जनकादृषिसत्तमात् ॥२॥
नेमिर्नाम सुधर्मात्मा सर्वसत्वनमस्कृतः ।
आसीत् पुत्रोमहाराज इक्ष्वाकोर्भूरितेजसः ॥३॥
स शापेन वसिष्ठस्य विदेहः समपद्यत ।
तस्य पुत्रोमिथिर्नाम जनितः पर्वभिस्त्रिभिः ॥४॥
अरण्यां मथ्यमानायां प्रादुर्भूतोमहायशाः ।
नाम्ना मिथिरिति ख्यातोजननाज्जनकोभवत् ॥५॥
मिथिर्नाम महावीर्य्यो येनासौ मिथिलाभवत् ।
राजासौ जनकोनाम जनकाच्चाप्युदावसुः ॥६॥
उदावसोः सुधर्मात्मा जानितोनन्दिवर्द्धनः ।
नन्दिवर्द्धनतः शूरः सुकेतुर्नाम धार्म्मिकः ॥७॥
सुकेतोरपि धर्म्मात्मा देवरातोमहाबलः ।
देवरातस्य धर्म्मात्मा बृहदुक्थ(१) इति श्रुतिः ॥८॥

---

(१) बृहद्युक्त इति ख०, बृहद्घुक्त इति ग०, बृहदुक्थ इति ङ० । क० ज० पुस्तकयोः नन्दिवर्द्धनतः शूर इत्यादि सुधृतिस्तस्यचात्मज इत्यन्तं, ङ० पुस्तके देवरातोमहाबलः इत्यादि सुधृतेरपि धर्म्मात्मा इत्यन्तं पाठोनास्ति ।

बृहदुक्थस्य तनयोमहावीर्य्यः प्रतापवान् ।
महावीर्य्यस्य धृतिमान् सुधृतिस्तस्य चात्मजः ॥९॥
सुधृतेरपि धर्मात्मा धृष्टकेतुः परन्तपः ।
धृष्टकेतुसुतश्चापि हर्य्यश्वोनाम विश्रुतः ॥१०॥
हर्य्यश्वस्य मरुः पुत्रोमरोः पुत्रः प्रतिन्वकः[1] ।
प्रतिन्वकस्य धर्मात्मा राजा कीर्त्तिरथः सुतः ॥११॥
पुत्रः कीर्त्तिरथस्यापि देवमीढ इति श्रुतः ।
देवमीढस्य विबुधोविबुधस्य सुतोधृतिः[2] ॥१२॥
महाधृतिसुतोराजा कीर्त्तिराजः[3] प्रतापवान् ।
कीर्त्तिराजात्मजो[4] विद्वान् महारोमेति विश्रुतः ॥१३॥
महारोम्णस्तु विख्यातः स्वर्णरोमा व्यजायत ।
स्वर्णरोमात्मजश्चापि ह्रस्वरोमाभवन्नृपः ॥१४॥
ह्रस्वरोमात्मजोविद्वान् सीरध्वज इति श्रुतिः ।
उद्भिन्ना कर्षता येन सीता राज्ञा यशस्विनी ।
रामस्य महिषी साध्वी सुव्रतातिपतिव्रता ॥१५॥

शांशपायन उवाच । कथं सीता समुत्पन्ना कृष्यमाणा यशस्विनी ।
किमर्थञ्चाकृषद्राजा क्षेत्रं यस्मिन् बभूव ह ॥१६॥

सूत उवाच । अग्निक्षेत्रे कृष्यमाणे अश्वमेधे महात्मनः ।

---

(१) प्रतिन्धक इति ख०, पिष्टन्धक इति ग०, प्रतिम्बक इति ङ० च० ।
(२) महाधृतिरिति ख० ग० ।
(३) कीर्त्तिरात इति ङ० च० छ० ।
(४) कीर्त्तिरातात्मजो इति ङ० च० छ० । कीर्त्तिराजसुत इति ख० ग० ।

विधिना सुप्रयुक्तेन तस्मात्तस्मात् समुत्थिता ॥१७॥
सीरध्वजात्तु जातस्तु भानुमान्नाम मैथिलः ।
भ्राता कुशध्वजस्तस्य स काश्याधिपति[१] र्नृपः ॥१८॥
तस्य भानुमतः पुत्रः प्रद्युम्नस्तु प्रतापवान् ।
मुनिस्तस्य सुतश्चापि तस्मादूर्जवहः स्मृतः ॥१९॥
ऊर्जवाहात् सुतद्वाजः शकुनिस्तस्य चात्मजः ।
स्वागतः शकुनेः पुत्रः सुवर्चास्तत्सुतः स्मृतः ॥२०॥
श्रुतो यस्तस्य दायादः सुश्रुतस्तस्य चात्मजः ।
सुश्रुतस्य जयः पुत्रोजयस्य विजयः सुतः ॥२१॥
विजयस्य ऋतः[२] पुत्र ऋतस्य सुनयः स्मृतः ।
सुनयाद्वीतहव्यस्तु वीतहव्यात्मजोधृतिः ॥२२॥
धृतेस्तु बहुलाश्वोभूद्बहुलाश्वसुतः कृतिः ।
तस्मिन् सन्तिष्ठते वंशोजनकानां महात्मनां ।
इत्येते मैथिलाः प्रोक्ताः सोमस्यापि निबोधत ॥२३॥

इति श्रीमहापुराणे वायुप्रोक्ते वैवस्वतमनुवंशकीर्त्तनं नाम सप्तविंशोऽध्यायः समाप्तः ॥

---

(१) काश्याधिपतिरित्यत्र सन्धिरार्षः ।
(२) क्षतः इति ङ० च० ।

# अथ अष्टाविंशोऽध्यायः ।

---

तत्र सोमजन्मविवरणं ।

सूत उवाच । पिता सोमस्य वै विप्रा जज्ञेऽत्रिर्भगवानृषिः ।
तत्रात्रिः सर्वलोकानां तस्थौ स्वेनमये[1] धृतः ॥१॥
कर्म्मणा मनसा वाचा शुभान्येव समाचरन् ।
काष्ठकुड्यशिलाभूत ऊर्द्ध्वबाहुर्महाद्युतिः ॥२॥
सुदुश्चरं नाम तपोयेन तप्तं महत्पुरा ।
त्रीणि वर्षसहस्राणि दिव्यानीति हि नः श्रुतं ॥३॥
तस्योर्द्ध्वरेतसस्तत्र स्थितस्यानिमिषस्पृहा ।
सोमत्वन्तनुरापेदे महाबुद्धिः स वै द्विजः ॥४॥
ऊर्द्ध्वमाचक्रमे तस्य सोमत्वं भावितात्मनः ।
सोमः सुस्राव नेत्राभ्यां दश वा द्योतयन् दिशः ॥५॥
तं गर्भं विधिनादिष्टा दश देव्योदधुस्तदा ।
समेत्यधारयामासुर्वचतान्नमसक्नवान्[2] ॥६॥
स ताभ्यः सहसैवाथ दिग्भ्योगर्भः प्रभान्वितः ।

---

(१) स्वेनमये धृतः इति क॰ ङ॰ छ॰ ज॰ । तेन महीभृतः इति ख॰ग॰। अत्र स्वे नियमे धृतः इति, स्वेन यमे धृतः इति, स्वात्ममयोऽधृत इति वा पाठोऽर्थप्रतिपत्तिकरः ।

(२) एतच्छ्लोकार्द्धं मूले प्रदर्शिताकारं आदर्शपुस्तकमात्रे वर्त्तते । किन्तु लेखकप्रमादजनितत्वेन वाक्यार्थप्रतिपत्तिर्दुरूहा । तस्मादयमेव पाठः सम्भावनीयः । यथा, समं ता धारयामासुर्न च ताः समशक्नुवन ।

यथाविभासयन् लोकान् शीतांशुः सर्वभावनः[१] ॥७॥
यदा न धारणे शक्तास्तस्य गर्भस्य ताः स्त्रियः ।
ततः स ताभिः शीतांशुर्निपपात वसुन्धरां ॥८॥
पतन्तं सोममालोक्य ब्रह्मा लोकपितामहः ।
रथमारोपयामास लोकानां हितकाम्यया ॥९॥
स हि देवमयो विप्राः धर्म्मार्थी सत्यसङ्गरः[२] ।
युक्तोवाजिसहस्रेण सितेनेति हि नः श्रुतं[३] ॥१०॥
तस्मिन्निपतिते देवाः पुत्रेऽत्रेः परमात्मनि ।
तुष्टुवुर्ब्रह्मणः पुत्राः मानसाः सप्त विश्रुताः ॥११॥
तत्रैवाङ्गिरसस्तस्य भृगोश्चैवात्मजस्तथा ।
ऋग्भिर्यजुर्भिर्बहुभिरथर्वाङ्गिरसैरपि ॥१२॥
ततः संस्तूयमानस्य तेजः सोमस्य भास्वतः ।
आप्यायमानं लोकांस्त्रीन् भावयामास सर्व्वशः ॥१३॥
समेन रथमुख्येन सागरान्तां वसुन्धरां ।
त्रिः सप्तकृत्वोविपुल[४]श्चकाराभिप्रदक्षिणं ॥१४॥
तस्य यच्चापि तत्तेजः पृथिवीमन्वपद्यत ।

---

(१) अत्राकाङ्क्षितया वाक्यसमापकक्रियया श्लोकार्द्धपतनं सूच्यते ।
(२) धर्म्मार्थं सत्यसङ्कर इति ख० । धर्म्मार्थसत्यसङ्कर इति ङ० च० ।
(३) अस्मात् श्लोकात् परं, समेन रथमुख्येनेति श्लोकः । अनन्तरं, तस्मिन्निपतिते देवा इत्यादिश्लोकाः । इति पाठक्रमः वाक्यार्थस्य सुसङ्गतिकरः ।
(४) वियश्च इति ङ० च० । वियश्च इतिपदस्यार्थशून्यत्वेन भ्रमजन्यत्वमवगम्यते । अत्र वियदीतिपाठः सम्यक् ।

ओषध्यस्ताः समुद्भूतास्तेजसा संज्वलंत्युत ॥१५॥
ताभि[१]र्धारयत्ययं लोकान् प्रजाश्चापि चतुर्विधाः ।
पोष्टा हि भगवान् सोमोजगतोहि द्विजोत्तमाः ॥१६॥
स लब्धतेजास्तपसा संस्तवैस्तैश्च कर्म्मभिः ।
तपस्तेपे महाभागः पद्मानां दशतीर्दश ॥१७॥
हिरण्यवर्णा या देव्योधारयन्त्यात्मना जगत् ।
विभु[२]स्तासाम्भवेत् सोमः प्रख्यातः[३] स्वेन कर्म्मणा ॥१८॥
ततस्तस्मै ददौ राज्यं ब्रह्मा ब्रह्मविदांवरः ।
वीजौषधिषु विप्राणामपाञ्च द्विजसत्तमाः ॥१९॥
सोभिषिक्तोमहातेजा महाराज्येन राजराट्[४] ।
लोकानां भावयामास स्वभावात्तपतांवरः ॥२०॥
सप्तविंशतिरिन्दोस्तु दाक्षायण्योमहाव्रताः ।
ददौ प्रचेतसा दक्षोनक्षत्राणीति या विदुः ।२१॥
स तत्प्राप्य महद्राज्यं सोमः सोमवतां प्रभुः ।
समाजह्रे[५] राजसूयं सहस्रशतदक्षिणं ॥२२॥
हिरण्यगर्भश्चोद्गाता ब्रह्मा ब्रह्मत्वमेयिवान् ।

---

(१) याभिरिति क० ।
(२) विधुरिति क० छ० अ० । विभुरिति ङ० च० ।
(३) प्रख्यातः ख० ङ० च० ।
(४) एष श्लोकः ग० छ० पुस्तकयोर्नास्ति । ग० छ० पुस्तकव्यतिरिक्तादर्श-पुस्तकेषु महाराज्येन राजराट् इतिपाठोविद्यते । अत्र महाराज्ये-ऽनु राजराट् इतिप्रायोगः साधुः ।
(५) अत्र समाजह्रे, वा, समायजत् इति पाठः समीचीनः ।

सदस्यस्तत्र भगवान् हरिर्नारायणः प्रभुः ।
सनत्कुमारप्रमुखैराद्यैर्ब्रह्मर्षिभिर्वृतः(१) ॥२३॥
दक्षिणामददत्सोमस्त्रीन् लोकानिति नः श्रुतं ।
तेभ्योब्रह्मर्षिमुख्येभ्यः सदस्येभ्यश्च वै द्विजाः ॥२४॥
तं सिनी च कुहूश्चैव वपुः पुष्टिः प्रभा वसुः ।
कीर्त्तिर्धृतिश्च लक्ष्मीश्च नव देव्यः सिषेविरे ॥२५॥
प्राप्यावभृथमव्यग्रः सर्व्वदेवर्षिपूजितः ।
अतिराजातिराजेन्द्रोदशधातापयद्दिशः ॥२६॥
तदा तत्प्राप्य दुष्प्रापमैश्वर्यमृषिसंस्तुतं ।
स विभ्रममतिर्विप्रा विनये विनयोहतः ॥२७॥
बृहस्पतेः स वै भार्यान्तारां नाम यशस्विनीं ।
जहार सहसा सर्व्वानवमत्याङ्गिरःसुताम् ॥२८॥
स याच्यमानोदेवैश्च तथा देवर्षिभिश्च ह ।
नैव व्यसर्जयत्तारां तस्मायाङ्गिरसे तदा ॥२९॥
उशनास्तस्य जग्राह पार्ष्णिमङ्गिरसोद्विजाः ।
स हि शिष्योमहातेजाः पितुः पूर्वं बृहस्पतेः ॥३०॥
(२)तेन स्नेहेन भगवान् रुद्रस्तस्य बृहस्पतेः ।
पार्ष्णिग्राहोभवद्देवः(३) प्रगृह्याजगवन्धनुः ॥३१॥
तेन ब्रह्मर्षिमुख्येभ्यः परमास्त्रं महात्मना ।

(१) वृतमिति पाठः साधीयान् ।
(२, तेन स्नेहेनेतिश्लोकस्य पूर्व्वेण सह सङ्गतिविरहात् अस्मात् प्राक् कतिपयश्लोकपतनमुपलभ्यते ।
(३) तत्रेति ख० ग० ।

उद्दिश्य देवानुतसृष्टं येनैषां नाशितं यशः ॥२१॥
तत्र तद्युद्धमभवत् प्रत्यचन्तारकामयं ।
देवानां दानवानाञ्च लोकत्रयकरं महत् ॥२२॥
तत्र शिष्टास्तयोर्देवास्तुषिताश्चैव ये स्मृताः ।
ब्रह्माणं शरणं जग्मुरादिदेवं पितामहं ॥२४॥
ततोनिवार्योशनसं रुद्रं ज्येष्ठञ्च शङ्करं ।
ददावाङ्गिरसे तारां स्वयमेव पितामहः ॥२५॥
अन्तर्वत्नीं च तां दृष्ट्वा तारान्ताराधिपाननां ।
गर्भं सुतसृजस्व न त्वं विप्रः प्राह वृहस्पतिः ॥२६॥
मदीयायां तनौ योनौ गर्भोधार्यः कथञ्चन ।
अथो नावसृजत्तन्तु कुमारं दस्युहन्तमं ॥२७॥
ईषिकास्तम्बमासाद्य ज्वलन्तमिव पावकं ।
जातमात्रोथ भगवान् देवानामाक्षिपद्वपुः ॥२८॥
ततः संशयमापन्नास्तारामकथयन् सुराः ।
सत्यं ब्रूहि सुतः कस्य सोमस्याथ वृहस्पतेः ॥२९॥
ह्रीयमाना यदा देवान्नाह सा साध्वसाधु वा ।
तदा तां शप्तुमारब्धः कुमारोदस्युहन्तमः ॥४०॥
सन्निवार्य तदा ब्रह्मा तारां चन्द्रस्य संशयः ।
यदत्र तथ्यन्तद्ब्रूहि तारे कस्य सुतस्त्वयं ॥४१॥
सा प्राञ्जलिरुवाचेदं ब्रह्माणं वरदं प्रभुं ।
सोमस्येति महात्मानं कुमारन्दस्युहन्तमं(१) ॥४२॥

(१) महात्मैष कुमारोदस्युहन्तमः इतिप्रथमान्तपाठः समीचीनः ।

ततः स तमुपाघ्राय(१) सोमोद्गाता प्रजापतिः ।
बुध इत्यकरोन्नाम तस्य पुत्त्रस्य धीमतः ॥४३॥
प्रतिपूर्व्वस्त्वगमने समभ्युत्तिष्ठते बुधैः(२) ।
उत्पादयामास तदा पुत्त्रं वै राजपुत्त्रिका ॥४४॥
तस्य पुत्त्रो महातेजा बभूवैलः पुरूरवाः ।
उर्व्वश्यां जज्ञिरे तस्य पुत्त्राः षट्सुमहौजसः ॥४५॥
प्रसह्य धर्षितस्तत्र विवशो राजयक्ष्मणा ।
ततो यक्ष्माभिभूतस्तु सोमः प्रक्षीणमण्डलः ।
जगाम शरणायाथ पितरं सोऽत्रिमेव तु ॥४६॥
तस्य तत्पापशमनं चकारात्रिर्महायशाः ।
स राजयक्ष्मणा मुक्तः श्रिया जज्वाल सर्व्वशः ॥४७॥
एतत्सोमस्य वै जन्म कीर्त्तितं द्विजसत्तमाः ।
वंशन्तस्य द्विजश्रेष्ठाः कीर्त्त्यमानं निबोधत ॥४८॥
धन्यमारोग्यमायुष्यं पुण्यङ्कल्मषशोधनं ।
सोमस्य जन्म श्रुत्वैव सर्वपापैः प्रमुच्यते ॥४९॥

इति श्रीमहापुराणे वायुप्रोक्ते उपोद्घातपादे सोमोत्पत्तिर्नाम अष्टाविंशोऽध्यायः समाप्तः ॥

(१) मुपादायेति ख० ग० ।
(२) बुध इति ग० ङ० च० ।

# अथ ऊनविंशोऽध्यायः ।

चन्द्रवंशकीर्त्तनं ।

सूत उवाच । सोमस्य तु बुधः पुत्रोबुधस्य तु पुरूरवाः ।
तेजस्वी दानशीलश्च यज्वा विपुलदक्षिणः ॥१॥
ब्रह्मवादी पराक्रान्तः शत्रुभिर्युधि दुर्जयः ।
आहर्त्ता चाग्निहोत्रस्य यज्वनाञ्च ददौ महीं ॥२॥
सत्यवाक् कर्म्मबुद्धिश्च[1] कान्तः संवृतमैथुनः ।
अतीव[2] पुत्रोलोकेषु रूपेणाप्रतिमोभवत् ॥३॥
तं ब्रह्मवादिनं दान्तं धर्म्मज्ञं सत्यवादिनं ।
उर्वशी वरयामास हित्वा मानं यशस्विनी ॥४॥
तया सहावसद्राजा दशवर्षाणि चाष्ट च ।
सप्त[3] षट् सप्त चाष्टौ च दश चाष्टौ च वीर्य्यवान् ॥५॥
वने चैत्ररथे रम्ये तथा मन्दाकिनीतटे ।
अलकायां विशालायां नन्दने च वनोत्तमे ॥६॥
गन्धमादनपादेषु मेरुशृङ्गे नगोत्तमे ।
उत्तरांश्च कुरून् प्राप्य कलापग्राम[4] मेव च ॥७॥
एतेषु वनमुख्येषु सुरैराचरितेषु च ।
उर्वश्या सहितोराजा रेमे परमया मुदा ॥८॥

---

१) धर्म्मबुद्धिश्चेति ख॰ घ॰ ।
(२) यतीव इति क॰ ञ॰ ।
(३) पञ्च इति ङ॰ घ॰ ।
(४) कलापग्राममिति ङ॰ घ॰ ।

ऋषय ऊचुः। गन्धर्वी चोर्वशी देवी राजानं मानुषं कथं।
देवान्तुत्सृज्य सम्प्राप्ता तन्नोब्रूहि बहुश्रुत ॥८॥
सूत उवाच। ब्रह्मशापाभिभूता सा मानुषं समुपस्थिता।
ऐलं तु तं वरारोहा समयेन व्यवस्थिता ॥१०॥
आत्मनः शापमोक्षार्थं नियमं सा चकार तु(१)।
अनग्नदर्शनञ्चैव अकामात् सह मैथुनं।
द्वौ मेषौ शयनाभ्याशे स(२) तावद्व्यवतिष्ठते।
घृतमात्रं तथाहारः कालमेकन्तु पार्थिव ॥११॥
यद्येष समयोराजन् यावत्कालञ्च ते दृढं।
तावत्कालन्तु वत्स्यामि एष नः समयः कृतः ॥१२॥
तस्यास्तं समयं सर्वं स राजा पर्य्यपालयत्।
एवं सा चावसत् तस्मिन्(३) पुरूरवसि भामिनी ॥१३॥
वर्षाण्यथ चतुःषष्टिं तद्भक्त्या शापमोहिता।
उर्वशी मानुषं प्राप्ता गन्धर्व्वाश्चिन्तयान्विताः ॥१४॥
गन्धर्व्वा ऊचुः। चिन्तयध्वं महाभागा यथा सा तु वराङ्गणा।
आगच्छेत्तु पुनर्देवानुर्वशी स्वर्गभूषणा ॥१५॥
ततोविश्वावसुर्नाम तत्राह वदतांवरः।
तया(४) तु समयस्तत्र क्रियमाणोमतोऽनघः ॥१६॥

---

(१) च इति ख०।
(२) सा इतिप्रयोगः साधुः।
(३) आदर्शपुस्तकमात्रे तेनेतिपाठोऽस्ति। परन्तु नायं समीचीनः।
(४) आदर्शपुस्तकमात्रे मयेतिपाठोवर्त्तते सयन्तु न सम्यक्।

समयच्युतकमात् सा वै राजानन्त्यक्ष्यते यथा[१]।
तदहं वच्मि वः सर्वं यथा त्यक्ष्यति सा नृपं ॥१७॥
सहसा[२] योगमेष्यामि युष्माकं कार्य्यसिद्धये[३]।
एवमुक्त्वा गतस्तत्र प्रतिष्ठानं महायशाः ॥१८॥
स निशायामथागम्य मेषमेकं जहार वै।
मातृवद्वर्त्तते सा तु मेषयोश्चारुहासिनी ॥१९॥
गन्धर्वागमनं ज्ञात्वा शयनस्था यशस्विनी।
राजानमब्रवीत्सा तु पुत्रो मे ह्रियतेति वै ॥२०॥
एवमुक्तोविनिश्चित्य नग्नस्थिष्ठति वै नृपः[४]।
नग्नं द्रक्ष्यति मां देवी समयोवितथोभवेत् ॥२१॥
ततोभूयस्तु गन्धर्व्वा द्वितीयं मेषमादद्रुः।
द्वितीयेऽपहृते मेषे ऐलन्देवी तमब्रवीत् ॥२२॥
पुत्रौ मम हृतौ राजन्ननाथाया इव प्रभो।
एवमुक्तस्तदोत्थाय नग्नोराजा प्रधावितः ॥२३॥
मेषाभ्यां पदवीं राजन् गन्धर्व्वैर्युत्थितः मथ[५]।
उत्पादिता तु महती माया तद्भवनं महत् ॥२४॥

(१) यथा इत्यत्र ध्रुवमितिप्रयोगः साधीयान् अन्यथा राजानं त्यक्ष्यते यथेतिवाक्यस्य पुनरुक्तिदोषोऽनिवरणीयः। ड.च ग अस्मात् श्लो-कार्द्धात् परं विश्वावसूक्तकतिपयवाक्यानि न सन्ति।

(२) सत्वाहेति का॰ ङ॰ च॰ छ॰ ज॰।

(३) वीर्य्यसिद्धये इति क॰ छ॰ ज॰ अयमपपाठः।

(४) नग्नस्तिष्ठन् स नोत्थितः इतिप्रयोगोऽत्र सङ्गतः।

(५) अत्र, मेषयोः पदवीन्तत्र गन्धर्व्वैर्दिवमाश्रितैरितिप्रयोगोऽभियुक्तः।

प्रकाशितन्तु सहसा ततोनग्नमवेक्ष्य सा[१] ।
नग्नं दृष्ट्वा तिरोभूत्वा अप्सरा कामरूपिणी ॥२५॥
तिरोभूतान्तु तां ज्ञात्वा गन्धर्वास्तत्र तावुभौ ।
मेषौ त्यक्त्वा च ते सर्वे तत्रैवान्तर्हिताभवन्[२] ॥२६॥
उत्सृष्टावुरणौ दृष्ट्वा राजा गृह्यागतः प्रभुः[३] ।
अपश्यंस्तां तु वै राजा विललाप सुदुःखितः ॥२७॥
चचार पृथिवीं चैव मार्गमाणस्ततस्ततः ।
अथापश्यच्च तां राजा कुरुक्षेत्रे महाबलः ॥२८॥
प्लक्षतीर्थे पुष्करिण्यां विगाढेनाम्बुनाप्लुतां ।
क्रीडन्तीमप्सरोभिश्च पञ्चभिः सह शोभनं ॥२९॥
अपश्यत्सा ततः सुभ्रूराजानमविदूरतः ।
उर्वशी ताः सखीः प्राह अयं स पुरुषोत्तमः ॥३०॥
यस्मिन्नहमवात्सीति[४] दर्शयामास तं नृपं ।
तत आविर्बभूवुस्ताः पञ्चचूडाप्सरास्तुताः[५] ॥३१॥
दृष्ट्वा तु राजा तां प्रीतः प्रलापान् कुरुते बहून् ।
आयाहि तिष्ठ मनसा घोरे वचसि तिष्ठ हे ॥३२॥

---

(१) एतच्छ्लोकार्द्धात् परं श्लोकार्द्धं पतितं वाक्यसमाप्तेरभावात् ।
(२) अत्र सन्धिरार्षप्रयोगात् ।
(३) पुनरिति ख० ग० ङ० च० छ० ।
(४) सर्व्वेष्वेवादर्शपुस्तकेषु मवात्सीति इतिपाठोवर्त्तते । अत्र मवात्सं श्चेतिप्रयोगोविशुद्धः ।
(५) अत्र, पञ्चचूडादयोऽप्सराः इतिप्रयोगः समीचीनः । ख० ग० छ० ज० पुस्तकेषु पञ्चक्रीडाप्सरस्तुताः इतिपाठोऽस्ति ।

एवमादीनि सूक्तानि परस्परमभाषत ।
उर्व्वशी त्वब्रवीच्चैनं सगर्भाहं त्वया प्रभो ॥ ३३ ॥
संवत्सरात् कुमारस्ते भविता नैव संशयः ।
निशामेकान्तु वै राजा अवसत्तु तया सह ॥ ३४ ॥
सम्प्रहृष्टोजगामाथ स्वपुरन्तु महायशाः ।
गते संवत्सरे राजा उर्व्वशीं पुनरागमत् ॥ ३५ ॥
उषित्वा तु तया सार्द्धमेकरात्रं महामनाः ।
कामार्त्तश्चाब्रवीद्दीनोभव नित्यं ममेति वै ॥ ३६ ॥
उर्व्वश्यथाब्रवीच्चैनं गन्धर्वास्ते वरन्ददुः ।
तं वृणीष्व महाराज ब्रूहि चैतान् स्वमेव हि ॥ ३७ ॥
वृणे नित्यं हि सालोक्यं गन्धर्वाणां महात्मनां ।
तथेत्युक्त्वा वरं ब्रवे गन्धर्वाश्च तथास्त्विति ॥ ३८ ॥
स्थालीमग्नेः पूरयित्वा गन्धर्व्वाश्च तमब्रुवन् ।
अनेन इष्ट्वा लोकन्तं प्राप्स्यसि त्वं नराधिप ॥ ३९ ॥
तमादाय कुमारन्तु नगरायोपचक्रमे ।
निक्षिप्य तमरण्याञ्च स पुत्रन्तु गृहं ययौ ॥ ४० ॥
पुनरादाय दृश्याग्निमश्वत्थं तत्र दृष्टवान् ।
समीपतस्तु तं दृष्ट्वा ह्यश्वत्थं तत्र विस्मितः ॥ ४१ ॥
गन्धर्व्वेभ्यस्तथाख्यातुमग्निना गां गतस्तु सः ।
श्रुत्वा तमर्थमखिलमरणिं तु समादिशत् ॥ ४२ ॥
अश्वत्थादरणिं कृत्वा मथित्वाग्निं यथाविधि ।
तेनेष्ट्वा तु सलोकं नः प्राप्स्यसि त्वं नराधिप ॥ ४३ ॥

मथित्वाग्निं त्रिधा कृत्वा ह्ययजत्स नराधिपः ।
दृष्ट्वा यज्ञैर्बहुविधैर्गतस्तेषां सलोकताम् ॥४४॥
वासाय च स गन्धर्व्वस्त्रेतायां स महारथः ।
एकोऽग्निः पूर्वमासीद्वै ऐलस्त्रींस्तानकल्पयत् ॥४५॥
एवंप्रभावो राजासीदैलस्तु द्विजसत्तमाः ।
देशे पुण्यतमे चैव महर्षिभिरलङ्कृते ॥४६॥
राज्यं स कारयामास प्रयागे पृथिवीपतिः ।
उत्तरे यामुने तीरे प्रतिष्ठाने[१] महायशाः ॥४७॥
तस्य पुत्रा बभूवुर्हि षडिन्द्रोपमतेजसः ।
गन्धर्व्वलोके विदिता आयुर्द्धीमानमावसुः ॥४८॥
विश्वायुश्च श्रुतायुश्च गतायु[२]श्चोर्वशीसुताः ।
अमावसोस्तु वै जातो भीमो राजाथ विश्वजित् ॥४९॥
श्रीमान् भीमस्य दायादो राजासीत्काञ्चनप्रभः ।
विद्वांस्तु काञ्चनस्यापि सुहोत्रोऽभून्महाबलः ॥५०॥
सुहोत्रस्याभवज्जह्नुः केशिकागर्भसम्भवः ।
प्रतिगत्य ततो गङ्गा विततं यज्ञकर्म्मणि ॥५१॥
प्लावयामास तं देशं भाविनोऽर्थस्य दर्शनात्[३] ।
गङ्गया प्लावितं दृष्ट्वा यज्ञवाटं समन्ततः ॥५२॥
सौहोत्रिर्वरदः[४] क्रुद्धो गङ्गां संरक्तलोचनः ।

---

(१) प्रतिस्थाने इति क० च० ज० ।
(२) श्रुतायुरिति ख० ।
(३) देशनात् इति च० ।
(४) सौहोत्रिश्च ततः इति ख० ग० । अस्मिन् श्लोकार्द्धे समापकक्रियाया

अस्य गङ्गावलेपस्य सद्यः फलमवाप्नुहि ॥ ५३ ॥
एतत्ते विफलं सर्व्वं पीतमम्भः(१) करोम्यहं ।
राजर्षिणा ततः पीतां गङ्गां दृष्ट्वा सुरर्षयः ॥ ५४ ॥
उपनिन्युर्महाभागा दुहितृत्वेन जाह्नवीं ।
यौवनाश्वस्य पौत्रीन्तु(२) कावेरीं जह्नुरावहत् ॥ ५५ ॥
युवनाश्वस्य शापेन गङ्गा येन(३) विनिर्ममे ।
कावेरीं सरितां श्रेष्ठां जह्नुभार्य्यामनिन्दितां ॥ ५६ ॥
जह्नुस्तु दयितं पुत्रं सुहोत्रं नाम धार्मिकं ।
कावेर्य्यां जनयामास अजकस्तस्य चात्मजः ॥ ५७ ॥
अजकस्य तु दायादो बलाकाश्वो महायशाः ।
बभूव मृगयः शीलः(४) कुशस्तस्यात्मजः स्मृतः ॥ ५८ ॥
कुशपुत्रा बभूवुश्च चत्वारो वेदवर्चसः(५) ।
कुशाश्वः कुशनाभश्च अमूर्त्तारयशो वसुः ॥ ५९ ॥
कुशस्तम्बस्तपस्तेपे पुत्रार्थी राजसत्तमः ।

---

ऊहनीयत्वेन, सौहोत्रिर्वरदः, वा, सौहोत्रिश्च ततः इत्यत्र सौहोत्रिरब्रवीदितिपाठः समीचीनः ।

(१) सर्व्वेष्वादर्शपुस्तकेषु पीतमम्भ इत्यत्र भ्रमोत्पन्नपाठावर्त्तन्ते । यथा, पिवन्नभः इति क०, पिवन्तीभिः इति ख०, अपरः कि० इति ग०, पिवन्तंवः इति ङ०, पिवन्तंभं इति च०, पिवन्ताम्भः इति छ०, पिवन्ताम्र इति ज० ।

(२) पुत्रीमिति ख० ।

(३) गङ्गायै न इति ङ० च० अयन्तु न सम्यक् ।

(४) बभूव च दयाशीलः इति ख० ।

(५) देववर्चसः इति ख० ग० ।

पूर्णे वर्षसहस्रे वै शतक्रतुमपश्यत ॥६०॥
स उग्रं तपसं दृष्ट्वा सहस्राक्षः पुरन्दरः।
समर्थः पुत्रजनने स्वयमेवास्य शाश्वतः ॥६१॥
पुत्रत्वं कल्पयामास स्वयमेव पुरन्दरः।
गाधिर्नामाभवत्पुत्रः कौशिकः पाकशासनः ॥६२॥
पौरुकुत्साभवद्भार्या गाधिस्तस्यामजायत(१)।
पूर्व्वं कन्यां महाभागां नाम्ना सत्यवतीं शुभां।
तां गाधिः पुत्रः काव्याय ऋचीकाय ददौ प्रभुः ॥६३॥
तस्यां पुत्रस्तु(२) वै भर्त्ता भार्गवोभृगुनन्दनः।
पुत्रार्थे साधयामास चरुं गाधेस्तथैव च ॥६४॥
तथा चाहूय शिष्टति(३) ऋचीकोभार्गवस्तदा।
उपयोज्यश्चरुरयं त्वया मात्रा च ते शुभाः(४) ॥६५॥
तस्यां जनिष्यते पुत्रोदीप्तिमान् क्षत्रियर्षभः।
अजेयः क्षत्रियैर्युद्धे क्षत्रियर्षभसूदनः ॥६६॥
तवापि पुत्रं कल्याणि धृतिमन्तं तपोधनं।
शमात्मकं द्विजश्रेष्ठं चरुरेष विधास्यति ॥६७॥

---

(१) जनयामास इत्यर्थे अजायतेत्यार्षः।
(२) पुत्राय इति पाठः साधीयान्।
(३) क० ङ० च० छ० ज० पुस्तकेषु शिष्टति इति अर्थशून्यपाठोवर्त्तते। ख० पुस्तके तथा राजा बालभृतिरिरितिपाठः। ग० पुस्तके एतच्छ्लोकार्द्धं नास्ति। शिष्टति इत्यत्र सृष्टतिमिति प्रयोगोऽर्थप्रतिपत्तिकरः।
(४) शुभाः इति पाठः सर्व्वेषु आदर्शपुस्तकेषु विद्यते। अत्र शुभे इति सम्बोधनान्तप्रयोगः सङ्गतः।

एवमुक्त्वा तु तां भार्य्यामृचीकोभृगुनन्दनः ।
तपस्याभिरतोनित्यं अरण्यं प्रविवेश ह ॥६८॥
गाधिः सदारस्तु तदा ऋचीकाश्रममभ्यगात् ।
तीर्थयात्राप्रसङ्गेन सुतां द्रष्टुं नरेश्वरः ॥६९॥
चरुद्वयं गृहीत्वा तु ऋषेः सत्यवती सदा(१) ।
भर्त्तुर्वचनमव्यग्रा हृष्टा मात्रे न्यवेदयत् ॥७०॥
माता तु तस्यै दैवेन दुहित्रे स्वं चरुं ददौ ।
तस्याश्चरुमथाज्ञानादात्मनः सा चकार ह ॥७१॥
अथ सत्यवती गर्भं क्षत्रियान्तकरं शुभं ।
धारयामास दीप्तेन वपुषा घोरदर्शना ॥७२॥
तमृचीकस्ततोदृष्ट्वा योगेनाप्यनुमृश्य च ।
तदाब्रवीद्द्विजश्रेष्ठः स्वां भार्य्यां वरवर्णिनीं ॥७३॥
मातुः सिध्यति ते भद्रे चरुव्यत्यासहेतुना(२) ।
जनिष्यति हि पुत्रस्ते क्रूरकर्मातिदारुणः ॥७४॥
माता जनिष्यते वापि(३) तथाभूतं तपोधनं ।
विश्वं हि ब्रह्म तपसा मया तत्र समर्पितं ॥७५॥

(१) तदा इति पाठोयुक्तः ।
(२) अत्र आदर्शपुस्तकमात्रे भ्रान्तिजनितपाठाः सन्ति । यथा, मात्रा सिद्धन्ति ते सर्व्वे भद्रेऽचर्व्यथानामा इति च इति ख०, यात्रासिद्धन्ति ते सर्व्वे वर्व्वरस्य महोति च इति ग० । क० ङ० च० छ० ज० पुस्तकेषु, मात्रा सिद्धन्ति ता भद्रे इति पाठः साधारणः । इतः परं अतु अभ्यासहेतु स इति क०, चरुविन्यासहेतुतु इति ङ० च०, च तु व्यत्यासहेतु तु इति छ० च तु अभ्यास हेतु तुत इति ज०
(३) चापि इति ख० ग० ।

एवमुक्ता महाभागा भर्त्रा सत्यवती तदा।
प्रसादयामास पतिं सुतोमे नेदृशोभवेत्।
ब्राह्मणापसदस्त्वन्य इत्युक्तोमुनिरब्रवीत् ॥७६॥
नैषः सङ्कल्पितः कामोमया भद्रे तथा त्वया।
उग्रकर्म्मा भवेत् पुत्रः पितुर्मातुश्च कारणात् ॥७७॥
पुनः सत्यवती वाक्यमेवमुक्ताब्रवीदिदं।
इच्छन् लोकानपि मुने सृजेथाः किं पुनः सुतं ॥७८॥
शमात्मकमृजुं भर्त्तः पुत्रं मे दातुमर्हसि।
काममेवंविधः पुत्रोमम स्यात्तु वद[१] प्रभो ॥७९॥
मय्यन्यथा[२]न शक्यं वै कर्तुमेव द्विजोत्तम।
ततः प्रसादमकरोत् स तस्यास्तपसोबलात् ॥८०॥
पुत्रे नास्ति विशेषोमे पौत्रे वा वरवर्णिनि।
त्वया यथोक्तं वचनं तथा भद्रे भविष्यति ॥८१॥
तस्मात् सत्यवती पुत्रं जनयामास भार्गवं।
तपस्यभिरतन्दान्तं जमदग्निं शमात्मकं ॥८२॥
भृगोश्चरुविपर्यासे रौद्रवैष्णवयोः पुरा।
यमनाद्वैष्णवस्याग्नेर्यमदग्निरजायत[३] ॥८३॥
विश्वामित्रं तु दायाद्गाधिः कुशिकनन्दनः।

---

(१) स्यादरद इति क० ज०।
(२) यद्दन्यथा इति क०, मह्यन्यथा इति ख०, ग० पुस्तके एतत् श्लोकार्द्धं नास्ति, दय्यन्यथा इति ङ० च०, पय्यन्यथा इति छ० ञ०। एते सर्व्वे पाठाः लिपिकरप्रमादजनिताः।
(३) जमनाद्वैष्णवस्याग्नेर्जमदग्निरजायत इति ज०।

प्राप्य ब्रह्मर्षिसविता[१] जगाम ब्रह्मणा सृतः ॥८४॥
सा हि सत्यवती पुण्या सत्यव्रतपरायणा ।
कौशिकीति समाख्याता प्रवृत्तेयं महानदी ॥८५॥
परिश्रुता महाभागा कौशिकी सरितां वरा ।
इक्ष्वाकुवंशे त्वभवत्सुवेणुर्नाम पार्थिवः ॥८६॥
तस्य कन्या महाभागा कामली नाम रेणुका ।
रेणुकायान्तु कामल्यां तपोधृतिसमन्वितः ।
आर्चीकोजनयामास जमदग्निः सुदारुणं ॥८७॥
सर्वविद्यान्तगं श्रेष्ठं धनुर्वेदस्य पारगं ।
रामं क्षत्रियहन्तारं प्रदीप्तमिव पावकं ॥८८॥
और्व्वस्यैवमृचीकस्य[२] सत्यवत्यां महात्मनः[३] ।
यमदग्निस्ततोवीर्य्याज्जज्ञे ब्रह्मविदां वरः ।
मध्यमस्य शुनःशेफः शुनःपुच्छः कनिष्ठकः ॥८९॥
विश्वामित्रस्तु धर्मात्मा नाम्ना विश्वरथः स्मृतः ।
जज्ञे भृगुप्रसादेन कौशिकाद्वंशवर्द्धनः[४] ॥९०॥
विश्वामित्रस्य पुत्रस्तु शुनःसेफोभवन्मुनिः ।
हरिश्चन्द्रस्य यज्ञे तु पशुत्वे नियतः स वै ।
देवैर्दत्तः स वै यस्माद्देवरातस्ततोभवत् ॥९१॥

---

(१) समतामिति ख० ग० ।
(२) वाध्यस्य च ऋचीकस्य इति ख० ग० ।
(३) महात्मनः इति ख० ।
(४) कौशिकवंशवर्द्धनः इतिप्रयोगः साधुः ।

विश्वामित्रस्य पुत्राणां शुनःशेफोऽग्रजः स्मृतः ।
मधुच्छन्दोनयश्चैव[१] कृतदेवो[२] ध्रुवाष्टकौ ॥९२॥
कच्छपः पूरणश्चैव विश्वामित्रसुतास्तु वै ।
तेषां गोत्राणि बहुधा कौशिकानां महात्मनां ॥९३॥
पार्थिवा देवरातास्च याज्ञवल्क्याः समर्षणाः ।
उदुम्बरा उदुम्बानास्तारका यममुञ्चताः[३] ॥९४॥
लोहिण्योरेणवश्चैव तथा कारीषवः[४] स्मृताः ।
बभ्रवः पाणिनश्चैव ध्यानजप्यास्तथैव च ॥९५॥
शालावत्या हिरण्याक्षाः सङ्कृता गालवाः स्मृताः[५] ।
देवला यामदूतास्च शालङ्कायनवाष्कलाः ॥९६॥
दद्रातिवाद्दराश्चान्ये विश्वामित्रस्य धीमतः ।
ऋष्यन्तरविवाह्यास्ते बहवः कौशिकाः स्मृताः ॥९७॥
कौशिकाश्चेश्रुमाश्चैव[६] तथान्ये सैन्धवायनाः[७] ।
पौरोरवस्य पुत्रस्य ब्रह्मर्षेः कौशिकस्य तु ॥९८॥
दृषद्वतीसुतस्यापि विश्वामित्रात्तथाष्टकः ।
अष्टकस्य सुतोलोहि प्रोक्तो जह्नुगणो मया ॥९९॥

---

(१) मधुच्छन्दो यमश्चैव इति ख०, जयश्चैवेति ङ० च० ।
(२) कृतदेवो इति ङ० च० ।
(३) लाङ्कान्तभवास्तथा इति ख०, एतच्छ्लोकोत्तरार्धं ग० पुस्तके नास्ति, यत्नु-मुञ्चताः इति क० ज०, स्यतुमुञ्चताः इति छ० ।
(४) कारिषयः इति क० ज० ।
(५) शालाव आहिवरणाक्षः सङ्कृता गलवः स्मृत इति घ० छ० ज० ।
(६) कौशिकाश्चेश्रुताश्चैवेति ङ० छ० ।
(७) सौधवायना इति क०, ज० ।

ऋषय ऊचुः । किं लक्षणेन धर्म्मेण तपसैव श्रुतेन वा ।
ब्राह्मण्यं(१) समनुप्राप्तं विश्वामित्रादिभिर्नृपैः ॥१००॥
येन येनाभिधानेन ब्राह्मण्यं क्षत्रिया गताः ।
विशेषं ज्ञातुमिच्छामि तपसा दानतस्तथा ॥१०१॥
एवमुक्तस्ततोवाक्यमब्रवीदिदमर्थवत् ।
अन्यायोपगतैर्द्रव्यैराहृत्य यजते धिया(२) ।
धर्माभिकाङ्क्षी यजते न धर्मफलमश्नुते ॥१०२॥
धर्म्मं चैतं समाख्याय पापात्मा पुरुषाधमः ।
ददाति दानं विप्रेभ्योलोकानां दम्भकारणात् ॥१०३॥
अपक्कृत्वा(३) तथा तीव्रं धनलोभान्निरङ्कुशः ।
रागमोहान्वितोह्यन्ते पावनार्थं ददाति यः ॥१०४॥
तेन दत्तानि दानानि अफलानि भवन्त्युत ।
तस्य धर्म्मप्रवृत्तस्य हिंसकस्य दुरात्मनः ॥१०५॥
एवं लब्ध्वा धनं मोहाद्ददतोयजतस्य च ।
सङ्क्लिष्टकर्मणोदानं न तिष्ठति दुरात्मनः ॥१०६॥
न्यायागतानां द्रव्याणां तीर्थे सम्प्रतिपादनं ।
कामाननभिसन्धाय यजते च ददाति च ॥१०७॥
स दानफलमाप्नोति तच्च दानं सुखोदयं ।
दानेन भोगानाप्नोति स्वर्गं सत्येन गच्छति ॥१०८॥

---

(१) ब्राह्मण्यमिति ङ० च० ।
(२) दाह्य द्विजसत्तमान् इति क० छ० ज० ।
(३) अपकृत्वेति पाठः सुसङ्गतः ।

तपसा तु सुसुप्तेन लोकान् विष्टभ्य तिष्ठति ।
विष्टभ्य स तु तेजस्वी लोकेष्वानन्त्यमश्नुते ॥१०९॥
दानाच्छ्रेयस्तथा यज्ञो यज्ञाच्छ्रेयस्तथा तपः ।
सन्न्यासस्तपसः श्रेयांस्तस्माद्ध्यानं गुरु स्मृतं ॥११०॥
श्रूयन्ते हि तपःसिद्धाः क्षात्रोपेता द्विजातयः ।
विश्वामित्रोनरपतिर्मान्धाता संकृतिः कपिः ॥१११॥
कपेश्च[१] पुरुकुत्सश्च सत्यश्चानृश्चानृगुः[२] ।
आर्ष्टिषेणोऽजमीढश्च भागान्योन्यस्तथैव च ॥११२॥
कक्षीवांश्चैव शिजयस्तथान्ये च महारथाः ।
रथीतरश्च रुन्दश्च विष्णुवृद्धादयो नृपाः ॥११३॥
क्षात्रोपेताः स्मृता ह्येते तपसा ऋषिताङ्गताः ।
एते राजर्षयः सर्व्वे सिद्धिं सुमहतीङ्गताः ।
अत ऊर्द्धं प्रवक्ष्यामि अयोवंशं महात्मनः ॥११४॥

इति श्रीमहापुराणे वायुप्रोक्ते चन्द्रवंशकीर्त्तनं नाम
ऊनत्रिंशोऽध्यायः समाप्तः ॥

---

(१) कपेरितिपाठो लेखकप्रमादजनितः। अथवा कपेरितिपदप्रयोगस्य-
तात्पर्य्यार्थावगतिरिति दुरूहा ।
(२) सत्याष्टकृच्छ्रवान् प्रभुरिति क० छ० ज० ।

# अथ त्रिंशोऽध्यायः ।

चन्द्रवंशकीर्त्तनं ।

सूत उवाच । एते पुत्रा महात्मनः पञ्चैवासन् महाबलाः ।
स्वर्भानुतनयाः विप्राः[१] प्रभार्यां जज्ञिरे नृपः ॥१॥
नहुषः प्रथमस्तेषां पुत्रधर्म्मा ततः स्मृतः ।
धर्म्मवृद्धात्मजश्चैव सुतहोत्रो[२] महायशाः ॥२॥
सुतहोत्रस्य दायादास्त्रयः परमधार्म्मिकाः ।
काशः शलश्च द्वावेतौ तथा गृत्समदः[३] प्रभुः ॥३॥
पुत्रो गृत्समदस्यापि शुनको यस्य शौनकः ।
ब्राह्मणाः क्षत्रियाश्चैव वैश्याः शूद्रास्तथैव च ॥४॥
एतस्य वंशे सम्भूता[४] विचित्रैः कर्म्मभिर्द्विजाः ।
शलात्मजो ह्यार्ष्टिषेणश्चरन्तस्तस्य चात्मजः ॥५॥
शौनकाश्चार्ष्टिषेणाश्च चात्रोपेता द्विजातयः ।
काशस्य काशयो राष्ट्ः पुत्रो दीर्घतपास्तथा ॥६॥
धर्म्मश्च दीर्घतपसो विद्वान् धन्वन्तरिस्ततः ।
तपसा सुमहातेजा जातो वृद्धस्य धीमतः ।

---

(१) विप्राइत्यत्र न्तेथा इति अर्थशून्यपाठः आदर्शपुस्तकमात्रेऽस्ति ।
(२) सुनहोत्र इति क० ङ० च० ।
(३) गृत्समदः इति ङ०, गृत्समयः इति क० । एष श्लोकः ख० ग०-पुस्तकयोर्नास्ति ।
(४) तस्य वंशे समुद्भूता इति ङ० च० ।

अथैनमृषयः प्रोचुः सूतं वाक्यमिमं पुनः ॥७॥

ऋषय ऊचुः। कथं धन्वन्तरिर्देवो मानुषेष्विह जज्ञिवान्।

एतद्वेदितुमिच्छामस्ततो ब्रूहि प्रियं तथा ॥८॥

सूत उवाच। धन्वन्तरेः सम्भवोऽयं श्रूयतामिह वै द्विजाः।

स सम्भूतः समुद्रान्ते[१] मथ्यमानेऽमृते पुरा ॥९॥

उत्पन्नः सकलात् पूर्व्वं सर्व्वतश्च श्रिया वृतः।

सर्व्वसंसिद्धकार्यं तं दृष्ट्वा विष्टम्भितः स्थितः।

अजस्त्वमिति होवाच तस्मादजस्तु सः स्मृतः ॥१०॥

अजः प्रोवाच विष्णुं तं तनयोऽस्मि तव प्रभो।

विधत्स्व भागं स्थानञ्च मम लोके सुरोत्तम ॥११॥

एवमुक्तः स दृष्ट्वा तु तथा प्रोवाच स[२] प्रभुः।

कृतो यज्ञविभागस्तु यज्ञियैर्हि सुरैस्तथा ॥१२॥

वेदेषु विधियुक्तश्च विधिहोत्रं महर्षिभिः।

न शक्यमिह होमो वै तुभ्यं कर्त्तुं कदाचन ॥१३॥

अर्वाक्सुतोऽसि हे देव नाममन्त्रोऽसि वै प्रभोः।

द्वितीयायान्तु सम्भूत्यां लोके ख्यातिङ्गमिष्यसि ॥१४॥

अणिमादियुता सिद्धिर्गर्भस्थस्य भविष्यति।

तेनैव च शरीरेण देवत्वं प्राप्स्यसि प्रभो।

चाहमन्त्रैर्घृतैर्गन्धैर्यक्ष्यन्ति त्वां द्विजातयः ॥१५॥

---

(१) समुद्रान्ते इत्यत्र समुद्रान्तः-इतिपाठः साधीयान्।

(२) आदर्शपुस्तकमात्रे स इति पाठोऽस्ति अत्र स इतिपदस्थानेन त-मितिपाठः समीचीनः।

अथ च त्वं पुनश्चैव आयुर्वेदं विधास्यसि ।
अवश्यम्भावी ह्यर्थोऽयं प्राग्दिष्टस्त्वब्जयोनिना ॥१६॥
द्वितीयं द्वापरं प्राप्य भविता त्वं न संशयः ।
तस्मात्[१] तस्मै वरं दत्त्वा विष्णुरन्तर्दधे ततः ॥१७॥
द्वितीये द्वापरे प्राप्ते शौनहोत्रः प्रकाशिराट्[२] ।
पुत्रकामस्तपस्तेपे नृपोदीर्घतपास्तथा ॥१८॥
अब्जं देवन्तु पुत्रार्थे ह्याराराधयिषुर्नृपः ।
वरेण छन्दयामास प्रीतोधन्वन्तरिर्नृपं ॥१९॥
नृप उवाच । भगवन् यदि तुष्टस्त्वं पुत्रोमे धृतिमान् भव ।
तथेति समनुज्ञाय तत्रैवान्तरधीयत ॥२०॥
तस्य गेहे समुत्पन्नोदेवोधन्वन्तरिस्तदा ।
काशिराजोमहाराजः सर्व्वरोगप्रनाशनः ॥२१॥
आयुर्वेदं भरद्वाजश्चकार सभिषक्क्रियं ।
तमष्टधा पुनर्व्यस्य शिष्येभ्यः प्रत्यपादयत् ॥२२॥
धन्वन्तरिसुतश्चापि केतुमानिति विश्रुतः ।
अथ केतुमतः पुत्रोविभोभीमरथोनृपः ।
दिवोदास इतिख्यातोवाराणस्यधिपोभवत् ॥२३॥
एतस्मिन्नेव काले तु पुरीं वाराणसीं पुरा ।
शून्यां निवेशयामास क्षेमकोनाम राक्षसः ॥२४॥

---

(१) तस्मादित्यत्र एवं इतिपाठः साधुः ।
(२) स काशिराट् इति ख० ग० ।

शप्ता हि सा पुरी पूर्वं निकुम्भेन महात्मना
शून्या वर्षसहस्रं वै भविष्यीति पुनः पुनः ॥२५॥
तस्यास्तु शप्तमात्रायां दिवोदासः प्रजेश्वरः।
विषयान्ते पुरीं रम्यां गोमत्यां सन्निवेशयत् ॥२६॥
ऋषय ऊचुः। वाराणसीं किमर्थं तां निकुम्भः शप्तवान् पुरा।
निकुम्भश्चापि धर्मात्मा सिद्धक्षेत्रं शशाप यः ॥२७॥
सूत उवाच। दिवोदासस्तु राजर्षिर्नगरीं प्राप्य पार्थिवः।
वसते स महातेजाः स्फीतायां वै नराधिपः ॥२८॥
एतस्मिन्नेव काले तु कृतदारो महेश्वरः।
देव्याः स प्रियकामस्तु वसानश्च सुराग्निके ॥२९॥
देवाज्ञया पारिषदा विश्वरूपास्तपोधनाः।
पूर्वोक्तैः रूपविशेषैस्तोषयन्ति महेश्वरीं ॥३०॥
हृष्यति तैर्महादेवो मेना नैव तु हृष्यति।
जुगुप्सते सा नित्यञ्च देवं देवीं तथैव च ॥३१॥
मम पार्श्वे त्वनाचार(१) स्तव भर्ता महेश्वरः।
दरिद्रः सर्व एवेह अक्लिष्टं लड़तेनघे ॥३२॥
मात्रा तथोक्ता वचसा स्त्रीस्वभावान्नचाक्षमत्।
स्मितं कृत्वा तु वरदा हरपार्श्वमथागमत् ॥३३॥
विषण्णवदना देवी महादेवमभाषत।
नेह वत्स्याम्यहं देव नय मां स्वं निवेशनं ॥३४॥

(१) दुराचार इति ख० ग०।

तथोक्तस्तु महादेवः सर्वान् लोकानवेक्ष्य च ।
वासार्थं रोचयामास पृथिव्यां तु द्विजोत्तमाः ।
वाराणसीं महातेजाः सिद्धक्षेत्रं महेश्वरः ॥३५॥
दिवोदासेन तां ज्ञात्वा निविष्टान्नगरीं भवः ।
पार्श्वस्थं स समाहूय गणेशं क्षेमकं[१] ब्रवीत् ॥३६॥
गणेश्वर पुरीं कृत्वा शून्यां वाराणसीं कुरु ।
मृदुना चाभ्युपायेन अतिवीर्यः स पार्थिवः ॥३७॥
ततोगत्वा निकुम्भस्तु पुरीं वाराणसीं पुरा ।
स्वप्ने सन्दर्शयामास मङ्कनं नाम नापितं ॥३८॥
श्रेयस्तेऽहं करिष्यामि स्थानं मे रोचयानघ ।
मद्रूपां[२] प्रतिमां कृत्वा नगर्य्यन्ते निवेशय ॥३९॥
तथा स्वप्ने यथा दृष्टं सर्वं कारितवान् द्विजाः ।
नगरीद्वार्य्यनुज्ञाप्य राजानन्तु यथाविधि ॥४०॥
पूजा तु महती चैव नित्यमेव प्रयुज्यते ।
गन्धैर्धूपैश्च माल्यैश्च प्रेक्षणीयैस्तथैव च ॥४१॥
अन्नप्रदानयुक्तैश्च अत्यद्भुतमिवाभवत् ।
एवं सम्पूज्यते तत्र नित्यमेव गणेश्वरः ॥४२॥
ततोवरसहस्राणि नगराणां प्रयच्छति ।

(१) क्षेपकोऽब्रवीदिति ख० ।
(२) मद्रूपामित्यत्र, आदर्शपुस्तकमात्रे अर्थरहितपाठाः सन्ति । यथा, मेद्रूयामिति क०, मयद्रूयामिति ख० ग०, मद्रूयामिति ङ० च० छ० ज० ।

पुत्रान् हिरण्यमायूंषि सर्व्वकामांस्तथैव च ॥४३॥
राज्ञस्तु महिषी श्रेष्ठा सुयशा नाम विश्रुता ।
पुत्रार्थमागता साध्वी राज्ञा देवी प्रचोदिता ॥४४॥
पूजान्तु विपुलां कृत्वा देवी पुत्रानयाचत ।
पुनः पुनस्तथागम्य बहुशः पुत्रकारणात् ॥४५॥
न प्रयच्छति पुत्रांस्तु निकुम्भः कारणेन तु ।
राजा यदि तत् कुप्येत ततः किञ्चित् प्रवर्त्तते ॥४६॥
अथ दीर्घेण कालेन क्रोधोराजानमाविशत् ।
भूतं लिदं महाद्वारि नगराणां प्रयच्छति ॥४७॥
प्रीत्या वरांश्च शतशोन किञ्चिन्तु प्रवर्त्तते ।
मामकैः पूज्यते नित्यं नगर्यां मम चैव तु ॥४८॥
तत्रार्चितश्च बहुशोदेव्या मे तत्र कारणात् ।
न ददाति च पुत्रं मे कृतघ्नोबहुभोजनः ॥४९॥
अतोनार्हति पूजान्तु मत्सकाशात् कथञ्चन ।
तस्मात्तु नाशयिष्यामि तस्य स्थानं दुरात्मनः ॥५०॥
एवं तु स विनिश्चित्य दुरात्मा राजकिल्बिषी ।
स्थानं गणपतेस्तस्य नाशयामास दुर्मतिः ॥५१॥
भग्नमायतनं दृष्ट्वा राजानमशपत् प्रभुः ।
यस्माद्दृतेऽपराधं मे त्वया स्थानं विनाशितं ॥५२॥
अकस्मात् तु पुरी शून्या भविषी ते नराधिप ।
ततस्तेन तु शापेन शून्या वाराणसी तथा ॥५३॥
शप्तां पुरीं निकुम्भस्तु महादेवमथानयत् ।

शून्यां पुरीं महादेवोनिर्ममे परमात्मना ॥५४॥
तुष्ट्यां देवविभूत्यास्तु देव्यास्चैव महात्मनः ।
रमते तत्र वै देवी रममाणोमहेश्वरः[१] ॥५५॥
न रतिं तत्र वै देवी लभते गृहविस्मयात् ।
देव्याः क्रीड़ार्थमीशानो[२]देवोवाक्यमथाब्रवीत् ॥५६॥
नाहं वेश्म विमोक्ष्यामि अविमुक्तं हि मे गृहं ।
प्रहस्यैनामथोवाच अविमुक्तं हि मे गृहं ॥५७॥
नाहं देवि गमिष्यामि गच्छस्वेह रमाम्यहं ।
तस्मात्तदविमुक्तं हि प्रोक्तं देवेन वै स्वयं ॥५८॥
एवं वाराणसी शप्ता अविमुक्तं च कीर्त्तितं ।
यस्मिन् वसति वै देवः सर्वदेवनमस्कृतः ।
युगेषु त्रिषु धर्मात्मा सह देव्या महेश्वरः ॥५९॥
अन्तर्द्धानं कलौ याति तत्पुरन्तु महात्मनः ।
अन्तर्हिते पुरे तस्मिन् पुरी सा वसते पुनः ॥६०॥
एवं वाराणसी शप्ता निवेशं पुनरागता ।
भद्रश्रेण्यस्य[३] पुत्राणां शतमुत्तमधन्विनां ॥६१॥
हत्वा निवेशयामास दिवोदासोनराधिपः ।
भद्रश्रेण्यस्य राज्यन्तु हृतन्तेन बलीयसा ॥६२॥

---

(१) ऐश्वर्य्यात् सातु विस्मिता इति क० छ० ज० ।
(२) ख० ग० ङ० च० पुस्तकेषु ,पुनर्यामीति तां देवीं इतिपाठोऽस्ति । अयन्त्वपपाठः ।
(३) भद्रश्रेणस्येति क०, भद्रसेनस्येति ख० ग० ।

भद्रश्रेण्यस्य पुत्रस्तु दुर्दमो नाम नामतः ।
दिवोदासेन बालेति घृणया स विवर्जितः ॥६३॥
दिवोदासाद्दृषद्वत्यां वीरो जज्ञे प्रतर्दनः ।
तेन पुत्रेण बालेन प्रहृतं तस्य वै पुनः ॥६४॥
वैरस्यान्तं महाराज्ञा तदा तेन विधित्सता ।
प्रतर्दनस्य पुत्रौ द्वौ वत्सो गर्गश्च विश्रुतः ॥६५॥
वत्सपुत्रो ह्यलर्कस्तु सन्नतिस्तस्य चात्मजः ।
अलर्कं प्रति राजर्षिं गीतश्लोकौ पुरातनौ ॥६७॥
षष्टिं वर्षसहस्राणि षष्टिं वर्षशतानि च ।
युवा रूपेण सम्पन्नो ह्यलर्कः काशिसत्तमः ।
लोपामुद्राप्रसादेन परमायुरवाप्तवान् ॥६८॥
शापस्यान्ते महाबाहुर्हत्वा क्षेमकराक्षसं ।
रम्यामावासयामास पुरीं वाराणसीं नृपः ॥६९॥
सन्नतेरपि दायादः सुनीथो(१) नाम धार्मिकः ।
सुनीथस्य तु दायादः सुकेतुर्नाम धार्मिकः ॥७०॥
सुकेतुतनयश्चापि धर्मकेतु(२)रिति श्रुतिः ।
धर्मकेतोस्तु दायादः सत्यकेतुर्महारथः ॥७१॥
सत्यकेतुसुतश्चापि विभुर्नाम प्रजेश्वरः ।
सुविभुस्तु विभोः पुत्रः सुकुमारस्ततः स्मृतः ॥७२॥

---

(१) सुतीर्थ इति ख० ग० ।
(२) वर्म्मकेतु रिति ख० ग० ।

सुकुमारस्य पुत्रस्तु धृष्टकेतुः(१) स धार्म्मिकः(२) ।
धृष्टकेतोस्तु दायादो वेणुहोत्रः प्रजेश्वरः ॥७३॥
वेणुहोत्रसुतश्चापि गार्ग्यो वै नाम विश्रुतः ।
गार्ग्यस्य गर्गभूमिस्तु(३) वात्स्यो वत्सस्य धीमतः ॥७४॥
ब्राह्मणाः क्षत्रियाश्चैव तयोः पुत्राः सुधार्म्मिकाः ।
विक्रान्ता बलवन्तश्च सिंहतुल्यपराक्रमाः ॥७५॥
इत्येते काश्यपाः प्रोक्ता रजेरपि निबोधत ।
रजेः पुत्रशतान्यासन् पञ्च वीर्य्यवतो भुवि ।
राजेयमिति विख्यातं क्षत्रमिन्द्रभयावहं ॥७६॥
तदा देवासुरे युद्धे समुत्पन्ने सुदारुणे ।
देवाश्चैवासुराश्चैव पितामहमथाब्रुवन् ॥७७॥
आवयोर्भगवन् युद्धे विजेता को भविष्यति ।
ब्रूहि नः सर्व्वलोकेश श्रोतुमिच्छामहे वयं ॥७८॥
ब्रह्मोवाच । येषामर्थाय संग्रामे रजिरात्तायुधः प्रभुः ।
योत्स्यते ते विजेष्यन्ति त्रींल्लोकान्नात्र संशयः ॥७९॥
रजिर्यतस्ततो लक्ष्मीर्यतो लक्ष्मीस्ततो धृतिः ।
यतो धृतिस्ततो धर्मो यतो धर्मस्ततो जयः ॥८०॥
तद्देवा दानवाः सर्वे ततः श्रुत्वा रजेर्जयं ।
अभ्ययुर्जयमिच्छन्तः स्तुवन्तो राजसत्तमं ॥८१॥

---

(१) दृढकेतुरिति ङ० च० ।
(२) सुधार्म्मिक इति ख० ।
(३) इतः परं श्लोकार्द्धपतनमवगम्यते ।

ते हृष्टमनसः सर्वे राजानं देवदानवाः ।
ऊचुरस्मज्जयाय त्वं गृहाण वरकार्मुकं ॥८२॥

रजिरुवाच । जयिष्यामि नो युद्धे देवान् शक्रपुरोगमान् ।
इन्द्रोभवामि धर्मात्मा ततोयोत्स्यामि संयुगे ॥८३॥

दानवा ऊचुः । अस्माकमिन्द्रः प्रह्लादस्तस्यार्थे विजयामहे[१] ।
अस्मिंस्तु समये राजंस्तिष्ठेथा देव नोऽदितेः ॥८४॥
स तथेति ब्रुवन्नेव देवैरप्यभिचोदितः ।
भविष्यसीन्द्रोजित्वेति देवैरपि निमन्त्रितः ॥८५॥
जघान दानवान् सर्व्वान् समन्[२] वज्रपाणिनः ।
स विप्रनष्टां देवानां परमश्रीः श्रियं वशी ॥८६॥
निहत्य दानवान् सर्व्वान् व्याजहार रजिः प्रभुः[३] ।
तं तथा तु रजिं तत्र देवैस्सह शतक्रतुः ॥८७॥
रजिपुत्रोहमित्युक्त्वा पुनरेवाब्रवीद्वचः ।
इन्द्रोसि राजन् देवानां सर्वेषान्नात्र संशयः ।
यस्याहमिन्द्रपुत्रस्ते ख्यातिं यास्यामि शत्रुहन् ॥८८॥
स तु शक्रवचः श्रुत्वा वञ्चितस्तेन मायया ।
तथेत्येवाब्रवीद्राजा प्रीयमाणः शतक्रतुं ॥८९॥
तस्मिंस्तु देवसदृशे दिवं प्राप्ते महीपतौ ।

---

(१) विनयामहे इति क० ज० ।
(२) ये वध्या इति क० छ० ।
(३) अस्मात् श्लोकात् परं कतिपयश्लोकपतनं सम्भाव्यते राज्ञा रजिनोक्त विषयस्याभावदर्शनात् ।

दायाद्यमिन्द्रादाजह्रुराचारं तनया रजेः ॥९०॥
तानि पुत्रशतान्यस्य तच्च स्थानं शचीपतेः ।
समक्रामन्त बहुधा स्वर्गलोकं[१] त्रिविष्टपं ॥९१॥
ततः काले बहुतिथे समतीते महाबलः ।
हृतराज्योऽब्रवीच्छक्रो हृतभागो[२] बृहस्पतिं ॥९२॥
बदरीफलमात्रं वै पुरोडाशं विधत्स्व मे ।
ब्रह्मर्षे येन तिष्ठेयं तेजसाप्यायितस्ततः ॥९३॥
ब्रह्मन् कृशोऽयं विमना हृतराज्यो हृताशनः ।
हतौजा दुर्बलो मूढ़ो रजिपुत्रैः प्रसीद मे ॥९४॥
बृहस्पतिरुवाच । यद्येवं चोदितः शक्र त्वया स्यां पूर्व्वमेव हि ।
नाभविष्यत् त्वत्प्रियार्थं नाकर्त्तव्यं ममानघ ॥९५॥
प्रयतिष्यामि देवेन्द्र तद्धितार्थं महाद्युते ।
यथा भागञ्च राज्यञ्च अचिरात् प्रतिपत्स्यसे ॥९६॥
तथा शक्र गमिष्यामि[३] मा भूत्ते विक्लवं मनः ।
ततः कर्म्म चकारास्य तेजःसंवर्द्धनं महत् ॥९७॥
तेषाञ्च बुद्धिसंमोहमकरोद्बुद्धिसत्तमः ।
ते यदा ससुता मूढ़ा रागोत्पन्ना विधर्म्मिणः ॥९८॥
ब्रह्मद्विषश्च संवृत्ता हतवीर्य्यपराक्रमाः ।
ततो लेभे सुरैश्वर्य्यमैन्द्रस्थानं तथोत्तमं ॥९९॥

(१) सूर्य्यलोकमिति ङ० ।
(२) हृतभाग्यो इति ख०, हृतभार्य्यो इति ग० ।
(३) गमिष्यामीत्यत्र करिष्यामीतिपाठः सुसङ्गतः ।

हत्वा रजिसुतान् सर्व्वान् कामक्रोधपरायणान्।
य इदं पावनं स्थानं प्रतिष्ठानं शतक्रतोः ॥१००॥
शृणुयाद्वा रजेर्व्वापि न स दौरात्म्यमाप्नुयात्।

इति श्रीमहापुराणे वायुप्रोक्ते रजियुद्धं नाम त्रिंशो-ऽध्यायः समाप्तः ॥

# अथ एकविंशोऽध्यायः ।

मरुत्तवंशवर्णनं ।

ऋषय ऊचुः । मरुत्तेन कथं कन्या राज्ञे दत्ता महात्मना ।

किंवीर्य्याश्च महात्मानो जाता मरुतकन्यकाः ॥१॥

सूत उवाच । आहवन्[1] तं[2] महत्सोममन्नकामः प्रजेश्वरं[3] ।

मासि मासि महातेजाः षष्टिसंवत्सरान्नृपः ॥२॥

तेन ते मरुतस्तस्य मरुत्सोमेन तोषिताः ।

अक्षय्यान्नन्ददुः प्रीताः सर्वकामपरिच्छदं ॥३॥

अनन्तस्य सकृत्पक्कमहोरात्रे न क्षीयते[4] ।

कोटिशोदीयमानञ्च सूर्य्यस्योदयनादपि[5] ॥४॥

मित्रज्योतिस्तु[6] कन्यायां मरुतस्य च धीमतः ।

तस्माज्जाता महासत्वा धर्म्मज्ञा मोक्षदर्शिनः ॥५॥

सन्न्यस्य गृहधर्म्माणि वैराग्यं समुपस्थिताः ।

यतिधर्म्ममवाप्येह ब्रह्मभूयाय ते गताः ॥६॥

अनपाय[7]स्ततोजातस्तदा[8] धर्म्मप्रवृत्तवान् ।

क्षत्रधर्म्मस्ततोजातः प्रतिपक्षोमहातपाः ॥७॥

---

(१) आजुहवन्नित्यर्थे आह्वयन्नित्यार्षः ।

(२) आजुगर्ध्नित्यर्थे आहवन्नित्यार्षः । आहरन्तमिति क० ङ० घ० छ० ञ० ।

(३) महेश्वरमिति ख० ग० ।

(४) क्षयतीत्यर्थे क्षीयते इत्यार्षः ।

(५) अतः परं कतिपयश्लोकपतनमुपलभ्यते प्रक्रान्ते ऋषीणां प्रश्ने सूतोक्तोत्तरवाक्यस्याभावदर्शनात् ।

(६) मित्रज्योतेस्तु इति क० छ० ञ० । एष श्लोकः ख० ग० पुस्तकयोर्नास्ति । अयन्त्वपपाठः ।

(७) अनपत्य इति ख० ग० ङ० घ० ।

(८) तदा इत्यत्र तत इतिपाठः समीचीनः ।

प्रतिपक्षसुतस्यापि सञ्जयोनाम विश्रुतः।
सञ्जयस्य जयः पुत्रोविजयस्तस्य जज्ञिवान् ॥८॥
विजयस्य जयः पुत्रस्तस्य हर्यन्वतः(१) सुतः।
हर्यन्वतस्ततो(२)राजा सहदेवः प्रतापवान् ॥९॥
सहदेवस्य धर्मात्मा अदीन(३) इति विश्रुतः।
अदीनस्य जयत्सेनस्तस्य पुत्रोऽथ सङ्कृतिः ॥१०॥
सङ्कृतेरपि धर्मात्मा क्षतधर्मा(४) महायशाः।
इत्येते क्षत्रधर्माणोनहुषस्य निबोधत ॥११॥
नहुषस्य तु दायादाः षडिन्द्रोपमतेजसः।
उत्पन्नाः पितृकन्यायां विरजायां महौजसः ॥१२॥
यतिर्ययातिः संयातिरायातिः पञ्च तुद्भवः(५)।
यतिर्ज्येष्ठस्तु तेषां वै ययातिस्तु ततोऽवरः ॥१३॥
काकुत्स्थकन्यां गां नाम लेभे पत्नीं यतिस्तदा।
संयातिर्मोक्षमास्थाय ब्रह्मभूतोभवन्मुनिः ॥१४॥
तेषां मध्येतु पञ्चानां ययातिः पृथिवीपतिः।
देवजानिमुशनसः सुतां भार्यामवाप ह ॥१५॥
शर्मिष्ठामासुरीञ्चैव तनयां वृषपर्वणः।
यदुञ्च तुर्वसुञ्चैव देवजानिर्व्यजायत ॥१६॥

---

(१) हर्यश्वकः इति ख०।
(२) हर्यश्वस्तु ततो इति ख० ग०।
(३) आदित्य इति ख० ग० आदीन इति ङ० च०।
(४) क्षत्रधर्मा इति ख० ङ० च०।
(५) तद्भवः इति ङ० तद्भव इति च०।

द्रुह्युञ्चानुञ्च पुरुञ्च शर्मिष्ठा वार्षपर्वणी ।
अजीजनन्महावीर्यान् सुतान्देवसुतोपमान् ॥१७॥
रथन्तस्मै ददौ रुद्रः प्रीतः परमभास्वरं ।
असङ्गं काञ्चनं दिव्यमक्षयौ च महेषुधी ॥१८॥
युक्तं मनोजवैरश्वैर्येन कन्यां समुद्वहत्(१) ।
स तेन रथमुख्येन जिगाय च ततोमहीं ॥१९॥
ययातिर्युधि दुर्द्धर्षोदेवदानवमानवैः ।
पौरवाणां नृपाणाञ्च सर्वेषां सोभभवद्रथः ॥२०॥
योवत्सुदेशप्रभवः कौरवोजनमेजयः ।
कुरोः(२) पुत्रस्य राज्ञस्तु राज्ञः पारिक्षितस्य ह ।
जगाम स रथोनाशं शापाद्गार्ग्यस्य धीमतः ॥२१॥
गार्ग्यस्य हि सुतं बालः स राजा जनमेजयः ।
दुर्बुद्धिर्हिंसयामास लोहगन्धं नराधिपं ॥२२॥
स लोहगन्धोराजर्षिः परिधावन्नितस्ततः ।
पौरजानपदैस्त्यक्तोन लेभे शर्म कर्हिचित् ॥२३॥
ततः स दुःखसन्तप्तोनालभत्संविदं क्वचित् ।
जगाम हेतुकन्तृषिं शरणं व्यथितस्तदा ॥२४॥
इन्द्रोतोनाम विख्यातोयोसौ मुनिरुदारधीः ।
योजयामास चेन्द्रोतः शौनकोजनमेजयं ।
अश्वमेधेन राजानं पावनार्थं द्विजोत्तमः ॥२५॥
स लोहगन्धोव्यनशत्तस्यावभृथमेत्य ह ।

---

(१) समदुद्वहदित्यर्थे समुद्वहदित्यार्षः ।
(२) पुरोः इति ख० ।

(१)स च दिव्योरथस्तस्माद्यावज्जनमेजयात् । (?)

Actually printed: ^(१)स च दिव्योरथस्तस्माद्वोऽसेदिपतेस्तथा ॥२६॥
ततः शक्रेण तुष्टेन लेभे तस्माद्बृहद्रथः ।
ततोहत्वा जरासन्धं भीमस्तं रथमुत्तमं ।
प्रददौ वासुदेवाय प्रीत्या कौरवनन्दनः ॥२७॥
स जरां प्राप्य राजर्षिर्ययातिर्नहुषात्मजः ।
पुत्रं ज्येष्ठं वरिष्ठञ्च यदुमित्यब्रवीद्वचः ॥२८॥
जरावली च मां तात पलितानि च पर्यगुः ।
काव्यस्योशनसः शापान्न च तृप्तोऽस्मि यौवने ॥२९॥
त्वं यदो प्रतिपद्यस्व पाप्मानं जरया सह ।
जरां मे प्रतिगृह्णीष्व तं यदुः प्रत्युवाच ह ॥३०॥
अनिर्दिष्टा मया भिक्षा ब्राह्मणस्य प्रतिश्रुता ।
सा च व्यायामसाध्या वै न ग्रहीष्यामि ते जरां ॥३१॥
जरायां बहवोदोषाः पानभोजनकारिणः ।
तस्माज्जरान्न ते राजन् ग्रहीतुमहमुत्सहे ॥३२॥
सितश्मश्रुधरोदीनोजरया शिथिलीकृतः ।
वलीसन्ततगात्रश्च दुर्दर्शोदुर्बलाकृतिः ॥३३॥
अशक्तः कार्यकरणे परिभूतस्तु यौवने ।
सहोपभीतिभिश्चैव(२) तां जरान्नाभिकामये ॥३४॥

(१) स च दिव्योरथस्तस्मादिति, ततः शक्रेण तुष्टेनेति, ततोहत्वा जरासन्धमिति च, एभ्यः श्लोकार्द्धेभ्यः प्राक् कानिचिद्वाक्यानि न सन्ति पूर्व्वापरसङ्गतिविरहात् ।

(२) सहोपवीतिभिश्चैवेति क० ङ० च० छ० ज०; अयन्तु न सङ्गतः । महाभीश्चैव सर्व्वेषामिति ग० ।

सन्ति ते बहवः पुत्रा भक्ताः प्रियतरा नृप ।
प्रतिगृह्णन्तु धर्म्मज्ञ पुत्रमन्यं वृणीष्व वै ॥३५॥
स एवमुक्तोयदुना तीव्रकोपसमन्वितः ।
उवाच वदतांश्रेष्ठोज्येष्ठं तं गर्हयन् सुतं ॥३६॥
आश्रमः कस्तु वान्योस्ति(१)कोवा धर्म्मविधिस्तव ।
मामनादृत्य दुर्बुद्धे यदात्थ नवदेशिक(२) ॥३७॥
एवमुक्त्वा यदुं राजा शशापैनं स मन्युमान् ।
यस्त्वं मे हृदयाज्जातोवयः स्वं न प्रयच्छसि ॥३८॥
तस्मान्न राज्यभाग् मूढ़ प्रजा ते वै भविष्यति ।
तुर्व्वसो प्रतिपद्यस्व पाप्मानं जरया सह ॥३९॥
तुर्व्वसुरुवाच । न कामये जरां तात कामभोगप्रणाशिनीं ।
जराया बहवोदोषाः पानभोजनकारिणः ।
तस्माज्जरां न ते राजन् ग्रहीतुमहमुत्सहे ॥४०॥
ययातिरुवाच । यस्त्वं मे हृदयाज्जातोवयः स्वन्न प्रयच्छति ।
तस्मात् प्रजा समुच्छेदं तुर्व्वसो तव यास्यति ॥४१॥
असङ्कीर्णा च धर्म्मेण प्रतिलोमवरेषु च ।
पिशिताशिषु चान्येषु मूढ़ राजा भविष्यसि ॥४२॥
गुरुदारप्रसक्तेषु तिर्य्यग्योनिगतेषु वा ।

---

(१) आश्रमः कस्य कोन्योऽस्ति इति ग० । अयन्तु न समीचीनः ।
(२) आदर्शपुस्तकमात्रे यदात्थनवदेशिकः इति पाठोऽस्ति । अयन्तु न सङ्गतार्थप्रयोगः ।

पशुधर्म्मेषु(१) म्लेच्छेषु भविष्यति(२) न संशयः ॥४३॥

सूत उवाच । एवन्तु तुर्वसुं शप्ता ययातिः सुतमात्मनः ।

शर्मिष्ठायाः सुतं द्रुह्युमिदं वचनमब्रवीत् ॥४४॥

द्रुह्यु त्वं प्रतिपद्यस्व वर्णरूपविनाशिनीं ।

जरां वर्षसहस्रं वै यौवनं स्वन्दस्व मे ॥४५॥

पूर्णे वर्षसहस्रे ते प्रतिदास्यामि यौवनं ।

स्वञ्चादास्यामि(३) भूयोऽहं पाप्मानं जरया सह ॥४६॥

द्रुह्यु उवाच । न गजन्न रथं नाश्वं जीर्णो भुङ्क्ते न च स्त्रियं ।

न सङ्गश्चास्य भवति न जरान्तेन कामये ॥४७॥

ययातिरुवाच । यस्त्वं मे हृदयाज्जातोऽवयः स्वन्न प्रयच्छसि ।

तस्माद्द्रुह्यु प्रियः कामोन ते सम्पत्स्यते क्वचित् ॥४८॥

नौप्लवोत्तरसञ्चारस्तत्र नित्यं भविष्यति ।

अराजभ्राजवंशस्त्वं तत्र नित्यं भविष्यसि(४) ॥४९॥

अनो त्वं प्रतिपद्यस्व पाप्मानं जरया सह ।

एवं वर्षसहस्रन्तु चरेयं यौवनेन ते ॥५०॥

अनुरुवाच । जीर्णः शिशुवदं दत्ते(५) जरया ह्यशुचिः सदा ।

---

(१) मत्स्यधर्म्मेषु इति ख० ग० ।

(२) भविष्यतीत्यत्र भविष्यसीतिप्रयोगः साधुः ।

(३) अवदास्यामीति ख० ग० ।

(४) चाप्यसि वान्धवः इति ङ०च० । एष श्लोकः ख०ग०पुस्तकयोर्न विद्यते ।

(५) क० ज० पुस्तकयोः जीर्णः शुखनत्ते इति, छ० पुस्तके जीर्णः शिशुरवदत्ते इति, लिपिकरप्रमादजनितपाठोऽस्ति । अत्र जीर्णः शिशुसुखं दत्ते इति पाठः सम्भवितुमर्हति ।

न जुहोति स कालेग्निं तां जरान्नाभिकामये ॥५१॥
ययातिरुवाच । यस्त्वं मे हृदयाज्जातोवयः स्वन्न प्रयच्छसि ।
जरादोषस्त्वयोक्तोयं तस्मात्ते प्रतिपत्स्यते ॥५२॥
प्रजा च यौवनं प्राप्ता विनशिष्यात्यतस्तव ।
अग्निप्रस्कन्दनपरस्त्वं चाप्येव भविष्यसि ॥५३॥
पुरो त्वं प्रतिपद्यस्व पाप्मानञ्जरया सह ।
जरावली च मान्नात पलितानि च पर्यगुः ॥५४॥
काव्यस्योशनसः शापान्न च तृप्तोस्मि यौवने ।
कञ्चित्कालञ्चरेयं वै विषयान् वयसा तव ॥५५॥
पूर्णे वर्षसहस्रे ते प्रतिदास्यामि यौवनं ।
स्वञ्चैव प्रतिपत्स्यामि पाप्मानञ्जरया सह ॥५६॥
सूत उवाच । एवमुक्तः प्रत्युवाच पुत्रः पितरमञ्जसा ।
यथानुमन्यसे तात करिष्यामि तथैव च ॥५७॥
प्रतिपत्स्यामि ते राजन् पाप्मानं जरया सह ।
गृहाण यौवनं मत्तस्त्वर कामान् यथेप्सितान् ॥५८॥
जरयाहं प्रतिच्छन्नोवयोरूपधरस्तव ।
यौवनं भवते दत्त्वा चरिष्यामि यथार्थवत् ॥५९॥
ययातिरुवाच । पुरो प्रीतोस्मि भद्रन्ते प्रीतश्चेदं ददामि ते ।
सर्वकामसमृद्धा ते प्रजा राज्ये भविष्यति ॥६०॥
सूत उवाच । पुरोरनुमतोराजा ययातिः स्वां जरान्ततः ।
संक्रामयामास तदा प्रसादाद्भार्गवस्य तु ॥६१॥
यौवनेनाथ वयसा ययातिर्नहुषात्मजः ।

प्रीतियुक्तोमरश्रेष्ठश्चचार विषयान् स्वकान् ॥६२॥
यथाकामं यथोत्साहं यथाकालं यथासुखं।
धर्म्माविरोधाद्राजेन्द्रोयथार्हति(१) स एव हि ॥६३॥
देवानतर्पयद्यज्ञैः पितॄन् श्राद्धैस्तथैव च।
दीनांश्चानुग्रहैरिष्टैः कामैश्च द्विजसत्तमान् ॥६४॥
अतिथीनन्नपानैश्च वैश्यांश्च परिपालनैः।
आनृशंस्येन शूद्रांश्च दस्यून् संनिग्रहेण च ॥६५॥
धर्म्मेण च प्रजाः सर्व्वा यथावदनुरञ्जयन्।
ययातिः पालयामास साक्षादिन्द्र इवापरः ॥६६॥
स राजा सिंहविक्रान्तोयुवा विषयगोचरः।
अविरोधेन धर्म्मस्य चचार सुखमुत्तमं ॥६७॥
स मार्गमाणः कामानामन्तदोषनिदर्शनात्।
विश्वासहेतोरेमे वै वैभ्राजे नन्दने वने ॥६८॥
अपश्यत्स यदा तां वै वर्द्धमानां नृपस्तदा।
गत्वा पुरोः सकाशं वै स्वाञ्जरां प्रत्यपद्यत ॥६९॥
स सम्प्राप्य तु तान् कामांस्तृप्तः खिन्नश्च पार्थिवः।
कालं वर्षसहस्रं वै सस्मार मनुजाधिपः ॥७०॥
परिसङ्ख्याय कालज्ञ कलाकाष्ठास्तथैव च।
पूर्णं मत्वा ततः कालं पुरुं पुत्रमुवाच ह ॥७१॥
यथासुखं यथोत्साहं यथाकालमरिन्दम।

---

(१) आदर्शपुस्तकमात्रे अत्र लेखकप्रमादकृतपाठौ स्तः। यथा, यथा हन्ति इति क० ख० ङ० च० छ० ज०, यथा यन्ति इति ग०।

सेविता विषयाः पुत्र यौवनेन मया तव ॥७२॥
पुरो प्रीतोऽस्मि भद्रन्ते गृहाण त्वं स्वयौवनं।
राष्ट्रञ्च(१) त्वं गृहाणेदं त्वं हि मे प्रियकृत्सुतः ॥७३॥
प्रतिपेदे जरां राजा ययातिर्नहुषात्मजः।
यौवनं प्रतिपेदे च पुरुः स्वं पुनरात्मनः ॥७४॥
अभिषेक्तुकामञ्च नृपं पुरुं पुत्रं कनीयसं।
ब्राह्मणप्रमुखा वर्णा इदं वचनमब्रुवन् ॥७५॥
कथं शुक्रस्य नप्तारं देवयान्याः सुतं प्रभो।
ज्येष्ठं यदुमतिक्रम्य पुरोराज्यं प्रदास्यसि ॥७६॥
यदुर्ज्येष्ठस्तव सुतोजातस्तमनु तुर्वसुः।
शर्मिष्ठायाः सुतोद्रुह्युस्ततोनु पुरुरेव च ॥७७॥
कथं ज्येष्ठानतिक्रम्य कनीयान् राज्यमर्हति।
अतः सम्बोधयामि त्वां धर्मं समनुपालय ॥७८॥
ययातिरुवाच। ब्राह्मणप्रमुखा वर्णाः सर्वे शृण्वन्तु मे वचः।
ज्येष्ठं प्रति यथा राष्ट्रं न देयं मे कथञ्चन ॥७९॥
मातापित्रोर्वचनकृद्धितपुत्रः प्रशस्यते।
मम ज्येष्ठेन यदुना नियोगोनानुपालितः ॥८०॥
प्रतिकूलं पितुर्यश्च न स पुत्रः सतां मतः।
स पुत्रः पुत्रवद्यश्च वर्त्तते पितृमातृषु ॥८१॥
यदुनाहमवज्ञातस्तथा तुर्वसुनापि च।
द्रुह्येण चानुना चैवमप्यवज्ञाकृता भृशं ॥८२॥

(१) राज्यञ्चेति ख० ग० ङ० च०।

पुरुणा तु कृतं वाक्यं मानितश्च विशेषतः ।
कनीयान् मम दायादो जरा येन धृता मम ।
सर्वकामः सर्वकृतः पुरुणा पुत्रकारिणा ॥८३॥
शुक्रेण च वरो दत्तः काव्येनोशनसा स्वयं ।
पुत्रो यस्त्वानुवर्त्तेत स राजा ते महामते ॥८४॥
भवतोनुमतो ह्येवं पुरू राज्येऽभिषिच्यतां ।
यः पुत्रो गुणसम्पन्नो मातापित्रोर्हितः सदा ।
सर्वमर्हति कल्याणं कनीयानपि स प्रभुः ॥८५॥
अर्हः पुरुरिदं राज्यं यः प्रियः प्रियकृत्तव[1]।
वरदानेन शुक्रस्य न शक्यं वक्तुमुत्तरं ॥८६॥
पौरजानपदैस्तुष्टैरित्युक्तो नाहुषस्तदा ।
अभिषिच्य ततः पुरुं स्वराज्ये सुतमात्मनः ॥८७॥
दिशि दक्षिणपूर्वस्यां तुर्वसुन्तु न्यवेशयत् ।
दक्षिणापरतो राजा यदुं श्रेष्ठं न्यवेशयत् ॥८८॥
प्रतीच्यामुत्तरस्याञ्च द्रुह्युञ्चानुञ्च तावुभौ ।
सप्तद्वीपां ययातिस्तु जित्वा पृथ्वीं ससागरां ।
व्यभजत्पञ्चधा राजा पुत्रेभ्यो नाहुषस्तदा ॥८९॥
तैरियं पृथिवी सर्वा सप्तद्वीपा सपत्तना ।
यथाप्रदेशं धर्मज्ञैर्धर्म्मेण प्रतिपाल्यते ॥९०॥
एवं विसृज्य पृथिवीं पुत्रेभ्यो नाहुषस्तदा ।
पुत्रसंक्रामितश्रीस्तु प्रीतिमानभवन्नृपः ॥९१॥

---

(१) प्रियकृत्सतां इति ख० ।

धनुर्यस्य पृषत्कांश्च राज्यञ्चैव सुतेषु तु ।
प्रीतिमानभवद्राजा भारमावेश्य बन्धुषु ॥९२॥
अत्र गाथा महाराज्ञा पुरा गीता ययातिना ।
योभिप्रेत्याहरन् कामान् कूर्मोऽङ्गानीव सर्वशः[१] ॥९३॥
न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्द्धते ॥९४॥
यत् पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः ।
नालमेकस्य तत्सर्वमिति पश्यन्न मुह्यति ॥९५॥
यदा तु कुरुते भावं सर्व्वभूतेषु पावकं ।
कर्म्मणा मनसा वाचा ब्रह्म सम्पद्यते तदा ॥९६॥
यदा परान्न बिभेति यदा तस्मान्न बिभ्यति ।
यदा नेच्छति न द्वेष्टि ब्रह्म सम्पद्यते तदा ॥९७॥
या दुस्त्यजा दुर्म्मतिभिर्या न जीर्यति जीर्य्यतः ।
दोषाप्राणान्तिकोरागस्तां तृष्णान्त्यजतः सुखं ॥९८॥
जीर्य्यन्ति जीर्यतः केशा दन्ता जीर्यन्ति जीर्यतः ।
जीविताशा धनाशा च जीर्य्यतोपि न जीर्यति ॥९९॥
यच्चाकामसुखं लोके यच्च दिव्यं महत् सुखं ।
तृष्णाक्षय सुखस्यैव[२] कलां नार्हति षोडशीं ॥१००॥

---

(१) योऽभिप्रेत्येत्यादिवाक्येनापरवाक्यस्यसाकाङ्क्षत्वात् अस्मात् श्लोकात् परं वाक्यान्तरपतनं सम्भाव्यते ।

(२) अत्र आदर्शपुस्तकमात्रे लिपिकरप्रमादजनितपाठोऽस्ति । यथा, तृष्णास्यथ सुखस्यैत इति क०ज०,दृष्ट्वा त्वयसुखस्येते इति ख० ग०, तृष्णा त्वयसुखस्यैतत् इति ङ०, च०, तृष्णास्य य मुखस्यैत इति छ० ।

एवमुक्त्वा स राजर्षिः सदारः प्रस्थितोवनं।
भृगुतुङ्गे तपस्तप्त्वा तत्रैव स महायशाः।
पालयित्वा व्रतशतं तत्रैव स्वर्गमाप्नुयात्॥१०१॥
तस्य वंशास्तु पञ्चैते पुण्या देवर्षिसत्कृताः।
यैर्व्याप्ता पृथिवी कृत्स्ना सूर्यस्येव गभस्तिभिः॥१०२॥
धन्यः प्रजावानायुष्मान् कीर्त्तिमांश्च भवेन्नरः।
ययातेश्चरितं सर्वं पठन् शृण्वन् द्विजोत्तमः॥१०३॥

इति श्रीमहापुराणे वायुप्रोक्ते चन्द्रवंशकीर्त्तनं नाम
कणत्रिंशोऽध्यायः समाप्तः॥

## अथ द्वात्रिंशोऽध्यायः ।



कार्त्तवीर्य्यार्ज्जुनोत्पत्तिविवरणं ।

सूर्य्य उवाच । यदोर्वंशं प्रवक्ष्यामि श्रेष्ठस्योत्तमतेजसः ।
विस्तरेणानुपूर्व्वेण गदतोमे निबोधत ॥१॥
यदोः पुत्रा बभूवुर्हि पञ्च देवसुतोपमाः ।
सहस्रजिदथ श्रेष्ठः[1] क्रोष्टुर्नीलोजितोलघुः ॥२॥
सहस्रजित्सुतः श्रीमान् शतजिन्नाम पार्थिवः ।
शतजित्सुता विख्यातास्त्रयः परमधार्मिकाः ॥३॥
हैहयश्च हयश्चैव राजा वेणुहयश्च यः ।
हैहयस्य तु दायादोधर्मतन्त्र इति श्रुतिः ॥४॥
धर्म्मतन्त्रस्तु कीर्त्तिस्तु संज्ञेयस्तस्य चात्मजः ।
संज्ञेयस्य तु दयादोमहिष्मान्नाम पार्थिवः ॥५॥
आसीन्महिष्मतः पुत्रोभद्रश्रेण्यः प्रतापवान् ।
वाराणस्यधिपोराजा कथितः पूर्व एव हि ॥६॥
भद्रश्रेण्यस्य दायादोदुर्मदोनाम पार्थिवः ।
दुर्मदस्य ततोधीमान् कनकोनाम विश्रुतः ॥७॥
कनकस्य तु दायादाश्चत्वारोलोकविश्रुताः ।
कृतवीर्यः कार्त्तिवीर्यः कृतवर्मा तथैव च ॥८॥
कृतोजातश्चतुर्थोभूत्कृतवीर्यात्ततोर्जुनः ।
जज्ञे बाहुसहस्रेण सप्तद्वीपेश्वरोनृपः ॥९॥

---

(१) श्रेष्ठ इत्यत्र ज्येष्ठ इति पाठः समीचीनः ।

स हि वर्षायुतन्तप्त्वा तपः परमदुश्चरं ।
दत्तमाराधयामास कार्त्तवीर्योऽत्रिसम्भवं ॥१०॥
तस्मै दत्तोवरान् प्रादाच्चतुरोभूरितेजसः ।
पूर्व्वं बाहुसहस्रन्तु स वव्रे प्रथमं वरं ॥११॥
अधर्म्मे दीयमानस्य सद्भिस्तस्मान्निवारणं ।
धर्म्मेण पृथिवीञ्जित्वा धर्म्मेणैवानुपालनं ॥१२॥
संग्रामांस्तु बहून् जित्वा हत्वा चारीन् सहस्रशः ।
संग्रामे युध्यमानस्य बधः स्यादधिकाद्रणे ॥१३॥
तेनेयं पृथिवी कृत्स्ना सप्तद्वीपा सपत्तना(१) ।
सप्तोदधिपरिक्षिप्ता क्षात्रेण विधिना जनाः ॥१४॥
तस्य बाहुसहस्रन्तु युध्यतः किल धीमतः ।
यौद्धोध्वजोरथश्चैव प्रादुर्भवति मायया ॥१५॥
दशयज्ञसहस्राणि(२) तेषु द्वीपेषु सप्तसु ।
निरर्गलाः स्म निर्वृत्ताः श्रूयन्ते तस्य धीमतः ॥१६॥
सर्वे यज्ञा महावाहोस्तस्यासन् भूरितेजसः ।
सर्वे काञ्चनवेदीकाः सर्वे युपैश्च काञ्चनैः ॥१७॥
सर्वे देवैर्म्महाभागैर्विमानस्थैरलङ्कृताः ।
गन्धर्व्वैरप्सरोभिश्च नित्यमेवोपशोभिताः ॥१८॥
तस्य राज्ञोजगौ गाथां गन्धर्वोनारदस्तथा ।
चरितं तस्य राजर्षेर्महिमानं निरीक्ष्य च ॥१९॥

---

(१) सपर्व्वता इति ख० ग० ।
(२) देशयज्ञसहस्रणीति ङ० च० छ ।

न नूनं कार्त्तवीर्य्यस्य गतिं यास्यन्ति मानवाः ।
यज्ञैर्दानैस्तपोभिश्च विक्रमेण श्रुतेन च ॥२०॥
द्वीपेषु सप्तसु स वै खड्गी वरशरासनी(१) ।
रथी राजाप्यनुचरोन्योऽगाश्चैवानुदृश्यते ॥२१॥
अनष्टद्रव्यश्चैवासीत्(२) न शोकेन च विभ्रमः ।
प्रभावेन महाराज्ञः प्रजा धर्म्मेण रक्षतः ॥२२॥
पञ्चाशीतिसहस्राणि वर्षाणां स नराधिपः ।
सप्त सप्त वारान् संम्राट् चक्रवर्त्ती बभूव ह ॥२३॥
स एव पशुपालोऽभूत् क्षेत्रपालस्तथैव च ।
स एव वृष्ट्या पर्जन्योयोगित्वादर्ज्जुनोऽभवत् ॥२४॥
स वै बाहुसहस्रेण ज्याघातकठिनेन च ।
भाति रश्मिसहस्रेण शारदेनेव भास्करः ॥२५॥
स हि नागसहस्रेण महिश्मत्यां(३) नराधिपः ।
कर्कोटकसभाञ्जित्वा पुरीं तत्र न्यवेशयत् ॥२६॥
स वै वेगे समुद्रस्य प्रावृट्कालाम्बुजेक्षणः ।
क्रीड़न्निव सुखोद्विग्नः प्रावृट्कालञ्चकार ह ॥२७॥

---

(१) तूणी खड्गी शरासनीति क० ।

(२) अत्र आदर्शपुस्तकमात्रे भ्रमात्मकपाठाः सन्ति । यथा, अनष्टद्रव्या-श्चवासीदिति क०, अनष्टद्रव्यात्तवासीदिति ख०, अनष्टद्रव्या भुवसो इति ग०, अनष्टद्रव्यानाचासीदिति ङ०, अनष्टद्रव्या न चासीदिति च० छ०, अनष्टद्रव्यान्तवासीदिति ज० ।

(३) माहिष्मत्यां इति ख० ग० ।

लुलिता क्रीड़ता तेन हेमस्रग्दाममालिनी[१] ।
ऊर्म्मिभ्रूकुटिसन्नादा शङ्किताभ्येति नर्मदा ॥२८॥
पुरा स तामनुसरन्नवगाढोमहार्णवं ।
चकारोद्वृत्य वेलान्तं स कालः प्रावृषोद्भवं ॥२९॥
तस्य बाहुसहस्रेण चोभ्यमाने महोदधौ ।
भवन्ति लीना निश्चेष्टाः पातालस्था महासुराः ॥३०॥
चूर्णीकृतमहावीचिलीनमीनमहाविषाः ।
पतिता विद्रुफेनौघमावर्त्तक्षिप्तदुस्सहं ॥३१॥
चकार क्षोभयन्राजा दोःसहस्रेण सागरं ।
देवासुरपरिक्षिप्तं क्षीरोदमिव सागरं ॥३२॥
मन्दरक्षोभणकृता ह्यमृतोदकशङ्किताः ।
सहसोत्पादिता भीता भीमं दृष्ट्वा[२] नृपोत्तमं ॥३३॥
नतनिश्चलमूर्द्धानो[३] बभूवुश्च महोरगाः ।
सायाह्ने कदलीषण्डा निर्वातस्तिमिता इव ॥३४॥
स वै बद्ध्वा धनुर्य्यान उत्सिक्तः पञ्चभिः शरैः ।
लङ्कायां मोहयित्वा तु सबलं रावणं बलात् ।
निर्जित्य बद्ध्वा चानीय माहिष्मत्यां बबन्ध तं ॥३५॥

---

(१) मालिनीत्यत्र शालिनीतिपाठः समीचीनः ।
(२) दृष्ट्वेत्यत्र आर्षप्रयोगादेककर्तृत्वनियमोनास्ति ।
(३) अत्र सर्व्वेष्वादर्शपुस्तकेषु भ्रमसङ्कुलपाठाः सन्ति । यथा, नतवि-श्चितमूर्द्धानो इति क० ञ०, ततनिश्चित्य मूर्द्धानो इति ख०, नतनि-श्चित्य मूर्द्धानो इति ग०, नतनिश्चितमूर्द्धाना इति ङ० च० छ० ।

ततोगत्वा पुलस्त्यस्तु अर्ज्जुनं च प्रसादयत् ।
मुमोच राजा पौलस्त्यं पुलस्त्येनानुपालितं ॥३६॥
तस्य बाहुसहस्रस्य बभूव ज्यातलस्वनः ।
युगान्तेम्बुदवृन्दस्य[१] स्फुटितस्याशनेरिव ॥३७॥
अहो मृधे महावीर्यं भार्गवोयस्य सोऽच्छिनत् ।
मृधे सहस्रं बाहूनां हेमतालवनं यथा ॥३८॥
तृषितेन कदाचित्स भिक्षितश्चित्रभानुना ।
सप्त द्वीपांश्चित्रभानोः प्रादाद्भिक्षां विशाम्पतिः ॥३९॥
पुराणि घोषान् ग्रामांश्च पत्तनानि च सर्व्वशः ।
जज्वाल तस्य बाणेषु चित्रभानुर्दिधक्षया ॥४०॥
स तस्य पुरुषेन्द्रस्य प्रभावेन महायशाः ।
ददाह कार्त्तवीर्य्यस्य शैलांश्चापि वनानि च ॥४१॥
स शून्यमाश्रमं सर्वं वरुणस्यात्मजस्य वै ।
ददाह सवनद्वीपान् चित्रभानुः सहैहयः ॥४२॥
संलेभे वरुणः पुत्रं पुरा भास्विन[२]मुत्तमं ।
वशिष्ठनामा स मुनिः ख्यातस्त्वापः श्रितः श्रुतः[३] ॥४३॥

---

(१) अत्र अम्बुदवृन्दस्येतिपाठः सम्भवपरः ।
(२) भाविनमिति क० ज० ।
(३) अत्र लिपिकरप्रमादवशात् आदर्शपुस्तकमात्रे बहवः पाठाः सन्ति । यथा, ख्यातया एव इत्युत इति क०, ख्यात आपइवत्युतइति ख०, ख्यात आव ऊवद्युत इति ग०, ख्यात आपव इत्युत इति ङ०, ख्यात आप इवत्फतं इति च०, ख्यात आ एव इत्यत इति छ० ज० ।

तत्रापद[1]स्तदा क्रोधादर्जुनं शप्तवान्विभुः ।
यस्मान्न वर्जितमिदं वनं ते मम हैहय ॥४४॥
तस्मात् ते दुष्करं कर्म्म कृतमन्योहनिष्यति ।
अर्जुनोनाम कौन्तेयोन च राजा भविष्यति ॥४५॥
अर्जुन त्वां महावीर्य्योरामः प्रहरतां वरः ।
छित्वा बाहुसहस्रं वै प्रमथ्य तरसा बली ॥४६॥
तपस्वी ब्राह्मणश्चैव वधिष्यति महाबलः ।
तस्य रामस्तदा ह्यासीन्मृत्युशापेन धीमतः ॥४७॥
राज्ञा तेन वरश्चैव स्वयमेव वृतः पुरा ।
तस्य पुत्रशतं ह्यासीत्[2] पञ्च तत्र महारथाः ॥४८॥
कृतास्त्रा बलिनः शूरा धर्म्मात्मानोयशस्विनः ।
शूरश्च शूरसेनश्च धृष्णाद्यं कृष[3] एव च ॥४९॥
जयध्वजश्च वै पुत्रा अवन्तिषु[4] विशांपतेः ।
जयध्वजस्य पुत्रस्तु जालजङ्घः[5] प्रतापवान् ॥५०॥
तस्य पुत्रशतं ह्येव[6] तालजङ्घा इति श्रुतं ।
तेषां पञ्च गणाः ख्याताः हैहयानां महात्मनां ॥५१॥

(१) अत्रापद इत्यत्र दृष्टापद इति प्रयोगः साधुः।
(२) ह्यासीदित्यत्र भावीतिपाठः साधीयान् ।
(३) हृष्णाद्यं कृष्ण इति ख०, दृष्टाद्यं वृष्टि इति ग०, कृष्णान्धं कृष्ण इति ङ० च०, वृष्णाद्यं वृष्ट इति छ० ।
(४) जयध्वजस्य वै कर्त्ता अयन्तिषु, इति भ्रमात्मकपाठः आदर्शपुस्तकमात्रेऽस्ति ।
(५) तालजङ्घ इति ख० ग० ङ० च० ।
(६) पुत्रसहस्रं हीति ख० ग० ।

वीरहोत्रा ह्यसञ्जाता भोजा[१]श्चावन्तयस्तथा ।
तुण्डिकेराश्च विक्रान्तास्तालजङ्घास्तथैव च ॥५२॥
वीरहोत्रसुतश्चापि अनन्तोनाम पार्थिवः ।
दुर्जयस्तस्य पुत्रस्तु बभूवामित्रदर्शनः ॥५३॥
अनष्टद्रव्यता चैव तस्य राज्ञोबभूव ह ।
प्रभावेन महाराजः प्रजास्ताः पर्य्यपालयत् ॥५४॥
न तस्य वित्तनाशस्य नष्टं प्रतिलभेत सः ।
कार्तवीर्यस्य योजन्म कथयेदिह धीमतः ॥५५॥
वित्तवान् भवतेचैव धर्म्मश्चास्य विवर्द्धते ।
यथा लष्टा यथा दाता तथा स्वर्गे महीयते ॥५६॥

इति श्रीमहापुराणे वायुप्रोक्ते कार्त्तवीर्य्यार्जुनोत्पत्तिविवरणं नाम द्वात्रिंशोऽध्यायः समाप्तः ॥

---

(१) वीराहान्नोऽथ संप्रोतोभोज्य इति क० ज० ।

# अथ त्रयस्त्रिंशोऽध्यायः ।



व्यामघवृत्तान्तकथनं ।

ऋषय ऊचुः । किमर्थं भुवनं दग्धमपवस्यं महात्मना ।
कार्त्तवीर्येण विक्रम्य तन्नः प्रब्रूहि पृच्छतां ॥१॥
रक्षिता स तु राजर्षिः प्रजानामिति नः श्रुतं ।
कथं स रक्षिता भूत्वानाशयत्तत्तपोवनं ॥२॥
सूत उवाच । आदित्योविप्ररूपेण कार्त्तवीर्यमुपस्थितः ।
तृप्तिकामः प्रयच्छान्नमादित्योऽहं न संशयः ॥३॥
राजोवाच । भगवन् केन ते तुष्टिर्भवेद्ब्रूहि दिवाकर ।
कीदृशं भोजनं दद्मि श्रुत्वा च विदधाम्यहं[1] ॥४॥
सूर्य उवाच । स्थावरं देहि मे सर्वमाहारं ददतां वर ।
तेन तृप्तोभवेयं वै न तुष्येऽन्येन पार्थिव ॥५॥
राजोवाच । न शक्यं स्थावरं सर्व्वं तेजसा मानुषेण तु ।
निर्द्दग्धुं तपसां श्रेष्ठ त्वामेव प्रणमाम्यहं ॥६॥
आदित्य उवाच । तुष्टस्तेऽहं शरान् दद्मि अक्षयान् सर्वतः मुखान् ।
प्रक्षिप्ताः प्रज्वलिष्यन्ति मम तेजःसमन्विताः ॥७॥
आदिष्टं तेजसा मेघसागरं शोषयिष्यति ।
शुष्कं भस्म करिष्यामि तेन प्रीतोनराधिप ॥८॥

---

(१) विददाम्यहमिति क० ।

ततः शरानथादित्यस्त्वर्जुनाय प्रयच्छति ।
ततः संप्राप्य सुमहत्स्थावरं सर्व्वमेव हि ॥९॥
आश्रमानथ ग्रामांश्च घोषांश्च नगराणि च ।
तपोवनानि रम्याणि वनान्युपवनानि च ॥१०॥
एवं प्राचीनमदहत्ततः सूर्य्यप्रदक्षिणं(१) ।
निर्वृक्षा निस्तृणा भूमिर्दग्धा सूर्येण तेजसा ॥११॥
एतस्मिन्नेव काले तु अपोनिलयमाश्रितः ।
दशवर्षसहस्राणि जलवासा(२) महानृषिः ॥१२॥
पूर्णे व्रते महातेजा उदतिष्ठत्तपोधनः ।
सोऽपश्यदाश्रमं दग्धमर्जुनेन महानृषिः ।
क्रोधाच्छशाप राजर्षिं कीर्त्तितं वो यथा मया ॥१३॥
सूत उवाच । क्रोष्टोः शृणुत राजर्षेर्वंशमुत्तमपूरुषं ।
यस्यान्ववाये संभूतो वृष्णिर्वृष्णिकुलोद्वहः ॥१४॥
क्रोष्टोरेकोऽभवत् पुत्रो वृजिनीवान् महायशाः ।
वाजिनीवतमिच्छन्ति स्वाहिं स्वाहावतां(३) वरं ॥१५॥
स्वाहेः पुत्रोऽभवद्राजा रुषादुर्ददतां वरः ।
घृतम्प्रसूत(४) मिच्छन्ति रुषादोरग्र्यमात्मजं ॥१६॥
महाक्रतुभिरीजे स विविधैराप्तदक्षिणैः ।

(१) आदर्शपुस्तकमात्रे सर्व्वाप्रदक्षिणामिति पाठोऽस्ति ।
(२) जलवासा इत्यत्र व्रतेऽतिष्ठन् इति पाठः सुसङ्गतः ।
(३) स्वाहावतामित्यत्र स्वाहावतामितिपाठः साधीयान् ।
(४) सूतंप्रसूतमिति च० क० ।

चित्रैश्चित्ररथस्तस्य पुत्रकर्म्मभिरन्वितः ॥१७॥
एवं चित्ररथोवीरोयज्वान् विपुलदक्षिणान्(१) ।
शशविन्दुः परं वृत्तोराजर्षीणामनुष्ठितः ॥१८॥
चक्रवर्त्ती महासत्त्वोमहावीर्य्योबहुप्रजः ।
तत्रानुवंशश्लोकोऽयं यस्मिन् गीतः पुराविदैः ॥१९॥
शशविन्दोऽस्तु पुत्राणां शतानामभवच्छतं ।
धीमतामनुरूपाणां भूरिद्रविणतेजसां ॥२०॥
तेषां षट् च प्रधानास्तु पृथुसाह्वा महाबलाः ।
पृथुश्रवाः पृथुयशाः पृथुधर्म्मा पृथुञ्जयः ॥२१॥
पृथुकीर्त्तिः पृथुन्दाताः राजानः शाशिविन्दवाः ।
शंसन्ति च पुराणानि पार्थश्रवसमन्तरं ।
अन्तरः स पुरा यस्तु यज्ञस्य तनयोभवत्(२) ॥२२॥
उशनाः सुतधर्म्मात्मा॰ अवाप्य पृथिवीमिमां ।
आजहाराश्वमेधानां शतमुत्तमधार्म्मिकः ॥२३॥
मरुत्तस्तस्य तनयोराजर्षीणामनुष्ठितः ।
वीरः कम्बलवर्हिस्तु मरुत्ततनयः स्मृतः ॥२४॥

---

(१) एवं चित्ररथ इति श्लोकार्द्धस्य आकाङ्क्षानिवृत्तेरभावदर्शनात् अस्मात् परं कतिपयवाक्यपतनं सूच्यते ।

(२) अत्र सर्व्वेषु आदर्शपुस्तकेषु लिपिकरप्रमादसम्भूता बहवः पाठाः सन्ति । यथा, अन्तरस्य पुरायस्तु पुरयोऽस्तु सुतोभवत् इति क०, अन्तरस्य पुरायस्तु पुरा यस्तु सुतोऽभवत् इति ख० छ० ज०, एतच्छ्लोकार्द्धं ग०पुस्तके नास्ति, अनिरस्य पुरा यस्तु अयज्ञस्य तनयोऽभवत् इति ङ०, अनिरस्य पुरा यस्तु यज्ञस्य तनयोऽभवदिति च० ।

पुत्रस्तु रुक्मकवचो विद्वान् कम्बलवर्हिषः।
निहत्य रुक्मकवचः पुरा कवचिनो रणे ॥२५॥
धन्विनो निशितैर्बाणैरवाप श्रियमुत्तमां।
ब्राह्मणेभ्यो ददौ वित्तमश्वमेधमहायशाः ॥२६॥
राज्ञस्तु रुक्मकवचादपरावृत्य वीरहाः।
जज्ञिरे पञ्च पुत्रास्तु महासत्त्वा महाबलाः ॥२७॥
रुक्मेषुः पृथुरुक्मश्च ज्यामघः परिघो हरिः।
परिघञ्च हरिञ्चैव विदेहे स्थापयत्पिता ॥२८॥
ब्रह्मेषु[१]रभवद्राजा पृथुरुक्मस्तदाश्रयः[२]।
तेभ्यः प्रव्रजितो राज्यात् ज्यामघोऽभवदाश्रमे ॥२९॥
प्रशान्तस्तु वने घोरे ब्राह्मणेनावबोधितः।
जगाम धनुरादाय देशमध्यं रथी ध्वजी ॥३०॥
नर्म्मदानूप एकाकी मेकलामृत्तिका अपि[३]।
ऋक्षवन्तं गिरिं गत्वा शुक्तिमन्या[४]मथाविशत्[५] ॥३१॥

(१) ब्रह्मेषुरित्यत्र रुक्मेषुरितिपाठः सम्भवपरः।
(२) तदाश्रयः इति ङ॰ च॰ छ॰।
(३) अत्र लिपिकरप्रमादात् आदर्शपुस्तकेषु बहुपाठाः सन्ति। यथा, नर्म्मदोन्टप एकाकी मेकली मृत्तिकावती इति क॰ ज॰, नर्म्मदानूप मेकाकी मेकलामृत्तिकामपि इति ख॰, एतच्छ्लोकार्द्धं ग॰पुस्तके नास्ति, नर्म्मदान्टप एकाकी मेलकां मृत्तिकावतीमिति ङ॰ च॰ छ॰।
(४) मुक्तिमत्यामिति क॰।
(५) नर्म्मदायाः शुक्तिप्रवेशे कोहेतुः ततः परं किं वृत्तं इत्याकाङ्क्षापरिसमाप्तेरभावात्, नर्म्मदानूप इतिश्लोकानन्तरं कतिपयश्लोका निपेतुरिति ध्येयं, अथवा ग्रन्थान्तरे विदिततदाख्यानानां श्रोतॄणामाकाङ्क्षाविरहात् सूतेन तदाख्यानं न साकल्येनोक्तं।

ज्यामघस्याभवद्भार्या शैव्या बलवती भृशं ।
अपुत्रोऽपि स वै राजा भार्यामन्यां न विन्दति ॥३२॥
तस्यासीद्विजयोयुद्धे ततः कन्यामवाप सः ।
भार्यामुवाच राजा स स्नुषेति तु नरेश्वरः ॥३३॥
एवमुक्ताब्रवीदेवं काम्येयन्ते स्नुषेति सा ।
यस्ते जनिष्यते पुत्रस्तस्य भार्या भविष्यति ॥३४॥
तस्य सा तपसोग्रेण शैव्या वैश्यं(१) प्रसूयत ।
पुत्रं विदर्भं सुभगा शैव्या परिणता सती ॥३५॥
राजपुत्रौ तु विद्वांसौ स्नुषायां क्रथकौशिकौ ।
पुत्रोविदर्भोऽजनयच्छूरौ रणविशारदौ ॥३६॥
लोमपादं तृतीयन्तु पश्चाज्जज्ञे सुधार्मिकः ।
लोमपादात्मजोवस्तुराहृतिस्तस्य चात्मजः ॥३७॥
कौशिकस्य चिदिः पुत्रस्तस्माच्चैद्या नृपाः स्मृताः ।
क्रथोर्विदर्भपुत्रस्तु कुन्तिस्तस्यात्मजोभवत् ॥३८॥
कुन्तेर्धृष्टसुतोजज्ञे पुरोऽधृष्टः प्रतापवान् ।
धृष्टस्यपुत्रोधर्मात्मा निर्वृतिः परवीरहा ॥३९॥
तस्य पुत्रोदशार्हस्तु महाबलपराक्रमः ।
दशार्हस्य सुतोव्योमा ततोजीमूत उच्यते ॥४०॥
जीमूतपुत्रोविकृतिस्तस्य भीमरथः सुतः ।
अथ भीमरथस्यासीत् पुत्रोरथवरः किल ॥४१॥

---

(१) चेयमिति क० ।

दाता धर्म्मरतो[1] नित्यं शीलसत्यपरायणः ।
तस्य पुत्त्रोनवरथस्ततोदशरथः स्मृतः ॥४२॥
तस्य चैकादशरथः शकुनिस्तस्य चात्मजः ।
तस्मात् करम्भकोधन्वी देवरातोऽभवत्ततः ॥४३॥
देवक्षत्रोऽभवद्राजा देवरातिर्म्महायशाः ।
देवक्षत्रसुतोजज्ञे देवनः क्षत्रनन्दनः ॥४४॥
देवनात् स मधुर्जज्ञे यस्य मेधार्थसम्भवः ।
मधोस्वापि महातेजा मनुर्मनुवशस्तथा ॥४५॥
मन्दनस्य महातेजा महापुरुवशस्तथा ।
आसीत् पुरुवशात्[2] पुत्त्रः पुरुद्वान् पुरुषोत्तमः ॥४६॥
जज्ञे पुरुद्वतः पुत्त्रोभद्रवत्यां पुरूद्वहः ।
ऐक्ष्वाकी त्वभवद्भार्या सत्त्वस्तस्यामजायत ।
सत्त्वात् सत्त्वगुणोपेतः सात्वतः कीर्त्तिवर्द्धनः ॥४७॥
इमां विसृष्टिं विज्ञाय ज्यामघस्य महात्मनः ।
प्रजावानेति सायोज्यं राज्ञः सोमस्य धीमतः ॥४८॥

इति श्रीमहापुराणे वायुप्रोक्ते ज्यामघवृत्तान्तकथनं नाम त्रयस्त्रिंशोऽध्यायः समाप्तः ।

---

(१) दानधर्म्मरतो इति क० ख० छ० ज० ।
(२) पुरुवशः इति भ्रमजनितपाठ आदर्शपुस्तकमात्रेऽस्ति ।

# अथ चतुस्त्रिंशोऽध्यायः।

### विष्णुवंशवर्णनं।

सूत उवाच। सात्वती रूपसम्पन्नं कौशल्या सुषुवे सुतं।
भजिनं भजमानं च दिव्यं देवावृधं नृपं॥१॥
अन्धकञ्च महाभोजं वृष्णिञ्च यदुनन्दनं।
तेषां हि सर्गास्चत्वारः शृणुध्वं विस्तरेण वै॥२॥
भजमानस्य सृञ्जय्यां वाह्यस्योपरि वाह्यकः[1]।
सृञ्जयस्य सुते द्वे तु वाह्यकस्ते उदावहत्॥३॥
तस्य भार्ये भगिन्यौ ते प्रासूतेति सुतान् बहून्।
निमिञ्च पणवञ्चैव वृष्णिः परपुरञ्जयः॥४॥
ये वाह्यकार्य्यसृञ्जय्यां भजमानाद्विजज्ञिरे।
अयुतायुतसाहस्रशतजिदथ वामकः[2]॥५॥

---

(१) अत्र लेखकप्रमादात् आदर्शपुस्तकमात्रे भ्रमसङ्कुलितपाठाः सन्ति; यथा, वाह्यस्योपरिवाह्यकौ इति क० ङ० च०, भजमानस्य भ्रतकोद्यावाह्योपरिवाह्यकौ इति ख०, ग०पुस्तके एतच्छ्लोकार्द्धाभावोवर्त्तते, भजमानस्य मृञ्जस्यावाह्यस्योपरिवाह्यकौ इति छ० ज०।

(२) अयुतायुतसाहस्रेत्यादि भजमानाद्विजज्ञिरे इत्यन्तं श्लोकार्द्धद्वयं क० ग० ज० पुस्तकेषु न विद्यते। अन्येष्वादर्शपुस्तकेषु भ्रमात्मकपाठौ स्तः। यथा, अयुतायुतसाहस्राच्छताजिदथ वामकः इति ङ० च० छ०, अष्ट चायुतसाहस्राक्रान्ताजिदथमावकः इति ख०।

वाल्मकार्थाभगिन्यां ये[१] भजमानाद्विजज्ञिरे ।
तेषां देवावृधोराजा चचार परमं तपः ॥६॥
पुत्रः सर्वगुणोपेतोमम भूयादिति स्म ह ।
संयोज्यात्मानमेवं स वर्णासाजलमस्पृशत् ॥७॥
सा चोपस्पर्शनात्तस्य चकार स्पृषिमापगा ।
कल्याणञ्च नरपतेस्तस्य सा निम्नगोत्तमा ॥८॥
चिन्तयाभिपरीताङ्गा जगामाथ विनिश्चयं ।
नाधिगच्छामि तां नारीं यस्यामेवंविधः सुतः ॥९॥
भवेत्सर्वगुणोपेतोराज्ञोदेवावृधस्य हि ।
तस्मादस्य स्वयं चाहं भवाम्यद्य सहव्रता ।
जज्ञे तस्याः स्वयं हस्तो[२]भावस्तस्य यथेरितः ॥१०॥
अथ भूत्वा कुमारी तु साविची परमं वचः ।
चिन्तयामास[३]राजानं तामियेष स पार्थिवः ॥११॥
तस्यामाधत्त गर्भं स तेजस्विनमुदारधीः ।
अथ सा नवमे मासि सुषुवे सरितांवरा ॥१२॥
पुत्रं सर्वगुणोपेतं यथा देवावृधेप्सितः[४] ।

---

(१) ख० ङ० च० छ०पुस्तकेषु वाल्मकाया भगिन्यास्ते इति पाठोऽस्ति, अयन्तु न सम्यक् ।

(२) हस्त इत्यत्र लक्षणया हस्ताद्यवयवाः उपलभ्यन्ते ।

(३) चिन्तयामास इत्यत्र कथयामास इति प्रयोगः साधीयान् ।

(४) आदर्शपुस्तकेषु अत्र लिपिकरप्रमादजनिता बहवः पाठाः सन्ति । यथा, वस्तु यथाभुवं तद इति क०, लब्धवेधावृधा तदा इति ख० ग०, तव देवाभयं तदा इति ङ०, तदेवाभ्यथयं तदा इति च०, वस्तुं वृधा तुसं तदा इति छ०, वस्तृस्तु यथा सुभं तद इति ज० ।

तत्र वंशे पुराणज्ञा गाथां गायन्ति वै द्विजाः ॥१३॥
गुणान् देवावृधस्यापि कीर्त्तयन्तो महात्मनः ।
यथैव शृणुते दूरात् संपश्यति तथान्तिकात् ॥१४॥
बभ्रुः श्रेष्ठो मनुष्याणां देवैर्देवावृधः समः ।
पुरुषाः[१] पञ्चषष्टिश्च सहस्राणि च सप्ततिः ।
येऽमृतत्वमनुप्राप्ता[२] बभ्रुर्देवावृधादपि ॥१५॥
यज्वा दानपतिर्वीरो ब्रह्मण्यः सत्यवाग्बुधः ।
कीर्त्तिमांश्च महाभागः सात्वतानां महारथः ॥१६॥
तस्यान्ववाये सुमहाभोजयेमार्तिकावलाः[३] ।
गान्धारी चैव माद्री च वृष्णेर्भार्य्ये बभूवतुः ॥१७॥
गान्धारी जनयामास सुमित्रं मित्रनन्दनं ।
माद्री युधाजितं पुत्रं सा तु वै देवमीढुषं[४] ॥१८॥
अनमित्रं सुतश्चैव तावुभौ पुरुषोत्तमौ ।
अनमित्रसुतो निघ्नो निघ्नस्य द्वौ बभूवतुः ॥१९॥
प्रसेनश्च महाभागः शक्रजिच्च[५] सुतावुभौ ।
तस्य शक्रजितः पूर्वः सखा प्राणसमोऽभवत् ॥२०॥
स कदाचिन्निशापाये रथेन रथिनांवरः ।

---

(१) पुरुषाणां पञ्चषष्टिरिति क० ।
(२) येनामृतत्वं संप्राप्ता इति पाठोऽत्र सङ्गतार्थः ।
(३) भोजयेमार्त्तिकावृताः इति ङ० च० क० ।
(४) देवमीषक्रमिति ख०ग०, देवमीढुषमिति ङ०च०, देवमीयुषमिति क० ।
(५) शत्रुजिच्चेति ख० ग० । शक्रजित् शत्रुजिदेतदुभयपाठौ लिपिकरप्रमादजनितौ । अत्र सत्राजिदितिपाठः सम्भवपरः ।

तीर्थकूलादपः स्प्रष्टुमुपस्थातुं ययौ रविं ॥२१॥
तस्योपतिष्ठतः सूर्यो विवस्वानग्रतः स्थितः ।
अस्पष्टमूर्त्तिर्भगवांस्तेजोमण्डलवान् विभुः ॥२२॥
अथ राजा विवस्वन्तमुवाच स्थितमग्रतः ।
यथैव व्योम्नि पश्यामि त्वामहं ज्योतिषाम्पते ॥२३॥
तेजोमण्डलिनञ्चैव तथैवाप्यग्रतः स्थितं ।
कोविशेषोविवस्वंस्ते साचादुपगतेन वै[1] ॥२४॥
एतच्छ्रुत्वा स भगवान् मणिरत्नं स्यमन्तकं ।
स्वकण्ठादवमुच्याथ बबन्ध नृपतेस्तदा ॥२५॥
ततोविग्रहवन्तं तं ददर्श नृपतिस्तदा ।
प्रतिमा[2]मथ तां दृष्ट्वा मुहूर्त्तं कृतवांस्तथा ॥२६॥
तमतिप्रस्थितं भूयोविवस्वन्तं स शक्रजित् ।
प्रोवाचाग्निसवर्णां त्वं येन लोकान् प्रयास्यति[3] ।
तदेव मणिरत्नं तन्मां भवान् दातुमर्हति[4] ॥२७॥

---

(१) अत्र आदर्शपुस्तकमात्रे भ्रमाकुलितपाठाः सन्ति। यथा, सख्योतोपगजेन वै इति क०, संख्यानोपगतेन वै इति ख० ग० ङ०, सख्यानोपगतेम वै इति च०, सख्योनोषगतेन वै इति छ०, सख्योतोपगजेन वै इति ज० ।
(२) प्रकृतिमिति च० ।
(३) प्रोवाचाग्निसवर्णात्वं यदा ह्यैव प्रयास्यति इति पाठोवाक्यार्थप्रतिपादकः ।
(४) शक्रजितः प्रार्थनां श्रुत्वा सूर्य्येण यत् कृतं यदुक्तं वा तदभावदर्शनात् प्रोवाचाग्निसवर्णात्वमिति श्लोकात् परं कानिचिद्वाक्यानि पतितत्वेनोपलभ्यन्ते।

स्यमन्तकं नाम मणिं दत्तवांस्तस्य भास्करः।
स तमाबध्य नगरं प्रविवेश महीपतिः ॥२८॥
तं जनाः पर्यधावन्त सूर्योऽयं गच्छतीति च।
सभां विस्मापयित्वाथ पुरीमन्तःपुरं तथा ॥२९॥
तं प्रसेनजिते दिव्यं मणिरत्नं स्यमन्तकं।
ददौ भ्रात्रे नरपतिः प्रेम्णा शक्तजिदुत्तमं ॥३०॥
स्यमन्तकोनाम मणिर्यस्य राष्ट्रे स्थितोभवेत्।
कालवर्षीच पर्जन्योनच व्याधिभयं तदा ॥३१॥
लिप्सां चक्रे प्रसेनात्तु मणिरत्नं स्यमन्तकं।
गोविन्दोनच तं लेभे शक्तोऽपि न जहार च ॥३२॥
कदाचिन्मृगयां यातः प्रसेनस्तेन भूषितः।
स्यमन्तककृते सिंहाद्वधं प्राप्तः सुदारुणं ॥३३॥
जाम्बवानृक्षराजस्तु तं सिंहं निजघान वै।
आदाय च मणिं दिव्यं स्वं बिलं प्रविवेश ह ॥३४॥
तत्कर्म कृष्णस्य ततोवृष्ण्यन्धकमहत्तराः।
मणौगृध्नुन्तु मन्वानास्तमेव विशशङ्किरे ॥३५॥
मिथ्याभिशस्तिं तेभ्यस्तां बलवानरिसूदनः।
अमृष्यमाणोभगवान् वनं स विचचार ह ॥३६॥
स तु प्रसेनमृगयामचरत्तत्र चाप्यथ।
प्रसेनस्य पदं गृह्य पुरुषैराप्तकारिभिः ॥३७॥
ऋक्षवन्तं गिरिवरं विन्ध्यञ्च नगमुत्तमं।
अन्वेषणपरिश्रान्तः स ददर्श महामनाः ॥३८॥

शाम्बं हतं प्रसेनं तं नाविन्दंस्तत्र वै मणिं ।
अथ सिंहः प्रसेनस्य शरीरस्याविदूरतः ॥३९॥
ऋक्षेण निहतो दृष्टः पादैर्ऋक्षस्य सूचितं ।
पदैरन्वेषयामास गुहामृक्षस्य यादवः ॥४०॥
महत्यतिबिले वाणीं शुश्राव प्रमदेरितां ।
धात्र्या कुमारमादाय सुतं जाम्बवतो द्विजाः ।
प्रीतिमत्याथ[1] मणिना मारोदीरित्युदीरितां ॥४१॥

धात्र्युवाच । प्रसेनमवधीत् सिंहः[2] सिंहो जाम्बवता हतः ।
सुकुमारक मा रोदीस्तव ह्येष स्यमन्तकः ॥४२॥
व्यक्तीकृतश्च शब्दं तं तूर्णं सोऽपि[3] ययौ बिलं ।
अपश्यच्च बिलाभ्यासे प्रसेनमवदारितं ॥४३॥
प्रविश्य चापि भगवांस्तदृक्षबिलमञ्जसा ।
ददर्श ऋक्षराजानं जाम्बवन्तमुदारधीः ॥४४॥
युयुधे वासुदेवस्तु बिले जाम्बवता सह ।
बाहुभ्यामेव गोविन्दो दिवसानेकविंशतिं ॥४५॥
प्रविष्टे च बिलं कृष्णे वासुदेवपुरःसराः ।
पुनर्द्वारवतीमेत्य हतं कृष्णं न्यवेदयन् ॥४६॥
वासुदेवस्तु निर्जित्य जाम्बवन्तं महाबलं ।

(१) प्रीतिमत्याथ इत्यत्र प्रीतिमुत्पाद्य इति पाठः समीचीनः ।
(२) सिंहः प्रसेनमवधीत् इति ख० ग० ।
(३) तं तूर्णं सोऽपि इत्यत्र सम्पूर्णं चापि इति पाठः आदर्शपुस्तकमात्रे वर्त्तते ।

लेभे जाम्बवतीं कन्यामृक्षराजस्य सम्मतां ॥४७॥
भगवत्तेजसा ग्रस्तो जाम्बवान् प्रसभं मणिं ।
सुतां जाम्बवतीमाशु विष्वक्सेनाय दत्तवान् ॥४८॥
मणिं स्यमन्तकं चैव जग्राहात्मविशुद्धये ।
अनुनीय ऋक्षराजं निर्ययौ च तदा बिलात् ॥४९॥
एवं स मणिमादाय विशोध्यात्मानमात्मना ।
ददौ सत्राजिते(१) तं वै मणिं सात्वतसन्निधौ ॥५०॥
कन्यां पुनर्जाम्बवतीमुवाह मधुसूदनः ।
तस्मान्मिथ्याभिशापात् स व्यमुच्यत जनार्दनः ॥५१॥
इमां मिथ्याभिशस्तिं यः कृष्णस्येह व्यपोहितां ।
वेद मिथ्याभिशस्तेः स नाभिशस्यति कर्हिचित् ॥५२॥
दशस्वसृभ्योभार्य्याभ्यः शत्रुजितः शतं सुताः(२) ।
ख्यातिमन्तस्त्रयस्तेषां भङ्गकारस्तु पूर्व्वजः ।
वीरो व्रतपतिश्चैव ह्युपस्वान्तश्च(३) सुप्रियः ॥५३॥
अथ द्वारवती नाम भङ्गकारस्य सुप्रजा ।
सुषुवे सा कुमारीस्तु तिस्रो रूपगुणान्विताः ॥५४॥

---

(१) शक्रजिते इति ख० ग० ङ० च० छ० ।

(२) अत्र लिपिकरप्रमादात् आदर्शपुस्तकेषु बहवः पाठाः सन्ति । यथा, दशस्वसारशक्ताभिर्यज्ञः भ्यश्च सुत शत इति क०, दशश्वर शतुजित्तो भयेभ्यश्च युतं सुताः इति ख०, दशश्चरशत्रजित्तोभायत्यश्च यतं यताः इति ग०, दशस्वसारशतुजित्तो आर्य्याभ्यः शतं पुरा इति ङ० च०, दशस्वसारशक्ताभिर्याभ्यः भ्यश्चसुतं सुताः इति छ० ।

(३) ह्युपस्वान्तांश्चेति आदर्शपुस्तकमात्रे पाठोवर्त्तते ।

सत्यभामोत्तमा स्त्रीणां व्रतिनीव दृढव्रता ।
तथा तपस्विनी चैव पिता कृष्णाय तां ददौ ॥५५॥
यत्तत् सत्राजिते कृष्णो मणिरत्नं स्यमन्तकं ।
प्रादात्तदाहरद्रत्नं(१) भोजेन शतधन्वना ॥५६॥
तदा हि प्रार्थयामास सत्यभामामनिन्दितां ।
अक्रूरोरत्नमन्विच्छन् मणिञ्चैव स्यमन्तकं ॥५७॥
भद्रकारं(२) ततोहत्वा शतधन्वा महाबलः ।
रात्रौ तं मणिमादाय ततोऽक्रूराय दत्तवान् ॥५८॥
अक्रूरस्तु तदा रत्नमादाय स नरर्षभः ।
समयं कारणं चक्रे बोध्योनान्यैस्त्वयेत्युत ॥५९॥
वयमभ्युपपत्स्यामः कृष्णेन त्वं प्रधर्षितः ।
मम च द्वारकाः सर्वा वशे तिष्ठत्यसंशयं ॥६०॥
हते पितरि दुःखार्त्ता सत्यभामा यशस्विनी ।
प्रययौ रथमारुह्य नगरं वारणावतं ॥६१॥
सत्यभामा तु तद्वृत्तं भोजस्य शतधन्वनः ।
भर्तुर्निवेद्य दुःखार्त्ता पार्श्वस्थाश्रूण्यवर्त्तयत् ॥६२॥
पाण्डवानान्तु दग्धानां हरिः कृत्वोदकक्रियां ।
तुल्यार्थे चैव भ्रातॄणां नियोजयति सात्यकिं ॥६३॥
ततस्त्वरितमागम्य द्वारकां मधुसूदनः ।

---

(१) आहरदित्यत्र अक्रूर इति क्रियापदमूहनीयं ।
(२) अत्र ङ० च० छ० ज० पुस्तकेषु भङ्गकारं इति पाठोऽस्ति । केवलं ख० ग० पुस्तकयोर्भङ्गकारमिति पाठो वर्त्तते ।

पूर्वजं हलिनं श्रीमानिदं वचनमब्रवीत् ॥६४॥

हतः प्रसेनः सिंहेन सत्राजित् शतधन्वना ।

स्यमन्तकमहं मार्गे तस्य(१) प्रहर हे प्रभो ॥६५॥

तदारोह रथं शीघ्रं भोजं हत्वा(२) महाबलं ।

स्यमन्तकोमहावाहो तदास्माकं(३) भविष्यति ॥६६॥

ततः प्रवृत्ते युद्धे तु तुमुले भोजकृष्णयोः ।

शतधन्वा न चाक्रूरमैक्षत् सर्वतोदिशि ॥६७॥

अनष्टाश्चावरोहन्तु कृत्वा भोजजनार्दनौ(४) ।

शक्तोऽपि शाठ्याद्धार्द्दिक्याच्चाक्रूरोऽभ्युपपद्यत ॥६८॥

अपयाने ततोबुद्धिं भूयश्चक्रे भयान्वितः ।

योजनानां शतं साग्रं यया च प्रत्यपद्यत ॥६९॥

विख्यातहृदया नाम शतयोजनगामिनी ।

भोजस्य बडवादित्योयया कृष्णमयोधयत् ॥७०॥

प्रवृद्धवेगा बडवा लध्वनां शतयोजनम् ।

दृष्ट्वा रथगतिस्तस्य शतधन्वानमर्द्दयत(५) ॥७१॥

---

(१) तस्येत्यत्र तं वै इति पाठः साधीयान् ।

(२) हत्वेत्यत्र जहीति पाठः साधुः ।

(३) अत्र आदर्शपुस्तकमात्रे भ्रमसंयुक्तपाठोऽस्ति । यथा, स च वोऽस्मि-न्निति क० ञ०, सचरोस्म इति ख०, ग० पुस्तकेऽस्य श्लोकस्याभावो-वर्त्तते, स च वोस्मदिति ङ० च० छ० ।

(४) अत्र युयुधाते इति क्रियापदमूहनीयं ।

(५) अत्र, क्षीणां जवानहृदयां अध्वानं शतयोजनम् । दृष्ट्वा रथस्य तां वृद्धिं शतधन्वानमर्दयत् इति पाठः ङ० च० छ० पुस्तकेषु वर्त्तते, अयन्तु न वाक्यार्थसङ्गतिकरः । एष श्लोकः अन्येष्वादर्शपुस्तकेषु न विद्यते ।

ततस्तस्य हयास्तास्तु श्रमात् खेदाच्च वै द्विजाः ।
खमुत्पेतुरथप्राणाः कृष्णोराममथाब्रवीत् ॥७२॥
तिष्ठस्वेह महाबाहो दृष्टदोषा मया हयाः ।
पद्भ्यां गत्वा हरिष्यामि मणिरत्नं स्यमन्तकम् ॥७३॥
पद्भ्यामेव ततोगत्वा शतधन्वानमच्युतः ।
मिथिलाधिपतिं तं वै जघान परमास्त्रवित् ॥७४॥
स्यमन्तकं न चापश्यद्धत्वा भोजं महाबलं ।
निवृत्तं चाब्रवीत् कृष्णं रत्नं देहीति लाङ्गली ॥७५॥
नास्तीति कृष्णश्चोवाच ततोरामोरुषान्वितः ।
धिक्शब्दमसकृत् पूर्व्वं प्रत्युवाच जनार्द्दनं ॥७६॥
भ्रातृत्वान्मर्षयाम्येष स्वस्ति तेऽस्तु व्रजाम्यहं ।
कृत्यं न मे द्वारकया न त्वया न च वृष्णिभिः ॥७७॥
प्रविवेश ततोरामोमिथिलामरिमर्द्दनः ।
सर्व्वकामैरुपहृतैर्मैथिलेनैव पूजितः ॥७८॥
एतस्मिन्नेव काले तु बभ्रुर्मतिमतांवरः ।
नानारूपान् क्रतून् सर्व्वानाजहार निरर्गलान् ॥७९॥
दीक्षामयं सकवचं रक्षार्थं प्रविवेश ह ।
स्यमन्तककृते राजा गाधिपुत्रोमहायशाः ॥८०॥
अर्थान् रत्नानि चाग्र्याणि द्रव्याणि विविधानि च ।
षष्टिंवर्षगते काले यज्ञेषु विन्ययोजयत् ॥८१॥
अक्रूरयज्ञ इत्येते ख्यातास्तस्य महात्मनः ।
बह्वन्नदक्षिणाः सर्व्वे सर्व्वकामप्रदायिनः ॥८२॥

अथ दुर्य्योधनो राजा गत्वाऽथ मिथिलां प्रभुः ।
गदाशिक्षां ततो दिव्यां बलभद्रादवाप्तवान् ॥८३॥
प्रसाद्य तु ततो विप्रा वृष्ण्यन्धकमहारथैः ।
आनीतो द्वारकामेव कृष्णेन च महात्मना ॥८४॥
अक्रूरमन्धकैः सार्द्धमुपायात् पुरुषर्षभः ।
युद्धे हत्वा तु शत्रुघ्नं सह बन्धुमता बली ॥८५॥
श्वफल्कतनयायास्तु नरायां नरसत्तमौ ।
भङ्गकारस्य तनयौ विश्रुतौ सुमहाबलौ ॥८६॥
जज्ञातेऽन्धकमुख्यस्य शत्रुघ्नो बन्धुमांश्च तौ ।
बधार्थं भङ्गकारस्य कृष्णेन प्रीतिमान् भवेत् ॥८७॥
ज्ञातिभेदभयाद् भीतः समुपेक्षितवांस्तथा ।
अपयाते तथाक्रूरे नावर्षत्पाकशासनः ॥८८॥
अनावृष्ट्या हतं राष्ट्रमभवत्तद्बधोद्यतं ।
ततः प्रसादयामासुरक्रूरं कुकुरान्धकाः ॥८९॥
पुनर्द्वारवतीं प्राप्ते तदा दानपतौ तथा ।
प्रववर्ष सहस्राक्षः कुक्षौ जलनिधेस्ततः ॥९०॥
कन्याञ्च वासुदेवाय स्वसारं शीलसम्मतां ।
अक्रूरः प्रददौ श्रीमान् प्रीत्यर्थं यदुपुङ्गवः ॥९१॥
अथ विज्ञाय योगेन कृष्णो बभ्रुगतं मणिं ।
सभामध्ये तदा प्राह तमक्रूरं जनार्दनः ॥९२॥
यत्तु रत्नं मणिवरं तव हस्तगतं प्रभो ।
तत् प्रयच्छस्व मानार्ह विमतिमत्र मा कृथाः ॥९३॥

षष्टिवर्षगते काले यद्रोषोऽभूत्तदा मम ।
सुसंरूढः सकृत् प्राप्तस्तत्कालामित्य स महान् ॥९४॥
ततः कृष्णस्य वचनात् सर्व्वसात्वतसंसदि ।
प्रददौ तं मणिं बभ्रुरक्रूरेण महामतिः ॥९५॥
तत आर्ज्जवसंप्राप्तबभ्रुहस्तादरिन्दमः(१) ।
ददौ प्रहृष्टमनसा तं मणिं बभ्रवे पुनः ॥९६॥
स कृष्णहस्तात् संप्राप्य मणिरत्नं स्यमन्तकं ।
आबध्य गान्दिनीपुत्रोविरराजांशुमानिव ॥९७॥
इमां मिथ्याभिशस्तिं योविशुद्धामपि चोत्तमां ॥
वेद मिथ्याभिशस्तिं स न प्रजेषु कथञ्चन ॥९८॥
अनिमित्राच्छिनिर्जज्ञे कनिष्ठाद्वृष्णिनन्दनात् ॥९९॥
सत्यवाक् सत्यसम्पन्नः सत्यकस्तस्य चात्मजः ।
सात्यकिर्युयुधानस्य(२) तस्य भूतिः सुतोऽभवत् ॥१००॥
भूतेर्युगन्धरः पुत्र इति शैत्याः प्रकीर्त्तिताः ।
अश्मातेतनयौ पृश्नेः श्वफल्कश्चित्रकश्च यः ॥१०१॥
श्वफल्कस्तु महाराजोधर्मात्मा यत्र वर्त्तते ।
नास्ति व्याधिभयं तत्र नचावृष्टिभयं तथा ॥१०२॥
कदाचित् काशिराजस्य विभोस्तु द्विजसत्तमाः ।
त्रीणि वर्षाणि विषये नावर्षत्पाकशासनः ॥१०३॥
स तत्र वासयामास श्वफल्कं परमार्चितं ।

(१) अत्र लघ्ध्वेत्यूहनीयं।
(२) अत्र युयुधानश्चेति पाठः सङ्गतः। असद्धानश्चेति ख० ।

श्वफल्कपरिवामेन प्रावर्षत्पाकशासनः ॥१०४॥
श्वफल्कः काशिराजस्य सुतां भार्या[१]मनिन्दिताम् ।
गान्दिनीं नाम गां सा हि ददौ विप्राय नित्यशः ॥१०५॥
सा मातुरुदरस्था वै बहुवर्षशतान् किल ।
वसति स्म न वै जज्ञे गर्भस्थान्तां पिताब्रवीत् ॥१०६॥
जायस्व शीघ्रं भद्रन्ते किमर्थं चापि तिष्ठसि ।
प्रोवाच चैनं गर्भस्था सा कन्या गौर्दिने दिने ॥१०७॥
यदि दत्ता तदा स्यां हि यदि स्यामीरितां पितः ।
तथेत्युवाच तां तस्याः पिता काममपूपुरत् ॥१०८॥
दाता यज्वा च शूरस्य श्रुतवानतिथिप्रियः ।
तस्याः पुत्रः स्मृतोऽक्रूरः श्वफल्कोभूरिदक्षिणः ॥१०९॥
उपमङ्गुस्तथा मङ्गुर्मृदुरश्चारिमेजयः ।
गिरिरक्ष[२] स्तेतायचः शत्रुघ्नोवारिमर्द्दनः[३] ॥११०॥
धर्मभृच्च शृष्टचयोवर्गमोच[४]स्तथापरः ।
आवाहप्रतिवाहौ च वसुदेवा वराङ्गना ॥१११॥
अक्रूरादुग्रसेन्यान्तु सुतौ द्वौ कुलनन्दिनौ ।
देवश्चानुपदेवश्च जज्ञाते देवसंमितौ ॥११२॥
चित्रकस्याभवन् पुत्राः पृथुर्विपृथु[५]रेव च ।

(१) अत्र चकारेति क्रियापदमूह्यं ।
(२) गिरिरक्ष इति ख० ग० गिरिरिक्ष इति ङ० च० ।
(३) प्यरिमर्द्दनः इति छ० ।
(४) गन्धमोच इति ङ० च० छ० ।
(५) विपृथु इति क० छ० ज० ।

अश्वग्रीवोऽश्वबाहुश्च सुपार्श्वकगवेषणौ ॥११३॥
अरिष्टनेमिरश्वश्च सुवर्मा वर्मधर्मभृत्।
अभूमिर्बहुभूमिश्च श्रविष्टाश्रवणे स्त्रियौ ॥११४॥
सत्यकात् काशिदुहिता(१) लेभे सा चतुरः सुतान्।
ककुदं भजमानञ्च शमीकबलबर्हिषौ ॥११५॥
ककुदस्य सुतो वृष्टि(२)र्वृष्टेस्तु तनयोऽभवत्।
कपोतरोमा तस्याथ रैवतोऽभवदात्मजः ॥११६॥
तस्यासीत्तुम्बुरुसखा(३) विद्वान् पुत्रोऽभवत्किल।
ख्यायते यस्य नाम्ना स चन्दनोदकदुन्दुभिः ॥११७॥
तस्माच्चाभिजितः(४) पुत्र उत्पन्नस्तु पुनर्वसुः।
अश्वमेधन्तु पुत्रार्थे आजहार नरोत्तमः ॥११८॥
तस्य मध्येऽतिरात्रस्य सदोमध्यात्समुत्थितं।
ततस्तु विद्वान् धर्मज्ञो दाता यज्वा पुनर्व्वसुः(५) ॥११९॥
तस्यापि पुत्रमिथुनं बाहुबाणाजितः किल(६)।

---

(१) सत्यदुहिता इति ङ० च०। (२) वृष्णिरिति च०।
(३) तुम्बरसखा इति क० ङ० च०, पुरुषः पुत्र इति ख० ग०, तुम्बरसखा इति छ० ज०। (४) तस्येति च०।
(५) ततस्तु विद्वान् धर्मज्ञो इतिश्लोकार्द्धं अश्वमेधन्तु पुत्रार्थे इति श्लोकार्द्धात् प्राक् पठनीयं।
(६) अत्र आदर्शपुस्तकमात्रे भ्रमाकुलितपाठोवर्त्तते। यथा, तस्यापि पुत्रमिथुनं बाहुवानजितः विला इति क० ज०, बाहुवानजितः विला इत्यत्र बाहुवानजितः किल इतिपाठविनिमयेन ङ० च०छ०पुस्तकस्थितपाठः, तत्र च, बाहुमानादितः किल इति पाठविनिमयेन ख० ग०पुस्तकस्थितपाठश्च क० ज०पुस्तकयोर्वर्त्तते। बाहुवानजितः विला इत्यत्र

आहुकश्चाहुकी चैव ख्यातौ मतिमतांवरौ ॥११०॥
इमांश्चोदाहरन्त्यत्र श्लोकान् प्रति तमाहुकं ।
सोपासङ्गानुकर्षाणां सध्वजानां वरूथिनां ॥१११॥
रथानां मेघघोषाणां सहस्राणि दशैव(१) तु ।
नासत्यवादी त्वासीत्तु नायज्वा नासहस्रदः ॥११२॥
नाशुचिर्नाप्यधर्मात्मा नाविद्वान्न कृशोऽभवत् ।
आहुकस्य धृतिः पुत्र इत्येवमनुशुश्रुमः ॥११३॥
श्वेतेन परिवारेण किशोरप्रतिमान् हयान् ।
अशीतिमश्वनियुतान्याहुकप्रतिमोऽव्रजत् ॥११४॥
पूर्वस्यान्दिशि नागानां भोजस्य प्रतिरेजिरे(२) ।
रूप्यकाञ्चनकक्षाणां सहस्राण्येकविंशतिः ॥११५॥
तावन्त्येव(३) सहस्राणि उत्तरस्यान्तथा दिशि ।
भूमिपालस्य भोजस्य उत्तिष्ठेत् किङ्किणी किल ॥११६॥
आहुकश्चाहुकान्धाय(४) स्वसारं त्वाहुकीन्ददौ ।
आहुकान्धस्य दुहिता द्वौ पुत्रौ सम्बभूवतुः ॥११७॥
देवकश्चोग्रसेनश्च देवगर्भसमावुभौ ।
देवकस्य सुता वीरा जज्ञिरे त्रिदशोपमाः ॥११८॥

---

बाहुबाणाजितः किल इति, बाहुमानादितः किल इत्यत्र च, बाहु-मानजितः किल इति पाठः सङ्गतार्थः ।

(१) आसन्नित्याध्याहार्य्यम् ।

(२) अत्र आदर्शपुस्तकमात्रे प्रतिमोऽभवदिति पाठोऽस्ति ।

(३) तावतान्तु इति पाठः समीचीनः ।

(४) अत्र आदर्शपुस्तकमात्रे आहुकश्चाप्यतिष्ठत् इति पाठो वर्त्तते ।

[१]देवानामपि देवश्च सुदेवोदेवरक्षिता ।
तेषां स्वसारः सप्तासन् वसुदेवाय संददौ ॥११९॥
वृकदेवोपदेवा च तथान्या देवरक्षिता ।
श्रीदेवा शान्तिदेवा च महादेवा तथापरा ॥१२०॥
सप्तमी देवकी तासां सुनामा चारुदर्शना ।
नवोग्रसेनस्य सुताः कंसस्तेषान्तु पूर्वजः ॥१२१॥
न्यग्रोधश्च सुनामा च कङ्कशंकुश्च भूमयः ।
सुतनूराष्ट्रपालश्च युद्धस्तुष्टः सुपुष्टिमान् ॥१२२॥
तेषां स्वसारः पञ्चैव कर्म्मधर्म्मवती तथा ।
शतांकूराष्ट्रपाला च कङ्का[२] चैव वराङ्गना ॥१२३॥
उग्रसेनोमहापत्यो विख्यातः कुकुरोद्भवः ।
कुकुराणामिमं वंशं धारयन्नमितौजसां ।
आत्मनोविपुलं वंशं प्राजावांश्च भवेन्नरः ॥१२४॥
भजमानस्य पुत्रस्तु रथिमुख्योविदूरथः ।
राज्याधिदेवः शूरश्च विदूरथ्य सुतोऽभवत् ॥१२५॥
तस्य शूरस्य तु सुता जज्ञिरे बलवत्तराः ।
वातश्चैव निवातश्च शोणितः[३] श्वेतवाहनः ॥१२६॥
शमी च गदवर्मा च निदातः शक्रशक्रजित्[४] ।

---

(१) तेषां मध्ये इत्याध्याहार्य्यं ।
(२) कङ्का इति ङ०, कन्हा इति छ०, कहा इति ज० । अन्येष्वादर्शपुस्तकेषु एतच्छ्लोकार्द्धं नास्ति ।
(३) शोणश्चेति ङ० च०, शोणिश्चेति छ०, शोणोऽथ इति ख० ।
(४) शत्रुशत्रुजित् इति ख०, शक्रुशक्रुजित छ० ज० ।

शमिपुत्रः प्रतिचित्र(१) प्रतिचित्रस्य चात्मजः ॥१२७॥
स्वयम्भोजः स्वयम्भोजाद्धृदिकः सम्बभूव ह ।
हृदिकस्य सुतास्त्वासन् दश भीमपराक्रमाः ॥१२८॥
कृतवर्मा कृतस्तेषां शतधन्वा तु मध्यमः ।
देवार्हश्च वनार्हश्च भिषग्द्वैतरथश्च यः ॥१२९॥
सुदान्तश्च धियान्तश्च नकवान्(२) कनकोद्भवः ।
देवार्हस्य सुतोविद्वान् जज्ञे कम्बलवर्हिषः ॥१३०॥
असमौजाः सुतस्तस्य सुसमौजाश्च विश्रुतः ।
अजातपुत्राय ततः प्रददावसमौजसे ।
सुदंष्ट्रश्च सुरूपश्च कृष्ण इत्यन्धकाः स्मृताः ॥१३१॥
अन्धकानामिमं वंशं कीर्त्तयानस्तु नित्यशः ।
आत्मनोविपुलं वंशं लभते नात्र संशयः ॥१३२॥
अश्मक्यां जनयामास शूरोवै देवमाढुषिं(३) ।
माष्यान्तु जनयामास शूरोवै देवमाढुषं(४) ॥१३३॥
भाष्यान्तु जज्ञिरे शूराद्भोजायां पुरुषा दश ।
वसुदेवोमहाबाहुः पूर्वमानकदुन्दुभिः ॥१३४॥
जज्ञे तस्य प्रसूतस्य दुन्दुभिः प्राणदद्दिवि ।

---

(१) प्रतिच्छत्रः इति ङ० च० ।
(२) कनकात् इति क० ज०, कनकान् इति ख० ग० घ० क्ष० ।
(३) देवमीयुषमिति ख०, देवमीलुढ्षमिति ङ० च०, देवमीढुषमिति क्ष० ज० ।
(४) देवमीढुषमिति ख० ग० ।

आनकानाञ्च संह्लादः सुमहानभवद्दिवि ॥१२५॥
पपात पुष्पवर्षञ्च शूरस्य भवने महत् ।
मनुष्यलोके कृत्स्नेऽपि रूपे नास्ति समोभुवि ॥१२६॥
यस्यासीत् पुरुषाग्र्यस्य कीर्त्तिश्चन्द्रमसोयथा ।
देवभाग(१) स्ततोजज्ञे ततोदेवश्रवाः पुनः ॥१२७॥
अनाधृष्टिकश्चैव(२) नन्दनश्चैव भृञ्जिनः ।
श्यामः शमीको(३) गण्डूषः पञ्चास्तु वराङ्गनाः ॥१२८॥
पृथा च श्रुतवेदा(४) च श्रुतकीर्त्तिः श्रुतश्रवा ।
राजाधिदेवी च तथा पञ्चैता वीरमातरः ॥१२९॥
पृथां दुहितरञ्चक्रे कुन्तिस्तां पाण्डुरावहत् ।
अनपत्याय वृद्धाय कुन्तिभोजाय तां ददौ ॥१४०॥
तस्मात् कुन्तीति विख्याता कुन्तिभोजात्मजा पृथा ।
कुरुवीरः पाण्डुमुख्यस्तस्माद्भार्य्यामविन्दत ॥१४१॥
पृथा जज्ञे ततः पुत्रान् त्रीनग्निसमतेजसः ।
लोके प्रतिरथान् वीरान् शक्रतुल्यपराक्रमान् ॥१४२॥
धर्माद्युधिष्ठिरं पुत्रं मारुताच्च वृकोदरं ।
इन्द्राद्धनञ्जयश्चैव पृथा पुत्रानजीजनत् ॥१४३॥
माद्रवत्यान्तु जनितावाश्विनाविति विश्रुतं ।
नकुलः सहदेवश्च रूपसत्त्वगुणान्वितौ ॥१४४॥

---

(१) देवभाज इति क० ।
(२) अनाधृष्टिकड़ इति ख० ग० ज० ।
(३) शनीको इति क० ङ० ज० ।
(४) आदर्शपुस्तकेषु उभयत्र श्रुतदेवा इति पाठोऽस्ति ।

जज्ञे च श्रुतदेवायां तनयोवृद्धशर्मणः ।
करूषाधिपतिर्वीरोदन्तवक्त्रो[१] महाबलः ॥१४५॥
कैकेय्यां श्रुतकीर्त्यान्तु जज्ञे सन्तर्दनः पुनः ।
चेकितानबृहत्क्षत्रौ[२] तथैवान्यौ महाबलौ ॥१४६॥
विन्दानुविन्दावावन्त्यो भ्रातरौ सुमहाबलौ ।
श्रुतश्रवायां चैद्यस्तु शिशुपालोबभूव ह ॥१४७॥
दमघोषस्य राजर्षेः पुत्रोविख्यातपौरुषः ।
यः पुरासीद्दशग्रीवः संबभूवारिमर्दनः ॥१४८॥
यदुश्रवानुज[३]स्तस्य रुजकन्योनुजस्तथा[४] ।
पत्न्यस्तु वसुदेवस्य त्रयोदश वराङ्गणाः ॥१४९॥
पौरवी रोहिणी चैव मदिरा चापरा तथा ।
तथैव भद्रा वैशाखी देवकी सप्तमी तथा ॥१५०॥
सुगन्धिर्वनराजी च द्वेचान्ये परिचारिके ।
रोहिणी पौरवी चैव वाल्मीकस्यात्मजा[५] भवत् ॥१५१॥

---

(१) दन्तवक्त्रो इति ङ० च० छ० ।
(२) चेकितानबृहत्क्षत्रौ इति छ० ।
(३) यदुश्रवानुज इत्यत्र सन्धिरार्षः ।
(४) अत्र लिपिकरप्रमादादादर्शपुस्तकेषु बहुपाठाः सन्ति । यथा, दार्ढं श्रवाश्नजस्तस्यश्नजकश्चात्मजस्तथा इति ख०, श्रवाश्नजस्तस्मजकन्तस्य चात्मजः इनि ग०, यदुश्रवानुजस्तस्य वजकन्यावजस्तथा इति ङ०, यदुश्रवा इत्यत्र यदुश्रवा इतिपाठविनिमयेन छ० ज० पुस्तकस्थित-पाठः, तत्र च, यादुश्रवा इति पाठविनिमयेन च०पुस्तकस्थितपाठो-ङ० पुस्तके वर्त्तते ।
(५) वाल्मीकस्यात्मजा इति क० ज० ।

ज्येष्ठा पत्नी महाभागा दयितानकदुन्दुभेः ।
ज्येष्ठं लेभे सुतं रामं सारणं निश्रवं तथा ॥१५२॥
दुर्द्दमं दमनं शुभ्रं पिण्डारककुशीतकौ ।
चित्रां नाम कुमारीञ्च रौहिण्यष्टौ व्यजायत ।१५३॥
पौत्रौ[१] रामस्य जज्ञाते विज्ञातौ निश्चितोल्मुकौ ।
पार्श्वी च पार्श्वनन्दी च शिशुः सत्यधृतिस्तथा ॥१५४॥
मन्दवाह्योऽथ रामाणगिरिकौ गिर एव च ।
शुक्लगुल्मेति गुल्मश्च दरिद्रान्तक एव च ॥१५५॥
कुमार्यश्चापि पञ्चाद्या नामतस्ता निबोधत ।
अर्चिष्मती सुनन्दा च सुरसा सुवचास्तथा ॥१५६॥
तथा शतबला चैव सारणस्य सुतास्त्विमाः ।
भद्राश्वोभद्रगुप्तिश्च भद्रविष्टस्तथैव च ॥१५७॥
भद्रबाहुर्भद्ररथोभद्रकल्पस्तथैव च ।
सुपार्श्वकः कीर्त्तिमांश्च रोहिताश्वश्च भद्रजः ॥१५८॥
दुर्म्मदश्चाभिभूतश्च रोहिण्याः कुलजाः स्मृताः ।
नन्दोपनन्दोमित्रश्च कुचिमित्रस्तथाचलः[२] ॥१५९॥
चित्रोपचित्रे कन्ये च स्थितः पुष्टिरथापरः ।
मदिरायाः सुता ह्येते सुदेवोऽथ विजज्ञिरे ॥१६०॥
उपबिम्बोऽथ बिम्बश्च सत्वदन्तमहौजसौ ।
चत्वार एते विख्याता भद्रापुत्रा महाबलाः ॥१६१॥

---

(१) पुत्रा इति ख० ग० ।
(२) तथा भव इति क० ज०, तथा बल इति ख० घ० ।
(३) उदप्यो इति ख० ।

वैश्याख्यां समदाच्छौरिः पुत्रं कौशिकमुत्तमं ।
देवक्यां जज्ञिरे शौरिः सुषेणः कीर्त्तिमानपि ॥१६२॥
तदयोभद्रसेनश्च यजुदायश्च(१) पञ्चमः ।
षष्ठोभद्रविदेकश्च कंसः सर्वान् जघान तान् ॥१६३॥
अथ तस्यामवस्थायां आयुष्मान् संबभूव ह ।
लोकनाथः पुनर्विष्णु पूर्वकृष्णः प्रजापतिः ॥१६४॥
अनुजाताऽभवत् कृष्णा सुभद्रा भद्रभाषिणी ।
कृष्णासुभद्रेति पुनर्व्याख्याता वृष्णिनन्दिनी ॥१६५॥
सुभद्रायां रथी पर्थादभिमन्युरजायत ।
वसुदेवस्य भार्यासु महानागासु सप्तसु ।
ये पुत्रा जज्ञिरे शूरा नामतस्तान्निबोधत ।१६६॥
अतोऽस्य(२) सहदेवायां शूरोजज्ञेभयासखः ।
शाङ्गदेवा(३)जनत्तम्बुं शौरी जज्ञे(४) कुलोद्दहं(५) ॥१६७॥
उपसङ्गं वसुञ्चापि तनयौ देवरक्षिता ।
एवं दश सुतास्तस्य कंसस्तानप्यघातयत् ॥१६८॥
विजयं रोचनश्चैव वर्द्धमानं तथैव च ।
एतान् सुर्व्वान् महाभागानुपदेवा व्यजायत ॥१६९॥
स्वगावं महात्मानं वृकदेवी लजायत ।

---

(१) यजुदाय इत्यत्र यजुर्दायः यज्ञदायोवा पाठः सम्भवपरः ।
(२) अतोऽस्य इत्यत्र ऋतोऽस्य इतिपाठः सम्भवपरः ।
(३) शचीदेवा इति ख० ग०, शूद्रादेवा इति क० छ० ज० ।
(४) आदर्शपुस्तकमात्रे घोरेर्जज्ञे इति पाठोवर्त्तते ।
(५) कुलोद्भवांर्भति ख० ग० छ० ।

आगाह्नी च स्वसा चैव सुरूपा शिशिरायिणी ॥१७०॥
सप्तमं देवकी पुत्रं सुनामा सुषुवे भुवं(१) ।
गवेषणं महाभागं संग्रामे चित्रयोधिनं ॥१७१॥
श्राद्धदेवं(२) पुरा येन वने विरचिता द्विजाः ।
सैव्याया(३) मददच्छौरिः पुत्रं कौशिकमव्ययं ॥१७२॥
सुगन्धी वनराजी च शौरेरास्तां परिग्रहः ।
पुण्ड्रश्च कपिलश्चैव वसुदेवात्मजौ हि तौ ।
तयोराजाऽभवत् पुण्ड्रः कपिलस्तु वनं ययौ ॥१७३॥
तस्यां(४) समभवद्वीरोवसुदेवात्मजोबली ।
राजा नाम निषादोऽसौ प्रथमः स धनुर्द्धरः ॥१७४॥
विख्यातोदेवरातस्य(५) महाभागः सुतोऽभवत् ।
पण्डितानां मतं प्राहुर्देवश्रवसमुद्भवं ॥१७५॥
अश्मक्यां लभते पुत्रमनादृष्टिं(६) यशस्विनं ।
निवर्त्तः शत्रुशत्रुघ्नं श्राद्धदेवं महाबलं ॥१७६॥
अजायत श्राद्धदेवोनिषधादिर्यतः श्रुतः ।
एकलव्यो(७) महावीर्योनिषादैः परिवर्द्धितः ॥१७७॥
गण्डूषायानपत्याय कृष्णस्तुष्टोऽददत् सुतौ ।

(१) भुवि इति ख० सुतमिति ङ० छ० ।
(२) वासुदेवं इति ख० ग० ।　(३) शैव्याया इति ख० ।
(४) यत्तदोर्नित्यसम्बन्धात् तस्यामितिपदेन, यस्यां पुण्ड्रः कपिलश्च समभवत्मा इत्युपलभ्यते ।
(५) दिवि राजस्येति ख० ग०, देवराजस्येति ङ० च० छ० ।
(६) अनावृष्टिमिति ङ० च० ।
(७) एकालयोमहाभार्य्यो इति छ० ज० ।

चारुदेष्णश्च साम्बश्च कृतास्त्रौ शस्त्रलक्षणौ[1] ॥१७८॥
तन्निजस्तन्निमालश्च स्वपुत्रौ कनकस्य तु ।
वत्सावने[2]स्त्वपुत्राय वसुदेवः प्रतापवान् ।
सौतिर्ददौ सुतं वीरं शौरिं कौशिकमेव च ॥१७९॥
तपाश्च[3]क्रोधनुश्चैव विरजाः श्यामसृञ्जिमौ ।
अनपत्योऽभवच्छ्यामः श्यामकस्तु वनं ययौ ।
जुगुप्समानोभोजत्वं राजर्षित्वमवाप्नुयात् ॥१८०॥
य इदं जन्म कृष्णस्य पठते नियतव्रतः ।
श्रावयेद्ब्राह्मणश्चापि सुमहत्सुखमाप्नुयात् ॥१८१॥
देवदेवोमहातेजाः पूर्व्वं कृष्णः प्रजापतिः ।
विहारार्थं मनुष्येषु जज्ञे नारायणः प्रभुः ॥१८२॥
देवक्यां वसुदेवेन तपसा पुष्करेक्षणः ।
चतुर्बाहुः स विज्ञेयोदिव्यरूपः श्रियान्वितः ॥१८३॥
प्रकाशोभगवान् योगी कृष्णोमानुषमागतः ।
अव्यक्तोव्यक्तलिङ्गस्थः स एव भगवान् प्रभुः ॥१८४॥
नारायणोयतश्चक्रे प्रभवं चाव्ययोहि सः ।
देवोनारायणोभूत्वा हरिरासीत्सनातनः ॥१८५॥
योऽसृजच्चादिपुरुषं पुरा चक्रे प्रजापतिं ।
अदितेरपि पुत्रत्वमेत्य यादवनन्दनः ।

---

(१) घृतपञ्चास्त्रलक्षणौ इति ङ० च० ।
(२) वत्सावनेरिति सम्प्रदानार्थे षष्ठी । वत्सावने इति ङ० च० ।
(३) उपाश्चेति ङ० च० । तपाः क्रोधनुरित्यादियोवसुदेवसुताः । अथवा, तपाश्चेति श्लोकात् प्राक् कश्चिच्छ्लोकः श्लोकार्धं वा पतितम् ।

देवोविष्णुरिति ख्यातः शक्रादवरजोऽभवत् ॥१८६॥
प्रसादजं यस्य विभोरदित्याः पुत्रकारणं ।
वधार्थं सुरशत्रूणां दैत्यदानवराक्षसां ॥१८७॥
ययातिवंशजस्याथ वसुदेवस्य धीमतः ।
कुलं पुण्यं यतः कर्म्म भेजे नारायणः प्रभुः ॥१८८॥
सागराः समकम्पन्त चेलुश्च धरणीधराः ।
जज्वलुश्चाग्निहोत्राणि जायमाने जनार्द्दने ॥१८९॥
शिवाश्च प्रववुर्वाताः प्रशान्तिमभवद्रजः ।
ज्योतींष्यभ्यधिकं रेजुर्जायमाने जनार्द्दने ॥१९०॥
अभिजिन्नाम नक्षत्रं जयन्ती नाम शर्वरी ।
मुहूर्त्तोविजयोनाम यत्र जातोजनार्द्दनः ॥१९१॥
अव्यक्तः शाश्वतः कृष्णोहरिर्नारायणः प्रभुः ।
जायते स्मैव भगवान् नयनैर्मोहयन् प्रजाः ॥१९२॥
आकाशात् पुष्पवृष्टीश्च ववर्ष त्रिदशेश्वरः ।
गीर्भिर्मङ्गलयुक्ताभिः स्तुवन्तोमधुसूदनं ।
महर्षयः सगन्धर्वा उपतस्थुः सहस्रशः ॥१९३॥
वसुदेवस्तु तं रात्रौ जातं पुत्रमधोक्षजं ।
श्रीवत्सलक्षणं दृष्ट्वा दिवि दिव्यैः(१) सुलक्षणैः(२) ।
उवाच वसुदेवः स्वं रूपं संहर वै प्रभो ॥१९४॥

---

(१) दृष्टैरिति ख०, दिव्यैरिति ङ०, दिव्यैरिति क० ज० । एते पाठाः प्रमादसम्भूताः ।
(२) स लक्षणैरिति ङ०, सुलक्षणैरिति घ० छ० ज० ।

भीतोऽहं कंसतस्तात एतदेव ब्रवीम्यहं ।
मम पुत्रा हतास्तेन ज्येष्ठास्तेऽद्भुतदर्शनाः[1] ॥१९५॥
वसुदेववचः श्रुत्वा रूपं स हृतवान् प्रभुः ।
अनुज्ञातः पिता तेनं नन्दगोपगृहं गतः[2] ।
उग्रसेनमते तिष्ठन् यशोदायै तदा ददौ ॥१९६॥
तुल्यकालन्तु गर्भिण्यौ यशोदा देवकी तथा ।
यशोदा नन्दगोपस्य पत्नी सानन्दगोपतेः ॥१९७॥
यामेव रजनीं कृष्णोजज्ञे वृष्णिकुलप्रभुः ।
तामेव रजनीं कन्यां यशोदापि व्यजायत ॥१९८॥
तं जातं रक्षमाणस्तु वसुदेवोमहायशाः ।
प्रादात् पुत्रं यशोदायै कन्यान्तु जगृहे स्वयं ॥१९९॥
दत्वैनं नन्दगोपस्य रक्ष मामिति चाब्रवीत् ।
सुतस्ते सर्व्वकल्याणोयादवानां भविष्यति ।
अयं स गर्भोदेवक्या अस्मत्क्लेशान् हनिष्यति ॥२००॥
उग्रसेनात्मजायाञ्च कन्यामानकदुन्दुभेः ।
निवेदयामास तदा कन्येति शुभलक्षणा ॥२०१॥
स्वसायां[3] तनयं कंसोजातं नैवावधारयत् ।
अथ तामपि दुष्टात्मा ह्युत्ससर्ज[4] मुदान्वितः ॥२०२॥
हता वै या यदा कन्या जपत्येव वृथामतिः ।

---

(१) ध्रुवदर्शनाः इति ङ० ।
(२) नयत् इति च० छ० ज० ।
(३) स्वसरीति पाठः समीचीनः ।
(४) विससर्ज्ज इति ख० ग० ।

कन्या सा ववृधे तत्र वृष्णिसद्मनि पूजिता ॥२०३॥
पुत्रवत्परिपाल्यन्तो[१] देवा देवान् यथा[२] तदा ।
तामेव विधिनोत्पन्नामाहुः कन्यां प्रजापतिं ॥२०४॥
एकादशा तु जज्ञे वै रक्षार्थं केशवस्य ह ।
तां वै सर्वे सुमनसः[३] पूजयिष्यन्ति यादवाः ।
देवदेवोदिव्यवपुः कृष्णः संरक्षितोऽनया ॥२०५॥
ऋषय ऊचुः । किमर्थं वसुदेवस्य भोजः कंसोनराधिपः ।
जघान पुत्रान् बालान् वै तन्नोव्याख्यातुमर्हसि ॥२०६॥
सूत उवाच । शृणुध्वं वै यथा कंसः पुत्रानानकदुन्दुभेः ।
जातान् जातान् शिशून् सर्व्वान् निष्पिपेष वृथामतिः॥२०७॥
भयाद्यथा महाबाहुर्जातः कृष्णोविवासितः ।
तथा च गोषु गोविन्दः संवृद्धः पुरुषोत्तमः ॥२०८॥
उक्तं हि किल देवक्या वसुदेवस्य धीमतः ।
सारथ्यं कृतवान् कंसोयुवराजस्तदाऽभवत् ॥२०९॥
ततोऽन्तरिक्षे वागासीद्दिव्या भूतस्य कस्यचित् ।
कंसोयया सदा भीतः[४] पुष्कला लोकसाक्षिणी ॥२१०॥

---

(१) आदर्शपुस्तकमात्रे परिपाल्यन्तीति पाठोवर्त्तते । अयन्तु न समीचीनः ।
(२) सर्व्वेष्वादर्शपुस्तकेषु यदेति पाठोऽस्ति अयन्तु न सम्यक् ।
(३) हतां वै सर्व्वमनसः इति क० छ० ज०, ताश्चैव सर्व्वमनसः इति ख०,एष श्लोकोग० पुस्तके न विद्यते, तां वै सर्व्वामनसः इति ङ०, तेषां वै सर्व्वमनसः इति च० । एते सर्व्वे पाठा लिपिकरप्रमादजनिताः ।
(४) कंसमप्यकृत्भगोचरा इति क० ज०, कंसमत्यन्तगोचरा इति ख० ङ० च०, कंसमप्यभगोचरा इति छ० । एतत्त्रयं लिपिकरप्रमादोत्पन्नम् ।

यामेतां वहसे कंस रथेन परकारणात् ।
अस्या यः सप्तमोगर्भः स ते मृत्युर्भविष्यति ॥२११॥
तां श्रुत्वा व्यथितोवाणीं तदा कंसोऽल्पामतिः ।
निष्क्रम्य खड्गं तां कन्यां हन्तुकामोऽभवत्तदा ॥२१२॥
तमुवाच महाबाहुर्वसुदेवः प्रतापवान् ।
उग्रसेनात्मजं कंसं सौहृदात्प्रणयेन च ॥२१३॥
न स्त्रियं क्षत्रियोजातु हन्तुमर्हति कश्चन ।
उपायः परिदृष्टोऽत्र मया यादवनन्दन ॥२१४॥
योऽस्याः सम्भवते गर्भः सप्तमः पृथिवीपते ।
तमहन्ते प्रयच्छामि तत्र कुर्य्या यथाक्रमं ॥२१५॥
त्वं त्विदानीं यथेष्टत्वं वर्तेथा भूरिदक्षिण ।
सर्वानस्यास्तु वै गर्भान्[१] सत्यं नेष्यामि ते वशं ॥२१६॥
एवं मिथ्या नरश्रेष्ठ वागेषा[२] न भविष्यति ।
एवमुक्तोऽनुनीतः स जग्राह तनयांस्तदा ॥२१७॥
वसुदेवश्च तां भार्य्यामवाप्य मुदितोऽभवत् ।
कंसश्चास्यावधीत् पुत्रान् पापकर्मा ह्यल्पमतिः ॥२१८॥
ऋषय ऊचुः। क एष वसुदेवश्च देवकी च यशस्विनी ।
नन्दगोपस्तु कस्त्वेष यशोदा च महायशाः ।
योविष्णुं जनयामास या चैनं चाभ्यवर्द्धयत् ॥२१९॥
सूत उवाच। पुरुषाः कश्यपस्यासन्नादित्यास्तु स्त्रियस्तथा ।

(१) आदर्शपुस्तकमात्रे, सर्व्वानस्यापि ते गर्भान् इति भ्रमात्मकपाठोऽस्ति
(२) वाक्येषा इति क० ज० ।

अथ कामान् महाबाहुर्देवकयाः समवर्द्धयत् ॥२२०॥
अचरत् स महीं देवः प्रविष्टोमानुषीं तनुं ।
मोहयन् सर्वभूतानि योगात्मा योगमायया ॥२२१॥
नष्टे धर्म्मे तदा जज्ञे विष्णुर्वृष्णिकुले स्वयं ।
कर्तुं धर्म्मव्यवस्थानमसुराणां प्रणाशनं ॥२२२॥
आहृता रुक्मिणी कन्या सत्या नग्नजितस्तदा[१] ।
सात्राजिती सत्यभामा जाम्बवत्यपि रोहिणी ॥२२३॥
शैब्या सुदेवी माद्री च सुशीला नाम चापरा ।
कालिन्दी मित्रविन्दा च लक्ष्मणा जालवासिनी[२] ॥२२४॥
एवमादीनि देवानां सहस्राणि च षोड़श ।
चतुर्द्दश तु ये प्रोक्ता गणास्त्वाप्सरसां दिवि ।
विचिन्त्य देवैः शक्रेण विशिष्टास्त्विह प्रेषिताः ॥२२५॥
पत्न्यर्थं वासुदेवस्य उत्पन्ना राजवेश्मसु ।
एताः पत्न्योमहाभागा विष्वक्सेनस्य विश्रुताः ॥२२६॥
प्रद्युम्नश्चारुदेष्णश्च सुदेष्णः शरभ[३]स्तथा ।
चारुश्च चारुभद्रश्च भद्रचारुस्तथापरः ॥२२७॥
चारुविन्ध्यश्च[४] रुक्मिण्यां कन्या चारुमही[५] तथा ।
सानुर्भानुस्तथाचश्च रोहितोमन्त्रयस्तथा ॥२२८॥

---

(१) तथा इति ख० ग० ।
(२) चारुहासिनी इति ख० ग० ।
(३) शरथ इति ख० ग० ।
(४) चारुविन्दश्चेति ख० ।
(५) चारुमतीति ख० ।

जराम्बकस्ताम्रवक्ता भौमरिश्च जरन्धमः[1] ।
चतस्रोजज्ञिरे तेषां स्वसारो गरुड़ध्वजात् ॥२१९॥
भानुर्भौमरिकाचैव ताम्रपर्णी जरन्धमा[2] ।
सत्यभामासुतानेतान् जाम्बवत्याः प्रजाः शृणु ॥२२०॥
भद्रश्च भद्रगुप्तश्च भद्रविन्दस्तथैव च ।
सप्तबाहुश्च विख्यातः कन्या भद्रावती तथा ।
सम्बोधनी च विख्याता ज्ञेया जाम्बवतीसुताः ॥२२१॥
संग्रामजिच्च शतजित् तथैव च सहस्रजित् ।
एते पुत्राः सुदेव्याश्च विश्वक्सेनस्य कीर्त्तिताः ॥२२२॥
वृकोवृकश्चोवृकजिद्वृजिनी च सुराङ्गना ।
मित्रबाहुः सुनीथश्च नाग्नजित्याः प्रजास्त्विह ॥२२३॥
एवमादीनि पुत्राणां सहस्राणि निबोधत ।
प्रयुतन्तु समाख्यातं वासुदेवस्य ये सुताः ॥२२४॥
अयुतानि तथाष्टौ च शूरा रणविशारदाः ।
जनार्द्दनस्य वंशोवः कीर्त्तितोऽयं यथातथं ॥२२५॥
वृहती नर्तकोन्नेयी सुनये सङ्गता तथा[3] ॥
कन्या सा वृहदुक्थस्य शैनेयस्य महात्मनः ॥२२६॥

---

(१) जरन्धर इति छ० ।  (२) जरान्धमा इति क० ज० ।
(३) वृहतीनर्त्तकोनेया सुमध्यमे सङ्गतस्तथा इति क० ज० । नेया इत्यत्र, नेयी इति, सुमध्यमे इत्यत्र सुमये इति, पाठव्यत्ययेन क० ज० पुस्तकास्थितपाठो ङ० च० छ० पुस्तकेषु विद्यते । नेया इत्यत्र नेयी इति, सुमध्यमे इत्यत्र मुनये इति, पाठव्यत्ययेन क० ज० पुस्तकास्थितपाठः ख० ग० पुस्तकयोर्वर्त्तते ।

तस्याः पुत्रास्तु विख्यातास्त्रयः समितिशोभनाः ।
अङ्गदः कुमुदः श्वेतः कन्या श्वेता तथैव च ॥२३७॥
अवगाहस्य[1] चित्रस्य शूरश्चित्ररथस्य[2]स्य यः ।
चित्रसेनः सुतस्तस्य कन्या चित्रवती[3] तथा ॥२३८॥
तुम्बस्य तुम्बवाणस्य जनस्तम्बस्य तावुभौ ।
उपाङ्गस्य सुतौ द्वौ तु वज्रारः क्षिप्र एव च ॥२३९॥
भूरीन्द्रसेनोभूरिश्च गवेषस्य सुतावुभौ ।
युधिष्ठिरस्य कन्या तु सुतनुर्नाम विश्रुता ॥२४०॥
तस्यामश्वसुतो[4]जज्ञे वज्रोनाम महायशाः ।
वज्रस्य प्रतिबाहुस्तु सुचारुस्तस्य चात्मजः ॥२४१॥
काश्या सुपार्श्वं तनयं जज्ञे साम्बा तरस्विनं ।
तिस्रः कोट्यस्तु पुत्राणां यादवानां महात्मनां ॥२४२॥
षष्टिशतसहस्राणि वीर्य्यवन्तोमहाबलाः ।
देवांशाः सर्व्व एवेह उत्पन्नास्ते महौजसः ॥२४३॥
दैवासुरे हता ये च असुरा वै महातपाः[5] ।
इहोत्पन्ना मनुष्येषु बाधन्ते सर्व्वमानवान् ।
तेषामुत्सादनार्थन्तु उत्पन्ना यादवे कुले ॥२४४॥
कुलानि दश चैकञ्च यादवानां महात्मनां ।

(१) अगावहस्येति ङ० च० छ० ।
(२) श्चित्रवह इति च० ।
(३) चित्रध्वजीति ख० ग० ।
(४) मत्स्यसुतो इति ख० ग० ङ० च० छ० । मखसुतो इति अ० ।
(५) महातपस इत्यर्थे महातपाः इत्यार्षः ।

सर्व्वमेककुलं यद्वद्वर्त्तते वैष्णवे कुले ॥२४५॥
विष्णुस्तेषां प्रमाणे च प्रभुत्वे च व्यवस्थितः ।
निर्देशस्थायिभिस्तस्य बध्यन्ते सर्व(१)मानुषाः ॥२४६॥
इति प्रकृतिर्वृष्णीनां समासव्यासयोगतः ।
कीर्त्तिता कीर्त्तनाच्चैव कीर्त्तिसिद्धिमभीप्सितां ॥२४७॥

इति श्रीमहापुराणे वायुप्रोक्ते विष्णुवंशानुकीर्त्तनं नाम चतुस्त्रिंशोऽध्यायः समाप्तः ॥

---

(१) दुष्ट इति पाठः साधीयान् ।

# अथ पञ्चविंशोऽध्यायः ।

विष्णुमाहात्म्यकीर्त्तनं ।

मनुष्यप्रकृतीन् देवान् कीर्त्यमानान्निबोधत ।
सङ्कर्षणोवासुदेवः प्रद्युम्नः शाम्ब एव च ॥१॥
अनिरुद्धश्च पञ्चैते वंशवीराः प्रकीर्त्तिताः ।
सप्तर्षयः कुवेरश्च यक्षोमणिवरस्तथा(१) ॥२॥
शालकी(२)वदरश्चैव(३) विद्वान् धन्वन्तरिस्तथा ।
नन्दिनश्च महादेवः शालङ्कायन(४) उच्यते ।
आदिदेवस्तदा(५) जिष्णुरेभिश्च सह•दैवतैः ॥३॥
ऋषय ऊचुः। विष्णुः किमर्थं सम्भूतः स्मृताः सम्भूतयः कति ।
भविष्याः कति वान्ये तु प्रादुर्भावा महात्मनः ॥४॥
ब्रह्मक्षेत्रे युगान्तेषु किमर्थमिह जायते।
पुनः पुनर्म्मनुष्येषु तन्नः प्रब्रूहि पृच्छतां ॥५॥
विस्तरेणैव सर्व्वाणि कर्म्माणि रिपुघातिनः ।

---

(१) मानवरस्तथेति ख०, मानवकस्तथेति ग०, मणिरथस्तथेति च० ।
(२) शालङ्की इति क० ज० शकलीति ग० ।
(३) वरद इति ग० ङ० ज० वदरि इति च० ।
(४) सावलाकाजन इति क० ज० । अत्र शारण्यायणं इति पाठोऽर्थ-प्रतिपत्तिकरः ।
(५) स्तथा इति पाठः साधुः ।

श्रोतुमिच्छामहे सम्यग्देहैः कृष्णस्य धीमतः ॥६॥
कर्म्मणामानुपूर्व्यञ्च प्रादुर्भावाश्च ये प्रभो ।
या चास्य प्रकृतिः सूत तामस्मान् वक्तुमर्हसि ॥७॥
कथं स भगवान् विष्णुः सुरेश्वरिनिसूदनः ।
वसुदेवकुले धीमान् वासुदेवत्वमागतः ॥८॥
अमरैः सूत किं पुण्यं[१] पुण्यकृद्भिरलं कृतं ।
देवलोकं समुत्सृज्य मर्त्यलोकमिहागतः ॥९॥
देवमानुषयोर्नेता भूर्भुवःप्रसवो[२] हरिः ।
किमर्थं दिव्यमात्मानं मानुषे समवेशयत् ॥१०॥
यश्चक्रं वर्तयत्येकोमनुष्याणां मनोमयं ।
मनुष्ये स कथं बुद्धिं चक्रे चक्रभृतां वरः ॥११॥
गोपायनं यः कुरुते जगतां सार्व्वलौकिकं ।
स कथं गां गतोविष्णुर्गोपमन्वकरोत्प्रभुः ॥१२॥
महाभूतानि भूतात्मा योदधार चकार ह ।
श्रीगर्भः स कथं गर्भे स्त्रिया भूचरया धृतः ॥१३॥
येन लोकान् क्रमैर्जित्वा त्रिभिस्त्रींस्त्रिदशेप्सया ।
स्थापिता जगतोमार्गास्त्रिवर्गप्रवरास्त्रयः[३] ॥१४॥

---

(१) अत्र आदर्शपुस्तकेषु भ्रमात्मकपाठा वर्त्तन्ते । तथा, अमरैरवृतं पुन्यमिति क० अमरैरावृतं पुन्यमिति ङ० च० छ०, अमरैर्व्यावृतं पुन्यमिति ख० ग० ।
(२) द्युर्भुवः प्रसवो इति क० ङ० च० छ० ज०, द्योर्भुवः प्रसवो इति ख०, द्यौर्भुवः प्रसवो इति ग० ।
(३) त्रिवर्गंपुराश्रिता इति क० ज० ।

योऽन्तकाले जगत्पीत्वा कृत्वा तोयमयं वपुः ।
लोकमेकार्णवं चक्रे दृश्यादृश्येन वर्त्मना ॥१५॥
यः पुराणे[१] पुराणात्मा वाराहं वपुरास्थितः ।
ददौ जित्वा वसुमतीं सुराणां सुरसत्तमः ॥१६॥
येन सैंहं वपुं[२] कृत्वा द्विधा कृत्वा च यत्पुनः ।
पूर्व्वदैत्योमहावीर्य्योहिरण्यकशिपुर्हतः ॥१७॥
यः पुरा ह्यनलोभूत्वा और्व्वः संवर्त्तकोविभुः ।
पातालस्थोऽर्णवगतः पपौ तोयमयं हविः ॥१८॥
सहस्रचरणं देवं सहस्रांशुं सहस्रशः ।
सहस्रशिरसं देवं यमाहुर्वै युगे युगे ॥१९॥
नाभ्यारण्याः[३] समुद्भूतं यस्य पैतामहं गृहं[४] ।
एकार्णवगते लोके तत्पङ्कजमपङ्कजं ॥२०॥
येन ते निहता दैत्याः संग्रामे तारकामये ।
सर्व्वदेवमयङ्कृत्वा सर्वायुधधरं वपुः ॥२१॥
गरुड़स्थेन चोत्सिक्तः कालनेमिर्निपातितः ।
उत्तरांशे समुद्रस्य क्षीरोदस्यामृतोदधेः ।
यः शेते शाश्वतं योगमास्थाय तिमिरं महत्॥२२॥

(१) पुराणे इत्यत्र पुरा वै इति पाठः समीचीनः ।
(२) वपुमित्यत्र तनुमिति पाठोविशुद्धः ।
(३) नाभ्यारण्ये इति पाठः साधीयान ।
(४) तनुमिति क० ग० ।

पुरारणी गर्भमधत्त दिव्यं तपःप्रकर्षाददितिः पुरा यं ।
प्रकश्च योदैत्यगणावरुद्धं गर्भावमानेन भृशं चकार॥२३॥
यदानिलोलोकपदानि कृत्वा चकार दैत्यान् सलिलेशयांस्तान्।
कृत्वादिदेवस्त्रिदिवस्य देवांश्चक्रे सुरेशं पुरुहूतमेव ॥२४॥
गार्हपत्येन विधिना अन्वाहार्य्येण कर्म्मणा ।
अग्निमाहवनीयञ्च वेदिञ्चैव कुशस्रुवं ॥२५॥
प्रोक्षणीयं स्रुवञ्चैव अवभृथं तथैव च ।
अथ त्रीनिह(१) यश्चक्रे हव्यभागप्रदान्मखे ॥२६॥
हव्यादांश्च सुरांश्चक्रे कव्यादांश्च पितॄनपि ।
भोगार्थं यज्ञविधिना योयज्ञोयज्ञकर्म्मणि ॥२७॥
यूपान् समित्स्रुवं सोमं पवित्रं परिधीनपि ।
यज्ञीयानि च द्रव्याणि यज्ञीयांश्च तथानलान्॥२८॥
सदस्यान् यजमानांश्च अश्वमेधान् क्रतूत्तमान् ।
विबभ्राज पुरा यश्च पारमेष्ठ्येन कर्म्मणा ॥२९॥
युगानुरूपं यः कृत्वा(२) त्रीन्(३) लोकान् हि यथाक्रमं ।
क्षणा निमेषाः काष्ठाश्च कलास्त्रैकालमेव च ॥३०॥
मुहूर्त्तास्तिथयोमासा दिनसंवत्सरास्तथा ॥
ऋतवः कालयोगाश्च प्रमाणं त्रिविधन्तथा ॥३१॥
आयुः क्षेत्राण्युपचयं लक्षणं रूपसौष्ठवं ।

---

(१) त्रीणि च इति आदर्शपुस्तकमात्रे पाठोऽस्ति ।

(२) यः कृत्वा इत्यत्र कृत्वा च इति पाठः समीचीनः ।

(३) सर्व्वेष्वादर्शपुस्तकेषु, त्रयोलोकाननुक्रममिति पाठोऽस्ति, अयन्तु न सम्यक् ।

मेधा वित्तं च शौर्य्यञ्च शास्त्रस्यैव च पारणं ॥२२॥
चयोवर्णास्त्रयोलोकास्त्रैविद्यं पावकास्त्रयः ।
त्रैकाल्यं चीणि कर्म्माणि तिस्रोमायास्त्रयोगुणाः ॥२३॥
सृष्टा लोकाः सुराश्चैव येनात्यन्तेन कर्म्मणा ।
सर्व्वभूतगणाः सृष्टाः सर्व्वभूतगणात्मना ॥२४॥
नृणामिन्द्रियपूर्व्वेण(१) योगेन रमते च यः ।
गतागतानां योनेता सर्व्वत्र विविधेश्वरः ॥२५॥
योगतिर्धर्मयुक्तानामगतिः पापकर्म्मणां ।
चातुर्वर्ण्यस्य प्रभवश्चातुर्वर्ण्यस्य रक्षिता ॥२६॥
चातुर्विद्यस्य योवेत्ता चतुराश्रमसंश्रयः ।
दिगन्तरं नभोभूमिरापोवायुर्विभावसुः ॥२७॥
चन्द्रसूर्य्यद्वयं ज्योतिर्युगेशः क्षणदाचरः ।
यः परः श्रूयते देवोयः परं श्रूयते तपः ॥२८॥
यः परन्तपसः प्राज्ञैः परम्परमात्मवान् ।
आदित्यादिस्तु योदेवोयश्च दैत्यान्तकोविभुः ॥२९॥
युगान्तेष्वन्तकोयश्च यश्च लोकान्तकान्तकः ।
सेतुर्योलोकसेतूनां मेध्योयोमेध्यकर्म्मणां ॥४०॥
वेद्योयोवेदविदुषां प्रभुर्यः प्रभवात्मनां ।
सोमभूतस्तु भूतानामग्निभूतोऽग्निवर्च्चसां ॥४१॥
मनुष्याणां मनोभूतस्तपोभूतस्तपस्विनां ।

---

(१) स्त्रीणामिन्द्रियरूपेणेति ख० ।

विनयोनयदृष्टानां[1] तेजस्तेजस्विनामपि ॥४२॥
विग्रहोविग्रहाणां योगतिर्गतिमतामपि ।
आकाशप्रभवोवायुर्वायुप्राणा हुताशनः ॥४३॥
दिवा हुताशनप्राणाः प्राणोऽग्नेर्मधुसूदनः ।
रसोऽभवच्छोणितं वै शोणितान्मांसमुच्यते ॥४४॥
मांसात्तु मेदसोजन्म मेदसोऽस्थि निरूप्यते ।
अस्थ्ना मज्जा समभवन्मज्जातः शुक्रसम्भवः ॥४५॥
शुक्राद्गर्भः समभवद्रसमूलेन कर्म्मणा ।
तत्रापि प्रथमश्चाप[2]स्ताः[3] सौम्यराशिरुच्यते ॥४६॥
गर्भोष्मसम्भवो[4]ऽग्नेयोद्वितीयोराशिरुच्यते ।
शुक्रं सोमात्मकं विद्यादार्त्तवं पावकात्मकं ॥४७॥
भावौ रसानुगावेतौ वीर्य्ये च शशिपावकौ ।
कफवर्गेऽभवच्छुक्रं पित्तवर्गे च शोणितं ॥४८॥
कफस्य हृदयं स्थानं नाभ्यां पित्तं प्रतिष्ठितं ।
देहस्य मध्ये हृदयं स्थानन्तु मनसः स्मृतं ॥४९॥
नाभीकोष्ठान्तरं यत्तु तत्र देवोहुताशनः ।
मनः प्रजापतिर्ज्ञेयं कफः सोमोविभाव्यते ॥५०॥
पित्तमग्निः स्मृतावेतावग्निसोमात्मकं जगत् ।

---

(१) नयदृष्टानामिति क० ज०। नयदृष्टानामिति ख० ङ० च० छ०। पाठावेतौ न समीचीनौ।
(२) तत्रायां प्रथमाचापः इति ङ० च० छ० ज०, इत्यपपाठः।
(३) सा इति ङ० स इति च० छ० ज०।
(४) गर्भोष्मसम्भव इत्यत्र सन्धिरार्षः।

एवं प्रवर्त्तितो गर्भो वर्त्ततेऽम्बुदसन्निभः[१] ॥ ५१॥
वायुः प्रवेशनं चक्रे सङ्गतः परमात्मना।
स पञ्चधा शरीरस्थो विद्यते वर्द्धयेत्[२] पुनः ॥५२॥
प्राणापानौ समानश्च उदानो व्यान एव च।
प्राणोऽस्य परमात्मानं वर्द्धयन् परिवर्त्तते ॥५३॥
अपानः पश्चिमं कायमुदानोर्द्ध्वशरीरगः[३]।
व्यानो व्यानस्यते येन समानः सर्व्वसन्धिषु ॥५४॥
भूतावाप्तिस्ततस्तस्य जायतेन्द्रियगोचरा[४]।
पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमं ॥५५॥
सर्व्वेन्द्रिया निविष्टास्ते स्वं स्वं योगं प्रचक्रिरे।
पार्थिवं देहमाहुस्ते प्राणात्मानं च मारुतं॥५६॥
छिद्राण्याकाशयोनीनि जलास्रावं प्रवर्त्तते।
तेजश्चक्षुर्भिता ज्योत्स्ना तेषां यन्नामतः स्मृतं।
संग्रामा विषयाश्चैव यस्य वीर्य्यात्प्रवर्त्तिताः ॥५७॥
इत्येतान् पुरुषः सर्व्वान् सृजँल्लोकान् सनातनः।
नैधनेऽस्मिन् कथं लोके नरत्वं विष्णुरागतः ॥५८॥
एष नः संशयो धीमन्नेष वै विस्मयो महान्।
कथं गतिर्गतिमतामापन्नो मानुषीं तनुं ॥५९॥

---

(१) एवं प्रवर्त्ततोगर्भे वर्त्ततेवुंदसन्निधे इति क० ज०, एवं प्रवर्त्तते गर्भे वर्त्ततेम्बुदसन्निभे इति ख० ग०, एवं प्रवर्त्तते गर्भे वर्त्ततेवुंदसन्निभे इति ङ० च० छ०।
(२) वर्द्धते इति ख०।
(३) अत्र विसर्गलोपे सन्धिरार्षः।
(४) जायतेन्द्रियगोचरा इत्यत्र यलोपे सन्धिरार्षः।

श्रोतुमिच्छामहे विष्णोः कर्म्माणि च यथाक्रमं ।
आश्चर्य्याणि परं विष्णुर्वेददेवैश्च कथ्यते ॥६०॥
विष्णोरुत्पत्तिमाश्चर्य्यं कथयस्व महामते ।
एतदाश्चर्य्यमाख्यानं कथ्यतां वै सुखावहं ॥६१॥
प्रख्यातबलवीर्य्यस्य प्रादुर्भावा महात्मनः ।
कर्म्मणाश्चर्य्यभूतस्य विष्णोः सत्त्वमिहोच्यतां ॥६२॥
सूत उवाच। अहन्तु कीर्त्तयिष्यामि प्रादुर्भावं महात्मनः ।
यथा स भगवान् जातोमानुषेषु महातपाः ॥६३॥
सप्तसप्ततपः प्रोक्ता भृगुशापेन मानुषे ।
जायते च युगान्तेषु देवकार्य्यार्थसिद्धये ॥६४॥
तस्य दिव्यतनुं विष्णोर्गदतोमे निबोधत ।
युगधर्म्मे परावृत्ते काले च शिथिले प्रभुः ॥६५॥
कर्त्तुं धर्म्मव्यवस्थानं जायते मानुषेष्विह ।
भृगोः शापनिमित्तेन देवासुरकृतेन च(१) ॥६६॥
ऋषय ऊचुः। कथं देवासुरकृते अध्याहारमवाप्नुयात् ।
एतद्वेदितुमिच्छामोवृत्तं(२) दैवासुरं कथं ॥६७॥
सूत उवाच। दैवासुरं यथा वृत्तं ब्रुवतस्तन्निबोधत ।
हिरण्यकशिपुर्दैत्यस्त्रैलोक्यं प्राक् प्रशासति(३) ॥६८॥
बलिनाधिष्ठितं राष्ट्रं(४) पुनर्लोकत्रये क्रमात् ।

---

(१) देवासुरकृते हि सः इति पाठः साधीयान्। देवासुरकुलेषु च इति ख० ग०। (२) कृत्यमिति ख० ग०।
(३) आदर्शपुस्तकमात्रे हिरण्यकशिपुर्दैत्य इति पाठोऽस्ति, अयन्तु न समीचीनः। (४) राज्यमिति ख० ग० ङ० च०।

सख्यमासीत्परं तेषां देवानामसुरैः सह ॥६९॥
युगं वै दशसङ्कीर्णमासीदव्याहतं जगत्(१) ।
निदेशस्थायिनश्चैव तयोर्देवासुराभवन् ॥७०॥
बलवान् वै विवादोऽयं संप्रवृत्तः सुदारुणः ।
दैवासुराणां च तदा घोरक्षयकरो महान् ॥७१॥
तेषां दायनिमित्तं वै संग्रामा बहवोऽभवन् ।
वराहेऽस्मिन् दश द्वौ च षण्डामार्कान्तराः स्मृताः ॥७२॥
नामतस्तु समासेन शृणुध्वं तान् विवक्षतः ।
प्रथमो नारसिंहस्तु द्वितीयश्चापि वामनः ॥७३॥
तृतीयः स तु वाराहश्चतुर्थोऽमृतमन्थनः ।
संग्रामः पञ्चमश्चैव सुघोरस्तारकामयः ॥७४॥
षष्ठो ह्रादीवक(२)स्तेषां सप्तमस्त्रैपुरः स्मृतः ।
अन्धकारोऽष्टमस्तेषां ध्वजश्च नवमः स्मृतः ॥७५॥
वार्त्तश्च दशमो ज्ञेयस्ततो हालाहलः स्मृतः ।
स्मृतो द्वादशमस्तेषां घोरकोलाहलोऽपरः ॥७६॥
हिरण्यकशिपुर्दैत्यो नरसिंहेन सूदितः ।
वामनेन बलिर्बद्धस्त्रैलोक्याक्रमणे कृते ॥७७॥
हिरण्याक्षो हतो द्वन्द्वे(३) प्रतिवादे तु दैवतैः ।

---

(१) युगाख्यादशसम्पूर्णा आसीदव्याहतं जगदिति पाठः आदर्शपुस्तकमात्रे वर्त्तते ।
(२) ह्रालीवक इति ख०, ह्राडीवक इति ग०, ह्राढीवक इति ङ०च० ।
(३) युद्धे इति ख० ग० ।

महाबलोमहासत्वः संग्रामेष्वपराजितः ॥७८॥
दंष्ट्रायास्तु वराहेण समुद्रात्तूर्यदा हता ॥
प्राह्लादोनिर्जितोयुद्धे इन्द्रेणामृतमन्थने ॥८९॥
विरोचनस्तु प्राह्लादिर्नित्यमिन्द्रवधोद्यतः ।
इन्द्रेणैव स विक्रम्य निहतस्तारकामये ॥८०॥
भवाद्वध्यतां प्राप्य विशेषाख्यादिभिस्तु यः ।
सञ्जभो[१] निहतः षष्ठे ब्रह्माविष्टेन विष्णुना ॥८१॥
अशक्नुवन्तोदेवेषु पुरं गोप्तु त्रिदैवतं ।
निहताः दानवाः सर्वे त्रिपुरस्त्र्यम्बकेण तु ॥८२॥
अष्टमे त्वसुराश्चैव राक्षसाश्चान्धकारकाः ।
जितदेवमनुष्यैस्तु पितृभिश्चैव सङ्गताम् ॥८३॥
संहतान् दानवांश्चैव सङ्गतान् कृत्स्नशश्च तान्[२] ।
तथा विष्णुसहायेन महेन्द्रेण निवर्हिताः ॥८४॥
हतोध्वजोमहेन्द्रेण मायाच्छन्नश्च योधयन् ।
ध्वजे लक्ष्ये समाविश्य विप्रवर्त्तिर्महाभुजः ॥८५॥
दैत्यांश्च दानवांश्चैव संहतान् कृत्स्नशश्च तान् ।
रजिः कोलाहले सर्वान् देवैः परिवृतोऽजयत् ।
यज्ञामृतेन[३] विजितौ षण्डामार्कौ तु दैवतैः ॥८६॥
एते देवाः पुरा वृत्ताः संग्रामा द्वादशैव तु ।
देवासुरक्षयकराः प्रजानामशिवाय च ॥८७॥

(१) सञ्जसो इति क० ज०, जसम्भो इति ख० ।
(२) प्राप्य इत्यध्यवसाय्यं ।/ (३) यज्ञायज्ञेनेति छ० ।

हिरण्यकशिपू राजा वर्षाणामर्बुदं बभौ ।
तथा शतसहस्राणि ह्यधिकानि द्विसप्तति ।
अशीतिं च सहस्राणि त्रैलोक्यस्येश्वरोऽभवत् ॥८८॥
पर्याये तस्य राजाऽनु बलिर्वर्षार्बुदं पुनः ।
षष्टिं चैव सहस्राणि त्रिंशच्च नियुतानि च ॥८९॥
बलेराज्याधिकारस्तु यावत्कालं बभूवह ।
प्रह्लादेन गृहीतोऽभूत्तावत्कालं तदासुरैः ॥९०॥
इन्द्रास्त्रयस्ते विख्याता असुराणां महौजसः ।
दैत्यसंस्थमिदं सर्वमासीद्दशयुगं किल ॥९१॥
असपत्नं ततः सर्वं राष्ट्रं दशयुगं पुरा[१] ।
त्रैलोक्यमव्ययमिदं महेन्द्रेण तु पाल्यते ॥९२॥
प्रह्लादस्य ततस्तस्मात्त्रैलोक्यं कालपर्ययात् ।
पर्यायेण च संप्राप्ते त्रैलोक्ये पाकशासनः ॥९३॥
ततोऽसुरान् परित्यज्य यज्ञो देवा उपागमन् ।
यज्ञे देवानथ गते काव्यं ते ह्यसुराब्रुवन् ॥९४॥
हृतं नोमिषतां राष्ट्रं त्यक्त्वा यज्ञं पुनर्गताः ।
स्थातुं न शक्नुमो ह्यद्य[२] प्रविशामो रसातलं ॥९५॥
एवमुक्तोऽब्रवीदेतान् विषण्णः सान्त्वयन् गिरा ।
माभैष्ट धारयिष्यामि तेजसा स्वेन चासुराः[३] ॥९६॥

---

(१) पुनः इति ङ० च० ।

(२) एष्यां इति क० ।

(३) वै पुरा इति ख०, ग० पुस्तके एतच्छ्लोकार्द्धाभावो वर्त्तते । ख० ग० पुस्तकव्यतिरिक्तपुस्तकेषु वै सुराः इति पाठो विद्यते, अयमपपाठः ।

वृष्टिरोषधयश्चैव रसावसु च यद्वसु ।
कृत्वा मयि च तिष्ठन्ति पादस्तेषां सुरेषु वै ।
युष्मदर्थं प्रदास्यामि तत्सर्वं धार्य्यते मया ॥९७॥
ततोदेवासुरान् दृष्ट्वा धृतान् काव्येन धीमता ।
अमन्त्रयंस्तदा ते वै सविग्ना विजिगीषया ॥९८॥
एष काव्य इदं सर्वं व्यावर्त्तयति नोबलात् ।
साधु गच्छामहे तूर्णं चीणान्नाप्याययस्व तान्[१] ।
प्रसह्य हत्वा शिष्टान् वै[२] पातालं प्रापयामहे ॥९९॥
ततोदेवाः सुसंरब्धा दानवानभिसृत्य वै ।
जघ्नुस्तैर्बध्यमानास्ते काव्यमेवाभिदुद्रुवुः ॥१००॥
ततः काव्यस्तु तान् दृष्ट्वा तूर्णं देवैरभिद्रुतान् ।
समरेऽत्तत्रातांस्तान्[३] देवेभ्यस्तान् दितेः सुतान् ॥१०१॥
काव्योदृष्ट्वा स्थितान् देवान् तत्र देवोऽभ्यचिन्तयत् ।
तानुवाच ततोध्यात्वा पूर्ववृत्तमनुस्मरन् ॥१०२॥
त्रैलोक्यं विजितं सर्वं वामनेन त्रिभिः क्रमैः[४] ।
बलिर्बद्धोहतोजम्भोनिहतश्च विरोचनः ॥१०३॥

---

(१) चीणानाप्यपर्य्यादता इति क० ज० । चीणामाप्याययधिमान् इति ख०, एतच्छ्लोकार्द्धं ग० पुस्तके न विद्यते, चीणानाप्याययस्थितान् इति ङ० च०, चीणानाप्यपर्य्यादतान् इति छ० । एते पाठा भ्रममूलाः ।

(२) शिष्टांश्च इति आदर्शपुस्तकपाठोऽस्ति ।

(३) सर्व्वेषु आदर्शपुस्तकेषु, समरत्नतत्रस्तातांन् इति पाठोवर्त्तते, अयं न समीचीनः ।

(४) त्रिविक्रमैः इति ख० ।

महार्हेषु द्वादशसु संग्रामेषु सुरैर्हताः ।
तैस्तैरुपायैर्भूयिष्ठा निहता ये प्रधानतः ॥१०४॥
किञ्चिच्छिष्टास्तु(१) वै यूयं युद्धेष्वन्येषु वै स्वयं(२) ।
नीतिं वोहि विधास्यामि कालः कश्चित्प्रतीक्ष्यतां ॥१०५॥
यास्याम्यहं महादेवं मन्त्रार्थे विजयाय वः ।
अग्निमाप्याययेद्धोता मन्त्रैरेव बृहस्पतिः ॥१०६॥
ततोयास्याम्यहं देवं मन्त्रार्थे नीललोहितं ।
युष्माननुग्रहीष्यामि पुनः पश्चादिहागतः ॥१०७॥
यूयं तपश्चरध्वं वै संवृता वल्कलैर्वने ।
न वै देवा बधिष्यन्ति यावदागमनं मम ॥१०८॥
अप्रतीपांस्ततोमन्त्रान् देवात् प्राप्य महेश्वरात् ।
योत्स्यामहे पुनर्देवांस्ततः प्राप्स्यथ वै जयं ॥१०९॥
ततस्ते कृतसंवादा देवानूचुस्ततोऽसुराः ।
न्यस्तवादा वयं सर्वे लोकान् यूयं क्रमन्तु(३) वै ॥११०॥
वयं तपश्चरिष्यामः संवृता वल्कलैर्वने ।
प्रह्लादस्य वचः श्रुत्वा सत्यव्याहरणं तु तत् ॥१११॥
ततोदेवा निवृत्ता वै विज्वरा मुदिताश्च ह ।
न्यस्तशस्त्रेषु दैत्येषु स्वान् वै जग्मु र्यथागतान् ॥११२॥
ततस्तानब्रवीत्काव्यः कश्चित्कालमुपास्यतां ।

---

(१) कल्पाः शिष्टास्तु इतिपाठः साधीयान् ।
(२) क्षयमिति ख० ग० ।
(३) आक्रामत इत्यर्थे क्रमन्तु इत्यार्षः ।

निरुत्सुकैस्तपोयुक्तैः कालं कार्यार्थसाधकैः ।
पितुर्ममाश्रमस्था वै सर्वे देवाः सवासवाः ॥११३॥
स सन्दिश्यासुरान् काव्योमहादेवं प्रपद्य च ।
प्रणम्यैनमुवाचाथ जगत्प्रभवमीश्वरं ॥११४॥
मन्त्रानिच्छाम्यहं देव ये न सन्ति बृहस्पतौ ।
पराभवाय देवानामसुरेष्वभयावहान् ॥११५॥
एवमुक्तोऽब्रवीद्देवोमन्त्रानिच्छसि वै द्विज ।
व्रतं चर मयोद्दिष्टं ब्रह्मचारी समाहितः ॥११६॥
पूर्णं वर्षसहस्रं वै कुण्डधूममवाक्शिराः ।
यद्युपास्यसि भद्रन्ते मत्तोमन्त्रमवाप्स्यसि ॥११७॥
तथोक्तोदेवदेवेन स शुक्रस्तु महातपाः ।
पादौ संस्पृश्य देवस्य बाढमित्यभ्यभाषत ॥११८॥
व्रतं चराम्यहं ह्येषं यथोद्दिष्टोस्मि वै प्रभो ।
ततोनियुक्तोदेवेन कुण्डधारोस्य धूमहृत् ॥११९॥
असुराणां हितार्थाय तस्मिन् शुक्रे गते तदा ।
मन्त्रार्थं तत्र वसति ब्रह्मचर्यंमहेश्वरः ॥१२०॥
तद्बुद्ध्वा नातिपूर्वन्तु(१) राज्यं न्यस्तं तदासुरैः ।
तस्मिन् छिद्रे तदामर्षा देवास्तान् समभिद्रवन् ।
निशितास्त्रायुधाः सर्वे बृहस्पतिपुरोगमाः ॥१२१॥
दृष्ट्वासुरगणा देवान् प्रगृहीतायुधान् पुनः ।

---

(१) तद्बुद्ध्वा नीतिपूर्व्वन्तु इति क० ख० घ० ङ०, ग० पुस्तके एतच्छ्लोकार्द्धंनोपलभ्यते ।

उत्पेतुः सहसा सर्वे सन्त्रस्तास्ते ततोऽभवन् ॥१२२॥
न्यस्तशस्त्रे जये इते आचार्यव्रतमास्थिते ।
सम्यङ्च समयं देवास्ते सपत्नजिघांसवः[१] ॥१२३॥
अनाचार्य्यास्तु[२] भद्रं वो त्रिश्वस्तास्तपसि स्थिताः ।
चीरवल्काजिनधरा निष्क्रिया निष्परिग्रहाः ॥१२४॥
रणे विजेतुं देवान् वै न शक्यामः कथञ्चन ।
अयुद्धेन प्रपद्यामः शरणं काव्यमातरं ॥१२५॥
ज्ञापयामस्तत[३]मिदं यावदागमनं गुरोः ।
विनिवृत्ते ततः काव्ये योत्स्यामो युधि तान् सुरान् ॥१२६॥
एवमुक्त्वासुरान् योग्यं शरणं काव्यमातरं ।
प्रापद्यन्त ततो भीतास्तदा चैव तदाऽभयं ॥१२७॥
दत्तन्तेषान्तु भीतानां दैत्यानामभयार्थिनां ।
न भेतव्यं न भेतव्यं भयन्त्यजत दानवाः ॥१२८॥
मत्सन्निधौ वर्त्ततां वो न भीर्भवितुमर्हति ।
अथाचाप्यभिपन्नांस्तान् दृष्ट्वा देवासुरांस्तदा ॥१२९॥
अभिजग्मुः प्रसह्यैतानविचार्य्य बलाबलं ।
तांस्तस्तान् बध्यमानांश्च देवैर्दृष्ट्वासुरांस्तदा ॥१३०॥
देवी क्रुद्धाब्रवीदेनाननिन्द्रत्वं करोम्यहं ।
संस्तभ्य शीघ्रं संरम्भादिन्द्रं साऽभ्यचरत्ततः ॥१३१॥
ततः संस्तंभितं दृष्ट्वा शक्रं देवास्तु यूपवत् ।

(१) आजग्मुरित्यूहनीयं ।
(२) वयमिति शेषः ।
(३) सत्यमिति ख० ।

व्यद्रवन्त ततोभीता दृष्ट्वा शक्रं वशीकृतं ॥१२२॥
गतेषु सुरसंघेषु विष्णुरिन्द्रमभाषत ।
मां त्वं प्रविश भद्रन्ते नेष्यामि त्वां सुरेश्वर ॥१२३॥
एवमुक्तस्ततोविष्णुं प्रविवेश पुरन्दरः ।
विष्णुना रक्षितं दृष्ट्वा देवी क्रुद्धा वचोऽवदत् ॥१२४॥
एषा[१]त्वां विष्णुना सार्द्धं दहामि मघवानिव ।
मिषतां सर्वभूतानां दृश्यतां मे तपोबलं ॥१२५॥
तयाभिभूतौ तौ देवाविन्द्रविष्णू अजल्पतुः ।
कथं मुच्येव[२] सहितौ विष्णुरिन्द्रमभाषत ॥१२६॥
इन्द्रोऽब्रवीज्जहि ह्येनां यावन्नौ न दहेद्विभो ।
विशेषेणाभिभूतोऽहमतस्त्वञ्जहि मा चिरं ॥१२७॥
ततः समीक्ष्य तां विष्णुः स्त्रीवधं कर्त्तुमास्थितः ।
अभिध्याय ततश्चक्रमापन्नः सत्वरं प्रभुः ॥१२८॥
तस्याः सत्वरमाणायाः शीघ्रकारी सुरारिहा ।
स्त्रियोविष्णुस्ततोदेव्याः क्रूरं बुद्ध्वा चिकीर्षितं ।
क्रुद्धस्तदस्त्रमाविध्य शिरश्चिच्छिद माधवः ॥१२९॥
तं दृष्ट्वा स्त्रीवधं घोरं चुकोप भृगुरीश्वरः ।
ततोऽभिशप्तो[३]भृगुणा विष्णुर्भार्य्यावधे तदा ॥१४०॥
यस्मात्ते जानता धर्म्मानवध्या स्त्री निषूदिता ।
तस्मात्त्वं सप्तकृत्वोवै मानुषेषु प्रपत्स्यसि ॥१४१॥

(१) एका इति क० ज० ।
(२) मुच्याव इति पाठोविशुद्धः ।
(३) अभिशप्त इति पाठः सङ्गतः ।

ततस्तेनाभिशापेन नष्टे धर्मे पुनः पुनः ।
लोके सर्वहितार्थाय जायते मानुषेष्विह ॥१४२॥
अनुव्याहृत्य विष्णुं स तदादाय शिरः स्वयं ।
समानीय ततः काये अपोग्टह्येदमब्रवीत् ॥१४३॥
एष त्वां विष्णुना सत्ये हतां संजीवयाम्यहं ।
यदि कृत्स्नोमया धर्मश्चरितोज्ञायतेऽपि वा ।
तेन सत्येन जीवस्व यदि सत्यं ब्रवीम्यहं ॥१४४॥
सत्याभिव्याहृता तस्य देवी संजीविता तदा ।
तदा तां प्रोच्य शीताभिरद्भिर्जीवेति सोऽब्रवीत् ॥१४५॥
ततस्तां सर्व्वभूतानि दृष्ट्वा सुप्तोत्थिता १६
साधु साध्वित्यदृश्यानां वाचस्ताः सस्वरुर्दिशः ॥१४६॥
दृष्ट्वा सञ्जीवितामेवं देवीं तां भृगुणा तदा ।
मिषतां सर्वभूतानां तदद्भुतमिवाभवत् ॥१४७॥
असंभ्रान्तेन भृगुणा पत्नीं सञ्जीवितां ततः ।
दृष्ट्वा शक्रोन लेभेऽथ शर्म काव्यभयात्ततः ॥१४८॥
प्रजागरे(१) ततश्चेन्द्रोजयन्तीमात्मनः सुतां ।
प्रोवाच मतिमान् वाक्यं स्वां कन्यां पाकशासनः ॥१४९॥
एष काव्योह्यनिन्द्राय चरते दारुणं तपः ।

---

(१) प्रजागरे इति श्लोकार्द्धस्य ख० पुस्तके अभावोवर्त्तते, प्रजागारे इति ग०, ख० ग०पुस्तकव्यतिरिक्तेषु प्रजागरे इति पाठोऽस्ति, सयस्तु लेखकप्रमादसम्भूत एव । प्रजागरे इत्यत्र प्रजागारे अथवा अजागारे इति पाठः संगतार्थः ।

तेनाहं व्याकुलः पुत्रि कृतोऽर्त्तिमता दृढं ॥१५०॥
गच्छ सम्भावयस्वैनं श्रमापनयनैः शुभैः।
तैस्तैर्मनोनुकूलैश्च ह्युपचारैरतन्द्रिता ॥१५१॥
देवी सा हीन्द्रदुहिता जयन्ती शुभचारिणी।
युक्तध्यानञ्च ग्राम्यं(१) तन्दुर्बलं धृतिमास्थितं ॥१५२॥
पित्रा यथोक्तं काव्यं(२) सा काव्ये कृतवती तदा।
गीर्भिश्चैवानुकूलाभिः स्तुवती वल्गुभाषिणी ॥१५३॥
गात्रसंवाहनैः काले सेवमाना सुखावहैः।
शुश्रूषन्त्यनुकूला च उवास बहुलाः समाः ॥१५४॥
पूर्णे धूम्रव्रते चापि घोरे वर्षसहस्रिके।
वरेण च्छन्दयामास काव्यं प्रीतोऽभवत्तदा ॥१५५॥
एवं व्रतं त्वयैकेन चीर्णं नान्येन केनचित्।
तस्मात्त्वं तपसा बुध्या श्रुतेन च बलेन च ॥१५६॥
तेजसा चापि विबुधान् सर्व्वानभिभविष्यसि।
यच्च किञ्चिन्मम ब्रह्मन् विद्यते भृगुनन्दन ॥१५७॥
साङ्गञ्च सरहस्यञ्च यज्ञोपनिषदान्तथा।
प्रतिभास्यति ते सर्वं तच्चाख्यन्तं न कस्यचित् ॥१५८॥

---

(१) मुडक्तयधानं ग्राम्यमिति क० ञ०, युक्तध्यानञ्च ग्राम्यन्तमिति ख०, मुक्तं व्यानञ्च ग्राम्यं तमिति ग०, स्रुयङ्कूप धनं ग्राम्यमिति ङ० च०, कुखूपधानं ग्राम्यं तमिति छ०। एतेषामर्थरहितत्वान्नैकोऽपि व्यासभावितः। मुक्तं व्यानञ्चेत्यत्र मुक्तोपधानमितिपाठः सङ्गतार्थः। ग्राम्यमित्यत्र ग्रान्तमिति पाठः साधुः।
(२) उपगम्येति क्रियापदमूहनीयं।

सर्वाभिभावी तेन त्वं द्विजश्रेष्ठोभविष्यसि ।
एवं दत्त्वा वरां[१]स्तस्मै भार्गवाय पुनः पुनः ॥१५९॥
अजेयत्वं धनेशत्वमवध्यत्वं च वै ददौ ।
एतान् लब्धा वरान् काव्यः सम्प्रहृष्टतनूरुहः ॥१६०॥
हर्षात् प्रादुर्बभौ तस्य देवस्तोत्रं महेश्वरं ।
तदा तिर्यक्स्थितस्त्वेवं तुष्टुवे नीललोहितं ॥१६१॥
नमोऽस्तु शितिकण्ठाय सुरापायसुवर्चसे ।
रिरिहाणाय[२] लोपाय वत्सराय जगत्पते ॥१६२॥
कपर्दिने ऊर्द्धरोमणे हयाय करणाय च ।
संस्कृताय सुतीर्थाय देवदेवाय रंहसे ॥ १६३॥
उष्णीषिणे सुवक्राय सहस्राक्षाय मीळ्ढुषे[३] ।
वसुरेताय रुद्राय तपसे चीरवाससे ॥१६४॥
ह्रस्वाय मुक्तकेशाय सेनान्ये रोहिताय च ।
कवये राजवृद्धाय तक्षकक्रीडनाय[४] च ॥१६५॥
गिरिशायार्कनेत्राय यतिने[५] जाम्बवाय च ।
सुवृत्ताय सुहस्ताय धन्विने भार्गवाय च ॥१६६॥
सहस्रबाहवे चैव सहस्रामलचक्षुषे ।

---

(१) वरमिति ख० ग० ङ० च० छ० ।
(२) रेरिहाणाय लोपायेति ङ० च० छ० । अत्र, अरिहनमस्याय इति पाठः समीचीनः ।
(३) मीढुषे इति क० ज०, मीयुषे छ० ।
(४) तक्षकाक्रीडनाय इति छ० ।
(५) यतये इति ख० ।

सहस्रभुजये चैव सहस्रचरणाय च ॥१६७॥
सहस्रशिरसे चैव बहुरूपाय वेधसे।
भवाय विश्वरूपाय श्वेताय पुरुषाय च ॥१६८॥
निषङ्गिने कवचिने सूक्ष्माय[१] चपणाय[२] च।
ताम्राय चैव भीमाय उग्राय च शिवाय च ॥१६९॥
बभ्रवे च पिशङ्गाय पिङ्गलायारुणाय च।
महादेवाय शर्वाय विश्वरूपशिवाय च ॥१७०॥
हिरण्याय च शिष्टाय श्रेष्ठाय मध्यमाय च।
पिनाकिने चेषुमते चित्राय रोहिताय च॥१७१॥
दुन्दुभ्यायैकपादाय अर्हाय बुद्धये तथा।
मृगव्याधाय सर्पाय स्थाणवे भीषणाय च ॥१७२॥
बहुरूपाय चोग्राय त्रिनेत्रायेश्वराय च।
कपिलायैकवीराय मृत्यवे त्र्यम्बकाय च ॥१७३॥
वास्तोष्पते पिनाकाय शङ्कराय शिवाय च।
आरण्याय[३] गृहस्थाय[४] यतिने ब्रह्मचारिणे॥१७४॥
सांख्याय चैव योगाय ध्यानिने दीक्षिताय च।
अन्तर्हिताय शर्वाय मान्याय मालिने तथा ॥१७५॥
बुद्धाय चैव शुद्धाय मुक्तये केवलाय च।

---

(१) मुण्डाय इति ङ० च०।
(२) मल्लयाय इति ङ० च०।
(३) अरण्यायेति ङ० च०।
(४) गृहस्थायेति ङ० च०।

रोधसे चेकितानाय अश्लिष्टाय महर्षये ॥१७६॥
चतुष्पादाय मेध्याय धर्मिणे शीघ्रगाय च ।
शिखण्डिने कपालाय दंष्ट्रिणे विश्वमेधसे ॥१७७॥
अप्रतीघाताय दीप्ताय भास्कराय सुमेधसे ।
क्रूराय विकृतायैव वीभत्साय शिवाय च ॥१७८॥
सौम्याय चैव पुण्याय धार्मिकाय शुभाय च ।
अवध्याय मृताङ्गाय नित्याय शाश्वताय च ॥१७९॥
साद्याय[१] शरभायैव शूलिने च त्रिचक्षुषे ।
सोमपायाज्यपायैव धूमपायोष्मपाय च ॥१८०॥
शुचये रेरिहाणाय सद्योजाताय मृत्यवे ।
पिशिताशाय खर्वाय मेधाय वैद्युताय च ॥१८१॥
व्याश्रिताय अविष्ठाय भारतायान्तरिक्षये[२] ।
क्षमाय सहमानाय सत्याय तपनाय च ॥१८२॥
त्रिपुरघ्नाय दीप्ताय चक्राय रोमशाय च ।
तीक्ष्णायुधाय मेध्याय सिद्धाय च पुनस्तये ॥१८३॥
रोचमानाय खण्डाय स्फीताय ऋषभाय च ।
भोगिने पुञ्जमानाय शान्तायैवार्द्धरेतसे ।१८४॥
अघघ्नाय मखघ्नाय मृत्यवे यज्ञियाय च ।
कृशानवे प्रचेताय वह्नये किशलाय च ।१८५॥

---

(१) कथ्यायेति ङ० च० ।
(२) भारतायान्तरिक्षवे इति ङ० च० छ० ।

सिकत्याय प्रसन्नाय वरेण्यायैव चक्षुषे[१]।
चिप्रगवे सुधन्वाय प्रमेध्याय पिवाय च ।१८६॥
रक्षोघ्नाय पशुघ्नाय विघ्नाय श्वयनाय च ।
विभ्रान्ताय महन्ताय अन्तये दुर्गमाय च ॥१८७॥
दक्षाय च जघन्याय लोकानामीश्वराय च ।
अनामयाय चोर्द्धाय संहृत्याधिष्ठिताय च ॥१८८॥
हिरण्यबाहवे चैव सत्याय शमनाय च ।
अविकल्पाय माधाय रीरिण्यायैकचक्षुषे ॥१८९॥
श्रेष्ठाय वामदेवाय ईशानाय च धीमते ।
महाकल्पाय दीप्ताय रोदनाय हसाय च ॥१९०॥
दृतधन्वने[२] कवचिने रथिने च वरूथिने ।
भृगुनाथाय शुक्राय वह्निरिष्टाय[३] धीमते ॥१९१॥
अघाय अघसंभाय विप्रियाय प्रियाय च ॥
दिग्वासःकृत्तिवासाय भगघ्नाय नमोऽस्तु ते[४] ॥१९२॥
पशूनां पतये चैव भूतानां पतये नमः ।
प्रणवे ऋग्यजुःसाम्ने स्वधायै च सुधाय च ॥१९३॥
वषट्कारतमायैव तुभ्यमन्तात्मने नमः ।

---

(१) वरेण्यायैकचक्षुषे इति ख० ।
(२) दृढधन्विने इति ख० ङ० च० छ० । दृढधन्वने इति प्रयोगः समीचीनः ।
(३) वह्निरेताय इति ख० ग० ।
(४) नमोनमः इति ख० ग० ।

वह्ने ध्याने तथा होत्रे हव्ये च क्षपणाय[१] च ॥१९४॥
भूतभव्यभवायैव तुभ्यङ्कालात्मने नमः ।
वसवे चैव साध्याय रुद्रादित्याश्विनाय च ॥१९५॥
विश्वाय मरुते चैव तुभ्यन्देवात्मने नमः ।
अग्निसोमर्त्विगिज्याय पशुमन्त्रौषधाय च ॥१९६॥
दक्षिणावभृथायैव तुभ्यं यज्ञात्मने नमः ।
तपसे चैव सत्याय त्यागाय च शमाय च ॥१९७॥
अहिंसायाप्यलोभाय सुवेशायातिशाय च ।
सर्वभूतात्मभूताय तुभ्यं योगात्मने नमः ॥१९८॥
पृथिव्यै चान्तरिक्षाय दिवाय च महाय च ।
जनस्तपाय सत्याय तुभ्यं लोकात्मने नमः ॥१९९॥
अव्यक्तायाथ महते भूतायैवेन्द्रियाय च ।
तन्मात्राय महान्ताय तुभ्यन्तत्त्वात्मने नमः ॥२००॥
नित्याय चार्थलिङ्गाय[२] सूक्ष्माय चेतनाय च ।
शुद्धाय विभवे चैव तुभ्यं नित्यात्मने नमः ॥२०१॥
नमस्ते त्रिषु लोकेषु स्वरान्तेषु[३] भवादिषु ।
सत्यान्तेषु महान्तेषु चतुर्षु च नमोऽस्तु ते ॥२०२॥
नमः स्तोत्रे मया ह्यस्मिन् सदसद्व्याहृतं विभो ।
मद्भक्त इति ब्रह्मण्य सर्वन्तत् क्षन्तुमर्हसि ॥२०३॥

इति श्रीमहापुराणे वायुप्रोक्ते विष्णुमाहात्म्ये प्रभुस्तवकीर्त्तनं नाम पञ्चत्रिंशोऽध्यायः समाप्तः ॥

(१) क्षेपणाय इति ख० ।
(२) चाथ लिङ्गाय इति ख० ङ०, चाप्यलिङ्गाय इति च० ।
(३) खरितेषु इति ञ० ।

# अथ षट्त्रिंशोऽध्यायः ।

विष्णुमाहात्म्यकीर्त्तनं ।

सूत उवाच । एवमाराध्य देवेशमीशानं नीललोहितं ।
शक्रोऽति प्रणतस्तस्मै प्राञ्जलिर्वाक्यमब्रवीत् ॥१॥
काव्यस्य गात्रं संस्पृश्य हस्तेन प्रीतिमान् भवः ।
निकामं दर्शनं दत्त्वा तत्रैवान्तरधीयत ॥२॥
ततः सोऽन्तर्हिते तस्मिन् देवेशानुचरे[१] तदा ।
तिष्ठन्तीं प्राञ्जलिर्भूत्वा जयन्तीमिदमब्रवीत् ॥३॥
कस्य त्वं सुभगे का वा दुःखिते मयि दुःखिता ।
महता तपसा युक्तं किमर्थं माञ्जुगोपसि[२] ॥४॥
अनया सततं भक्त्या प्रश्रयेण दमेन च ।
स्नेहेन चैव सुश्रोणि प्रीतोऽस्मि वरवर्णिनि ॥५॥
किमिच्छसि वरारोहे कस्ते[३] कामः समृध्यतां ।
तं ते संपूरयाम्यद्य यद्यपि स्यात् सुदुर्लभं ॥६॥
एवमुक्ताऽब्रवीदेनं तपसा ज्ञातुमर्हसि ।
चिकीर्षितं मे ब्रह्मिष्ठ त्वं हि वेत्थ यथातथं ॥७॥
एवमुक्तोऽब्रवीदेनां दृष्ट्वा दिव्येन चक्षुषा ।
माहेन्द्री त्वं वरारोहे मद्धितार्थमिहागता ॥८॥

---

(१) देवेशानुचरे इति पाठः आदर्शपुस्तकमात्रे वर्त्तते । अथ देवेशेऽनुचरामिति पाठः समीचीनः ।

(२) किमर्थममगोपसि इति ख० ।

(३) यस्ते इति पाठः सुसङ्गतः ।

मया सह त्वं सुश्रोणि दश वर्षाणि भामिनि ।
अदृश्यं सर्व्वभूतैस्तु संप्रयोगमिहेच्छसि ॥९॥
देवेन्द्राननवर्णाभे[१] वरारोहे सुलोचने ।
इमं वृणीष्व कामं ते मत्तोवै वल्गुभाषिणि ॥१०॥
एवं भवतु गच्छामोऽस्मद्‌गृहान् वै मत्तकाशिनि ।
ततः स्वगृहमागम्य जयन्त्या सहितः प्रभुः ॥११॥
स तया संवसेद्देव्या दश वर्षाणि भार्गवः ।
अदृश्यः सर्वभूतानां मायया संवृतस्तदा ॥१२॥
कृतार्थमागतं दृष्ट्वा[२] काव्यं सर्वे दितेः सुताः ।
अभिजग्मुर्गृहं तस्य मुदितास्ते दिदृक्षवः ॥१३॥
गता यदा न पश्यन्तोजयन्त्या संवृतं गुरुं ।
दाक्षिण्यं तस्य तद्‌बुद्धा प्रतिजग्मुर्यथागतं ॥१४॥
वृहस्पतिस्तु संरुद्धं ज्ञात्वा काव्यं चकार[३]ह ।
पित्रर्थे दश वर्षाणि जयन्त्या हितकाम्यया ॥१५॥
बुद्धा तदन्तरं सोऽथ दैत्यानामिव चोदितः ।
काव्यस्य रूपमास्थाय सोऽसुरान् समभाषत ॥१६॥
ततः समागतान्[४] दृष्ट्वा वृहस्पतिरुवाच तान् ।

---

(१) देवेन्द्राननवर्णासि इति क० ज०, देवेन्द्राननवर्णाभे इति ग० ।
(२) दृष्ट्वात्र ख० ग० पुस्तकव्यतिरिक्त आदर्शपुस्तकमात्रे कृत्वेतिपाठोऽस्ति । कृत्वेत्यत्र ज्ञात्वेति पाठः समीचीनः ।
(३) इदमिति कर्म्मपदमूहनीयं ।
(४) सेमान् गताम् इति क० ज०, सोमागताम् इति ङ० ञ० । एतत्पाठद्वयं लिपिकरप्रमादजनितं ।

स्वागतं मम याज्यानां संप्राप्तोऽस्मि हिताय च ॥१७॥
अहं बोध्यापयिष्यामि(१) प्राप्ता विद्या मया हि या।
ततस्ते हृष्टमनसोविद्यार्थमुपपेदिरे ॥१८॥
पूर्व्वकाव्य(२) स्तदा तस्मिन् समये दशवार्षिके(३)।
ययौ च समकालं च सद्योत्पन्नमतिस्तदा ॥१९॥
समयान्ते देवयानी सद्योजाता सुता तदा।
बुद्धिं चक्रे ततश्चापि याज्यानां प्रत्यवेक्षणे ॥२०॥

शुक्र उवाच।

देवि गच्छामहे द्रष्टुं तव याज्यान् सुचिस्मिते।
विभ्रान्तप्रेक्षिते साध्वि चिवर्णायतलोचने ॥२१॥
एवमुक्ताऽब्रवीद्देवी भज भक्तान् महाव्रत।
एष ब्रह्मन् सतां धर्मोन धर्मं लोपयामि ते ॥२२॥

सूत उवाच।

ततोगत्वासुरान् दृष्ट्वा देवाचार्येण धीमता।
वञ्चितान् काव्यरूपेण वेधसाऽसुरमब्रवीत् ॥२३॥
काव्यं मां तात जानीध्वं एष ह्याङ्गिरसोभुवि।
वञ्चिता वत यूयं वै मयि सक्ते तु दानवाः ॥२४॥
श्रुत्वा तथा ब्रुवाणन्तं सम्भ्रान्ता दितिजास्ततः।

---

(१) बोध्यापयिष्यामीत्यत्र वो ध्यापयिष्यामीति पाठः साधुः।
(२) पूर्व्वकाव्य इत्यत्र पूर्णकामः इतिपाठः साधीयान्।
(३) पूर्णा काव्यस्य तु तदा समये दशवार्षिकी इति पाठोऽत्र सम्भूतः।

प्रेक्षन्ते स्म ह्युभौ तत्र स्थितासीत(१) सुविस्मिताः(२) ॥२५॥
सम्प्रमूढाः स्थिताः सर्वे प्रापद्यन्त न किञ्चन ।
ततस्तेषु प्रमूढेषु काव्यस्तान् पुनरब्रवीत् ॥२६॥
आचार्य्यो वोऽप्यहं(३) काव्योऽदेवाचार्योऽयमङ्गिराः ।
अनुगच्छत मां सर्वे त्यजतैनं(४) बृहस्पतिं ॥२७॥
एवमुक्तासुराः(५) सर्वे तावुभौ समवैक्षत(६) ।
तदाऽसुरा विशेषन्तु न व्यजानंस्तयोर्द्वयोः ॥२८॥
बृहस्पतिरुवाचैतानसम्भ्रान्तोऽयमङ्गिराः(७) ।
काव्योऽहं योगुरुर्दैत्या मद्रूपोऽयं बृहस्पतिः ॥२९॥
स मोहयति रूपेण मामकेनैष वोऽसुरा ।
श्रुत्वा तस्य ततस्ते वै संमन्त्र्यार्थवचोऽब्रवीत् ॥३०॥
अयन्नो दश वर्षाणि सततं शास्ति वै प्रभुः ।
एष वै गुरुरस्माकमन्तरेप्सुरयं द्विजः ॥३१॥
ततस्ते दानवाः सर्वे प्रणिपत्याभिवाद्य च ।

---

(१) सितासीत इति क० ज०, स्थितासीन इति ख०, स्वीतास्वीना इति ङ०, स्थितासीना इति च०, स्थितासीता इति छ०। एते पाठा भ्रान्तिमूलाः अत्र स्थिता भीता इति पाठः समीचीनः ।
(२) सुविस्मिताः इत्यत्र सुविस्मिता इति पाठः सङ्गतः ।
(३) ऽप्ययमिति क० ङ०, च० छ० ज० ।
(४) त्यजतेममिति ङ० च० ।
(५) एवमुक्तासुरा इत्यत्र विसर्गलोपे सन्धिरार्षः ।
(६) समवैक्षत इत्यत्र बहुवचनप्राप्तावेकवचनमार्षं ।
(७) सम्भ्रान्तोऽभार्गवोऽङ्गिराः इति ख० ।

वचनं जगद्गुरोस्तस्य चिराभ्यासेन मोहिताः ॥२२॥
ऊचुस्तमसुराः सर्वे क्रुद्धाः संरक्तलोचनाः ।
अयङ्गुरुर्हितेऽस्माकं गच्छ त्वं नासि नो गुरुः ॥२३॥
भार्गवोऽङ्गिरसो वायं भवत्येव नो गुरुः ।
स्थिता वयं निदेशेऽस्य गच्छ त्वं साधु मा चिरं ॥२४॥
एवमुक्त्वाऽसुराः सर्वे प्रापद्यन्त बृहस्पतिं ।
यदा न प्रतिपद्यन्ते(१) तेनोक्तं तन्महद्धितं ॥२५॥
चुकोप भार्गवस्तेषामवलेपेन वै तदा ।
बोधितापि मया यस्मान्न मां भजत दानवाः ॥२६॥
तस्मात् प्रनष्टसंज्ञा वै पराभवङ्गमिष्यथ ।
इति व्याहृत्य तान् काव्यो जगामाथ यथागतं ॥२७॥
ज्ञात्वाऽभिशस्तानसुरान काव्येन तु बृहस्पतिः ।
कृतार्थः स तदा हृष्टः स्वरूपं प्रत्यपद्यत ।
बुद्ध्वाऽसुरांस्तदा भ्रष्टान् कृतार्थोऽन्तरधीयत ॥२८॥
ततः प्रनष्टे तस्मिंस्ते विभ्रान्ता दानवास्तदा ।
अहो धिग्वञ्चिताः स्मेह परस्परमथाब्रुवन् ॥२९॥
पृष्ठतोविमुखाश्चैव ताड़िता वेधसा वयं ।
दग्धाश्चैवोपयोगाच्च स्वेस्वे चार्थेषु मायया ॥४०॥
ततोऽसुराः परित्रस्ता देवेभ्यस्त्वरिता ययुः ।
प्रह्लादमग्रतः कृत्वा काव्यस्यानुगमं पुनः ॥४१॥

---

(१) प्रत्यपद्यन्त इति पाठः सम्यक्साधुः ।

ततः काव्यं समासाद्य अभितस्युरवाङ्मुखाः ।
तानागतान् पुनर्दृष्ट्वा काव्योयाज्यानुवाच ह ॥४२॥
मयापि बोधिताः काले यतोमां नाभिनन्दथ ।
ततस्तेनावलेपेन गता यूयं पराभवं ॥४३॥
प्रह्लादस्तमथोवाच मानं त्वं त्यज भार्गव ।
स्वान् याज्यान्[१] भजमानांश्च भक्तांश्चैव विशेषतः ॥४४॥
त्वया पृष्टा वयं तेन देवाचार्येण मोहिताः ।
भक्तानर्हसि नस्त्रातुं ज्ञात्वा दीर्घेण चक्षुषा ॥४५॥
यदि नस्त्वं न कुरुषे प्रसादं भृगुनन्दन ।
अपध्यातास्त्वया ह्यद्य प्रवेक्ष्यामोरसातलं ॥४६॥
सूत उवाच । ज्ञात्वा काव्यो यथातत्त्वं कारुण्येनानुकम्पया ।
एवमुक्तोऽनुनीतः स स्तुतः कोपं न्ययच्छत ॥४७॥
उवाचेदन्न भेतव्यं न गन्तव्यं रसातलं ।
अवश्यम्भावी ह्यर्थोऽयं प्राप्तोवो मयि जाग्रति ॥४८॥
न शक्यमन्यथाकर्तुं दृष्टं हि[२] बलवत्तरं ।
संज्ञा प्रनष्टा या वोऽद्य कामं तां प्रतिलप्स्यथ ॥४९॥
प्राप्तः पर्य्यायकालोव इति ब्रह्माऽभ्यभाषत ।
मत्प्रसादाच्च युष्माभिर्भुक्तं त्रैलोक्यमूर्ज्जितं ॥५०॥
युगाख्योदश संपूर्णादेवानाक्रम्य मूर्द्धनि ।
तावन्तमेव कालं वै ब्रह्मा राज्यमभाषत ॥५१॥
सावर्णिके पुनस्तुभ्यं राज्यं किल भविष्यति ।

---

(१) भजास्मानिति पाठः समीचीनः ।
(२) चादृष्टमितिपाठः साधीयान् ।

लोकानामीश्वरोभावी पौत्रस्तव पुनर्बलिः ॥५२॥
एवं किलमहं प्रोक्तः पौत्रस्ते ब्रह्मणा स्वयं।
तथाहृतेषु लोकेषु तपोऽस्य न किलाभवत् ॥५३॥
यस्मात् प्रवृत्तयश्चास्य न कामानभिसन्धिताः।
तस्मादनेन प्रीतेन दत्तं सावर्णिकेऽन्तरे ॥५४॥
देवराज्यं बलेर्भाव्यमिति मामीश्वरोऽब्रवीत्।
तस्माददृश्योभूतानां कालाकाङ्क्षी स तिष्ठति ॥५५॥
प्रीतेन चामरत्वं वै दत्तं तुभ्यं स्वयम्भुवा।
तस्मात् निरुत्सुकस्त्वं वै पर्य्यायं सह माकुलः ॥५६॥
न च शक्यं मया तुभ्यं पुरस्ताद्वै विसर्पितुं।
ब्रह्मणा प्रतिषिद्धोऽस्मि भविष्यं जानता प्रभो ॥५७॥
इमौ च शिष्यौ द्वौ मह्यं तुल्यावेतौ बृहस्पतेः।
दैवतैः सह संरब्धान् सर्व्वान् बोधारयिष्यतः ॥५८॥
एवमुक्तस्तु दैतेयाः काव्येनाक्लिष्टकर्म्मणा।
ततस्ताभ्यां ययुः सार्द्धं प्रह्लादप्रमुखास्तदा ॥५९॥
अवश्यभावमर्थंत्वं(१) श्रुत्वा शुक्राच्च दानवाः।
सकृदाशंसमानास्ते जयं काव्येन भाषितं ॥६०॥
दंशिताः सायुधाः सर्वे ततोदेवान् समाह्वयन्।
अथ देवासुरान् दृष्ट्वा संग्रामे समुपस्थितान् ॥६१॥
ततः संवृत्तसन्नाहा देवास्तान् समयोधयन्।
देवासुरे ततस्तस्मिन् वर्त्तमाने शतं समाः ॥६२॥

(१) अवश्यभाविनं ह्यर्थं मिति पाठः साधुः।

अजयन्नसुरा देवान् भग्ना देवा अमन्त्रयन् ॥६२॥
देवा ऊचुः । षण्डामार्कप्रभावं न जानीमस्त्वसुरैर्वयं ।
तस्माद्यज्ञं समुद्दिश्य कार्य्यं यात्महितञ्च यत् ॥६३॥
तज्ज्ञानापन्नतावेतौ हत्वा जेष्यामहेऽसुरान् ।
अथोपामन्त्रयन् देवाः षण्डामार्कौ तु तावुभौ ॥६४॥
यज्ञे समाह्वयिष्यामस्त्यजतमसुरान् द्विजौ ।
ग्रहं तं वा[१] ग्रहीष्यामोऽप्यनुजित्य तु दानवान् ॥६५॥
एवं तत्यजतुस्तौ तु षण्डामार्कौ तदासुरान् ।
ततो देवा जयं प्राप्ता दानवाश्च पराभवान् ॥६६॥
देवासुरान् पराभाव्य षण्डामार्कावुपागमन् ।
काव्यशापाभिभूताश्च अनाधाराश्च ते पुनः ॥६७॥
बध्यमानास्तदा देवैर्विविशुस्ते रसातले ।
एवं निरुद्यमास्ते वै हताः शक्रेण दानवाः ।
ततः प्रभृति शापेन भृगुनैमित्तकेन च ॥६८॥
जज्ञे पुनः पुनर्विष्णुर्यज्ञे च शिथिले प्रभुः ।
कर्त्तुं धर्म्मव्यवस्थानमधर्म्मस्य च नाशनं ॥६९॥
प्रह्लादस्य निदेशे तु येऽसुरा न व्यवस्थिताः ।
मनुष्यबध्यांस्तान् सर्व्वान् ब्रह्मा व्याहारयत् प्रभुः ॥७०॥
(धर्म्मान्नारायणस्तस्मात् सम्भूतश्चाक्षुषेऽन्तरे ।
यज्ञं प्रवर्तयामास चैत्ये वैवस्वतेऽन्तरे ॥७१॥

---

(१) भूतं तच्चग्रहीष्यामो इति ख० ।

प्रादुर्भावे तदान्यस्य ब्रह्मैवासीत् पुरोहितः ।
चतुर्थ्यान्तु युगाख्यायामापन्नेष्वसुरेष्वथ ॥७२॥
सम्भूतः स समुद्रान्तर्हिरण्यकशिपोर्बधे ।
द्वितीयो नरसिंहोऽभूत् रुद्रः सुरपुरस्सरः[१] ॥७३॥
बलिसंस्थेषु लोकेषु त्रेतायां सप्तमे युगे ।
दैत्यैस्त्रैलोक्य आक्रान्ते तृतीयोवामनोऽभवत् ॥७४॥
संक्षिप्यात्मानमङ्गेषु बृहस्पतिपुरस्सरं ।
यजमानन्तु दैत्येन्द्रमदित्याः कुलनन्दनः ।
द्विजोभूत्वा शुभे काले बलिं वैरोचनं पुरा[२] ॥७५॥
त्रैलोक्यस्य भवान् राजा त्वयि सर्व्वं प्रतिष्ठितं ।
दातुमर्हसि मे राजन् विक्रमांस्त्रीनिति प्रभुः ॥७६॥
ददामीत्येव तं राजा बलिर्वैरोचनोऽब्रवीत् ।
वामनन्तं च विज्ञाय ततोऽनुमुदितः स्वयं ॥७७॥
स वामनो दिवं खं च पृथिवीं च द्विजोत्तमाः ।
त्रिभिः क्रमैर्विश्वमिदं जगदाक्रामत प्रभुः ॥७८॥
अत्यरिच्यत भूतात्मा भास्करं स्वेन तेजसा ।
प्रकाशयन् दिशः सर्व्वाः प्रदिशश्च महायशाः ॥७९॥
शुशुभे स महाबाहुः सर्व्वलोकान् प्रकाशयन् ।
आसुरीं श्रियमाहृत्य त्रीन् लोकांश्च जनार्दनः ।
सपुत्रपौत्रानसुरान् पातालतलमानयत् ॥८०॥

---

(१) सूतपुरःसर इति ख० ङ० च० छ० ।
(२) द्विजो भूत्वा इति श्लोकार्द्धात् परं श्लोकार्द्धं पतितं ।

नमुचिः शम्बरश्चैव प्रह्लादश्चैव विष्णुना ।
क्रूरा हता विनिर्द्धूता दिशः संप्रतिपेदिरे ॥८१॥
महाभूतानि भूतात्मा सविशेषाणि माधवः ।
कालञ्च सकलं विप्रांस्तत्राद्भुतमदर्शयत् ॥८२॥
तस्य गात्रे जगत्सर्वमात्मानमनुपश्यति ।
न किञ्चिदस्ति लोकेषु यदव्याप्तं महात्मना ॥८३॥
तद्वै रूपमुपेन्द्रस्य देवदानवमानवाः ।
दृष्ट्वा सम्मुमुहुः सर्वे विष्णुतेजोविमोहिताः ॥८४॥
बलिः सितो महापाशैः सबन्धुः ससुहृद्गणः ।
विरोचनकुलं सर्वं पाताले सन्निवेशितं ॥८५॥
ततः सर्वामरैश्वर्यं दत्त्वेन्द्राय महात्मने ।
मानुषेषु महाबाहुः प्रादुरासीज्जनार्द्दनः ॥८६॥
एतास्तस्य: स्मृतास्तस्य दिव्याः सम्भूतयः शुभाः ।
मानुष्याः सप्त यास्तस्य शापजांस्तान्निबोधत ॥८७॥
त्रेतायुगे तु दशमे दत्तात्रेयो बभूव ह ।
नष्टे धर्मे चतुर्थश्च मार्कण्डेयपुरःसरः ॥८८॥
पञ्चमः पञ्चदश्यां तु त्रेतायां सम्बभूव ह ।
मान्धातुश्चक्रवर्त्तित्वे तस्थौ तथ्यपुरःसरः ॥८९॥
एकोनविंशे त्रेतायां सर्व्वक्षत्रान्तकोऽभवत् ।
जामदग्न्यस्तथा षष्ठो विश्वामित्रपुरःसरः ॥९०॥
चतुर्विंशे युगे रामो वशिष्ठेन पुरोधसा ।
सप्तमो रावणस्यार्थे यज्ञे दशरथात्मजः ॥९१॥

अष्टमो द्वापरे विष्णुरष्टाविंशे पराशरात् ।
वेदव्यासस्ततो जज्ञे जातूकर्णपुरःसरः ॥९२॥
तथैव नवमो विष्णुरदित्याः कश्यपात्मजः ।
देवक्यां वसुदेवात्तु ब्रह्मगार्ग्यपुरःसरः ॥९३॥
अप्रमेयो नियोज्यस्तु यत्र कामचरो वशी ।
क्रीड़ते भगवान् लोके बालः क्रीड़नकैरिव ॥९४॥
न प्रमातुं महाबाहुः शक्योऽसौ मधुसूदनः ।
परं परम[१]मेतस्माद्विश्वरूपान्न विद्यते ॥९५॥
अष्टाविंशतिमे तद्वद्द्वापरस्यांशसङ्क्षये ।
नष्टे धर्मे तदा जज्ञे विष्णुर्वृष्णिकुले प्रभुः ॥९६॥
कर्त्तुं धर्मव्यवस्थानमसुराणां प्रणाशनं ।
मोहयन् सर्वभूतानि योगात्मा योगमायया ॥९७॥
प्रविष्टो मानुषीं योनिं प्रच्छन्नश्चरते महीं ।
विहारार्थं मनुष्येषु सान्दीपनिपुरःसरं ॥९८॥
यत्र कंसश्च शाल्वश्च द्विविदश्च महासुरं ।
अरिष्टं वृषभश्चैव पूतनां केशिनं हयं ॥९९॥
नागं कुवलयापीड़ं मल्लराजगृहाधिपम् ।
दैत्यान् मानुषदेहस्थान् सूदयामास वीर्यवान् ॥१००॥
छिन्नं बाहुसहस्रञ्च बाणस्याद्भुतकर्मणः ।
नरकश्च हतः सङ्ख्ये यवनश्च महाबलः ॥१०१॥

(१) द्वापर इति ख० च० छ० ।

हृतानि च महीपानां सर्वरत्नानि तेजसा ।
दुराचाराश्च निहता पार्थिवा ये रसातले ॥१०२॥
एते लोकहितार्थाय प्रादुर्भावा महात्मनः ।
अस्मिन्नेव युगे क्षीणे सन्ध्याश्लिष्टे भविष्यति ॥१०३॥
कल्किर्विष्णुयशा नाम पाराशर्यः प्रतापवान् ।
दशमो भाव्यसम्भूतो याज्ञवल्क्यपुरःसरः ॥१०४॥
अनुकर्षन् सर्वसेनां हस्त्यश्वरथसङ्कुलां ।
प्रगृहीतायुधैर्विप्रैर्वृतः शतसहस्रशः ॥१०५॥
नात्यर्थं धार्मिका ये च ये च धर्मद्विषः क्वचित् ।
उदीच्यान्मध्यदेशांश्च तथा विन्ध्यापरान्तिकान् ॥१०६॥
तथैव दाक्षिणात्यांश्च द्रविडान् सिंहलैः सह ।
गान्धारान् पारदांश्चैव पल्हवान् यवनान् शकान् ॥१०७॥
तुषारान् वर्बरांश्चैव पुलिन्दान् दरदान् खसान् ।
लम्पकानन्धकान् रुद्रान् किरातांश्चैव स प्रभुः ॥१०८॥
प्रवृत्तचक्रो बलवान् म्लेच्छानामन्तकृद्बली ।
अदृश्यः सर्वभूतानां पृथिवीं विचरिष्यति ॥१०९॥
मानवः स तु संजज्ञे देवस्यांशेन धीमतः ।
पूर्वजन्मनि विष्णुर्यः प्रमितिर्नाम वीर्यवान् ॥११०॥
गात्रेण वै चन्द्रमसः पूर्णे कलियुगेऽभवत् ।
इत्येतास्तस्य देवस्य दश सम्भूतयः स्मृताः ॥१११॥
तं तं कालञ्च कार्यञ्च तत्तद्बुद्धिश्च कारणं ।
अंशेन त्रिषु लोकेषु तास्ता योनीः प्रपद्यते ॥११२॥

पञ्चविंशोत्थिते कल्पे पञ्चविंशति वै समाः ।
विनिघ्नन् सर्व्वभूतानि मानुषानेव सर्व्वशः ॥११३॥
कृत्वा बीजावशेषांस्तु महीं क्रूरेण कर्म्मणा ।
संशातयित्वा वृषलान् प्रायशस्तानधार्म्मिकान् ॥११४॥
ततः स वै तदा कल्किश्चरितार्थः ससैनिकः ।
कर्मणा निहता ये तु सिद्धास्ते तु पुनः स्वयं ॥११५॥
अकस्मात् कुपितान्योन्यं भविष्यन्ति च मोहिताः ।
क्षययित्वा[१] तु तान् सर्वान् भाविनार्थेन चोदितान्॥११६॥
गङ्गायमुनयोर्मध्ये निष्ठां प्राप्स्यति सानुगः ।
ततो व्यतीते कल्कौ तु सामात्यैः सह सैनिकैः ॥११७॥
नृपेष्वथ विनष्टेषु तदा त्वप्रग्रहाः प्रजाः ।
रक्षणे विनिर्वृत्ते तु हत्वा चान्योन्यमाहवे ॥११८॥
परस्परहृताश्वासा निराक्रन्दाः सुदुःखिताः ।
पुराणि हित्वा ग्रामांश्च तुल्यास्ता निष्परिग्रहाः ॥११९॥
प्रनष्टश्रुतिधर्मांश्च नष्टधर्माश्रमास्तथा ।
ह्रस्वा अल्पायुषश्चैव वनौकस इमे स्मृताः ॥१२०॥
सरित्पर्वतसेविन्यः पत्रमूलफलाशनाः ।
चीरपत्राजिनधराः सङ्करं घोरमास्थिताः ॥१२१॥
अल्पायुषो नष्टवार्त्ता बह्वाबाधाः सुदुःखिताः ।
एवं कष्टमनुप्राप्ताः कलिसन्ध्यांशके तदा ॥१२२॥

---

(१) आदर्शपुस्तकमात्रे क्षपयित्वेतिपाठोवर्त्तते ।

प्रजाः क्षयं प्रयास्यन्ति सार्द्धं कलियुगेन तु ।
क्षीणे कलियुगे तस्मिन् प्रवृत्ते च कृते पुनः ॥१२४॥
प्रपत्स्यन्ते यथान्यायं स्वभावादेव नान्यथा ।
इत्येतत् कीर्त्तितं सर्वं देवासुरविचेष्टितं ॥१२५॥
यदुवंशप्रसङ्गेन महद्वो वैष्णवं यशः ।
तुर्वशोस्तु प्रवक्ष्यामि पूरोर्द्रुह्योरनोस्तथा ॥१२६॥

इति श्रीमहापुराणे वायुप्रोक्ते विष्णुमाहात्म्यकथनं नाम
षट्त्रिंशोऽध्यायः समाप्तः ॥

---

# अथ सप्तत्रिंशोऽध्यायः ।

अनुवङ्गपादः ।

सूत उवाच । तुर्वसोस्तु सुतो वह्निर्वह्नेर्गोभानुरात्मजः ।
गोभानोस्तु सुतो वीरस्त्रिसानुरपराजितः ॥१॥
करन्धमस्त्रिसानोस्तु मरुत्तस्य न चात्मजः[१] ।
अन्यस्त्वावीक्षितो राजा मरुत्तः कथितः[२] पुरा ॥२॥
अनपत्यो मरुत्तस्तु स राजासीदिति श्रुतः ।
दुष्कृतं पौरवं चापि सर्वे पुत्रमकल्पयन्[३] ॥३॥
एवं ययातिशापेन जरायाः संक्रमेण तु[४] ।
तुर्वसोः पौरवं वंशं प्रविवेश पुरा किल ॥४॥
दुष्कृतस्य तु दायादः शरूथो नाम पार्थिवः ।
शरूथात्तु जनापीड[५]स्त्वारस्तस्य चात्मजाः ॥५॥
पांड्यश्च केरलश्चैव चोलः कुल्यस्तथैव च ।
तेषां जनपदाः कुल्याः पांड्याश्चोलाः सकेरलाः ॥६॥
द्रुह्योश्च तनयौ वीरौ बभ्रुः सेतुश्च विश्रुतौ ।

---

(१) सुवात्मजः इति क० ङ० च० छ० ज०, यवस्य चतुरात्मजः इति ख०, एतच्छ्लोकार्द्धं ग० पुस्तके नास्ति ।
(२) मरुत्त इति आर्षप्रयोगात् पञ्चम्यर्थे प्रथमा ।
(३) पूर्व्वापरसङ्गतिविरहादत्र कतिपयश्लोकाः पतिता इत्यवगन्तव्यम् ।
(४) जरा संक्रमश्च पुरा इति ख० ग० ङ० च० छ० ज० ।
(५) तथाक्रीड इति च० ।

अरुद्धः सेतुपुत्रस्तु बाभ्रवो रिपुरुच्यते ॥७॥
यौवनाश्वेन समिति कृच्छ्रेण निहतो बली ।
युद्धं सुमहदासीत्तु मासान् परि चतुर्दश ॥८॥
अरुद्धस्य तु दायादो गान्धारो नाम पार्थिवः ।
ख्यायते यस्य नाम्ना तु गान्धारविषयो महान् ॥९॥
गान्धारदेशजाश्चापि तुरगा वाजिनां वराः ।
गान्धारपुत्रो धर्मस्तु घृतस्तस्य सुतोऽभवत् ॥१०॥
घृतस्य दुर्दमो जज्ञे प्रचेतास्तस्य चात्मजः ।
प्रचेतसः पुत्रशतं राजानः सर्व एव ते ॥११॥
म्लेच्छराष्ट्राधिपाः(१) सर्वे ह्युदीचीं दिशमाश्रिताः ।
अनोः पुत्रा महात्मानस्त्रयः परमधार्मिकाः ॥१२॥
सभानरश्च पक्षश्च परपक्षस्तथैव च ।
सभानरस्य पुत्रस्तु विद्वान् कालानलो नृपः ॥१३॥
कालानलस्य धर्मात्मा सृञ्जयो नाम धार्मिकः ।
सृञ्जयस्याभवत् पुत्रो वीरो राजा पुरञ्जयः ॥१४॥
जनमेजयो महासत्त्वः पुरञ्जयसुतोऽभवत् ।
जनमेजयस्य राजर्षेर्महाशालोऽभवन्नृपः ॥१५॥
आसीदिन्द्रसमो राजा प्रतिष्ठितयशा दिवि ।
महामनाः सुतस्तस्य महाशालस्य धार्मिकः ॥१६॥
सप्तद्वीपेश्वरो राजा चक्रवर्त्ती महायशाः ।
महामनास्तु पुत्रौ द्वौ जनयामास विश्रुतौ ॥१७॥

---

(१) म्लेच्छा राष्ट्राधिपा इति च॰ ।

उशीनरश्च धर्मज्ञं तितिक्षुश्चैव धार्मिकम् ।
उशीनरस्य पत्न्यस्तु पञ्च राजर्षिवंशजाः ॥१८॥
मृगा कृमी नवा दर्वा पञ्चमी च दृषद्वती ।
उशीनरस्य पुत्रास्तु पञ्च तासु कुलोद्वहाः ।
तपसा ते सुमहता जातवृद्धाश्च धार्मिकाः ॥१९॥
मृगायास्तु मृगः पुत्रो नवाया नव एव तु ।
कृम्याः कृमिस्तु दर्वायाः सुव्रतो नाम धार्मिकः ॥२०॥
दृषद्वतीसुतश्चापि शिविरौशीनरो द्विजाः ।
शिवेः शिवपुरं ख्यातं यौधेयन्तु मृगस्य तु ॥२१॥
नवस्य नवराष्ट्रन्तु कृमेस्तु कृमिला पुरी ।
सुव्रतस्य तथा वृष्टा[1] शिविपुत्रान्निबोधत ॥२२॥
शिवेस्तु शिवयः पुत्राश्चत्वारो लोकसम्मताः ।
वृषदर्भः सुवीरस्तु[2] केकयो मद्रकस्तथा ॥२३॥
तेषां जनपदाः स्फीताः केकया माद्रकास्तथा ।
वृषदर्भाः सुवीदर्भास्तितिक्षोः शृणुत प्रजाः ॥२४॥
तैतिक्षुरभवद्राजा पूर्वस्यान्दिशि विश्रुतः ।
उशद्रथो महाबाहुस्तस्य हेमः सुतोऽभवत् ॥२५॥
हेमस्य सुतपा जज्ञे सुतः सुतपसो[3] बली ।
जातो मनुष्ययोन्यां वै क्षीणे वंशे प्रजेप्सया ॥२६॥
महायोगी स तु बलिर्बद्धो यः स महामनाः ।

---

(१) वष्टा इति च०, चैष्टा इति ख० ग०, चष्टा इति ङ० ।
(२) सुधीरस्तु इति ख० ग० । अत्र सुवीदर्भः इतिपाठः समीचीनः ।
(३) सुतयज्ञो इति आदर्शपुस्तकमात्रे पाठो वर्त्तते ।

पुत्रानुत्पादयामास चातुर्वर्ण्यकरान् भुवि ॥२७॥

अङ्गं स जनयामास वङ्गं सुह्लं(१) तथैव च ।

पुण्ड्रं कलिङ्गं च तथा बालेयं क्षत्रमुच्यते(२) ॥२८॥

बालेया ब्राह्मणाश्चैव तस्य वंशकराः प्रभोः ।

बलेस्तु ब्रह्मणा दत्ता वराः प्रीतेन धीमतेः ॥२९॥

महायोगित्वमायुश्च कल्पायुःपरिमाणकं ।

संग्रामे चाप्यजेयत्वं धर्मे चैव प्रभावना ॥३०॥

त्रैलोक्यदर्शनञ्चैव प्राधान्यं प्रसवे तथा ।

बले चाप्रतिमत्वं वै धर्मतत्त्वार्थदर्शनं ॥३१॥

चतुरो नियतान् वर्णान् त्वं वै स्थापयतेति च ।

इत्युक्तो विभुना राजा बलिः शान्तिं परां ययौ ॥३२॥

कालेन महता विद्वान् स्वं वै स्थानमुपागतः ।

तेषां जनपदाः स्फीता वङ्गाङ्गसुह्मकास्तथा ॥३३॥

पुण्ड्राः कलिङ्गाश्च तथा तेषां वंशं निबोधत ।

तस्य ते तनयाः सर्वे क्षेत्रजा मुनिसम्भवाः ।

सम्भूता दीर्घतमसः सुदेष्णायां महौजसः ॥३४॥

ऋषय ऊचुः । कथं बलेः सुताः पञ्च जनिताः क्षेत्रजाः प्रभो ।

ऋषिणा दीर्घतमसा एतन्नो ब्रूहि पृच्छतां ॥३५॥

सूत उवाच । अशिजो(३) नाम विख्यात आसीद्धीमानृषिः पुरा ।

---

(१) सुह्लमित्यत्र सुह्ममितिपाठः सङ्गतः उत्तरत्र तथादर्शनात् ।

(२) बालेयः क्षत्र उच्यते इतिपाठः साधीयान् ।

(३) उशिज इति ख० ग० ।

भार्या वै ममता नाम बभूवास्य महात्मनः ॥३६॥
अङ्गिरसः कनीयांस्तु पुरोधायो दिवौकसां ।
बृहस्पतिर्बृहत्तेजाः ममतां सोऽभ्यपद्यत ॥३७॥
उवाच ममता तन्तु बृहस्पतिमनिच्छती ।
अन्तर्वत्न्यस्मि ते भ्रातुर्ज्येष्ठस्याद्गमिता इति ॥३८॥
अयं हि मे महागर्भो रोदतेऽन्ति बृहस्पते ।
औशिजं ब्रह्म चाभ्यस्य षडङ्गं वेदमुद्गिरन् ॥३९॥
अमोघरेतास्त्वञ्चापि न मां भजितुमर्हसि ।
अस्मिन्नेव गते काले यथा वा मन्यसे प्रभो ॥४०॥
एवमुक्तस्तया सम्यग्बृहत्तेजा बृहस्पतिः ।
कामात्मानं महात्मा च नात्मानं सोऽभ्यधारयत् ॥४१॥
सम्बभूवैव धर्मात्मा तया सार्द्धं बृहस्पतिः ।
उत्सृजन्तं तदा रेतो गर्भस्थः सोऽभ्यभाषत ॥४२॥
गोघातक(१) न्यसे त्वस्मिन् द्वयोर्नेहास्ति सम्भवः ।
अमोघरेतास्त्वञ्चापि पूर्वञ्चाहमिहागतः ॥४३॥
शशाप तं तदा क्रुद्ध एवमुक्तो बृहस्पतिः ।
औशिजन्तं सुतं भ्रातुर्गर्भस्थं भगवानृषिः ॥४४॥
यस्मात्त्वमीदृशे काले सर्वभूतेप्सिते सति ।
मामेवमुक्तवान् मोहात्तमो दीर्घं प्रवेक्ष्यसि ॥४५॥
ततो दीर्घतमा नाम शापादृषिरजायत ।

---

(१) गोघातक इत्यत्र गौ घातक इति पाठः सङ्गतार्थः ।

यथाग्निको बृहत्कीर्तिर्दध्यातिर्बौजसा ॥४६॥
ऊर्द्धरेतास्ततस्तापि न्यवसद्भ्रातुराश्रमे ।
गोधर्मं सौरभेयात्तु वृषभाच्छ्रुतवान् प्रभो ॥४७॥
तस्य भ्राता पितृव्यस्तु चकार भवनं तदा ।
तस्मिन् हि तत्र वसति यदृच्छाभ्यागतो वृषः ॥४८॥
दर्शार्थमाहृतान् दर्भांश्चचार सुरभीसुतः ।
जग्राह तं दीर्घतमा विस्फुरन्तञ्च शृङ्गयोः ॥४९॥
स तेन निगृहीतस्तु न चचाल पदात्पदं ।
ततोऽब्रवीद्वृषस्तं वै मुञ्च मां बलिनां वर ॥५०॥
न मयासादितस्तात बलवांस्त्वद्विधः क्वचित् ।
त्र्यम्बकं वहता देवं यतो जातोऽस्मि भूतले ॥५१॥
मुञ्च मां बलिनां श्रेष्ठ प्रीतस्तेऽहं वरं वृणु ।
एवमुक्तोऽब्रवीदेनं जीवंस्त्वं मे क्व यास्यसि ॥५२॥
तेन त्वाहं न मोक्ष्यामि परस्वाहं चतुष्पदं ।
ततस्तं दीर्घतमसं स वृषः प्रत्युवाच ह ॥५३॥
नास्माकं विद्यते तात पातकं स्तेयमेव वा ।
भक्ष्याभक्ष्यं न जानीमः पेयापेयञ्च सर्वशः ॥५४॥
कार्याकार्यं न वै विप्रो गम्यागम्यं तथैव च ।
न पाप्मानो वयं विप्र धर्मो ह्येष गवां स्मृतः ॥५५॥
गवां नाम स वै श्रुत्वा संभ्रान्तस्तमुमुच्य तं ।
भक्त्या चानुग्रविकया गोषु तं वै प्रसादयत् ॥५६॥
प्रसादिते ततस्तस्मिन् गोधर्मं भक्षितस्तु तं ।

ममसैव तदाहमे तद्विहतात्परायण: ॥५७॥

ततो यवीयस: पत्नीमौतथ्यस्याभ्यमन्यत ।

विचेष्टमानां रुदतीं दैवात् स मूढचेतन: ॥५८॥

अवलेपन्तु तं मत्वा शरद्वांस्तस्य नाक्षमत् ।

गोधर्मं वै बलात्कृत्वा स्नुषां स समगन्यत ॥५९॥

विपर्ययन्तु तं दृष्ट्वा शरद्वान् प्रत्यचिन्तयत् ।

भविष्यमर्थं ज्ञात्वा च महात्मा च न मृत्युतां ॥६०॥

प्रोवाच दीर्घतमसं क्रोधात् संरक्तलोचन: ।

गम्यागम्यं न जानीषे गोधर्मात् प्रार्थयन् स्नुषां ॥६१॥

दुर्वृत्तस्त्वं त्यजाम्येव गच्छ त्वं स्वेन कर्मणा ।

यस्मात्त्वमन्धो वृद्धश्च भर्त्तव्यो दुरनुष्ठित: ।

तेनासि त्वं परित्यक्तो दुराचारोऽसि मे मति: ॥६२॥

सूत उवाच । कर्मण्यस्मिंस्तत: क्रूरे तस्य बुद्धिरजायत ।

निर्भर्त्स्य चैव बहुशो बाहुभ्यां परिगृह्य च ।

कोष्ठे समुद्रे प्रक्षिप्य गङ्गाम्भसि समुत्सृजत् ॥६३॥

उह्यमान: समुद्रस्तु(१) सप्ताहं स्रोतसा तदा ।

तं सस्त्रीको बलिर्नाम राजा धर्मार्थतत्त्ववित् ।

अपश्यन्मज्जमानन्तु स्रोतसाभ्यासमागतं ॥६४॥

तं गृहीत्वा स धर्मात्मा बलिर्वैरोचनस्तदा ।

अन्त:पुरे जुगोपैनं भक्ष्यैर्भोज्यैश्च तर्पयन् ॥६५॥

प्रीत: स वै वरेणाथ छन्दयामास वै बलिं ।

---

(१) उह्यमानं समुद्रेण इतिपाठः क्वचित् ।

स च तस्माद्वरं वव्रे पुत्रार्थं दानवर्षभः ॥६६॥

बलिरुवाच। सन्तानार्थं महाभाग भार्यायां मम मानद।

पुत्रान् धर्मार्थसंयुक्तान् उत्पादयितुमर्हसि ॥६७॥

एवमुक्तस्तु तेनर्षिस्तथास्त्वित्युक्तवान् हि तं।

सुदेष्णां नाम भार्यां वै राजास्मै प्राहिणोत्तदा ॥६८॥

अन्धं वृद्धञ्च तं दृष्ट्वा न सा देवी जगाम ह।

स्वाञ्च धात्रेयिकां तस्मै भूषयित्वा व्यसर्जयत् ॥६९॥

कक्षीवच्चक्षुषौ तस्यां शूद्रयोन्यामृषिर्वशी।

जनयामास धर्मात्मा पुत्रावेतौ महौजसौ ॥७०॥

कक्षीवच्चक्षुषौ तौ तु दृष्ट्वा राजा बलिस्तदा।

प्राधीतौ(१) विधिवत्सम्यगीश्वरौ ब्रह्मवादिनौ ॥७१॥

सिद्धौ प्रत्यक्षधर्माणौ बुद्धौ श्रेष्ठतमावपि।

ममैताविति होवाच बलिर्वैरोचनस्त्वृषिं ॥७२॥

नेत्युवाच ततस्तन्तु ममैताविति चाब्रवीत्।

उत्पन्नौ शूद्रयोनौ तु भवच्छद्मा सुरोत्तमौ ॥७३॥

अन्धं वृद्धं च मां मत्वा सुदेष्णा महिषी तव।

प्राहिणोदवमानाय शूद्रां धात्रेयिकां मम ॥७४॥

ततः प्रसादयामास पुनस्तमृषिसत्तमं।

बलिर्भार्यां सुदेष्णां च भर्त्सयामास वै प्रभुः ॥७५॥

पुनश्चैनामलङ्कृत्य ऋषये प्रत्यपादयत्।

तां स दीर्घतमा देवीमब्रवीत् यदि मां शुभे ॥७६॥

---

(१) श्रीयुताविति ख० ग०, प्राधोताविति ङ० च०।

दध्ना लवणमिश्रेण स्वभ्यक्तं[1] मधुकं तथा।
लिहिष्यस्यजुगुप्सन्तो आपादतलमस्तकं ॥७७॥
ततस्त्वं प्राप्स्यसे देवि पुत्रांश्च मनसेप्सितान्।
तस्य सा तद्वचो देवी सर्वं कृतवती तथा ॥७८॥
अपानञ्च समासाद्य जुगुप्सन्ती न्यवर्जयत्।
तामुवाच ततः सर्षिर्यत्ते परिहृतं शुभे।
विनापानं कुमारं त्वं जनयिष्यसि पूर्वजं ॥७९॥
ततस्तं दीर्घतमसं सा देवी प्रत्युवाच ह।
नार्हसि त्वं महाभाग पुत्रं दातुं ममेदृशं ॥८०॥
ऋषिरुवाच। तवापराधो देव्येष नान्यथा भविता नु वै।
देवीदानीञ्च ते पुत्रमहन्दास्यामि सुव्रते[2] ॥८१॥
तस्यापानं विना चैव योग्याभावो भविष्यति।
तां स दीर्घतमाश्चैव कुक्षौ स्पृष्ट्वेदमब्रवीत् ॥८२॥
प्राशितं दधि यत्तेऽद्य ममाङ्गाद्वै शुचिस्मिते।
तेन ते पूरितो गर्भः पौर्णमास्यामिवोदधिः ॥८३॥
भविष्यन्ति कुमारास्ते पञ्च देवसुतोपमाः।
तेजस्विनः पराक्रान्ता यज्वानो धार्मिकास्तथा ॥८४॥
ततोऽङ्गस्तु सुदेष्णाया ज्येष्ठपुत्रो व्यजायत।
वङ्गस्तस्मात्कलिङ्गस्तु पुण्ड्रो ब्रह्मस्तथैव च ॥८५॥

---

(१) स्वभ्यक्तमिति पाठः साधुः।
(२) शोभने इति ख० ग०।

वंशभाजस्तु पञ्चैते बलेः क्षेत्रेऽभवंस्तदा ।
इत्येते दीर्घतमसा बलेर्दत्ताः सुताः पुरा ॥८६॥
प्रजास्त्वपहृता[१] तस्य ब्रह्मणा कारणं प्रति ।
अपत्यामात्यदारेषु स्वेषु मा भून्महात्मनः ॥८७॥
ततो मनुष्ययोन्यां वै जनयामास स प्रजाः[२] ।
सुरभिर्दीर्घतमसमथ प्रीतो वचोऽब्रवीत् ॥८८॥
विचार्य यस्माद्गोधर्मं त्वमेवं कृतवानसि ।
तेन न्यायेन[३] मुमुचे अहं प्रीतोस्मि तेन ते ॥८९॥
तस्मात्तव तमो दीर्घं निस्तुदाम्यद्य पश्य वै ।
बार्हस्पत्यञ्च यत्तेऽन्यत्पापं सन्तिष्ठते तनौ ॥९०॥
जरामृत्युभयञ्चैव आघ्राय प्रणुदामि ते ।
आघ्रातमात्रः सोऽपश्यत् सद्यस्तमसि नाशिते ॥९१॥
आयुष्मांश्च युवा चैव चक्षुष्मांश्च ततोऽभवत् ।
गवा दीर्घतमाः सोऽथ गौतमः समपद्यत ॥९२॥
कक्षीवांस्तु ततो गत्वा सह पित्रा गिरिव्रजं ।
यथोद्दिष्टं हि पित्रर्थे चचार विपुलं तपः ॥९३॥

---

(१) प्रजास्त्वपहृता इति क०, प्रजात्युपहृता इति ख० ग०, प्रजास्तुपहृता इति छ०, प्राडात्युपहृता इति ज०, इत्येते दीर्घतमसा इत्यादि सन्तानाश्चोभयोस्तयोः इत्यन्तं ङ० च० पुस्तकयोर्न विद्यते ।

(२) प्रजास्त्वपहृता इत्यादि जनयामास स प्रजाः इत्यन्तं, एषां श्लोकार्द्धानां परस्परं सङ्गतिविरहात् अत्र कतिपयश्लोकपतनं सम्भाव्यते ।

(३) न्यायात्म इति क० छ० ज०, एतत् श्लोकार्द्धं अन्येष्वादर्शपुस्तकेषु न विद्यते ।

ततः कालेन महता तपसा भावितः स वै ।
विधूय मनुजो दोषान् ब्राह्मण्यं प्राप्तवान् प्रभुः ॥९४॥
ततोऽब्रवीत् पिता चैनं पुत्रवानस्म्यहं प्रभो ।
सत्पुत्रेण त्वया तात कृतार्थोऽस्मि यशस्विना ॥९५॥
युक्तात्मा हि ततः सोऽथ प्राप्तवान् ब्रह्मणा सह ।
ब्राह्मण्यं प्राप्य कक्षीवान् सहस्रमसृजत् सुतान् ॥९६॥
कूष्माण्डा(१) गौतमास्ते वै स्मृताः कक्षीवतः सुताः ।
इत्येष दीर्घतमसो बलेर्वैरोचनस्य वै ॥९७॥
समागमः समाख्यातः सन्तानाश्चोभयोस्तयोः ।
बलिस्तानभिषिच्येह पञ्चपुत्रानकल्मषान् ॥९८॥
कृतार्थः सोऽपि योगात्मा योगमाश्रित्य स प्रभुः ।
अदृश्यः सर्वभूतानां कालाकाङ्क्षी चरत्युत ॥९९॥
तत्राङ्गस्य तु राजर्षे राजासीद्दधिवाहनः ।
सापराधस्तुदेष्णाया अनपानोऽभवन्नृपः ॥१००॥
अनपानस्य पुत्रस्तु राजा दिविरथः स्मृतः ।
पुत्रो दिविरथस्यासीद् विद्वान् धर्मरथो नृपः ॥१०१॥
स वै धर्मरथः श्रीमान् येन विष्णुपदे गिरौ ।
सोमः शक्रेण सह वै यज्ञे पीतो महात्मना ॥१०२॥
सुतस्तु धर्मरथस्यापि राजा चित्ररथोऽभवत् ।
लोमपाद इति ख्यातो यस्य शान्ता सुताऽभवत् ॥१०३॥

---

(१) कुष्माण्डा इति ख० ग० ङ० ञ० ।

अङ्गो वै चण्डिकस्यस्य वारणः शक्रवारणः[१]।
आनयामास स महीं मन्त्रैर्वाहनमुत्तमं ॥१०४॥
हर्य्यङ्गस्य तु दायादो राजा भद्ररथः किल।
अथ भद्ररथस्यासीद् बृहत्कर्मा प्रजेश्वरः ॥१०५॥
बृहद्रथः सुतस्तस्य तस्माज्जज्ञे बृहन्मनाः।
बृहन्मनास्तु राजेन्द्रं जनयामास वै सुतं ॥१०६॥
नाम्ना जयद्रथं नाम तस्माद्दृढरथो नृपः।
आसीद्दृढरथस्यापि विश्वजिज्जनमेजयः ॥१०७॥
दायादस्तस्य चाङ्गेभ्यो यस्मात् कर्णोऽभवन्नृपः।
कर्णस्य सुरसेनस्तु द्विजस्तस्यात्मजः स्मृतः ॥१०८॥
ऋषय ऊचुः। सूतात्मजः कथं कर्णः कथं चाङ्गस्य वंशजः।
एतदिच्छामहे श्रोतुमत्यर्थं कुशलो ह्यसि ॥१०९॥
सूत उवाच। बृहद्भानोः सुतो जज्ञे नाम्ना राजा बृहन्मनाः।
तस्य पत्नीद्वयं चासीत् चैद्यस्योभे च ते सुते ॥११०॥
यशोदेवी च सत्या च ताभ्यां वंशस्तु भिद्यते।
जयद्रथस्तु राजेन्द्रो यशोदेव्यां व्यजायत ॥१११॥
ब्रह्मचवान्तरः[२] सत्याविजयो नाम विश्रुतः[३]।
विजयस्य धृतिः पुत्रस्तस्य पुत्रो धृतव्रतः ॥११२॥
धृतव्रतस्य पुत्रस्तु सत्यकर्मा महायशाः।
सत्यकर्मसुतस्यापि सूतस्त्वधिरथस्तु वै ॥११३॥

(१) चक्रवारण इति ग०।
(२) ब्रह्मक्षत्रान्तर इति ख० ग०।
(३) ब्रह्मक्षत्रान्तरं सत्या विजयं नाम विश्रुतमिति पाठो विशुद्धः।

स कर्णं परिजग्राह तेन कर्णस्तु सूतजः ।
एतद्वः कथितं सर्वं कर्णं यद्वै प्रचोदितं ॥११४॥
एतेऽङ्गवंशजाः सर्वे राजानः कीर्त्तिता मया ।
विस्तरेणानुपूर्व्या च पुरोस्तु शृणुत प्रजाः ॥११५॥
सूत उवाच । पुरोः पुत्रो महाबाहूराजासीज्जनमेजयः ।
अविद्धस्तु सुतस्तस्य यः प्राचीमजयद्दिशं ॥११६॥
अविद्धतः प्रवीरस्तु मनस्युरभवत्सुतः ।
राजाथो जयदो नाम मनस्योरभवत्सुतः ॥११७॥
दायादस्तस्य चाप्यासीद्धुन्धुर्नाम महीपतिः ।
धुन्धोर्बहुगवी पुत्रः सञ्जातिस्तस्य चात्मजः ॥११८॥
सञ्जातेरथ रौद्राश्वस्तस्य पुत्रान्निबोधत ।
रौद्राश्वस्य घृताच्यां वै दशाप्सरसि सूनवः ॥११९॥
रजेयुश्च क्रतेयुश्च वक्षेयुः स्थण्डिलेयु च ।
घृतेयुश्च जलेयुश्च स्थलेयुश्चैव सप्तमः ॥१२०॥
धर्मेयुः सन्नतेयुश्च वनेयुर्दशमस्तु सः ।
रुद्रा शूद्रा च मद्रा च शुभा जामलजा तथा ॥१२१॥
तला खला च सप्तैता या च गोपजला स्मृता ।
तथा ताम्ररसा चैव रत्नकूटी च तादृशी ॥१२२॥
आत्रेयो वंशतस्तासां भर्त्ता नाम्ना प्रभाकरः ।
अनाधृष्टस्तु राजर्षी रिवेयुस्तस्य चात्मजः ॥१२३॥
रिवेयोर्ज्वलना नाम भार्या वै तक्षकात्मजा ।
यस्यां देव्यां स शुभर्षीरन्तिं नाम लोकजनत् ॥१२४॥

रन्तिनारः सरस्वत्यां पुत्रानजनयच्छुभान् ।
असुं तथा प्रतिरथं ध्रुवञ्चैवातिधार्म्मिकं ॥१२५॥
गौरी कन्या च विख्याता मान्धातुर्जननी शुभा ।
धुर्य्यः प्रतिरथस्यापि कण्वस्तस्याभवत् सुतः ॥१२६॥
मेधातिथिः सुतस्तस्य यस्मात् काण्वायना द्विजाः ।
इलिनानुयमस्यासीत्[1] कन्या साजनयत्सुतान् ॥१२७॥
असुः सुदयितं पुत्रं मलिनं ब्रह्मवादिनं ।
उपदानं ततो लेभे चतुरस्त्विति सात्मजान् ॥१२८॥
सुष्मन्त[2] मथ दुष्मन्तं प्रवीरमनघन्तथा ।
चक्रवर्त्ती ततो जज्ञे दौष्मन्तिर्नृपसत्तमः ॥१२९॥
शकुन्तलायां भरतो यस्य नाम्ना तु भारतं ।
दुष्मन्तं प्रति राजानं वागुवाचाशरीरिणी ॥१३०॥
माता भस्त्रा पितुः पुत्रो येन जातः स एव सः ।
भर स्वपुत्रं दुष्मन्त सत्यमाह शकुन्तला ॥१३१॥
रेतोधाः पुत्रं नयति नरदेव यमक्षयात् ।
त्वञ्चास्य धाता गर्भस्य मावमंस्थाः शकुन्तलां ॥१३२॥
भरतस्त्रिसृषु स्त्रीषु नव पुत्रानजीजनत् ।
नाभ्यनन्दच्च तान् राजा नानुरूपान्ममेत्युत ॥१३३॥
ततस्ता मातरः क्रुद्धाः पुत्रान्निन्युर्यमक्षयं ।

---

(१) इलिनानुभा यस्यासीदिति ख० । एतत् श्लोकार्द्धं ख० ङ० च० पुस्तकव्यतिरिक्तादर्शपुस्तकेषु न विद्यते ।

(२) शुमन्तमिति ख० ग० ।

ततस्तस्य नरेन्द्रस्य वितथं पुत्रजन्म तत् ॥१२४॥
ततोमरुद्भिरानीय पुत्रस्तु स बृहस्पतेः ।
सङ्क्रामितो भरद्वाजो मरुद्भिः क्रतुभिर्विभुः ॥१२५॥
तत्रैवोदाहरन्तीदं भरद्वाजस्य धीमतः ।
जन्मसङ्क्रमणञ्चैव मरुद्भिर्भरताय वै ॥१२६॥
पत्न्यामासन्नगर्भायामषिजः संस्थितः किल ।
भ्रातुर्भार्यां स दृष्ट्वाथ बृहस्पतिरुवाच ह ।
अलङ्कृत्य तनुं स्वाञ्च मैथुनं देहि मे शुभे ॥१२७॥
एवमुक्ताऽब्रवीद्देवमन्तर्वत्नी ह्यहं विभो ।
गर्भः परिणतश्चायं ब्रह्म व्याहरते गिरा ॥१२८॥
अमोघरेतास्त्वञ्चापि धर्मश्चैव विगर्हितः ।
एवमुक्तोऽब्रवीद्देवीं स्मयमानो बृहस्पतिः ॥१२९॥
विनयो नोपदेष्टव्यस्त्वया मम कथञ्चन ।
धर्षमाणः प्रसह्येमां मैथुनायोपचक्रमे ॥१४०॥
ततो बृहस्पतिं गर्भो धर्षमाणमुवाच ह ।
सन्निविष्टो ह्यहं पूर्वमिह तात बृहस्पते ॥१४१॥
अमोघरेताश्च भवान्नावकाशोऽस्ति च द्वयोः ।
एवमुक्तः स गर्भेण कुपितः प्रत्युवाच ह ॥१४२॥
यस्मान्मामीदृशे काले सर्वभूतेप्सिते सति ।
प्रतिषेधसि तत्तस्मात् तमो दीर्घं प्रवेक्ष्यसि ॥१४३॥
पादाभ्याञ्चेन तच्छुक्रं मातुर्द्वारं बृहस्पतेः ।
तद्रेतस्तु तयोर्मध्ये निवार्य्यः शिशुकोऽभवत् ॥१४४॥

सद्योजातं कुमारन्तं दृष्ट्वाऽथ ममताऽब्रवीत् ।
गमिष्यामि गृहं स्वं वै भर द्वाजं बृहस्पते ॥१४५॥
एवमुक्त्वा गतायां स पुत्रन्त्यजति तत्क्षणात् ।
भरस्व वाढमित्युक्तो भरद्वाजस्ततोऽभवत् ॥१४६॥
मातापितृभ्यां संत्यक्तं दृष्ट्वाथ मरुतः शिशुं ।
गृहीत्वैनं भरद्वाजं जग्मुस्ते कृपया ततः ॥१४७॥
तस्मिन् काले तु भरतो महद्भिः क्रतुभिः क्रमात् ।
काम्यनैमित्तिकैर्यज्ञैर्यजते पुत्रलिप्सया ॥१४८॥
यदा स यजमानो वै पुत्रान्नासादयत् प्रभुः ।
यज्ञं ततो मरुत्सोमं पुत्रार्थे पुनराहरत् ॥१४९॥
तेन ते मरुतस्तस्य मरुत्सोमेन तोषिताः ।
भरद्वाजं ततः पुत्रं वार्हस्पत्यं मनीषिणं ॥१५०॥
भरतस्तु भरद्वाजं पुत्रं प्राप्य तदाऽब्रवीत् ।
प्रजायां संहृतायां वै कृतार्थोऽहं त्वया विभो ॥१५१॥
पूर्वन्तु वितथं तस्य कृतं वै पुत्रजन्म हि ।
ततः स वितथो नाम भरद्वाजस्तथाऽभवत् ॥१५२॥
तस्माद्दिव्यो भरद्वाजो ब्राह्मण्यात् क्षत्रियोऽभवत् ।
द्विमुष्यायननामा स(१) स्मृतो द्विपितरस्तु(२) वै॥१५३॥
ततोऽथ वितथे जाते भरतः स दिवं ययौ ।

---

(१) अत्र, द्योमुष्यायननामा स इति पाठोऽपि सङ्गतः । द्यामुष्यायण-नामानः इति ङ० च०, द्यामुष्यायणनानाम इति ख० ग० ।

(२) द्विपितृक इति पाठो विशुद्धः ।

वितथस्य तु दायादो भुवमन्युर्बभूव ह ॥१५४॥
महाभूतोपमाश्चासंश्चत्वारो भुवमन्युजाः ।
वृहत्क्षत्रो(१) महावीर्यो नरो गर्गश्च वीर्यवान् ॥१५५॥
नरस्य साङ्कृतिः पुत्रस्तस्य पुत्रौ महौजसौ ।
गुरुवीर्यस्त्रिदेवश्च साङ्कृत्याववरौ स्मृतौ ॥१५६॥
दायादास्तापि गर्गस्य शिनिर्बद्धाद्(२) बभूव(३) ह ।
स्मृतास्त्वेते ततो गार्ग्याः क्षत्रोपेता द्विजातयः ॥१५७॥
महावीर्यसुतश्चापि भीमस्तस्मादुभक्षयः(४) ।
तस्य भार्या विशाला तु सुषुवे वै सुतांस्त्रयः(५) ॥१५८॥
त्र्यारुणिं पुष्करिणं तृतीयं सुषुवे कपिं ।
कपेः(६) क्षत्रवरा ह्येते तयोः प्रोक्ता महर्षयः ॥१५९॥
गार्ग्याः साङ्कृतयो वीर्याः क्षत्रोपेता द्विजातयः ।
संश्रिताङ्गिरसं पक्षं वृहत्क्षत्रस्य वक्ष्यति ॥१६०॥
वृहत्क्षत्रस्य दायादः सुहोत्रो नाम धार्मिकः ।
सुहोत्रस्यापि दायादो हस्ती नाम बभूव ह ।
तेनेदं निर्मितं पूर्वं नाम्ना वै हस्तिना पुरं ॥१६१॥
हस्तिनश्चापि दायादास्त्रयः परमधार्मिकाः ।
अजमीढो द्विजामीढः पुरुमीढस्तथैव च ॥१६२॥

---

(१) वृहत्क्षेत्र इति ख०, महत्क्षेत्र इति ग०।
(२) शितिबन्धादिति ख० ।
(३) बभूव इत्यत्र आर्षप्रयोगादेकवचनम् ।
(४) दुदक्षयः इति ङ० ।
(५) त्रय इति द्वितीयार्थे प्रथमा ।
(६) कपेरित्यनन्तरं एकं द्वे वा वाक्यं पतितं ।

अजमीढस्य पुत्रास्तु(१) शुभाः शुभकुलोद्वहाः।
तपसोऽन्ते सुमहतो राज्ञो वृद्धस्य धार्मिकाः ॥१६३॥
भरद्वाजप्रसादेन शृणुध्वं तस्य विस्तरं।
अजमीढस्य केशिन्यां कण्ठः समभवत्किल ॥१६४॥
मेधातिथिः सुतस्तस्य तस्मात् कण्ठायना द्विजाः।
अजमीढस्य धूमिन्यां जज्ञे वृहद्वसु(२)र्नृपः ॥१६५॥
वृहद्वसोर्वृहद्विष्णुः पुत्रस्तस्य महाबलः।
वृहत्कर्मा सुतस्तस्य पुत्रस्तस्य वृहद्रथः ॥१६६॥
विश्वजित्तनयस्तस्य सेनजित्तस्य चात्मजः।
अथ सेनजितः पुत्राश्चत्वारो लोकविश्रुताः ॥१६७॥
रुचिराश्वश्च काव्यश्च रामो दृढधनु(३)स्तथा।
वत्स(४)श्चावन्तको(५) राजा यस्य ते परिवत्सराः ॥१६८॥
रुचिराश्वस्य दायादः पृथुषेणो महायशाः।
पृथुषेणस्य पारस्तु पाराग्नीपोऽथ जज्ञिवान् ॥१६९॥
तस्य चैकशतन्त्वासीत् पुत्राणामिति नः श्रुतं।
नीपा इति समाख्याता राजानः सर्व एव ते ॥१७०॥
तेषां वंशकरः श्रीमान् राजासीत्कीर्त्तिवर्द्धनः।

---

(१) पत्न्य इति ङ० च०।
(२) वृहद्धनुरिति ङ० च०।
(३) दृढ़तनुरिति ख० ग०।
(४) वत्स इत्यत्र काव्यः रामो वा इति, अथवा काव्यस्य इत्यत्र वत्सस्य इति, अथवा राम इत्यत्र वत्स इति पाठः सम्भाव्यते।
(५) चावन्तिकौ इति पाठः साधुः।

काम्पिल्ये(१) समरो नाम स चेष्टसमरोऽभवत् ॥१७१॥
समरस्य परः पारः सदश्व इति ते त्रयः।
पुत्राः सर्वगुणोपेताः पारपुत्रो पृथुर्बभौ ॥१७२॥
पृथोस्तु सुकृतिर्नाम सुकृतेनेह कर्मणा।
जज्ञे सर्वगुणोपेतो विभ्राजस्तस्य चात्मजः ॥१७३॥
विभ्राजस्य तु दायादस्त्वणुहो नाम पार्थिवः।
बभूव शुकजामाता कृत्वीभर्त्ता महायशाः ॥१७४॥
अणुहस्य तु दायादो ब्रह्मदत्तो महातपाः।
योगसूनुः सुतस्तस्य विष्वक्सेनोऽभवन्नृपः ॥१७५॥
(२)विभ्राजपुत्रा राजानः सुकृतेनेह कर्म्मणा।
विष्वक्सेनस्य पुत्रस्तु उदक्सेनो बभूव ह ॥१७६॥
भल्लाटस्तस्य दायादो येन राजा पुरा हतः।
भल्लाटस्य तु दायादो राजासीज्जनमेजयः।
उग्रायुधेन तस्यार्थे सर्वे नीपाः प्रणाशिताः ॥१७७॥
ऋषय ऊचुः। उग्रायुधः कस्य सुतः कस्मिन् वंशे च कीर्त्यते।
किमर्थञ्चैव नीपास्ते तेन सर्वे प्रणाशिताः ॥१७८॥
सूत उवाच। दिमीटस्य तु दायादो विद्वान् जज्ञे यवी नरः।
धृतिमांस्तस्य पुत्रस्तु तस्य सत्यधृतिः सुतः ॥१७९॥
अथ सत्यधृतेः पुत्रो दृढनेमिः प्रतापवान्।
दृढनेमिसुतश्चापि सुवर्मा नाम पार्थिवः ॥१८०॥

---

(१) काम्पिल्ये इति ख० ग० पु०।

(२) विभ्राजपुत्रा इति श्लोकार्द्धं पूर्व्वापरश्लोकार्द्धाभ्यां सङ्गतिविरहात् लेखकेन भ्रमादन्यतः स्थानादत्रे(त्रा)हृतं।

आसीत् सुवर्म्मणः पुत्त्रः सार्वभौमः प्रतापवान् ।
सार्वभौम इति ख्यातः पृथिव्यामेकराड्‌बभौ ॥१८१॥
तस्यान्वये च महति महत्पौरवनन्दनः ।
महत्पौरवपुत्त्रस्तु राजा रुक्मरथः स्मृतः ॥१८२॥
अथ रुक्मरथस्यापि सुपार्श्वो नाम पार्थिवः ।
सुपार्श्वतनयस्यापि सुमतिर्नाम धार्मिकः ॥१८३॥
सुमतेरपि धर्म्मात्मा राजा सन्नतिमान् प्रभुः ।
तस्यासीत्सन्नतिर्नाम कृत(१)स्तस्य सुतोऽभवत् ॥१८४॥
शिष्यो हिरण्यनाभेस्तु कौथुमस्य महात्मनः ।
चतुर्विंशतिधा तेन प्रोक्तास्ताः सामसंहिताः ॥१८५॥
स्मृतास्ते प्राच्यनामानः कार्त्ताः साम्नान्तु सामगः ।
कार्त्तिरुग्रायुधः सोऽथ वीरः पौरवनन्दनः ॥१८६॥
बभूव येन विक्रम्य पृषतस्य(२) पितामहः ।
नीलो नाम महाबाहुः पञ्चालाधिपतिर्हतः ॥१८७॥
उग्रायुधस्य दायादः क्षेमो नाम महायशाः ।
क्षेमात्सुवीरः संजज्ञे सुवीरस्य नृपञ्जयः ।
नृपञ्जयाद्वीररथो इत्येते पौरवाः स्मृताः ॥१८८॥
अजमीढस्य नीलिन्यां नीलः समभवन्नृपः ।
नीलस्य तपसोग्रेण सुशान्तिरभ्यजायत ॥१८९॥
पुरुजानुः सुशान्तेस्तु रिक्षस्तु पुरुजानुजः ।

---

(१) कृतिरिति ख० ग० ।
(२) प्रतपस्येति ख० ग०, यूपवतस्येति ङ० च० । एष श्लोकः ख० ग० ङ० च० पुस्तकव्यतिरिक्तादर्शपुस्तकेषु न विद्यते ।

ततस्तु विद्दायादा. भेदास्तनयास्त्विमे ॥ १९०॥
मुद्गलः सृञ्जयश्चैव राजा बृहदिषुस्तथा ।
यवीयांश्चापि विक्रान्तः कम्पिल्लश्चैव पञ्चमः ॥१९१॥
पञ्चानां रक्षणार्थाय पितैतानभ्यभाषत ।
पञ्चानां विद्धि पञ्चैतान् स्फीता जनपदा युताः ॥१९२॥
अलं संरक्षणे तेषां पञ्चाला इति विश्रुताः ।
मुद्गलस्यापि मौद्गल्याः क्षत्रोपेता द्विजातयः ॥१९३॥
एते ह्याङ्गिरसः पक्षे संश्रिताः कण्ठमुद्गलाः ।
मुद्गलस्य सुतो ज्येष्ठो ब्रह्मिष्ठः सुमहायशाः ॥१९४॥
इन्द्रसेना यतो गर्भं बध्यश्वं प्रत्यपद्यत ।
बध्यश्वान्मिथुनं जज्ञे मेनका इति नः श्रुतिः ॥१९५॥
दिवोदासश्च राजर्षिरहल्या च यशस्विनी ।
शारद्वतस्तु दायादमहल्या समसूयत ॥१९६॥
शतानन्दमृषिश्रेष्ठं तस्यापि सुमहायशाः ।
पुत्रः सत्यधृतिर्नाम धनुर्वेदस्य पारगः ॥१९७॥
अथ सत्यधृतेः शुक्रं दृष्ट्वाप्सरसमग्रतः ।
प्रचस्कन्दे शरस्तम्बे मैथुनं समपद्यत ॥१९८॥
कृपया तच्च जग्राह शन्तनुर्मृगयां गतः ।
कृपः स्मृतः स वै तस्माद्गौतमी च कृपी तथा ॥१९९॥
एते शारद्वताः प्रोक्ताः च्यतथ्यो गौतमान्वयः ।
अत ऊर्ध्वं प्रवक्ष्यामि दिवोदासस्य सन्ततिं ॥२००॥
दिवोदासस्य दायादो ब्रह्मिष्ठो मित्रयुर्नृपः ।

मैत्रेयस्तु ततो जज्ञे स्मृता एतेऽपि संश्रिताः ॥२०१॥
एतेऽपि संश्रिताः पक्षं क्षात्रोपेतास्तु भार्गवाः[1] ।
राजापि च्यवनो विद्वान् ततः प्रतिरथोऽभवत् ॥२०२॥
अथ वै च्यवनाद्धीमान् सुदासः समपद्यत ।
सौदासः सहदेवस्य सोमकस्तस्य चात्मजः ॥२०३॥
अजमीढः पुनर्जातः क्षीणे वंशे स सोमकः ।
सोमकस्य सुतो जन्तुर्हते तस्मिन् शतं विभो ॥२०४॥
[2]पुत्राणा[3]मजमीढस्य सोमकत्वे महात्मनः ।
तेषां यवीयान् पृषतो द्रुपदस्य पितामहः ॥२०५॥
धृष्टद्युम्नः सुतस्तस्य धृष्टकेतुश्च तत्सुतः ।
महिषी चाजमीढस्य धूमिनी पुत्रगर्धिनी ॥२०६॥
पुत्रार्थे तपस्तेपे शतं वर्षाणि दुश्चरं ।
हुताग्न्यनिद्रा ह्यभवत् पवित्रमितभोजना ॥२०७॥
अहोरात्रं कुशेष्वेव सुष्वाप सुमहाव्रता ।
तस्यां वै धूम्रवर्णायामजमीढस्य वीर्यवान् ॥२०८॥
ऋक्षं संजनयामास धूम्रवर्णं सिताग्रजम् ।
ऋक्षात् संवरणो जज्ञे कुरुः संवरणादभूत् ॥२०९॥
यः प्रयागं पराक्रम्य कुरुक्षेत्रञ्चकार ह ।
कृष्टैनं सुमहातेजा वर्षाणि सुबहून्यथ ॥२१०॥

---

(१) भार्गवमिति पाठः सङ्गतः ।
(२) पुत्राणामिति श्लोकात् प्राक् कतिपयश्लोकपतनं सम्भावनीयं अर्थ-सङ्गतिविरहात् ।
(३) पुत्राणामित्यत्र पृषतामिति पाठः सङ्गतः ।

कृष्यमाणे तदा शक्रस्तस्य वरदो बभौ ।
पुण्यञ्च रमणीयञ्च पुण्यकृद्भिर्निषेवितं ॥२११॥
तस्यान्ववायजाः ख्याताः कुरवो नृपसत्तमाः ।
कुरोस्तु दयिताः पुत्राः सुधन्वा जह्नुरेव च ॥२१२॥
परिक्षितो महाराजः पुत्रकश्चारिमर्द्दनः ।
सुधन्वनस्तु दायादः सुहोत्रो मतिमान् स्मृतः ॥ २१३॥
च्यवनस्तस्य पुत्रस्तु राजा धर्मार्थकोविदः ।
च्यवनस्य कृतः पुत्रः इष्ट्वा यज्ञैर्महातपाः ॥ २१४॥
विश्रुतं जनयामास पुत्रमिन्द्रसखं नृपः ।
विद्योपरिचरं वीरं वसुं नामान्तरिक्षगं ॥२१५॥
विद्योपरिचराज्जज्ञे गिरिकासप्तसूनवः ।
महारथो भगंधरो विश्रुतो यो वृहद्रथः ॥२१६॥
प्रत्यग्रहः कुशश्चैव यमाहुर्मणिवाहनं ।
मार्थैल्लश्च ललित्यश्च मत्स्यकालश्च सप्तमः ॥२१७॥
वृहद्रथस्य दायादः कुशाग्रो नाम विश्रुतः ।
कुशाग्रस्यात्मजश्चैव ऋषभो नाम वीर्यवान् ॥२१८॥
ऋषभस्यापि दायादः पुष्पवान्नाम धार्मिकः ।
विक्रान्तस्तस्य दायादो राजा सत्यहितः स्मृतः ॥२१९॥
तस्य पुत्रः सुधन्वा च तस्मादूर्ज्जः प्रतापवान् ।
ऊर्ज्जस्य नभसः पुत्रस्तस्माज्जज्ञे स वीर्यवान् ॥
शकले द्वे स वै जातो जरया सन्धितस्तु सः ।
जरासन्धो महाबाहुर्जरया सन्धितस्तु सः ॥२२०॥

सर्वक्षत्रस्य जेताऽसौ जरासन्धो महाबलः ।
जरासन्धस्य पुत्रस्तु सहदेवः प्रतापवान् ॥२२१॥
सहदेवात्मजः श्रीमान् सोमाधिः सुमहातपाः ।
श्रुतश्रुवस्तु सोमाधेर्मागधः परिकीर्त्तितः ॥२२२॥

सूत उवाच। परिक्षितस्य दायादो बभूव जनमेजयः ।
(१)श्रुतसेनस्य दायादो भीमसेनोऽपि नामतः ॥२२३॥
जह्नुस्त्वजनयत् पुत्रं सुरथं नाम भूमिपं ।
सुरथस्य तु दायादो वीरो राजा विदूरथः ॥२२४॥
विदूरथसुतश्चापि सार्वभौम इति श्रुतिः ।
सार्वभौमाज्जयत्सेन आराधिस्तस्य चात्मजः ॥२२५॥
आराधितो महासत्व अयुतायुस्ततः स्मृतः ।
अक्रोधनोऽयुतायोऽस्तु तस्माद्देवातिथिः स्मृतः ॥२२६॥
देवातिथेस्तु दायाद ऋक्ष एव बभूव ह ।
भीमसेनस्तथा ऋक्षाद्दिलीपस्तस्य चात्मजः ॥२२७॥
दिलीपस्तनुः प्रतिप(२)स्तस्य पुत्रास्त्रयः स्मृताः ।
देवापिः शन्तनुश्चैव वाह्लीकश्चैव ते त्रयः ॥२२८॥
(३)वाह्लीकस्य तु विज्ञेयः सप्तवाह्लीश्वरो नृपः ।
वाह्लीकस्य सुतश्चैव सोमदत्तो महायशाः ।
जज्ञिरे सोमदत्तात्तु भूरिर्भूरिश्रवाः शलः ॥२२९॥
देवापिस्तु प्रवव्राज वनं धर्मपरीप्सया ।

---

(१) श्रुतसेनस्येति श्लोकार्द्धात् प्राक् श्लोकैकः श्लोकार्द्धं वा पतितः ।
(२) प्रतिभ इति ख० ।
(३) एतत् श्लोकार्द्धं लिपिकरप्रमादाज्जनितम् ।

उपाध्यायस्तु देवानां देवापिरभवन्मुनिः ॥२३०॥
च्यवनोऽस्य हि पुत्रस्तु इष्टकस्य महात्मनः ।
शन्तनुस्त्वभवद्राजा विद्वान् वै स महाभिषः ॥२३१॥
इमं चोदाहरन्त्यत्र श्लोकं प्रति महाभिषं ।
यं यं राजा स्पृशति वै जीर्णं समयतो नरं ॥२३२॥
पुनर्युवा स भवति तस्मात्तं शन्तनुं विदुः ।
ततोऽस्य शन्तनुत्वं वै प्रजास्विह परिश्रुतं ।
स उपयेमे धर्म्मात्मा शन्तनुर्जाह्नवीं नृपः ॥२३३॥
तस्यां देवव्रतं भीष्मं पुत्रं सोऽजनयत्प्रभुः ।
स च भीष्म[१] इति ख्यातः पाण्डवानां पितामहः ॥२३४॥
काले विचित्रवीर्यन्तु शान्तनुर्जनयत्सुतं ।
शन्तनोर्दयितं पुत्रं प्रजाहितकरं प्रभुं ।
कृष्णद्वैपायनश्चैव क्षेत्रे वैचित्रवीर्यके ॥२३५॥
धृतराष्ट्रञ्च पाण्डुञ्च विदुरञ्चाप्यजीजनत् ।
धृतराष्ट्रात्तु गान्धारी पुत्राणां सुषुवे शतं ॥२३६॥
तेषां दुर्य्योधनो ज्येष्ठः सर्व्वक्षत्रस्य स प्रभुः ।
माद्री राज्ञी पृथा चैव पाण्डोर्भार्य्ये बभूवतुः ॥२३७॥
देवदत्ताः सुतास्ताभ्यां पाण्डोरर्थे विजज्ञिरे ।
धर्म्माद्युधिष्ठिरो जज्ञे वायोर्जज्ञे वृकोदरः ॥२३८॥
इन्द्राद्धनञ्जयो जज्ञे शक्रतुल्यपराक्रमः ।
अश्विभ्यां सहदेवश्च नकुलश्चापि माद्रिजौ ॥२३९॥

(१) धर्म्म इति ख० ग० ।

पञ्चैव पाण्डवेभ्यश्च द्रौपद्यां जज्ञिरे सुताः।
द्रौपद्यजनयत् ज्येष्ठं श्रुतिविद्धं[१] युधिष्ठिरात् ॥२४०॥
हिडम्बा भीमसेनात्तु जज्ञे पुत्रं घटोत्कचम्।
काश्या पुनर्भीमसेनाद्‌जज्ञे सर्व्वकं सुतं ॥२४१॥
सुहोत्रं विजया माद्री सहदेवादजायत।
करेमत्यान्तु वैद्यायां निरमित्रस्तु लाङ्गलिः[२] ॥२४२॥
सुभद्रायां रथी पार्थादभिमन्युरजायत।
उत्तरायान्तु वैराट्यां परिचिदभिमन्युजः ॥२४३॥
परिचितस्तु दायादो राजासीज्जनमेजयः।
ब्राह्मणान् स्थापयामास स वै वाजसनेयिकान् ॥२४४॥
असपत्नं तदामर्षाद्वैशम्पायन एव तु[३]।
नस्थास्यतीह दुर्बुद्धे तवैतद्वचनं भुवि ॥२४५॥
यावत् स्थास्याम्यहं लोके तावन्नैतत् प्रशस्यते।
अभितः संस्थितश्चापि ततः स जनमेजयः ॥२४६॥
पौर्णमास्येन हविषा देवमिष्ट्वा प्रजापतिं।
विज्ञाय संस्थितोऽपश्यत्तद्धीष्टां[४] विभोर्मखे ॥२४७॥
परिचित्तनयश्चापि पौरवो जनमेजयः।
द्विरश्वमेधमाहृत्य ततो वाजनसेयकं।

(१) प्रतिविन्ध्यमिति ङ० च०।
(२) नाकुलिरिति ङ०।
(३) असपत्नमिति श्लोकार्द्धात् परं कानिचिद्वाक्यानि न सन्तीत्युपलभ्यन्ते सङ्गतिविरहात्।
(४) तत्तदिष्टमिति पाठोऽर्थप्रतिपत्तिकरः।

प्रवर्त्तयित्वा तद्ब्रह्म विखर्व्वी जनमेजयः ॥२४८॥
खर्व्वमन्वक[१] मुख्यानां खर्व्वमङ्गनिवासिनां ।
खर्व्वंश्च मध्यदेशानां विखर्व्वी जनमेजयः ।
विषादाद्[२] ब्राह्मणैः सार्द्धमभिशस्तः क्षयं ययौ ॥२४९॥
तस्य पुत्रः शतानीको बलवान् सत्यविक्रमः ।
ततः सुतं शतानीकं विप्रास्तमभ्यषेचयत् ॥२५०॥
पुत्रोऽश्वमेधदत्तोऽभूत् शतानीकस्य वीर्य्यवान् ।
पुत्रोऽश्वमेधदत्ताद्वै जातः परपुरंजयः ॥२५१॥
अधिसामकृष्णो धर्मात्मा साम्प्रतोयं महायशाः ।
यस्मिन् प्रशासति महीं युष्माभिरिदमाहृतं ॥२५२॥
दुरापं दीर्घसत्रं वै त्रीणि वर्षाणि दुश्चरं ।
वर्षद्वयं कुरुक्षेत्रे दृषद्वत्यां द्विजोत्तमाः ॥२५३॥
ऋषयः ऊचुः । श्रोतुं भविष्यमिच्छामः प्रजानां वै महामते ।
सूत सार्द्धं नृपैर्भाव्यं[३] व्यतीतं कीर्त्तितं त्वया ॥२५४॥
यत्तु संस्थास्यते क्षत्रमुत्पत्स्यन्ति च ये नृपाः ।
वर्षाग्रतोऽपि प्रब्रूहि नामतश्चैव तान्नृपान् ॥२५५॥
कालं युगप्रमाणञ्च गुणदोषान् भविष्यतः ।
सुखदुःखे प्रजानाञ्च धर्मतः कामतोऽर्थतः ॥२५६॥
एतत् सर्वं प्रसङ्ख्याय पृच्छतां ब्रूहि तत्त्वतः ।
स एवमुक्तो मुनिभिः सूतो बुद्धिमतां वरः ।

(१) मध्यक इति ङ० ।
(२) प्रमादादितिपाठः सुकृतः ।
(३) वीर्य्यमितिपाठः सुसङ्गतः ।

आचचक्षे यथावृत्तं यथादृष्टं[१] यथाश्रुतं ॥२५७॥
सूत उवाच । यथा मे कीर्त्तितं सर्वं व्यासेनाद्भुतकर्म्मणा ।
भाव्यं कलियुगञ्चैव तथा मन्वन्तराणि तु ॥२५८॥
अनागतानि सर्वाणि ब्रुवतो मे निबोधत ।
अत ऊर्द्ध्वं प्रवक्ष्यामि भविष्यन्ति नृपास्तु ये ॥२५९॥
ऐडांश्चैव तथेक्ष्वाकून् सौद्युम्नांश्चैव पार्थिवान् ।
येषु सस्थाप्यते चेदं ऐक्ष्वाकवमिदं शुभं ॥२६०॥
तान् सर्वान् कीर्त्तयिष्यामि भविष्ये पठितान्नृपान् ।
तेभ्यः परे च ये चान्ये उत्पत्स्यन्ते महीक्षितः ॥२६१॥
क्षत्राः पारशवाः शूद्रास्तथा ये च द्विजातयः ।
अन्ध्राः शकाः पुलिन्दाश्च तूलिका यवनैः सह ॥२६२॥
कैवर्त्ताभीरशबरा ये चान्ये म्लेच्छजातयः ।
वर्षाग्रतः प्रवक्ष्यामि नामतश्चैव तान्नृपान् ॥२६३॥
अधिसामकृष्णः सोऽयं साम्प्रतं पौरवान्नृपः[२] ।
तस्यान्ववाये वक्ष्यामि भविष्ये तावतो नृपान् ॥२६४॥
अधिसामकृष्णपुत्रो निर्वक्त्रो भविता किल ।
गङ्गयापहृते तस्मिन् नगरे नागसाह्वये ।
त्यक्त्वा च तं सुवासञ्च कौशाम्ब्यां स निवत्स्यति ॥२६५॥
भविष्यदुष्णस्तत्पुत्र उष्णाच्चित्ररथः स्मृतः ।
शुचिद्रथश्चित्ररथाद्वृतिमांश्च शुचिद्रथात् ॥२६६॥

---

(१) यथाश्रुतमिति पाठः साधुः ।
(२) पौरवो नृपः इति पाठः साधीयान् ।

सुषेणो वै महावीर्यो भविष्यति महायशाः ।
तस्मात्सुषेणाद्भविता सुतीर्थो नाम पार्थिवः ॥२६७॥
रुचः सुतीर्थाद्भविता त्रिचक्षो[1] भविता ततः ।
त्रिचक्षस्य तु दायादो भविता वै सुखीबलः[2] ॥२६८॥
सुखीबलसुतश्चापि भाव्यो राजा परिप्लुतः[3] ।
परिप्लुतसुतश्चापि भविता सुनयो नृपः ॥२६९॥
मेधावी सुनयस्याथ भविष्यति नराधिपः ।
मेधाविनः सुतश्चापि दण्डपाणिर्भविष्यति ॥२७०॥
दण्डपाणेर्निरामित्रो निरामित्राच्च क्षेमकः ।
पञ्चविंशनृपा ह्येते भविष्याः पूर्ववंशजाः ॥२७१॥
अत्रानुवंशश्लोकोऽयं गीतो विप्रैः पुराविदैः ।
ब्रह्मक्षत्रस्य यो योनिर्वंशादेवर्षिसत्कृतः ॥२७२॥
क्षेमकं प्राप्य राजानं संस्थां प्राप्स्यति वै कलौ ।
इत्येष पौरवो वंशो यथावदनुकीर्त्तितः ॥२७३॥
धीमतः पाण्डुपुत्रस्य अर्जुनस्य महात्मनः ।
अत ऊर्द्धं प्रवक्ष्यामि इक्ष्वाकूणां महात्मनां ॥२७४॥
वृहद्रथस्य दायादो वीरो राजा वृहत्क्षयः ।
ततः क्षयः सुतस्तस्य वत्सव्यूहस्ततः क्षयात् ॥२७५॥
वत्सव्यूहात्प्रतिव्यूहस्तस्य पुत्रो दिवाकरः ।
यस्य सांप्रतमध्यास्ते अयोध्यां नगरीं नृपः ॥२७६॥

---

(१) त्रिवक्ष इति ङ० च० ।
(२) सुधीबल इति ख० ग० ।
(३) परिप्लव इति ङ० ।

दिवाकरस्य भविता सहदेवो महायशाः ।
सहदेवस्य दायादो बृहदश्वो भविष्यति ॥२७७॥
तस्य भानुरथो भाव्यः प्रतीताश्वस्य तत्सुतः ।
प्रतीताश्वसुतश्चापि सुप्रतीतो भविष्यति ॥२७८॥
सहदेवः सुतस्तस्य सुनक्षत्रस्य तत्सुतः ॥२७९॥
किन्नरस्तु सुनक्षत्राद्भविष्यति परंतपः ।
भविता चान्तरिक्षस्तु किन्नरस्य सुतो महान् ॥२८०॥
अन्तरिक्षात्सुपर्णस्तु सुपर्णाच्चाप्यमित्रजित् ।
पुत्रस्तस्य भरद्वाजो धर्मी तस्य सुतः स्मृतः ॥२८१॥
पुत्रः कृतञ्जयो नाम धर्मिणः स भविष्यति ।
कृतञ्जयसुतो व्रातो तस्य पुत्रो रणञ्जयः ॥२८२॥
भविता सञ्जयश्चापि वीरो राजा रणञ्जयात् ॥
सञ्जयस्य सुतः शाक्यः शाक्यात् शुद्धोदनोऽभवत् ॥२८३॥
शुद्धोदनस्य भविता शाक्यार्थे राहुलः स्मृतः ।
प्रसेनजित्ततो भाव्यः क्षुद्रको भविता ततः ॥२८४॥
क्षुद्रकात् क्षुलिको भाव्यः क्षुलिकात्सुरथः स्मृतः ।
सुमित्रः सुरथस्यापि अन्त्यश्च भविता नृपः ॥२८५॥
एते ऐक्ष्वाकवाः प्रोक्ता भवितारः कलौ युगे ।
बृहद्बलान्वये जाता भवितारः कलौ युगे ।
शूराश्च कृतविद्याश्च सत्यसन्धा जितेन्द्रियाः ॥२८६॥
अत्रानुवंशश्लोकोऽयं भविष्यज्ञैरुदाहृतः ।
इक्ष्वाकूणामयं वंशः सुमित्रान्तो भविष्यति ॥२८७॥

सुमित्रं प्राप्य राजानं संस्थां प्राप्स्यति वै कलौ ।
इत्येतन्मानवं क्षेत्रमैलञ्च समुदाहृतम् ॥२८८॥
अतः ऊर्द्धं प्रवक्ष्यामि मागधेयान् वृहद्रथान् ।
जरासन्धस्य ये वंशे सहदेवान्वये नृपाः ॥२८९॥
अतीता वर्त्तमानाश्च भविष्याश्च तथा पुनः ।
प्राधान्यतः प्रवक्ष्यामि गदतो मे निबोधत ॥२९०॥
संग्रामे भारते तस्मिन् सहदेवो निपातितः ।
सोमाधिस्तस्य तनयो राजर्षिः स गिरिव्रजे ॥२९१॥
पञ्चाशतं तथाष्टौ च समा राज्यमकारयत् ।
श्रुतश्रवाः चतुःषष्टिसमास्तस्य सुतोऽभवत् ॥
अयुतायुस्तु षड्विंशं राज्यं वर्षाण्यकारयत् ।
समाः शतं निरामित्रो महीं भुक्त्वा दिवङ्गतः ॥२९२॥
पञ्चाशतं समाः षट् च सुक्षत्रः प्राप्तवान्महीं ।
त्रयोविंशं वृहत्कर्मा राज्यं वर्षाण्यकारयत् ॥२९३॥
सेनाजित्साम्प्रतं चापि एतां वै भुज्यते समाः ।
श्रुतंजयस्तु वर्षाणि चत्वारिंशत् भविष्यति ॥२९४॥
महाबाहुर्महाबुद्धिर्महाभीमपराक्रमः[1] ।
पञ्चत्रिंशत्तु वर्षाणि महीं पालयिता नृपः ॥२९५॥
अष्टपञ्चाशतं चाब्दान् राज्ये स्थास्यति वै शुचिः ।
अष्टाविंशत्समाः पूर्णाः क्षेमो राजा भविष्यति ॥२९६॥
भुवतस्तु[2] चतुःषष्टीराज्यं प्राप्स्यति वीर्य्यवान् ।

---

(१) महाबलो महाबाहुर्महाबुद्धिपराक्रमः इति क० अ० ।
(२) सुवत इति क०, युवत इति च० अ० ।

पञ्चवर्षाणि पूर्णाणि धर्मनेत्रो भविष्यति ॥१९७॥
(१)भोक्ष्यते नृपतिश्चैव अष्टपञ्चाशतं समाः ।
अष्टाविंशत्समा राज्यं सुव्रतस्य भविष्यति ॥१९८॥
चत्वारिंशद्दशाष्टौ च दृढ़सेनो भविष्यति ।
त्रयस्त्रिंशत्तु वर्षाणि सुमतिः प्राप्स्यते ततः ॥१९९॥
द्वाविंशतिसमा राज्यं सुचलो(२) भोक्ष्यते ततः ।
चत्वारिंशत्समा राजा सुनेत्रो भोक्ष्यते ततः ॥२००॥
सत्यजित् पृथिवीराज्यं त्र्यशीतिं भोक्ष्यते समाः ।
प्राप्येमां वीरजिच्चापि पञ्चत्रिंशद्भविष्यति ॥२०१॥
अरिञ्जयस्तु वर्षाणि पञ्चाशत्प्राप्स्यते महीं ।
द्वात्रिंशच्च नृपा ह्येते भवितारो बृहद्रथाः ॥२०२॥
पूर्णं वर्षसहस्रं वै तेषां राज्यं भविष्यति ।
बृहद्रथेष्वतीतेषु वीतहोत्रेषु वर्त्तिषु ॥२०३॥
मुनिकः स्वामिनं हत्वा पुत्रं समभिषेक्ष्यति ।
मिषतां क्षत्रियाणां हि प्रद्योतो मुनिको बलात् ॥२०४॥
स वै प्रणतसामन्तो भविष्ये नयवर्ज्जितः ।
त्रयोविंशत्समा राजा भविता स नरोत्तमः ॥२०५॥
चतुर्विंशत्समा राजा पालको भविता ततः ।
विशाखयूपो भविता नृपः पञ्चाशतीं समाः ॥२०६॥
एकत्रिंशत्समा राज्यमजकस्य भविष्यति ।

---

(१) इतः प्राक् श्लोकार्द्धं पतितत्वेनोपलभ्यते ।
(२) सुचालो इति ङ०, च० छ०, शुचानौ इति ख० ।

भविष्यति समा विंशत् तत्सुतोवर्म्मिवर्द्धनः[१] ॥२०७॥
अष्टाविंशच्छतं भाव्याः प्राद्योताः पञ्च ते सुताः ।
हत्वा तेषां यशः कृत्स्नं शिशुनाको भविष्यति ॥२०८॥
वाराणस्यां सुतस्तस्य संप्राप्स्यति[२] गिरिव्रजं ।
शिशुनाकस्य वर्षाणि चत्वारिंशद्भविष्यति ॥२०९॥
शकवर्णः सुतस्तस्य षट्त्रिंशच्च भविष्यति ।
ततस्तु विंशतिं राजा क्षेमवर्मा भविष्यति ॥२१०॥
अजातशत्रुर्भविता पञ्चविंशत्समा नृपः ।
चत्वारिंशत्समा राज्यं क्षत्रौजाः प्राप्स्यते ततः ॥२११॥
अष्टाविंशत्समा राजा विविसारो भविष्यति ।
पञ्चविंशत्समा राजा दर्शकस्तु भविष्यति ॥२१२॥
उदायी भविता तस्मात्त्रयस्त्रिंशत्समा नृपः ।
स वै पुरवरं राजा पृथिव्यां कुसुमाह्वयं ।
गङ्गाया दक्षिणे कूले चतुर्थेऽब्दे करिष्यति ॥२१३॥
द्वाचत्वारिंशत्समा भाव्यो राजा वै नन्दिवर्द्धनः ।
चत्वारिंशत्त्रयश्चैव महानन्दी भविष्यति ॥२१४॥
इत्येते भवितारो वै शैशुनाका नृपा दश ।
शतानि त्रीणि वर्षाणि द्विषष्ट्यभ्यधिकानि तु ॥२१५॥
शैशुनाका भविष्यन्ति तावत्कालं नृपाः परे ।
राजानः क्षत्रबान्धवाः एतैः सार्द्धं भविष्यति ॥२१६॥

---

(१) वर्द्धिवर्द्धन इति क० ।
(२) स यास्यति इति ङ० घ० क० ।

ऐक्ष्वाकवाश्चतुर्विंशत्पाञ्चालाः पञ्चविंशतिः ।
कालकास्तु चतुर्विंशच्चतुर्विंशत्तु हैहयाः ॥ २१७॥
द्वात्रिंशद्वै कलिङ्गास्तु पञ्चविंशत्तथा शकाः ।
कुरवश्चापि षड्विंशदष्टाविंशतिमैथिलाः ॥ २१८॥
शूरसेनास्त्रयोविंशद्वीतिहोत्राश्च विंशतिः ।
तुल्यकालं भविष्यन्ति सर्व एव महीक्षितः ॥ २१९॥
महानन्दिसुतश्चापि शूद्रायां कालसंवृतः ।
उत्पत्स्यते महापद्मः सर्वक्षत्रान्तरे नृपः ॥ २२०॥
ततः प्रभृति राजानो भविष्याः शूद्रयोनयः ।
एकराट् स महापद्म एकच्छत्रो भविष्यति ॥ २२१॥
अष्टाविंशतिवर्षाणि पृथिवीं पालयिष्यति ।
सर्वक्षत्रहृतोद्धृत्य(१) भाविनोऽर्थस्य वै बलात् ॥ २२२॥
सहस्रा(२) त्सत्सुता ह्यष्टौ समा द्वादश ते नृपाः ।
महापद्मस्य पर्याये भविष्यन्ति नृपाः क्रमात् ॥ २२३॥
उद्धरिष्यति तान् सर्वान् कौटिल्यो वै द्विरष्टभिः ।
भुक्त्वा महीं वर्षशतं नन्देन्दुः(३) स भविष्यति ॥ २२४॥
चन्द्रगुप्तं नृपं राज्ये कौटिल्यः स्थापयिष्यति ।
चतुर्विंशत्समा राजा चन्द्रगुप्तो भविष्यति ॥ २२५॥

---

(१) सर्वक्षत्रहृतोद्धृत्य इति ख०। सर्वक्षत्रान् समुद्धृत्य इति पाठो विशुद्धः ।

(२) सहस्रादिति क० ङ० च० ।

(३) नन्देन्दः इति च० ।

भविता भद्रसारस्तु पञ्चविंशत्समा नृपः ।
षड्विंशत्तु समा राजा अशोको भविता नृषु ॥३२६॥
तस्य पुत्रः कुनालस्तु वर्षाण्यष्टौ भविष्यति ।
कुनालसूनुरष्टौ च भोक्ता वै बन्धुपालितः ॥३२७॥
बन्धुपालितदायादो दशमानी[१]न्द्रपालितः ।
[२]भविता सप्तवर्षाणि देववर्म्मा नराधिपः ॥३२८॥
राजा शतधरश्चाष्टौ तस्य पुत्रो भविष्यति ।
वृहदश्वश्च वर्षाणि सप्त वै भविता नृपः ॥३२९॥
इत्येते नव भूपा ये भोक्ष्यन्ति च वसुन्धरां ।
सप्तत्रिंशच्छतं पूर्णं तेभ्यस्तु गौर्भविष्यति ॥३३०॥
पुष्यमित्रस्तु सेनानीरुद्धृत्य वै वृहद्रथं ।
कारयिष्यति वै राज्यं समाः षष्टिं सदैव तु ॥३३१॥
पुष्यमित्रसुता श्चाष्टौ भविष्यन्ति समा नृपाः ।
भविता चापि तज्ज्येष्ठः सप्तवर्षाणि वै ततः ॥३३२॥
वसुमित्रः सुतो भाव्यो दशवर्षाणि पार्थिवः ।
ततो भुकः[३] समा द्वे तु भविष्यति सुतश्च वै ॥३३३॥
भविष्यन्ति समास्तस्मात्तिस्र एव पुलिन्दकाः ।
राजा घोषसुतश्चापि वर्षाणि भविता त्रयः ॥३३४॥

---

(१) दशमानीत्यत्र दशाब्दानीति पाठः सङ्गतः ।
(२) भवितेति श्लोकार्द्धात् प्राक् श्लोकार्द्धं पतितम् ।
(३) वक इति ख० ग० ।

ततो वै विक्रमित्रस्तु समा राजा ततः पुनः ।
द्वात्रिंशद्भविता चापि समा भागवतो नृपः ॥२३५॥
भविष्यति सुतस्तस्य चेमभूमिः समा दश ।
दशैते शुङ्गराजानो[१] भोक्ष्यन्तीमां वसुन्धरां ॥२३६॥
शतं पूर्णं दश द्वे च तेभ्यः किं वा गमिष्यति ।
अपार्थिवसुदेवन्तु बाल्याद्व्यसनिनं नृपं ॥२३७॥
देवभूमिस्ततोऽन्यस्य शुङ्गेषु भविता नृपः ।
भविष्यति समा राजा नवकण्ठायन[२]स्तु सः ॥२३८॥
भूतिमित्रः सुतस्तस्य चतुर्विंशद्भविष्यति ।
भविता द्वादश समा तस्मान्नारायणो नृपः ॥२३९॥
सुशर्म्मा तत्सुतश्चापि भविष्यति समा दश ।
चतुरस्तुङ्गकृत्यास्ते नृपाः कण्ठायना द्विजाः ॥२४०॥
भाव्याः प्रणतसामन्ताश्चत्वारिंशच्च पञ्च च ।
तेषां पर्य्यायकाले तु तरन्धा तु[३] भविष्यति ॥२४१॥
कण्ठायनमथोद्धृत्य सुशर्म्माणं प्रसह्य तं ।
शुङ्गानां चापि यच्छिष्टं चययित्वा बलं तदा ।
सिन्धुको ह्यन्ध्रजातीयः प्राप्स्यतीमां वसुन्धरां ॥२४२॥
चयोविंशत्समा राजा सिन्धुको भविता त्वथ ।

---

(१) शुङ्गराजान इति ख० ग० ङ० च० ।
(२) नवकण्ठायन इति क० छ० ।
(३) तद्गोऽन्धो चि इति पाठः समञ्जसः ।

अष्टौ भातस्य(१) वर्षाणि तस्मादश्च भविष्यति ॥२४३॥
श्रीसातकर्णिर्भविता तस्य पुत्रस्तु वै महान् ।
पञ्चाशन्तं समाः षट् च सातकर्णिर्भविष्यति ॥२४४॥
आपादबद्धो(२) दश वै तस्य पुत्रो भविष्यति ।
(३)चतुर्व्विंशत्तु वर्षाणि षट् समा वै(४) भविष्यति ॥२४५॥
भविता नेमिकृष्णस्तु वर्षाणां पञ्चविंशतिं ।
ततः संवत्सरं पूर्णं हालो राजा भविष्यति ॥२४६॥
पञ्च सप्तक(५) राजानो भविष्यन्ति महाबलाः ।
भाव्यः पुत्रिकषेणस्तु समाः सोऽप्येकविंशतिं ॥२४७॥
सातकर्णि(६) र्वर्षमेकं भविष्यति नराधिपः ।
अष्टाविंशत्तु वर्षाणि शिवस्वामी भविष्यति ॥२४८॥
राजा च गौतमीपुत्र एकविंशत्समा नृपु ।
एकोनविंशतिं राजा यज्ञश्रीः सातकर्ण्यय(७) ॥२४९॥
षडेव भविता तस्माद्विजयस्तु समा नृपः ।
दण्डश्रीः सातकर्णी च तस्य पुत्रः समास्त्रयः ॥२५०॥
पुलोवापि समाः सप्त अन्येषाञ्च भविष्यति ।

---

(१) भ्रातस्येति ङ० च० छ०, स्नातस्येति क० ।
(२) आपेलवादा इति ङ० च० ज०, अपाम्लवादा इति छ० ।
(३) चतुर्व्विंशत्त्विति स्लोकार्द्धात् प्राक् स्लोकार्द्धं पतितम् ।
(४) षड्मासैरिति ङ० च० छ० ज० ।
(५) सप्त च इति पाठः साधुः ।
(६) शान्तकीर्त्तिरिति ख० ।
(७) सामकर्ण्यय इति ख० ज० ।

इत्येते वै नृपास्त्रिंशदन्ध्रा भोक्ष्यन्ति ये महीं ॥२५१॥
समाः शतानि चत्वारि पञ्च षड्वै तथैव च ।
अन्ध्राणां[१] संस्थिताः पञ्च तेषां वंशाः समाः पुनः ॥२५२॥
सप्तैव तु भविष्यन्ति दशाभीरास्ततो नृपाः ।
सप्त गर्दभिनश्चापि ततोऽथ दश वै शकाः ॥२५३॥
यवनाष्टौ भविष्यन्ति तुषारास्तु चतुर्दश ।
त्रयोदश मरुण्डाश्च[२] मौना ह्यष्टादशैव तु ॥२५४॥
अन्ध्रा भोक्ष्यन्ति वसुधां शते द्वे च शतं च वै ।
शतानि त्रीण्यशीतिश्च भोक्ष्यन्ति वसुधां शकाः ॥२५५॥
अशीतिश्चैव वर्षाणि भोक्तारो यवना महीं ।
पञ्चवर्षशतानीह तुषाराणां मही स्मृता ॥२५६॥
शतान्यर्द्धचतुर्थानि भवितारस्त्रयोदश ।
मरुण्डा वृषलैः सार्द्धं भाव्यान्या म्लेच्छजातयः ॥२५७॥
शतानि त्रीणि भोक्ष्यन्ति म्लेच्छा एकादशैव तु ।
तच्छन्नेन च[३] कालेन ततः कोलिकिला वृषाः ॥२५८॥
ततः कोलिकिलेभ्यश्च विन्ध्यशक्तिर्भविष्यति ।
समाः षण्णवतिं ज्ञात्वा पृथिवीं च समेष्यति[४] ॥२५९॥
वृषान्[५] वै दिशकांश्चापि[६] भविष्यांश्च निबोधत ।

(१) अन्ध्राणामित्यनन्तरं कतिपयवाक्यानि न सन्ति क्वचित्? ।
(२) मरुण्डाश्चेति ङ० च० ।
(३) उच्छिन्नेष्वेषु इति पाठः साधुः ।
(४) स भोक्ष्यति इति ख० ग० ।
(५) नृपानिति क० ।
(६) वै. दिशकानित्यत्र वैदेशिकानिति पाठः सम्भाव्यते ।

शेषस्य नागराजस्य पुत्रः सुरपुरञ्जयः[1] ॥३६०॥
भोगी भविष्यते राजा नृपो नागकुलोद्वहः ।
सदाचन्द्रस्तु चन्द्रांशो द्वितीयो नखवांस्तथा ॥३६१॥
धनधर्मा ततश्चापि चतुर्थो विंशजः स्मृतः ।
भूतिनन्दस्ततश्चापि वैदेशे तु भविष्यति ॥३६२॥
शुङ्गानां नन्दनस्यान्ते मधुनन्दिर्भविष्यति ।
तस्य भ्राता यवीयांस्तु नाम्ना नन्दियशाः किल ॥३६३॥
तस्यान्वये भविष्यन्ति राजानस्ते त्रयस्तु वै ।
दौहित्रः शिशुको नाम पुरिकायां नृपोऽभवत् ॥३६४॥
विन्ध्यशक्तिसुतश्चापि प्रवीरो नाम वीर्यवान् ।
भोक्ष्यन्ति च समाः षष्टिं पुरीं काञ्चनकाञ्च वै ॥३६५॥
यक्ष्यति वाजपेयैश्च समाप्तवरदक्षिणैः ।
तस्य पुत्रास्तु चत्वारो भविष्यन्ति नराधिपाः ॥३६६॥
विन्ध्यकानाङ्कुलेऽतीते नृपा वै वाह्लिकास्त्रयः ।
सुप्रतीको नभीरस्तु समा भोक्ष्यति त्रिंशतिं ॥३६७॥
शक्यमा नाम वै राजा माहिषीनां महीपतिः[2] ।
पुष्यमित्रा भविष्यन्ति पट्टमित्रास्त्रयोदश ॥३६८॥
मेकलायां नृपाः सप्त भविष्यन्ति च सत्तमाः[3] ।
कोमलायान्तु राजानो भविष्यन्ति महाबलाः ॥३६९॥

---

(१) परपुरञ्जयः इति ङ० च० ।
(२) सक्यमीमाभवो राजा महिषीयां महीपति रिति च० छ० ज० ।
(३) भविष्यति च सन्ततिरितिपाठ आदर्शपुस्तकमात्रे वर्त्तते ।

मेधा इति समाख्याता बुद्धिमन्तो भवैव तु ।
नैषधाः पार्थिवाः सर्व्वे भविष्यन्त्यामनुक्षयात् ॥३७०॥
नलवंशप्रसूतास्ते वीर्यवन्तो महाबलाः ।
मागधानां महावीर्यो विश्वस्फानि(१) र्भविष्यति ॥३७१॥
उत्साद्य पार्थिवान् सर्व्वान् सोऽन्यान् वर्णान् करिष्यति ।
कैवर्त्तान् पञ्चकांश्चैव पुलिन्दान् ब्राह्मणांस्तथा ॥३७२॥
स्थापयिष्यन्ति राजानो(२) नानादेशेषु तेजसा ।
विश्वस्फाणिर्महासत्त्वो युद्धे विष्णुसमो बली ॥३७३॥
विश्वस्फानिर्नरपतिः क्लीवाकृतिरिवोच्यते ।
उत्सादयित्वा क्षत्रन्तु क्षत्रमन्यत् करिष्यति ॥३७४॥
देवान् पितॄंश्च विप्रांश्च तर्पयित्वा सकृत्पुनः ।
जाह्नवीतीरमासाद्य शरीरं यस्यते(३) बली ॥३७५॥
सन्न्यस्य स्वशरीरन्तु शक्रलोकं गमिष्यति ।
नवनाकास्तु भोक्ष्यन्ति पुरीं चम्पावतीं नृपाः ॥३७६॥
मथुराञ्च पुरीं रम्यां नागा भोक्ष्यन्ति सप्त वै ।
अनुगङ्गं प्रयागञ्च साकेतं मगधांस्तथा ।
एतान् जनपदान् सर्वान् भोक्ष्यन्ते गुप्तवंशजाः ॥३७७॥
निषधान् यदुकांश्चैव शैशीतान् कालतोपकान् ।
एतान् जनपदान् सर्व्वान् भोक्ष्यन्ति मणिधान्यजाः ॥३७८॥

---

(१) विश्वस्फानिरित्यत्र विश्वप्सानिरितिपाठः साधुः ।
(२) राज्ञो वै इति पाठः साधुः ।
(३) त्यक्ष्यते इति पाठः सङ्गतः ।

कोशलांश्चान्ध्रपौण्ड्रांश्च ताम्रलिप्तान् ससागरान् ।
चम्पां चैव पुरीं रम्यां भोक्ष्यन्ति देवरक्षितां ॥३७९॥
कलिङ्गा महिषाश्चैव महेन्द्रनिलयाश्च ये ।
एतान् जनपदान् सर्वान् पालयिष्यति वै गुहः ॥३८०॥
स्त्रीराष्ट्रं भक्ष्यकांश्चैव भोक्ष्यते कनकाह्वयः ।
तुल्यकालं भविष्यन्ति सर्वे ह्येते महीक्षितः ॥३८१॥
अल्पप्रसादा ह्यनृता महाक्रोधा ह्यधार्मिकाः ।
भविष्यन्तीह यवना धर्मतः कामतोऽर्थतः ॥३८२॥
नैव मूर्द्धाभिषिक्तास्ते भविष्यन्ति नराधिपाः ।
युगदोषदुराचारा भविष्यन्ति नृपास्तु ते ॥३८३॥
स्त्रीणां बालवधेनैव हत्वा चैव परस्परं ।
भोक्ष्यन्ति कलिशेषे तु वसुधां पार्थिवास्तथा ॥ ३८४॥
उदितोदितवंशास्ते उदितास्तमितास्तथा ।
भविष्यन्तीह पर्याये कालेन पृथिवीक्षितः ॥३८५॥
विहीनास्तु भविष्यन्ति धर्मतः कामतोऽर्थतः ।
तैर्विमिश्रा जनपदा म्लेच्छाचाराश्च सर्वशः ॥३८६॥
विपर्य्ययेन वर्त्तन्ते नाशयिष्यन्ति वै प्रजाः ।
लुब्धानृतरताश्चैव भवितारस्तदा नृपाः ॥३८७॥
तेषां व्यतीते पर्य्याये बहुस्त्रीके युगे तदा ।
लवाल्लवं भ्रश्यमाना आयूरूपबलश्रुतैः ॥३८८॥
तथा गतास्तु वै काष्ठां प्रजासु जगतीश्वराः ।
राजानः सम्प्रणश्यन्ति कालेनोपहतास्तदा ॥३८९॥

कलिनोपहताः(१) सर्वे म्लेच्छा यास्यन्ति सर्वशः।
अधार्मिकाश्च तेऽत्यर्थं पाषण्डाश्चैव सर्वशः ॥२८०॥
प्रनष्टे नृपशब्दे च सन्ध्याश्लिष्टे कलौ युगे।
किञ्चिच्छिष्टाः प्रजास्ता(२) वै धर्मे नष्टेऽपरिग्रहाः ॥२८१॥
असाधना हतास्वासा व्याधिशोकेन पीड़िताः।
अनावृष्टिहताश्चैव परस्परवधेन च ॥२८२॥
अनाथा हि परित्रस्ता वार्त्तामुत्सृज्य दुःखिताः।
त्यक्त्वा पुराणि ग्रामांश्च भविष्यन्ति वनौकसः ॥२८३॥
एवं नृपेषु नष्टेषु प्रजास्त्यक्त्वा गृहाणि तु।
नष्टे स्नेहे दुरापन्ना भ्रष्टस्नेहाः सुहृज्जनाः ॥२८४॥
वर्णाश्रमपरिभ्रष्टाः सङ्करं घोरमास्थिताः।
सरित्पर्वतसेविन्यो भविष्यन्ति प्रजास्तदा ॥२८५॥
सरितः सागरानूपान् सेवन्ते पर्वतानि च।
अङ्गान् कलिङ्गान् वङ्गांश्च काश्मीरान् काशिकोशलान् ॥२८६॥
ऋषिकान्तगिरिद्रोणीः संश्रयिष्यन्ति मानवाः।
कृत्स्नं हिमवतः पृष्ठं कूलं च लवणाम्भसः ॥२८७॥
अरण्यान्यभिपत्स्यन्ति आर्य्या म्लेच्छजनैः सह।
मृगैर्मीनैर्विहङ्गैश्च श्वापदैस्तन्तुभि(३) स्तथा।
मधुशाकफलैर्मूलैर्वर्त्तयिष्यन्ति मानवाः ॥२८८॥

---

(१) कलिनोपहृता इति पाठः सुसङ्गतः।
(२) शृपास्ते इति पाठः सङ्गतार्थः परत्र तथादर्शनात्।
(३) तन्तुकैः अथवा ऋत्सकैरितिपाठोऽर्थप्रतिपत्तिकरः।

चीरं पर्णञ्च विविधं वल्कलान्यजिनानि च।
स्वयं कृत्वा विचरिष्यन्ति यथा मुनिजनास्तथा॥३९९॥
बीजान्नानि तथा निम्नेष्वीहन्तः काष्ठशङ्कुभिः।
अजैडकं खरोष्ट्रञ्च पालयिष्यन्ति यत्नतः॥४००॥
नदीर्वत्स्यन्ति तोयार्थे कूलमाश्रित्य मानवाः।
पार्थिवान् व्यवहारेण विबाधन्तः परस्परं॥४०१॥
बहुमन्याः प्रजाहीनाः शौचाचारविवर्जिताः।
एवं भविष्यन्ति नरास्तदाधर्मे व्यवस्थिताः॥४०२॥
हीनात् हीनान् तथा धर्मान् प्रजा समनुवर्त्तते।
आयु[१]स्तदा चयोविंशं न कश्चिदतिवर्त्तते॥४०३॥
दुर्बला विषयम्लाना जरया संपरिप्लुताः।
पत्रमूलफलाहाराः चीरकृष्णाजिनाम्बराः॥४०४॥
वृत्त्यर्थमभिलिप्सन्तश्चरिष्यन्ति वसुन्धरां।
एतत्काल[२]मनुप्राप्ताः प्रजाः कलियुगान्तके॥४०५॥
क्षीणे कलियुगे तस्मिन् दिव्ये वर्षसहस्रके।
निःशेषास्तु भविष्यन्ति सार्द्धं कलियुगेन तु।
ससन्ध्यांशे तु निःशेषे कृतं वै प्रतिपत्स्यते॥४०६॥
यदा चन्द्रश्च सूर्य्यश्च तथा तिष्यबृहस्पती।
एकराशौ भविष्यन्ति तदा कृतयुगं भवेत्॥४०७॥
एष वंशक्रमः कृत्स्नं कीर्त्तितो वो यथाक्रमं।

(१) आयुरित्यत्र बहुत्वे एकवचनमार्षं।
(२) एतत्कालं एतदवस्थामित्यर्थः।

अतीता वर्त्तमानाश्च तथैवानागताश्च ये ॥४०८॥
महादेवाभिषेकात्तु जन्म यावत्परिचितः ।
एतद्वर्षसहस्रन्तु ज्ञेयं पञ्चाशदुत्तरं ॥४०९॥
प्रमाणं वै तथा चोक्तं(१) महापद्मान्तरं च यत् ।
अन्तरं तच्छतान्यष्टौ षट्त्रिंशच्च समाः स्मृताः ॥४१०॥
एतत्कालान्तरं भाव्या अन्ध्रान्ता ये प्रकीर्तिताः ।
भविष्यैस्तच्च सङ्ख्याताः पुराणज्ञैः श्रुतर्षिभिः ॥४११॥
सप्तर्षयस्तदा प्राहुः प्रतीपे राज्ञि वै शतं ।
सप्तविंशैः शतैर्भाव्या अन्ध्राणां ते(२) त्वया(३) पुनः ॥४१२॥
सप्तविंशतिपर्य्यन्ते कृत्स्ने नक्षत्रमण्डले ।
सप्तर्षयस्तु तिष्ठन्ति पर्यायेण शतं शतं ।
सप्तर्षीणां युगं ह्येतद्दिव्यया सङ्ख्यया स्मृतं ॥४१३॥
सा सा दिव्या स्मृता षष्टिर्दिव्याह्नाश्चैव सप्तभिः(४) ।
तेभ्यः(५) प्रवर्तते कालो दिव्यः सप्तर्षिभिस्तु तैः ॥४१४॥
सप्तर्षीणान्तु ये पूर्वा दृश्यन्ते उत्तरादिशि ।
ततो मध्येन च क्षेत्रं दृश्यते यत्समं दिवि ॥४१५॥
तेन सप्तर्षयो युक्ता ज्ञेया व्योम्नि शतं समाः ।
नक्षत्राणामृषीणाञ्च योगस्यैतन्निदर्शनं ॥४१६॥

---

(१) वक्ष्ममिति च० छ० ज० ।
(२) अन्ध्रान्तास्ते इति पाठः साधुः ।
(३) तदा इति पाठः सङ्गतः ।
(४) षष्टिर्दिव्याह्नाश्चैव सप्तभिरिति पाठो न समीचीनः ।
(५) तदा इति पाठः साधुः ।

सप्तर्षयो मघायुक्ताः काले पारिक्षिते शतं।
अन्ध्रांशे सचतुर्व्विंशे भविष्यन्ति मते मम ॥४१७॥
इमास्तदा तु प्रकृतिर्व्यापत्स्यन्ति प्रजा भृशं।
अनृतोपहताः सर्वा धर्मतः कामतोऽर्थतः॥४१८॥
श्रौतस्मार्त्ते प्रशिथिले धर्म्मे वर्णाश्रमे तदा।
सङ्करं दुर्बलात्मानः प्रतिपत्स्यन्ति मोहिताः॥४१९॥
संसक्ताश्च भविष्यन्ति शूद्राः सार्द्धं द्विजातिभिः।
ब्राह्मणाः शूद्रयष्टारः शूद्रा वै मन्त्रयोनयः॥४२०॥
उपस्थास्यन्ति तान् विप्रास्तदा वै वृत्तिलिप्सवः।
लवं लवं भ्रश्यमानाः प्रजाः सर्वाः क्रमेण तु ॥४२१॥
क्षयमेव गमिष्यन्ति क्षीणशेषा युगक्षये।
यस्मिन् कृष्णो दिवं यातस्तस्मिन्नेव तदा दिने ॥४२२॥
प्रतिपन्नः कलियुगस्तस्य सङ्ख्यां निबोधत।
सहस्राणां शतानीह त्रीणि मानुषसङ्ख्यया।
षष्टिं चैव सहस्राणि वर्षाणामुच्यते कलिः॥४२३॥
दिव्ये वर्षसहस्रन्तु तत्सन्ध्यांशं(१) प्रकीर्त्तितं।
निःशेषे च तदा तस्मिन् कृतं वै प्रतिपत्स्यते ॥४२४॥
ऐल इक्ष्वाकुवंशश्च सह भेदैः प्रकीर्त्तितौ।
इक्ष्वाकोस्तु स्मृतः क्षत्रः सुमित्रान्तं विवस्वतः॥४२५॥
ऐलं क्षत्रं क्षेमकान्तं सोमवंशविदो विदुः।

---

(१) दिव्यवर्षसहस्रन्तु ससन्ध्यांशं इति पाठः साधीयान्।

एते विवस्वतः पुत्राः कीर्त्तिताः कीर्त्तिवर्द्धनाः ॥४२६॥
अतीता वर्त्तमानाश्च तथैवानागताश्च ये ।
ब्राह्मणाः क्षत्रिया वैश्या शूद्राश्चैवांन्वये स्मृताः ॥४२७॥
युगे युगे महात्मानः समतीताः सहस्रशः ।
बहुत्वान्नामधेयानां परिसंख्या(१) कुले कुले ॥४२८॥
पुनरुक्ता बहुत्वाच्च न मया परिकीर्त्तिता(२) ।
वैवस्वतेऽन्तरे ह्यस्मिन् निमिवंशः समाप्यते ॥४२९॥
एवायान्तु(३) युगाख्यायां यतः क्षत्रं प्रपत्स्यते ।
तथा हि कथयिष्यामि गदतो मे निबोधत ॥४३०॥
देवापिः पौरवो राजा इक्ष्वाकोश्चैव यो मतः ।
महायोगबलोपेतः कलापग्राममास्थितः ॥४३१॥
सुवर्चा सोमपुत्रस्तु इक्ष्वाकोस्तु भविष्यति ।
एतौ क्षत्रप्रणेतारौ चतुर्विंशे चतुर्युगे ॥४३२॥
न च विंशे युगे सोमवंशस्यादिर्भविष्यति ।
देवापिरसपत्नस्तु ऐलादिर्भविता नृपः ॥४३३॥
क्षत्रप्रावर्त्तकौ ह्येतौ भविष्येते चतुर्युगे ।
एवं सर्वत्र विज्ञेयं सन्तानार्थे तु लक्षणं ॥४३४॥
क्षीणे कलियुगे तस्मिन् भविष्ये तु कृते युगे ।
सप्तर्षिभिस्तु तैः सार्द्धमाद्ये त्रेतायुगे पुनः ॥४३५॥

---

(१) कतिपया इत्यूहनीयं ।
(२) सर्व्वा साकल्या इत्यूह्यं ।
(३) एवाथामिति च०, एष्यायामिति छ०।

गोत्राणां क्षत्रियाणाञ्च भविष्येते प्रवर्त्तकौ ।
द्वापरांशे न तिष्ठन्ति क्षत्रिया ऋषिभिः सह ॥४३६॥
काले कृतयुगे चैवं क्षीणे त्रेतायुगे पुनः ।
वीजार्थन्ते भविष्यन्ति ब्रह्मक्षत्रस्य वै पुनः ॥४३७॥
एवमेव तु सर्वेषु तिष्ठन्तीहान्तरेषु वै ।
सप्तर्षयो नृपैः सार्द्धं सन्तानार्थं युगे युगे॥४३८॥
क्षत्रस्यैव समुच्छेदः सम्बन्धो वै द्विजैः स्मृतः[१] ।
मन्वन्तराणां सप्तानां सन्तानाञ्च श्रुताश्च ते ॥४३९॥
परम्परा युगानाञ्च ब्रह्मक्षत्रस्य चोद्भवः।
यथा प्रवृत्तिस्तेषां वै प्रवृत्तानां तथा क्षयः ॥४४०॥
सप्तर्षयो विदुस्तेषां दीर्घपुष्टाक्षयन्तु[२] ते ।
एतेन क्रमयोगेन ऐलेक्ष्वाक्वन्वया द्विजाः ॥४४१॥
उत्पद्यमानास्त्रेतायां क्षीयमाणे कलौ पुनः ।
अनुयान्ति युगाख्यां तु[३] यावन्मन्वन्तरक्षयः ॥४४२॥
जामदग्न्येन रामेण क्षत्रे निरवशेषिते ।
कृते वंशकुलाः सर्वाः क्षत्रियैर्वसुधाधिपैः[४] ।
द्विवंशकरणाश्चैव कीर्त्तयिष्ये निबोधत ॥४४३॥
ऐलस्येक्ष्वाकुनन्दस्य प्रकृतिः परिवर्त्तते ।

(१) क्षत्रस्यैव इति श्लोकार्द्धात् परं श्लोकार्द्धं पतितं साकाङ्क्षत्वात् । स्मृत इत्यत्र सह इति पाठः सुसङ्गतः ।
(२) दीर्घायुष्याक्षयमिति ख० ।
(३) प्रतियुगमिति पाठः सङ्गतार्थः ।
(४) कृते ध्वस्तकुलाः सर्व्व क्षत्रिया वसुधाधिपाः इति पाठो विशुद्धः ।

राजानः श्रेणिबद्धास्तु तथान्ये क्षत्रिया नृपाः ॥४४४॥
ऐलवंशस्य ये ख्यातास्तथैवैक्ष्वाकवा नृपाः ।
तेषामेकशतं पूर्णं कुलानामभिषेकिनां ॥४४५॥
तावदेव तु भोजानां(१) विस्तरो द्विगुणः स्मृतः ।
भजते चिंशकं क्षत्रं चतुर्धा तद्यथादिशं(२) ॥४४६॥
तेष्वतीताः समाना ये ब्रुवतस्तान्निबोधत ।
शतं वै प्रतिविन्ध्यानां शतं नागाः शतं हयाः ॥४४७॥
धृतराष्ट्राश्चैकशतं अशीतिर्जनमेजयाः ।
शतञ्च ब्रह्मदत्तानां शीरिणां वीरिणां शतं ॥४४८॥
ततः शतं पुलोमानां श्वेतकाशकुशादयः ।
ततोऽपरे सहस्रं वै येऽतीताः शतविन्दवः ॥४४९॥
ईजिरे चाश्वमेधैस्ते सर्वे नियतदक्षिणैः ।
एवं राजर्षयोऽतीताः शतशोऽथ सहस्रशः ॥४५०॥
मनोर्वैवस्वतस्यास्मिन् वर्त्तमानेऽन्तरे तु ये ।
तेषां(३) निबोधतोत्पन्ना लोके सन्ततयः स्मृताः(४) ॥४५१॥
न शक्यं विस्तरं तेषां सन्तानानां परम्परा ।
तत्पूर्व्वापरयोगेन वक्तुं वर्षशतैरपि ॥४५२॥
अष्टाविंशद्युगाख्या(५)स्तु गता वैवस्वतेऽन्तरे ।

---

(१) भोजानामित्यनन्तरं कतिपयवाक्यानि न सन्ति सङ्गतिविरहात् ।
(२) भजते इत्यादि श्लोकार्द्धं लिपिकरप्रमादजनितं ।
(३) तेषामिति पञ्चम्यर्थे षष्ठी ।
(४) स्मृता इत्यत्र द्विजा इति पाठः समस्कृतः ।
(५) अष्टाविंशद्युगाख्या इत्यत्र सप्तविंशद्युगाख्या इति पाठोऽविरुद्धः ।

एता राजर्षिभिः सार्द्धं शिष्टा यास्ता निबोधत ॥४५३॥
चत्वारिंशच्च ये चैव भविष्या सह राजभिः ।
युगाख्यानां विशिष्टास्तु ततो वैवस्वतक्षये ॥४५४॥
एतद्वः कथितं सर्व्वं समासव्यासयोगतः ।
पुनरुक्तं बहुत्वाच्च न शक्यन्तु युगैः सह ॥४५५॥
एते ययातिपुत्राणां पञ्चविंशा विशां स्थिताः(१) ।
कीर्त्तिश्चामितता(२) ये ये लोकान् वै धारयन्त्युत ॥४५६॥
लभते च वरेण्यश्च दुर्लभानिह लौकिकान् ।
आयुः कीर्त्तिं धनं पुत्रान् स्वर्गं चानन्त्यमश्नुते ॥४५७॥
धारणाच्छ्रवणाच्चैव ते लोकान् धारयन्त्युत(३) ।
इत्येष वो मया पादस्तृतीयः कथितो द्विजाः ।
विस्तरेणानुपूर्व्वी च किम्भूयो वर्त्तयाम्यहं ॥४५८॥

इति श्रीमहापुराणे वायुप्रोक्ते अनुषङ्गपादो नाम
सप्तत्रिंशोऽध्यायः समाप्तः ।



(१) स्थि संस्थिताः इति ल०, स्थितास्तथा इति ख० ।
(२) कीर्त्तिश्चाभिमता इति पाठः समीचीनः ।
(३) पञ्चविंशस्य धीमतः इति ख०, ग०, ङ०-।

# अथाष्टात्रिंशोऽध्यायः ।

अनुषङ्गपादः ।



श्रुत्वा पादं तृतीयन्तु क्रान्तं सूतेन धीमता ।
ततश्चतुर्थं पप्रच्छुः पादं वै ऋषिसत्तमाः ॥१॥
ऋषय ऊचुः । पादः क्रान्तस्तृतीयोऽयमनुषङ्गेन यस्त्वया ।
चतुर्थं विस्तरात्पादं संहारं परिकीर्त्तय ॥२॥
मन्वन्तराणि सर्वाणि पूर्वाण्येवापरैः सह ।
सप्तर्षीणामथैतेषां साम्प्रतस्यान्तरे मनोः ॥३॥
विस्तरावयवञ्चैव निसर्गस्य महात्मनः ।
विस्तरेणानुपूर्व्या च सर्वमेव ब्रवीहि मे ॥४॥
सूत उवाच। भवतां कथयिष्यामि सर्वमेतद्यथातथं ।
पादं त्विमं ससंहारं चतुर्थं मुनिसत्तमाः ॥५॥
मनोर्वैवस्वतस्येमं सांप्रतस्य महात्मनः ।
विस्तरेणानुपूर्व्या च निसर्गं शृणुत द्विजाः ॥६॥
मन्वन्तराणां संक्षेपं भविष्यैः सह सप्तभिः ।
प्रलयञ्चैव लोकानां ब्रुवतो मे निबोधत ॥७॥
एतान्युक्तानि वै सम्यक् सप्तसप्तसु वै मया ।
मन्वन्तराणि संक्षेपात् शृणुतानागतानि मे ॥८॥
सावर्णस्य प्रवक्ष्यामि मनोर्वैवस्वतस्य च ।

भविष्यस्य भविष्यन्ति(१) समासात्तु निबोधत ॥९॥
अनागताश्च सप्तैव स्मृतास्त्विह महर्षयः ।
कौशिको गालवश्चैव जामदग्न्यश्च भार्गवः ॥१०॥
द्वैपायनो वसिष्ठश्च कृपः(२) शारद्वतस्तथा।
आत्रेयो दीप्तिमांश्चैव ऋष्यशृङ्गस्तु काश्यपः॥११॥
भारद्वाजस्तथा द्रौणिरश्वत्थामा महायशाः ।
एते सप्त महात्मानो भविष्याः परमर्षयः ॥१२॥
सुतपाश्चामिताभाश्च सुखाश्चैव गणास्त्रयः ।
तेषाङ्गणास्तु देवानां एकैको विंशकः स्मृतः॥१३॥
नामतस्तु प्रवक्ष्यामि निबोधध्वं समाहिताः ।
रितस्तपश्च शुक्रश्च द्युतिर्ज्योतिःप्रभाकरौ ॥१४॥
प्रभासो भासकृद्धर्मस्तेजोरश्मिर्ऋतुर्विराट्।
अर्चिष्मान् द्योतनो भानुर्यशः कीर्तिर्बुधोधृतिः ।
विंशतिः सुतपा ह्येते नामभिः परिकीर्तिताः ॥१५॥
प्रभुर्विभुर्विभासश्च जेता हन्ताऽरिहा रितुः(३) ।
सुमतिः प्रमतिर्दीप्तिः(४) समाख्यातो महोमहान्(५)॥१६॥
देहो मुनिर्नयो ज्येष्ठः(६) समः सत्यश्च विश्रुतः ।

---

(१) ये इति कल्पद्रुमपुस्तकेऽपि?? 

(२) कृप इति क० छ०, कृत इति ख० ।

(३) विभावसुरिति ख० ।

(४) दीप्तः इति क०, दाप्ति॰ इति घ० छ० ।

(५) महोमहान् इति ख० ।

(६) दहातुमुमिनायोर्ध्वे इति क० छ० ।

इत्येते ह्यमिताभास्तु विंशतिः परिकीर्त्तिताः ॥१७॥
दमो[1] दाता विदः[2] सोमो वित्तवैद्यौ यमो[3] निधिः ।
होमं हव्यं हुतं दानं देयन्दाता तपः शमः ॥१८॥
ध्रुवं स्थानं विधानञ्च नियमश्चेति विंशतिः ।
सुख्या ह्येते समाख्याताः सावर्णे प्रथमेऽन्तरे ॥१९॥
मारीचस्यैव ते पुत्रा कश्यपस्य महात्मनः ।
साम्प्रतस्य[4] भविष्यन्ति सावर्णस्यान्तरे मनोः ॥२०॥
तेषामिन्द्रो भविष्यस्तु बलिर्वैरोचनः पुरा ।
वीरवांश्चावरीयांश्च निर्मोहः सत्यवाक् कृती ॥२१॥
चरिष्णुराज्यो विष्णुश्च वाचः[5] सुमतिरेव च ।
सावर्णस्य मनोः पुत्रा भविष्यन्ति नवैव तु ॥२२॥
नव चान्येषु वक्ष्यामि सावर्णस्यान्तरेषु वै ।
सावर्णमनवश्चान्ये भविष्या ब्राह्मणः सुताः ॥२३॥
मेरुसावर्णिनस्ते वै दृष्टा ये दिव्यदृष्टिभिः ।
दक्षस्य ते हि दौहित्राः प्रियाया दुहितुः सुताः ॥२४॥
महता तपसा युक्ता मेरुपृष्ठे महौजसः ।
ब्रह्मादिभिस्ते जनिता दक्षेणैव च धीमता ॥२५॥
महर्लोकगतास्त्वत्य[6] भविष्या मेरुमाश्रिताः ।

---

(१) दामो इति क० ।
(२) रितः इति च० छ० ।
(३) नयो इति ख० ।
(४) भविष्यस्य इति पाठोऽविशुद्धः ।
(५) वाम्मीति पाठो विशुद्धः ।
(६) महर्लोकगतास्त्व इत्यत्र विसर्गलोपे सन्धिरार्षः ।

महाभावास्तु(१) ते पूर्वं जज्ञिरे चाक्षुषेऽन्तरे ॥२६॥
ऋषय ऊचुः । दक्षेण जनिताः पुत्राः कन्यायामात्मनः कथं ।
भवेत ब्रह्मणश्चैव धर्मेण च महात्मनः ॥२७॥
सूत उवाच । अतो भविष्यान् वक्ष्यामि सावर्णमनवस्तु ये ।
तेषां जन्म प्रभावञ्च नमस्कृत्य प्रचेतसे(२) ॥२८॥
वैवस्वते ह्युपसृष्टे किञ्चिच्छिष्टे च चाक्षुषे ।
जज्ञिरे मनवस्ते हि भविष्यानागतान्तरे(३) ॥२९॥
प्राचेतसस्य दक्षस्य दौहित्रा मनवस्तु ये ।
सावर्णा नामतः पञ्च चत्वारः परमर्षिजाः(४) ॥३०॥
संज्ञापुत्रस्तु सावर्ण एको वैवस्वतस्तथा ।
ज्येष्ठः संज्ञासुतो नाम मनुर्वैवस्वतः प्रभुः ॥३१॥
वैवस्वतेऽन्तरे प्राप्ते(५) समुत्पत्तिस्तयोः शुभा ।
चतुर्द्दशैते मनवः कीर्त्तिताः कीर्त्तिवर्द्धनाः ॥ ३२॥
वेदे श्रुतौ पुराणे च सर्वे ते प्रभविष्णवः ।
प्रजानां पतयः सर्वे भूतानाम्पतयः स्थिताः ॥३३॥
तैरियं पृथिवी सर्वा सप्तद्वीपा सपर्वता ।
पूर्णं युगसहस्रं वै परिपाल्या नरेश्वरैः ॥३४॥
प्रजाभिस्तपसा चैव विस्तरं तेषु वक्ष्यते ।
चतुर्द्दशैव ते ज्ञेयाः सर्गाः स्वायम्भुवादयः ॥३५॥

---

(१) महाभागाश्च इति ख० ।
(२) स्वयम्भुवे इति ग० ।
(३) भविष्यविगतान्तरे इति पाठः साधुः ।
(४) परमर्षयः इति पाठः साधीयान् ।
(५) प्रदेशा इति ख० ।

मन्वन्तराधिकारेषु वर्त्तन्ते च सकृत् सकृत् ।
विनिवृत्ताधिकारास्ते महर्लोकं समाश्रिताः ॥३६॥
समतीतास्तु ये तेषामष्टौ षष्ठा[१] स्तथापरे ।
पूर्वेषु[२] साम्प्रतस्त्वायं शान्तिर्वैवस्वतः प्रभुः ॥३७॥
ये शिष्टास्तान् प्रवक्ष्यामि सह देवर्षिदानवैः ।
सह प्रजानिसर्गेण सर्व्वांस्त्वनागतान्[३] द्विजान् ॥३८॥
वैवस्वतनिसर्गेण तेषां ज्ञेयस्तु विस्तरः ।
अन्यूना नानिरिक्तास्ते यस्मात् सर्व्वे विवस्वतः ॥३९॥
पुनरुक्ता बहुत्वात्तु[४] वक्ष्ये न तेषु विस्तरं ।
मन्वन्तरेषु भाव्येषु भूतेष्वपि तथैव च ॥४०॥
कुले कुले निसर्गांस्तु तस्माद्भूयो विभागशः ।
तेषामेव हि शिष्टार्थं[५] विस्तरेण क्रमेण च ॥४१॥
दक्षस्य कन्या धर्मिष्ठा सुव्रता नाम विश्रुता ।
सर्वकन्यावशिष्टा तु श्रेष्ठा[६] धर्मपरा[७]सुता ।
गृहीत्वा तां पिता कन्यां जगाम ब्रह्मणोऽन्तिके ॥४२॥
वैराजस्तमुपासीनं धर्मेण च भवेन च ।

(१) षड्वै इति पाठः साधुः ।
(२) पूर्व्वे षट् इति पाठोऽर्थप्रतिपत्तिकरः ।
(३) सर्व्वस्यानगतान् इति ख० ।
(४) पुनरुक्ते वहुत्वे तु इति ग० ।
(५) सिद्धार्थमिति च० छ० ।
(६) सर्व्वकन्या च शिष्टा च श्रेष्ठा इति छ० ज० ।
(७) पार्थारिशा इति क० ज०, सर्व्वकन्या च शिष्टास्तु ज्येष्ठा या वा-रव्या इति च० ।

भवधर्मसमीपस्थं दक्षं ब्रह्माभ्यभाषत ॥४३॥
दक्ष कन्या तवेयं वै जनयिष्यति सुव्रता ।
चतुरो वै मनून् पुत्रांश्चातुर्वर्ण्यकरान् शुभान् ॥४४॥
ब्रह्मणो वचनं श्रुत्वा दक्षो धर्मो भवस्तदा ।
तां कन्यां मनसा जग्मुस्त्रयस्ते ब्रह्मणा सह ॥४५॥
सत्याभिध्यायिनां तेषां सद्यः कन्या व्यजायत ।
सदृशानुरूपांस्तेषां चतुरो वै कुमारकान् ॥४६॥
संसिद्धाः कार्यकरणे सम्भूतास्ते श्रियान्विताः ।
उपभोगसमर्थैश्च सद्योजातैः शरीरकैः ॥४७॥
ते दृष्ट्वा तान् स्वयम्बुद्धा ब्रह्म व्याहारिणस्तदा ।
संरब्धा वै व्यकर्षन्त मम पुत्रो ममेत्युत ॥४८॥
अभिध्यानान्ममोत्पन्नानूचुर्वै ते परस्परं ।
यो यस्य वपुषा तुल्यो भजतां स तु तं सुतं ॥४९॥
यस्य यः सदृशश्चापि रूपे वीर्ये च नामतः ।
तं गृह्णातु सुभद्रं वो वर्णतो यस्य यः समः ॥५०॥
ध्रुवं रूपं पितुः पुत्रः सोऽनुरुध्यति सर्वदा ।
तस्मादात्मसमः पुत्रः पितुर्मातुश्च जायते(१) ॥५१॥
एवं ते समयं कृत्वा सवर्णान् जगृहुः सुतान् ।
यस्मात् सवर्णास्तेषां वै ब्रह्मादीनां कुमारकाः ॥५२॥
सवर्णा मनवस्तस्मात् सवर्णत्वं हि ते यतः(२) ।
मननान्माननाच्चैव तस्मात्ते मनवः स्मृताः ॥५३॥

---

(१) वीर्य्यतः इति च० ।
(२) कथ्यन्ते ते मनीषिभिरिति पाठः साधुः ।

चाक्षुषस्यान्तरेऽतीते प्राप्ते वैवस्वतस्य च ।
दक्षः प्रजापतेः पुत्रो रौच्यो नामाभवत्सुतः ॥५४॥
भूत्यामुत्पादितो यस्तु भौत्यो नामाभवत् सुतः ।
वैवस्वतेऽन्तरे राजा द्वौ मनू तु विवस्वतः ॥५५॥
वैवस्वतो मनुर्यस्य सावर्णो यस्य विश्रुतः ।
ज्येष्ठः संज्ञासुतो विद्वान् मनुर्वैवस्वतः प्रभुः ॥५६॥
सवर्णाया; सुतश्चान्यः स्मृतो वैवस्वतो[१] मनुः ।
सवर्णा मनवो ये च चत्वारस्तु महर्षिजाः ॥५७॥
तपसा सम्भृतात्मानः स्वेषु मन्वन्तरेषु वै ।
भविष्येषु भविष्यन्ति सर्वकार्यार्थसाधकाः ॥५८॥
प्रथमं मेरुसावर्णेर्दक्षपुत्रस्य वै मनोः ।
पुत्रा[२] मरीचिगर्भाश्च सुशर्माणश्च ते त्रयः ।
सम्भूताश्च[३] महात्मानः सर्वे वैवस्वतेऽन्तरे ॥५९॥
दक्षपुत्रस्य पुत्रास्ते रोहितस्य प्रजापतेः ।
भविष्यस्य भविष्यस्तु एकैको द्वादशो गणः[४] ॥६०॥
ऐश्वर्यसंग्राह्यो राह्यो[५] बाहुवशस्तथैव च[६] ।
पारा द्वादश विज्ञेया उत्तरांस्तु निबोधत ॥६१॥

(१) सावर्णिको इति पाठः साधुः ।
(२) पारा इति पाठः समीचीनः परत्र तथादर्शनात् ।
(३) सम्भृताश्चेति ख० ङ० ।
(४) एकैका मनवो गणा इति ङ० ।
(५) रैवो इति ख० च० ।
(६) इतः परं श्लोकार्द्धं पतितं ।

वाजियो(१) वाजिजिच्चैव प्रभूतिश्च ककुद्मय ।
दधिक्रावायपक्राश्च(२) प्रणीतो विजयो मधुः ॥६२॥
तेजस्मान्नथवो(३) द्वौ तु(४) द्वादशैते मरीचयः ।
सुशर्म्माणस्तु वक्ष्यामि नामतस्तु विबोधत ॥६३॥
वर्णस्तथाप्यङ्गविश्वौ(५) मुरण्यो ब्रजनो मतः ।
अमितो(६) द्रवकेतुश्च जम्भोस्याजस्त्वशक्रका: ॥६४॥
सुनेमिर्घृतपाश्चैव सुशर्माणः प्रकीर्त्तिताः ।
तेषामिन्द्रस्तदा भाव्यो अद्भुतो नाम नामतः ॥६५॥
स्कन्दः सोमप्रतीकाशः(७) कार्तिकेयस्तु पावकः(८) ।
माघा(९) तिथिश्च पौलस्त्यो वसुः काश्यप एव च ॥६६॥
ज्योतिष्मान् भार्गवश्चैव द्युतिमानङ्गिरास्तथा ।
वसितश्चैव वासिष्ठ आत्रेयो हव्यवाहनः ॥६७॥
सुतपाः पौलवश्चैव सप्तैते रोहितान्तरे ।
धृतिकेतुर्दीप्तिकेतुश्चापहस्ता निरामयः ॥६८॥

---

(१) वाजिनो इति क०, वाजिपो इति ख० ।
(२) दधिक्रो दधिपत्ता इति इति ग०, दधिक्रावपिपक्राश्च इति च०छ० ।
(३) अयं पाठो न समीचीनः ।
(४) उन्मथ्यः प्रथितश्चैव इति ग० ।
(५) वर्णास्तथाथ गर्व्विश्च इति ख० च०, वर्णास्तथाप गर्व्विश्च इति छ० ज० ।
(६) अमित इति छ० ज०, अमित्र इति ख० ग० ।
(७) स्कन्दो सौमा प्रतीयो वै इति क० च० छ० ज० ।
(८) पावकिः इति क० च० छ० ज० ।
(९) मघा इति ग० च० छ० ।

पृथुश्रवास्तथा नाको(१) भूरिद्युम्नो बृहद्रथः(२) ।
प्रथमस्य तु सावर्णेर्नव पुत्राः प्रकीर्तिताः ॥६९॥
दशमे त्वथ पर्याये धर्मपुत्रस्य वै मनोः ।
द्वितीयस्य तु सावर्णेर्भाव्यस्यैवान्तरे मनोः(३) ॥७०॥
सुखामना(४) विरुद्धाश्च द्वावेव तु गणौ स्मृतौ ।
लिपिवन्तश्च(५) ते सर्वे शतसङ्ख्याश्च ते समाः ॥७१॥
प्राणानायच्छतः-प्रोक्ताः(६) ऋषिभिः पुरुषेषु वै(७) ।
देवास्ते वै भविष्यन्ति धर्मपुत्रस्य वै मनोः ॥७२॥
तेषामिन्द्रस्तथा विद्वान् भविष्यः शान्तिरुच्यते ।
हविष्मान् पौलहः श्रीमान् सुकीर्तिश्चापि भार्गवः ॥७३॥
आपोमूर्तिस्तथात्रेयो वसिष्ठश्चापि यः स्मृतः ।
पौलस्त्यः प्रतिपश्चापि(८) नाभागश्चैव काश्यपः ।
अभिमन्यु(९) श्चाङ्गिरसः सप्तैते परमर्षयः ॥७४॥
सुक्षेत्रश्चोत्तमौजाश्च भूरिषेणश्च वीर्यवान् ।
शतानीको निरामित्रो वृषसेनो जयद्रथः ॥७५॥

---

(१) नीको इति ख० ङ० ।
(२) बृहत्तप इति ख० ।
(३) मनोरिति पाठो न समीचीनः ।
(४) सुखमनो इति च०, सुखवर्ण इति ख० ग० ।
(५) त्विषावन्त इति पाठो विशुद्धः ।
(६) प्राणानां यच्छतं प्रोक्तमिति ख० च० ङ० ।
(७) पुरुषेऽन्तरे इति ख० ।
(८) प्रतिवश्चापि इति ङ० च०
(९) अभ्यमन्युरिति ङ०, अत्यमन्युरिति ज० ।

भूरिषुणः सुवर्चाश्च[1] इत्येते मानवाः स्मृताः ।
एकादशे तु पर्य्याये सावर्णे वै तृतीयके ॥७६॥
निर्म्माणरतयो देवाः कामजा वै मनोजवाः ।
गणास्त्वेते त्रयः ख्याता देवतानां महात्मनां ॥७७॥
एकैकं त्रिंशतस्तेषां गणास्तु त्रिदिवौकसां ।
मासस्याहानि त्रिंशत्तु यानि वै कवयो विदुः ॥७८॥
निर्म्माणरतयो देवा रात्रयस्तु विहङ्गमाः ।
गणास्ते वै त्रयः प्रोक्ता देवतानां भविष्यति ॥७९॥
मनोजवा मुहूर्त्तास्तु इति देवाः प्रकीर्त्तिताः ।
एते हि ब्रह्मणः पुत्रा भविष्या मनवः स्मृताः ॥८०॥
तेषामिन्द्रो वृषो नाम भविष्यः सुरराट् ततः ।
तेषां सप्तर्षयश्चापि कीर्त्त्यमानान्निबोधत ॥८१॥
हविष्मान् काश्यपश्चापि वपुष्मान् यस्य भार्गवः ।
वारुणिश्चैव चात्रेयो वासिष्ठो भग[2] एव च ॥८२॥
पुष्टि[3]श्चाङ्गिरसो ज्ञेयः पौलस्त्यो निस्वरस्तथा ।
पौलहो ह्यग्नितेजाश्च देवा ह्येकादशेऽन्तरे ॥८३॥
सर्व्ववेगः[4] सुधर्म्मा च देवानीकः पुरोवहः ।
क्षेमधर्मा गृहेषुश्च आदर्शः पौण्ड्रको मतः ॥८४॥

---

(१) सुवर्णाश्च इति क० ।
(२) नग इति च० छ० ।
(३) मुष्टिरिति ङ० ख० ।
(४) सर्व्वंग इति ङ०, च० ।

सावर्णस्य तु ते पुत्राः प्राजापत्यस्य वै मनोः ।
द्वादशे त्वथ पर्याये रुद्रपुत्रस्य वै मनोः ॥८५॥
चतुर्थे ऋतुसावर्णे देवास्तस्यान्तरे शृणु ।
पञ्चैव तु गणाः प्रोक्ता देवतानामनागताः ॥८६॥
हरिता रोहिताश्चैव देवाः सुमनसस्तथा ।
सुकर्म्माणः सुपाराश्च पञ्च देवगणाः स्मृताः ॥८७॥
ब्रह्मणो मानसाः ह्येते एकैको दशको गणः ।
अहन्तिजो[१] हरिश्चैव विद्वान् यश्च[२] सहस्रशः ॥८८॥
पर्वतानुचरश्चैव अपोऽंशुश्च[३] मनोजवः ।
ऊर्ज्जा स्वाहा स्वधा तारा दशैते हरिताः स्मृताः ॥८९॥
तपोज्ञानिर्धृतिश्चैव वाचा बन्धुश्च यः स्मृतः ।
रजश्चैव तु राजश्च स्वर्णपादस्तथैव च ॥९०॥
व्युष्टिर्विधिश्च वै देवो दशैते रोहिताः स्मृताः ।
तुषिताद्यास्तु ये देवास्त्रयस्त्रिंशत् प्रकीर्त्तिताः ॥९१॥
देवान् सुमनसो विद्धि सुकर्माणो निबोधत ।
सुपर्वा वृषभः पृष्टः कपिद्युम्नो विपश्चितः ॥९२॥
विक्रमश्च क्रमश्चैव निभृतः कान्त एव च ।
एते सुकर्मणो देवा सुतांश्चैषां[४] निबोधत ॥९३॥

---

(१) अर्व्वान्तिजो इति ङ० च० ।
(२) विद्वांसश्च इति ग० छ० ज० ।
(३) अप्यंशुश्च इति ङ० ।
(४) तेषामिति ख० ।

वर्षोदित[1] स्तथा जिष्णो वर्चस्वी[2] द्युतिमान् हविः ।
शुभो हविष्मतात्[3] प्राप्तिर्व्यापृथो[4] दृशमस्तथा ॥९४॥
सुपारा मामता[5] स्त्वेते देवा वै सम्प्रकीर्तिताः ।
तेषामिन्द्रस्तु विज्ञेय ऋतधामा महायशाः ॥९५॥
द्युति[6] र्वसिष्ठपुत्रस्तु आत्रेयः सुतपास्तथा ।
तपोमूर्तिश्चाङ्गिरसस्तपस्वी काश्यपस्तथा ॥९६॥
तपोऽश्नयानः पौलस्त्यः पुलहश्च तपोरतिः ।
भार्गवः सप्तमस्तेषां विज्ञेयस्तु तपोमतिः[7] ॥९७॥
एते सप्तर्षयः सिद्धा अन्ये सावर्णिकेऽन्तरे ।
देववानुपदेवश्च देवश्रेष्ठो विदूरथः ॥९८॥
मित्रवान्[8] मित्रविन्दुश्च मित्रसेनो ह्यमित्रहा ।
मित्रबाहुः सुवर्चाश्च द्वादशैते[9] मनोः सुताः ॥९९॥
त्रयोदशे तु पर्याये भाव्या रौच्यान्तरे पुनः ।

---

(१) वर्षोदित इति क० ज० ।
(२) वर्चसिः इति ङ० क० ज० ।
(३) हविः कृतः इति पाठो विशुद्धः ।
(४) वाहय इति ङ० च० क० ।
(५) मामता इति ङ० ज०, मामवा इति क० । अत्र सुपाराश्च गणा इति पाठः साधुः ।
(६) द्युतिरिति ङ० क० ।
(७) तपाद्यतिरिति ङ० च० क०, तपाद्यविरिति क० ज० ।
(८) मित्रमित्रो इति ङ० च० ।
(९) अत्र द्वादशसंख्याश्रवणात् नाम्नां द्वादशसंख्यकत्वाभावाच्च अस्मात् श्लोकाङ्कात् प्राक् एको द्वौ वा श्लोकः पतितः ।

त्रय एव गणाः प्रोक्ता देवानान्तु स्वयम्भुवा ॥१००॥
ब्रह्मणो मानसाः पुत्रास्ते हि सर्वे महात्मनः ।
सुत्रामाणः सुधर्माणः सुकर्माणश्च ते त्रयः ॥१०१॥
त्रिदशानां गणाः प्रोक्ता भविष्याः सोमपायिनः ।
त्रयस्त्रिंशद्देवतायाः प्राभविष्यन्त[१] याज्ञिकैः ॥१०२॥
आज्येन पृषदाज्येन ग्रहश्रेष्ठेन[२] चैव हि[३] ।
देवैर्देवास्त्रयस्त्रिंशत् पृथक्त्वेन निबोधत ॥१०३॥
सुत्रामाणः प्रयाज्यास्तु आद्याज्यास्तु[४] साम्प्रतं ।
सुकर्मणोऽनुयाज्यास्तु पृषदाज्याशिनस्तु ये ॥१०४॥
उपयाज्याः सुधर्माण इति देवाः प्रकीर्तिताः ।
दिवस्पतिर्महाबलस्तेषामिन्द्रो भविष्यति ॥१०५॥
पुलहात्मजपुत्रास्ते विज्ञेयास्तु रुचेः सुताः ।
अङ्गिराश्चैव धृतिमान् पौलस्त्यः पथ्यवांस्तु[५] सः ॥१०६॥
पौलहस्तत्त्वदर्शी च भार्गवस्य निरुत्सुकः[६] ।
निष्प्रकम्पस्तथात्रेयो निर्मोहः कश्यपस्तथा ॥१०७॥
स्वरूपश्चैव वासिष्ठः सप्तैते तु त्रयोदशे ।

---

(१) प्रविभात इति क० प्रतिभाज्य च इति ख० प्रतिभाष्यत इति ङ०, प्रतिभष्यत इति च० छ० प्रविष्यजा इति ज० ।

(२) ग्रहश्रेष्ठेनेति ङ० च० ।

(३) आर्येन एष्ठदोषेन ग्रहप्रष्ठेन वै वह इति क० ज०, आष्टेन एष दोष्टेन ग्रहस्रेष्टन वै वहा इति छ० ।

(४) आद्ये चान्येन इति पाठो ऽत्र भवितुमर्हति ।

(५) पौलस्त्योपथ्ययास्तु इति ङ० च० ।

(६) निवत्सुर्के इति ग० ।

चित्रसेनो विचित्रश्च तपोधर्मरतो[1] भवः ॥१०८॥
अनेकक्षत्रवृद्धश्च सुरसो निर्भयः पृथः[2]।
रौच्यस्यैते मनोः पुत्रा ह्यन्तरे तु त्रयोदशे ॥१०९॥
चतुर्दशे तु पर्याये भौतस्याप्यन्तरे[3] मनोः।
देवतानाङ्गणाः पञ्च प्रोक्ता ये तु भविष्यति ॥११०॥
चाक्षुषाश्च कनिष्ठाश्च पवित्रा भाजरास्तथा।
वाचावृद्धाश्च[4] इत्येते पञ्च देवगणाः स्मृताः ॥१११॥
सप्त तान् तान् भागान् विद्धि चाक्षुषसंज्ञकान्[5]।
बृहदाद्यानि सामानि कनिष्ठान् सप्त तान् विदुः।
सप्त लोकाः पवित्रास्ते भाजिराः सप्त सिन्धवः ॥११२॥
वाचावृद्धानृषीन् विद्धि मनोः स्वायम्भुवस्य वै।
सर्वे मन्वन्तरेन्द्राश्च विज्ञेयास्तुल्यलक्षणाः ॥११३॥
तेजसा तपसा बुध्या बलश्रुतपराक्रमैः।
त्रैलोक्ये यानि सत्वानि गतिमन्ति ध्रुवाणि च।
सर्वशः स्वैर्गुणैस्तानि इन्द्रास्तेऽभिभवन्ति वै ॥११४॥
भूतापवादिनो ह्यष्टा मध्यस्था भूतवादिनः।
भूतानुवादिनः सक्तास्त्रयो वेदाः प्रवादिनां ॥११५॥

---

(१) नयधर्म्मधृत इति ङ० च० छ०।
(२) दृढ़ इति ङ० च० छ०।
(३) भौत्यस्याप्यन्तरे इति च० छ०।
(४) वचोवृद्धा इति ग०।
(५) छं व्यतिरिक्त आदर्शपुस्तके एतच्छ्लोकार्द्धस्य पूर्व्वचरणं नास्ति उत्तरचरणे तु, सप्तैतान् विद्धि चाक्षुषानिति पाठो वर्त्तते।

अग्निध्रः काश्यप[1] श्चैव पौलस्त्यो मागधश्च यः।
भार्गवो ह्यग्निबाहुश्च शुचिराङ्गिरसस्तथा।
ओजस्वी सुबलश्चैव भौत्यस्यैते मनोः सुताः॥११६॥
सवर्णा मनवो ह्येते चत्वारो ब्रह्मणः सुताः।
एको वैवस्वतश्चैव सावर्णो मनुरुच्यते॥११७॥
रौच्यो भौत्यश्च यौ तौ तु मनोः पौलहभार्गवौ।
भौत्यस्यैवाधिपत्ये तु पूर्णः कल्पस्तु पूर्य्यते॥११८॥
सूत उवाच। निःशेषेषु च सर्वेषु तदा मन्वन्तरेष्विह।
अन्तेऽनेकयुगे तस्मिन् क्षीणे संहार उच्यते॥११९॥
सप्तैते भार्गवा देवा अन्ते मन्वन्तरे तदा।
भुक्ता त्रैलोक्यमध्यस्था युगाख्यां ह्येकसप्ततिं॥१२०॥
पितृभिर्मनुभिश्चैव सार्द्धं सप्तर्षिभिश्च ये।
यज्वानश्चैव तेऽप्यन्ये तद्भक्ताश्चैव तैः सह॥१२१॥
महर्लोकं गमिष्यन्ति त्यक्त्वा त्रैलोक्यमीश्वराः।
ततस्तेषु गतेषूर्द्धं क्षीणे मन्वन्तरे तदा।
अनाधारमिदं सर्वं त्रैलोक्यं वै भविष्यति॥१२२॥
ततः स्थानानि शून्यानि स्थानिनां तानि वै द्विजाः।
प्रभ्रश्यन्ति विमुक्तानि ताराऋक्षग्रहैस्तथा॥१२३॥
ततस्तेषु व्यतीतेषु त्रैलोक्यस्येश्वरेष्विह।
सेन्द्राद्येषु महर्लोकं यस्मिंस्ते कल्पवासिनः॥१२४॥

---

(१) कश्यप इति ख० ङ० घ० छ०।

जिताद्याश्च[१] गणा ह्यत्र चाक्षुषान्ता श्चतुर्दश ।
मन्वन्तरेषु सर्व्वेषु देवास्ते वै महौजसः ॥१२५॥
ततस्तेषु गतेषूर्द्धं सायोज्यं कल्पवासिनां ।
समेत्य देवास्ते सर्वे प्राप्ते संकलने[२] तदा ॥१२६॥
महर्लोकं परित्यज्य गणास्ते वै चतुर्दश ।
सशरीराश्च श्रूयन्ते जनलोकं सहानुगाः[३] ॥१२७॥
एवं देवेष्वतीतेषु महर्लोकाज्जनं प्रति ।
भूतादिष्ववशिष्टेषु स्थावरान्तेषु चाप्युत ॥१२८॥
शून्येषु लोकस्थानेषु महान्तेषु भुरादिषु[४] ।
देवेषु च गतेषूर्द्धं सायोज्यं कल्पवासिनां ॥१२९॥
संहृत्य तांस्ततो ब्रह्मा देवर्षिपितृदानवान् ।
संस्थापयति वै सर्गं महद्दृष्ट्या युगत्रये ॥१३०॥
तत्र युगसहस्रान्त[५] महर्यद्ब्रह्मणो विदुः ।
रात्रिं युगसहस्रान्ता[६] महोरात्रविदो जनाः[७] ॥१३१॥
नैमित्तिकः प्राकृतिको यश्चैवात्यन्तिकोऽर्थतः ।

---

(१) ये इति छ० ।
(२) कालानले इति पाठः साधीयान् ।
(३) सहानुगैः इति पाठः साधुः ।
(४) भूतादिष्ववशिष्टेषु इति श्लोकार्द्धात् परं ख० पुस्तके, गतेषु लोक भाद्येषु महान्तेषु महार्णवे इति श्लोकार्द्धं वर्त्तते ।
(५) चतुर्युगसहस्रान्तमिति क० ङ० च० छ० ज० ।
(६) युग सहस्रायामिति ख० ।
(७) अहोरात्रं विदुर्जनाः इति पाठः समीचीनः ।

त्रिविधः सर्व्वभूतानामित्येष प्रतिसञ्चरः ॥१२२॥
ब्राह्मो नैमित्तिकस्तस्य(१) कल्पदाहः प्रसंयमः ।
प्रतिसर्गे तु भूतानां प्राकृतः करणक्षयः(२) ॥१२३॥
ज्ञानादात्यन्तिकः प्रोक्तः कारणानामसम्भवः ।
ततः संहृत्य तान् ब्रह्मा देवांस्त्रैलोक्यवासिनः ॥१२४॥
अहरन्ते प्रकुरुते सर्गस्य प्रलयं पुनः ।
सुषुप्सुर्भगवान्‌ब्रह्मा प्रजाः संहरते तदा ॥१२५॥
ततो युगसहस्रान्ते संप्राप्ते च युगक्षये ।
तत्रात्मस्थाः प्रजाः कर्त्तुं प्रपेदे स प्रजापतिः ॥१२६॥
तदा भवत्यनावृष्टिस्तदा सा शतवार्षिकी ।
तथा यान्यल्पसाराणि सत्वानि पृथिवीतले ॥१२७॥
तान्येवात्र प्रलीयन्ते भूमित्वमुपयान्ति च ।
सप्तरश्मिरथो भूत्वा उदतिष्ठद्विभावसुः ॥१२८॥
असह्यरश्मिर्भगवान् पिबन्नम्भो गभस्तिभिः ।
हरिता रश्मयस्तस्य दीप्यमानास्तु सप्तभिः(३) ॥१२९॥
भूय एव विवर्तन्ते व्याप्नुवन्तो वनं(४) शनैः ।
भौमं काष्ठं(५) धनं तेजो ह्यश्मभिस्तु दीप्यते ॥१४०॥

---

(१) स्तत्रेति पाठः सङ्गतः ।
(२) करणाक्षयः इति क० ज० ।
(३) सप्त हि इति पाठः सङ्गतः ।
(४) आदर्शपुस्तकमात्रे वरमिति पाठो वर्त्तते ।
(५) भौमकाष्ठे इति क० ङ० च० छ० ज० ।

तस्मादुदकं सूर्य्यस्य तपतोऽस्ति हि[1] कथ्यते ।
नावृष्ट्या तपते सूर्य्यो नावृष्ट्या परिविष्यते ॥१४१॥
नावृष्ट्या परिविष्यन्ति[2] वारिणा दीप्यते रविः ।
तस्मादपः पिवन् या वै दीप्यते रविरम्बरे ॥१४२॥
तस्य ते रश्मयः सप्त पिवन्त्यम्भो महार्णवात् ।
तेनाहारेण सन्दीप्तः सूर्य्यः सप्त भवत्युत ॥१४३॥
ततस्ते रश्मयः सप्त सूर्य्यभूतास्तुर्दिशं ।
चतुर्लोकमिमं सर्वं दहन्ति शिखिनस्तदा ॥१४४॥
प्राप्नुवन्ति च भाभिस्तु ऊर्द्धं चाधश्च रश्मिभिः ।
दीप्यन्ते भास्कराः सप्त युगान्ताग्निः प्रतापिनः ॥१४५॥
ते वारिणा च संदीप्ता बहुसाहस्ररश्मयः ।
खं समावृत्य तिष्ठन्ति निर्दहन्तो वसुन्धरां ॥१४६॥
ततस्तेषां प्रतापेन दह्यमाना वसुन्धरा ।
साद्रिनद्यर्णवा पृथ्वी निस्नेहा समपद्यत ॥१४७॥
दीप्ताभिः सन्तताभिश्च चित्राभिश्च समन्ततः ।
अधश्चोर्ध्वश्च तिर्यक् च संरुद्धं सूर्यरश्मिभिः ॥१४८॥
सूर्य्याग्नीनां प्रवृद्धानां संसृष्टानां परस्परं ।
एकत्वमुपयातानामेकज्वालं भवत्युत ॥१४९॥
सर्वलोकप्रणाशश्च सोऽग्निर्भूत्वा तु मण्डली ।

---

(१) तस्मातदकपूर्व्वस्य स्यपतेति र्हि इति क० ग०, तस्मात्तुदकः सूर्य्यस्य तपताविह इति ङ० घ०, तस्मात्तुदकास्सूर्य्यस्य स्तपतोति हि इति छ० ।

(२) एकत्वे बहुवचनमार्षं ।

चतुर्लोकमिदं सर्वं निर्दहत्याशु तेजसा ॥१५०॥
ततः प्रलीयते सर्व्वं जङ्गमं स्थावरं तदा ।
निर्वृक्षा निस्तृणा भूमिः कूर्मपृष्ठसमा भवेत् ॥१५१॥
अम्बरीषमिवाभाति सर्वं मारिषितं(१) जगत् ।
सर्वमेव तदार्च्चिर्भिः पूर्णं जज्वाल्यते नभः(२) ॥१५२॥
पाताले यानि भूतानि महोदधिगतानि च ।
ततस्तानि प्रलीयन्ते भूमित्वमुपयान्ति च ॥१५३॥
द्वीपाश्च पर्वताश्चैव वर्षाण्यथ महोदधिः ।
सर्व्वं तद्भस्मसाच्चक्रे सर्व्वात्मा पावकस्तु सः ॥१५४॥
समुद्रेभ्यो नदीभ्यश्च पातालेभ्यश्च सर्वतः ।
पिवन्नपः समिद्धोऽग्निः पृथिवीमाश्रितो ज्वलन् ॥१५५॥
ततः संवर्त्तकः शैलानतिक्रम्य महांस्तथा ।
लोकान् संहरते दीप्तो घोरः संवर्त्तकोऽनलः ॥१५६॥
ततः स पृथिवीं भित्त्वा रसातलमशोषयत् ।
निर्दह्य तांस्तु पातालान्नागलोकमथादहत् ॥१५७॥
अधस्तात्पृथिवीं दग्ध्वा ऊर्द्धं स दहते दिवं ।
योजनानां सहस्राणि अयुतान्यर्व्बुदानि च ॥१५८॥
उदतिष्ठच्छिखास्तस्य वह्नेः संवर्त्तकस्य तु ।
गन्धर्वांश्च पिशाचांश्च समहोरगराक्षसान् ।
तदा दहति सन्दीप्तो गोलकं चैव सर्व्वशः ॥१५९॥

---

(१) मारीषतमिति ङ० च०, मारिषतमिति च० छ० ।
(२) ऽनघः इति ङ० च० ।

भूर्लोकञ्च भुवर्लोकं स्वर्लोकञ्च महस्तथा ।
घोरं दहति कालाग्निरेवं लोकचतुष्टयं ॥१६०॥
व्याप्तेषु तेषु लोकेषु तिर्य्यगूर्द्ध्वमथाग्निना ।
तत्तेजःसमनुप्राप्तं कृत्स्नं जगदिदं शनैः ।
अयोगुडनिभं सर्व्वं तदा ह्येवं प्रकाशते ॥१६१॥
ततो गजकुलाकारास्तडिद्भिः समलंकृताः ।
उत्तिष्ठन्ति तदा घोरा व्योम्नि संवर्त्तका घनाः ॥१६२॥
केचिन्नीलोत्पलश्यामाः केचित्कुमुदसन्निभाः ।
केचिद्वैदूर्य्यसंकाशा इन्द्रनीलनिभाः परे ॥१६३॥
शङ्खकुन्दनिभास्त्वन्ये जात्यञ्जननिभास्तथा ।
धूम्रवर्णा घनाः केचित् केचित् पीताः पयोधराः ॥१६४॥
केचिद्रासभवर्णाभा लाक्षारक्तनिभास्तथा ।
मनःशिलाभास्त्वपरे कपोताभास्तथाम्बुदाः ॥१६५॥
इन्द्रगोपनिभाः केचिदुत्तिष्ठन्ति घना दिवि ।
केचित् पुरधराकाराः केचिद्गजकुलोपमाः ॥१६६॥
केचित्पर्वतसंकाशाः केचित् स्थलनिभा घनाः ।
कुटागारनिभाः केचित्केचिन्मीनकुलोपमाः ॥१६७॥
बहुरूपा घोररूपा घोरस्वराननादिनः ।
तदा जलधराः सर्व्वे पूरयन्ति नभःस्थलं ॥१६८॥
ततस्ते जलदा घोरा नवीना भास्करात्मिकाः ।
सप्तधा संवृतात्मानस्तमग्निं शमयन्त्युत ॥१६९॥
ततस्ते जलदा वर्षं मुञ्चन्ति च महौघवत् ।

सुघोरमशिवं सर्व्वं नाशयन्ति च पावकं ॥१७०॥
प्रवृष्टैश्च तथात्यर्थं वारिभिः पूर्य्यते जगत् ।
अद्भिस्तेजोऽभिभूतञ्च तदाग्निः प्रविशत्यपः ॥१७१॥
नष्टे चाग्नौ वर्षशते पयोदाः पाकसम्भवाः ।
प्लावयन्ति जगत्सर्वं वृहज्जालपरिस्रवैः ॥१७२॥
धाराभिः पूरयन्तीमं चोद्यमानाः स्वयम्भुवा ।
अन्ये तु[१] सलिलौघैस्तु वेलामभिभवन्त्यपि ।
साद्रिर्दीपान्तरं पृथ्वी अद्भिः संछाद्यते तदा ॥१७३॥
तञ्च वृष्ट्या च तोयं तत्सर्व्वं हि परिमण्डितं ।
प्रविशत्युदधौ विप्राः पीतं सूर्य्यस्य रश्मिभिः ॥१७४॥
आदित्यरश्मिभिः पीतं जलमभ्रेषु तिष्ठति ।
पुनः पतति तद्भूमौ तेन पूर्य्यन्ति चार्णवाः ॥१७५॥
ततः समुद्राः स्वां वेलां परिक्रामन्ति सर्व्वशः ।
पर्व्वताश्च विशीर्य्यन्ते[२] मही चाप्सु निमज्जति ॥१७६॥
ततस्तु सहसोद्भ्रान्तः पयोदांस्तान् नभस्तले ।
संवेष्टयति घोरात्मा दिवि वायुः समन्ततः ॥१७७॥
तस्मिन्नेकार्णवे घोरे नष्टे स्थावरजङ्गमे ।
पूर्णे युगसहस्रे वै निःशेषः कल्प उच्यते ॥१७८॥
अथाम्भसा वृते लोके प्राहुरेकार्णवं बुधाः ।
अथ भूमितलं खञ्च वायुश्चैकार्णवे तदा ।

---

(१) सिन्धवः इति पाठः समीचीनः ।
(२) क्षिप्यन्ते इति च० ।

नष्टे भावेऽत्रलीनं तत्[१] प्राज्ञायत न किञ्चन ॥१७९॥
पार्थिवास्त्वथ सामुद्रा आपो हैमाश्च सर्व्वशः ।
प्रसरन्त्यो व्रजन्त्येकं सलिलाख्यां भजन्त्युत ॥१८०॥
आगतागतिकं चैव तदा तत्सलिलं स्मृतं ।
प्रच्छाद्य तिष्ठति महीमर्णवाख्यं च तज्जलं ॥१८१॥
आभान्ति यस्मात्ता भाभिर्भा शब्दव्याप्तिदीप्तिषु ।
भस्म सर्व्वमनुप्राप्य तस्मादम्भो निरुच्यते ॥१८२॥
नानात्वे चैव शीघ्रे च धातुर्वै अर उच्यते ।
एकार्णवे तदा यो वै न शीघ्रास्तेन ता नराः ॥१८३॥
तस्मिन् युगसहस्रान्ते दिवसे ब्रह्मणो गते ।
तावन्तं कालमेवं तु भवत्येकार्णवं जगत् ।
तदा तु सर्व्वव्यापारा निवर्त्तन्ते प्रजापतेः ॥१८४॥
एवमेकार्णवे तस्मिन् नष्टे स्थावरजङ्गमे ।
तदा स भवति ब्रह्मा सहस्राक्षः सहस्रपात् ॥१८५॥
सहस्रशीर्षा सुमनाः सहस्रपात् सहस्रचक्षुर्वदनःसहस्रवाक् ।
सहस्रबाहुः प्रथमः प्रजापतिस्त्रयीपथि यः पुरुषो निरुच्यते ॥१८६॥
आदित्यवर्णो भुवनस्य गोप्ता अपूर्व्व एकः प्रथमस्तुराषाट् ।
हिरण्यगर्भः पुरुषो महान् वै संपद्यते वै तमसः परस्तात् ॥१८७॥
चतुर्युगसहस्रान्ते सर्वतः सलिलप्लुते ।
सुषुप्सुरप्रकाशां स्वां रात्रिं तु कुरुते प्रभुः ॥१८८॥

---

(१) भावे वभी नून इति क०, भानेकलीनं तत् इति ङ०, म्लानेकलीनं तत इति च०, प्रावेवभीतस्त इति छ० ज० ।

चतुर्विधा यदा ह्येते प्रजाः सर्व्वाण्डमण्डिताः ।
पश्यन्ते तं महात्मानं कालं सप्तमहर्षयः ॥१८९॥
जनलोकविवर्त्तन्तस्तपसा लब्धचक्षुषः ।
भृग्वादयो महात्मानः पूर्व्वं व्याख्यातलक्षणाः ॥१९०॥
सत्यादीन् सप्तलोकान् वै ते हि पश्यन्ति चक्षुषा ।
ब्रह्माणं ते तु पश्यन्ति महाब्राह्मीषु रात्रिषु ॥१९१॥
सप्तर्षयः प्रपश्यन्ति सुप्तकालं स्वरात्रिषु ।
कल्पानां परमेष्ठित्वात्तस्मादाद्यः स पद्यते ॥१९२॥
स स्रष्टा सर्वभूतानां कल्पादिषु पुनः पुनः ।
एवमावेशयित्वा तु स्वात्मन्येव प्रजापतिः ॥१९३॥
अथात्मनि महातेजाः सर्वमादाय सर्वकृत् ।
ततस्ते(१) वसते रात्रिं तमस्येकार्णवे जले ॥१९४॥
ततो रात्रिक्षये प्राप्ते प्रतिबुद्धः प्रजापतिः ।
मनः सिसृक्षया युक्तं सर्गाय निदधे पुनः ॥१९५॥
एवं सलोके निर्वृत्ते उपशान्ते प्रजापतौ ।
ब्रह्मनैमित्तिके तस्मिन् कल्पिते वै प्रसंयमे ॥१९६॥
देहैर्वियोगः सत्वानां तस्मिन् वै कात्स्न्यशः स्मृतः ।
ततो दग्धेषु भूतेषु सर्व्वेष्वादित्यरश्मिभिः ।
देवर्षिमनुवर्य्येषु तस्मिन् सङ्कलने तदा ॥१९७॥
गन्धर्वादीनि सत्वानि पिशाचान्तानि सर्व्वशः ।

(१) ततः स इति पाठः समीचीनः ।

कल्पादावप्रतप्तानि जनमेवाश्रयन्ति वै ॥१९८॥
तिर्य्यग्योनीनि सत्वानि नारकेयानि यान्यपि ।
तदा तान्यपि दग्धानि धुतपापानि सर्व्वशः ।
जने तान्युपपद्यन्ते यावत् संप्लवते जगत् ॥१९९॥
व्युष्टायान्तु रजन्यां तु ब्रह्मणेऽव्यक्तयोनये ।
जायन्ते हि पुनस्तानि सर्व्वभूतानि कृत्स्नशः ॥२००॥
ऋषयो मनवो देवा प्रजाः सर्व्वाश्चतुर्विधाः ।
तेषामपीह सिद्धानां निधनोत्पत्तिरुच्यते ॥२०१॥
यथा सूर्यस्य लोकेऽस्मिन् उदयास्तमनं स्मृतं ।
तथा जन्मनिरोधस्तु भूतानामिह दृश्यते ॥२०२॥
आभूतसंप्लवात्तस्माद्भवः संसार उच्यते ।
यथा सर्व्वाणि भूतानि जायन्ते हि वर्षास्विह ॥२०३॥
स्थावरादीनि सत्वानि[१] कल्पे कल्पे तथा प्रजाः ।
यथार्त्तावृतुलिङ्गानि नानारूपाणि पर्य्यये[२] ॥२०४॥
दृश्यन्ते तानि तान्येव तथा ब्रह्मान्तरात्रिषु ।
प्रत्याहारे च सर्गे च गतिमन्ति ध्रुवाणि च ॥२०५॥
निस्क्रमन्ते विशन्ते च प्रजाकारं प्रजापतिं ।
ब्रह्माणं सर्वभूतानि महायोगं महेश्वरं ॥२०६॥
संस्रष्टा सर्वभूतानां कल्पादिषु पुनः पुनः ।
व्यक्ताव्यक्तो महादेवस्तस्य सर्वमिदं जगत् ॥२०७॥

---

(१) स्थावरादीनियमान् इति आदर्शपुस्तकमात्रे पाठो वर्त्तते ।
(२) अयं पाठो न समीचीनः ।

येनैव सृष्टा प्रथमं प्रयाता
आपो हि मार्गेण महीतलेऽस्मिन्।
पूर्वप्रयातेन तथा ह्यपोऽन्याः
तेनैव तेनैव तु संव्रजन्ति ॥२०८॥
यथा शुभेन त्वशुभेन चैव
तत्रैव तत्रैव विवर्त्तमानाः।
मर्त्यास्तु देहान्तरभावितत्वा-
द्रूवैर्वशादूर्द्धमधश्चरन्ति ॥२०९॥
ये चापि देवा मनवः प्रजेशा
अन्येपि ये स्वर्गगताश्च सिद्धाः।
तद्भाविताख्यातिवशाच्च धर्म्याः
पुनर्निसर्गेण भवन्ति सत्वाः ॥२१०॥
अत ऊर्द्धं प्रवक्ष्यामि कालमाभूतसंप्लवं।
मन्वन्तराणि यानि स्युर्व्याख्यातानि मया द्विजाः।
सह प्रजानिसर्गेण सह देवैश्चतुर्दश ॥२११॥
स युगाख्यासहस्रं तु सर्वाण्येवान्तराणि वै।
अस्याः सहस्रे द्वे पूर्णे निःशेषः कल्प उच्यते ॥२१२॥
एतद्ब्राह्ममहो ज्ञेयं तस्य संख्यां निबोधत।
निमेषस्तुल्यमात्र(१) हि कृतो लघ्वक्षरेण तु ॥२१३॥
मानुषाक्षिनिमेषास्तु काष्ठा पञ्चदश स्मृता।
लवः क्षणास्तु पञ्चैव विंशत्काष्ठा तु ते त्रयः ॥२१४॥

(१) तुल्यमात्रो इति घ० छ० ज० तुल्यमात्रे इति ङ०।

प्रस्थः षष्टोदकाश्चैव साधिकास्तु लवः स्मृतः(१)।
चत्वारिंशत्कला ज्ञेया मुहूर्त्तस्त्रिंशतः कला: ॥२१५॥
मुहूर्त्तास्तु पुनस्त्रिंशदहोरात्रमिति स्थितिः।
अहोरात्रं कलानान्तु व्यधिकानि शतानि षट् ॥२१६॥
तास्चैव संख्यया(२) ज्ञेयं चन्द्रादित्यगतिर्यथा।
निमेषा दश पञ्चैव काष्ठास्तास्त्रिंशतः कला ॥२१७॥
त्रिंशत्कला मुहूर्त्तस्तु दशभागः कला स्मृता।
चत्वारिंशत्कालानान्तु(३) मुहूर्त्त इति संज्ञितः ॥२१८॥
मुहूर्त्तास्च लवाश्चापि प्रमाणज्ञैः प्रकल्पिताः।
तस्यानेनाम्भसाश्चापि(४) पलान्यथ त्रयोदश ॥२१९॥
मागधेनैव मानेन जलप्रस्थो विधीयते।
एते चाप्युदकप्रस्थास्चत्वारो नालिका घटः ॥२२०॥
हेममाषैः कृतच्छिद्रैश्चतुर्भिश्चतुरङ्गुलैः।
अमाहनि च रात्रौ च मुहूर्त्तो वै द्विनालिकौ ॥२२१॥
रवेर्गतिविशेषेण सर्वेषु नृषु नित्यशः।
अधिकं षट् शतं पञ्च(५) कलानां प्रविधीयते ॥२२२॥

---

(१) निमेषस्तुल्य मात्रा हि इत्यादि साधिकास्तु लवः स्मृतः इत्यन्तं पाठो न समीचीनः।

(२) व्यधिकानि शतानि षट् इत्यादि तास्चैव संख्यया इत्यन्तं पाठोऽसाधुः।

(३) चत्वारिंशत्कला ज्ञेया इति ख०। चत्वारिंशत्कला काष्ठा इति छ०।

(४) पाठोऽयमविशुद्धः। अत्र प्रस्थोऽनेनाम्भसाचापि इति पाठः सम्भवपरः।

(५) पञ्च इति ङ० च० छ० ज०।

तदहर्मानुषं ज्ञेयं मासश्चन्द्रदशाधिकं।
सावनेन तु मासेन अब्दोऽयं मानुषः स्मृतः ॥२२३॥
एतद्दिव्यमहोरात्रमिति शास्त्रविनिश्चयः।
अह्नाऽनेन तु या सङ्ख्या मासर्त्त्वयनवार्षिकी ॥२२४॥
तदा बद्धमिदं ज्ञानं संज्ञा या(१) ह्युपलक्षिता।
कलानां सुपरीमाणात्काल इत्यभिधीयते ॥२२५॥
यदहर्ब्रह्मणः प्रोक्तं दिव्या कोटी तु तत् स्मृता।
शतानाञ्च सहस्राणि दशद्विगुणितानि च।
नवतिश्च सहस्राणि तथैवान्यानि यानि तु ॥२२६॥
एतत् श्रुत्वा तु ऋषयो विस्मयं परमाद्भुतं।
संख्यासभाजनं ज्ञानमपृच्छन्नन्तरन्तदा ॥२२७॥
ऋषय ऊचुः। संज्ञात्वनकालन्तु मानुषेणैव सम्मतं।
मानेन श्रोतुमिच्छामः संक्षेपार्थपदाक्षरं ॥२२८॥
तेषां श्रुत्वा स देवस्तु वायुर्लोकहिते रतः।
संक्षेपाद्दिव्यचक्षुष्मान् प्रोवाच भगवान् प्रभुः ॥२२९॥
एते राज्यहनी पूर्वं कीर्त्तिते लिङ्ग लौकिके।
तासां सङ्ख्याय वर्षाग्रं ब्राह्म्यं वक्ष्याम्यहः क्षये ॥२३०॥
कोटिशतानि चत्वारि वर्षाणि मानुषाणि तु।
द्वात्रिंशच्च तथा कोट्यः सङ्ख्याताः सङ्ख्यया द्विजैः ॥२३१॥
तथा शतसहस्राणि एकोननवतिः पुनः।
आशीतिश्च सहस्राणि एष कालः क्षयस्य तु ॥२३२॥

(१) संख्याया इति ङ० च०।

मानुषाख्येण सङ्ख्यातः कालो ह्याभूतसंप्लवः ।
सप्त सूर्य्यास्तदाऽन्येषु तदा लोकेषु तेषु वै ॥२२३॥
महाभूतेषु लीयन्ते प्रजाः सर्व्वाश्चतुर्विधाः ।
सलिलेनाप्लुते लोके नष्टे स्थावरजङ्गमे ॥२२४॥
विनिवृत्ते च संहारे उपशान्ते प्रजापतौ ।
निरालोके प्रदग्धे तु नैशेन तु समावृते ।
ईश्वराधिष्ठिते ह्यस्मिंस्तदा ह्येकार्णवे तदा ॥२२५॥
तावदेकार्णवो ज्ञेयो यावदासीदहः प्रभोः ।
रात्रिस्तु सलिलावस्था निवृत्तौ चाप्यहः स्मृतं ॥२२६॥
अहोरात्रस्तथैवास्य क्रमेण परिवर्त्तते ।
आभूतसंप्लवो ह्येष अहोरात्रः स्मृतः प्रभोः ॥२२७॥
त्रैलोक्ये यानि सत्वानि गतिमन्ति ध्रुवाणि च ।
आभूतेभ्यः प्रलीयन्ते तस्मादाभूतसंप्लवः ॥२२८॥
अग्रे भूतः प्रजानान्तु तस्माद्भूतः प्रजापतिः ।
आभूतः प्लवते चैव तस्मादाभूतसंप्लवः ॥२२९॥
शाश्वते चामृतत्वे च शब्दे चाभूतसंप्लवः ।
अतीता वर्त्तमानाश्च तथैवानागताः प्रजाः ।
दिव्यसङ्ख्या प्रसङ्ख्याता अपरार्धगुणीकृता(१) ॥२४०॥
परार्धद्विगुणञ्चापि परमायुः प्रकीर्त्तितम् ।
एतावान् स्थितिकालस्तु अजस्येह प्रजापतेः ॥
स्थित्यन्ते प्रतिसर्गस्य ब्रह्मणः परमेष्ठिनः ॥२४१॥

(१) अपरार्द्धा गुणीकृता इति आदर्शपुस्तकमात्रे पाठो वर्त्तते ।

यथा वायुप्रवेगेन दीपार्चिरुपशाम्यति ।
तथैव प्रतिसर्गेण ब्रह्मा समुपशाम्यति ॥२४१॥
तथा ह्यप्रतिसंसृष्टे महदादौ महेश्वरे ।
महत्प्रलीयतेऽव्यक्ते गुणसाम्यन्ततो भवेत् ॥२४२॥
इत्येष च समाख्यातो मया ह्याभूतसंप्लवः ।
ब्रह्मनैमित्तिको ह्येष संप्रचालनसंयमः ॥२४४॥
समासेन समाख्यातः भूयः किं वर्णयामि वः ।
य इदं धारयेन्नित्यं शृणुयाद्वाप्यभीक्ष्णशः ।
कीर्त्तनाच्छ्रवणाच्चापि महतीं सिद्धिमाप्नुयात् ॥२४५॥

इति श्रीमहापुराणे वायुप्रोक्ते अनुषङ्गपादो नाम
अष्टात्रिंशोऽध्यायः समाप्तः ।



# अथ ऊनचत्वारिंशोऽध्यायः।

अनुषङ्गपादः।



वायुरुवाच। असाधारणवन्तस्तु कृतप्रेषादिभिर्द्विजैः।
धर्म्मैरेभिर्विकैश्चैव आचूर्णसूक्ष्मदर्शिभिः॥१॥
ते देवैः सह तिष्ठन्ति महर्लोकनिवासिनः।
चतुर्द्दशैते मनवः कीर्त्तिताः कीर्त्तिवर्धनाः॥२॥
अतीता वर्त्तमानाश्च तथैवानागताश्च ये।
ऋषिभिर्दैवतैश्चैव सह गन्धर्वराक्षसैः॥३॥
मन्वन्तराधिकारेषु जायन्तीह पुनः पुनः।
देवाः सप्तर्षयश्चैव मनवः पितरस्तथा॥४॥
सर्व्वे ह्यपि क्रमातीता महर्लोकं समाश्रिताः।
ब्राह्मणैः ऋचियैर्वैश्यैर्धार्मिकैः सहितैः सुराः॥५॥
तैस्तथ्यकारिभिर्युक्तैः श्रद्धावद्भिरदर्पितैः।
वर्णाश्रमाणां धर्म्मेषु श्रौतस्मार्त्तेषु संस्थितैः।
विनिवृत्ताधिकारास्ते यावन्मन्वन्तरक्षयः॥६॥
ऋषयऊचुः। महर्लोकेति यत्प्रोक्तं मातरिश्वंस्त्वया विभो।
प्रतिलोके च कर्त्तव्य(१) मनेकैः समधिष्ठिताः॥७॥
यावन्तश्चैव ते लोका दृश्यन्ते ये न ते प्रभो।

---

(१) प्रतिलोकात्मकसंख्यमिति च० प्रतिलोचति कर्त्तव्यमिति छ० ञ०।

एतन्नः कथय प्रीत्या त्वं हि वेत्थ यथातथं ॥८॥
एवमुक्तस्ततो वायुर्मुनिभिर्विनयात्मभिः ।
प्रोवाच मधुरं वाक्यं यथातत्त्वेन तत्त्ववित् ॥९॥
वायुरुवाच । चतुर्द्दशैव स्थानानि वर्णितानि महर्षिभिः ।
लोकाख्यानि तु यानि स्युर्येषु तिष्ठन्ति मानवाः ॥१०॥
सप्त तेषु कृतान्याहुरकृतानि तु सप्त वै ।
भूराद्यस्तु सत्याताः सप्त लोकाः कृतास्त्विह ॥११॥
अकृतानि तु सप्तैव प्राकृतानि तु यानि वै ।
स्थानानि स्थानिभिः सार्द्धं कृतानि तु निबन्धनं ॥१२॥
पृथिवीं चान्तरिक्षं च दिव्यं यच्च महः स्मृतं ।
स्थानान्येतानि चत्वारि स्मृतान्यार्णवकानि च ॥१३॥
अव्यातिशययुक्तानि तथा युक्तानि वक्ष्यते ।
यानि नैमित्तिकानि स्युस्तिष्ठन्त्याभूतसंप्लवं ॥१४॥
जनस्तपश्च सत्यञ्च स्थानान्येतानि त्रीणि तु ।
ऐकान्तिकानि सत्वानि[१] तिष्ठन्तीहाप्रसंयमात् ॥१५॥
व्यक्तानि तु प्रवक्ष्यामि स्थानान्येतानि सप्त वै ।
भूर्लोकः प्रथमस्तेषां द्वितीयस्तु भुवः स्मृतः ॥१६॥
स्वस्तृतीयस्तु विज्ञेयश्चतुर्थो वै महः स्मृतः ।
जनस्तु पञ्चमो लोकस्तपः षष्ठो विभाव्यते ॥१७॥
सत्यन्तु सप्तमो लोको निरालोकस्ततः परं ।
भूरिति व्याहृते पूर्वं भूर्लोकश्च ततोऽभवत् ॥१८॥

(१) तानि स्युः इति ङ०, च० छ० ।

द्वितीयं भुव इत्युक्त अन्तरिक्षं ततोऽभवत् ।
तृतीयं स्वरितीत्युक्ते दिवं प्रादुर्बभूव ह ॥१९॥
व्याहारैस्त्रिभिरेतैस्तु ब्रह्मलोकमकल्पयत् ।
ततो भूःपार्थिवो लोकः अन्तरिक्षं भुवः स्मृतं ॥२०॥
स्वर्लोको वै दिवं ह्येतत्पुराणे निश्चयं गतं ।
भूतस्याधिपतिश्चाग्निस्ततो भूतपतिः स्मृतः ॥२१॥
वायुर्भुवस्याधिपतिस्तेन वायुर्भुवस्पतिः ।
भव्यस्य सूर्य्योऽधिपतिस्तेन सूर्य्यो दिवस्पतिः ॥२२॥
महेतिव्याहृतेनैवं महर्लोकस्ततोऽभवत् ।
विनिवृत्ताधिकाराणां देवानां तत्र वै क्षयः ॥२३॥
जनस्तु पञ्चमो लोकस्तस्माज्जायन्ति वै जनाः ।
तासां स्वायंभुवाद्यानां प्रजानां जननात्मनः ॥२४॥
यास्ताः स्वायम्भुवाद्या हि पुरस्तात्परिकीर्त्तिताः ।
कल्पदग्धे तदा लोके प्रतिष्ठन्ति तदा तपः ॥२५॥
ऋभुसनत्कुमाराद्या यत्र सन्त्यूर्द्ध्वरेतसः ।
तपसा भावितात्मानस्तच सन्तीति वा तपः ॥२६॥
सत्येतिब्रह्मणः शब्दः सत्तामात्रस्तु स स्मृतः ।
ब्रह्मलोकस्ततः सत्यं सप्तमः स तु भास्करः ॥२७॥
गन्धर्वाप्सरसो यक्षा गुह्यकास्तु सराक्षसाः ।
सर्वभूतपिशाचाश्च नागाश्च सह मानुषैः ।
स्वर्लोकवासिनः सर्वे देवा भुवि निवासिनः ॥२८॥
मरुतो मातरिश्वानो रुद्रा देवास्तथाश्विनौ ।

अनिकेतान्तरिक्षास्ते भुवर्लोकाश्रया दिवौकसः ॥१९॥
आदित्या ऋभवो विश्वे साध्याश्च पितरस्तथा ।
ऋषयोऽङ्गिरसश्चैव भुवर्लोकं समाश्रिताः ॥२०॥
एते वैमानिका देवास्ताराग्रहनिवासिनः ।
इत्येते क्रमशः प्रोक्ता ब्रह्मव्याहारसम्भवाः ॥२१॥
भूर्लोकप्रथमा लोका महदन्ताश्च ते स्मृताः ।
आरभ्यन्ते तु तन्मात्रैः शुद्धास्तेषां[१] परस्परं ॥२२॥
शुक्राद्यास्तानुषान्ताश्च ये व्यतीता भुवं श्रिताः ।
महर्लोकस्तुर्थस्तु तस्मिंस्ते कल्पवासिनः ॥२३॥
भूर्लोकप्रथमा लोका महदन्ताश्च ये स्मृताः ।
तान् सर्व्वान् सप्त सूर्य्यास्ते अर्च्चिभिर्निदहन्ति वै ॥२४॥
मरीचिः कश्यपो दक्षस्तथा स्वायम्भुवोऽङ्गिराः ।
भृगुः पुलस्त्यः पुलहः क्रतुरित्येवमादयः ॥२५॥
प्रजानां पतयः सर्व्वे वर्त्तन्ते तत्र तैः सह ।
निःसत्वा निर्ममाश्चैव तत्र ते ह्यूर्द्धरेतसः ॥२६॥
ऋभुः सनत्कुमाराद्या वैराज्यास्ते तपोधनाः[२] ।
मन्वन्तराणां सर्व्वेषां सावर्णानां ततः स्मृताः ।
चतुर्द्दशानां सर्व्वेषां पुनरावृत्तिहेतवः ॥२७॥
योगन्तपश्च सत्यञ्च समाधाय तदात्मनि ।
षष्ठे काले निवर्त्तन्ते तत्तदाह विपर्य्यये ॥२८॥

(१) लेषामित्यत्र स्ते वै इति पाठः साधुः ।
(२) ऋभुः सनत्कुमाराद्या इति स्रोकार्द्धात्परं स्रोकार्द्धं पतितं ।

सत्यन्तु सप्तमो लोको अपुनर्मार्गगामिनां[१] ।
ब्रह्मलोकः समाख्यातो ह्यप्रतीघातलक्षणः ॥३९॥
पर्य्यासपारिमाण्येन भूर्लोकः समितिः[२] स्मृतः ।
भूम्यन्तरं यदादित्यादन्तरिक्षं भुवः स्मृतं ॥४०॥
सूर्य्यध्रुवान्तरं यच्च स्वर्गलोको दिवः स्मृतः ।
ध्रुवाज्जनान्तरं यच्च महर्लोकस्तदुच्यते ॥४१॥
विख्याताः सप्तलोकास्तु तेषां वक्ष्यामि सिद्धयः ।
भूर्लोकवासिनः सर्व्वे अन्नादास्तु रसात्मकाः ॥४२॥
भुवे स्वर्गे च ये सर्व्वे सोमपा आज्यपाश्च ते ।
चतुर्थे येऽपि वर्त्तन्ते महर्लोकं समाश्रिताः ॥४३॥
विज्ञेया मानसी तेषां सिद्धिर्वै पञ्चलक्षणा ।
सद्यस्तोत्पद्यते तेषां मनसा सर्व्वमीप्सितं ॥४४॥
एते देवा यजन्ते वै यज्ञैः सर्व्वैः परस्परं ।
अतीतान् वर्त्तमानांश्च वर्त्तमानाननागतान्[३] ॥४५॥
प्रथमानन्तरैरिष्ट्वा अन्तराः साम्प्रतैः पुनः ।
निवर्त्ततीत्यासम्बन्धो[४]ऽतीते देवगणे ततः ॥४६॥
विनिवृत्ताधिकाराणां सिद्धिस्तेषान्तु मानसी ।
तेषान्तु मानसी ज्ञेया प्रवृद्धा सिद्धिपरम्परा ॥४७॥
उक्ता लोकाश्च चत्वारो जनस्यानुविधिस्तथा ।

(१) अपुनर्मार्गगामिनामित्यत्र अपुनर्भावगामिनामिति पाठः समीचीनः। अपुनर्मारगामिनामिति ङ०, च० ।
(२) पर्य्यास इति समितिरिति च पाठः लिपिकरप्रमादजनितः ।
(३) पाठोऽयं लिपिकरप्रमादादुत्पन्नः ।
(४) पाठोऽयं न विशुद्धः ।

समासेन मया विप्रा भूयस्तं वर्त्तयामि वः ॥४८॥
वायुरुवाच । मरीचिः कश्यपो दक्षो वसिष्ठश्चाङ्गिरा भृगुः ।
पुलस्त्यः पुलहश्चैव क्रतुरित्येवमादयः ॥४९॥
पूर्व्वं ते संप्रसूयन्ते ब्रह्मणो मनसा इह ।
ततः प्रजाः प्रतिष्ठाप्य जनमेवाश्रयन्ति ते ॥५०॥
कल्पदाहप्रदीप्तेषु तदा कालेषु तेषु वै ।
भूरादिषु महान्तेषु भृशं व्याप्तेष्वथाग्निना ॥५१॥
शिखा संवर्त्तका ज्ञेया प्राप्नुवन्ति स्म ह्या जनाः ।
यामादयो गणाः सर्व्वे महर्लोकनिवासिनः ॥५२॥
महर्लोकेषु दीप्तेषु जनमेवाश्रयन्ति ते ।
सर्व्वे सूक्ष्मशरीरास्ते तत्रस्थास्तु भवन्ति ते ॥५३॥
तेषां ते तुल्यसामर्थ्यास्तुल्यमूर्त्तिधरास्तथा ।
जनलोके विवर्त्तन्ते यावत्संप्लवते जगत् ॥५४॥
व्युष्टायान्तु रजन्यां वै ब्रह्मणोऽव्यक्तयोनिनः ।
अहरादौ प्रसूयन्ते पूर्ववत्[१] क्रमशस्त्विह ॥५५॥
स्वायम्भुवादयः सर्वे मरीच्यन्तास्तु साधकाः ।
देवास्ते वै पुनस्तेषां जायन्ते निधनेष्विह[२] ॥५६॥
यामादयः क्रमेणैव कनिष्ठाद्याः प्रजापतेः ।
पूर्वं पूर्वं प्रसूयन्ते पश्चिमे पश्चिमास्तथा ॥५७॥
देवान्वये देवता हि सप्त सम्भूतयः स्मृताः ।
व्यतीताः कल्पजास्तेषां तिस्रः शिष्टास्तथा परे ॥५८॥

(१) पर्व्वशः इति ङ० च० ।
(२) पुनर्येषां जायन्ते निधनन्त्विह इति पाठः साधीयान् ।

आवर्त्तमाना देवास्ते क्रमेणैते न सर्व्वशः ।
गत्वा अवश्यवीभाव[1]न्दृशकल्पः पुनः पुनः ॥५९॥
ततस्ते वै गणाः सर्व्वे दृष्ट्वा भावेष्वनित्यतां ।
भाविनोऽर्थस्य च बलात् पुण्याख्यातिबलेन च ॥६०॥
निवृत्तवृत्तयः सर्वे स्वस्थाः सुमनसस्तथा ।
वैराजे तूपपद्यन्ते लोकमुत्सृज्य तज्जनं ॥६१॥
ततोऽन्येनैव कालेन नित्ययुक्तास्तपस्विनः ।
कथमाश्चैव धर्मस्य तेषां ते जज्ञिरेऽन्वये ॥६२॥
इहोत्पन्नास्ततस्ते वै स्थाना[2] आपूरयन्त्युत ।
देवत्वे च ऋषित्वे च मनुष्यत्वे च सर्वशः ॥६३॥
एवं देवगणाः सर्व्वे दशकल्पो निवर्त्त्य वै ।
वैराजेषूपपन्नास्ते दश तिष्ठन्त्युपप्लवान् ॥६४॥
पूर्णे पूर्णे ततः कल्पे स्थित्वा वैराजके पुनः ।
ब्रह्मलोके विवर्त्तन्ते पूर्व्वपूर्व्वक्रमेण तु ॥६५॥
एतस्मिन् ब्रह्मलोके तु कल्पे वैराजके गते ।
वैराजं पुनरप्येके कल्पस्थानमकल्पयन् ॥६६॥
एवं पूर्व्वानुपूर्व्वेण ब्रह्मलोकगतेन वै ।
एवं तेषु व्यतीतेषु तपसा परिकल्पिते ।
वैराजे तूपपद्यन्ते दशकल्पा निवर्त्तते ॥६७॥
एवं देवयुगानीह व्यतीतानि सहस्रशः ।

(१) जीवं भवीभावमिति ख०, यवं यवीभावमिति ङ० । एते सर्व्वे पाठा लिपिकरप्रमादादुद्भूताः ।

(२) अत्र स्थानान् इति पाठः सम्भवपरः ।

निधनं ब्रह्मलोके तु गतानामृषिभिः सह ॥६८॥
सूत उवाच। न शक्यमानुपूर्व्वेण तेषां वक्तुं प्रविस्तरं ।
अनादित्वाच्च कालस्य असंख्यानाच्च सर्व्वशः ।
एवमेव न सन्देहो यथावत्कथितं मया॥६९॥
तदुपश्रुत्य वाक्यार्थमृषयः संशयान्विताः ।
सूतमाहुः पुराणज्ञं व्यासशिष्यं महामतिं ॥७०॥
ऋषय ऊचुः। वैराजास्ते॰यदाहारा यत्सत्वाश्च यदाश्रयाः ।
तिष्ठन्ति चैव यत्कालं तन्नो ब्रूहि यथातथं ॥७१॥
तदुक्तमृषिभिर्वाक्यं श्रुत्वा लोकार्थतत्त्ववित् ।
सूतः पौराणिको वाक्यं विनयेनेदमब्रवीत् ॥७२॥
ततः प्राप्यन्त ते सर्व्वे शुद्धिशुद्धतमाश्च ये ।
आभूतसंप्लवास्तत्र दृश्य तिष्ठन्ति ते ऽजनाः ॥७३॥
सर्व्वे सूक्ष्मशरीरास्ते विद्वांसो घनमूर्त्तयः ।
स्थितलोकास्थितत्वाच्च तेषां भूतं न विद्यते॥७४॥
ऊचुः सनत्कुमाराद्याः सिद्धास्ते योगधर्म्मिणः ।
ख्यातिं नैमित्तिकीं तेषां पर्य्याये समुपस्थिते ॥७५॥
स्थानत्यागे मनश्चापि युगपत्संप्रवर्त्तते ।
ऊचुः सर्व्वे तदान्योऽन्यं वैराजान् शुद्धबुद्धयः ॥७६॥
एवमेव महाभागाः प्रणवं सम्प्रविश्य ह ।
ब्रह्मलोके प्रवर्त्तामस्तन्नः श्रेयो भविष्यति ॥७७॥
एवमुक्त्वा तदा सर्व्वे ब्रह्माग्ने व्यवसायिनः ।
योजयित्वा तदा सर्व्वे वर्त्तन्ते योगधर्म्मिणः॥७८॥

तत्रैव सम्प्रलीयन्ते शान्ता दीपार्च्चिषो यथा ।
ब्रह्मकायमवर्त्तन्त पुनरावृत्तिदुर्लभं ॥७९॥
लोकान्तं समनुप्राप्य सर्व्वे ते भावनामयं ।
आनन्दं ब्रह्मणः प्राप्य अमृतत्वाय ते गताः ॥८०॥
वैराजेभ्यस्तथैवोर्द्धं अन्तरे षड्गुणे ततः ।
ब्रह्मलोकः समाख्यातो यत्र ब्रह्मा पुरोहितः ॥८१॥
ते सर्वे प्रणवात्मानो बुद्धशुद्धतपास्तथा ।
आनन्दं ब्रह्मणः प्राप्यामृतत्वञ्च भजन्त्युत ॥८२॥
द्वन्द्वैस्ते नाभिभूयन्ते भावत्रयविवर्ज्जिताः ।
आधिपत्यं विना तुल्या ब्रह्मणस्ते महौजसः ॥८३॥
प्रभावविजयैश्वर्य्यस्थितिवैराग्यदर्शनैः ।
ते ब्रह्मलौकिकाः सर्वे गतिं प्राप्य विवर्त्तनीं ॥८४॥
ब्रह्मणा सह देवैस्तु सम्प्राप्ते प्रतिसञ्चरे ।
तपसोऽन्ते क्रियात्मानो बुद्धावस्था मनीषिणः ।
अव्यक्ते संप्रलीयन्ते सर्वे ते चणदर्शिनः ॥८५॥
इत्येतदमृतं शुक्रं नित्यमक्षयमव्ययं ।
देवर्षयो ब्रह्मसत्रं सनातनमुपासते ॥८६॥
अपुनर्मार्गगादीनां तेषां चैवोर्द्ध्वरेतसां ।
कर्माभ्यासकृता शुद्धिर्वेदान्तेषूपलक्ष्यते ॥८७॥
तत्र तेऽभ्यासिनो युक्ताः परां काष्ठामुपासते ।
हित्वा शरीरं पाप्मानममृतत्वाय ते गताः ॥८८॥
वीतरागा जितक्रोधा निर्म्मोहा सत्यवादिनः ।

शान्ताः प्रणिहितात्मानो दयावन्तो जितेन्द्रियाः ॥८९॥
निःसङ्गाः शुभयश्चैव ब्रह्मसायोज्यगाः स्मृताः ।
अकामयुक्तैर्ये वीरास्तपोभिर्दग्धकिल्बिषाः ।
तेषामभ्रंशिनो लोका अप्रमेयसुखाः स्मृताः ॥९०॥
एतद्ब्रह्मपदन्दिव्यं परमं व्योम्नि भास्वरं ।
यत्र गत्वा न शोचन्ति ह्यमरा ब्रह्मणा सह ॥९१॥
ऋषय ऊचुः । कस्मादेष परार्द्धस्य कश्चैषः पर उच्यते ।
एतद्वेदितुमिच्छामस्तन्नो निगद सत्तम ॥९२॥
सूत उवाच । शृणुध्वं मे परार्द्धस्य परिसंख्यां परस्य च ।
एकं दश शतश्चैव सहस्रश्चैव सङ्ख्यया ॥९३॥
विज्ञेयमासहस्रन्तु सहस्राणि दशायुतं ।
एकं शतसहस्रन्तु नियुतं प्रोच्यते बुधैः ॥९४॥
तथा शतसहस्राणामर्वुदं कोटिरुच्यते ।
अर्वुदं दशकोट्यस्तु अब्जं कोटिशतं विदुः ॥९५॥
सहस्रमपि कोटीनां खर्वमाहुर्मनीषिणः ।
दशकोटिसहस्राणि निखर्वमिति तं विदुः ॥९६॥
शतं कोटिसहस्राणां शङ्कुरित्यभिधीयते ।
सहस्रन्तु सहस्राणां कोटीनां दशधा पुनः ।
गुणितानि समुद्रं वै प्राहुः संख्याविदो जनाः ॥९७॥
कोटीनां सहस्रमयुतमित्ययं मध्य उच्यते ।
कोटिसहस्रनियुता स चान्त इतिसंज्ञितः ॥९८॥
कोटिकोटिसहस्राणि परार्द्धं इति कीर्त्यते ।

परार्द्धं द्विगुणञ्चापि परमाहुर्मनीषिणः ॥९९॥
शतमाहुः परिवृढं[1] सहस्रं परिपद्मकं[2] ।
विज्ञेयमयुतं तस्मान्नियुतं प्रयुतं ततः ॥१००॥
अर्वुदं निर्वुदञ्चैव खर्वुदश्च[3] ततः स्मृतं ।
खर्वश्चैव निखर्वश्च शङ्कुः पद्मन्तथैव च ॥१०१॥
समुद्रं मध्यमञ्चैव परार्द्धमपरं ततः ।
एवमष्टादशैतानि स्थानानि गणनाविधौ ॥१०२॥
शतानीति विजानीयात् संज्ञितानि महर्षिभिः ।
कल्पसंख्या प्रवृत्तस्य परार्द्धं ब्रह्मणः स्मृतं[4] ॥१०३॥
तावच्छेषोऽपि कालोऽस्य तस्यान्ते प्रतिसृज्यते ।
पर एष परार्द्धश्च संख्यातः संख्यया मया ॥१०४॥
यस्मादस्य परं वीर्यं परमायुः परन्तपः ।
परा शक्तिः परो धर्म्मः परा विद्या परा धृतिः ॥१०५॥
परं ब्रह्म परं ज्ञानं परमैश्वर्यमेव च ।
तस्मात्परतरं भूतं ब्रह्मणोऽन्यन्न विद्यते ॥१०६॥
परे स्थितो ह्येष परः सर्वार्थेषु ततः परः ।
संख्यातस्तु परो ब्रह्मा[5] तस्यार्द्धं तु परार्द्धता ॥१०७॥
संख्येयं चाप्यसंख्येयं सततं चापि तं चिकं[6] ।

---

(१) परिदृढं इति ङ० ।
(२) पद्मपत्रकमिति ख०, परिसद्मकमिति ङ० ।
(३) वृन्दश्चैव इति ङ० च० ।
(४) पाठोऽयं न समीचीनः । ।
(५) धर्म्म इति क० छ० ।
(६) ते त्रयमिति क० ज० ।

संख्येयं संख्यया दृष्टं अपरार्द्धादिभाव्यते[१] ॥१०८॥
राशौ दृष्टे न संख्यास्ति तदसंख्यस्य[२] लक्षणं ।
अनपत्यं सिक्ताखेषु[३] दृष्टवान् पद्मलक्षणं[४] ॥१०९॥
ईश्वरैस्तत्प्रसंख्यातं शङ्कुलादिव्यदृष्टिभिः ।
एवं ज्ञानप्रतिष्ठत्वात्[५] सर्व्वं ब्रह्मानुपश्यति[६] ॥११०॥
एतच्छ्रुत्वा तु ते सर्वे नैमिषेयास्तपस्विनः ।
बाष्पपर्य्याकुलाक्षास्तु प्रहर्षाद्गद्गदस्वराः ॥१११॥
पप्रच्छुर्मातरिश्वानं सर्व्वे ते ब्रह्मवादिनः ।
ब्रह्मलोकस्तु भगवन् यावन्मात्रान्तरः प्रभो ॥११२॥
योजनाग्रेण संख्यातः साधनं योजनस्य तु ।
क्रोशस्य च परीमाणं श्रोतुमिच्छामि तत्त्वतः ॥११३॥
तेषां तद्वचनं श्रुत्वा मातरिश्वा विनीतवाक् ।
उवाच मधुरं वाक्यं यथादृष्टं यथाक्रमं ॥११४॥
वायुरुवाच । एतद्वोऽहं प्रवक्ष्यामि शृणुध्वं मे विवक्षितं ।
अव्यक्ताद्व्यक्तभागो वै महास्थूलो विभाव्यते[७] ॥११५॥

---

(१) अपरार्द्धा च विद्यते इति ख० ।
(२) तदसङ्ख्यास्तु इति क० छ० ज० ।
(३) अनन्यसिक्ताखेषु इति क० छ०, सिक्ताज्येषु ङ० च० ।
(४) दृष्टं चान्यं त्वलक्षयं इति छ० ।
(५) ज्ञानात्प्रतीयत्वादिति ङ० च० छ० ।
(६) संख्येयं चाप्यसंख्येयमित्यादि सर्व्वं ब्रह्मानुपश्यति इत्यन्तः पाठो न विशुद्धः ।
(७) विभाव्यते इति ङ० ।

दशैव महतां भागा भूतादिः स्थूल उच्यते ।
दशभागाधिकं चापि भूतादिः परमाणुकः ॥११६॥
परमाणुः सुसूक्ष्मस्तु[१] भावग्राह्यो न चक्षुषा ।
यदभेद्यतमं लोके विज्ञेयं परमाणु तत् ॥११७॥
जालान्तरगतं भानोर्यत् सूक्ष्मं दृश्यते रजः ।
प्रथमं तत्प्रमाणानां परमाणुं प्रचक्षते ॥११८॥
अष्टानां परमाणूनां समवायो यदा भवेत् ।
त्रसरेणुः समाख्यातस्तत्पद्मरज उच्यते ॥११९॥
त्रसरेणवश्च येऽप्यष्टौ रथरेणुस्तु स स्मृतः ।
तेऽप्यष्टौ समवायस्था बलाग्रं[२] तत्स्मृतं बुधैः ॥१२०॥
बलाग्राण्यष्ट लिक्षा स्याद्यूका तच्चाष्टकं[३] भवेत् ।
यूकाष्टकं यवं प्राहुरङ्गुलन्तु यवाष्टकं ॥१२१॥
द्वादशाङ्गुलपर्व्वाणि वितस्तिस्थानमुच्यते ।
रत्निश्चाङ्गुलपर्वाणि विज्ञेयो ह्येकविंशतिः ॥१२२॥
चत्वारि विंशतिश्चैव हस्तः स्यादङ्गुलानि तु ।
किष्कुर्द्विरत्निर्विज्ञेयो द्विचत्वारिंशदङ्गुलः ॥१२३॥
षण्णवत्यङ्गुलश्चैव धनुराहुर्मनीषिणः ।
एतद्व्यूतिसंख्यायो पादानां धनुषः स्मृतः[४] ॥१२४॥

(१) परमाणुरतिसूक्ष्मस्तु इति ख० ग० ।
(२) बालाग्रं इति ख० घ० ।
(३) ताश्चाष्टधा इति पाठो विशुद्धः ।
(४) पाठोऽयं लिपिकरप्रमादाद्दुष्टः ।

धनुर्दण्डो युगं नाली तुल्यान्येतान्यथाङ्गुलैः ।
धनुष्षष्टिशतं नल्वमाहुः संख्याविदो जनाः ॥१२५॥
धनुःसहस्रे द्वे चापि गव्यूतिरुपदिश्यते ।
अष्टौ धनुःसहस्राणि योजनन्तु विधीयते ॥१२६॥
एतेन धनुषा चैव योजनन्तु समाप्यते ।
एतत्सहस्रं विज्ञेयं शक्रक्रोशान्तरन्तथा ॥१२७॥
योजनानान्तु संख्यातं संख्याज्ञानविशारदैः ।
एतेन योजनाग्रेण शृणुध्वं ब्रह्मणोऽन्तरं ॥१२८॥
महीतलात् सहस्राणां शतादूर्द्धं दिवाकरः ।
दिवाकरात्सहस्रेण तावदूर्द्धं निशाकरः ॥१२९॥
पूर्णं शतसहस्रन्तु योजनानां निशाकरात् ।
नक्षत्रमण्डलं कृत्स्नमुपरिष्टात् प्रकाशते ॥१३०॥
शतं सहस्रं संख्यातो मेरुर्द्विगुणितं पुनः ।
ग्रहान्तरमथैकैकमूर्द्धं नक्षत्रमण्डलात् ॥१३१॥
ताराग्रहाणां(१) सर्व्वेषामधस्ताच्चरते बुधः ।
तस्योर्द्धञ्चरते शुक्रस्तस्मादूर्द्धं च लोहितः ॥१३२॥
ततो बृहस्पतिश्चोर्द्धं तस्मादूर्द्धं शनैश्चरः ।
ऊर्द्धं शतसहस्रन्तु योजनानां शनैश्चरात् ॥१३३॥
सप्तर्षिमण्डलं कृत्स्नमुपरिष्टात्प्रकाशते ।
ऋषिभि(२)स्तु सहस्राणां शतादूर्द्धं विभाव्यते ॥१३४॥

---

(१) ताराग्रहाणामिति पाठो न समीचीनः ।
(२) ऋषिभ्य इति पाठः साधुः ।

योऽसौ तारामये दिव्ये विमाने ह्रस्वरूपके ।
उत्तानपादपुत्रोऽसौ मेढीभूतो ध्रुवो दिवि ॥१३५॥
त्रैलोक्यस्यैष उत्सेधो व्याख्यातो योजनैर्मया ।
मन्वन्तरेषु देवानामिज्या यत्रैव लौकिकी ॥१३६॥
वर्णाश्रमेभ्य इज्या तु लोकेऽस्मिन् या प्रवर्त्तते ।
सर्वेषां देवयोनीनां स्थितिहेतुः स वै स्मृतः ॥१३७॥
त्रैलोक्यमेतद्व्याख्यातमत ऊर्द्ध्वं निबोधत ।
ध्रुवादूर्द्ध्वं महर्लोको यस्मिंस्ते कल्पवासिनः ।
एकयोजनकोटी सा इत्येवं निश्चयं गतं ॥१३८॥
द्वे कोट्यौ तु महर्लोकात् यस्मिंस्ते कल्पवासिनः ।
यत्र ते ब्रह्मणः पुत्रा दक्षाद्याः साधकाः स्मृताः ॥१३९॥
चतुर्गुणोत्तरादूर्द्ध्वं जनलोकात्तपः स्मृतं ।
वैराजा यत्र ते देवा भूतदाहविवर्जिताः ॥१४०॥
षड्गुणस्तु तपोलोकात् सत्यलोकान्तरं स्मृतं ।
अपुनर्मारकाणां ब्रह्मलोकः स उच्यते ॥१४१॥
यस्मान्न च्यवते भूयो ब्रह्माणं स उपासते ।
एककोटिर्योजनानां पञ्चाशन्नियुतानि तु ॥१४२॥
ऊर्द्ध्वभागस्ततोऽण्डस्य ब्रह्मलोकात्परः स्मृतः ।
चतुरश्चैव कोट्यस्तु नियुता पञ्चषष्टि च ॥१४३॥
एषोऽण्डांशप्रचारोऽस्य गत्यन्तश्चापरः स्मृतः[1] ।

---

(१) पाठोऽयं लिपिकरप्रमादादुत्पन्नः ।

भुवायमेतद्व्याख्यातं योजनाग्राद्यथाश्रुतं ॥१४४॥
अधोगतीनां वक्ष्यामि भूतानां स्थानकल्पनां ।
गच्छन्ति घोरकर्माणः प्राणिनो यत्र कर्मभिः ॥१४५॥
नरको रौरवो रोधः सूकरस्ताल एव च ।
तप्तकुम्भो महाज्वालः शवलोऽथ विमोचनः ॥१४६॥
कृमी च कृमिभक्षश्च लालाभक्षो विशंसनः ।
अधःशिराः पूयवहो रुधिरान्धस्तथैव च ॥१४७॥
तथा वैतरणं कृष्णमसिपत्रवनं तथा ।
अग्निज्वालो महाघोरः संदंशोऽथ अभोजनः ॥१४८॥
तमश्च कृष्णसूत्रश्च लोहश्चाप्यविजस्तथा ।
अप्रतिष्ठोऽथ वीच्यश्च नरका ह्येवमादयः ॥१४९॥
तामसा नरकाः सर्वे यमस्य विषये स्थिताः ।
येषु दुष्कृतकर्माणः पतन्तीह पृथक् पृथक् ॥१५०॥
भूमेरधस्तात्ते सर्वे रौरवाद्याः प्रकीर्त्तिताः ।
रौरवे कूटसाक्षी तु मिथ्या यश्चाभिशंसति ।
कूटपक्षे पक्षवादी ह्यसत्यः पतते नरः ॥१५१॥
रोधे गोघ्नो भ्रूणहा च अग्निदाता पुरस्य च ।
सूकरे ब्रह्महा मज्जेत्सुरापः स्वर्णतस्करः ॥१५२॥
ताले पतेत् क्षत्रियहा हत्वा वैश्यञ्च दुर्गतिं ।
ब्रह्महत्याञ्च यः कुर्याद्यश्च स्याद्गुरुतल्पगः ॥१५३॥
तप्तकुम्भे स्वसागामी तथा राजभटश्च यः ।
तप्तलोहे चाश्ववणिक् तथा बन्धनरक्षिता ॥१५४॥

माध्वीविक्रयकर्त्ता च यस्तु भक्तं(१) परित्यजेत् ।
महाज्वाले दुहितरं स्नुषां गच्छति यस्तु वै ॥१५५॥
वेदो विक्रीयते येन वेदं दूषयते च यः ।
गुरूंश्चैवावमन्यन्ते वाक्शरैस्ताडयन्ति च ॥१५६॥
अगम्यगामी च नरो नरकं प्रवलं व्रजेत् ।
विमोहे पतिते चौरे(२) मर्यादां यो भिनत्ति वै ॥१५७॥
दुरष्टं(३) कुरुते यस्तु कीटलोहं प्रपद्यते ।
देवब्राह्मणविद्वेष्टा गुरूणाञ्चाप्यपूजकः ।
रत्नं दूषयते यस्तु कृमिभक्ष्यं प्रपद्यते ॥१५८॥
पर्य्यश्नाति च एकोऽन्यो ब्राह्मणी(४) सुहृदः सुतां ।
लालाभक्षे स पतति दुर्गन्धे नरके गतः(५) ॥१५९॥
काण्डकर्त्ता(६) कुलालश्च निष्कहर्त्ता चिकित्सकः ।
आरामेष्वग्निदाता यः पतते स विशंसने ॥१६०॥
असत्प्रतिग्रही यश्च तथैवायाज्ययाजकः ।
नक्षत्रैर्जीवितो यश्च नरो गच्छत्यधोमुखं ॥१६१॥

---

(१) भक्तमिति पाठो लेखकप्रमादजनितः ।

(२) आदर्शपुस्तकमात्रे, विमोहे पतिते चौरे इति पाठो वर्त्तते । अत्र विमोहे पतते चौरो इति पाठोऽर्थसङ्गतिकरः ।

(३) दुरष्टमित्यत्र दुरब्ध अथवा दुष्टमिति पाठोऽर्थप्रतिपत्तिकरः ।

(४) ब्राह्मण्या इति ख० ङ० च० छ० । क० ग० ज० पुस्तकेषु एतच्छ्लोकार्द्धं न विद्यते ।

(५) गत इत्यत्र मत इति पाठः साधुः ।

(६) माण्डकर्त्ता इति ङ० ।

चीरं सुरां च मांसं च लाक्षां गन्धं रस(१)न्तिलान्।
एवमादीनि विक्रीणन् घोरे पूयवहे पतेत् ॥१६२॥
यः कुक्कुटानि बध्नाति मार्जारान् सूकरांश्च तान्।
पक्षिणश्च मृगान् छागान् सोऽप्येनं नरकं व्रजेत् ॥१६३॥
आजीविको माहिषकस्तथा चक्रध्वजी च यः।
रङ्गोपजीविको विप्रः शाकुनिग्रामयाजकः ॥१६४॥
आगारदाही गरदः कुण्डाशी सोमविक्रयी।
सुरापो मांसभक्षश्च तथा च पशुघातकः ॥१६५॥
विश्वस्ता महिषादीनां मृगहन्ता तथैव च।
पर्वकारश्च सूची च यश्च स्यान्मित्रघातकः।
रुधिरान्धे पतन्त्येते एवमाहुर्मनीषिणः ॥१६६॥
उपविष्टमेकपङ्क्त्यां विषमं भोजयन्ति ये।
पतन्ति नरके घोरे विड्भुजे नात्र संशयः ॥१६७॥
मृषावादी नरो यश्च तथा आक्रोशकोऽशुभः।
पतति नरके घोरे मूत्राकीर्णे स पापकृत् ॥१६८॥
मधुग्राहाभिहन्तारो यान्ति वैतरणीं नराः।
उन्मत्ताश्चित्तभग्नाश्च शौचाचारविवर्जिताः ॥१६९॥
क्रोधना दुःखदाश्चैव(२) कुहकाष्टगामिनः।
असिपत्रवने छेदी(३) तथाऽऽरभिकाश्च ये।

(१) गन्धरसमिति ख० ङ० च०।

(२) दुःखदाश्चैव इत्यत्र आदर्शपुस्तकमात्रे दुःखदाराश्च इति पाठो वर्त्तते।

(३) अयं पाठो न समीचीनः।

कर्त्तनैश्च विहन्यन्ते मृगव्याधाः सुदारुणैः ॥१७०॥
आश्रमप्रत्यवसिता अग्निज्वाले पतन्ति वै ।
भोज्यन्ते श्यामशवलैरयस्तुण्डैश्च वायसैः ॥१७१॥
इष्यायां व्रतमालोपात्(१) श्वन्दंशे नरके पतेत् ॥
स्कन्दते यदि वा स्वप्ने व्रतिनो ब्रह्मचारिणः ॥१७२॥
पुत्रैरध्यापिता ये च पुत्रैराज्ञापिताश्च ये ।
ते सर्वे नरकं यान्ति नियतन्तु श्वभोजने ॥१७३॥
वर्णाश्रमविरुद्धानि क्रोधहर्षसमन्विताः ।
कर्माणि ये तु कुर्वन्ति सर्वे निरयगामिनः ॥१७४॥
उपरिष्टात्स्थितो घोर उष्णात्मा रौरवो महान् ।
सुदारुणस्तु शीतात्मा तस्याधस्तात्तपः स्मृतः(२) ॥१७५॥
एवमादिक्रमेणैव वर्ण्यमानान्निबोधत ।
भूमेरधस्तात्सप्तैव नरकाः परिकीर्तिताः ॥१७६॥
अधर्मस्तूनवस्ते स्युरन्धतामिस्रकादयः ।
रौरवः प्रथमस्तेषां महारौरव एव च ॥१७७॥
अस्याधः पुनरप्यन्यः शीतस्तप इति स्मृतः ।
तृतीयः कालसूत्रः स्यात् महाहविविधिः(३) स्मृतः ॥१७८॥
अप्रतिष्ठश्चतुर्थः स्यादवीची पञ्चमः स्मृतः ।
लोहपृष्ठस्तमस्तेषामविधेयस्तु सप्तमः ॥१७९॥

---

(१) इज्यायां व्रतसमालोपादिति पाठः साधुः ।
(२) तमोमय इति पाठः समीचीनः ।
(३) महाविधिर्ध्वविरिति ख० ।

घोरत्वाद्रौरवः प्रोक्तः शाम्भको(१)ऽदृढनः स्मृतः ।
सुदारुणस्तु शीतात्मा तस्याधस्तात्तपो(२)ऽधमः ॥१८०॥
सर्वो निकृन्तनः प्रोक्तः कालसूत्रेति दारुणः ।
अप्रतिष्ठे स्थितिर्नास्ति भ्रमस्तस्मिन् सुदारुणः ॥१८१॥
अवीचिर्दारुणः प्रोक्तो यन्त्रसंपीडनाच्च सः ।
तस्मात्सुदारुणो लोकः कर्म्मणां क्षपणाच्च(३) सः ॥१८२॥
तथाभूते शरीरत्वा(४)दविवेभ्यस्तु(५) स स्मृतः ।
पीडबन्धवधासङ्गादप्रतीकारलक्षणः ॥१८३॥
ऊर्द्धं शैलमिता(६)स्ते तु निरालोकाश्च ते स्मृताः ।
दुःखोत्कर्षस्तु सर्वेषु अधर्मस्य निमित्ततः ॥१८४॥
ऊर्द्धं लोकैः समावेतौ निरालोकौ च तावुभौ ।
कूटागारप्रमाणैश्च(७) शरीरी मूत्रनायकः(८) ॥१८५॥
उपभोगसमर्थैस्तु सद्यो जायन्ति कर्म्मभिः ।
दुःखप्रकर्षश्चोग्रत्वं तेषु सर्वेषु वै स्मृतः ॥१८६॥

---

(१) सौष्ठको इति क०, सौम्भको इति ख० सौष्ठको ङ० च० छ० ।
(२) तमो इति ङ० च० ।
(३) क्षपणाच्चेति ख० ङ० च० छ०
(४) तथाभूतोऽशरीरत्वादिति ङ० च० ।
(५) पाठोऽयं न विशुद्धः। अविवेभ्य इत्यत्र अविधिभ्य इति पाठः सम्भाव्यते ।
(६) शैलमिता इत्यत्र शैलमया इति पाठः सम्भवपरः ।
(७) स्तैरिति ङ० छ० ज० ।
(८) पाठोऽयं न समीचीनः । मूत्रनायक इत्यत्र । तत्र नायकः इति ख० ।

यातनास्थाप्यसंख्येया नारकाणां तथा स्मृताः ।
तत्रानुभूय ते दुःखं क्षीणे कर्मणि वै पुनः ॥१८७॥
तिर्य्यग्योनौ प्रसूयन्ते कर्मशेषे गते ततः[१] ।
देवाश्च नारकाश्चैव ऊर्द्धं चाधश्च संस्थिताः ॥१८८॥
धर्माधर्मनिमित्तेन सद्यो जायन्ति मूर्त्तयः ।
उपभोगार्थमुत्पत्तिरौपपत्तिककर्मतः ॥१८९॥
पश्यन्ति नारकान् देवा ह्यधोवक्त्रान् ह्यधोगतान् ।
नारकाश्च तथा देवान् सर्वान् पश्यन्त्यधोमुखान् ॥१९०॥
अनयमूलता यस्माद्धारणाश्च स्वभावतः[२] ।
तस्मादूर्द्धमधोभावो लोकालोके न विद्यते ॥१९१॥
एषा स्वाभाविकी संज्ञा लोकालोके प्रवर्त्तते[३] ।
अथाब्रुवन् पुनर्वायुं ब्राह्मणाः सत्रिणस्तदा ॥१९२॥
ऋषय ऊचुः । सर्व्वेषामेव भूतानां लोकालोकनिवासिनां ।
संसारे संसरन्तीह यावन्तः प्राणिनश्च तान् ॥१९३॥
सङ्ख्यया परिसङ्ख्याय ततः प्रब्रूहि कृत्स्नशः ।
ऋषीणां तद्वचः श्रुत्वा मारुतो वाक्यमब्रवीत् ॥१९४॥
वायुरुवाच । न शक्या जन्तवः कृत्स्नाः प्रसंख्यातुं कथञ्चन ।
अनाद्यन्ताश्च संकीर्णा ह्यप्यूहेन व्यवस्थिताः ।

(१) कर्म्मशेषे गोऽन्तगः इति क० कर्म्मशेषे तु गोमताः इति ख० कर्म्म-शेषेऽन्तगे ततः इति च० कर्म्मशेषेन्तगोन्तग इति छ० ज० । कर्म्मशेषे गते ततः इत्यनन्तरं श्लोकार्द्धं पतितं ।

(२) स्वास्य भावतः इति क० ज० ।

(३) नारकाश्च तथा देवानित्यादि प्रवर्त्तते इत्यन्तं पाठो न साधुः ।

मनसा त्रिभिरन्यैषामानन्त्येन प्रकीर्त्तिताः ॥१९५॥
न दिव्यचक्षुषा ज्ञातुं शक्या ज्ञानेन वा पुनः ।
चक्षुषा वै प्रसंख्यातुं शतो ह्यन्ते नराधिप[1] ॥१९६॥
अनाध्याना[2]द्वेद्यत्वान्नैव प्रश्नो विधीयते ।
ब्रह्मणा संज्ञितं यत्तु संख्यया तन्निबोधत ॥१९७॥
यः सहस्रतमो भागः स्थावराणां भवेदिह ।
पार्थिवाः क्रिमयस्तावत्संस्वेदाद्येषु सम्भवाः[3] ॥१९८॥
संस्वेदजानां भागेन सहस्रेणैव संमिताः ।
औदका जन्तवः सर्वे निश्चयात्तद्विचारितं ॥१९९॥
सहस्रेणैव भागेन सत्वानां सलिलौकसां ।
विहङ्गमास्तु विज्ञेया लौकिकास्ते च सर्वशः ॥२००॥
यः सहस्रतमोभागस्तेषां वै पक्षिणां भवेत् ।
पशवस्तत्समा ज्ञेया लौकिकास्तु चतुष्पदाः ॥२०१॥
चतुष्पदानां सर्वेषां सहस्रेनैव संमताः ।
भागेन द्विपदा ज्ञेया लौकिकेऽस्मिंस्तु सर्वशः ॥२०२॥
यः सहस्रतमो भागो भागे तु द्विपदां पुनः ।
धार्म्मिकास्तेन भागेन विज्ञेयाः सम्मिताः पुनः ॥२०३॥
सहस्रेनैव भागेन धार्मिकेभ्यो दिवङ्गताः ।
यः सहस्रतमो भागो धार्मिकाणां भवेद्दिवि ।

---

(१) पाठोऽयं न सम्यक् ।
(२) अनाख्यानादिति ख० ङ० च० ।
(३) पाठोऽयं न समीचीनः । अण्डाद्येषु च सम्भवा इति क० ।

संमिताख्येन भागेन मोक्षिणस्तावदेव हि ॥२०४॥
स्वर्गोपपादकैस्तुल्या यातनास्थानवासिनः ।
पतितास्तूर्णमुद्देशाद्दुरात्मानो म्रियन्ति ये ।
रौरवे तामसे ह्येते शीतोष्णं प्राप्नुवन्ति ते ॥२०५॥
वेदनाकटुकास्तब्धा यातनास्थानमागताः ।
उष्णास्तु रौरवो ज्ञेयस्तेजो(१) घोररसात्मकः ॥२०६॥
ततो घनात्मिकश्चापि शीतात्मा सततं तपः(२) ।
एवं सुदुर्लभाः सन्तः स्वर्गे च धार्मिका नराः ॥२०७॥
एषा संख्या कृता संख्याईश्वरेण स्वयम्भुवा ।
गणना विनिवृत्तैषा सञ्ज्ञा ब्राह्मी च मानुषी ॥२०८॥
ऋषय ऊचुः । महो जनस्तपः सत्यं भूतो भाव्यो भवस्तथा ।
उक्ता ह्येते त्वया लोका लोकानामन्तरेण च ।
लोकान्तरञ्च यादृग्वै तन्नो ब्रूहि यथातथं ॥२०९॥
तेषां तद्वचनं श्रुत्वा ऋषीणामूर्द्धरेतसां ।
स वायु र्दृष्टतत्त्वार्थ इदन्तत्त्वमुवाच ह ॥२१०॥
वायुरुवाच । धर्मं तर्केण पश्यन्ति योगात्प्रत्यक्षदर्शिनः ।
प्रत्याहारेण ध्यानेन तपसा च क्रियात्मनः ॥२११॥
ऋभुः सनत्कुमाराद्याः सम्बुद्धाः प्रबुद्धबुद्धयः ।
व्यपेतशोका विरजाः सन्तो ब्रह्मे वसन्तमाः ॥२१२॥
प्रयताः प्रीतिसंयुक्ता ब्रह्मे तिष्ठन्ति योगिनः ।

---

(१) स्तेन इति ख० ।
(२) तमः इति पाठः साधीयान् ।

ऋषीणां बालखिल्यानां तैर्यथाहृतमीश्वरैः ॥२१३॥
यथा चैव मया दृष्टं सान्निध्यन्तत्र कुर्वता ।
अनह्यसत्कृतार्थानामालयं चेश्वरस्य यत् ॥२१४॥
ईश्वरः परमाणुत्वाद्भावग्राह्यो मनीषिणां ।
ज्ञानं वैराग्यमैश्वर्यन्तपः सत्यं क्षमा धृतिः ॥२१५॥
द्रष्टृत्वमात्मसम्बन्धमधिष्ठानत्वमेव च ।
अव्ययानि दशैतानि तस्मिन् तिष्ठन्ति शङ्करे ॥२१६॥
विभुत्वात् खलु योगाग्नि(१) ब्रह्मणोऽनुग्रहे रतः ।
स लोकविग्रहो भूत्वा साहाय्यमुपतिष्ठते ॥२१७॥
अक्षरं ध्रुवमव्ययमष्टमन्त्वौपसर्गिकं ।
तस्येश्वरस्य यन्माचस्थानं(२) मायामयं परं ॥२१८॥
मायया कृतमाचष्टे मायी देवो महेश्वरः ।
देवानामुपसंहारस्तत्प्रमाणं हि कीर्त्यते ॥२१९॥
विस्तरेणानुपूर्व्या च ब्रुवतो मे निबोधत ।
चयोदशैव कोव्यस्तु नियुता दश पञ्च च ।
भूर्लोकाद्ब्रह्मलोको वै योजनैः सम्प्रकीर्त्यते ॥२२०॥
एकयोजनकोटी तु पञ्चाशन्नियुतानि च ।
ऊर्द्धं भागवताण्डन्तु ब्रह्मलोकात्परं स्मृतं ॥२२१॥
एषोर्द्धगप्रचारस्तु गत्यन्तश्च ततः स्मृतं ।

(१) योगाद्धि इति ख० यागाग्नि इति च० ।
(२) यन्माचस्थानामिति ज० ।

नित्या ह्यपरिसंख्येयाः परस्परगुणाश्रयाः ॥१२२॥
सूक्ष्माः प्रसवधर्मिण्यस्ततः प्रकृतयः स्मृताः ।
येभ्यो(१)ऽधिकर्म्मा संजज्ञे क्षेत्रज्ञो ब्रह्मसंज्ञितः ॥१२३॥
तासु प्रकृतिमत्सूक्ष्ममधिष्ठात्वमव्ययं ।
अनुत्पाद्यं परन्धाम परमाणु परेश्वरं ॥१२४॥
अक्षयश्चाप्यनुह्यश्च अमूर्त्तिर्मूर्त्तिमानसौ ।
प्रादुर्भावस्तिरोभावः स्थितिश्चैवाप्यनुग्रहः ॥१२५॥
विधिरन्यैरनौपम्यः परमाणुर्महेश्वरः ।
सतेजा एष तमसो यः पुरस्तात् प्रकाशकः ॥१२६॥
यदण्डमासीत्सौवर्णं प्रथमन्त्वौपसर्गिकं ।
सहतं सर्वतोवृत्तमीश्वराद्व्यजायत ॥१२७॥
ईश्वराद्बीजनिर्भेदः क्षेत्रज्ञो बीज इष्यते ।
योनिं प्रकृतिमाचष्टे सा च नारायणात्मिका ॥१२८॥
विभुर्लोकस्य सृष्ट्यर्थं लोकसंस्थानमेव च ।
सन्निसर्गः स तन्वा च(२) लोकधातुर्महात्मनः ॥१२९॥
पुरस्ताद्ब्रह्मलोकस्य अण्डादर्वाक् च ब्रह्मणः ।
तयोर्मध्ये पुरं दिव्यं स्थानं यस्य मनोमयं ॥१३०॥
तद्विप्रद्भवतः स्थानमीश्वरस्यामितौजसः ।

---

(१) याभ्य इति पाठः साधुः ।

(२) स निसर्गः स तन्वी च इति पाठः सम्भाव्यते । सतन्वा इत्यत्र सततश्च इति ङ० छ० ञ०, सततश्चेति च० ।

शिवं नाम पुरं तत्र शरण्यं जन्मभीरुणां ॥२२१॥
सहस्राणां शतं पूर्णं योजनानां द्विजोत्तमाः ।
अभ्यन्तरे तु विस्तीर्णं महीमण्डलसंस्थितं ॥२२२॥
मध्याह्नार्कप्रकाशेन परतेजोऽभिमर्दिना ।
शातकौम्भेन महता प्राकारेणार्कवर्चसा ॥२२३॥
द्वारैश्चतुर्भिः सौवर्णैर्मुक्तादामविभूषितैः ।
तपनीयनिभैः शुभ्रैर्गाढं सुह्यतवेष्टनं ॥२२४॥
तथाकाशे पुरं रम्यं दिव्यं घण्टादिनादितं ।
न तत्र क्रमते मृत्युर्न तपो न जरा श्रमाः ॥२२५॥
नदद्न्यैः पुराचारं रूपमाशैतुमर्हति(१) ।
सहस्राणां शतं पूर्णं योजनानां दिशो दश ॥२२६॥
तत्पुरं गोवृषांकस्य तेजसा व्याप्य तिष्ठति ।
भावेन मनसो भूमिर्विन्यस्ता कनकामयी ॥२२७॥
रत्नवालुकया तत्र विन्यस्ता शुभ्रशुभेऽधिकं ।
शारदेन्दुप्रकाशानि बालसूर्य्यनिभानि च ॥२२८॥
अर्द्धश्वेतार्द्धरक्तानि सौवर्णानि तथैव च ।
रथचक्रप्रमाणानि नालैर्मरकतप्रभैः ॥२२९॥
सौकुमारेण रूपेण गन्धिना प्रतिभेन च ।
तत्र दिव्यानि पद्मानि वनेषूपवनेषु च ॥२४०॥
अङ्कुपचनिकाशानि तपनीयानि यानि च ।

---

(१) पाठोऽयं न विशुद्धः । अत्र न हि तस्य पुरस्यान्यैरुपमां कर्त्तुमर्हति इति पाठः सम्भवितुमर्हति ।

अर्द्धकृष्णार्द्धरक्तानि सुकुमाराम्बराणि च ॥२४१॥
आतपत्रप्रमाणानि पङ्कजैः संवृतानि च ।
भूयः सप्त महानद्यस्तासान्नामानि बोधत ॥२४२॥
वरा वरेण्या वरदा वरार्हा वरवर्णिनी ।
वरमा वरभद्रा च रम्यास्तस्मिन् पुरोत्तमे ॥२४३॥
पद्मोत्पलदलोन्मिश्रं फेनावावर्त्तविग्रहं ।
जलं मणिदलप्रख्यमावहन्ति सरिद्वराः ॥२४४॥
न तु ब्रह्मर्षयो देवा नासुराः पितरस्तथा ।
न खल्वन्येऽप्रमेयस्य विदुरीशस्य तत्पुरं ॥२४५॥
तत्र ये ध्यानमव्यग्राः सुयुक्ता विजितेन्द्रियाः ।
पश्यन्तीह महात्मानः पुरन्तद्ब्रह्मणात्मनः ॥२४६॥
मध्ये पुरवरेन्द्रस्य तस्याप्रतिमतेजसः ।
सुमहान्मेरुसङ्काशो दिव्यो भद्रश्रिया वृतः ।२४७॥
सहस्रपादः प्रासादस्तपनीयमयः शुभः ।
अनुपमेयैः(१)रत्नैश्च सर्वतः स विभूषितः ॥२४८॥
स्फटिकैश्चन्द्रसङ्काशैर्वैदूर्यैः सोमसंप्रभैः ।
बालसूर्य्यप्रभैश्चैव सौवर्णैश्चाग्निसंप्रभैः ॥२४९॥
राजतैश्चापि शुशुभे इन्द्रनीलमयैः शुभैः ।
इन्द्रैर्वज्रमयैश्चैव इत्येवं सुमहार्घितैः ॥२५०॥
जलैश्च विविधाकारैर्दीर्घ्यिकाभिरधिवासितं ।
चन्द्ररश्मिप्रकाशाभिः पताकाभिरलंकृतं ॥ २५१॥

(१) अनुपम्यमानैरिति क॰ च॰ ।

घण्टाघण्टानिनादैश्च नित्यप्रमुदितोत्सवः ।
किन्नराणामधीवासैः सन्ध्याभ्राकारराजितैः ॥२५२॥
परिवारसमन्तात्तु हेमपुष्पोदकप्रभैः(१) ।
यथा हि मेरुशैलेन्द्रो हेमशृङ्गैर्विराजते ॥२५३॥
चामीकरमयीभिस्तु पातकाभिस्तथा पुरं ।
एवं प्रासादराजोऽसौ भूमिकाभिर्विराजते ॥२५४॥
वसन्तप्रतिमा(२)॰यत्र त्र्यम्बकस्य निवेशने ।
लक्ष्मीः श्रीश्च वपुर्माया कीर्त्तिः शोभा सरस्वती ॥२५५॥
देव्या वै सहिता ह्येता रूपगन्धसमन्विताः ।
नित्या ह्यपरिसङ्ख्यातां परस्परगुणाश्रयाः ।
भूषणं सर्वरत्नानां योन्यः कान्तिविलासयोः ॥२५६॥
कोटीशतं महाभागा विभज्यात्मानमात्मना ।
भगवन्तं महात्मानं प्रतिमोदन्त्यतन्द्रिताः ॥२५७॥
तासां सहस्रशश्चान्याः पृष्ठतः परिचारिकाः ।
रूपिण्यश्च श्रिया युक्ताः सर्वाः कमललोचनाः ॥२५८॥
लीलाविलाससंयुक्तैर्भावैरतिमनोहरैः ।
गणैस्ताः सह मोदन्ते शैलाभैः पावकोपमैः ॥२५९॥
कुब्जा कामनिकामैश्च वरगात्रा हयाननाः ॥
पुण्ड्राश्च विकटाश्चैव करालाश्चिपिटाननाः(३) ॥२६०॥

---

(१) हेमपुस्पोपगैक्ष्मैः इति ङ० हेमपुस्पोपगैक्षीमैः इति च० ।
(२) रमत्यप्रतिमा इति ङ० च० ।
(३) च पिटाननाः इति ङ० च० ।

लम्बोदरा ह्रस्वभुजा विनेत्रा ह्रस्वपादिकाः।
मृगेन्द्रवदनाश्चान्या गजवक्त्रोदरास्तथा ॥२६१॥
गजाननास्तथैवान्याः सिंहव्याघ्राननास्तथा।
लोहिताक्षा महास्तन्यः सुभगाश्चारुलोचनाः ॥२६२॥
ह्रस्वकुञ्चितकेशाश्च सुन्दर्यश्चारुलोचनाः।
अन्याश्च कामरूपिण्यो नानावेशधराः स्त्रियः ॥२६३॥
अभ्यन्तरपरिस्कन्धा देवानामष्टहेऽर्चिताः।
रराम भगवांस्तत्र दशबाहुर्महेश्वरः ॥२६४॥
नन्दिना च गणैः सार्द्धं विश्वरूपैर्महात्मभिः।
तथा रुद्रगणैश्चापि तुल्यौदार्य्यपराक्रमैः ॥२६५॥
पावकात्मजसङ्काशैर्यूपदंष्ट्रोत्कटाननैः।
वन्द्यमानो विमानस्थ(१) पूज्यमानश्च तत्परैः ॥२६६॥
सर्वर्तुकुसुमां मालां जिघ्रमाणोरसि स्थितां।
नीलोत्पलदलश्यामं पृथुताम्रायतेक्षणं ॥२६७॥
ईषत्कराललम्बोष्ठं तीक्ष्णदंष्ट्रागणान्वितं।
षड्‌ढ्नेत्रं दुष्प्रेक्ष्यं रुचिरश्चीरवाससं ॥२६८॥
आद्यवेष्यपरिक्लिष्टं देवानामरिनाशनं।
बाहुना बाहुमावेश्य पार्श्वे सव्येऽन्तरे स्थितं ॥२६९॥
रराजापदिश(२)न्तस्य वामाग्रकरगोचरं।
महाभैरवनिर्घोषं बलेनाप्रतिमौजसं।
दशवर्णधनुश्चैव विचित्रं शोभतेऽधिकं ॥२७०॥

(१) विमानस्थ इत्यत्र विमानस्थैरिति पाठः साधीयान्।
(२) अपदिशमितिपाठो लेखकप्रमाद जनितः।

त्रिशूलं विद्युताभासममोघं शत्रुनाशनं ।
जाज्वल्यमानं वपुषा परमं तत्त्विषा युतं ॥२७१॥
अग्निर्देवौजसां श्रेष्ठः शीतरश्मिः शशी तथा ।
तेजसा वपुषा कान्त्या देवेशस्य महात्मनः ।
शुशुभेऽभ्यधिकं तत्र वेश्मामग्निशिखा इव ॥२७२॥
स्थितः पुरस्ताद्देवस्य शातकौम्भमयो महान् ।
शुशुभे रुचिरः श्रीमान् सोदकः स कमण्डलुः ॥२७३॥
असिमावेश्य चाङ्गेषु पाण्डुराम्बरधारिणी ।
उरश्च्छेदेन महता मौक्तिकेन विराजिता ।
चतुर्भुजा महाभागा विजया लोकसम्मता ॥२७४॥
देव्या आद्यः प्रतीहारी श्रीरिवाप्रतिमा परा ।
विभ्राजती स्थिता चैव कृत्वा देवस्य चाञ्जलिं ॥२७५॥
तस्याः पृष्ठानुगास्त्वान्याः स्त्रियोऽप्सरोगणान्विताः ।
ताः खल्वभिनवैः कान्तैरुपतिष्ठन्ति शङ्करं ॥२७६॥
सर्वलक्षणसम्पन्ना वादित्रैरुपबंहिताः ।
उपगायन्ति देवेशं गणा गन्धर्व्वयोनयः ॥२७७॥
अभ्युन्नतो महोरस्कः शरन्मेघसमद्युतिः ।
शोभते नन्दमानस्तु गोपतिस्तस्य वेश्मनि ॥२७८॥
स्कन्दश्च सपरीवारः पुत्रोऽस्यामितवीर्य्यवान् ।
रक्ताम्बरधरः श्रीमान् वराम्बुजदलेक्षणः ॥२७९॥
तस्य शाखो विशाखश्च नैगमेयश्च चाष्टवान्(१) ।

(१) महसा इति ङ०, च० ।

अपेतव्यसनाक्रूराः प्रजानां पालने रताः ॥२८०॥
तैः सार्द्धं स महावीर्य्यः शोभते शिखिवाहनः ।
व्यालक्रीड़नकैस्तत्र क्रीड़ते विश्वतोमुखः ॥२८१॥
ये नृपा विबुधेन्द्राणां काञ्चनस्य प्रदायिनः ।
ये च स्वायतना[१] विप्रा गृहस्था ब्रह्मवादिनः ॥२८२॥
गूढस्वाध्यायतपसस्तथा चैवोञ्छवृत्तयः ।
एते सभासदस्तस्य देवेशस्य च सम्मताः ॥२८३॥
मन्वन्तराण्यनेकानि व्यवर्त्तन्त[२] पुनः पुनः ।
श्रूयतां देवदेवस्य भविष्यांस्त्वयंमुत्तमं ॥२८४॥
व्याघ्रास्त्रैवानुगास्तत्र काञ्चनाभांस्तरस्विनः ।
स्वच्छन्दचारिणः सर्वे स्वयं देवेन निर्म्मिताः ॥२८५॥
मृत्योर्मृत्युसमास्ते तु यमदर्पापहारिणः ।
विभूतिमप्यसंख्येयां को न खल्वभिधास्यते ॥२८६॥
अतःपरमिदं भूयो भवेनाद्भुतमुत्तमं ।
भूतानामनुकंपार्थं यत्कृतं तन्निबोधत ॥२८७॥
मन्दराद्रिप्रकाशानां बलेनाप्रतिमौजसां ।
शारकुन्देन्दुवर्णानां विद्युद्घननिनादिनां ॥२८८॥
चूडामणिधराणां वै मेघसन्निभवाससां ।
श्रीवत्साङ्कितवक्षाणामङ्गुलीशूलपाणिनां ॥२८९॥
एवं दिशानां देवानां रूपेणोत्तमशालिनां ।

---

(१) स्वायतमनसो इति पाठोऽर्थप्रतिपत्तिकरः ।
(२) व्यवर्त्तयन्निति ङ० च० ।

तस्य प्रासादमुख्यस्य स्तम्भेषूत्तमयोभिषु ॥२८०॥
संयताग्निमयीभिस्तु शृङ्खलाभिः पृथक् पृथक् ।
मायासहस्रं सिंहानां सुखं तत्र निवासिनां ॥२८१॥
स्तम्भेऽप्यपास्तताषट्[१] त्र्यम्बकस्य निवेशने ।
अथ तत्प्रातसंपूज्य वायोर्वाक्यं सुविस्मिताः ।
ऋषयः प्रत्यभाषन्त नैमिषेयास्तपस्विनः ॥२८२॥
भगवन् सर्वभूतानां प्राण सर्वत्रग प्रभो ।
के ते सिंहमहाभूताः क्व ते जाताः किमात्मकाः ॥२८३॥
सिंहाः केनापराधेन भूतानां प्रभविष्णुना ।
वैश्वानरमयैः पाशैः संरुद्धास्तु पृथक् पृथक् ॥२८४॥
तेषां तद्वचनं श्रुत्वा वायुर्वाक्यं जगाद ह ।
यद्वै सहस्रं सिंहानामीश्वरेण महात्मना ।
व्यपनीय स्वकाद्देशात्क्रोधास्ते सिंहविग्रहाः ॥२८५॥
भूतानामभयं दत्त्वा पुरा बद्धाग्निबन्धने ।
यज्ञभागनिमित्तं च ईश्वरस्याज्ञया तदा ॥२८६॥
तेषां[२] त्रिधानमुक्तेन सिंहेनैकेन लीलया ।
देव्या मन्युं कृतं ज्ञात्वा हतो दक्षस्य स क्रतुः ॥२८७॥
निःसृता च महादेव्या महाकाली महेश्वरी ।
आत्मनः कर्मसाक्षिण्या भूतैः सार्द्धं तदानुगैः ॥२८८॥
स एष भगवान्क्रोधो रुद्रावासकृतालयः ।

---

(१) ऽप्यपाहृतमष्टमिति पाठो न विशुद्धः ।
(२) तस्मादिति ङ० च० ।

वीरभद्रोऽप्रमेयात्मा देव्या मन्युप्रमार्ज्जनः ॥१९९॥
तस्य वेश्म सुरेन्द्रस्य सर्वगुह्यतमस्य वै।
सन्निवेशस्त्वनौपम्या माया वः परिकीर्त्तितः ॥२००॥
अतः परं प्रवक्ष्यामि ये तत्र प्रतिवासिनः।
रम्ये पुरवरश्रेष्ठे तस्मिन् वैश्वायभूमिषु ॥२०१॥
नानारत्नविचित्रेषु पताकावङ्कलेषु च।
सर्वकामसमृद्धेषु वनोपवनशोभिषु ॥२०२॥
राजतेषु महान्तेषु शातकौम्भमयेषु च।
सन्ध्याभ्रसन्निकाशेषु कैलासप्रतिमेषु च ॥२०३॥
दृष्टैः शब्दादिभिर्भागैर्ये भवस्यानुसारिणः।
प्रासादवरपुण्येषु तेषु मोदन्ति सुव्रताः ॥२०४॥
ब्रह्मघोषैरविरता कथास्व विविधाः शुभाः।
गीतवादित्रघोषास्व संस्तवास्व(१) समन्ततः ॥२०५॥
संहतास्वैवमतुला नानाश्रयकृतास्तथा।
एवमादीनि वर्त्तन्ते तेषां प्रासादमूर्द्धनि ॥२०६॥
सहस्रपादः प्रासादस्तपनीयमयः शुभः।
अनौपम्यैर्वररत्नैः सर्वतः परिभूषितः ॥२०७॥
स्फटिकैश्चन्द्रसङ्काशैर्वैदूर्यमणिसम्प्रभैः।
बालसूर्य्यमयैश्चापि सौवर्णैश्चाग्निसम्प्रभैः ॥२०८॥
शुश्रुवुर्ऋषयः श्रुत्वा नैमिषेयास्तपस्विनः।

(१) स्वस्तिवाचः इति ख०।

आपन्नसंशयास्तेमं वाक्यमूचुः समीरणं ॥२०९॥

ऋषय ऊचुः ।

के तु तत्र महात्मानो ये भवस्यानुसारिणः ।
अनुग्राह्यतमाः सम्यक् प्रमोदन्ते पुरोत्तमे ।
ऋषीणां वचनं श्रुत्वा वायुर्वाक्यमथाब्रवीत् ॥२१०॥

वायुरुवाच ।

श्रूयतां देवदेवस्य भक्तैर्यैरनुकल्पिता ।
ह्रीमन्तः सूर्जिता दान्ताः शौर्ययुक्ता ह्यलोलुपाः ॥२११॥
मध्याहाराश्च मात्राश्च आत्मारामा जितेन्द्रियाः ।
जितद्वन्द्वा महोत्साहाः सौम्या विगतमत्सराः ॥२१२॥
भावस्थाः सर्व्वभूतानां अव्यापारा अनाकुलाः ।
कर्मणा मनसा वाचा विशुद्धेनान्तरात्मना ।
अनन्यमनसो भूत्वा प्रपन्ना ये महेश्वरं ॥२१३॥
तैर्लब्धं रुद्रसालोक्यं शाश्वतं पदमव्ययं ।
भवस्य रूपसादृश्यं नीताश्चैव ह्यनुत्तमं ॥२१४॥
वैश्वानरमुखाः सर्वे विश्वरूपाः कपर्द्दिनः ।
नीलकण्ठाः सितग्रीवास्तीक्ष्णदंष्ट्रास्त्रिलोचनाः ॥२१५॥
अर्द्धचन्द्रकृतोष्णीषा जटामुकुटधारिणः ।
सर्वे दशभुजा वीराः पद्मान्तरसुगन्धिनः ॥२१६॥
तरुणादित्यसङ्काशाः सर्वे ते पीतवाससः ।
पिनाकपाणयः सर्व्वे श्वेतगोवृषवाहनाः ॥२१७॥
श्रियान्विताः कुण्डलिनो मुक्ताहारविभूषिताः ।

तेजसोऽभ्यधिका देवैः सर्वज्ञाः सर्वदर्शिनः ॥२१८॥
विभज्य बहुधात्मानं जरामृत्युविवर्जिताः ।
क्रीडन्ते विविधैर्भावैर्भोगान् प्राप्य सुदुर्लभान् ॥२१९॥
स्वच्छन्दगतयः सिद्धाः सिद्धैस्तान्यैर्विबोधिताः ।
एकादशानां रुद्राणां कोट्योऽनेकमहात्मनां ॥२२०॥
एभिः सह महात्मानो[१] देवदेवो महेश्वरः ।
भक्तानुकम्पी भगवान् मोदते पार्वतीप्रियः ॥२२१॥
नाहन्तेषान्तु रुद्राणां भवस्य च महात्मनः ।
नानात्वमनुपश्यामि सत्यमेतद्ब्रवीमि वः ॥२२२॥
मातरिश्वाऽब्रवीत्पुण्यामित्येतामीश्वरोऽच्युत ।
अथ ते ऋषयः सर्वे दिवाकरसमप्रभाः ।
श्रुत्वेमां परमां पुण्यां कथान्त्रैयम्बकीं ततः ॥२२३॥
ईशस्यानुग्रहं प्राप्य हर्षं चैवाप्यनुत्तमं ।
सम्भावयित्वा चाप्येनं वायुमूचुर्महाबलं ॥२२४॥

ऋषय ऊचुः ।

समीरण महाभाग अस्माकं च त्वया विभो ।
ईश्वरस्योत्तमं पुण्यमष्टमन्त्वौपसर्गिकं ॥२२५॥
तस्य स्थानं प्रमाणञ्च यथावत्परिकीर्त्तितं ।
यो गन्धेन सम्टद्धं वै परमं परमात्मनः ॥२२६॥
महादेवस्य माहात्म्यं दुर्विज्ञेयं सुरैरपि ।
स्तेन माहात्म्ययोगेन सहस्रस्यामितौजसः ॥२२७॥

(१) महात्मा होति पाठः समीचीनः ।

यस्य भक्तोऽथ संमोहो अनुकम्पार्थमेव च ।
(१)आत्मलक्ष्मा स्वयं जुष्टा या साप्रतिमशालिनी ॥२२८॥
व्याप्य ज्योत्स्नैरवं चन्द्रं विन्यस्ता विश्वरूपधृक्(२) ।
विभूतिर्भ्राजतेऽत्यर्थं देवदेवस्य वेश्मनि ॥२२९॥
महादेवस्य तुल्यानां रुद्राणान्तु महात्मनां(३) ।
तत्सर्वं निखिलेनेदं वक्त्रादमृतनिःसृतं ॥२३०॥
अपीत्वा खलु सर्वस्य भक्त्यास्माभिस्तु सुव्रताः ।
नास्ति किञ्चिदविज्ञेयं अन्यच्चैवानुगामिनः ।
(४)प्रश्नं देववर प्राण यथावद्वक्तुमर्हसि ॥२३१॥
सूत उवाच । स खलूवाच भगवान् किं भूयो वर्त्तयाम्यहं ।
किं मया वै च वक्तव्यं तद्वदिष्यामि सुव्रताः ॥२३२॥
ऋषय ऊचुः । आदित्याः पारिपार्श्वेया सिंहा वै क्रोधविक्रमाः ।
वैश्वानरा भूतगणा व्याघ्राश्चैवानुगामिनः ॥२३३॥
आभूतसंप्लवे घोरे सर्वप्राणभृतां क्षये ।
किमवस्था भवन्त्येते तन्नो ब्रूहि यथार्थवत् ॥२३४॥

---

(१) आत्मलक्ष्म्या इति श्लोकार्द्धात्प्राक् कतिपयवाक्यानि न सन्ति ।
(२) व्याप्यद्योस्वरं चन्द्रं विन्यस्ता विश्वरूपिणा इति ख०, व्याप्यज्योत्स्नैरवं चन्द्रं विन्यस्ता विश्वरूपिणा इति ङ०, ज्योत्स्नैरित्यत्र योत्स्नैरितिपाठव्यत्यासेन ङ०पुस्तकस्थितपाठः घ० क० चिह्नितपुस्तकयोर्वर्त्तते । एते सर्व्वे पाठा लिपिकरप्रमादोत्पन्नाः । अत्र, ज्योत्स्नाभिर्व्याप्य खं चन्द्रो विन्यस्तो विश्वरूपिणा इति पाठः सम्भावनीयः ।
(३) इतः श्लोकार्द्धात्प्राक् पश्चाद्वा श्लोकैकं श्लोकद्वयं वा पतितं ।
(४) एतच्छ्लोकार्द्धात्प्राक् श्लोकार्द्धं पतितं ।

एते ये वै त्वया प्रोक्ताः सिद्धव्याघ्रगतीः सह ।
ये चान्ये सिद्धिसम्प्राप्ता मातरिश्वा जगाद ह ॥२२५॥
हृदस्य परमं तत्त्वं समाख्यास्यामि शृण्वतां ।
विज्ञातेश्वरसद्भावमव्यक्तं प्रभवं तथा ॥२२६॥
तत्र पूर्वगतास्तेषु कुमारा ब्रह्मणः सुताः ।
सनकश्च सनन्दश्च तृतीयश्च सनातनः ॥२२७॥
वोढुश्च कपिलस्तेषामासुरिश्च महायशाः ।
मुनिः पञ्चशिखश्चैव ये चान्येऽप्येवमादयः ॥२२८॥
ततः काले व्यतिक्रान्ते कल्पानां पर्यये गते ।
महाभूतविनाशान्ते प्रलये प्रत्युपस्थिते ॥२२९॥
अनेकरुद्रकोट्यस्तु याः प्रसन्ना महेश्वरी ।
शब्दादीन विषयान् भोगान् सत्यस्याष्टविधस्तयात् ॥२४०॥
प्रविश्य सर्वभूतानि ज्ञानयुक्तेन तेजसा ।
वैहायपदमव्ययं भूतानामनुकम्पया ॥२४१॥
तत्र यान्ति महात्मनः परमाणुं महेश्वरं ।
तरन्ति सुमहावर्त्तां जन्ममृत्यूदकां नदीं ॥२४२॥
ततः पश्यन्ति सर्वाणं(१) परं ब्रह्माणमेव च ।
देव्या वै सहिताः सप्त या देव्यः(२) परिकीर्त्तिताः ॥२४३॥
यत्तत् सहस्रं सिंहानामादित्यानां तथैव च ।
वैश्वानरभूतभव्यव्यापाश्चैवानुगामिनः ॥२४४॥

(१) पश्यन्त्यपर्व्वाणमिति क० ।
(२) या देव्या इति ग० ।

आवेश्यात्मनि तान् सर्वान् संस्थायोपप्लवां(१)स्तथा ।
लोकान् सप्त इमान् सर्व्वान् महाभूतानि पञ्च च ॥२४५॥
विष्णुना सह संयुक्तं करोति विकरोति च ।
स रुद्रो यः साममयस्तथैव च यजुर्मयः ॥२४६॥
स एष उत प्रोतश्च वहिरन्तश्च निश्चयात् ।
एको हि भगवानाद्य(२) प्रभावी आन्तशक्तिजाः ॥२४७॥
ततस्ते ऋषयः सर्वे दिवाकरसमप्रभाः ।
अन्तश्चवास स(३)मारोप्याग्निं तथात्मनि ॥२४८॥
कर्मणा मनसा वाचा विशुद्धेनान्तरात्मनि ।
अनन्यमनसो भूत्वा प्रपद्यन्ते महेश्वरं ॥२४९॥
व्रतोपवासनिरताः सर्वभूतदयापराः ।
योगमनुपमन्दिव्यं प्राप्तं तैश्छिन्नसंशयैः ॥२५०॥
प्रपद्य परया भक्त्या ज्ञानयुक्तेन तेजसा ।
तैर्लब्धं रुद्रसालोक्यं शाश्वतं पदमव्ययं ॥२५१॥
यः पठेत्तपसा युक्तो वायुप्रोक्तामिमां स्तुतिं ।
ब्राह्मणः क्षत्रियो वापि वैश्यो वा स्वक्रियापरः ॥२५२॥
लभते रुद्रसालोक्यं भक्तिमान् विगतज्वरः ।

---

(१) अयं पाठो लेखकप्रमादात्समजनि ।

(२) आद्य इति क० ।

(३) तस्य स्या अमसं वासमिति,ङ० च०, तस्य अमश्च वाससमिति ख० । एते पाठा अर्थहीनाः । अत्र स्वं स्वमात्मसंवासमितिपाठोऽर्थ-प्रतिपत्तिकरः ।

अमद्यपश्च यः शूद्रो भवभक्तो जितेन्द्रियः ॥२५३॥
आभूतसंप्लवस्थायी अप्रतीघातलक्षणः।
गाणपत्यं स लभेते स्थानं वा सर्वकामिकं ॥२५४॥
मद्यपो मद्यपैः सार्द्धं भूतसङ्घैश्च मोदते।
सोऽर्च्यमानो महीपृष्ठे मर्त्यानां वरदो भवेत्।
इतिहोवाच भगवान् वायुर्वाक्यमिदं वरः ॥२५५॥

इति श्रीमहापुराणे वायुप्रोक्ते अनुषङ्गपादे शिवपुरवर्णनं नाम ऊनचत्वारिंशोऽध्यायः समाप्तः।

# चत्वारिंशोऽध्यायः ।

अनुषङ्गपादः ।

सूत उवाच । [1]प्रत्याहारं प्रवक्ष्यामि परस्यान्ते स्वयम्भुवः ।
ब्रह्मणः स्थितिकाले तु क्षीणे तस्मिंस्तदा प्रभोः ॥१॥
यथेदं कुरुतेऽध्यात्मं सुसूक्ष्मं विश्वमीश्वरः ।
अव्यक्तान् ग्रसते व्यक्तं[2] प्रत्याहारेच कृत्स्नशः ॥२॥
परं तदनु कल्पानामपूर्णे कल्पसङ्क्षये ।
उपस्थिते महाघोरे ह्यप्रत्यक्षे तु कस्यचित् ॥३॥
अन्ते द्रुमस्य सम्प्राप्ते पश्चिमस्य मनोस्तदा ।
अन्ते कलियुगे तस्मिन् क्षीणे संहार उच्यते ॥४॥
सम्प्रक्षाले तदा वृत्ते प्रत्याहारे ह्युपस्थिते[3] ।
प्रत्याहारे तदा तस्मिन् भूततन्मात्रसंचये ॥५॥
महदादेर्विकारस्य विशेषान्तस्य संचये ।

---

(१) क॰ ङ॰ च॰ छ॰ पुस्तकेषु प्रत्याहारादिकतिपयविषयनिर्देशानन्तरं ग्रन्थसमाप्तिर्दृश्यते । तेषु गयामाहात्म्यवर्णनं नास्ति । ख॰ ग॰ पुस्तकयोस्तु प्रत्याहारादिविषयनिर्देशो नास्ति गयामाहात्म्यकथनानन्तरं ग्रन्थसमाप्तिर्लक्ष्यते । अस्मिन् पुस्तके प्रत्याहारादिविषयमुद्रणात्परं गयामाहात्म्यमुद्राङ्कनेन ग्रन्थसमाप्तिर्भविष्यति ।

(२) अव्यक्तं ग्रसते व्यक्तान् इति पाठः समीचीनः ।

(३) ह्युपस्थिते इति पाठः सम्भवपरः । सम्प्रक्षाले इति श्लोकार्द्धात्परं श्लोकार्द्धं पतितं साकाङ्क्षत्वात् ।

स्वभावकारिते तस्मिन् प्रवृत्ते प्रतिसञ्चरे ॥६॥
आपो ग्रसन्ति वै पूर्व्वं भूमेर्गन्धात्मकं गुणं ।
आत्तगन्धा ततो भूमिः प्रलयत्वाय कल्पते ।
प्रविष्टे गन्धतन्मात्रे तोयावस्था धरा भवेत् ॥७॥
आपस्तदा प्रनष्टा वै वेगवत्यो महास्वनाः ।
सर्व्वमापूरयित्वेदं तिष्ठन्ति विचरन्ति च ॥८॥
अपामस्ति गुणो यस्तु ज्योतिषे लीयते रसः ।
नश्यन्त्यापस्तदान्ते च रसतन्मात्रसङ्क्षयात् ॥९॥
ताजवेत्यहृतरसा[१] ज्योतिष्ट्वं प्राप्नुवन्त्युत ।
ग्रस्ते च सलिले तेजः सर्व्वतोमुखमीक्ष्यते ॥१०॥
अथाग्निः सर्व्वतो व्याप्त आदत्ते तज्जलन्तदा ।
सर्व्वमापूर्य्यतेऽर्च्चिर्भिस्तदा जगदिदं शनैः ११॥
अर्च्चिर्भिः सन्तते तस्मिन् तिर्य्यगूर्द्ध्वमधस्ततः ।
ज्योतिषोऽपि गुणं रूपं वायुरन्ति[२] प्रकाशकं ।
प्रलीयते तदा तस्मिन् दीपार्च्चिरिव मारुते ॥१२॥
प्रनष्टे रूपतन्मात्रे हृतरूपो विभावसुः ।
उपशाम्यति तेजो हि वायुना धूपते[३] महत् ॥१३॥
निरालोके तदा लोके वायुभूते च तेजसि ।

(१) ताजवेत्यहृतरसा इत्यत्र, तेजसा संहृतरसा इति पाठो विशुद्धः ।
(२) रन्ति इति पाठो लेखकप्रमादजनितः । रन्ति इत्यत्र हन्ति इति पाठः समीचीनः ।
(३) धयते इति ख० ग० ।

ततस्तु मूल(१)मासाद्य वायुः सम्भवमात्मनः ॥१४॥
ऊर्द्ध्वं चाधश्च तिर्यक् च दोधवीति(२) दिशो दश ।
वायोरपि गुणं स्पर्शमाकाशं ग्रसते च तत् ॥१५॥
प्रशाम्यति तदा वायुः खन्तु तिष्ठत्यनावृतं ।
अरूपमरसस्पर्शमगन्धं न च मूर्तिमत् ॥१६॥
सर्वमापूरयन्नादैः सुमहत्तत् प्रकाशते ।
परिमण्डलन्तच्छुषिरमाकाशं शब्दलक्षणं ॥१७॥
शब्दमात्रं तदाकाशं सर्वमावृत्य तिष्ठति ।
तत्तु शब्दगुणन्तस्य भूतादिः ग्रसते पुनः ॥१८॥
भूतेन्द्रियेषु युगपद्भूतादौ संस्थितेषु वै ।
अभिमानात्मको ह्येष भूतादिस्तामसः स्मृतः ॥१९॥
भूतादिं ग्रसते चापि महान् वै बुद्धिलक्षणः ।
महानात्मा तु विज्ञेयः संकल्पो व्यवसायकः ॥२०॥
बुद्धिर्मनश्च लिङ्गश्च महानक्षर एव च ।
पर्यायवाचकैः शब्दैस्तमाहुस्तत्त्वचिन्तकाः ॥२१॥
सम्प्रलीनेषु भूतेषु गुणसाम्ये तमोमये ।
स्वात्मन्येव स्थिते चैव कारणे लोककारणे ॥२२॥
विनिवृत्ते तदा सर्गे प्रकृत्यावस्थितेन वै ।
तदाद्यन्तपरोक्षत्वाददृष्टत्वाच्च कस्यचित् ॥२३॥

---

(१) ततः खं मूलमिति पाठः समीचीनः ।

(२) दोधीति इति क० ज० द्वो धवीति च० । एते सर्व्वे पाठा लिपिकरभ्रमादुद्भूताः ।

अनाख्यागादबोधत्वक्क्षानाद्ज्ञानिनामपि ।
आगतागतिकत्वाच्च सदृशं तत्र[१] विद्यते ॥२४॥
भावयाह्यनुमानाच्च चिन्तयिलेदमुच्यते ।
स्थिते तु कारणे तस्मिन् नित्ये सदसदात्मके ॥२५॥
अनिर्देश्या प्रवृत्तिर्वै स्वात्मिका कारणेन तु ।
एवं सप्तादयोऽभ्यस्तात् क्रमात्प्रकृतयस्तु वै ॥२६॥
प्रत्याहारे तदा सर्गे प्रविशन्ति परस्परं ।
येनेदमावृतं सर्वं सप्तकलस्तु प्रलीयते ॥२७॥
सप्तद्वीपसमुद्रान्तं सप्तलोकं सपर्व्वतं ।
उदकावरणं यच्च ज्योतिषां[२] लीयते तु तत् ॥२८॥
यत्तैजसं चावरणमाकाशं[३] ग्रसते तु तत् ।
यद्वायव्यं चावरणमाकाशं ग्रसते तु तत् ॥२९॥
आकाशावरणं यच्च भूतादिर्ग्रसते तु तत् ।
भूतादिं ग्रसते चापि महान् वै बुद्धिलक्षणः ॥३०॥
महान्तं ग्रसतेऽव्यक्तं गुणसाम्यं ततः परं ।
एतौ संहारविस्तारौ मह्याव्यक्तौ ततः पुनः ॥३१॥
सृजते ग्रसते चैव विकारान् सर्गसंयमे ।
संक्रियकरणाः संसिद्धा ज्ञानिनस्तु ये ॥३२॥
गत्वा जवस्त्ववीभावे स्थानेष्वेषु-प्रसंयमान् ।

---

(१) यहत्तस्मिन्न इति पाठः समीचीनः ।
(२) ज्योतिषि इति पाठः साधुः ।
(३) मारुतो इति पाठः साधीयान् ।

प्रत्याहारे वियुज्यन्ते क्षेत्रज्ञाः करणैः पुनः ॥२३॥
अव्यक्तं क्षेत्रमित्याहुर्ब्रह्म क्षेत्रज्ञ उच्यते।
साधर्म्यवैधर्म्यकृतसंयोगोऽनादिमांस्तयोः ॥२४॥
एवं सर्गेषु विज्ञेयं क्षेत्रज्ञेष्विह ब्राह्मणाः।
ब्रह्मविच्चैव विज्ञेयः क्षेत्रज्ञानात् पृथक् पृथक् ॥२५॥
विषयाविषयत्वञ्च क्षेत्रक्षेत्रज्ञयोः[१] स्मृतं।
ब्रह्मा तु विषयो ज्ञेयोऽविषयः क्षेत्रमुच्यते ॥२६॥
क्षेत्रज्ञाधिष्ठितं क्षेत्रं क्षेत्रज्ञार्थं प्रवर्त्तते।
बहुत्वाच्च शरीराणां शरीरी बहुधा स्मृतः ॥२७॥
अव्यूहाशङ्कराच्चैव ज्योतिर्वच्च व्यवस्थितः।
यस्मात्प्रतिशरीरं हि सुखदुःखोपलब्धिता।
तस्मात्पुरुषनानात्वं विज्ञेयं तु विजानता ॥२८॥
यदा प्रवर्त्तते चैषां भेदानां चैव संयमाः।
स्वभावकारिताः सर्वे कालेन महता तदा ॥२९॥
निवर्त्तते तदा तस्य[२] स्थितिरागः स्वयम्भुवः।
सहसा योऽव्यक्तैः सर्वै[३] र्ब्रह्मलोकनिवासिभिः ॥४०॥
विनिवृत्ते तदा रागे स्थितावात्मनिवासिनां।
तत्कालवासिनां तेषां तदा तद्दोषदर्शिनां ॥४१॥
उत्पद्यतेऽथ वैराग्यमात्मवादप्रनाशनं।

(१) क्षेत्रज्ञक्षत्रयोरिति पाठः सुसङ्गतः।
(२) तदावश्यं इति क०।
(३) सहसा ये त्वर्कैः सर्व्वैः इति ख० सहसा योव्यक्तैः सर्व्वैरिति क० ग०।

भोज्यभोक्तृत्वमापन्ने तेषां तद्भावदर्शिनां(१) ॥४२॥
पृथग्ज्ञानेन चेवज्ञास्ततस्ते प्रश्नलौकिका: ।
प्रकृतौ करणा लीना: सर्व्वे नानाप्रदर्शिन: ॥४३॥
स्वात्मन्येवावतिष्ठन्ते प्रशान्ता दर्शनात्मका: ।
शुद्धा निरञ्जना: सर्व्वे चेतनाचेतनास्तथा ॥४४॥
तत्रैव परिनिर्वाणा: स्मृता नागामिनस्तु ते(२) ।
निर्गुणत्वान्निरात्मान: प्रकृत्यन्ते व्यतिक्रमात् ॥४५॥
इत्येवं प्राकृत: प्रोक्त: प्रतिसर्ग: स्वयम्भुव: ।
भिद्यन्ते सर्वभूतानां करणानि प्रसंयमे ॥४६॥
इत्येष संयमस्यैव तत्त्वानां करणै: सह ।
तत्त्वप्रसंयमो ह्येष स्मृतो ह्यावर्त्तको द्विजा: ॥४७॥
सूत उवाच । धर्माधर्मौ तपो ज्ञानं शुभे सत्यानृते तथा ।
ऊर्द्ध्वभावो ह्यधोभावो सुखदु:खे प्रियाप्रिये ॥४८॥
सर्वमेतत्प्रयातस्य(३) गुणमात्रात्मकं स्मृतं ।
निरिन्द्रियाणां च तदा ज्ञानिनां यच्छुभाशुभं ॥४९॥
प्रकृत्यां चैव तत्सर्वं पुण्यं पापं प्रतिष्ठति ।
योऽन्यवस्था स्वभावे च(४) देहिनां तु निषिच्यते(५) ॥५०॥
जन्तूनां पापपुण्यन्तु प्रकृतौ यत्प्रतिष्ठितं ।

(१) भोज्यभोक्तृत्वमापन्नैस्तेषां तद्भावदर्शिनामिति च० ।
(२) वै इति क० ग० ये इति ङ० ।
(३) प्रपातस्येति ङ० च० छ० ।
(४) सुतास्वेह इति ङ० च० ।
(५) निषिध्यते इति क० छ० ग० ।

अव्यक्तस्थानि तान्येव पुण्यपापानि जन्तवः ।
ये जयन्ति पुनर्देहे देहान्यत्वे तथैव च ॥५१॥
धर्म्माधर्म्मौ तु जन्तूनां गुणमात्रात्मकावुभौ ।
करणैः स्वैः प्रचीयेते कायत्वेनेह जन्तुभिः ॥५२॥
सुचेतनाः प्रलीयन्ते चेत्रज्ञाधिष्ठिता गुणाः ।
सर्गे च प्रतिसर्गे च संसारे चैव जन्तवः ।
संयुज्यन्ते वियुज्यन्ते करणैः सञ्चरन्ति च ॥५३॥
राजसी तामसी चैव सात्विकी चैव वृत्तयः ।
गुणमात्राः प्रवर्त्तन्ते पुरुषाधिष्ठितास्त्रिधा ॥५४॥
ऊर्द्धं देवात्मकं सत्तमधोभागात्मकं तमः ।
तयोः प्रवर्त्तकं मध्ये इहैवावर्त्तकं रजः ॥ ५५ ॥
इत्येवं परिवर्त्तन्ते त्रयः श्रोतोगुणात्मकाः ।
लोकेषु सर्वभूतानां तन्न कार्य्यं(१) विजानता ॥ ५६ ॥
अविद्याप्रत्ययारम्भा आरभ्यन्ते हि मानवैः ।
एतास्तु गतयस्तिस्रः शुभाः पापात्मिकाः स्मृताः ॥ ५७ ॥
तमसाभिभवाज्जन्तुर्यथातथ्यं न विन्दति ।
अतत्त्वदर्शनात् सोऽथ त्रिविधं बध्यते ततः ॥ ५८ ॥
प्राकृतेन च बन्धेन तथा वैकारिकेन च ।
दक्षिणाभिस्तृतीयेन बद्धोऽत्यन्तं विवर्त्तते ॥ ५९ ॥
इत्येते वै त्रयः प्रोक्ता बन्धा ह्यज्ञानहेतुकाः ।
अनित्ये नित्यसंज्ञा च दुःखे च सुखदर्शनं ॥ ६० ॥

---

(१) ते तु वार्य्या इति पाठः समीचीनः ।

अखे खमिति च ज्ञानमग्नुचौ शुचिनिश्चयः ।
येषामेते मनोदोषा ज्ञानदोषा विपर्य्ययात् ॥ ६१ ॥
रागद्वेषनिवृत्तिश्च तज्ज्ञानं समुदाहृतं ।
अज्ञानं तमसो मूलं कर्मोदयफलं रजः ।
कर्म्मजस्तु पुनर्देहो महादुःखं प्रवर्त्तते ॥ ६२ ॥
श्रोत्रजा नेत्रजा चैव त्वग्जिह्वाघ्राणतस्तथा ।
पुनर्भवकरी दुःखा कर्म्मणां जायते तु सा(१) ॥ ६३ ॥
सत्वष्णोऽभिहितो बालः स्वकृतैः कर्म्मणः फलैः ।
तैलपालीकवज्जीवस्तथैव परिवर्त्तते(२) ॥ ६४ ॥
तस्मात् स्थूलमनर्थानामज्ञानमुपदिश्यते ।
तं शक्र(३) मवधार्य्यैकं ज्ञाने यत्नं समाचरेत् ॥ ६५ ॥
ज्ञानाद्विजयते सर्वन्त्यागाद्बुद्धिर्विरज्यते ।
वैराग्याच्छुध्यते चापि शुद्धः सत्त्वेन मुच्यते ॥ ६६ ॥
अत ऊर्द्धं प्रवक्ष्यामि रागं भूतापहारिणं ।
अभिषङ्गाय यो यस्माद्विषयोऽप्यवशात्मनः(४) ॥ ६७ ॥
अनिष्टमभिषङ्गं हि प्रीतितापविषादनं(५) ।
दुःखलाभे न तापश्च सुखानुस्मरणं तथा ॥ ६८ ॥

(१) श्रोत्रजं नेत्रजं चैव त्वग्जिह्वाघ्राणतस्तथा । पुनर्भवकरं दुःखं कर्म्मणा जायते तु तत् इति पाठो विशुद्धः ।

(२) तैलपीड़कवज्जीव इति क० तैलपीचकवज्जीव इति छ० ।

(३) शक्तुमिति पाठः समीचीनः ।

(४) इतः श्लोकार्द्धात्परं श्लोकार्द्धं पतितं ।

(५) प्रतीतापविषादनमिति ङ० च० । प्रीतितापविषादवत् इति पाठः सुलभार्थः ।

इत्येष वैषयो रागः संसृत्याः कारणं स्मृतं।
ब्रह्मादौ स्थावरान्ते वै संसारे ह्याधिभौतिके।
अज्ञानपूर्वकं तस्मादज्ञानन्तु विवर्जयेत्॥ ६९ ॥
यस्य चार्षं न प्रमाणं शिष्टाचारं तथैव च।
वर्णाश्रमविरोधी यः शिष्टशास्त्रविरोधकः॥ ७० ॥
एष मार्गो हि निरधितिर्यग्योनौ च कारणं।
तिर्यग्योनिगतश्चैव कारणं स निरुच्यते॥ ७१ ॥
विविधा यातना स्थाने तिर्यग्योनौ च षड्विधे।
कारणे विषये चैव प्रतिघातस्तु सर्वशः॥ ७२ ॥
अनैश्वर्य्यन्तु तत्सर्वं प्रतिघातात्मकं स्मृतं।
इत्येषा तामसी वृत्तिर्भूतादीनां चतुर्विधा॥ ७३ ॥
सत्त्वस्थमात्रकश्चित्तं यथा सत्त्वप्रदर्शनात्।
तत्त्वानाञ्च तथा तत्त्वं दृष्ट्वा वै तत्त्वदर्शनात्॥ ७४ ॥
सत्त्वक्षेत्रज्ञनानात्वमेतज्ज्ञानार्थदर्शनं।
नानात्वदर्शनं ज्ञानं ज्ञानाद्योगमुच्यते॥ ७५ ॥
तेन बद्धस्य वै बन्धो मोक्षो मुक्तस्य तेन च।
संसारे विनिवृत्ते तु मुक्तो लिङ्गेन मुच्यते॥ ७६ ॥
निःसम्बन्धो ह्यचैतन्यः स्वात्मन्येवावतिष्ठते।
स्वात्मव्यवस्थितस्यापि विरूपाख्येन लिख्यते॥ ७७॥
इत्येतल्लक्षणं प्रोक्तं समासाज्ज्ञानमोक्षयोः।
स चापि त्रिविधः प्रोक्तो मोक्षो वै तत्त्वदर्शिभिः॥ ७८ ॥
पूर्वं वियोगो ज्ञानेन द्वितीयो रागसंक्षयात्।

लिङ्गाभावात्तु कैवल्यं कैवल्यात्तु निरञ्जनं ॥ ७९ ॥
निरञ्जनत्वाच्छुद्धस्तु ततो नेता[1] न विद्यते ।
तृष्णाक्षयात्तृतीयस्तु व्याख्यातं मोक्षकारणं ॥ ८० ॥
निमित्तमप्रतीघाते दृष्टशब्दादिलक्षणे[2] ।
अष्टावेतानि रूपाणि प्राकृतानि यथाक्रमं ॥ ८१ ॥
क्षेत्रज्ञेष्ववसज्यन्ते गुणमात्रात्मकानि तु ।
अत ऊर्द्धं प्रवक्ष्यामि वैराग्यं दोषदर्शनात् ॥ ८२ ॥
दिव्ये च मानुषे चैव विषये पञ्चलक्षणे ।
अप्रद्वेषोऽनभिष्वङ्गः कर्त्तव्यो दोषदर्शनात् ॥ ८३ ॥
तापप्रीतिविषादानां कार्य्यन्तु परिवर्जनं ।
एवं वैराग्यमास्थाय शरीरी निर्ममो भवेत् ॥ ८४ ॥
अनित्यमशिवं दुःखमिति बुद्धानुचिन्त्य च ।
त्रिशुद्धं कार्य्यकरणं सत्वान्येति वरान्तुय[3] ॥ ८५ ॥
परिपक्वकषायो हि कृत्स्नान् दोषान् प्रपश्यति ।
ततः प्रयाणकाले हि दौषैर्नैमित्तिकैस्तथा ॥ ८६ ॥
ऊष्मा प्रकुपितः काये तीव्रवायुसमीरितः ।
स शरीरमुपाश्रित्य कृत्स्नान् दोषान् रुणद्धि वै ॥ ८७ ॥
प्राणस्थानानि भिन्दन् हि छिन्दन्मर्माण्यतीत्य च ।

(१) नेता नेता इति ङ० च० ।
(२) लक्षणमिति क० छ० ।
(३) सत्वान् पतिवशानुपे इति ङ० सत्वान्येतु वशन्तपा इति च० सत्वा न्येति वरांतुपा इति छ० । एते पाठा लेखकप्रमादोत्पन्नाः । अत्र, सत्वोऽन्येति वसन् तपे इति पाठः सम्भावनीयः ।

शैत्यात्प्रकुपितो वायुरूर्द्ध्वन्तु क्रमते ततः ॥ ८८ ॥
स चायं सर्वभूतानां प्राणस्थानेष्ववस्थितः ।
समाघात् संवृते ज्ञाने संवृतेषु च कर्म्मसु ॥ ८९ ॥
स जीवोऽनभ्यधिष्ठानः कर्म्मभिः स्वैः पुराकृतैः ।
अष्टाङ्गप्राणवृत्तीर्वै स विच्यावयते पुनः ॥९०॥
शरीरं प्रजहंसो वै निरुच्छ्वासस्ततो भवेत् ।
एवं प्राणैः परित्यक्तो मृत इत्यभिधीयते ॥ ९१ ॥
यथेह लोके खद्योतं नीयमानमितस्ततः ।
रञ्जनं तद्वधे यत्तु नेता नेता न विद्यते ॥ ९२ ॥
तृष्णाक्षयस्तृतीयस्तु व्याख्यातं मोक्षलक्षणं ।
शब्दाद्ये विषये दोषविषये पञ्चलक्षणे ॥ ९३ ॥
अप्रद्वेषोऽनभिष्वङ्गः प्रीतितापविवर्ज्जनं ।
वैराग्यकारणं ह्येते प्रकृतीनां लयस्य च ॥ ९४॥
अष्टौ प्रकृतयो ज्ञेया पूर्वोक्ता वै यथाक्रमं ।
अव्यक्ताद्यास्तु विज्ञेया भूतान्ता प्रकृतेर्लयाः ॥ ९५ ॥
वर्णाश्रमाचारयुक्ताः शिष्टाः शास्त्राविरोधिनः ।
वर्णाश्रमाणां धर्म्मोऽयं देवस्थानेषु कारणं ॥ ९६ ॥
ब्रह्मादीनि पिशाचान्तान्यष्टौ स्थानानि देवता ।
ऐश्वर्य्यमणिमाद्यं हि कारणं ह्यष्टलक्षणं ॥ ९७ ॥
निमित्तमप्रतीघाते दृष्टे शब्दादिलक्षणे ।
अष्टावेतानि रूपाणि प्राकृतानि यथाक्रमं ॥ ९८॥
क्षेत्रज्ञेष्वनुसव्यक्तो गुणमात्रात्मकानि तु ।

प्रावृट्काले पृथक्त्वेन पश्यन्तीह न चक्षुषा ॥ ९९ ॥
पश्यन्त्येवंविधं सिद्धा जीवं दिव्येन चक्षुषा ।
ख्याविति स्थानपानश्च[१] योगीः प्रविशतस्तथा ॥१००॥
तिर्य्यगूर्द्धमधस्ताच्च धावतोऽपि यथाक्रमं ।
जीवप्राणास्तथालिङ्गं कारणञ्च चतुष्टयं ॥१०१॥
पर्य्यायवाचकैः शब्दैरेकार्थैः सोऽभिलिख्यते ।
व्यक्ताव्यक्ते प्रमाणोऽयं स वै रूपं तु कृत्स्नशः ॥१०२॥
अव्यक्तान्तगृहीतं च क्षेत्रज्ञाधिष्ठितश्च यत् ।
एवं ज्ञात्वा शुचिर्भूत्वा ज्ञानाद्वै विप्रमुच्यते ॥१०३॥
नष्टश्चैव यथा तत्त्वं तत्त्वानां तत्त्वदर्शनं ।
यथेष्टं परिनिर्य्याति भिन्ने देहे सुनिर्वृते ॥१०४॥
भिद्यते करणञ्चापि अव्यक्ताज्ञानिनस्ततः ।
मुक्तो गुणशरीरेण प्राणाद्येन तु सर्वशः ॥१०५॥
नान्यच्छरीरमादत्ते दग्धे वीजे यथाङ्कुरः ।
जीविकः[२] सर्वसंसाराद्वीजशारीरमानसः[३] ॥१०६॥
ज्ञानाच्चतुर्दशाच्छुद्धः प्रकृतिं सोऽनुवर्त्तते ।
प्रकृतिं सत्यमित्याहुर्विकारोऽनृतमुच्यते ॥१०७॥
तत्सद्भावोऽनृतं ज्ञेयं सद्भावः सत्यमुच्यते ।
अनामरूपचेत्रज्ञनामरूपं प्रपद्यते ॥१०८॥

---

(१) ख्यारितं ख्यानपानश्च इति ङ० ख्यावितं स्थानपानश्च इति च० ख्याविति स्थान्तपानश्च इति छ० ।

(२) जालीक इति क० च० छ० ।

(३) विश्वं शरीरमानस इति ङ०च० छ० ।

यस्माच्च क्षेत्रं विजानाति तस्मात् क्षेत्रज्ञ उच्यते ।
क्षेत्रप्रत्ययतो(१) यस्मात् क्षेत्रज्ञः शुभ उच्यते ॥ १०९ ॥
क्षेत्रज्ञः(२) स्मर्यते तस्मात् क्षेत्रज्ञैर्विभाव्यते ।
क्षेत्रत्वप्रत्ययं दृष्टं क्षेत्रज्ञः प्रत्ययी सदा ॥ ११० ॥
क्षयणात् करणाच्चैव क्षतत्राणात्तथैव च ।
भोज्यत्वाद्विषयत्वाच्च क्षेत्रं क्षेत्रविदो विदुः ॥ १११ ॥
महदाद्यं विशेषान्तं सवैरूप्यं विलक्षणं ।
विकारलक्षणं तद्वै साक्षरक्षरमेव(३) च ॥ ११२ ॥
तमेव च विकारन्तु यस्माद्वै क्षरते(४) पुनः ।
तस्माच्च कारणाच्चैव क्षरमित्यभिधीयते ॥ ११३ ॥
सुखदुःखमोहमात्रा भोज्यमित्यभिधीयते ।
अचेतत्वाद्धि विषयत्वाद्धि धर्मविभुः स्मृतः ॥ ११४ ॥
न क्षीयते न क्षरति विकारप्रसृतन्तु तत् ।
अक्षरत्वेन चाप्युक्तमक्षीणत्वात्तथैव च ॥ ११५ ॥
यस्मात्पूर्य्यनुशेते च तस्मात् पुरुष उच्यते ।
पुरप्रत्ययिको(५) यस्मात् पुरुषेत्यभिधीयते ॥ ११६ ॥
पुरुषं कथयस्वाथ कथन्तज्ज्ञैर्विभाव्यते ।
शुद्धो निरञ्जनाभावो ज्ञानाज्ञानविवर्जितः ॥ ११७ ॥

---

(१) क्षत्रज्ञः प्रयतो इति ङ० च० ।
(२) क्षत्रज्ञैरिति पाठः साधुः ।
(३) त्वक्षरक्षरमिति पाठः समीचीनः ।
(४) रक्ष्यते इति च० छ० ।
(५) पौरप्रत्ययिक इति पाठो विशुद्धः ।

अस्ति नास्तीति सोऽन्योवा बद्धो मुक्तो मतः स्थितः ।
नैर्वृतिकान्तनिर्द्दिष्टस्तत्र(१) स्वकिञ्च विद्यते॥ ११८॥
प्राऽऽवुत्वान्न तु देह्यो वै स्वतत्वात्मदर्शनः ।
आत्मप्रत्ययकारी सान्नूनश्चापि चेतुकं(२) ।
भावयात्ममनुमान्यं चिन्तयन्न प्रमुच्यते ॥ ११९॥
यदा पश्यति ज्ञातारं ज्ञान्तार्थं दर्शनात्मकं ।
दृश्यादृश्येषु निर्द्दिष्टस्तदा तद्बुद्धरं वरं ॥ १२०॥
एवं ज्ञात्वा स विज्ञाता ततः शान्तिं नियच्छति ।
कार्य्ये च कारणे चैव बुद्ध्यादौ भौतिके तदा ॥ १२१॥
संप्रयुक्तो वियुक्तो वा जीवतो वा मृतस्य च ।
विज्ञाता न च दृश्येत पृथक्त्वेनेह सर्व्वशः ॥ १२२॥
क्षेत्रात्मानं तमात्मानं(३) कारणात्मा नियच्छति ।
प्रकृतौ कारणे चैव स्वात्मन्येवोपतिष्ठति ॥ १२३॥
अस्ति नास्तीति सोऽन्यो वो दृश्यासुचेति वा पुनः ।
एकत्वं वा पृथक्त्वं वा क्षेत्रज्ञपुरुषेति वा ॥ १२४॥
आत्मवान् स निरात्मा वा चेतनोऽचेतनोऽपि वा ।
कर्त्ता वा सोऽप्यकर्त्ता वा भोक्ता वा भोज्यमेव वा ॥ १२५॥
यज्ज्ञात्वा न निवर्त्तन्ते क्षेत्रज्ञे तु निरञ्जने ।
अनाद्यं तदनाख्यानादग्राह्यत्वादहेतुमि ॥ १२६॥

---

(१) नैर्वृतिका तु निर्द्दिष्य सूक्त इति क० घ० छ० ।
(२) आत्मप्रत्ययकारी स न नूनं चाप्यहेतुकं इति पाठोऽत्र सम्भाव्यते ।
(३) तथात्मानमिति क० छ० ।

अप्रतर्क्यमचिन्त्यत्वादवाच्यत्वाच्च सर्वशः ।
नाभिलिप्यति तत्तत्त्वं सम्प्राप्य मनसा सह ॥१२७॥
क्षेत्रज्ञे निर्गुणे शुद्धे शान्ते क्षीणे निरञ्जने ।
व्यपेतसुखःदुखे च निरुद्धे शान्तिमागते ॥१२८॥
निरात्मके पुनस्तस्मिन् वाच्यावाच्यो न विद्यते ।
एतौ संहारविस्तारौ व्यक्ताव्यक्तौ ततः पुनः ॥१२९॥
सृजते ग्रसते चैव ग्रस्तः(१) पर्य्यवतिष्ठते ।
क्षेत्रज्ञाधिष्ठितं सर्वं पुनः सर्वं प्रवर्त्तते ॥१३०॥
अधिष्ठानप्रवृत्तेन तस्य ते(२) बुद्धिपूर्वकं ।
साधर्म्यवैधर्म्यकृतसंयोगो विधितस्तयोः ।
अनादिमान् स(३) संयोगो महापुरुषजः स्मृतः ॥१३१॥

यावच्च सर्गप्रतिसर्गकाल-
स्तावच्च तिष्ठति सुसंनिरुध्य ।
पूर्वं स्थितत्वे तदबुद्धिपूर्वं
प्रवर्त्तते तत्पुरुषार्थमेव ॥१३२॥
एषा निसर्गप्रतिसर्गं पूर्वं
प्रधानिकी चेश्वरकारिता च ।
अनाद्यनान्ता ह्यभिमानपूर्वकं
विभावयन्ती जगदभ्युपैति ॥१३३॥

---

(१) ग्रस्तो इति क० ङ० छ० ज० ।
(२) अधिष्ठानप्रवृत्तैतस्तस्य वै इति पाठः शुद्धः ।
(३) अनादिमांश्चेत् इति क० छ० ज० ।

इत्येष प्राकृतः सर्गस्तृतीयो हेतुलक्षणः ।
उक्तो ह्यस्मिंस्तदात्यन्तं करप(१)स्तत् प्रमुच्यते ॥१२४॥
इत्येष प्रतिसर्गो वस्त्रिविधः कीर्त्तितो मया ।
विस्तरेणानुपूर्व्व्या च भूयः किं वर्णयाम्यहं ॥१२५॥

इति श्रीमहापुराणे वायुप्रोक्ते अनुषङ्गपादो नाम
चत्वारिंशोऽध्यायः समाप्तः ।

---

(१) करण इति ख० घ० ङ० करज इति ज० । अत्र कविभिरिति पाठः साधुः ।

## अथ एकचत्वारिंशोऽध्यायः।

अनुषङ्गपादः।

ऋषय ऊचुः। सूत सुमहदाख्यानं भवता परिकीर्त्तितं।
प्रजानां मनुभिः सार्द्धं देवानामृषिभिः सह ॥१॥
पितृगन्धर्वभूतानां पिशाचोरगरक्षसां।
दैत्यानां दानवानां च यक्षाणामेव पक्षिणां ॥२॥
अत्यद्भुतानि कर्म्माणि विधिमान् धर्म्मनिश्चयः।
विचित्राश्च कथायोगा जन्म चाग्र्यमनुत्तमं ॥३॥
तत्कथ्यमानमस्माकं भवता श्लक्ष्णया गिरा।
मनःकर्णसुखं सौते प्रीणात्यामृतसम्भवं ॥४॥
एवमाराध्य ते सूतं सत्कृत्य(१) च महर्षयः।
पप्रच्छुः सचिणः सर्वे पुनः सर्गप्रवर्त्तनं ॥५॥
कथं सूत महाप्राज्ञ पुनः सर्गः प्रपत्स्यते।
स्कन्धेषु सम्प्रलीनेषु गुणसाम्ये तमोमये ॥६॥
विकारेष्वविसृष्टेषु अव्यक्ते चात्मनि स्थिते।
अप्रवृत्ते ब्राह्मणात्(२) महासायोऽव्ययैस्तदा।
कथं प्रपत्स्यते सर्गस्तन्नः प्रब्रूहि पृच्छतां ॥७॥

---

(१) सत्कृताश्चेति क०।
(२) अप्रवृत्तौ ब्रह्मयत्नु इति पाठोऽर्थप्रतिपत्तिकरः।

एवमुक्तास्ततः सूतस्तदा तौ लोमहर्षणः।
व्याख्यातुमुपचक्राम पुनः सर्गप्रवर्त्तनं ॥८॥
अहं वो वर्त्तयिष्यामि यथा सर्गः प्रपद्यते।
पूर्ववत्स तु विज्ञेयः समासात्तं निबोधत ॥९॥
दृष्टं चैवानुमेयञ्च तर्कं वक्ष्यामि युक्तितः।
तस्माद्वाचो[१] निवर्त्तन्ते अप्राप्य मनसा सह ॥१०॥
अव्यक्तवत् परोक्षत्वाद्ग्रहणं तद्दुरासदं।
विकारैः प्रतिसंसृष्टे[२] गुणसाम्ये निवर्त्तते ॥११॥
प्रधानं पुरुषाणाञ्च साधर्म्येणैव तिष्ठति।
धर्माधर्मौ प्रलीयेते अव्यक्तौ प्राणिनां सदा ॥१२॥
सत्त्वमात्रात्मको धर्म्मो गुणसत्त्वे प्रतिष्ठितः।
तमोमात्रात्मकोऽधर्म्मो गुणे तमसि तिष्ठति ॥१३॥
अविभागवतावेतौ गुणसाम्यस्थितावुभौ।
सर्वकार्य्ये[३] बुद्धिपूर्वं प्रधानस्य प्रपद्यते ॥१४॥
अबुद्धिपूर्वं क्षेत्रज्ञ अधिष्ठास्यति तान् गुणान्।
एवं तानभिमानेन प्रपद्येत पुरस्सरा[४] ॥१५॥
यदा प्रवर्त्तितव्यन्तु क्षेत्रक्षेत्रज्ञयोर्द्वयोः।
भोज्यभोक्तृत्वसम्बन्धं प्रपद्येते युतावुभौ ॥१६॥

---

(१) यस्माद्वाचो इति पाठः सुसङ्गतः।
(२) विकारैः प्रतिसंसृष्टो इति पाठो विशुद्धः।
(३) सर्वकार्य्यमिति पाठः साधुः।
(४) पुरःसरमिति ख० ग०।

तस्मात्कारणमव्यक्तं साम्ये स्थिता गुणात्मकाम्[१] ।
क्षेत्रज्ञाधिष्ठितं तच्च वैषम्यं भजते तु तत् ॥१७॥
ततः प्रपत्स्यते व्यक्तं क्षेत्रक्षेत्रज्ञयोर्द्वयोः ।
क्षेत्रज्ञाधिष्ठितं सत्त्वं विकारं जनयिष्यति ॥१८॥
महदाद्यं विशेषान्तं चतुर्विंशगुणात्मकं ।
क्षेत्रज्ञस्य प्रधानस्य पुरुषस्य प्रपत्स्यते ॥१९॥
ब्रह्माण्डे प्रथमः सोऽथ भविता चेश्वरः पुनः ।
ततो शेषस्य कृत्स्नस्य सर्वभूतपतिः शिवः ॥२०॥
ईश्वरः सर्व्वभूतानां ब्रह्मा ब्रह्ममयो महान् ।
आदिदेवः प्रधानस्यानुग्रहाय प्रवक्ष्यते[२] ॥२१॥
अनाद्यौ वरमुत्पाद्यौ[३] उभौ सूक्ष्मौ तु तौ स्मृतौ ।
अनादिसंयोगयुतौ सर्वक्षेत्रज्ञमेव च ॥२२॥
अबुद्धिपूर्वकं युक्तौ सम्यक्तौ तु वुरौ तदा ।
अप्रत्ययमनाद्यं च स्थितावुदकमप्ययः[४] ॥२३॥
प्रवृत्ते पूर्वतः पूर्वं पुनः सर्गे प्रपत्स्यते ।
अग्रागुणैः प्रवर्त्तन्ते रजःसत्वतमात्मकं ॥२४॥

प्रवृत्तिकाले रजसाभिपन्न-
महत्त्वभूतादिविशेष्यताश्च ।

---

(१) गुणात्मकमिति पाठः समीचीनः ।
(२) प्रपद्यते इति ड० ।
(३) स्वयमुत्पन्नौ इति पाठः साधीयान् ।
(४) एष श्लोको लिपिकरप्रमादाद्भ्रान्तिपूर्णः ।

विशेषतां चेन्द्रियतायाश्च यान्ति
गुणावसाने(१) पतिभिर्मनुष्याः ॥२५॥
सत्याभिध्यायिन(२) स्तस्य ध्यायिनः सन्निमित्तकं ।
रजःसत्वतमा व्यक्ता विधर्म्माणः परस्परं ॥२६॥
आद्यन्ते संप्रपत्स्यन्ते क्षेत्रतज्ज्ञास्तु सर्वशः ।
संसिद्धकार्य्यकरणा उत्पद्यन्तेऽभिमानिनः ॥२७॥
सर्वे सत्वाः प्रपद्यन्ते अव्यक्तात्पूर्वमेव च ।
प्रसूते या च सुवद्याः साधिकाश्चाप्यसाधिका ॥२८॥
संसरन्तस्तु ते सर्वे स्थानप्रकर्षैः सह ।
कार्य्याणि प्रतिपत्स्यन्ते उत्पद्यन्ते पुनः पुनः ॥२९॥
गुणमात्रात्मकाश्चैव धर्म्माधर्म्मौ परस्परं ।
आरभन्तीह चान्योन्यं वरेणानुग्रहेण च ॥३०॥
सर्वे तुल्याः प्रवृत्तार्थं सर्गादौ यान्ति विक्रियां ।
गुणास्तत् प्रतिधावन्ते तस्मात्तत् तस्य रोचते ॥३१॥
गुणास्ते यानि सर्वाणि प्राक् सृष्टेः प्रतिपेदिरे ।
तान्येव प्रतिपद्यन्ते सृज्यमानाः पुनः पुनः ॥३२॥
हिंसाहिंस्रे मृदुक्रूरे धर्म्माधर्म्मावृतानृते ।
तद्भाविताः प्रपद्यन्ते तस्मात्तत्तस्य रोचते ॥३३॥
महाभूतेषु नानात्वमिन्द्रियार्थेषु मूर्त्तिषु ।
विप्रयोगाश्च भूतानां गुणेभ्यः संप्रवर्त्तते ॥३४॥

---

(१) गुणावधानौ इति ख० घ० ।
(२) सत्वाभिध्यायिन इति क० ।

इत्येष वो मया ख्यातः पुनः सर्गः समासतः।
समासादेव वक्ष्यामि ब्रह्मणोऽथ समुद्भवं ॥३५॥
अव्यक्तात्कारणात्तस्मान्नित्यात् सदसदात्मकात्।
प्रधानपुरुषाभ्यान्तु जायते च महेश्वरः ॥३६॥
स पुनः सम्भवपिता[१] जायते ब्रह्मसंज्ञितः।
सृजते स पुनर्लोकानभिमानगुणात्मकान् ॥३७॥
अहङ्कारस्तु महतस्तस्माद्भूतानि चात्मनः।
युगपत् सम्प्रवर्त्तन्ते भूतान्येवेन्द्रियाणि च।
भूतभेदाश्च भूतेभ्यः इति सर्गः प्रवर्त्तते ॥३८॥
विस्तरावयवस्तेषां यथाप्रज्ञं यथाश्रुतं।
कीर्त्तितं वो यथा पूर्वं तथैवाभ्युपधार्य्यतां ॥३९॥
एतच्छ्रुत्वा नैमिषेयास्तदानीं
लोकोत्पत्तिं संस्थितिं च व्ययञ्च[२]।
तस्मिन् सत्रे[३]ऽवभृथं[४] प्राप्य शुद्धाः
पुण्यं लोकमृषयः प्राप्नुवन्ति[५] ॥४०॥
यथा यूयं त्रिधिवद्देवतादी-
निष्ट्वा[६] चैवावभृथं प्राप्य शुद्धाः[७]।

(१) सम्भावयिता इति ङ० च०।
(२) चाव्ययञ्च इति ङ० च०, चाव्ययञ्च इति छ०।
(३) सेत्रे इति छ०।
(४) प्रभृथमिति ङ० च०, ऽवभृतमिति छ०।
(५) प्राप्नवन्तः इति पाठः समीचीनः।
(६) त्रिधिदेवतादीनिष्ट्वा इति छ०।
(७) पुण्यं लोकमृषयः प्राप्नुवन्ति ॥ ४० ॥ यथा यूयं विधिवद्देवतादीनिष्ट्वा चैवावभृथं प्राप्य शुद्धाः इत्यन्तपाठो ङ० च० पुस्तकयोर्न विद्यते।

त्यक्त्वा देहानायुषोऽन्ते कृतार्थान्
पुण्यान् लोकान् प्राप्य यथेष्टं चरिष्यथ(१) ॥४१॥
एते ते नैमिषेया वै इष्ट्वा सृष्ट्वा च वै तदा।
जग्मुस्त्वायुषस्त्वाताः स्वर्गं सर्वे तु सत्रिणः॥४२॥
विप्रास्तथा यूयमपि इष्ट्वा बहुविधैर्मखैः।
आयुषोऽन्ते ततः स्वर्गं गन्तारः स्थः द्विजोत्तमाः ॥४३॥
प्रक्रिया प्रथमे पादे कथावस्तुपरिग्रहः।
अनुषङ्ग उपोद्घात उपसंहार एव च ॥४४॥
एवमेतच्चतुष्पादं पुराणं लोकसम्मतं।
उवाच भगवान् साक्षाद्वायुर्लोकहिते रतः ॥४५॥
नैमिषे सत्रमासाद्य मुनिभ्यो मुनिसत्तमाः।
तत्प्रसादादसंदिग्धं भूतोत्पत्तिलयानि च॥४६॥
प्राधानिकीमिमां सृष्टिं तथैवेश्वरकारितां।
सम्यग् विदित्वा मेधावी न मोहमधिगच्छति ॥४७॥
इदं यो ब्राह्मणो विद्वानितिहासं पुरातनं॥
शृणुयाच्छ्रावयेद्वापि तथाध्यापयतेऽपि च॥४८॥
स्थानेषु स महेन्द्रस्य मोदते शाश्वतीः समाः।
ब्रह्मसायोज्यगो भूत्वा ब्रह्मणा सह मोदते ॥४९॥
तेषां कीर्त्तिमतां कीर्त्तिं प्रजेशानां महात्मनां।

(१) आदर्शपुस्तकमात्रे, एतत्कृत्वेत्यादिपद्यद्वये बहुलपाठान्तरदर्शना-च्छन्दोभङ्गदर्शनाच्च एततपद्यद्वयमशुद्धमेव मन्यामहे। अनयोश्छन्दः शालि-नीति ज्ञेयं।

प्रजयन् पृथिवीमानां ब्रह्मभूयाय गच्छति ॥५०॥
धन्यं यशस्यमायुष्यं पुण्यं वेदैश्च सम्मतं ।
कृष्णद्वैपायनेनोक्तं पुराणं ब्रह्मवादिना ॥५१॥
मन्वन्तरेश्वराणां च यः कीर्त्तिं प्रथयेदिमां ॥
देवतानामृषीणाञ्च भूरिद्रविणतेजसां ।
स सर्वैर्मुच्यते पापैः पुण्यञ्च महदाप्नुयात् ॥५२॥
यश्चेदं श्रावयेद्विद्वान् सदा पर्वणि पर्वणि ।
धूतपाप्मा जितस्वर्गो ब्रह्मभूयाय कल्पते ॥५३॥
यश्चेदं श्रावयेच्छ्राद्धे ब्राह्मणान् पादमन्ततः ।
अक्षयं सार्वकामीयं पितॄंस्तच्चोपतिष्ठति ॥५४॥
यस्मात्पुरा ह्यनक्तीदं पुराणन्तेन चोच्यते ।
निरुक्तमस्य यो वेद सर्वपापैः प्रमुच्यते ॥५५॥
तथैव त्रिषु वर्णेषु ये मनुष्याः प्रधानतः ।
इतिहासमिदं श्रुत्वा धर्माय विदधे मतिं ॥५६॥
यावन्त्यस्य शरीरेषु रोमकूपाणि सर्वशः ।
तावत्कोटिसहस्राणि वर्षाणां दिवि मोदते ।
ब्रह्मसायोज्यगो भूत्वा दैवतैः सह मोदते ॥५७॥
सर्व्वपापहरं पुण्यं पवित्रञ्च यशस्वि च ।
ब्रह्मा ददौ शास्त्रमिदं पुराणं मातरिश्वने ॥५८॥
तस्माच्चोशनसा प्राप्तं तस्माच्चापि बृहस्पतिः ।
बृहस्पतिस्तु प्रोवाच सवित्रे तदनन्तरं ॥५९॥
सविता मृत्यवे प्राह मृत्युश्चेन्द्राय वै पुनः ।

इन्द्रस्यापि वसिष्ठाय सोऽपि सारस्वताय च ॥६०॥
सारस्वतस्त्रिधाम्ने च त्रिधामा च शरद्वते।
शरद्वतस्त्रिविष्टाय सोऽन्तरिक्षाय दत्तवान् ॥६१॥
वर्षिणे चान्तरिक्षो वै सोऽपि चय्यारुणाय च।
चय्यारुणो धनञ्जये स च प्रादात् कृतञ्जये ॥६२॥
कृतञ्जयात्तृणञ्जयो भरद्वाजाय सोऽप्यथ।
गौतमाय भरद्वाजः सोऽपि निर्य्यन्तरे पुनः ॥६३॥
निर्यन्तरस्तु प्रोवाच तथा वाजश्रवाय[1] च।
स ददौ सोमशुष्माय स ददौ तृणविन्दवे ॥६४॥
तृणविन्दुस्तु दक्षाय दक्षः प्रोवाच शक्तये।
शक्तेः पराशरस्यापि गर्भस्थः श्रुतवानिदं ॥६५॥
पराशराज्जातुकर्णस्तस्माद्द्वैपायनः प्रभुः।
द्वैपायनात् पुनश्चापि मया प्रोक्तं द्विजोत्तमाः ॥६६॥
शांशपायन उवाच। मया वै तत्पुनः प्रोक्तं पुत्रायामितबुद्धये।
इत्येव वाचा ब्रह्मादिगुरुणा समुदाहृता ॥६७॥
नमस्कार्य्याश्च गुरवः प्रयत्नेन मनीषिभिः।
धन्यं यशस्यमायुष्यं पुण्यं सर्वार्थसाधकं ॥६८॥
पापघ्नं नियमेनेदं श्रोतव्यं ब्राह्मणैः सदा।
नाशुचौ नापि पापाय नाप्यसंवत्सरोषिते ॥६९॥
नाश्रद्दधानाविदुषे नापुत्राय कथञ्चन।
नाहिताय प्रदातव्यं पवित्रमिदमुत्तमं ॥७०॥

(१) वाजश्रवायेति च०।

अव्यक्तं वै यस्य योनिं वदन्ति
व्यक्तं देहं कालमन्तर्गतञ्च ।
वह्निं वक्त्रं चन्द्रसूर्य्यौ च नेत्रे
दिशः श्रोत्रे घ्राणमाहुश्च वायुं ॥७१॥
वाचो वेदांश्चान्तरिक्षं शरीरं
क्षितिं पादौ तारका रोमकूपान् ।
सर्वाणि चाङ्गानि तथैव तानि
विद्याश्चाङ्गानि यस्य पुच्छं ॥७२॥
तं देवदेवं जननं जनानां
सर्व्वेषु लोकेषु प्रतिष्ठितञ्च(१) ।
वरं वराणां वरदं महेश्वरं
ब्रह्माणमादिं प्रयतो नमस्ये ॥७३॥

इति श्रीमहापुराणे वायुप्रोक्ते अनुषङ्गपादे सृष्टिवर्णनं नाम
एकचत्वारिंशोऽध्यायः समाप्तः ।

---

(१) युञ्जात्मकं सत्यलोकप्रतिष्ठितञ्च इति क० ङ० ।

# अथ द्विचत्वारिंशोऽध्यायः।

व्याससंशयापनोदनं।

शौनकादिऋषयः ऊचुः।

सूत सूत महाभाग त्वया भगवता सता।
व्यासप्रसादाधिगतशास्त्रसम्बोधनेन च ॥१॥
अष्टादशपुराणानि सेतिहासानि चानघ।
उपक्रमोपसंहारविधिनोक्तानि कृत्स्नशः ॥२॥
चतुर्दशसहस्रं च मात्स्यं प्रोक्तमतिस्फुटम्।
तत्संख्यकं भविष्यञ्च प्रोक्तं पञ्चशताधिकम् ॥३॥
मार्कण्डेयं महारम्यं प्रोक्तं नवसहस्रकं।
कथितं ब्रह्मवैवर्त्तमष्टादशसहस्रकं ॥४॥
शतोत्तरञ्च ब्रह्माण्डं सूर्य्यसंख्यासहस्रकं।
अथ भागवतं दिव्यं अष्टादशसहस्रकं ॥५॥
सहस्राणि दशैवोक्तं पुराणं ब्रह्मनामकं।
अयुतश्लोकघटितं पुराणं वामनाभिधम् ॥६॥
तथैवायुतसंख्यातं षट्शताधिकमादिकं।
त्रयोविंशतिसाहस्रमनिलं तद्धृतं शुभं ॥७॥
त्रयोविंशतिसाहस्रं नारदीयमुदाहृतं।
एकोनविंशसाहस्रं वैनतेयमुदाहृतं ॥८॥
सहस्रपञ्चपञ्चाशत् प्रोक्तं पाद्मं सुविस्तरं।
सप्तदशसहस्रन्तु कूर्मं प्रोक्तं मनोहरं ॥९॥

चतुर्विंशतिसाहस्रं शौकरं परमाद्भुतं ।
एकाशीतिसहस्राणि स्कान्दमुक्तं सुविस्तृतं ॥१०॥
एवमष्टादशोक्तानि पुराणानि ऋषन्ति च ।
पुराणेष्वेषु बहवो धर्मास्ते विनिरूपिताः ॥११॥
रागिणाञ्च विरागाणां यतीनां ब्रह्मचारिणां ।
गृहस्थानां वनस्थानां स्त्रीशूद्राणां विशेषतः ॥१२॥
ब्राह्मणक्षत्रियविशां ये च सङ्करजातयः ।
गङ्गाद्या अमहानद्यो यज्ञव्रततपांसि च ॥१३॥
अनेकविधदानानि यमाश्च नियमैः सह ।
योगधर्मा बहुविधाः सांख्या भागवतास्तथा ॥१४॥
भक्तिमार्गा ज्ञानमार्गा वैराग्यानिलनीरजाः ।
उपासनविधिश्चोक्तः कर्मसंशुद्धिचेतसां ॥१५॥
ब्राह्मं शैवं वैष्णवं च सौरं शाक्तं तथार्हतं ।
षड्दर्शनानि चोक्तानि स्वभावनियतानि च ॥१६॥
एतदन्यच्च विविधं पुराणेषु निरूपितं ।
अतः परं किमप्यस्ति न वा बोद्धव्यमुत्तमं ॥१७॥
न ज्ञायेत यदि व्यासो गोपयेदथ वा भवान् ।
अत्र नः संशयं छिन्धि पूर्णः पौराणिको यतः ॥१८॥
सूत उवाच । शृणु शौनक वक्ष्यामि प्रश्नमेनं सुदुर्लभं ।
अतिगोप्यतरं दिव्यमनाख्येयं प्रचक्षते ॥१९॥
पराशरसुतो व्यासः कृत्वा पौराणिकीं कथां ।
सर्ववेदार्थघटितां चिन्तयामास चेतसि ॥२०॥

वर्णाश्रमवतां धर्मा मया सम्यगुदाहृतः ।
मुक्तिमार्गा बहुविधा उक्ता वेदाविरोधतः ॥२१॥
जीवेश्वरब्रह्मभेदो निरस्तः सूत्रनिर्णये ।
निरूपितं परं ब्रह्म श्रुतियुक्तविचारतः ॥२२॥
अक्षरं परमं ब्रह्म परमात्मा परं पदं ।
यदर्थं ब्रह्मचर्यादिवाणप्रस्थयतिव्रतं ॥२३॥
आचरन्ति महाप्राज्ञा धारणाश्च पृथग्विधां ।
आसनं प्राणरोधश्च प्रत्याहारश्च धारणा ॥२४॥
ध्यानं समाधिरेतानि यमैश्च नियमैः सह ।
अष्टाङ्गानि यदर्थञ्च चरन्ति मुनिपुङ्गवाः ॥२५॥
यदर्थं कर्म कुर्वन्ति वेदाज्ञामात्रतत्पराः ।
परार्पणधिया सम्यग्निष्कामाः कलिलोज्झिताः ॥२६॥
यजज्ञप्तये निराकर्त्तुं पापावरणमात्मनः ।
गङ्गादितीर्थचर्याणि निषेवन्ते शुचिव्रताः ॥२७॥
तद्ब्रह्म परमं शुद्धमनाद्यन्तमनामयं ।
नित्यं सर्वगतं स्थाणु कूटस्थं कूटवर्जितं ॥२८॥
सर्वेन्द्रियचराभासं प्राकृतेन्द्रियवर्जितं ।
दिक्कालाद्यनवच्छिन्नं नित्यचिन्मात्रमव्ययं ॥२९॥
अध्यास्तं सर्वत्रयत्र विश्वमेतत्प्रकाशते ।
विश्वस्मिन्नपि नान्वेति निर्विकारश्च रज्जुवत् ॥३०॥
सम्यग्विचारितं यद्वत्फेनोर्मिबुद्बुदोदकं ।
तथा विचारितं ब्रह्म विश्वस्मान्न पृथग्भवेत् ॥३१॥

सर्वं ब्रह्मैव नानात्वं नास्तीति निगमा जगुः ।
यस्माद्भवन्ति ब्रह्माण्डकोटयो न भवन्ति(१) च ॥२२॥
यदुन्मेषनिमेषाभ्यां जगतां प्रलयोदयौ ।
भवेतां या परा शक्तिर्यदाधारतया स्थिता ॥२३॥
यस्मिन्निदं यतश्चेदं येनेदं यदिदं स्मृतं ।
यदज्ञानाज्जगद्भाति यस्मिन् ज्ञाते जगन्न हि ॥२४॥
असत्यं यज्जडं दुःखं अवस्थेति निरूपितं ।
विपरीतमतो यद्वै सच्चिदानन्दमूर्त्तिकं ॥२५॥
जीवे जाग्रति विश्वाख्यं स्वप्ने यत्तैजसं स्मृतं ।
सुषुप्तौ प्राज्ञसंज्ञं यत्सर्वावस्थासु संस्मृतं(२) ॥२६॥
यच्चक्षुषां चक्षुरथ श्रोत्राणां श्रोत्रमप्यति ।
त्वक् त्वचां रसनं तस्य घ्राणं घ्राणस्य यद्विदुः ॥२७॥
बुद्धिर्ज्ञानेन च प्राणाः क्रियाशक्त्या निरन्तरं ।
यन्नेशिरे समभ्येतुं ज्ञातुं च परमार्थतः ॥२८॥
रज्जावहिर्मरौ वारि नीलिमा गगने यथा ।
असद्विश्वमिदं भाति यस्मिन्नज्ञानकल्पितं ॥२९॥
घटावच्छिन्न एवायं महाकाशो विभिद्यते ।
कार्य्योपाधिपरिच्छिन्नं तद्वद्यज्जीवसंज्ञिकं ॥४०॥
मायया चित्रकारिण्या विचित्रगुणशीलया ।
ब्रह्माण्डं चित्रमतुलं यस्मिन् भित्ताविवार्पितं ॥४१॥

(१) ब्रह्माण्डकोटयः प्रलयन्ति इति पाठः समीचीनः ।
(२) तत् स्मृतमिति पाठः साधुः ।

धावतोऽन्यानतिक्रान्तं वहतो वागगोचरं।
वेदवेदान्तविद्भिश्चैर्विनिर्णीतं तदक्षरं ॥४२॥
अक्षरान्न परं किञ्चित्सा काष्ठा सा परा गतिः।
इत्येवं श्रूयते वेदे बहुधाऽपि विचारिते ॥४३॥
अक्षरस्यात्मनश्चापि स्वात्मरूपतया स्थितं।
परमानन्दसन्दोहरूपमानन्दविग्रहं ॥४४॥
लीलाविलासरसिकं वल्लवीयूथमध्यगं।
शिखिपिच्छकिरीटेन भास्वद्रत्नचितेन च ॥४५॥
उल्लसद्विद्युदाटोपकुण्डलाभ्यां विराजितं।
कर्णोपान्तचरन्नेत्रखञ्जरीटमनोहरं ॥४६॥
कुञ्जकुञ्जप्रियावृन्दविलासरतिलम्पटम्।
पीताम्बरधरं दिव्यं चन्दनालेपमण्डितं ॥४७॥
अधरामृतसंसिक्तवेणुनादेन वल्लवीः।
मोहयन्तश्चिदानन्दमनङ्गमदभञ्जनं ॥४८॥
कोटिकामकलापूर्णं कोटिचन्द्रांशुनिर्मलं।
त्रिरेखकण्ठविलसद्रत्नगुञ्जामृगाकुलं ॥४९॥
यमुनापुलिने तुङ्गे तमालवनकानने।
कदम्बचम्पकाशोकपारिजातमनोहरे ॥५०॥
शिखिपारावतशुकपिककोलाहलाकुले।
निरोधार्थं गवामेव धावमानमितस्ततः ॥५१॥
राधाविलासरसिकं कृष्णाख्यं पुरुषं परं।
श्रुतवानस्मि वेदेभ्यो यतस्तद्गोचरोऽभवत् ॥५२॥

एवं ब्रह्मणि चिन्मात्रे निर्गुणे भेदवर्जिते।
गोलोकसंज्ञिके कृष्णो दीव्यतीति श्रुतं मया॥५३॥
नातः परतरं किञ्चिन्निगमागमयोरपि।
तथापि निगमो वक्ति ह्यक्षरात् परतः परः॥५४॥
गोलोकवासी भगवानक्षरात् पर उच्यते।
तस्मादपि परः कोऽसौ गीयते श्रुतिभिः सदा॥५५॥
उद्दिष्टो वेदवचनैर्विशेषो ज्ञायते कथं।
श्रुतेर्वार्थोऽन्यथा बोध्यः परतस्त्वक्षरादिति॥५६॥
श्रुत्यर्थे संशयापन्नो व्यासः सत्यवतीसुतः।
विचारयामास चिरन्न प्रपेदे यथातथं॥५७॥
सूत उवाच। विचारयन्नपि मुनिर्नाप वेदार्थनिश्चयं।
वेदो नारायणः साक्षाद्यत्र मुह्यन्ति सूरयः॥५८॥
तदापि महतीमार्त्तिं सतां हृदयतापिनीं।
पुनर्विचारयामास कं व्रजामि करोमि किं॥५९॥
पृच्छामि(१) न जगत्यस्मिन् सर्वज्ञं सर्वदर्शनं।
अज्ञानादन्यतमं लोके सन्देहविनिवर्त्तकं॥६०॥
मेरोः कुहरिणीं गत्वा चचार परमन्तपः।
यत्र कान्तस्वरस्फूर्जज्ज्योत्स्नाजालैर्निरन्तरं॥६१॥
सदा प्रबाधते विश्वकृत्तमःस्तोमं दुरन्तुदं।
चकास्ते यत्र परमं कान्तारमतिसुन्दरं॥६२॥

---

(१) पश्यामीति पाठः साधीयान्।

नानाद्रुमलताकुञ्जकूजत्पक्षिनिनादितं ।
क्षुत्पिपासाभयक्रोधतापग्लानिविवर्जितं ॥६३॥
जलाशयैर्बहुविधैः पद्मिनीखण्डमण्डितैः ।
जातरूपशिलाबद्धतटसञ्चारपक्षिभिः ॥६४॥
युक्तमम्भोजपवनैः सेव्यमानं समन्ततः । -
शिवैरथ्यासितश्यावैर्हिंस्रैः सत्वैः समुज्झितं ॥६५॥
निर्जनं द्विव्यलतिकाप्रियखण्डविराजितं ।
शुकैः पारावतैर्हंसैरुन्मदन्मत्तकोकिलम् ॥६६॥
उत्पतत्पद्मरजसां पटलामोददिङ्मुखं ।
तत्रापि काञ्चनी दिव्या गुहा परमशोभना ॥६७॥
तां प्रविश्य जिताहारो जितचित्तो जितासनः ।
सस्मार वेदांश्चतुरस्तदेकाग्रमना मुनिः ॥६८॥
त्रयी जगाम वरदां [१] शतस्य [२] स्मरतोऽस्य हि ।
प्रादुरासंस्ततो वेदाश्चत्वारश्चारुदर्शनाः ॥६९॥
स्फुरत्पद्मपलाशाक्षा जटामुकुटधारिणः ।
कुशमुष्टिकराम्भोजा मृगत्वङ्मण्डितांसकाः ॥७०॥
स्वरैः शोभनैः कृतवदनाः प्रणवाम्बराः ।
कणवर्गाङ्गवैवर्णः पञ्चावयवपाणयः ॥७१॥
पवर्गदक्षचरणा वामपादास्तवर्गतः ।
आन्तरन्थ्यन्तवर्णाश्च येषां कुक्षिदयात्मकौ [३] ॥७२॥

---

(१) शुभदा इति पाठः समीचीनः ।
(२) तत्र तां इति पाठः साधुः ।
(३) कुक्षिदयात्मकाः इति पाठः सङ्गतः ।

नाभिनिद्राः कान्तपृष्ठा मोदराः यरलवोल्कषाः ।
अग्निदर्शाग्रहचिरा धराग्रीवा भूतांसकाः ॥७३॥
अन्तस्थसन्धिसंस्थाना वैखरीवाग्विजृम्भिताः ।
अपश्यन्मथुरामेषां हृदयाम्भोजकल्पितां ॥७४॥
हरेर्भगवतः साक्षादाविर्भावस्थली हि सा ।
काशीमपश्यद्भ्रुमध्ये मायामाधारसंस्थितां ॥७५॥
लिङ्गदेशे ततः काञ्चीमवन्तीं नाभिमण्डले ।
कण्ठस्थां द्वारकामेषां प्रयागं प्राणगन्तथा ॥७६॥
सव्यापसव्ययोस्तेषां गङ्गाऽपि यमुना नदी ।
मध्ये सरस्वती साक्षाद्गयाक्षेत्रन्तथानने ॥७७॥
हनुग्रीवामध्यगतं प्रभासक्षेत्रमुत्तमं ।
वदर्य्याश्रममेतेषां ब्रह्मरन्ध्रे ददर्श ह ॥७८॥
पौण्ड्रवर्धननेपालपीठं नयनयोर्युगे ।
पीठम्पूर्णगिरिन्नाम ललाटे समदृश्यत ॥७९॥
कण्ठे च मथुरापीठं काञ्चीपीठं कटिस्थितं ।
जालन्धरं तथा पीठं स्तनदेशेऽप्यदृश्यत ॥८०॥
भृगुपीठं कर्णदेशे अयोध्यां नासिकापुटे ।
ब्रह्मरन्ध्रे स्थितं ब्राह्म्यं शैवं सीमन्तसीमनि ॥८१॥
शाक्तं जिह्वाग्रधिषणं वैष्णवं हृदयाम्बुजे ।
सौरञ्चक्षुःप्रदेशस्थं बौद्धञ्छायासुसङ्गतं ॥८२॥
सौत्रामणिं कण्ठदेशे पशुबन्धमथोरसि ।
वाजपेयं कटितटे अग्निष्टोमं तथानने ॥८३॥

अश्वमेधं कटितटे नरमेधमथोदरे।
राजसूयं शिरोदेशे आवसथ्यं तथाऽधरे ॥८४॥
ऊर्द्धोष्ठे दक्षिणाग्निश्च गार्हपत्यं मुखान्तरे ।
हव्यं श्रुतौ मन्त्रभेदांस्तथा रोमस्ववस्थितान्।
भृत्यैरिव महाराजं पुराणैर्न्यायमिश्रितैः ॥८५॥
संहिताभिश्च तन्त्रैश्च पृथक्पृथगुपासितान्।
कर्मज्ञानोपासनाभिर्जनानुग्रहकारकान् ॥८६॥
दृष्ट्वा सुविस्मितमना मुनिः कृष्णो बभूव तान्।
अद्भुततेजोमयान् दिव्यांस्तपतोऽर्कानिव च्युतान्[१] ।
ज्वलतोऽग्नीनिवोदर्कान् कोटीन्दुसमदर्शनान् ॥८७॥
ववन्दे सहसोत्थाय दण्डवत् पतितो मुनिः।
कृतार्थोऽहं कृतार्थोऽहं कृतार्थोऽहमितीरयन् ॥८८॥
अद्य मे सफलं जन्म अद्य मे सफलं मनः[२] ।
अद्य मे सफलञ्चायुर्यद्भवन्तोऽक्षिगोचराः ॥८९॥
अलौकिकं लौकिकञ्च यत् किञ्चिदपि विद्यते ।
न तद्वोऽविदितं वेद्यं भूतं भव्यं भवच्च यत् ॥९०॥
न प्रवृत्तिफला यूयं दर्शयन्तोऽपि तान् सदा।
यदृच्छाकरसङ्कोचविधानायेह [३] रागिणां ॥९१॥
प्रपञ्चस्यापि मिथ्यात्वे ब्रह्मत्वे वा विधीतरौ।

(१) त्विषा इति पाठः साधुः ।
(२) तपः इति पाठः समीचीनः ।
(३) यद्दृच्छाकरसङ्कोचविधानायेह इति अथवा यदृच्छाकरसङ्कोच विधानायेह इति पाठोऽयंप्रतिपत्तिकरः ।

न मृषारागविषयौ ततस्तल्लोपविधिश्चयौ ॥९२॥
अतो लोकहितैर्नूनं परमार्थनिरूपणे।
लोकाः स्वर्गादिविषया नश्वरा इति निन्दिताः ॥९३॥
अधिकारिविभेदेन कर्मज्ञानोपदेशतः।
ज्ञातं सर्वं जगन्नूनं शब्दब्रह्मात्ममूर्त्तिभिः ॥९४॥
अतोऽहं प्रष्टुमिच्छामि भवन्तस्तेन् कृपालवः।
कर्मणां फलमादिष्टं स्वर्गः कामैकचेतसाम् ॥९५॥
ईशार्पितधियां पुंसां कृतस्यापि च कर्मणः।
चित्तशुद्धिस्ततो ज्ञानं मोक्षस्य तदनन्तरं ॥९६॥
मोक्षो ब्रह्मैक्यमित्येवं सच्चिदानन्दमेव यत्।
सर्वं समाप्यते तस्मिन् ज्ञाते यद्धि कृताकृतं ॥९७॥
यन्निःसङ्गं चिदाकाशं ज्ञानरूपमसंवृतं।
निरीहमचलं शुद्धमगुणं व्यापकं स्मृतं ॥९८॥
विकारेषु विनश्यत्सु निर्विकारं न नश्यति।
यथान्धतमसा व्याप्तलोकस्य ररोजसा(१) ॥९९॥
लोहस्येव मणिस्तद्वद्मणियाश्चेतयित्र यत्(२)।
यदाभासेन सा सत्ता प्रतिपद्य विजृम्भते ॥१००॥
जीवेश्वरादिरूपेण विश्वाकारेण चाप्यहो।
तस्यामपि प्रलीनायां कूटस्थस्य यदेकलं(३) ॥१०१॥

(१) रविरोजसा इति पाठोऽत्र सम्भाव्यते।
(२) अरविन्दले यथा इति पाठोऽर्थावगतिसाधनः।
(३) कूटस्थस्य केवलं इति पाठः सुखभार्थः।

भवद्भिरेवं निर्णीतं तत्तथैव न संशयः।
तथापि मम जिज्ञासा वर्त्तते केवलं हृदि ॥१०२॥
अतोऽपि परमं किञ्चिद्वर्त्तते किल वा न वा।
तद्वदन्तु महाभागा भवन्तस्तत्त्वदर्शनाः ॥१०३॥
यच्छ्रुवःफलमेवेह जनुषो मे कृतार्थता।
एवं ब्रुवन्तमनघं व्यासं सत्यवतीसुतं।
साधु साध्विति सङ्कीर्त्य प्रत्यूचुर्निगमा वचः ॥१०४॥
वेदा ऊचुः। साधु साधु महाप्राज्ञ विष्णुरात्मा शरीरिणां।
अजोऽपि जन्म सम्पद्य लोकानुग्रहमीहसे ॥१०५॥
अन्यथा तेन घटते संसारकर्म्म बन्धनं।
अस्पृष्टो मायया देव्या कदाचिज्ज्ञानगूहया ॥१०६॥
विभर्षि स्वेच्छया रूपं स्वेच्छयैव निगूहसे।
अस्मत्सम्मत एवार्थो भवता सम्प्रदर्शितः ॥१०७॥
पुराणेष्वितिहासेषु सूत्रेष्वपि च नैकधा।
अक्षरं ब्रह्म परमं सर्वकारणकारणं ॥१०८॥
तस्यात्मनोऽध्यात्मभावतया पुष्पस्य गन्धवत्।
रसवद्वा स्थितं रूपं अवेहि परमं हि तत् ॥१०९॥
अनुभूतं तदस्माभिर्जाते प्राकृतिके लये।
अक्षरात् परतस्तस्माद्यत् परं केवलो रसः(१)।
न च तत्र वयं शक्ताः शब्दातीते तदात्मकाः ॥११०॥
इति श्रीमहापुराणे वयुप्रोक्ते अनुषङ्गपादे व्याससंशयापनोदनं नाम द्विचत्वारिंशोऽध्यायः।

(१) हि सः इति पाठः साधुः।

# अथ त्रिचत्वारिंशोऽध्यायः[१]।

गयामाहात्म्यं।

वायुरुवाच। अत ऊर्द्धं प्रवक्ष्यामि गयामाहात्म्यमुत्तमं।
यच्छ्रुत्वा सर्व्वपापेभ्यो मुच्यते नात्रसंशयः॥१॥
सूतउवाच। सनकाद्यैर्म्महाभागैर्द्देवर्षिः स च नारदः।
सनत्कुमारं पप्रच्छ प्रणम्य विधिपूर्व्वकं[२]॥२॥
नारद उवाच। सनत्कुमार मे ब्रूहि तीर्थं तीर्थोत्तमोत्तमं।
तारकं सर्व्वभूतानां पठतां शृण्वतां तथा॥३॥
सनत्कुमार उवाच। वक्ष्ये तीर्थवरं[३] पुण्यं श्राद्धादौ सर्व्वतारकं।

---

(१) ख॰ ग॰ आदर्शपुस्तकयोर्गयामाहात्म्येऽध्यायसंख्या न दृश्यते। मुद्रितपुस्तके तु गयामाहात्म्याध्यायेषु प्रथमद्वितीयतृतीय इत्यादिसंख्याः सन्ति। अस्मिन् पुस्तके क्रमानुरोधात् त्रिचत्वारिंशचतुश्चत्वारिंशइत्यादिसंख्याभिर्गयामाहात्म्यं मुद्रयामः।

(२) गयायात्रां प्रवक्ष्यामि शृणु नारद मुक्तिदां।
निष्कृतिस्त्विह कर्त्तृणां ब्रह्मणा गीयते पुरा॥१॥
ब्रह्मज्ञानं गयाश्राद्धं गोगृहे मरणं तथा।
वासः पुंसां कुरुक्षेत्रे मुक्तिरेषा चतुर्विधा॥२॥
ब्रह्मज्ञानेन किं कार्य्यं गोगृहे मरणेन किं।
किं कुरुक्षेत्रवासेन यदि पुत्रो गयां व्रजेत्॥३॥
गयायां पिण्डदानेन यत्फलं लभते नरः।
न तच्छक्यं मया वक्तुं कल्पकोटिशतैरपि॥४॥
इति श्रुत्वा तदा वाक्यं नारदो मुनिसत्तमः।
सनत्कुमारं पप्रच्छ प्रणम्य विधिपूर्व्वकं॥५॥
इति पाठो मुद्रितपुस्तके वर्त्तते।

(३) तीर्थं परमिति मुद्रितपु॰।

गयातीर्थं सर्व्वदेशे[1] तीर्थेभ्योऽप्यधिकं शृणु ॥४॥
गयासुरस्तपस्तेपे ब्रह्मणा क्रतवेऽर्थितः ।
प्राप्तस्य तस्य शिरसि शिलां धर्म्मो ह्यधारयत्[2] ॥५॥
तत्र ब्रह्माऽकरोद्यागं स्थितश्चापि गदाधरः[3] ।
फल्गुतीर्थादिरूपेण निश्चलार्थमहर्निशं ।
गयासुरस्य विप्रेन्द्र ब्रह्माद्यैर्देवतैः सह[4] ॥६॥
कृतयज्ञो ददौ ब्रह्मा ब्राह्मणेभ्यो गृहादिकं ।
श्वेतकल्पे तु वाराहे गयायागमकारयत् ॥७॥
गयानाम्ना गया ख्याता[5] क्षेत्रं ब्रह्माभिकाङ्क्षितं[6] ।
काङ्क्षन्ति पितरः पुत्रान्नरकाद्भयभीरवः ॥८॥
गयां यास्यति यः पुत्रः स नस्त्राता भविष्यति ।
गयाप्राप्तं सुतं दृष्ट्वा पितॄणामुत्सवो भवेत् ।
पद्भ्यामपि जलं स्पृष्ट्वा सोऽस्मभ्यं किं न दास्यति ॥९॥
गयां गत्वान्नदाता यः पितरस्तेन पुत्रिणः ।
पक्षत्रयनिवासी च पुनात्यासप्तमं कुलं ।
नो चेत् पञ्चदशाहं वा सप्तरात्रं त्रिरात्रिकं[7] ॥१०॥

---

(१) गयातीर्थं सर्व्वश्रेष्ठ इति मुद्रितपु० ।
(२) गयासुरस्तपस्तेपे ब्रह्मा तत्र जगाम ह । छलेन पातयित्वोर्व्व्यां शिलां तन्मूर्द्ध्न्यधारयत् ॥ इति मुद्रितपु० ।
(३) स्थापयित्वा गदाधरमिति मुद्रितपु० ॥
(४) गयासुरस्य विप्रेन्द्र एतच्छ्लोकार्द्धं न साधु, मुद्रितपुस्तकेऽपि न विद्यते।
(५) गयाख्यामर्मिति मुद्रितपु० ।
(६) ब्रह्मर्षिकाङ्क्षितमिति मुद्रितपु० ।
(७) एतच्छ्लोकार्द्धं मुद्रितपुस्तके न दृश्यते ।

महाकल्पकृतं पापं गयां प्राप्य विनश्यति ।
पिण्डं दद्याच्च पित्रादेरात्मनोऽपि तिलैर्विना ॥११॥
ब्रह्महत्या सुरापानं स्तेयं गुर्व्वङ्गनागमः ।
पापं तत् सङ्गजं सर्व्वं गयाश्राद्धाद्विनश्यति[१] ॥१२॥
आत्मजोऽप्यन्यजो[२] वापि गयाभूमौ[३] यदा तदा ।
यन्नाम्ना पातयेत्पिण्डं तन्नयेद्ब्रह्म शाश्वतं ॥१३॥
ब्रह्मज्ञानं गयाश्राद्धं गोग्रहे मरणं तथा ।
वासः पुंसां कुरुक्षेत्रे मुक्तिरेषा चतुर्व्विधा ॥१४॥
ब्रह्मज्ञानेन किं कार्य्यं गोग्रहमरणेन किं ।
वासेन किं कुरुक्षेत्रे यदि पुत्रो गयां व्रजेत् ॥१५॥
गयायां सर्व्वकालेषु पिण्डं दद्याद्विचक्षणः ।
अधिमासे जन्मदिने चास्तेऽपि गुरुशुक्रयोः ॥१६॥
न त्यक्तव्यं गयाश्राद्धं सिंहस्थेऽपि बृहस्पतौ ।
तथा दैवप्रमादेन सुप्रवृत्सु[४] व्रणेषु च ।
पुनः कर्म्माधिकारी च श्राद्धकृद्ब्रह्मलोकभाक्[५] ॥१७॥
सकृद्गयाभिगमनं सकृत्पिण्डस्य पातनं[६] ।

---

(१) ब्रह्महत्यासुरापानमित्यादिगयाश्राद्धाद्विनश्यतीत्यन्तपाठो मुद्रितपुस्तके न विद्यते ।

(२) आत्मजस्त्वान्यजो इति मुद्रितपु० ।

(३) गयाश्राद्धे इति मुद्रितपु० ।

(४) प्रवृत्तेषु इति पाठः समीचीनः । समवृत्सु इति वा पाठः ।

(५) मुद्रितपुस्तके एतच्छ्लोकाभावो वर्त्तते ।

(६) पिण्डप्रपातनमिति मुद्रितपु० ।

दुर्लभं किं पुनर्नित्यमस्मिन्नेव व्यवस्थितिः ॥१८॥
प्रमादान्म्रियते क्षेत्रे ब्रह्मादेर्मुक्तिदायके[१] ।
ब्रह्मज्ञानाद्यथा मुक्तिर्लभ्यते नात्र संशयः ॥१९॥
कीकटादिमृतानाञ्च पितॄणां तारणाय च ।
तस्मात् सर्व्वप्रयत्नेन कर्त्तव्यं सुविचक्षणैः ॥२०॥
ब्रह्मप्रकल्पितान् विप्रान् हव्यकव्यादिनाऽर्च्चयेत् ।
तैस्तुष्टैस्तोषिताः सर्व्वाः पितृभिः सह देवताः ॥२१॥
मुण्डनञ्चोपवासश्च सर्व्वतीर्थेष्वयं विधिः ।
वर्जयित्वा कुरुक्षेत्रं विशालां विरजां गयां ॥२२॥
दण्डं प्रदर्शयेद्भिक्षुर्गयां गत्वा न पिण्डदः ।
दण्डं न्यस्ता[२] विष्णुपदे पितृभिः सह मुच्यते ॥२३॥
न दण्डी किल्बिषं धत्ते पुर्यं[३] वा परमार्थतः ।
अतः सर्व्वां क्रियां त्यक्त्वा विष्णुं ध्यायति भावुकः ॥२४॥
सन्न्यसेत सर्व्वकर्म्माणि वेदमेकं न सन्न्यसेत्[४] ।
मुण्डं कुर्य्याच्च पूर्व्वेऽस्मिन् पश्चिमे दक्षिणोत्तरे ॥२५॥
सार्द्धक्रोशद्वयं मानं गयेति ब्रह्मणेरितं ।
पञ्चक्रोशं गयाक्षेत्रं क्रोशमेकं गयाशिरः ॥२६॥
तन्मध्ये सर्व्वतीर्थानि त्रैलोक्ये यानि सन्ति वै ।

(१) मुक्तिदायकमिति मुद्रितपु० ।
(२) स्पृष्ट्वा इति मुद्रितपु० ।
(३) पुन्यमिति पाठः साधीयान् ।
(४) न दण्डीत्यादि वेदमेकं न सन्न्यसेदित्यन्तपाठो मुद्रितपुस्तके नावलोक्यते ।

श्राद्धकृद्यो गयाक्षेत्रे पितॄणामनृणो हि सः ॥२७॥
शिरसि श्राद्धकृद्यस्तु(१) कुलानां शतमुद्धरेत् ।
गृहाच्चलितमात्रेण गयायां गमनं प्रति ।
स्वर्गारोहणसोपानं पितॄणाञ्च पदे पदे ॥२८॥
पदे पदेऽश्वमेधस्य यत्फलं गच्छतो गयां(२) ।
तत्फलस्य भवेन्नूनं(३) समग्रं नात्र संशयः ॥२९॥
पायसेनापि चरुणा सक्तुना पिष्टकेन वा ।
तण्डुलैः फलमूलाद्यैर्गयायां पिण्डपातनं(४) ॥३०॥
तिलकल्केन खण्डेन गुडेन सघृतेन वा ।
केवलेनैव दध्ना वा ऊर्जेन मधुनाऽथ वा ॥३१॥
पिण्याकं सघृतं खण्डं पितृभ्योऽक्षयमित्युत ।
इज्यते वाऽन्नवं भोज्यं हविष्यान्नं मुनीरितं ॥३२॥
एकतः सर्व्ववस्त्रानि रसवन्ति मधूनि हि ।
स्नात्वा गदाधराङ्घ्र्यब्जं फल्गुतीर्थाम्बु चैकतः ॥३३॥
पिण्डासनं पिण्डदानं पुनः प्रत्यवनेजनं ।
दक्षिणा चान्नसङ्कल्पस्तीर्थश्राद्धेष्वयं विधिः ॥३४॥
नावाहनं न दिग्बन्धो(५) न दोषो दृष्टिसम्भवः ।

---

(१) यः स इति मुद्रितपु० ।
(२) भवेदिति मुद्रितपु० ।
(३) लभते नूनमिति मुद्रितपु० ।
(४) पिण्डदो भवेदिति मुद्रितपु० ।
(५) नाग्निदग्धो इति पाठोऽत्र सम्भाव्यते ।

सकारुण्येन(१) कर्त्तव्यं तीर्थश्राद्धं विचक्षणैः ॥३५॥

अन्यत्रावाहिताः काले पितरो यान्त्यमुं प्रति ।

तीर्थे सदा वर्तन्ते तस्मादावाहनं न हि ॥३६॥

तीर्थश्राद्धं प्रयच्छद्भिः पुरुषैः फलकाङ्क्षिभिः ।

कामं क्रोधं तथा लोभं त्यक्त्वा कार्य्या क्रियाऽनिशं ॥३७॥

ब्रह्मचार्य्येकभोजी च भूशायी सत्यवाक् शुचिः ।

सर्व्वभूतहिते रक्तः स तीर्थफलमश्नुते ॥३८॥

तीर्थान्यनुसरन् धीरः पाषण्डं पूर्व्वतस्त्यजेत् ।

पाषण्डः स च विज्ञेयो यो भवेत् कामकारकः ॥३९॥

तीर्थेषु ये नरा धीराः कर्म्म कुर्व्वन्ति तद्गताः ।

यथा ब्रह्मविदो वेद्यं वस्तु चानन्यचेतसः ।

प्रविशन्ति परेशाख्यं ब्रह्म ब्रह्मपरायणाः ॥४०॥

यास्ते वैतरणी नाम नदी त्रैलोक्यविश्रुता ।

साऽवतीर्णा गयाक्षेत्रे पितॄणां तारणाय वै ।

स्नातो गोदो वैतरण्यां त्रिःसप्तकुलमुद्धरेत् ॥४१॥

तथाऽक्षयवटं गत्वा विप्रान् सन्तोषयिष्यति ।

ब्रह्मप्रकल्पितान् विप्रान् हव्यकव्यादिनाऽर्च्चयेत्(२) ।

तैस्तुष्टैस्तोषिताः सर्व्वाः पितृभिः सह देवताः ॥४२॥

गयायां न हि तत् स्थानं यत्र तीर्थं न विद्यते ।

---

(१) सकारुण्येनं इति पाठः सङ्गतः ।

(२) मुद्रितपुस्तके,—तिष्ठकल्पेन खण्डेन इत्यादि हव्यकव्यादिनार्च्चये-दित्यन्तः पाठो न विद्यते ।

साम्निध्यं सर्व्वतीर्थानां गयातीर्थं ततो वरं ॥४३॥
मीने मेषे स्थिते सूर्य्ये कन्यायां कार्मुके घटे ।
दुर्लभं त्रिषु लोकेषु गयायां पिण्डपातनं ॥४४॥
मकरे वर्त्तमाने च ग्रहणे चन्द्रसूर्य्ययोः ।
दुर्लभं त्रिषु लोकेषु गयाश्राद्धं सुदुर्लभं ॥४५॥
गयायां पिण्डदानेन यत् फलं लभते नरः ।
न तच्छक्यं मया वक्तुं कल्पकोटिशतैरपि ॥४६॥

इति श्रीमहापुराणे वायुप्रोक्ते गयामाहात्म्यं नाम
त्रिचत्वारिंशोऽध्यायः समाप्तः ।

# अथ चतुश्चत्वारिंशोऽध्यायः ।

## गयामाहात्म्यं ।

नारद उवाच । गयासुरः कथं जातः किंप्रभावः किमात्मकः ।
तपस्तप्तं कथं तेन कथं देहपवित्रता ॥१॥
सनत्कुमार उवाच । विष्णोर्नाभ्यम्बुजाज्जातो ब्रह्मा लोकपितामहः ।
प्रजाः ससर्ज संप्रोक्तः पूर्व्वंदेवेन विष्णुना ॥२॥
आसुरेणैव भावेन असुरानसृजत् पुरा ।
सौमनस्येन भावेन देवान् सुमनसोऽसृजत् ॥३॥
गयासुरोऽसुराणाञ्च महाबलपराक्रमः ।
योजनानां सपादञ्च शतं तस्योच्छ्रयः स्मृतः ॥४॥
स्थूलः षष्टिर्योजनानां श्रेष्ठोऽसौ वैष्णवः स्मृतः ।
कोलाहलगिरिवरे तपस्तेपे सुदारुणं ॥५॥
बहुवर्षसहस्राणि निरुच्छ्वासं स्थिरो(१)ऽभवत् ।
तत्तपस्तापिता देवाः संक्षोभं परमं गताः(२) ॥६॥
ब्रह्मलोकं गता देवाः प्रोचुस्तेऽथ पितामहं(३) ।
गयासुराद्रक्ष देव ब्रह्मा देवांस्ततोऽब्रवीत् ॥७॥

---

(२) स्थितो इति मुद्रितपु० ।
(३) ययुरिति मुद्रितपु० ।
(४) ऊचुस्ते प्रपितामहमिति मुद्रितपु० ।

प्रजामः शङ्करं देवा ब्रह्माद्याश्च मताः शिवं ।
कलासे चाब्रुवन्नत्वा रक्ष देव महासुरात् ॥८॥
ब्रह्माद्यानब्रवीच्छम्भुर्ब्रजामः शरणं हरिं ।
क्षीराब्धौ देवदेवेशः स नः श्रेयो विधास्यति ।
ब्रह्मा महेश्वरो देवा विष्णुं नत्वा प्रतुष्टुवुः[१] ॥९॥
देवा ऊचुः । नमो विष्णवे भर्त्त्रे सर्व्वेषां प्रभविष्णवे ।
रोचिष्णवे जिष्णवे च राक्षमादिग्रसिष्णवे ॥१०॥
धरिष्णवेऽखिलस्यास्य योगिनां पारयिष्णवे ।
वर्द्धिष्णवे ह्यनन्ताय नमो भ्राजिष्णवे नमः[२] ॥११॥
सनत्कुमार उवाच । एवं स्तुतो वासुदेवः सुराणां दर्शनं ददौ ।
किमर्थमागता देवा विष्णुनोक्तास्तमब्रुवन् ॥१२॥
गयासुरभयाद्देव रक्षास्मानब्रवीद्धरिम्॰।
ब्रह्माद्या यान्तु तं दैत्यमागमिष्याम्यहं ततः ॥१३॥
केशवो गरुड़ारूढो वरं दातुं गयासुरे ।
सर्व्वे स्वं स्वं समास्थाय ययुर्वाहन[३] मुत्तमं ॥१४॥

---

(१) नत्वा तु तुष्टुवुरिति मुद्रितपु० ।
(२) नमो विष्णवे भर्त्त्रे सर्व्वेषां प्रभविष्णवे ।
रोचिष्णवे ह्यनन्ताय नमो भ्राजिष्णवे नमः ॥ १० ॥
सहिष्णवे जिष्णवे च राक्षसादिग्रसिष्णवे ।
वर्द्धिष्णवेऽखिलस्यास्य योगिनां पारयिष्णवे ॥ ११ ॥ इति मुद्रितपु०॥
(३) निजवाहनमिति ख० ग० ।

अचुक्तं वासुदेवाद्याः किमर्थं तप्यते त्वया ।
सन्तुष्टाः सागता: सर्वे वरं ब्रूहि गयासुर ॥१५॥
गयासुर उवाच। यदि तुष्टाः स्थ मे देवा ब्रह्मविष्णुमहेश्वराः ।
सर्व्वदेवद्विजातिभ्यो यज्ञतीर्थशिलोच्चयात् ॥१६॥
देवेभ्योऽतिपवित्रोऽहमृषिभ्योऽपि शिवाच्चयात्(१) ।
मन्त्रेभ्यो देवदेवीभ्यो योगिभ्यश्चापि सर्व्वशः ॥१७॥
न्यासिभ्यश्चापि कर्म्मिभ्यो धर्मिभ्यश्च तथा पुनः ।
ज्ञातिभ्योऽतिपवित्रेभ्यः पवित्रः स्यां सदा सुराः(२) ॥१८॥
पवित्रमस्तु तं देवाः दैत्यमुक्ता ययुर्दिवं ।
दैत्यं दृष्ट्वा च स्पृष्ट्वा च सर्व्वे हरिपुरं ययुः ॥१९॥
शून्यं लोकत्रयं जातं शून्या यमपुरी ह्यभूत् ।
यम इन्द्रादिभिः सार्द्धं ब्रह्मलोकं ततोऽगमत् ॥२०॥
ब्रह्माणमूचिरे देवा गयासुरविलोपिताः ।
त्वया दत्तोऽधिकारो वै गृहाण त्वं पितामह ॥२१॥
ब्रह्माब्रवीत्ततो देवान् व्रजामो विष्णुमव्ययं ।

---

(१) शिलोच्चयात् इति पाठः साधुः ।
(२) यदि तुष्टाः शरीरं मे ब्रह्मविष्णुमहेश्वरात् ।
सर्व्वदेवद्विजातिभ्यो यज्ञतीर्थशिलोच्चयात् ।
देवेभ्योऽतिपवित्रेभ्यः पवित्रतममस्तु च ॥ १६ ॥ इति पाठो मुद्रितपुस्तके वर्त्तते । तत्र, यदि तुष्टाः स्थ इत्यादि पवित्रः स्यां सदा सुराः इत्यन्तपाठाभावो दृश्यते ।

ब्रह्मादयोऽब्रुवन् विष्णुं त्वया दत्तवरेऽसुरे[1] ॥२२॥
तद्दर्शनाद्ययुः स्वर्गं शून्यं लोकत्रयं ह्यभूत् ।
देवैरुक्तो वासुदेवो ब्रह्माणं स वचो[2]ऽब्रवीत् ॥२३॥
गत्वासुरं[3] प्रार्थयस्व यज्ञार्थं देहि देहकं ।
विष्णूक्तः ससुरो ब्रह्मा गत्वाऽपश्यन्महासुरं ॥२४॥
गयासुरोऽब्रवीद्दृष्ट्वा ब्रह्माणं त्रिदशैः सह ।
संपूज्योत्थाय विधिवत् प्रणतः श्रद्धयान्वितः ॥२५॥
गयासुर उवाच। अद्य मे सफलं जन्म अद्य मे सफलं तपः ।
यदागतोऽतिथिं ब्रह्मा सर्व्वं प्राप्तं मयाद्य वै ॥२६॥
योगिन् योगाङ्गविन् सर्व्वलोकस्वामिन् पितर्गुरो[4] ।
यदर्थमागतो ब्रह्मंस्तत् कार्य्यं करवाण्यहं[5] ॥२७॥
ब्रह्मोवाच। पृथिव्यां यानि तीर्थानि दृष्टानि भ्रमता मया ।
यज्ञार्थं न तु ते तानि पवित्राणि शरीरतः ॥२८॥
त्वया देहे पवित्रत्वं प्राप्तं विष्णुप्रसादतः ।
अतः पवित्रं देहं त्वं यज्ञार्थं देहि मेऽसुर ॥२९॥
गयासुर उवाच। धन्योऽहं देवदेवेश यद्देहं प्रार्थ्यते त्वया ।
पितृवंशः कृतार्थो मे देहे यागं करोषि चेत्[6] ॥३०॥

---

(१) दत्तवरोऽसुरः इति मुद्रितपु० ।
(२) ब्रह्माणञ्च ततो इति मुद्रितपु० ।
(३) गयासुरमिति मुद्रितपु० ।
(४) एतच्छ्लोकार्द्धं मुद्रितपुस्तके न विद्यते ।
(५) करवाणि ते इति मुद्रितपु० ।
(६) पितृवंशो कृतार्थोऽहं मातृवंशे तथैव च । इति मु० पु० ।

तथैवोत्पादितो देहः पवित्रश्च त्वया कृतः(१) ।
सर्व्वेषामुपकाराय यागोऽवश्यं भवित्विति(२) ॥२१॥
इत्युक्त्वा सोऽपतद्भूमौ श्वेतकल्पे गयासुरः ।
नैर्ऋतीन्दिशमाश्रित्य तदा कोलाहले गिरौ ॥२२॥
शिरः कृत्वोत्तरे दैत्यः पादौ कृत्वा तु दक्षिणे ।
ब्रह्मा सम्भृतसम्भारो मानसानृत्विजोऽसृजत् ॥२३॥
अग्निशर्म्माणमव्यक्तं शौनकं याज्ञलिं क्रतुं ।
कुथुमिं वेदकौण्डिन्यं हारीतं काश्यपं कृपं ॥२४॥
गर्गं कौशिकवाशिष्ठौ मुनिं भार्गवमव्ययं ।
वृद्धं पाराशरं कण्वं माण्डव्यं श्रुतिकेवलं ॥२५॥
श्वेतं सुतालं दमनं सुहोत्रं कङ्कमेव च ।
लौकाक्षिञ्च महाबाहुं जैगीषव्यं तथैव च ॥२६॥
दधिपञ्चमुखं विप्रमृषभं कर्कमेव च ।
कात्यायनं गोभिलञ्च मुनिमुग्रमहाव्रतं ॥२७॥
सुपालकं गौतमञ्च तथा वेदशिरोव्रतं ।
जटामालिनमव्ययं चाटुहासञ्च दारुणं ॥२८॥
आत्रेयं चाप्यङ्गिरसमौपमन्युं महाव्रतं ।
गोकर्णञ्च गुहावासं शिखण्डिनमुमाव्रतं ॥२९॥
एतानन्यांश्च विप्रेन्द्रान् वेधा लोकपितामहः(३) ।

---

(१) तवैवास्तूपकारक इति मुद्रितपु० ।
(२) भविष्यति इति मुद्रितपु० ।
(३) अग्निशर्म्माणमव्यक्तमित्यादि वेधा लोकपितामह इत्यन्ताः सार्द्धषट्श्लोका मुद्रितपुस्तके न सन्ति ।

परिकल्प्याकरोद्यागं गयासुरशरीरके ॥४०॥
अग्निशर्मापि पञ्चाग्नीन् मुखादेतानथासृजत्।
दक्षिणाग्निं गार्हपत्याहवनीयौ तपोऽव्ययः ॥४१॥
सभ्यावसथ्यौ देवर्षे येषु यज्ञाः प्रतिष्ठिताः[१]।
यज्ञस्य च प्रतिष्ठार्थं विप्रेभ्यो दक्षिणां ददौ ॥४२॥
हुत्वा पूर्णाहुतिं ब्रह्मा स्नात्वा चावभृथेन तु।
यज्ञयूपं सुरैः सार्द्धं समानीय व्यरोपयत्[२] ॥४३॥
ब्रह्मणः सरसां श्रेष्ठे सरस्येवाश्रितं शुभं[३]।
चलितश्चकितो ब्रह्मा धर्मराजमभाषत ॥४४॥
जाता गृहे तव शिला[४] समानीयाविचारयन्।
दैत्यस्य शीघ्रं शिरसि तां धारय ममाज्ञया ॥४५॥
निश्चलार्थं यमः श्रुत्वाधारयन्मस्तके शिलां।
शिलायां धारितायान्तु सशिलश्चासुरोऽचलत्[५] ॥४६॥
देवानूचेऽथ रुद्रादीन् शिलायां निश्चलाः किल[६]।
तिष्ठन्तु देवाः सकला[७]स्तथेत्युक्ता च ते स्थिताः ॥४७॥
देवाः पादैर्लङ्घयित्वा तथापि चलितोऽसुरः।

---

(१) अग्निशर्म्मापि पञ्चाग्नीनित्यादि येषु यज्ञाः प्रतिष्ठिताः इत्यन्तं सार्द्धैकश्लोको मुद्रितपुस्तके न विद्यते।
(२) यज्ञवाटे सुरैः सार्द्धं गयासुरमपश्यत। इति मुद्रितपु०।
(३) एतच्छ्लोकार्द्धं मुद्रितपुस्तके न विद्यते।
(४) या ते गृहे धर्म्मशिला इति मुद्रितपु०।
(५) चलितोऽसुरः इति मुद्रितपु०।
(६) सदा इति मुद्रितपु०।
(७) तिष्ठध्वं निश्चलार्थं वै इति मुद्रितपु०।

ब्रह्माथ व्याकुलो विष्णुं गतः क्षीराब्धिशायिनं ।
तुष्टाव प्रणतो भूत्वा नत्वा चाहूय तं प्रभुं[१] ॥४८॥
ब्रह्मोवाच। ब्रह्माण्डस्य पते नाथ[२] नमामि जगतां पतिं ।
गतिं कीर्त्तिमतां नृणां भुक्तिमुक्तिप्रदायकं ॥४९॥
विष्वक्सेनोऽब्रवीद्विष्णुं देव त्वां स्तौति पद्मजः ।
हरिराहानय त्वं तं विष्णूक्तः स तमानयत् ।
तमूचे हरिः कस्मादागतोऽसि वदस्व तत् ॥५०॥
ब्रह्मोवाच। देवदेव कृते यागे प्रचचाल गयासुरः ।
शिलायां देवरूपिण्यां न्यस्तायां तस्य मस्तके ॥५१॥
रुद्रादिषु च देवेषु संस्थितेष्वसुरोऽचलत् ।
इदानीं निश्चलार्थं हि प्रसादं कुरु माधव ॥५२॥
ब्रह्मणो वचनं श्रुत्वा ह्याकृष्य स्वशरीरतः ।
मूर्त्तिं ददौ निश्चलार्थं ब्रह्मणे भगवान् हरिः ॥५३॥
आनीय मूर्त्तिं ब्रह्मापि शिलायां समधारयत्[३] ।
तथापि चलितं वीक्ष्य पुनर्देवमथाकृयत् ॥५४॥
आगत्य विष्णुः क्षीराब्धेः शिलायां संस्थितोऽभवत् ।
जनार्द्दनाभिधानेन पुण्डरीकेतिनामतः ।
शिलायां निश्चलार्थं हि स्वयमादिगदाधरः[४] ॥५५॥

---

(१) विष्णुं त्रिजगतां पतिमिति मुद्रितपु० ।
(२) ब्रह्माण्डस्य पतिं नाथमिति मुद्रितपु० ।
(३) तामधारयदिति मुद्रितपु० ।
(४) जनार्द्दनाधिष्ठानेन पुण्डरीकाख्यनामतः । शिलायां निश्चलार्थं च स्वयमेव गदाधरः ॥ इति मुद्रितपु० ।

गिरिकार्यं पञ्चधाभौच्छिलायां प्रपितामहः ।
पितामहोऽथ फल्गीशः केदारः कनकेश्वरः ॥५६॥
ब्रह्मा स्थितः स्वयं तत्र गजकर्णो[१]विनायकः ।
गयादित्यस्तोत्तरार्को दक्षिणार्कस्त्रिधा रविः ॥५७॥
लक्ष्मीः सीताभिधानेन गौरी च[२] मङ्गलाख्यया ।
गायत्री चैव सावित्री त्रिसन्ध्या च सरस्वती ॥५८॥
इन्द्रो वृहस्पतिः पूषा वसवोऽष्टौ महाबलाः ।
विश्वेदेवाश्चाश्विनेयौ मारुतो विघ्ननायकः ॥
यक्षोरगगन्धर्वास्तस्थुर्देवाः स्वशक्तिभिः[३] ॥५९॥
आद्यया गदया चासौ यस्माद्दैत्यः स्थिरीकृतः ।
स्थित इत्येव हरिणा तस्मादादिगदाधरः ॥६०॥
ऊचे गयासुरो देवान् किमर्थं वञ्चितो ह्यहं[४] ।
यज्ञार्थं ब्रह्मणे दत्तं शरीरमलयं[५] मया ।
विष्णोर्वचनमात्रेण किं न स्यां निश्चलो ह्यहं ॥६१॥
असुरैः पीड़ितोऽत्यर्थं गदया हरिणा तथा ।
पीड़ितो यद्यहं देवाः प्रसन्नाः सन्तु सर्वदा[६] ॥६२॥
गदाधरादयस्तुष्टाः प्रोचुः साद्धं गयासुरं ।

---

(१) गजरूपो इति मुद्रितपुं ।
(२) स्थिता वै इति ख० ग० ।
(३) इन्द्रो वृहस्पतिरित्यादि तस्थुर्देवाः स्वशक्तिभिरित्यन्तपाठाभावो मुद्रितपुस्तके वर्त्तते ।
(४) वञ्चितोऽस्म्यहमिति मुद्रितपुं ।
(५) ममलमिति मुद्रितपुं ।
(६) वै सदा इति मुद्रितपुं ।

वरं ब्रूहि प्रसन्नाः स्मो देवानूचे गयासुरः ॥६३॥
यावत् पृथ्वी पर्वताश्च यावच्चन्द्रार्कतारकाः ।
तावच्छिलायां तिष्ठन्तु ब्रह्मविष्णुमहेश्वराः ।
अन्ये च सकला देवा मन्नाम्ना क्षेत्रमस्तु वै ॥६४॥
पञ्चक्रोशं गयाक्षेत्रं क्रोशमेकं गयाशिरः ।
तन्मध्ये सर्वतीर्थानि प्रयच्छन्तु हितं नृणां ॥६५॥
स्नानादितर्पणं कृत्वा पिण्डदानात् फलाधिकम् ।
महात्मनि[1]सहस्रञ्च कुलानां चोद्धरेन्नरः ॥६६॥
व्यक्ताव्यक्तस्वरूपेण यूयं तिष्ठत सर्वदा ।
गदाधरः स्वयं लोकाद्भूयात् सर्वाघनाशनात्[2] ॥६७॥
श्राद्धं सपिण्डकं येषां ब्रह्मलोकं प्रयान्तु ते ।
ब्रह्महत्यादिकं पापं विनश्यतु च सेविनां ॥६८॥
नैमिषं पुष्करं गङ्गा प्रयागश्चाविमुक्तिकं ।
एतान्यन्यानि तीर्थानि दिवि भुव्यन्तरिक्षतः ।
समायान्तु सदा नृणां प्रयच्छन्तु हितं सुराः ॥६९॥
किन्त्वत्र तथा सुरगणा युष्माखेकापि देवता ।
चेन्न तिष्ठेदहं चापि समयः प्रतिपाल्यतां[3] ॥७०॥

---

(१) महात्मा वै इति पाठो विसुद्धः ।

(२) सर्व्वाघनाशनः इति पाठो विसुद्धः ।

(३) महात्मनि सहस्रञ्च इत्यादि समयः प्रतिपाल्यतामित्यन्तपाठो मुद्रितपुस्तके न दृश्यते। अस्मिन् स्थले, गङ्गाद्याश्च महानद्यः सरांसि विविधानि च। ते देवास्तानि तीर्थानि प्रयच्छन्तु हितं सदा। पितॄणां ब्रह्मलोकाश्च भुक्तिमुक्तिफलन्तथा ॥ ५३ ॥ एको विष्णुस्त्रिधामूर्त्तिर्यावत्संख्यायते बुधैः। तावद् गयासुरक्षेत्रं ख्यातिमेतु सदा भुवि। ब्रह्महत्यादिकं पापं विनाशयतु सेवितं ॥ ५४ ॥ इति पाठो वर्त्तते ।

गयासुरवचः श्रुत्वा प्रोचुर्विष्ण्वादयः सुराः ।
त्वया यत्प्रार्थितं सर्व्वं तद्भविष्यत्यसंशयं ॥७१॥
(१)अस्मत्पादानर्च्चयित्वा यास्यन्ति परमां गतिं ।
देवैर्दत्तवरो दैत्यो हर्षितो निश्चलोऽभवत् ॥७२॥
स्थितेषु चैव(२)देवेषु ब्राह्मणेभ्यो ददावजः(३) ।
ग्रामांश्च पञ्चपञ्चाशत् पञ्चक्रोशीं गयां तथा ।
गृहान् कृत्वा ददौ दिव्यान् सर्व्वोपस्करसंयुतान् ॥७३॥
कामधेनुं कल्पवृत्तं पारिजातादिकांस्तरून् ।
महानदीं चीरवहां घृतकुल्यास्तथैव च(४) ॥७४॥
मधुश्रवां मधुकुल्यां दध्याद्याढ्यसरांसि च ।
सुवर्णदीर्घिकां चैव बह्वन्नाद्रिपर्व्वतान् ॥७५॥
भक्ष्यभोज्यफलादींश्च सर्व्वं ब्रह्मा सृजन् ददौ ।
न याचयध्वं विप्रेन्द्रा अन्यानुक्त्वा ददावजः ॥७६॥
दत्वा ययौ ब्रह्मलोकं नत्वा ह्यादिगदाधरं ।
धर्म्मारण्ये तत्र धर्म्मं याजयित्वा ययाचिरे ॥७७॥
धर्म्मयागे च लोभाद्वै प्रतिगृह्य धनादिकं ।

---

(१) अस्मत्पादानर्च्चयित्वा इति श्लोकार्द्धात्प्राक्, पितृणां वै कुलशतमात्मानं पिण्डदानतः। श्राद्धादिना नयिष्यन्ति ब्रह्मलोकमनामयमिति पाठो मुद्रितपुस्तके दृश्यते ।

(२) तत्र इति मुद्रितपु० ।

(३) ह्यजः इति मुद्रितपु० ।

(४) घृतकुल्यादिकांस्तथा इति मुद्रितपु० ।

ततो ब्रह्मा समागत्य ब्राह्मणांस्तान् शशाप च ॥७८॥
कृतवन्तो यतो लोभं मद्यज्ञेष्वखिलेष्वपि ।
तस्मादृणाधिका यूयं भविष्यन्ति[१] सदा द्विजाः ॥७९॥
युष्माकं स्वाद्वारिवहा नदी पाषाणपर्वताः[२] ।
मध्वादयो वारिवहा मृण्मयाश्च तथा[३] मठाः ॥८०॥
कामधेनुः कल्पवृक्षो मल्लोकमुपतिष्ठतां ।
एवं शप्ता ब्रह्मणा ते प्रार्थयन्तोऽब्रुवन्नजं ॥८१॥
त्वया यद्दत्तमखिलं तत्सर्वं शापतो गतम् ।
जीवनार्थं प्रसादं नो भगवन् कर्त्तुमर्हसि ॥८२॥
तच्छ्रुत्वा ब्राह्मणान् ब्रह्मा प्रोवाचेदं दयान्वितः ।
तीर्थोपजीविका यूयमाचन्द्रार्कं भविष्यथ ॥८३॥
लोकाः पुण्या गयायां ये श्राद्धिनो ब्रह्मलोकगाः ।
युष्मान् ये पूजयिष्यन्ति तैरहं पूजितः सदा[४] ॥८४॥
आक्रान्तं दैत्यजठरं धर्मेण विरजाद्रिणा ।

---

(१) तस्माद्वह्निर्युष्माकं भविष्यति इति मुद्रितपु० ।

(२) युष्माकमितिश्लोकार्द्धस्थले विद्याविवर्ज्जिता यूयमन्नान्युपजपर्व्वताः । इति पाठो मुद्रितपुस्तके वर्त्तते ।

(३) मठाद्याः प्रचुरा इति ख० ग० ।

(४) लोकाः पुन्या गयायां ये इति श्लोकस्थले मुद्रितपुस्तके,
ये युष्मान् पूजयिष्यन्ति गयायामागता नराः ।
हव्यकव्यैर्धनैः श्राद्धैस्तेषां कुलशतं व्रजेत् ।
नरकात् स्वर्गलोकाय स्वर्गलोकात् परां गतिं ॥ ६७ ॥ इति
पाठो वर्त्तते ।

नाभिकूपसमीपे तु देवी या[१] विरजा स्थिता ।
तत्र पिण्डादिकं कृत्वा त्रिःसप्तकुलमुद्धरेत् ॥ ८५ ॥
महेन्द्रगिरिणा तस्य कृतौ पादौ मुनिश्वरौ ।
तत्र पिण्डादिकृत्सप्तकुलान्युद्धरते नरः[२] ॥ ८६ ॥

इति श्रीमहापुराणे वायुप्रोक्ते[३] गयामाहात्म्यं नाम
चतुश्चत्वारिंशोऽध्यायः समाप्तः ।

---

(१) देवी चेति ख॰ ग॰
(२) महेन्द्रगिरिणा तस्य इति श्लोको मुद्रितपुस्तके न विद्यते ।
(३) श्वेतवराहकल्पे इति मुद्रितपु॰ ।

# पञ्चचत्वारिंशोऽध्यायः ।

## गयामाहात्म्यं ।

नारद उवाच । कथं शिला समुत्पन्ना यथाक्रान्तो गयासुरः ।
किं रूपं किं च माहात्म्यं तस्याः किं वद नाम च ॥१॥
सनत्कुमार उवाच[1] । आसीद्धर्म्मो महातेजाः सर्व्वविज्ञानपारगः ।
विश्वरूपा च तत्पत्नी भर्त्तृव्रतपरायणा ॥ २ ॥
तस्यां धर्म्मात् समुत्पन्ना कन्या धर्म्मव्रता सती ।
सर्व्वलक्षणसम्पन्ना[2] लक्ष्मीरिव गुणाधिका ॥ ३ ॥
तस्यां ये तु गुणा ह्यासंस्ते तिष्ठन्ति जगत्त्रये[3] ।
धर्म्मो धर्म्मव्रतायास्तु त्रिषु लोकेषु मार्गयन् ॥ ४ ॥
नानुरूपं वरं लेभे धर्म्मोऽथ वरसिद्धये ।
तपः कुरु वरार्थं त्वं[4] तथेत्युक्ता वनं ययौ ॥ ५ ॥
कन्या सा च तपस्तेपे सर्व्वेषां दुष्करञ्च यत्[5] ।
वायुभक्षा श्वेतकल्पे युगानामयुतं[6] पुरा ॥ ६ ॥

---

(१) सनत्कुमार उवाच । इत्यनन्तरं मुद्रितपुस्तके, शृणु नारद यत्पृष्टं कथयामि पुरातनमिति पाठो वर्त्तते ।

(२) सर्व्वलक्षणसम्पूर्णा इति मुद्रितपु० ।

(३) तस्यां ये तु गुणा ह्यासंस्ते तिष्ठन्ति जगत्त्रये । इति पाठो मुद्रित-पुस्तके न दृश्यते ।

(४) वरारोहे इति मुद्रितपु० ।

(५) दुष्करं यत्तपस्विनामिति मुद्रितपु० ।

(६) शरदामयुतमिति मुद्रितपु० ।

ब्रह्मणो मानसः पुत्रो मरीचिर्नाम विश्रुतः ।
[1]पर्य्यटन् पृथिवीं सर्व्वां कन्यारत्नं ददर्श सः[2] ॥ ७ ॥
रूपयौवनसम्पन्नां परमे तपसि स्थितां ।
पप्रच्छाथ मरीचिस्तां का त्वं कस्यासि तद्वद ॥ ८ ॥
रूपेणानेन मां भीरु[3] विमोहयसि सुव्रते ।
ब्रह्मात्मजोऽहं विख्यातो मरीचिर्व्वेदपारगः ॥ ९ ॥
मरीचेर्व्वचनं श्रुत्वा कन्या प्रोवाच तं मुनिं[4] ।
अहं धर्म्मव्रता नाम धर्म्मपुत्री तपोऽन्विता ॥ १० ॥
पतिव्रतार्थं विप्रेन्द्र चरामि परमं तपः ।
धर्म्मव्रतां मरीचिस्तामुवाच प्रीतिपूर्व्वकं ॥ ११ ॥
पतिव्रता दर्शनान्मे भविष्यसि सुभव्रते ।
पतिव्रतेच्छया पृथ्वीं विचरामि ह्यहर्निशं ॥ १२ ॥
त्वञ्चेत्[5] पतिव्रता जाता भजे त्वां भज मां[6] वरं ।
लोके न त्वादृशी कन्या मम तुल्यो न ते वरः ॥ १३ ॥
धर्म्मव्रते धर्म्मपत्नी तस्मात्त्वं[7] भव मेऽधुना ।

---

(१) पर्य्यटन्निति श्लोकार्द्धात्प्राक् मुद्रितपुस्तके,
प्रवृत्तिलक्षणं धर्म्मं कर्त्तुं स ब्रह्मणेरितः । इति पाठोऽस्ति ।
(२) स इति मुद्रितपु० ।
(३) नूनमिति मुद्रितपु० ।
(४) प्रोवाचेदं शुचिस्मिता इति मुद्रितपु० ।
(५) त्वञ्चेति ख० ग० ।
(६) भजन्तं भज मामिति मुद्रितपु० ।
(७) धर्म्मपुत्रि तस्मात्त्वं भज इति ख० ग० ।

धर्म्मव्रता मुनिं प्राह धर्म्मं चापच सुव्रत ॥१४॥
तच्छ्रुत्वा धर्म्मजगमन्मुनिं धर्म्मो ददर्श च ।
तेजःपुञ्जं वरं मत्वा स्वागतार्घ्यादिना[1] ऽर्च्चयत् ॥१५॥
किमर्थमागतः पृष्टो मरीचिर्धर्म्ममब्रवीत् ।
कन्यार्थं भ्रमता पृथ्वीं दृष्टा ते कन्यका वरा ।
मह्यं कन्यामिमां देहि[2] श्रेयस्तव भविष्यति ॥१६॥
अर्घ्यादिना समभ्यर्च्य[3] धर्म्मः प्रोचे तथेति तं ।
धर्म्मव्रतां समानीय दत्तवांस्तां मरीचये ॥१७॥
वरं च दत्तवांस्तस्मै[4] तद्वाक्यं यत् तथा कृतं[5] ।
अग्निहोत्रेण सहितां स्वाश्रमं तां द्विजोऽनयत् ॥१८॥
रेमे मुनिस्तया सार्द्धं यथा विष्णुः श्रिया सह ।
पार्व्वत्या च यथा शम्भुः सरस्वत्या यथा ह्यजः ॥१९॥
चक्रे पुत्रशतं तस्यां मरीचेर्विष्णुनोपमं[6] ।
मरीचिः फलपुष्पार्थं वनं गत्वा समागतः ॥२०॥
श्रान्तः कदाचित्तां पत्नीमुवाचेति[7] पतिव्रतां ।
भुक्त्वा तु शयनस्थस्य पादसंवाहनं कुरु ॥२१॥
धर्म्मव्रता तथेत्युक्त्वा शयनस्थस्य सा मुनेः ।

---

(१) अर्घपाद्यादिनेति मुद्रितपु० ।
(२) वराय सा देया इति मुद्रितपु० ।
(३) अर्घपाद्यादिनाभ्यर्च्य इति मुद्रितपु० ।
(४) तस्मै इति पाठो युक्तः ।
(५) तद्वाक्यञ्च तथाकरोदिति ख० ग० ।
(६) विबुधोपममिति मुद्रितपु० ।
(७) श्रान्तश्चाथ कदाचित्तामुवाचातिपतिव्रतामिति मुद्रितपु० ।

पादसंवाहनं चक्रे धृतेनाभ्यज्य तत्परा ॥ २२ ॥
निद्रायमाणेऽथ मुनौ ब्रह्मा तं देशमागतः ।
इत्येव[1] दृष्ट्वा ब्रह्माणं मत्रमार्चयितुं प्रभुं[2] ॥२३॥
पादसंवाहनं कुर्य्यां किं पूज्योऽयं जगद्गुरुः ।
इत्याकुला समुत्तस्थौ मत्वा सा तं[3] .गुरोर्गुरं ॥ २४ ॥
अर्घ्यपाद्यादिकं दत्त्वा ब्रह्माणं समपूजयत् ।
सत्कृतायान्तु शय्यायां विश्राममकरोदजः ॥ २५॥
एतस्मिन्नन्तरे भर्त्ता समुत्तस्थौ च तत्पतः[4] ।
धर्म्मव्रतामपश्यन् स विप्रः क्रुद्धः शशाप तां ॥२६॥
पादसंवाहनं त्यक्त्वा यस्मादाज्ञां विहाय मे ।
गतान्यत्र ततः पापाच्छापदग्धा[5] शिला भव ॥२७॥
भर्त्त्रा धर्म्मव्रता शप्ता मरीचिं प्राह सा रुषा[6] ।
शयाने त्वयि संप्राप्ते ब्रह्मा त्वज्जनको गुरुः॥ २८ ॥
त्वयोत्थाय हि कर्त्तव्यं स्वगुरोः पूजनं सदा ।
मया तु धर्म्मचारिण्या[7] तव कार्य्यं कृते मुने ॥२९॥
अदोषाहं[8] यतः शप्ता तस्माच्छापं ददामि ते ।

---

(१) इयेव इति पाठः सङ्गतः।
(२) इत्येव इति श्लोकार्द्धं मुद्रितपुस्तके नास्ति ।
(३) च इति ख० ग० ।
(४) स्वतल्पतः इति मुद्रितपु० ।
(५) पापे शापो दत्तः इति मुद्रितपु० ।
(६) कोपिता इति मुद्रित पु० ।
(७) तदज्ञानात्त्वया शप्ता इति मुद्रित पु० ।
(८) अदोषामीति मुद्रित पु० ।

त्वञ्च शापं महादेवाङ्गणैः प्राप्यस्यसंशयं ॥ २० ॥
व्याकुलं तं पतिं दृष्ट्वा व्याकुलागात् प्रजापतिं[१] ।
गत्वा प्रयागं ब्रह्माणमग्निं प्रज्वाल्य चेन्धनैः ॥ २१ ॥
गार्हपत्ये स्थिता चक्रे तपः परमदुष्करं[२] ।
तथा प्राप्तो[३] मरीचिश्च तपस्तेपे सुदारुणं ॥ २२ ॥
पतिव्रतायास्तपसा मरीचेस्तपसा तथा ।
[४]इन्द्रादयश्च सन्तप्ता गतास्ते शरणं हरिं ॥ २३ ॥
ऊचुः क्षीराम्बुधौ सुप्तं सन्तप्तास्तपसा हरे ।
पतिव्रतायाश्च मुने[५] स्त्रैलोक्यं रक्ष केशव ॥ २४ ॥
इन्द्रादीनां वचः श्रुत्वा विष्णुर्धर्म्मव्रतां ययौ ।
एतस्मिन्नेव काले तु प्रबुद्धो भगवानजः ।
ऊचुर्धर्म्मव्रतां देवा अग्निस्थां तां सकेशवाः[६] ॥ २५ ॥
अग्निमध्ये तपः कर्त्तुं कस्य[७] शक्तिः पतिव्रते ।

---

(१) व्याकुलं तं पतिं दृष्ट्वा इत्यस्मिन् श्लोकस्थले मुद्रितपुस्तके,
तं व्याकुलं पतिं दृष्ट्वा व्याकुला सा पतिव्रता ।
पतिव्रतात्वमाहात्म्यात् पत्युः शापं दधार सा ॥ २८ ॥
गत्वा प्रयानमित्यादि पाठो वर्त्तते ॥
(२) दुस्तरमिति मुद्रितपु० ।
(३) पत्नी प्राप्तो इति मुद्रितपु० ।
(४) इन्द्रादयश्च सन्तप्ता इति श्लोकार्द्धात्प्राक् मुद्रितपुस्तके,
सन्तापितं जगत्सर्व्वं सदेवासुरमानसं ॥ ३० ॥ इति पाठो वर्त्तते ।
(५) स्तपस इति मुद्रितपु० ।
(६) सह केशवाः इति ख० ग० ।
(७) कस्याः इति ख० ग० ।

त्वया कृतं तत्परमं सर्व्वलोकभयङ्करं ॥ ३६ ॥
वरं वरय धर्म्मज्ञे प्रसन्नो यदभीप्सितं ।
विष्णादीनां वचः श्रुत्वा देवान् धर्म्मव्रताब्रवीत् ॥ ३७ ॥
भर्त्तृ(१) शापमशक्ताहं निवर्त्तयतुमोजसा ।
दत्तो मरीचिना शापो मह्यं स ह्यपगच्छतु(२) ॥ ३८ ॥
धर्म्मव्रतावचः श्रुत्वा प्रोचुरेतां सुराः पुनः(३) ।
धर्म्मव्रते धर्म्मपुत्रि शापोऽयं परमर्षिणा ॥ ३९ ॥
दत्तस्ते न निराकर्त्तुं शक्यो देवद्विजातिभिः ।
तस्मादन्यं वरं ब्रूहि यतो धर्म्मस्य संस्थितिः ॥ ४० ॥
भवेद्धै त्रिषु लोकेषु वेदोक्तस्य शुभव्रते(४) ।
देवानां वचनं(५) श्रुत्वा देवान् धर्म्मव्रताब्रवीत् ॥ ४१ ॥
भर्त्तुः शापान्मोचयितुं न शक्तास्थ यदामराः(६) ।
मह्यं वरं प्रयच्छध्वं एवंविधमनुत्तमं ॥ ४२ ॥
शिलाहं हि भविष्यामि(७) ब्रह्माण्डे पावनी शुभा ।
नदीनदसरस्तीर्थ(८) देवादिभ्योऽतिपावनी ॥ ४३ ॥
ऋष्यादिभ्यो मुनिभ्यश्च मुख्यदेवेभ्य एव च ।

---

(१) भर्तुरिति मुद्रित पु० ।
(२) व्यपगच्छतु इति मुद्रित पु० ।
(३) देवाः प्रोचुः पति. ''मिति मुद्रित पु० ।
(४) एतच्छ्लोकार्द्धं मुद्रितपुस्तके नावलोक्यते ।
(५) विष्णादीनां वच इति मुद्रित पु० ।
(६) भर्त्तुः शापाद्विमोक्तुं मां न शक्तुथ यतोऽयवा । इति मुद्रित पु० ।
(७) प्रभविष्यामीति मुद्रित पु० ।
(८) नदीनदादितीर्थेभ्यो इति मुद्रित पु० ।

त्रैलोक्ये यानि लिङ्गानि व्यक्ताव्यक्तात्मकान्यपि ॥
तानि तिष्ठन्तु मद्देहे तीर्थरूपेण सर्व्वदा ॥ ४४ ॥
तीर्थान्यपि च सर्व्वाणि गयाप्रमुखास्तथा ।
तिष्ठन्तु देवाः सकलाः देव्यश्च मुनयस्तथा[१] ॥ ४५ ॥
[२]शिलास्थितेषु तीर्थेषु स्नात्वा कृत्वाथ तर्पणं ।
श्राद्धं सपिण्डकं येषां ब्रह्मलोकं प्रयान्तु ते ॥ ४६ ॥
गदाधरो ब्रह्मतीर्थं सर्व्वतीर्थोत्तमोत्तमं[३] ।
[४]मुक्तिर्भवेत् पितॄणां च[५] बहूनां श्राद्धतः सदा ॥४७॥

---

(१) ऋष्यादिभ्यो मुनिभ्यश्च इत्यादि देव्यश्च मुनयस्तथा इत्यन्तपाठो मुद्रितपुस्तके न दृश्यते ।

(२) शिलास्थितेषु तीर्थेषु इति श्लोकार्द्धात्प्राक् मुद्रितपुस्तके,

ब्रह्मा विष्णुश्च रुद्रश्च लक्षयित्वा पदं मयि ।
पञ्चाग्नयः कुमाराद्या बहुरूपेण संस्थिताः ॥ ४२ ॥
मूर्त्तामूर्त्तस्वरूपेण पदरूपेण देवताः ।
शिलायां शोभमानेन मूर्त्तरूपाः स्थिता भुवि ॥ ४३ ॥
तां दृष्ट्वा सर्व्वलोकश्च महापातकनाशिनीं ।
पूतो धर्म्माधिकारी च श्राद्धकृद्ब्रह्मलोकभाक् ॥ ४४ ॥

एते त्रयः श्लोकाः सन्ति ॥

(३) एतच्छ्लोकार्द्धं मुद्रितपुस्तके नेक्ष्यते ।

(४) मुक्तिर्भवेदितिश्लोकार्द्धात्प्राक् मुद्रितपुस्तके,

स्नास्यन्ति च मरिष्यन्ति यान्तु ब्रह्मपुरीं नराः ।
वाराणसी प्रयागश्च पुरुषोत्तमसंज्ञकं ॥ ४६ ॥
गङ्गासागरसंज्ञश्च नित्यं तिष्ठतु फल्गुनि ।
गदाधराधिष्ठितं तत् सर्व्वतीर्थोत्तमोत्तमं ॥ ४७ ॥

इमौ द्वौ श्लोकौ स्तः ॥

(५) महतामिति मुद्रित पु० ।

जरायुजाण्डजा वापि स्वेदजा वापि चोद्भिदः ॥
त्यक्ता देहं शिलायान्ते यान्तु विष्णुस्वरूपताम्[१] ॥ ४८ ॥
यथार्च्चिते हरौ सर्व्वे यज्ञाः पूर्णा भवन्ति हि ।
तथा श्राद्धं तर्पणञ्च स्नानञ्चाचयमस्त्विह ॥ ४९ ॥
मम देहे सुरेशानां ये जपन्ति श्रुतादिकं ।
अचिरेणापि ते सिद्धाः सिद्धिभाजो भवन्तु वै ॥ ५० ॥
पितॄणां कुलसाहस्रमात्मना सहितं नरः ।
श्राद्धादिना समुद्धृत्य विष्णुलोकं नयेद्ध्रुवं ॥ ५१ ॥
यावन्तोऽपि सरित्श्रेष्ठा गङ्गाद्याश्च ह्रदाः शुभाः ।
समुद्राद्याः सरोमुख्या मानसाद्याः सुरेश्वराः ।
नृणां श्राद्धं विदधतो मुक्तये निवसन्तु मे ॥ ५२ ॥
शरीरेण समायान्तु कश्चिन्नो यान्तु देवताः ।
एको विष्णुस्त्रिधामूर्त्तिर्यावत्सङ्कीर्त्यते बुधैः ॥ ५३ ॥
तावच्छिलायां सर्व्वाणि तीर्थानि सह दैवतैः ।
सदा तिष्ठन्तु मुनयो गन्धर्व्वाणाङ्गणाश्च ये[२] ॥ ५४ ॥
[३]यावत्तिष्ठति ब्रह्माण्डं तावत्तिष्ठतु वै शिला ।

---

(१) जरायुजाण्डजा वापीतिपद्यस्थले मुद्रितपुस्तके,
जरायुजाण्डजा वापि देहं त्यक्ता शिलोपरि ।
गच्छन्तु विष्णुसायुज्यं कुलैः सप्तशतैः सह ॥ ८ ॥ इति पाठो दृश्यते ।
(२) यथार्च्चिते हरौ सर्व्वे इत्यादि गन्धर्व्वाणां गणाश्च ये इत्योन्तपाठो मुद्रितपुस्तके न समीक्ष्यते ।
(३) यावत्तिष्ठति इत्यस्मात्प्राक् मुद्रितपुस्तके, सर्व्वदेवस्वरूपा च नाम्नेयं देवरूपिणी । इति श्लोकार्द्धं वर्त्तते ।

मम देहेऽश्मरूपे च ये जपन्ति तपन्ति च ॥ ५५ ॥
जुहोत्यग्नौ च तेषां वै तदक्षय्योपतिष्ठतां ।
अक्षयन्तु भवेच्छ्राद्धं जपहोमतपांसि च ।
शिलापर्व्वतरूपेण मयि तिष्ठत सर्व्वदा ॥ ५६ ॥
पतिव्रतावचः[१] श्रुत्वा देवाः प्रोचुः पतिव्रतां ।
त्वया यत् प्रार्थितं सर्व्वं तद्भविष्यत्यसंशयं ॥ ५७ ॥
गयासुरस्य शिरसि भविष्यसि यदा स्थिरा ।
तदा पादादिरूपेण स्थास्यामस्त्वयि सुस्थिराः ।
वरं शिलायै दत्त्वैवं तत्रैवान्तर्दधुः सुराः ॥ ५८ ॥

इति श्रीमहापुराणे वायुप्रोक्ते[२] गयामाहात्म्यं नाम
पञ्चचत्वारिंशोऽध्यायः ।

---

(१) पतिव्रतावचः इत्यत्र ख० ग० पुस्तकयोर्देवरूपावचः इतिपाठ समीक्ष्यते ।
(२) श्वेतवराहकल्पे इति मुद्रित पु० ।

# षट्चत्वारिंशोऽध्यायः ।

गयामाहात्म्यं ।

सनत्कुमार उवाच । वक्ष्ये शिलाया माहात्म्यं शृणु नारद सुश्रिदं ।
यस्या गायन्ति देवाश्च माहात्म्यं मुनिपुङ्गवाः[१] ॥ १ ॥
शिला स्थिता पृथिव्यां सा देवरूपातिपावनी ।
विचित्राख्यं शिलातीर्थं[२] त्रिषु लोकेषु विश्रुतं ॥ २ ॥
तस्याः संस्पर्शनाल्लोकाः सर्वे हरिपुरं ययुः ।
शून्ये लोकत्रये जाते शून्या यमपुरी ह्यभूत्[३] ॥ ३ ॥
यम इन्द्रादिभिर्गत्वा ऊचे ब्रह्माणमद्भुतं[४] ।
[५]अधिकारं गृहाणाथ[६] यमदण्डं पितामह ॥ ४ ॥
यममूचे ततो ब्रह्मा स्वगृहे धारयस्व तां ।
ब्रह्मोक्तो धर्मराजस्तु गृहे तां समधारयत् ॥ ५ ॥
यमोऽधिकारं स्वं चक्रे पापिनां[७] शासनादिकं ।

---

(१) एतच्छ्लोकार्द्धं मुद्रितपुस्तके न दृश्यते ।
(२) चित्रं शिलाख्यं तत्तीर्थमिति मुद्रित पु० ।
(३) शून्ये यमपुरे जाते यमो ब्रह्माणमागतः । इति मुद्रित पु० ।
(४) एतच्छ्लोकार्द्धं मुद्रितपुस्तके नास्ति ।
(५) अधिकारं गृहाणाथ इतः प्राक् मुद्रितपुस्तके,
ऊचे शिलासंस्पर्शनान्मे ब्रह्मन् शून्या पुरी ह्यभूत् ॥ ३ ॥
इति पाठो वर्त्तते ।
(६) गृहाण त्वमिति मुद्रित पु० ।
(७) प्राणिनामिति मुद्रित पु० ।

एवंविधा गुरुतरा शिला जगति विश्रुता ॥ ६ ॥
यथा ब्रह्मा यथा विष्णुर्यथा देवो महेश्वरः ।
ब्रह्माण्डे च(१) यथा मेरुस्तथेयं देवरूपिणी ॥ ७ ॥
गयासुरस्य शिरसि गुरुत्वाद्धारिता यतः(२) ।
अतः पवित्रयोर्योगः(३) पितॄणां मोक्षदायकः ॥ ८ ॥
पवित्रयोर्द्वयोर्योगे हयमेधमजोऽकरोत् ।
भागार्थ(४) मागतान् दृष्ट्वा विष्ण्वादीनब्रवीच्छिला ॥ ९ ॥
शिलास्थितिप्रतिज्ञां तु कुर्वन्तु पितृमुक्तये ।
तथेत्युक्त्वा शिलायान्ते देवा विष्ण्वादयः स्थिताः ॥ १० ॥
शिलारूपेण मूर्त्या च(५) पदरूपेण देवताः ।
मूर्त्तामूर्त्तस्वरूपेण(६) स्थिताः पूर्वप्रतिज्ञया(७) ॥ ११ ॥
दैत्यस्य मुण्डपृष्ठे तु यस्मात् सा संस्थिता शिला(८) ।
तस्मात् स मुण्डपृष्ठाद्रिः पितॄणां ब्रह्मलोकदः ॥ १२ ॥
आच्छादितः शिलापादः(९) प्रभासेनाद्रिणा यतः(१०) ।

---

(१) ब्रह्माण्डचेति मुद्रित पु० ।
(२) तथा इति मुद्रित पु० ।
(३) पवित्रयोर्द्वयोर्योगः इति मुद्रित पु० ।
(४) भागार्थमिति मुद्रित पु० ।
(५) मूर्त्तास्वेति ख० ग० ।
(६) व्यक्ताव्यक्तस्वरूपेणेति मुद्रित पु० ।
(७) सर्व्वाः प्रतिज्ञयेति मुद्रित पु० ।
(८) शिला यस्मात्च संस्थिता इति मुद्रित पु० ।
(९) आच्छादितं शिलारूपमिति मुद्रित पु० ।
(१०) ततः इति मुद्रित पु० ।

भाषितो भास्करेणेति(१) प्रभासः परिकल्पितः(२) ॥ १३ ॥
प्रभासं हि विनिर्भिद्य(३) शिलाङ्गुष्ठो विनिर्गतः।
अङ्गुष्ठोत्थित ईशोऽपि(४) प्रभासेशः प्रकीर्त्तितः ॥ १४ ॥
शिलाङ्गुष्ठैकदेशो यः सा च प्रेतशिला स्मृता।
पिण्डदानाद्यतस्तस्यां(५) प्रेतत्वान्मुच्यते नरः ॥ १५ ॥
महानदीप्रभासाद्योः सङ्गमे स्नानकृन्नरः।
रामो देव्या सह स्नातो रामतीर्थं ततः स्मृतं ॥ १६ ॥
प्रार्थितोऽथ(६) महानद्या राम स्नातो भवेति च।
रामतीर्थं ततो भूत्वा त्रिषु लोकेषु विश्रुतं(७) ॥ १७ ॥
जन्मान्तरशतं साग्रं यत् कृतं दुष्कृतं मया।
तत् सर्वं विलयं यातु रामतीर्थाभिषेचनात् ॥ १८ ॥
मन्त्रेणानेन यः स्नात्वा श्राद्धं कुर्वीत मानवः।
रामतीर्थे पिण्डदस्तु विष्णुलोकं प्रयात्यसौ(८)।
तथेत्युक्त्वा स्थितो रामः सीतया भरताग्रजः ॥ १९ ॥
राम राम महाबाहो देवानामभयङ्कर।
त्वां नमस्येऽथ(९) देवेशं मम नश्यतु पातकं ॥ २० ॥

(१) भास्करेणासौ इति मुद्रित पु०।
(२) परिकीर्त्तितः इति मुद्रित पु०।
(३) प्रभासाद्रिं तु निर्भिद्य इति मुद्रित पु०।
(४) तस्मात् प्रभेश्वरो जात इति मुद्रित पु०।
(५) पिण्डप्रदानात्तस्यां तु इति मुद्रित पु०।
(६) ऽथ इति ख० ग०।
(७) पावनमिति मुद्रित पु०।
(८) प्रयात्यसौ इति पाठः सुसङ्गतः।
(९) नमस्येऽहं इति ख० ग०।

मन्त्रेणानेन यः स्नात्वा श्राद्धं कुर्य्यात् सपिण्डकं(१)।
प्रेतत्वात्तस्य पितरो विमुक्ताः पितृतां ययुः(२) ॥ २१ ॥
आपस्त्वमपि देवेश ज्योतिषां पतिरेव च।
पापं नाशय मे देवो मनोवाक्कायकर्मजं ॥ २२ ॥
नमस्कृत्य प्रभासेशं भासमानं शिवं व्रजेत्।
तत्र शम्भुं नमस्कृत्य कुर्य्याद्यमबलिं ततः(३) ॥ २३ ॥
रामे वनं गते शैलमागत्य भरतः स्थितः।
पितृपिण्डादिकं कृत्वा रामं संस्थाप्य तत्र च ॥ २४ ॥
रामं सीतां लक्ष्मणञ्च मुनीन् स्थापितवान् प्रभुः।
भरतस्याश्रमे पुण्ये नित्यं पुण्यतमैर्वृतं।
मतङ्गस्य पदं तत्र दृश्यते सर्वमानुषैः ॥ २५ ॥
स्थापितं धर्मसर्वस्वं लोकस्यास्य निदर्शनात्।
मतङ्गस्य पदे श्राद्धी सर्वांस्तारयते पितॄन् ॥ २६ ॥
रामतीर्थे नरः स्नात्वा रामं सीतां समर्च्य च।
रामेश्वरं प्रणम्याथ न देही जायते पुनः(४) ॥ २७ ॥
शिलाया जघनं भूयः समाक्रान्तं नगेन तु।

---

(१) रामतीर्थे नरः स्नात्वा मन्त्रैः पिण्डप्रदो भवेदिति मुद्रित पु०।
(२) राम राम महाबाहो इत्यस्माच्छ्लोकात्प्राक् मुद्रितपुस्तके,
रामतीर्थे नरः स्नात्वा इति श्लोको वर्त्तते।
(३) राम राम महाबाहो इत्यस्माच्छ्लोकात्परतः मुद्रितपुस्तके, त्वां नमस्येऽत्र देवेशमिति श्लोकार्द्धं, नमस्कृत्य प्रभासेशमिति श्लोकश्च, वर्त्तते।
(४) रामं वनं गते शैलमित्यादि न देही जायते पुनः इत्यन्तपाठो मुद्रितपुस्तके न दृश्यते।

धर्मराजेन संप्रोक्तो न गच्छेति नगः स्मृतः ॥ २८ ॥
यमराजधर्मराजौ निश्चलार्थं व्यवस्थितौ ।
ताभ्यां बलिं प्रयच्छामि(१) पितॄणां मुक्तिहेतवे(२) ॥२९॥
द्वौ श्वानौ(३) श्यामशबलौ वैवस्वतकुलोद्भवौ ।
ताभ्यां बलिं प्रयच्छामि स्यातामेतावहिंसकौ ॥ ३० ॥
ऐन्द्रवारुणवायव्ययाम्यनैरृत्यसंस्थिताः ।
वायसाः प्रतिच्छन्तु भूयो(४) पिण्डं मया क्षितं(५) ॥३१॥
(६)शिलाया दक्षिणे हस्ते स्थापितः कुण्डपर्वतः(७) ।

---

(१) प्रदास्यमीति मुद्रित पु० ।

(२) स्यातामेतावहिंसकाविति मुद्रित पु० ।

(३) देवौ इति मुद्रित पु०

(४) अत्र भूमौ इति पाठः सम्भाव्यते ।

(५) एष श्लोको मुद्रितपुस्तके नेष्यते ।

(६) शिलाया दक्षिणे हस्ते इत्यस्मात्श्लोकात्प्राक् मुद्रितपुस्तके,

यमोऽसि यमदूतोऽसि वायसोऽसि महाबल ।
सप्तजन्मकृतं पापं बलिं भुक्त्वा विनाशय ॥ २५ ॥
रामे वनं गते शीघ्रमागत्य भरतेन हि ।
पितुः पिण्डादिकं कृत्वा रामेशः स्थापितोऽत्र वै ॥ २६ ॥
स्नात्वा नत्वा च रामेशं रामसीतासमन्वितं ।
तत्र श्राद्धं सपिण्डञ्च कृत्वा विष्णुपुरं व्रजेत् ।
पितृभिः सह धर्मात्मा कुलानाञ्च शतैः सह ॥ २७ ॥

एते त्रयः श्लोकाः ख० ग० पुस्तकयोर्न सन्ति ।

(७) शिलाया दक्षिणे हस्ते इतः श्लोकार्द्धात्परतः मुद्रितपुस्तके, तत्र श्राद्धादिना सर्वान् पितॄन् ब्रह्मपुरं नयेत् ॥ २८ ॥ इति श्लोकार्द्धं वर्त्तते ।

तत्र गत्वा हरं दृष्ट्वा तपस्तीर्थे वसन्तु ॥४४॥
तत्रागत्य हि वरं कुण्डं त्रैलोक्यदुर्लभम् ।
यत्र मुन्यष्टकं सिद्धं तपस्तप्त्वा शिवं गतं ।
कुण्डे मुन्यष्टकं नत्वा पितॄन् ब्रह्मपुरं नयेत् ॥४५॥

---

ब्रह्मयोनिं प्रविश्याथ निर्गच्छेद्यस्तु मानवः ।
परं ब्रह्म स यातीह विमुक्तो योनिसङ्कटात् ॥ २५ ॥
गत्वा गयाकुमारञ्च ब्राह्मण्यं लभते नरः ।
सोमकुण्डाभिषेकी च सोमलोकं नयेत् पितॄन् ॥ २६ ॥
बलिः काकशिलायान्तु काकेभ्य ऋणमोक्षदः ।
स्वर्गद्वारेश्वरं नत्वा स्वर्गाद्ब्रह्मपुरे व्रजेत् ॥ २७ ॥
पिण्डदो भीमगङ्गायां निर्मलः स्वर्नयेत् पितॄन् ।
शिलाया दक्षिणे हस्ते भस्मकूटमधारयत् ।
ततोऽसौ भस्मकूटाग्निर्भस्मस्नातश्च नारद ॥ २८ ॥
वटो वटेश्वरस्तत्र स्थितश्च प्रपितामहः ।
नत्वाभ्यर्च्य पदे पुण्ये पिण्डदः स्वर्नयेत्पितॄन् ॥ २९ ॥
तस्याग्रे रुक्मिणीकुण्डं पश्चिमे कपिला नदी ।
कपिलेशो नदीतीरे स्नानाऽभोम(?)समागमे ॥ ३० ॥
कपिलायां नरः स्नात्वा कपिलेशं नमेच्च यः ।
श्राद्धदः स्वर्गगामी स्यात् माहेश्वरीकुण्ड एव च ॥ ३१ ॥
गौरी च मङ्गला तत्र सर्व्वसौभाग्यदायिनी ।
जनार्द्दनो भस्मकूटे तस्य हस्ते च पिण्डदः ॥ ३२ ॥
मन्त्रेण चात्मनोऽन्येषां सव्यहस्ते तिलैर्विना ।
जीवतां दधिसंमिश्रं सर्व्वे ते विष्णुलोकगाः ॥ ३३ ॥
एव पिण्डो मया दत्तस्तव हस्ते जनार्द्दन ।

नगस्थेनाच देवर्षे उदयाद्रेमेवात्मना ।
शिलाया वामहस्तेऽपि स्थापितो गिरिराट् शुभः ।
वादित्राद्यैर्दिव्यगीतैराख्यो वादित्रको गिरिः ॥४६॥

---

देहि देव गयाशीर्षे तस्मै तस्मिन् मृते तु तं ॥ ४४ ॥
एष पिण्डो मया दत्तस्तव हस्ते जनार्द्दन ।
गयाशीर्षे त्वया देयो मह्यं पिण्डो मृते मयि ॥ ४५ ॥
जनार्द्दन नमस्तुभ्यं नमस्ते पितृरूपिणे ।
पितृपते नमस्तुभ्यं नमस्ते मुक्तिहेतवे ॥ ४६ ॥
गयायां पितृरूपेण स्वयमेव जनार्द्दन ।
लक्ष्मीकान्त नमस्तेऽस्तु नमस्ते पितृमोक्षद ॥ ४७ ॥
तं ध्यात्वा पुण्डरीकाक्षं मुच्यते च ऋणत्रयात् ।
पुण्डरीकाक्षमभ्यर्च्य स्वर्गं प्रापुर्नरा ध्रुवं ॥ ४८ ॥
वामभागे तु संप्राप्य नत्वा भीमो जनार्द्दनं ।
श्राद्धं सपिण्डकं कृत्वा आत्मभिर्विष्णुलोकगः ॥ ४९ ॥
शिलाया दक्षिणे पादे प्रेतकूटो गिरिः स्थितः ।
धर्म्मराजेन पादाभ्यां गिरिः प्रेतशिलाश्रयः ॥ ५० ॥
पादेन दूरे निक्षिप्तः शिलायाः पापभारतः ।
प्रेतभावस्वरूपेण चरत्यहरगकानने ॥ ५१ ॥
एते स्थिताश्च बहवो विघ्नकारिण एव ते ।
श्राद्धादिकरणाद्भूयां तीर्थं पितृविमुक्तिदं ॥ ५२ ॥
गतः शिलाङ्गसंस्पर्शात्प्रेतकूटः पवित्रतां ।
प्रेतकूटश्च तत्रास्ते देवास्तत्र पदे स्थिताः ।
तत्र श्राद्धादिकं कृत्वा प्रेतत्वान्मोचयेत् पितॄन् ॥ ५३ ॥
शिलासमीपे ये विप्र प्रेतरूपा भयानकाः ।

दक्षिणाच्च तपस्तेपे शीलाद्रेर्दक्षिणे गिरौ ॥५६॥
वटो वटेश्वरश्चात्र स्थितश्च प्रपितामहः ।
तदग्रे दक्षिणीकुण्डं पश्चिमे कपिला नदी ।
कपिलेशो नदीतीरे प्रभासोमसमागमे ॥५७॥
कपिलायां नरः स्नात्वा कपिलेशं समर्च्य च ।
कृते श्राद्धे पिण्डदाने पितरो मोक्षमाप्नुयुः ॥५८॥
तथाग्निधारा गिरिवराद्दागतोयन्तकादश ।
तत्र सारस्वतं कुण्डं सरस्वत्या प्रकल्पितं ॥५९॥
शुक्रस्तत्र स्तुतैः सार्द्धं मण्डामार्कादिभिः प्रभुः ।
तत्र तत्र मुनीन्द्राणां पदेषु मुनिसत्तम ।
श्राद्धपिण्डादिकृत् स्नातः पितॄंस्तारयते नरः ॥६०॥
शिलाया वामहस्तेऽपि गृध्रकूटो गिरिः स्थितः ।
गृध्ररूपेण संसिद्धास्तपस्तप्त्वा महर्षयः ॥६१॥
अतो गिरिर्गृध्रकूटस्तत्र गृध्रेश्वरः स्थितः ।
दृष्ट्वा गृध्रेश्वरं नत्वा यायात् शम्भोः पदं नरः ॥६२॥
तत्र गृध्रे गुहायाञ्च पिण्डदः शिवलोकभाक् ।
तत्र गृध्रे वटं नत्वा प्राप्तकामो दिवं व्रजेत् ॥६३॥
ऋणमोक्षं पापमोक्षं शिवं दृष्ट्वा शिवं व्रजेत् ।
शूलक्षेपश्च तत्रास्ते पिण्डदः स्वर्नयेत् पितॄन् ॥६४॥

---

स्नातो जलाशये तत्र नयेत् स्वर्गं कुलत्रयं ।
शिलायां धर्मरूपेण ब्रह्माद्यास्तात्मना स्थिताः ।
[illegible] विबुधैः सार्द्धं तथादेवमयी शिला ॥ (१)

आदिपालेन गिरिणा समाक्रान्तं शिलोदरं ।
तत्रास्ते गजरूपेण विघ्नेशो विघ्ननाशनः ।
तं दृष्ट्वा मुच्यते विघ्नैः पितॄन् ब्रह्मपुरं नयेत् ॥६५॥
नितम्बे मुण्डपृष्ठस्य देवदारुवनन्त्वभूत् ।
मुण्डपृष्ठारविन्दाद्रौ दृष्ट्वा पापं विनाशयेत् ।
गयानाभौ सुषुम्नायां पिण्डदः स्वर्नयेत् पितॄन् ॥६६॥
शिलाया वामपादे तु स्थापितः प्रेतपर्वतः ।
धर्मराजेन पापेभ्यो गिरिः प्रेतशिलाह्वयः ॥६७॥
पादेन दूरे निक्षिप्तः शिलायाः पादभारतः ।
गतः शिलायाः संसर्गात् प्रेतकूटः पवित्रतां ॥६८॥
प्रेतकुण्डञ्च तत्रास्ते देवास्तत्र पदे स्थिताः(१) ।
तत्र कुण्डादिकं कृत्वा(२) प्रेतत्वान्मोचयेत् पितॄन् ॥६९॥
पृथक्स्थितास्तु बहवो विघ्नकारिण एव ते ।
श्राद्धादिकारिणां नृणां तीर्थे पितृविमुक्तये ।
प्रेता धानुष्करूपेण करग्रहणकारकाः ॥७०॥
पादाङ्कितां मुण्डपृष्ठां महादेवनिवासिनीं ।
तां दृष्ट्वा सर्वलोकस्य मुक्तः पापोपपातकैः ॥७१॥
गयाशिरसि पुण्ये च सर्वपापैर्विवर्जिते(३) ।

---

(१) पदैः स्थिता इति पाठः सुसङ्गतः ।
(२) पिण्डादिकं दत्त्वा इति पाठः समीचीनः ।
(३) इतः परं श्लोकार्धं पतितमित्युपलभ्यते साकाङ्क्षत्वात् ।

प्रेतादिवर्जितं यस्मात् ततोऽतिपावनं वरं ॥७१॥
कीकटेषु गया पुण्या पुण्यं राजगृहं वनं।
च्यवनस्याश्रमं पुण्यं नदी पुण्या पुनः पुना(१) ॥७३॥
वैकुण्ठो लोहदण्डश्च गृध्रकूटश्च शोणकः।
अत्र श्राद्धादिना सर्वान् पितॄन् ब्रह्मपुरं नयेत् ॥७४॥
क्रौञ्चरूपेण हि मुनिर्मुण्डपृष्ठे तपोऽकरोत्।
तस्य पादाङ्कितो यस्मात् क्रौञ्चपादस्ततः स्मृतः ॥७५॥
स्नातो जलाशये तत्र नयेत् स्वर्गं स्वकं कुलं।
बलिः काकशिलायाञ्च काकेभ्य ऋणमोचदः ॥७६॥
मुण्डपृष्ठस्य मार्गौ हि लोमशो लोमहर्षणः।
द्वावेतौ परमं तप्त्वा तपःसिद्धिं पराङ्गतौ ॥७७॥
आहृतास्तु सरिच्छ्रेष्ठा लोमशेन महानदी।
सारावती वेत्रवती चन्द्रभागा सरस्वती ॥७८॥
कावेरी सिन्धुरीराच चन्द्रमा(२) च सरिद्वरा।
वाशिष्ठी सरयूर्गङ्गा यमुना गण्डकीन्दिरा ॥७९॥
महावैतरणी माश्वा निचरा च दिवोकसः।
सावश्यलकनन्दा च उदीची कनकाङ्कया ॥८०॥
कौशिकी ब्रह्मदा ज्येष्ठा सर्वस्याघविमोचिनी।
कृष्णात्वत्वा चर्म्मवती द्वे नद्यौ मुक्तिदायिके ॥८१॥

(१) पुनः पुनः इति ख०।
(२) चन्द्रमा इति पाठोऽत्र सम्भाव्यते।

आहृते सरितां श्रेष्ठे लोमहर्षण साम्प्रतात् ।
तपसस्तु प्रभावेण नर्म्मदा मुनिपुङ्गव ।
तासु सर्वासु यः स्नात्वा पिण्डदः स्वर्गयेत् पितॄन् ॥८२॥
ब्रह्मयोनिं प्रविश्याथ निर्गच्छेद्यस्तु मानवः ।
परं ब्रह्म स यातीह विमुक्तो योनिसङ्कटात् ॥८३॥
निश्चरायां पुष्करिण्यां स्नातः श्राद्धादिकं नरः ।
कुर्य्यात् क्रौञ्चपदे दिव्ये नियमादासरत्रयं ।
सर्वान् पितॄन्नयेत् स्वर्गं पञ्चपापिन एव च ॥८४॥
जनार्दनो भस्मकूटे तस्य हस्ते तु पिण्डदः ।
आत्मनोऽप्यथवान्येषां सव्येनापि तिलैर्विना ।
जीवतां दधिसंमिश्रं सर्वे ते विष्णुलोकगाः ॥८५॥
यस्तु पिण्डो मया दत्तस्तव हस्ते जनार्दन ।
यदुद्दिश्य त्वया देयस्तस्मिन् पिण्डो मृते प्रभो ॥८६॥
एष पिण्डो मया दत्तस्तव हस्ते जनार्दन ।
अन्तकाले गते मह्यं त्वया देयो गयाशिरे ॥८७॥
जनार्दन नमस्तुभ्यं नमस्ते पितृमोक्षद ॥
पितृपते नमस्ते तु नमस्ते पितृरूपिणे ॥८८॥
गयायां पितृरूपेण स्वयमेव जनार्दनः ।
तं दृष्ट्वा पुण्डरीकाक्षं मुच्यते च ऋणत्रयात् ॥८९॥
नमस्ते पुण्डरीकाक्ष ऋणत्रयविमोचक ।
लक्ष्मीकान्त नमस्ते तु पितॄणां मोक्षदो भव ॥९०॥
वामजानु सुसंपात्य नत्वा भीमो जनार्दनं ।

श्राद्धं सपिण्डकं कृत्वा भ्रातृभिर्ब्रह्मलोकभाक् ।
पितृभिः सह धर्मात्मा कुशनाभश्च क्रमेण च ॥९१॥
शिलार्थी व्यक्तरूपेण व्यक्ताव्यक्तात्मना स्थितः ।
सर्वतीर्थो विबुधैः सार्द्धं तस्माद्देवमयी शिला ॥९२॥

इति श्रीमहापुराणे वायुप्रोक्ते[१] गयामाहात्म्यं नाम
षट्चत्वारिंशोऽध्यायः ।

---

(१) श्वेतवराहकल्पे इति मुद्रित पु० ।

# अथ सप्तचत्वारिंशोऽध्यायः।

गयामाहात्म्यम्।

नारद उवाच। कथं व्यक्तस्वरूपेण स्थितश्चादिगदाधरः(१)।
कथं व्यक्तस्वरूपेण(२) व्यक्ताव्यक्तात्मना स्थितः ॥१॥
कथं गदा समुत्पन्ना यथा ह्यादिगदाधरः(३)।
गदालोलं कथञ्चासीत् सर्व्वपापक्षयङ्करं ॥२॥
सनत्कुमार उवाच। गदानामासुरो(४) ह्यासीद्वज्राद्वज्रतरो दृढः(५)।
प्रार्थितो ब्रह्मणे प्रादात् स्वशरीरास्थि दुस्त्यजं(६) ॥३॥
ब्रह्मोक्तो विश्वकर्म्मापि गदाञ्चक्रेऽद्भुतां तदा(७)।

---

(१) स्थितो ह्यादिगदाधरः इति मुद्रित पु०।

(२) कथमव्यक्तरूपेणेति मुद्रितपु०।

(३) यस्मादादिगदाधर इति मुद्रितपु०।

(४) गदो नामासुरो इति मुद्रितपु०।

(५) गदो नामासुरो ह्यासीदित्यस्माच्छ्लोकार्धात्परतः मुद्रितपुस्तके, तपसा दारुणेनासौ ब्रह्मलब्धवरः पुरा ॥३॥ इति श्लोकार्धं वर्त्तते।

(६) ब्रह्मणा प्रार्थितः प्रादात् स्वान्यस्थीनि शरीरतः। इति मुद्रितपु०। अस्माच्छ्लोकार्धात्परतः मुद्रितपुस्तके, तस्मिन् कदेश निश्चते वस्त्रास्थीनि दृढानि वै ॥४॥ इति श्लोकार्द्धं दृश्यते।

(७) सुदारुणमिति मुद्रितपु०।

तदस्थि वज्रनिर्व्योपैः कुन्दैः स्वर्गे ह्यधारयत् ॥४॥
अथ कालेन महता मनौ स्वायम्भुवे क्वचित्[1] ।
हेती रंहो ब्रह्मपुत्रः[2] तपस्तेपे सुदारुणं ॥५॥
दिव्यवर्षसहस्राणां शतं वायुमभक्षयत् ।
उन्मुखस्योर्द्धबाहुस्य पादाङ्गुष्ठभरेण च ॥६॥
एकेनातिष्ठदव्ययः शीर्णपर्णानिलाशनः[3] ।
ब्रह्मादींस्तपसा तुष्टान् वरं वव्रे वरप्रदान् ॥७॥
देवैर्दैत्यैश्च शस्त्रास्त्रैः[4] विविधैर्मनुजादिभिः[5] ।
कृष्णोशानादिचक्राद्यैरवध्यः स्यां महाबलः ॥८॥
तथेत्युक्त्वान्तर्हितास्ते हेतिर्देवानयाजयत्[6] ।
इन्द्रत्वमकरोद्धेतिर्भीता ब्रह्महरादयः[7] ॥९॥
हरिन्ते शरणं जग्मुरूचुर्हेतिं जहीति ताम् ।
ऊचे हरिरवध्योऽयं हेतिर्देवासुरैः सुराः ॥१०॥

---

(१) तदस्थि वज्रनिर्व्योपैरित्यादि मनौ स्वायम्भुवे क्वचिदित्यन्तपाठो मुद्रितपुस्तके न दृश्यते ।

(२) महांस्तत्र इति मुद्रितपु० ।

(३) दिव्यवर्षसहस्राणामित्यादि शीर्णपर्णानिलाशनः इत्यन्तपाठो मुद्रितपुस्तके नेष्यते ।

(४) शस्त्रैश्च इति मुद्रितपु० ।

(५) मनुजैरपि इति मुद्रितपु० ।

(६) देवांस्तदाजयदिति मुद्रितपु० ।

(७) ब्रह्मादयः सुराः इति मुद्रितपु० ।

महास्त्रं मे प्रयच्छध्वं(१) हेतिं हन्मि(२) हि येन तं।
इत्युक्तास्ते ततो देवा गदां तां हरये ददुः ॥११॥
दधार तां गदामादौ देवैर्दत्तो गदाधरः।
गदया हेतिमाहत्य देवैः स त्रिदिवं ययौ(३) ॥१२॥
गदामादाववष्टभ्य गयासुरशिरःशिलां(४)।
निश्चलार्थं स्थितो यस्मात्तस्मादादिगदाधरः(५) ॥१३॥
शिलापर्वतरूपेण व्यक्त आदिगदाधरः।
शिलासौ मुण्डपृष्ठाद्रिः प्रभासो नाम पर्व्वतः ॥१४॥
उद्यन्तो गीतनादश्च भस्मकूटो गिरिर्महान्।
गृध्रकूटः प्रेतकूटश्चादिपालोऽरविन्दकः ॥१५॥
पञ्चलोकः सप्तलोको वैकुण्ठो लोहदण्डकः(६)।
क्रौञ्चपादोऽक्षयवटः फल्गुतीर्थं मधुस्रवा ॥१६॥
दधिकुल्या मधुकुल्या देविका च महानदी(७)।

---

(१) प्रयच्छन्तु इति मुद्रितपु०।

(२) हन्यां इति मुद्रितपु०।

(३) देवेभ्यस्त्रिदिवं ददौ इति ख० ग०।

(४) गदामादाववष्टभ्य इति श्लोकार्धं मुद्रितपुस्तके नेष्यते तत्र यस्मिन् स्थले, क्षालनार्थं गदा यत्र विष्णुना लोलिताभवत्। बभूव तद्गदालोलं तीर्थं परमपावनं॥११॥ गदयाऽहेतिमाहत्य गयासुरशरीरके। इति पाठो विद्यते॥

(५) ततो ह्यादिगदाधरः इति मुद्रितपु०।

(६) एतच्छ्लोकार्धं मुद्रितपुस्तके नास्ति।

(७) दधिकुल्या मधुकुल्या एतच्छ्लोकार्धं मुद्रितपुस्तके नास्ति तत्र यस्मिन्

वैतरण्यादिरूपेण व्यक्त आदिगदाधरः[1] ॥१७॥
विष्णोः पदं रुद्रपदं ब्रह्मणः पदमुत्तमं ।
कश्यपस्य पदं दिव्यं द्वौ हस्तौ यत्र निर्गतौ ॥१८॥
पञ्चाग्नीनां पदान्यत्र इन्द्रागस्त्यपदे परे ।
रवेश्च कार्त्तिकेयस्य क्रौञ्चमातङ्गयोरपि ॥१९॥
मुख्यलिङ्गानि सर्व्वाणि व्यक्ताव्यक्तात्मना स्थितः ।
आद्यो[2]गदाधरश्चैव व्यक्तः श्रीमान् गदाधरः ॥२०॥
गायत्री चैव सावित्री सन्ध्या चैव सरस्वती ।
गयादित्यश्चोत्तरार्को दक्षिणार्कोऽपि नैमिषः ॥२१॥
श्वेतार्को गणनाथश्च वसवोऽष्टौ मुनीश्वराः ।
रुद्राश्चैकादशैवाथ तथा सप्तर्षयोऽपरे[3] ॥२२॥
सोमनाथश्च[4] सिद्धेशः कपर्द्दीशो विनायकः ।
नारायणो महालक्ष्मीर्ब्रह्मा श्रीपुरुषोत्तमः ॥२३॥

---

स्थले, महानदी ब्रह्मसर उदीची कनकाह्वया ॥ १५ ॥ नदी देवनदी काशी सुषुम्ना निश्चला नदी। इति श्लोकार्धद्वयमस्ति।

(१) वैतरण्यादिनाव्यक्तरूपेणादिगदाधरः इति ख० ग० ।

(२) आदाविति मुद्रितपु० ।

(३) गायत्री चैव सावित्री इत्यादि तथा सप्तर्षयोऽपरे इत्यन्तपाठो मुद्रितपुस्तके नेक्ष्यते तत्र अस्मिन् स्थले पाठान्तरं दृश्यते तद्यथा—

उत्तरार्को दक्षिणार्कः श्वेतार्को गणनायकः ।
नरसिंहो वामनश्च केदारकनकेश्वरौ ॥२०॥
मतङ्गेशः मतङ्गचक्रेशो मुण्डपृष्ठेऽथ चण्डिका ।

(४) सोमनाथश्चेति मुद्रितपु० ।

मार्कण्डेयेशः कौटीशो ब्रह्मरेशः पितामहः ।
जनार्दनो[१] मङ्गला च पुण्डरीकाक्ष उत्तमः ॥२४॥
इत्यादिव्यक्तरूपेण स्थितश्चादिगदाधरः ।
हेतिर्या राक्षसस्तस्मिन् हते विष्णुः पुरं गतः[२] ॥२५॥
ब्रह्मणा सह रुद्राद्यैः कारिते निश्चलेऽसुरे ।
तुष्टावाद्यगदापाणिं वेधा हर्षेण निर्वृतः[३] ॥२६॥

ब्रह्मोवाच। गदाधरं व्यपगतकालकल्मषं[४]
गयागतं विदितगुणं गुणातिगं ।
गुहागतं गिरिवरगौरगेहगं[५]
गणार्चितं[६] वरदमहं नमामि[७] ॥२७॥
अहःश्रियं[८] चिदग्रगणादिसुश्रियं
भवश्रियं[९] दितिभवदारणश्रियं ।

---

(१) जनार्दनो मङ्गला च एतच्छ्लोकार्धात्प्राक् मुद्रितपुस्तके,
बद्रेश्वरश्चैव सोमेशो रामेशः प्रपितामहः ॥२२॥
इति श्लोकार्धं वर्तते ।
(२) स्थितः पुरा इति मुद्रितपु० ।
(३) तुष्टावाथ जगद्धाता प्रणतोऽपि गदाधरं ॥२५॥ इति मुद्रितपु० ।
(४) कलिगतकल्मषापहमिति मुद्रितपु० ।
(५) गिरिवरगेहगोपितमिति मुद्रितपु० ।
(६) सुरार्चितमिति मुद्रितपु० ।
(७) वरद नमामि तं इति ख० ग० ।
(८) शुभश्रियमिति मुद्रितपु० ।
(९) यशःश्रियं इति मुद्रितपु० ।

कलिप्रियं(१) कलिमलमर्दनप्रियं
गदाधरं नौमि तमाश्रितप्रियं(२) ॥२८॥
दृढाद्दृढं परिदृढगाढसंस्तुतं
कामाहुतं सुदृढमदृढिदृढिगं ।
तमाश्रगं दृढदुरितापढौकितं
सुढौकतं दृढतरगोचसन्निभं(३) ॥२९॥
विदेहकं करणकलाविवर्जितं
विजन्मकं हिमकरवेदिभूषितं(४) ।
गदाधरं ध्वनिसुखवर्जितं परं
नमाम्यहं सततमनादिमीश्वरं हरिं(५) ॥३०॥
मनोऽतिगं(६) मतिगतिवर्जितं परं(७)
सदाद्वयं स्तुतिभिरपि संस्तुतं बुधैः(८) ।
चिदात्मकं कलिगतकारणातिगं
गदाधरं हृदयगतं नमामि तं(९) ॥३१॥

(१) कलागतं इति मुद्रितपु० ।

(२) गदाधरं नौमि तमाश्रितप्रियमेतदवधिं मुद्रितपुस्तके नेष्यते तत्र तस्मिन् स्थले, दृढादृढं परिदृढगाढभक्तिभिरितिपाठो वर्त्तते ।

(३) एष श्लोको मुद्रितपुस्तके न दृश्यते ।

(४) वियन्मयञ्जिमधरवारिभूषितमिति मुद्रितपु० ।

(५) परममनादिदैवकमिति मुद्रितपु० ।

(६) मनोगतमिति मुद्रितपु० ।

(७) स्वजमिति मुद्रितपु० ।

(८) प्रमात्मकं श्रुतिभिरसि स्थितं बुधमिति मुद्रितपु० ।

(९) नमाम्यहमिति मुद्रितपु० ।

सनत्कुमार उवाच । देवैः सार्द्धं ब्रह्मणैवं स्तुतश्चादिगदाधरः ।
उवाच वरं वृणीष्व त्वं वरं ब्रह्मा तमब्रवीत् ॥२२॥
शिलायां देवरूपिण्यां न तिष्ठामस्त्वया विना ।
स्थास्यामोऽत्र त्वया सार्द्धं नित्यं व्यक्तादिरूपिणा[१] ॥२३॥
एवमस्तु श्रिया सार्द्धं स्थितश्चादिगदाधरः[२] ।
लोकानां रक्षणार्थाय जगतां मुक्तिहेतवे ।
सुव्यक्तः पुण्डरीकाक्षो जनार्दन इति श्रुतः[३] ॥२४॥
वेदैरगम्या[४] यामूर्त्तिरादिभूता सनातनी ।
सुव्यक्ता श्वेतकल्पे सा भविष्यति[५] तथा पुनः ।
वाराहकल्पे सुव्यक्ता व्यक्तिमप्यगमत् पुरा[६] ॥२५॥
सन्तारणाय लोकानां देवानां रक्षणाय च ।
गयाशिरसि सुव्यक्तो भविष्यति[७] न संशयः ॥२६॥

---

(१) शिलायां देवरूपिण्यां स्थिरं तिष्ठ सुरेश्वर ।
व्यक्तो गदाधरो भूत्वाव्यक्तश्चैव जनार्दन ॥२१॥ इति मुद्रितपु० ।
(२) एतच्छ्लोकार्धं मुद्रितपुस्तके न विद्यते ।
(३) एष श्लोको मुद्रितपुस्तके नास्ति तत्र तस्मिन् स्थले पाठान्तरमस्ति
तद्यथा,—
लोकानां रक्षणार्थाय तमुवाच गदाधरः ।
शिलायां देवरूपिण्यां स्थित्वा यूयं तु तिष्ठत ॥२२॥
सुव्यक्तः पुण्डरीकाक्षः श्वेतकल्पे तथा स्थितः ।
(४) देवैर्गम्या चेति मुद्रितपु० ।
(५) व्यक्तः श्वेतकल्पे तु भविष्यामीति मुद्रितपु० ।
(६) वराहकल्पे सुव्यक्तो देव आदिगदाधरः ॥२०॥ इति मुद्रितपु० ।
(७) भविष्यामीति मुद्रितपु० ।

ये द्रक्ष्यन्ति सदा भक्त्या देवमादिगदाधरं ।
कुष्ठरोगादिनिर्मुक्ता यास्यन्ति हरिमन्दिरं(१) ॥३७॥
ये द्रक्ष्यन्ति सदा भक्त्या देवमादिगदाधरं ।
ते प्राप्स्यन्ति धनं धान्यमायुरारोग्यमेव च ॥३८॥
कलत्रपुत्रपौत्रादिगुणकीर्त्तिसुखानि च(२) ।
भक्त्या ये नमस्यन्ति राज्यं ब्रह्मपुरं तथा(३) ।
भुक्त्वा व्रजेयुः सततं पुण्यपुञ्जफलं नराः(४) ॥३९॥
गन्धदानेन गन्धाढ्यः(५) सौभाग्यं पुष्पदानतः ।
धूपदानेन राज्याप्तिर्दीपाद्दीप्तिर्भविष्यति(६) ॥४०॥
ध्वजदानात् पापहानिर्ध्यानाद्ब्रह्मलोकभाक् ।
श्राद्धपिण्डप्रदो यस्तु(७) विष्णु नेष्यति वै पितॄन् ॥४१॥
भक्त्या ये नमस्यन्ति(८) लोकेशादिगदाधरं ।
स्तोष्यन्ति च समभ्यर्च्य पितृलोकेष्यन्ति माधवं(९) ।
प्रियोऽपि परया प्रीत्या तुष्टावादिगदाधरं ॥४२॥

(१) एष श्लोको मुद्रितपुस्तके नावलोक्यते ।
(२) सुखादिकमिति मुद्रितपु० ।
(३) राज्यं विष्णुपुरे भवेत् इति मुद्रितपु० ।
(४) भुक्त्वा व्रजेयुः सततमित्यादि चरणद्वयं मुद्रितपुस्तके न विद्यते ।
(५) गन्धाप्तिरिति मुद्रितपु० ।
(६) दीप्तिं प्रयच्छति इति ख० ग० ।
(७) श्राद्धपिण्डादिदानेन इति मुद्रितपु० ।
(८) भक्त्यानेन ये देवं इति मुद्रितपु० ।
(९) मां हरिमिति मुद्रितपु० ।

शिव उवाच। अव्यक्तरूपो यो देवो मुण्डपृष्ठाद्रिरूपधृक्[१]।
फल्गुतीर्थादिरूपेण नमाम्यादिगदाधरं[२] ॥४३॥
व्यक्ताव्यक्तस्वरूपेण पदरूपेण संस्थितः।
मुण्डशिलादिरूपेण नमाम्यादिगदाधरं[३] ॥४४॥
अव्यक्तरूपो[४] यो देवो जनार्दनस्वरूपतः।
मुण्डपृष्ठे स्वयं जातो[५] नमाम्यादिगदाधरं[६] ॥४५॥
शिलायां देवरूपिण्यां स्थितं ब्रह्मादिभिः सुरैः।
पूजितं सत्कृतं देवैस्तं नमामि गदाधरं[७] ॥४६॥
यश्च दृष्ट्वा ततः[८] स्पृष्ट्वा पूजयित्वा प्रणम्य च।
श्राद्धादौ ब्रह्मलोकाप्तिर्नमाम्यादिगदाधरं[९] ॥४७॥
मद्दादेश्च[१०] जगतो व्यक्तस्यैकं हि कारणं।
अव्यक्तज्ञानरूपं तं नमाम्यादिगदाधरं ॥४८॥
देहेन्द्रियमनोबुद्धिप्राणाहङ्कारवर्जितं।

---

(१) मुण्डपृष्ठाद्रिरूपधृक् इति मुद्रितपु०।
(२) तं नमामि गदाधरमिति मुद्रितपु०।
(३) एष श्लोको मुद्रितपुस्तके न विद्यते।
(४) व्यक्तरूपो हीति मुद्रितपु०।
(५) स्थितोति मुद्रितपु०।
(६) तं नमामि गदाधरमिति मुद्रितपु०।
(७) पूजितं वा स्तुतं देवं नमाम्यादिगदाधरमिति ख० ग०।
(८) तथा इति मुद्रितपु०।
(९) तं नमामि गदाधरमिति मुद्रितपु०।
(१०) महादेवश्च इति मुद्रितपु०।

आयतत्त्वप्रविनिर्मुक्तं नमाम्यादिगदाधरं ॥४९॥

नित्यानित्यविनिर्मुक्तं सत्यमानन्दमव्ययं[१]।

तुरीयं ज्योतिरात्मानं नमाम्यादिगदाधरं ॥५०॥

सनत्कुमार उवाच। एवं स्तुतो महेशेन प्रीतो ह्यादिगदाधरः।

स्थितो देवः शिलायां[२] स ब्रह्माद्यैर्दैवतैः[३] सह ॥५१॥

संस्थितं मुण्डपृष्ठाद्रौ देवमादिगदाधरं।

स्तुवन्ति पूजयन्तीह ब्रह्मलोकं प्रयान्तु[४]ते ॥५२॥

धर्मार्थी प्राप्नुयाद्धर्ममर्थार्थी चार्थमाप्नुयात्।

कामानवाप्नुयात्कामी मोक्षार्थी मोक्षमाप्नुयात् ॥५३॥

वन्ध्या च[५] लभते पुत्रं वेदवेदाङ्गपारगं।

राजा विजयमाप्नोति शूद्रश्च सुखमाप्नुयात् ॥५४॥

पुत्रार्थी लभते पुत्रानभ्यर्च्यादिगदाधरं[६]।

मनसा प्रार्थितं सर्वं पूजाद्यैः प्राप्नुयान्नरः ॥५५॥

इति श्रीवायुपुराणे वायुप्रोक्ते[७] गयामाहात्म्यं नाम सप्तचत्वारिंशोऽध्यायः ॥०॥

---

(१) सामान्यानन्दवर्जितमिति मुद्रितपु० ।

(२) देवशिलायामिति मुद्रितपु० ।

(३) देवैर्ब्रह्मादिभिरिति मुद्रितपु० ।

(४) विष्णुलोकं व्रजन्ति इति मुद्रितपु० ।

(५) पुत्रार्थी इति मुद्रितपु० ।

(६) राजा विजयमाप्नोतीत्यादि अभ्यर्च्यादिगदाधरमित्यन्तपाठो मुद्रितपुस्तके नास्ति ।

(७) श्वेतवराहकल्पे इति मुद्रितपु० ।

# अष्टचत्वारिंशोऽध्यायः ।

गयामाहात्म्यम् ।

सनत्कुमार उवाच! गयायात्रां प्रवक्ष्यामि शृणु नारद मुक्तिदां ।
निष्कृतिः श्राद्धकर्तॄणां ब्रह्मणा गीयते पुरा ॥१॥
उद्यतश्चेद्गयां गन्तुं श्राद्धं कृत्वा विधानतः ।
विधाय कर्पटीवेशं कृत्वा ग्रामं प्रदक्षिणं ॥२॥
ततो ग्रामान्तरं गत्वा श्राद्धशेषस्य भोजनं ।
ततः प्रतिदिनं गच्छेत् प्रतिग्रहविवर्जितः ॥३॥
प्रतिग्रहादुपावृत्तः सन्तुष्टो नियतः शुचिः ।
अहङ्कारविमुक्तो यः स तीर्थफलमश्नुते(१) ॥४॥
यस्य हस्तौ च पादौ च मनश्चापि सुसंयतं ।
विद्या तपश्च कीर्त्तिश्च स तीर्थफलमश्नुते ॥५॥
ततो गयाप्रवेशे च पूर्वतोऽस्ति महानदी ।
तत्र तोयं समुत्पाद्य स्नातव्यं निर्मले जले ॥६॥

---

(१) स तीर्थफलमश्नुते । इत्यस्मात्परतः मुद्रितपुस्तके अपरे कतिपय-श्लोकाः सन्ति यथा—
गृहाच्चलितमात्रेण गयायां गमनं प्रति ।
स्वर्गारोहणसोपानं पितॄणाञ्च पदे पदे ॥५॥
पदे पदेऽश्वमेधस्य यत्फलं गच्छतो गयां ।
तत्फलञ्च भवेन्नित्यं समग्रं नात्र संशयः ॥६॥
ततो गयां समासाद्य स्नातव्यं तत्र निश्चयं ।

देवादींस्तर्पयित्वाथ श्राद्धं कृत्वा यथाविधि ।
स्वेदक्लमरागदितमर्थ्यावाचनवर्जितं ॥७॥
अपरेऽह्नि शुचिर्भूत्वा गच्छेद्वै प्रेतपर्वते(१) ।
ब्रह्मकुण्डे ततः स्नात्वा देवादींस्तर्पयेत् सुधीः ॥८॥
कुर्य्यात् श्राद्धं सपिण्डानां(२) प्रयतः प्रेतपर्वते ।
प्राचीनावीतिना भाव्यं दक्षिणाभिमुखः सुधीः ॥९॥
कव्यवाडोऽनलः सोमो यमश्चैवार्य्यमा तथा ।
अग्निष्वात्ता बर्हिषदः सोमपाः पितृदेवताः ॥१०॥
आगच्छन्तु महाभागा युष्माभी रक्षितास्त्विह(३) ।
मदीयाः पितरो ये च कुले जाताः सनाभयः ॥११॥
तेषां पिण्डप्रदानार्थमागतोऽस्मि गयामिमां ।
ते सर्वे तृप्तिमायान्तु श्राद्धेनानेन शाश्वतीं ॥१२॥
आचम्योक्त्वा च पश्चाच्च प्राणायामं प्रयत्नतः ।
पुनरावृत्तिरहितब्रह्मलोकाप्तिहेतवे ॥१३॥
एवञ्च विधिवत् श्राद्धं कृत्वा पूर्वं(४) यथाक्रमं ।
पितॄणाञ्चाभ्यर्च्य मन्त्रैः पिण्डप्रदो भवेत् ॥१४॥
तीर्थे प्रेतशिलादौ च चरुणा सघृतेन वा(५) ।

---

(१) यस्य हस्तौ च पादौ च इत्यादि गच्छेद्वै प्रेतपर्वते इत्यन्तपाठो मुद्रितपुस्तके नास्ति ।
(२) कृत्वाह्वानं पितॄणान्तु इति मुद्रितपु० ।
(३) स्वथ इति मुद्रितपु० ।
(४) एवं समुच्चय विधिवत् श्राद्धं कृत्वा इति मुद्रितपु० ।
(५) च इति मुद्रितपु० ।

प्रणम्य पूर्वं तत्स्थानं[१] पञ्चगव्यैः पृथक् पृथक्।
तैर्मन्त्रैश्च संपूज्य पञ्चगव्यैश्च देवताः[२] ॥१५॥
यावत्शिला मनुष्यैश्च गृहीताः पितृकर्मसु।
गच्छन्ति तावदसुराः सिंहत्रस्ता[३] यथा मृगाः ॥१६॥
अष्टकासु च वृद्धौ च गयायां च मृतेऽहनि[४]।
मातुः श्राद्धं पृथक्कुर्य्यादन्यत्र पतिना सह ॥१७॥
वृद्धिश्राद्धे तु मात्रादि गयायां पितृपूर्वकम्।
पाद्यपूर्वं समारभ्य दक्षिणाग्रकुशैः क्रमात्।
पित्रादीनां समास्तीर्य्य शेषं गृह्योक्तमाचरेत् ॥१८॥
दद्युः[५] श्राद्धं सपिण्डानां तेषां दक्षिणभागतः।
कुशानास्तीर्य्य विधिना[६] सकृद्दत्त्वा तिलोदकं ॥१९॥
गृहीत्वाञ्जलिना तेभ्यः पितृतीर्थेन यत्नतः।
शङ्कुना मुष्टिमात्रेण दद्यादन्यपिण्डकम्।
[७]सम्बन्धिनस्तिलाज्यैश्च कुशैर्वावाहयेत्ततः ॥२०॥

---

(१) पर्व्वतस्थानमिति मुद्रितपु०।
(२) यादिव्येत्यादिदेवतां इति मुद्रितपु०।
(३) भीता असुरा सिंहं दृष्ट्वा इति मुद्रितपु०।
(४) गयायां चाक्षयेऽहनि इति ख० ग०।
(५) कृत्वेति ग०।
(६) कुशैरास्तीर्य्य तेषान्तु इति मुद्रितपु०।
(७) मुद्रितपुस्तके सम्बन्धिनस्तिलाज्यैश्चेतिश्लोकात्प्राक् एते श्लोकाः सन्ति—
तिलाज्यमधुदध्यादि पिण्डद्रव्येषु योजयेत्।

आब्रह्मस्तम्बपर्य्यन्तं देवर्षिपितृमानवाः ।
तृप्यन्तु पितरः सर्वे मातृमातामहादयः ॥२१॥
अतीतकुलकोटीनां सप्तद्वीपनिवासिनां ।
आब्रह्मभुवनाल्लोकादिदमस्तु तिलोदकम् ॥२२॥
पिता पितामहश्चैव तथैव प्रपितामहः ।
माता पितामही चैव तथैव प्रपितामही ॥२३॥
मातामहस्तत्पिता च प्रमातामहकादयः ।
तेषां पिण्डो मया दत्तो ह्यक्षय्यमुपतिष्ठतां ॥२४॥
मुष्टिमात्रप्रमाणञ्च आर्द्रामलकमात्रकं ।
शमीपत्रप्रमाणं वा पिण्डं दद्याद्गयाशिरे ।
उद्धरेत् सप्तगोत्राणि कुलानि शतमुद्धरेत् ॥२५॥
पितुर्मातुः स्वभार्य्यायाः भगिन्या दुहितुस्तथा ।

---

१ पायसेनापि चरुणा सक्तुना पिष्टकेन च ।
गुडेन तण्डुलाद्यैर्वा पिण्डदानं विधीयते ॥२०॥
मुष्टिमात्रप्रमाणेन चार्द्रामलकमात्रतः ।
शमीपत्रप्रमाणेन पिण्डं दद्याद्गयाशिरे ॥२१॥
उद्धरेत् सप्तगोत्राणि कुलमेकोत्तरं शतं ।
माता पिता च भार्य्या च भगिनी दुहितुः पतिः ।
पितृष्वसा मातृष्वसा सप्त गोत्राः प्रकीर्त्तिताः ॥२२॥
विंशतिर्विंशतिः पित्रोरष्टौ श्वशुरयोः क्रमात् ।
एकादश द्वादशाथ कुलान्येकोत्तरं शतं ॥२३॥
पिता पितामहश्चैव तथैव प्रपितामहः ।
माता पितामही चैव तथैव प्रपितामही ॥
मातामहस्तत्पिता च प्रमातामहकादयः ।
तेषां पिण्डो मया दत्तो ह्यक्षय्यमुपतिष्ठताम् ॥२४॥

पितृव्यश्वसुर्मातुलश्वसुः सप्त गोत्राः प्रकीर्त्तिताः ॥२६॥
चतुर्व्विंशतिविंशश्च[1] षोडश द्वादशैव हि ।
रुद्रादिवसवश्चैव कुलान्येकोत्तरं शतं[2] ॥२७॥
नावाहनं न दिग्बन्धो न दोषो दृष्टिसम्भवः ।
न कारुण्येन कर्त्तव्यं तीर्थश्राद्धं विचक्षणैः ॥२८॥
पिण्डासनं पिण्डदानं पुनः प्रत्यवनेजनं ।
दक्षिणा चान्नसङ्कल्पं तीर्थश्राद्धे स्वयं विधिः[3] ॥२९॥
अस्मत्कुले मृता ये च गतिर्येषां न विद्यते ।
आवाहयिष्ये तान् सर्व्वान् दर्भपृष्ठे तिलोदकैः ॥३०॥
बन्धुवर्गकुले ये च गतिर्येषां न विद्यते ।
आवाहयिष्ये तान् सर्व्वान् दर्भपृष्ठे तिलोदकैः ॥३१॥
इत्येतैर्मन्त्रैः सजलैस्तिलैर्दर्भेषु ध्यानकान् ।
आवाह्याभ्यर्च्य तेभ्यश्च पिण्डान् दद्याद्यथाक्रमं[4] ॥३२॥
[5]अस्मत्कुले मृता ये च गतिर्येषां न विद्यते ।
तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहं ॥३३॥
मातामहकुले ये च गतिर्येषां न विद्यते ।

---

(१) पाठोऽयं न समीचीनः ।

(२) पिता पितामहश्चैव इत्यादि कुलान्येकोत्तरं शतमित्यन्तं यत्पाठो मूले दृश्यते स पाठः ख० ग० पुस्तकयोर्वर्त्तते ।

(३) नावाहनं न दिग्बन्ध इत्यादिश्लोकद्वयं मुद्रितपुस्तके न विद्यते ।

(४) एष श्लोको मुद्रितपुस्तके न दृश्यते ।

(५) अस्मत्कुले मृता ये च इत्यस्मात्प्राक् मुद्रितपुस्तके, आब्रह्मस्तम्बपर्य्यन्तमित्यादि इदमस्तु तिलोदकमित्यन्तपाठोऽस्ति ।

तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहं ॥२४॥
बन्धुवर्गकुले ये च गतिर्येषां न विद्यते ।
तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहं ॥२५॥
अजातदन्ता ये केचित् ये च गर्भे प्रपीड़िताः ।
तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहं ।२६॥
अग्निदग्धाश्च ये केचिन्नाग्निदग्धास्तथा परे ।
विद्युच्चौरहता ये च तेभ्यः पिण्डं ददाम्यहं ॥२७॥
दावदाहे मृता ये च सिंहव्याघ्रहताश्च ये ।
दंष्ट्रिभिः शृङ्गिभिर्वापि तेभ्यः पिण्डं ददाम्यहं ॥२८॥
उद्बन्धनमृता ये च विषशस्त्रहताश्च ये ।
आत्मोपघातिनो ये च तेभ्यः पिण्डं ददाम्यहं ॥३९॥
अरण्ये वर्त्मनि वने क्षुधया तृषया(१) हताः ।
भूतप्रेतपिशाचाद्ये(२) स्तेभ्यः पिण्डं ददाम्यहं ॥४०॥
रौरवे चान्धतामिस्रे कालसूत्रे च ये गताः ।
तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहं ॥४१॥
असिपत्रवने घोरे कुम्भीपाकेषु ये गताः ।
तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहं(३) ॥४२॥
अनेकयातनासंस्थाः प्रेतलोकश्च(४) ये गताः ।

(१) तृष्णाया इति मुद्रितपु० ।
(२) भूतप्रेतपिशाचाश्चेति ख० ग० ।
(३) असिपत्रवने घोरे इत्येष श्लोकः ख० ग० पुस्तकयोर्न दृश्यते ।
(४) प्रेतलोके चेति मुद्रितपु० ।

तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहं ॥४३॥
अनेकयातनासंस्था ये नीता यमकिङ्करैः(१)।
तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहं ॥४४॥
नरकेषु समस्तेषु यातनासु च ये स्थिताः।
तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहं ॥४५॥
पशुयोनिगता ये च पक्षिकीटसरीसृपाः।
अथवा वृक्षयोनिस्थास्तेभ्यः पिण्डं ददाम्यहं(२) ॥४६॥
जात्यन्तरसहस्रेषु भ्रमन्तः स्वेन कर्म्मणा।
मानुष्यं दुर्लभं येषां तेभ्यः पिण्डं ददाम्यहं ॥४७॥
दिव्यन्तरीक्षभूमिष्ठाः पितरो बान्धवादयः।
मृता असंस्कृता ये च तेभ्यः पिण्डं ददाम्यहं ॥४८॥
ये केचित् प्रेतरूपेण वर्त्तन्ते पितरो मम।
ते सर्व्वे तृप्तिमायान्तु पिण्डेनानेन सर्व्वदा ॥४९॥
येऽबान्धवा बान्धवा वा येऽन्यजन्मनि बान्धवा।
तेषां पिण्डो मया दत्तो ह्यक्षय्यमुपतिष्ठतां ॥५०॥
पितृवंशे मृता ये च मातृवंशे च ये मृताः(३)।

---

(१) अनेकयातनासंस्था ये नीता यमकिङ्करैरित्येष श्लोको मुद्रितपुस्तके मूले नावलोक्यते तन्नोद्धृतोऽभवत्। उद्धृतश्लोके च यमकिङ्करैरित्यत्र यमशासने इति पाठो वर्त्तते।

(२) पशुयोनिगता ये च इत्येष श्लोको मुद्रितपुस्तके, असिपत्रवने घोरे इत्यस्माच्छ्लोकात्परतो वर्त्तते।

(३) तथैव चेति मुद्रितपु०।

गुरुश्वशुरबन्धूनां ये चान्ये बान्धवा मृताः ॥५१॥
ये मे कुले लुप्तपिण्डाः पुत्रदारविवर्जिताः ।
क्रियालोपगता ये च[1] जात्यन्धाः पङ्गवस्तथा ॥५२॥
विरूपा आमगर्भाश्च ज्ञाताज्ञाता कुले मम ।
तेषां पिण्डो मया दत्तो ह्यक्षय्यमुपतिष्ठतां ॥५३॥

आ ब्रह्मणो ये पितृवंशजाता
मातुस्तथा वंशभवा मदीयाः ।
कुलद्वये[2] ये मम दासभूता
भृत्यास्तथैवाश्रितसेवकाश्च ॥५४॥
मित्राणि शिष्याः[3] पशवश्च वृक्षा
दृष्टा ह्यदृष्टाश्च कृतोपकाराः ।
जन्मान्तरे ये मम सङ्गताश्च
तेभ्यः स्वधा पिण्डमहं ददामि ॥५५॥

एतैश्च सर्व्वमन्त्रैस्तु स्त्रीलिङ्गान्तं समूह्य च ।
पिण्डान्दद्याद्यथा पूर्व्वं स्त्रीणां मात्रादिकाक्रमात्[4] ॥५६॥
स्वगोत्रे परगोत्रे वा[5] दम्पत्योः पिण्डपातनम्[6] ।

---

(१) क्रियालोपगता येवेति मुद्रितपु० ।
(२) वंशद्वये इति मुद्रितपु० ।
(३) सर्व्वे इति मुद्रितपु० ।
(४) एतच्छ्लोकार्द्धं मुद्रितपुस्तके नेष्यते ।
(५) च इति मुद्रितपु० ।
(६) पिण्डदो भवेदिति मुद्रितपु० ।

अपृथक् निष्फलं श्राद्धं पिण्डोदकतर्पणं ॥५७॥
पिण्डपात्रे तिलान् क्षिप्त्वा(१) पूरयित्वा शुभोदकैः ।
(२)परिषिच्य त्रिधा सर्व्वान् प्रणिपत्य समापयेत्(३) ॥५८॥
पितॄन् विसृज्य चाचम्य साक्षिणः श्रावयेत्सुरान्(४) ।
साक्षिणः सन्तु मे देवा ब्रह्मेशानादयस्तथा ।
मया गयां समासाद्य पितॄणां निष्कृतिः कृता ॥५९॥
आगतोऽस्मि गयां देव पितृकार्य्ये गदाधर ।
त्वमेव साक्षी भगवन्ननृणोऽहमृणत्रयात् ॥६०॥
सर्व्वस्थानेषु चैवं स्यात्पिण्डदानन्तु नारद ।
प्रेतपर्व्वतमारभ्य कुर्य्यात्तीर्थेषु च क्रमात्(५) ॥६१॥
तिलमिश्रांस्ततः सक्तून् निःक्षिपेत् प्रेतपर्व्वते ।
अपसव्येन देवर्षे दक्षिणाभिमुखेन च(६) ॥६२॥
ये केचित् प्रेतरूपेण वर्त्तन्ते पितरो मम ।
ते सर्व्वे तृप्तिमायान्तु सक्तुभिस्तिलमिश्रितैः ॥६३॥
आब्रह्मस्तम्बपर्य्यन्तं यत्किञ्चित् सचराचरं ।

---

(१) दत्त्वा इति मुद्रितपु० ।

(२) परिषिच्य त्रिधा सर्व्वान् इतिश्लोकार्द्धात्प्राक् मुद्रितपुस्तके, मन्त्रेणानेन पिण्डांस्तान् प्रदक्षिणकरस्तथा इति श्लोकार्द्धं वर्त्तते ।

(३) क्षमापयेदिति मुद्रितपु० ।

(४) देवान् साक्षिण आह्वयेत् इति मुद्रितपु० ।

(५) तीर्थेष्वनुक्रमात् इति मुद्रितपु० ।

(६) एतच्छ्लोकार्द्धं मुद्रितपुस्तके नेष्यते ।

मया दृष्टेन तोयेन ऋषिमायाम्तु सर्व्वशः ॥६४॥

प्रेतत्वाच्च विमुक्ताः स्युः पितरस्तस्य नारद ।

प्रेतत्वं तस्य माहात्म्यात् कुले चापि न जायते(१) ॥६५॥

नाम्ना प्रेतशिला ख्याता गयाशिरसि(२) सुव्रते ।

तीर्थमन्त्रादिरूपेण स्थितस्तत्र गदाधरः ॥६६॥

इति श्रीवायुपुराणे वायुप्रोक्ते(३) गयामाहात्म्यं नाम
अष्टचत्वारिंशोऽध्यायः ।

---

(१) कुले तस्य न विद्यते इति मुद्रितपु० ।
(२) गयायां भुवि इति मुद्रितपु० ।
(३) श्वेतवराहकल्पे इति मुद्रितपु० ।

# अथ ऊनपञ्चाशत्तमोऽध्यायः।

गयामाहात्म्यं।

सनत्कुमार उवाच। आदौ तु पञ्चतीर्थेषु चोत्तरे मानसे विधिः।
आचम्य कुशहस्तेन शिरस्त्वाभ्युक्ष्य वारिणा॥ १॥
उत्तरं मानसं गच्छेन्मन्त्रेण स्नानमाचरेत्।
उत्तरे मानसे स्नानं करोम्यात्मविशुद्धये॥ २॥
सूर्य्यलोकादिसंसिद्धिसिद्धये पितृमुक्तये।
स्नानार्थं तर्पणं कृत्वा[१] श्राद्धं कुर्य्यात् सपिण्डकं॥ ३॥
मानसं हि सरो ह्यत्र[२] तस्मादुत्तरमानसं।
सूर्य्यं नत्वार्च्चयित्वाथ सूर्य्यलोकं नयेत् पितॄन्[३]॥ ४॥
नमो भगवते भर्त्रे सोमभौमज्ञरूपिणे।
जीवभार्गवसौरेयराहुकेतुस्वरूपिणे॥ ५॥
उत्तरान्मानसान्मौनी व्रजेद्दक्षिणमानसं।
उदीचीतीर्थमित्युक्तं[४] तच्चौदिच्यं विमुक्तिदं।
अत्र स्नातो दिवं याति स्वशरीरेण मानवः[५]॥ ६॥

---

(१) देवादींस्तर्पयित्वाथ इति मुद्रितपु०।
(२) यस्मात् इति ख० ग०।
(३) एतच्छ्लोकार्द्धं मुद्रितपुस्तके नास्ति।
(४) उदीची च महापुण्या इति मुद्रितपु०।
(५) अत्र स्नातो दिवं याति एतच्छ्लोकार्द्धं मुद्रितपुस्तके न विद्यते। तत्र तस्मिन् स्थलेऽपरं श्लोकार्द्धं वर्त्तते तद्यथा,—
उदीच्यां मुण्डपृष्ठस्य देवर्षिपितृसेवितं।

मध्ये कनखलं तीर्थं त्रिषु लोकेषु विश्रुतं(१)।
(२)स्नातः कनकवद्भाति नरो याति परां गतिं ॥ ७ ॥
तस्य दक्षिणभागे च तीर्थं दक्षिणमानसं ।
(३)दक्षिणे मानसे चैव तीर्थत्रयमुदाहृतं ॥ ८ ॥
स्नात्वा तेषु विधानेन कुर्यात् श्राद्धं पृथक् पृथक्(४)।
दक्षिणे मानसे स्नानं करोम्यात्मविशुद्धये(५) ॥ ९ ॥
सूर्य्यलोकादिसंसिद्धिसिद्धये पितृमुक्तये(६)।
ब्रह्महत्यादिपापौघघातनाय विमुक्तये ॥ १० ॥
दिवाकर करोमीह स्नानं दक्षिणमानसे ।
नमामि सूर्य्यं तृप्त्यर्थं पितॄणां तारणाय च ।
पुत्रपौत्रधनैश्वर्य्यायुरारोग्यवृद्धये ॥ ११ ॥
(७)फल्गुतीर्थं प्रजेत्तस्मात् सर्व्वतीर्थोत्तमोत्तमं ।

---

(१) पितॄणां मुक्तिदायकमिति मुद्रितपु० ।

(२) स्नातः कनकवद्भाति इत्यर्द्धश्लोकार्द्धमात्रं मुद्रितपुस्तके, स्नातः कनखले तीर्थे पुनर्जन्म न विद्यते इति श्लोकार्द्धं वर्त्तते ।

(३) दक्षिणे मानसे चैव इति श्लोकार्द्धात्पूर्व्वतः मुद्रितपुस्तके अन्य-श्लोकार्द्धं दृश्यते तद्यथा,—

अतः कनखलं ख्यातं तीर्थमनुत्तमं ।

(४) श्राद्धं कुर्य्यात् पूजयेदिति मुद्रितपु० ।

(५) एतच्छ्लोकार्द्धं मुद्रितपुस्तके नेक्ष्यते ।

(६) एतच्छ्लोकार्द्धं मुद्रितपुस्तके न विद्यते ।

(७) फल्गुतीर्थं प्रजेत्तस्मादित्यर्द्धात् मुद्रितपुस्तकेऽधिक एतः श्लोकं वर्त्तते यथा,—

मुक्तिर्भवति कर्त्तॄणां पितॄणां शाश्वतः सदा ॥ १२ ॥
ब्रह्मणा प्रार्थितो विष्णुः फल्गुको ह्यभवत् पुरा ।
दक्षिणाग्नौ हुतं तत्र तद्भवः(१) फल्गुतीर्थकं ॥ १३ ॥
(२)तीर्थानि यानि सर्व्वाणि(३) भुवनेष्वखिलेष्वपि(४) ।
तानि स्नातुं समायान्ति फल्गुतीर्थं सुरैः सह(५) ॥ १४ ॥
गङ्गा पादोदकं विष्णोः फल्गुर्ह्यादिगदाधरः ।
स्वयं हि(६) द्रवरूपेण तस्मात् गङ्गाधिकं विदुः ॥ १५ ॥
अश्वमेधसहस्राणां सहस्रं यः समाचरेत् ।
नासौ तत्फलमाप्नोति(७) फल्गुतीर्थे यदाप्नुयात् ॥ १६ ॥

---

अनेन स्नानपूजादि कृत्वा श्राद्धं सपिण्डकं ।
स्नात्वा नत्वा च मौन्यर्कमिमं मन्त्रमुदीरयेत् ॥ १२ ॥

(१) दक्षिणाग्निहुतं नूनं तद्भवेत् इति ख० ग० ।

(२) तीर्थानि यानि सर्व्वाणि इतः प्राक् मुद्रितपुस्तके अधिक एकः श्लोको वर्त्तते यथा,—

तस्मिन् फलति फल्गुर्वा गौः कामधेनुर्जलं मही ।
दृष्टेरन्तर्गतं यस्मात् फल्गुतीर्थं न निष्फलं ॥ १५ ॥

(३) पुण्यानि इति मुद्रितपु० ।

(४) च इति मुद्रितपु० ।

(५) फल्गुतीर्थं सर्व्वामरैरिति मुद्रितपु० ।

(६) तेनेदमिति मुद्रितपु० ।

(७) न तत्फलमवाप्नोतीति मुद्रितपु० ।

(१)फल्गुतीर्थे नरः स्नात्वा तर्पणं(२) श्राद्धमाचरेत् ।
सपिण्डकं स्वसूत्रोक्तं नत्वेदृश पितामह ॥ १७ ॥
नमः शिवाय देवाय ईशाय पुरुषाय वै(३) ।
अघोरवामदेवाय सद्योजाताय शम्भवे ॥ १८ ॥
फल्गुतीर्थे नरः स्नात्वा दृष्ट्वा देवं गदाधरं ।
आत्मानं तारयेत् सद्यो दश पूर्व्वान् दशापरान् ॥ १९ ॥
नत्वा गदाधरं देवं मन्त्रेणानेन पूजयेत् ।
ओं नमो वासुदेवाय नमः सङ्कर्षणाय च ।
प्रद्युम्नायानिरुद्धाय श्रीधराय च विष्णवे ॥ २० ॥
पञ्चतीर्थे नरः स्नात्वा ब्रह्मलोकं नयेत् पितॄन्(४) ।
अमृतैः पञ्चभिः स्नानं पुष्पवस्त्राद्यलङ्कृतं ।
न कुर्य्याद्यो गदापाणेस्तस्य श्राद्धमनर्थकं ॥ २२ ॥
नागकूटाद्गृध्रकूटाद्यूपादुत्तरमानसात्(५) ।

(१) फल्गुतीर्थे नरः स्नात्वा इत्यस्मात्प्राक् मुद्रितपुस्तकेऽधिक एकः श्लोको वर्त्तते यथा,—
फल्गुतीर्थे विष्णुजले करोमि स्नानमादृतः ।
पितॄणां विष्णुलोकाय भुक्तिमुक्तिप्रसिद्धये ॥ १६ ॥
(२) तर्पयेदिति मुद्रितपु० ।
(३) ईशानपुरुषाय चेति मुद्रितपु० ।
(४) पञ्चतीर्थे नरः स्नात्वा इति श्लोकार्द्धात्परतः मुद्रितपुस्तके, फल्गुतीर्थे नरः स्नात्वा इति श्लोको वर्त्तते । तत्र अर्द्ध श्लोकस्योत्तरार्द्धे, आत्मानं पितृभिः सार्द्धं नयेद् वैष्णवं पदं इति पाठोऽस्ति ।
(५) तथैवोत्तरमानसादिति मुद्रितपु० ।

एतद्गयाशिरः प्रोक्तं फल्गुतीर्थन्तदुच्यते[१] ॥ २२ ॥
प्रथमेऽह्नि विधिः प्रोक्तो द्वितीये दिवसे व्रजेत् ।
धर्म्मारण्यं तत्र[२] धर्म्मो यस्माद्यज्ञ[३]मकारयत् ।
गमनाद्ब्रह्मलोकाप्तिर्भवत्येव हि नारद ॥ २३ ॥
मतङ्गवाप्यां यः स्नात्वा तर्पणं श्राद्धमाचरेत् ।
गत्वा नत्वा मतङ्गेशमिमं मन्त्रमुदीरयेत् ॥ २४ ॥
प्रमाणं देवताः सन्तु लोकपालाश्च साक्षिणः ।
मयागत्य मतङ्गेऽस्मिन् पितृणां निष्कृतिः कृता ॥ २५ ॥
पूर्व्वं हि ब्रह्मतीर्थे च कूपे श्राद्धादि कारयेत्[४] ।
तत्कूपयूपयोर्मध्ये सर्व्वांस्तारयते पितॄन् ।
धर्मं धर्म्मेश्वरं नत्वा महाबोधितरुं नमेत् ॥ २६ ॥
नमस्तेऽश्वत्थराजाय ब्रह्मविष्णुशिवात्मने ।
बोधिद्रुमाय कर्तॄणां पितृणां तारणाय च ॥ २७ ॥
येऽस्मत्कुले मातृवंशे बान्धवा दुर्गतिं गताः ।
त्वद्दर्शनात् स्पर्शनाच्च स्वर्गतिं यान्तु शाश्वतीम् ॥ २८ ॥

---

(१) नागकूटाद्गृध्रकूटादितिश्लोकात्परतः मुद्रितपुस्तके एकोऽधिकश्लोको विद्यते तद्यथा,—

मुण्डपृष्ठनगाधस्तात्फल्गुतीर्थमनुत्तमं ।
अत्र श्राद्धादिना सर्व्वे पितरो मोक्षमाप्नुयात् ॥

(२) यत्रेति मुद्रितपु० ।

(३) यागमिति मुद्रितपु० ।

(४) एतच्छ्लोकार्द्धं ख० ग० पुस्तकयोर्नास्ति ।

ब्रह्माणञ्च नमस्कृत्य ब्रह्मलोकं नयेत् पितृन् ॥ २३ ॥
नमोऽस्तु ब्रह्मणेऽजाय जगज्जन्मादिकारिणे[१] ।
भक्तानाञ्च पितृणाञ्च तारकाय नमो नमः[२] ॥ २४ ॥
[३]गोप्रचारसमीपस्था आम्रा ब्रह्मप्रकल्पिताः ।
तेषां सेचनमात्रेण पितरो मोक्षगामिनः[४] ॥ २५ ॥
आम्रं ब्रह्मसरोद्भूतं[५] ब्रह्मदेवमयं तरुं ।
विष्णुरूपं प्रसिञ्चामि पितृणां मुक्तिहेतवे ॥ २६ ॥
एको मुनिः कुम्भकुशाग्रहस्त
आम्रस्य मूले सलिलं ददामि ।
आम्रश्च सिक्तः पितरश्च तृप्ता
एका क्रिया द्व्यर्थकरी प्रसिद्धा[६] ॥ २७ ॥

---

(१) जगज्जन्मादिकारिणे इति मुद्रितपु० ।
(२) तारणाय नमोऽस्तु ते इति मुद्रितपु० ।
(३) ब्रह्मलोकं नयेत्पितॄन् इत्यस्मात्परतः मुद्रितपुस्तके, गोप्रचार-समीपस्था इत्यादि नोपेक्षणीयो विबुधैर्मनुष्यः इत्यन्तपाठः, तदनन्तरं यूपं प्रदक्षिणीकृत्य इत्यादि तारणाय नमोऽस्तु ते इत्यन्तपाठश्च दृश्यते ।
(४) मोक्षमाप्नुयादिति मुद्रितपु० ।
(५) ब्रह्मसरोभूतमिति मुद्रित पु० ।
(६) आम्रश्च सिक्तः पितरश्च तृप्ता
एका क्रिया द्व्यर्थकरी प्रसिद्धा ।
आम्रस्य मूले सलिलं ददाणो
नोपेक्षणीयो विबुधैर्मनुष्यः ॥२६॥ इति मुद्रितपु० ।

ततो यमबलिं दद्यात् मन्त्रेणानेन संयतः ।
यमराजधर्मराजौ निश्चलार्थं व्यवस्थितौ ।
ताभ्यां बलिं प्रयच्छामि पितॄणां मुक्तिहेतवे ॥ ३८ ॥
ततः श्वानबलिं दद्यात् मन्त्रेणानेन नारद ।
द्वौ श्वानौ श्यामशवलौ[१] वैवस्वतकुलोद्भवौ ।
ताभ्यां बलिं प्रयच्छामि रक्षेतां पथि सर्व्वदा ॥ ३९ ॥
ततः काकबलिं दद्यान्मन्त्रेणानेन नारद[२] ।
ऐन्द्रवारुणवायव्ययाम्या वै नैर्ऋतास्तथा ।
वायसाः प्रतिगृह्णन्तु भूमौ पिण्डं समर्पितं[३] ॥ ४० ॥
फल्गुतीर्थे चतुर्थेऽह्नि स्नानादिकमथाचरेत् ।
गयाशिरस्यथ श्राद्धं पादे कुर्य्यात् सपिण्डकं ।
साक्षाद्गयाशिरस्तत्र फल्गुतीर्थाश्रितं[४] कृतं ॥ ४१ ॥
नागाज्जनार्द्दनाद्ब्रह्मयूपाच्चोत्तरमानसात् ।
एतद्गयाशिरः प्रोक्तं फल्गुतीर्थं तदुच्यते ॥ ४२ ॥
पितामहं समासाद्य यावदुत्तरमानसं ।
फल्गुतीर्थन्तु विज्ञेयं देवानामपि दुर्लभं[५] ॥ ४३ ॥

---

(१) श्यामशवलाविति ख० ग० ।
(२) च्छिन्ना पुनः कार्ष्यं समाचरेदिति मुद्रितपु० ।
(३) मयोज्झितमिति मुद्रितपु० ।
(४) फल्गुतीर्थाश्रयं इति मुद्रितपु० ।
(५) नागाज्जनार्द्दनादित्यादि देवानामपि दुर्लभमित्यन्तपाठो मुद्रित पुस्तके नास्ति ।

क्रौञ्चपादात्फल्गुतीर्थं यावत् साक्षाद्गयाशिरः ।
[१]मुखं गयासुरस्यैतत्तस्मात् श्राद्धमिहाक्षयं ॥ ४४ ॥
मुण्डपृष्ठान्नगाधस्तात् साक्षात्तत् फल्गुतीर्थकं ।
आद्यो गदाधरो देवो व्यक्ताव्यक्तात्मना स्थितः ।
विष्ण्वादिपदरूपेण पितॄणां मुक्तिहेतवे ॥ ४५ ॥
एतद्विष्णुपदं दिव्यं दर्शनात् पापनाशनं ।
स्पर्शनात् पूजनाद्वापि पितॄणां दत्तमक्षयं[२] ॥ ४६ ॥
श्राद्धं सपिण्डकं कृत्वा कुलसाहस्रमात्मना ।
नयेद्विष्णुपदं दिव्यमनन्तं शिवमव्ययं ॥ ४७ ॥
श्राद्धं कृत्वा रुद्रपदे नयेत् कुलशतं नरः ।
सहात्मना शिवपुरं तथा ब्रह्मपदे नरः ॥ ४८ ॥
ब्रह्मलोकं कुलशतं समुद्धृत्य नयेत् पितॄन् ।
कश्यपस्य पदे श्राद्धी ब्रह्मलोकं नयेत् पितॄन् ॥ ४९ ॥
दक्षिणाग्निपदे श्राद्धी पितॄन् ब्रह्मपुरं नयेत्[३] ।
गार्हपत्यपदे श्राद्धी वाजपेयफलं लभेत् ॥ ५० ॥
श्राद्धं कृत्वाहवनीये अश्वमेधफलं लभेत्[४] ।

---

(१) मुखं गयासुरस्यैतदित्यस्माच्छ्लोकार्द्धात् प्राक् मुद्रितपुस्तके, गयाशीर्षे नगाद्यास्य तत्साक्षात्फल्गुतीर्थकं इति श्लोकार्द्धं वर्त्तते । तत्साक्षादित्यत्र ते साक्षादितिपाठः समीचीनः ।

(२) पितॄणाञ्च विमुक्तिदमिति मुद्रित पु० ।

(३) वाजपेयफलं लभेदिति मुद्रितपु० ।

(४) गार्हपते कृते श्राद्धे ह्यश्वमेधफलं लभेत् । श्राद्धमाहवनीये तु राजसूयफलं लभेत् इति मुद्रितपु० ।

श्राद्धं कृत्वा सभ्यपदे ज्योतिष्टोमफलं लभेत्(१) ॥ ५१ ॥
आवसथ्यपदे श्राद्धी पितॄन् ब्रह्मपुरं नयेत्(२) ।
श्राद्धं कृत्वा शक्रपदे इन्द्रलोकं नयेत् पितॄन्(३) ॥ ५२ ॥
अगस्त्यस्य पदे श्राद्धी(४) पितॄन् ब्रह्मपुरं नयेत् ।
क्रौञ्चमातङ्गयोः श्राद्धी ब्रह्मलोकं नयेत् पितॄन्(५) ॥ ५३ ॥
श्राद्धी सूर्य्यपदे पञ्च पापिनो(६) ऽर्कपुरं नयेत् ।
कार्त्तिकेयपदे श्राद्धी शिवलोकं नयेत् पितॄन्(७) ॥ ५४ ॥
गणेशस्य पदे श्राद्धी रुद्रलोकं नयेत् पितॄन्(८) ।
गजकर्णतर्पणकृन्निर्मलं(९) स्वर्नयेत् पितॄन् ॥ ५५ ॥
अन्येषाञ्च पदे श्राद्धी पितॄन् ब्रह्मपुरं नयेत् ।
सर्व्वेषां काश्यपं श्रेष्ठं विष्णो रुद्रस्य वै(१०) पदं ।
ब्रह्मणश्च पदं चापि श्रेष्ठं तत्र प्रकीर्त्तितं ॥ ५६ ॥

---

(१) ज्योतिष्टोमं समश्नुते इति ख० आ० ।
(२) सोमलोकमवाप्नुयात् इति मुद्रितपु० ।
(३) शतमिन्द्रपुरं नयेदिति मुद्रितपु० ।
(४) श्राद्धं कृत्वागस्त्यपदे इति मुद्रितपु० ।
(५) एतच्छ्लोकार्द्धं मुद्रितपुस्तके नास्ति ।
(६) पञ्चशतानि इति मुद्रितपु० ।
(७) वाजिमेधफलं लभेदिति मुद्रितपु० ।
(८) एतच्छ्लोकार्द्धं मुद्रितपुस्तके न विद्यते ।
(९) गजकर्णपदे श्राद्धी तर्पणादिति मुद्रित पु० ।
(१०) वा इति मुद्रित पु० ।

प्रारम्भे च समाप्तौ च तेषामन्यतमं स्मृतं ।
श्रेयस्करं भवेत्तत्र श्राद्धकर्म्मसु नारद ॥ ५७॥
कश्यपस्य पदे दिव्ये भारद्वाजो मुनिः पुरा[१] ।
श्राद्धं कृत्वोद्यतो दातुं पित्रादिभ्यश्च पिण्डकं ॥ ५८॥
शुक्लकृष्णौ ततो हस्तौ पदमुद्भिद्य निर्गतौ ।
दृष्ट्वा हस्तद्वयं तत्र मुनिः[२] संशयमागतः ॥ ५९ ॥
ततः स्वमातरं शान्तां पप्रच्छ स महामुनिः[३] ।
कश्यपस्य पदे दिव्ये[४] शुक्ले कृष्णेऽथ वा करे ।
पिण्डो देयो मया मातर्जानासि पितरं वद ॥ ६० ॥
शान्तोवाच। भारद्वाज महाप्राज्ञ देहि कृष्णाय पिण्डकं ।
भारद्वाजस्ततः पिण्डं दातुं कृष्णाय चोद्यतः ॥ ६१ ॥
श्वेतोऽदृश्योऽब्रवीत्तत्र पुत्रस्त्वं हि[५] ममौरसः ।
कृष्णोऽब्रवीन्मम चेत्त्वं ततो मे देहि पिण्डकं[६] ॥ ६२॥
स्वैरिण्यथाब्रवीद्दातुं[७] क्षेत्रिणे वीजिने ततः ।
भारद्वाजस्ततः पिण्डं कश्यपस्य पदे ददौ[८] ।

---

(१) महामुनिरिति मुद्रित पु० ।
(२) पितुरिति मुद्रित पु० ।
(३) भारद्वाजस्य पृष्टवानिति मुद्रित पु० ।
(४) कस्मिन्निति मुद्रित पु० ।
(५) पुत्रं पिण्डं देहीति मुद्रित पु० ।
(६) कृष्णोऽब्रवीत् स्वैरिणीयं पुत्रस्त्वं हि ममौरसः इति मुद्रित पु० ।
(७) आदाविति मुद्रित पु० ।
(८) हस्तौ त्यक्त्वा शिलायां वै पिण्डदानं चकार स इति मुद्रित पु० ।

हंसयुक्तविमानेन ब्रह्मलोकमुभौ गतौ ॥ ६३ ॥
रामो रुद्रपदे श्राद्धे पिण्डदानाय चोद्यतः ।
पिता दशरथः स्वर्गात् प्रसार्य्य करमागतः ॥ ६४ ॥
नादात् पिण्डं करे रामो ददौ रुद्रपदे ततः ।
शास्त्रार्थातिक्रमाद्भीतं रामं दशरथोऽब्रवीत् ॥ ६५ ॥
तारितोऽहं त्वया पुत्र रुद्रलोकमवाप्नुयां ।
हस्ते पिण्डप्रदानेन स्वर्गतिर्न हि मे भवेत्[1] ॥ ६६ ॥
त्वञ्च राज्यं चिरं कृत्वा पालयित्वा द्विजान् प्रजाः ।
यज्ञान् सदक्षिणान् कृत्वा विष्णुलोकं व्रजिष्यसि[2] ॥ ६७ ॥
पुर्य्ययोध्याजनैः सार्द्धं कृमिकीटादिभिः सह ।
इत्युक्त्वासौ दशरथो रुद्रलोकं परं ययौ ॥ ६८ ॥
भीष्मो विष्णुपदे श्रेष्ठे आहूय पितरं स्वकं[3] ।
श्राद्धं कृत्वोद्यतो दातुं पित्रादिभ्यश्च पिण्डकं[4] ॥ ६९ ॥
पितुर्विनिर्गतौ हस्तौ गयाशिरसि शन्तनोः ।
नादात् पिण्डं करे भीष्मो ददौ विष्णुपदे ततः[5] ॥ ७० ॥

---

(१) पिण्डप्रदानाद्धस्ते तु मद्गतां स्वर्गतिर्न हि इति मुद्रित पु० ।
(२) त्वञ्च राज्यं चिरं कृत्वा इत्येष श्लोको मुद्रितपुस्तके नास्ति तत्र तस्मिन् स्थले एतच्छ्लोकार्द्धमात्रमस्ति यथा—
त्वञ्च राज्यं चिरं कृत्वा विष्णुलोकं गमिष्यसि ।
(३) दिव्ये आह्वानयत् स्वकान् पितॄनिति ख० ग० ।
(४) श्राद्धं कृत्वा विधानेन पिण्डदानाय चोद्यतः इति मुद्रित पु० ।
(५) भीष्मः पिण्डं ददौ भूमौ नाधिकारः करे यतः इति मुद्रित पु०

शन्तनुः प्राह सन्तुष्टः शास्त्रार्थे निश्चलो भवान्(१) ।
त्रिकालदृष्टिर्भवतु चान्ते विष्णुश्च ते गतिः ॥ ७१ ॥
स्वेच्छया मरणं चास्तु इत्युक्ता मुक्तिमागतः(२) ।
कनकेशञ्च केदारं नारसिंहञ्च वामनं ।
उदङ्मार्गे(३) समभ्यर्च्य पितॄन् सर्व्वांश्च तारयेत् ॥७२॥
गयाशिरसि यः पिण्डान् येषां नाम्ना तु निर्वपेत् ।
नरकस्था दिवं यान्ति(४) स्वर्गस्था मोक्षमाप्नुयुः(५) ॥७३॥
सर्व्वत्र मुण्डपृष्ठाद्रिः पदैरेभिः सुलक्षितः ।
प्रयान्ति पितरः सर्व्वे ब्रह्मलोकमनामयं ॥७४॥
दैत्यसुरस्य यच्छीर्षं गदया तद्द्विधाकृतं ।
ततः प्रक्षालिता यस्मात्तीर्थं तच्च विमुक्तये(६) ।

---

(१) श्राद्धाथ निश्चयस्तु ते इति मुद्रित पु० ।

(२) मुद्रितपुस्तके, इत्युक्ता मुक्तिमागतः इत्यस्मात्परतः रामेण रुद्रपदे श्राद्धे इत्यादि रुद्रलोकं परं ययौ इत्यन्तपाठोऽस्ति ।

(३) रथमार्गे इति ख० ग० ।

(४) नरकात् स्वर्गलोकं ते इति मुद्रितपु० ।

(५) स्वर्गस्था मोक्षमाप्नुयुरित्यस्मात्परतः मुद्रितपुस्तके श्लोकद्वयमधिकं वर्त्तते तद्यथा—

गयाशिरसि यः पिण्डं शमीपत्रप्रमाणतः ।
कन्दमूलफलाद्यैर्वा दद्यात्स्वर्गं नयेत्पितॄन् ॥ ७५ ॥
पदानि यत्र दृश्यन्ते विष्णवादीनां तदग्रतः ।
श्राद्धं कृत्वा सपिण्डञ्च तेषां लोकान्नयेत्पितॄन् ॥ ७६ ॥

(६) गदालोलं ततः स्मृतमिति ख० ग० ।

गदालोलमिति ख्यातं सर्व्वेषामुत्तमोत्तमं ॥७५॥
गदालोले महातीर्थे गदाप्रक्षालनाद्धरेः।
स्नानं करोमि सिद्ध्यर्थमक्षयं पदमाप्नुयां(१) ॥७६॥
पञ्चमेऽह्नि गदालोले स्नात्वा कुर्य्यात् सपिण्डकं(२) ।
श्राद्धं पितॄन् ब्रह्मलोकं नयेदात्मानमेव च(३) ॥७७॥
ब्रह्मप्रकल्पितान् विप्रान् हव्यकव्यादिनार्च्चयेत्(४) ।
तैस्तुष्टैस्तोषिताः सर्व्वाः पितृभिः सह देवताः(५) ॥७८॥
कृते श्राद्धे(६)ऽक्षयवटे अन्नेनैव प्रयत्नतः।
पितॄन्नयेद्ब्रह्मलोकं अक्षयन्तु सनातनं(७) ॥७९॥
वटवृक्षसमीपे तु शाकेनाप्युदकेन वा ।
एकस्मिन् भोजिते विप्रे कोटिर्भवन्ति भोजिताः ॥८०॥

---

(१) गदालोले महातीर्थे इतिश्लोकात्परतः मुद्रितपुस्तके, तत्र श्राद्धादिकं कृत्वा पितॄन् ब्रह्मपुरं नयेदितिपाठोऽस्ति।

(२) कृत्वा स्नानादि पूर्व्ववत् इति मुद्रितपु०।

(३) श्राद्धं सपिण्डकं कुर्य्यात्ततोऽक्षयवटे नरः इति मुद्रितपु०। क० ख० पुस्तकयोः, पञ्चमेऽह्नि गदालोले इति श्लोकात्परतः गदालोलमिति ख्यातमिति श्लोकार्द्धं तदनन्तरं हेत्यसुरस्य यच्छीर्षमित्यादि अक्षयं पदमाप्नुयामित्यन्तपाठोऽस्ति।

(४) भोजयेत्पूजयेत्ततः इति मुद्रितपु०।

(५) एतच्छ्लोकार्द्धं मुद्रितपुस्तके न विद्यते।

(६) कृतश्राद्धो इति मुद्रितपु०।

(७) एतच्छ्लोकार्द्धं मुद्रितपुस्तके न विद्यते।

देयं दानं षोड़शकं गयातीर्थपरोधसे।
वस्त्रं गन्धादिभिः पुष्पैः सम्यक् संपूज्य यत्नतः[१] ॥८१॥
([२]एकार्णवे वटस्याग्रे यः शेते योगनिद्रया।
बालरूपधरस्तस्मै नमस्ते योगशायिने ॥८२॥
संसारवृक्षशस्त्रायाशेषपापहराय[३] च।
अक्षयब्रह्मदात्रे च[४] नमोऽक्षयवटाय वै[५] ॥८३॥
कलौ माहेश्वरा लोका येन तस्माद्गदाधरः।
लिङ्गरूपोऽभवत्तञ्च वन्दे श्रीप्रपितामहं ॥८४॥

इति श्रीवायुपुराणे वायुप्रोक्ते[६] गयामाहात्म्यं नाम
ऊनपञ्चाशत्तमोऽध्यायः।

---

(१) एष श्लोको मुद्रितपुस्तके नेक्ष्यते।
(२) एकार्णवे वटस्याग्रे इत्यतः प्राक् मुद्रितपुस्तकेऽधिकं श्लोकद्वयमस्ति तद्यथा—
गयातीर्थवटे चैव पितृणां दत्तमक्षयं।
दृष्ट्वा नत्वा च संपूज्य वटेशं सुसमाहितः।
पितॄन्नयेद्ब्रह्मलोकमक्षयन्तु सनातनं ॥ ८२ ॥
गयायां धर्म्मपृष्ठे च सरसि ब्रह्मणस्तथा।
गयाशीर्षे वटे चैव पितृणां दत्तमक्षयं ॥ ८३ ॥
(३) सर्व्वपापहरायै इति मुद्रितपु०।
(४) अक्षयाय ब्रह्मदात्रे इति मुद्रितपु०।
(५) ते इति मुद्रितपु०।
(६) श्वेतवराहकल्पे इति मुद्रितपु०।

# अथ पञ्चाशत्तमोऽध्यायः।

गयामाहात्म्यं।

सनत्कुमार उवाच। यज्ञस्त्वके गयो राजा बह्वन्नं बहुदक्षिणं।
यत्र द्रव्यसमूहानां सङ्ख्या कर्त्तुं न शक्यते(१) ॥१॥
सिकता वा यथा लोके यथा च दिवि तारकाः।
तथा बहुसुवर्णाद्यैरसङ्ख्यातास्तु दक्षिणाः ॥२॥
नैवेह पूर्व्वे ये केचित् न करिष्यन्ति चापरे।
प्रशंसन्ति द्विजास्तृप्ता देशे देशे सुपूजिताः(२) ॥ ३ ॥
गयं विष्ण्वादयस्तुष्टा वरं ब्रूहीति चाब्रुवन्।
गयस्तान् प्रार्थयामास अभिशप्तास्तु ये पुरा ॥४॥
ब्रह्मणा ते द्विजाः पूता भवन्तु क्रतुपूजिताः(३)।

---

(१) सङ्ख्या कर्त्तुं न शक्यते इत्यस्मात्परतः मुद्रितपुस्तकेऽधिकः सार्द्धैक-श्लोकोऽस्ति तद्यथा—

स्थिता गयायामन्नादिपर्व्वताः पञ्चविंशतिः।
प्रशंसन्ति द्विजास्तत्र देशे देशे सुपूजिताः ॥ २ ॥
नैव पूर्व्वं केऽप्यकुर्व्वन्न करिष्यन्ति चापरे।

(२) एष श्लोको मुद्रितपुस्तके नेक्ष्यते।

(३) भवन्तु क्रतुपूजिता इत्यनन्तरं ख० ग० पुस्तकयोः अतिरिक्ताः कतिपयश्लोकाः सन्ति यथा—

गयाश्राद्धविधानाय द्विजा मूर्त्ताश्चतुर्द्दश।
तेषां वाक्यं प्रकुर्व्वीत यदि ब्रह्मा स्वयं भवेत् ॥
गौतमं काश्यपं कौत्सं कौशिकं कान्वमेव च।
भारद्वाजं ह्यौशनसं वात्स्यं पाराशरं तथा ॥

गयापुरीति मन्नाम्ना ख्याता ब्रह्मपुरी यथा ॥ ५॥
एवमस्तु वरं दत्वा तथा चान्तर्दधुः सुराः ।
गयश्च भोगान् सम्भुज्य विष्णुलोकं परं ययौ(१) ॥६॥
विशालायां विशालोऽभूद्राजाऽपुत्रोऽब्रवीद्द्विजान् ।
कथं पुत्रादयो मे स्युर्विशालं चाब्रुवन द्विजाः ॥ ७ ॥
गयायां पिण्डदानेन तव सर्व्वं(२) भविष्यति ।
विशालोऽपि गयाशीर्षे पिण्डदः पुत्रवानभूत् ॥८॥
दृष्ट्वाकाशे सितं रक्तं कृष्णं पुरुषमब्रवीत् ।
के यूयं तेषु चैवैकः सितः प्रोचे विशालकं ॥९॥
अहं सितस्ते जनक इन्द्रलोकादिहागतः(३) ।
मम पुत्र पिता रक्तो(४) ब्रह्मघ्ना पापकृत्तमः ॥१०॥
अयं पितामहः कृष्ण ऋषयो येन घातिताः ।
अवीचिनरकं प्राप्तौ मुक्तौ त्वत्पिण्डदानतः ॥११॥

---

हरित्कुमारमाण्डव्यं लोकाक्षिं लोकसंमहत् ।
वाशिष्ठञ्च तथात्रेयं गोत्राण्येवां चतुर्द्दश ॥

गौतमं काश्यपमित्यादि वशिष्ठञ्च तथात्रेयमित्यन्तपदानां प्रथमाविभक्तिमत्त्वेन प्रयोगो युक्तः ।

(१) एवमस्तु वरं दत्त्वा इत्यस्मिन् श्लोकस्थले मुद्रितपुस्तके, तथेति च तमूचुर्हि देवा विष्ण्वादयस्तु ते । गयाश्राद्धादिप्राप्ता हि यत्नवान् पितृतारकः, इति श्लोको वर्त्तते ।

(२) तत् सर्व्वञ्च इति मुद्रितपु० ।

(३) इन्द्रलोकं गतः पुरा इति मुद्रितपु० ।

(४) पुत्रायं मत्पिता रक्तो इति मुद्रितपु० ।

पितृन् पितामहांश्चैव तथैव प्रपितामहान् ।

प्रीणयामीति यत्तोयं त्वया दत्तमरिन्दम ॥१२॥

तेनास्मद्युगपद्योगो जातो वाक्येन सत्तम[1]।

मुक्तिः कृता त्वया पुत्र व्रजामः स्वर्गमुत्तमं ।

एवं पुत्रैः पितॄणां च कर्त्तव्या मुक्तिरुत्तमा ॥१३॥

त्वञ्च राज्यं चिरं कृत्वा भुक्त्वा भोगांश्च दुर्लभान् ।

यज्ञान् सदक्षिणान् कृत्वा याया विष्णुपुरं ततः[2] ॥१४॥

एवं लब्धवरो राजा राज्यं कृत्वा[3] दिवं गतः ।

प्रेतराजः सह प्रेतैर्गयाश्राद्धाद्दिवं गतः ॥ १५ ॥

प्रेतः कश्चिद्विमुक्त्यर्थं वणिजं कञ्चिदब्रवीत् ।

मम नाम्ना गयाशीर्षे पिण्डनिर्व्वापणं कुरु ॥ १६ ॥

प्रेतभावविमुक्त्यर्थं[4] त्वं गृहाण धनं मम ।

तद्धनं सर्व्वमादाय गयाश्राद्धव्ययं कुरु[5] ॥ १७ ॥

---

(१) पितॄन् पितामहांश्चैव इत्यादिसार्द्धैकश्लोको मुद्रितपुस्तके न विद्यते ।

(२) मुद्रित पुस्तके, मुक्तिः कृता त्वया पुत्र इत्यादि याया विष्णुपुरं ततः, इत्यन्तपाठो नास्ति, तत्र तस्मिन् स्थले पाठान्तरं वर्त्तते यथा —

मुक्तीकृतास्त्वया सर्व्वे व्रजामः स्वर्गमक्षयं ।

सुपुत्रेण त्वया सर्व्वे ब्रह्मलोकं व्रजामहे ॥ ११ ॥

पुत्रपौत्रादिसंयुक्तो राज्यं कृत्वा दिवं व्रजन् ।

तत्र भोगैः सुखं भुक्त्वा ततो मोक्षमवाप्स्यसि ॥ १२ ॥

(३) भुक्त्वेति मुद्रितपु० ।

(४) प्रेतभावाद्विमुक्तः स्यामिति मुद्रितपु० ।

(५) वणिक् स्वगृहमागतः इति मुद्रितपु० ।

षड़ंशं पञ्चभागांश्च[१] तुभ्यं वै दत्तवानहं ।
स्वनामानि यथान्यायं सम्यगाख्यातवानहं[२] ॥१८॥
गत्वा गयां गयाशीर्षे प्रेतराजाय पिण्डकं ।
समदाद्बन्धुभिः[३] सार्द्धं स्वपितृभ्यस्ततो ददौ ॥ १९ ॥
प्रेतः प्रेतत्वनिर्म्मुक्तो वणिक् स्वग्टहमागतः ।
एवं गयस्य शम्भोश्च चेत्रं विष्णोः रवेस्तथा[४] ॥२०॥
उपोषितोऽथ गायत्रीतीर्थे महानदीस्थिते[५] ।
गायत्र्याः पुरतः स्नात्वा प्रातःसन्ध्यामुपासयेत्[६] ।
श्राद्धं सपिण्डकं कृत्वा नयेद्ब्रह्मणतां कुलं[७] ॥२१॥
तीर्थे समुदिते[८] स्नात्वा सावित्र्याः पुरतो नरः ।
सन्ध्यामुपास्य मध्याह्ने नयेत् कुलशतं दिवं ।
पिण्डदानं ततः कुर्य्यात् पितृणां मुक्तिकाम्यया[९] ॥२२॥
प्राचीसरस्वतीतीर्थे स्नात्वा चापि यथाविधि[१०] ।

---

(१) षड़ंशं पञ्चभागाश्च इत्यत्र षोड़शपञ्चभागांश्चेति पाठो युक्तः।
(२) षडंशं पञ्चभागांश्चेति श्लोको मुद्रितपुस्तके न विद्यते। तत्र तस्मिन् स्थले, धनं निक्षिप्य तत्रासौ किञ्चिदादाय निर्ययौ, इतश्लोकार्द्धमात्रं वर्त्तते।
(३) प्रददौ मनुजैरिति ख० ग० ।
(४) स्वयम्भुव इति मुद्रितपु० ।
(५) नद्यां समाश्रितः इति मुद्रितपु० ।
(६) समाचरेदिति मुद्रितपु० ।
(७) ब्रह्म स्वकान् पितॄन् इति मुद्रितपु० ।
(८) समुद्यते इति ख० ग० ।
(९) पिण्डदानं ततः कुर्य्यात्पितॄणां मुक्तिकाम्यया इति श्लोकार्द्धं मुद्रितपुस्तके न दृश्यते ।
(१०) स्नातः सरस्वतीतीर्थे सरस्वत्याश्च सन्निधौ इति मुद्रितपु० ।

सन्ध्यामुपास्य सायाह्ने विष्णुलोकं नयेत् पितॄन्(१)।
बहुजन्मकृतात् सन्ध्यालोपान्मुक्तिस्सन्ध्यकृत् ॥ २३ ॥
विशालायां लेलिहाने तीर्थे च भरताश्रमे।
पादाङ्किते मुण्डपृष्ठे गदाधरसमीपतः ॥२४॥
तीर्थे चाकाशगङ्गायां गिरिकर्णमुखेषु च।
स्नातोऽथ(२) पिण्डदो ब्रह्मलोकं कुलशतं नयेत् ॥ २५॥
देवनद्यां वैतरण्यां स्नातः स्वर्गं नयेत् पितॄन्।
स्नातो गोदो वैतरण्यां त्रिःसप्तकुलमुद्धरेत्(३) ॥२६॥
सत्यं सत्यं पुनः सत्यं वैतरण्यां तु नारद।
एकविंशतिकुलान्याशु(४) तारयेन्नात्र संशयः ॥२७॥
(५)या सा वैतरणी नाम नदी त्रैलोक्यविश्रुता।

---

(१) नयेत् सर्व्वंशतां कुलमिति मुद्रितपु०।

(२) श्राद्धदः इति मुद्रितपु०।

(३) स्नातो गोदो वैतरण्यां इत्यस्मात्प्राक् मुद्रितपुस्तके, देवनद्यां वैतरण्यां इतिश्लोकार्द्धं न दृश्यते, तत्र अस्मात्परतः, तत्र श्राद्धादिकं कृत्वा गोदानञ्च विधीयते इति श्लोकार्द्धं वर्त्तते।

(४) तेनैकविंशतिकुलमिति मुद्रितपु०।

(५) या सा वैतरणी नाम इत्यस्मात्प्राक् मुद्रितपुस्तकेऽधिकं श्लोकद्वयमस्ति, तद्यथा—

यमद्वारे महाघोरे या सा वैतरणी नदी।
तामहं तर्त्तुमिच्छामि ददामि गां प्रददाम्यिमां ॥ २५ ॥
अशक्तो यदि वा शक्तो गोप्रदानं करोति यः।
देवनद्यां गोप्रदाने श्राद्धदः स्वर्नयेत्पितॄन् ॥ २६ ॥

सावतीर्णा गयाक्षेत्रे पितॄणां तारणाय वै ॥२८॥
[1]त्रिरात्रोपोषणेनैव तीर्थाभिगमनेन च ।
अदत्त्वा काञ्चनङ्गाश्च दरिद्रो जायते नरः ॥२९॥
घृतकुल्या मधुकुल्या देविका च महानदी ।
शिलायाः सङ्गमो यत्र मधुस्रवा प्रकीर्त्तिता ॥३०॥
अयुतं चा[2] श्वमेधानां स्नानकृल्लभते नरः[3] ।
श्राद्धं सपिण्डकं कृत्वा पिण्डदानं तथैव च[4] ।
कुलानां शतमुद्धृत्य[5] विष्णुलोकं नयेन्नरः ॥३१॥
दशाश्वमेधिके हंसतीर्थे चामरकङ्कटे ।
कोटितीर्थे रुक्मकुण्डे पिण्डदः स्वर्नयेत् पितॄन् ॥३२॥
वैतरण्यां घृतकुल्यां मधुकुल्यां तथैव च ।
कोटीतीर्थे नरः स्नात्वा दृष्ट्वा कोटिश्वरञ्च यः ॥३३॥

---

(१) त्रिरात्रोपोषणेनेति श्लोकात्प्राक् मुद्रितपुस्तकेऽधिकं श्लोकद्वयमस्ति यथा—

गोदावर्य्यां वैतरण्यां यमुनायां तथैव च ।
देवनद्यां गोप्रचारे श्राद्धदः स्वर्नयेत्पितॄन् ॥२८॥
पुष्करिण्यां घृतकुल्यां मधुकुल्यां तथैव च ।
कोटितीर्थे रुक्मिणीये पिण्डदः स्वर्नयेत्पितॄन् ॥२९॥

(२) अयुतस्य इति मुद्रितपु० ।

(३) फलं प्राप्नोत्यसंशयमिति मुद्रितपु० ।

(४) स्नात्वा च तर्पयित्वा च श्राद्धं कृत्वा सपिण्डकमिति मुद्रितपु० ।

(५) सहस्रकुलमुद्धृत्य इति मुद्रितपु० ।

कोटिजन्म भवेद्विप्रो धनाढ्यो वेदपारगः[१] ।
मार्कण्डेयेशकोटीशौ नत्वा स्यात् पितृतारकः ॥३४॥
रुक्मपारिजातवने पार्व्वत्या सह शङ्करः ।
रहस्ये संस्थितो रेमे युगानामयुतं पुरा[२] ॥३५॥
मरीचिः फलपुष्पार्थं पारिजातवनं गतः ।
दृष्ट्वा शप्तो महेशेन यस्मात् सुखविघातकः ॥ ३६ ॥
दुःखी भवेति तच्छीतो मरीचिस्तुष्टुवे शिवं ।
तुष्टः प्रोवाच तं शम्भुर्वृणीष्व वरमुत्तमं ॥३७॥
शापाद्भवतु मुक्तिर्मे[३] मरीचिः प्राह शङ्करं ।
भवेद्गयायां मुक्तिस्ते शिवोक्तः प्रययौ गयां ॥३८॥
शिलास्थितस्तपस्तेपे सर्व्वेषां दुष्करञ्च यत् ।
मरीचिरीश्वराच्छप्तः कृष्णत्वमगमत् पुरा ।
तपसा दारुणेनेह स विप्रः शुक्लतां गतः ॥३९॥
हरिरूचे मरीचिञ्च[४] वरं वृणुहि पुत्रक ।
किमलभ्यं त्वयि तुष्टे मरीचिः प्राह माधवं ॥४०॥
हरशापाद्विमुक्तोऽहं[५] शिला भवतु पावनी ।
पितृमुक्तिकरी च स्यात्तथेत्युक्ता दिवं गतः[६] ॥४१॥

---

(१) कोटितीर्थे नरः स्नात्वा दृष्ट्वा कोटीश्वरञ्च यः इति, कोटिजन्म भवेद्विप्रो धनाढ्यो वेदपारगः इति च, श्लोकार्द्धद्वयं मुद्रितपुस्तके नास्ति ।

(२) वर्षाणामयुतं शतमिति मुद्रितपु० ।

(३) कुरु विमुक्तं मां इति मुद्रितपु० ।

(४) ब्रह्मविष्ण्वादयः सर्व्वे इति मुद्रितपु० ।

(५) विमुच्येऽहमिति मुद्रितपु० ।

(६) ययुरिति मुद्रितपु० ।

दिवौकसां पुष्करिणीं समासाद्य नरः शुचिः ।
यत्र दत्तं पितृभ्यस्तु भवत्यक्षयमित्युत ॥ ४२ ॥
तत्र स्नातो दिवं याति स्वशरीरेण मानवः ।
पाप्मानं प्रजहात्येष जीर्णत्वचमिवोरगः ।
तत्पङ्कजवनं पुण्यं पुण्यकृद्भिर्निषेवितं(१) ॥ ४३ ॥
पाण्डुशिला वै तत्रास्ते(२) श्राद्धं यत्राक्षयं(३) भवेत् ।
युधिष्ठिरस्तु तस्यां हि श्राद्धं कर्त्तुं ययौ मुने(४) ॥ ४४ ॥
तत्र काले(५) पाण्डुनोक्तं मद्धस्ते देहि पिण्डकं ।
हस्तन्त्यक्त्वा शिलायाञ्च(६) पिण्डदानञ्चकार सः ॥ ४५ ॥
शिलायां पिण्डदानेन प्रहृष्टो व्यासनन्दनः ।
वरं ददौ स्वपुत्राय राज्यं कुरु महीतले ॥ ४६ ॥
अकण्टकन्तु सम्पूर्णं त्वं मे त्राता हि पुत्रक(७) ॥ ४७ ॥
स्वर्गं व्रज शरीरेण भ्रातृभिः परिवारितः ।
दृष्टिमात्रेण सम्पूतान्नरकस्थान्दिवं नय(८) ॥ ४८ ॥

---

(१) दिवौकसां पुष्करिणीमित्यादि पुण्यकृद्भिर्निषेवितमित्यन्तपाठो मुद्रितपुस्तके नेच्छते ।

(२) पाण्डुशिलेति या प्रोक्ता इति मुद्रितपु० ।

(३) तत्राक्षयमिति मुद्रितपु० ।

(४) युधिष्ठिरस्ततः कर्त्तुं पितृकार्य्यन्तु तां ययौ इति मुद्रितपु० ।

(५) श्राद्धकाले इति मुद्रितपु० ।

(६) वै इति मुद्रितपु० ।

(७) एकच्छत्रं सुपुत्रक इति मुद्रितपु० ।

(८) एष श्लोको मुद्रितपुस्तके नास्ति तत्र तस्मिन् स्थले, स्वर्गं व्रज शरीरेण नरकस्थान् दिवं नय इति श्लोकार्द्धं वर्त्तते ।

इत्युक्त्वा प्रययौ पाण्डुः शाश्वतं पद(१) मव्ययं(२) ।
मतङ्गस्य पदे श्राद्धी ब्रह्मलोकं नयेत् पितॄन् (३)॥४८ ॥
निर्मथ्याग्निं शमीगर्भे विधिर्विष्ण्वादिभिः सह ।
लेभे तीर्थन्तु यज्ञार्थं(४) त्रिषु लोकेषु विश्रुतं ॥५०॥
मखसंज्ञन्तु तत्तीर्थं(५)पितॄणां मुक्तिदायकं ।
स्नात्वा च तर्पणं कृत्वा पिण्डदो(६) मुक्तिमाप्नुयात्॥ ५१॥
पितॄन् स्वर्गं नयेन्नत्वा सङ्गमेऽङ्गारकेश्वरौ(७)।
गयाकूटे(८) पिण्डदानादश्वमेधफलं लभेत्॥५२॥

---

(१) शिवमिति मुद्रितपु० ।

(२) शाश्वतं पदमव्ययमित्यस्मात्परतः मुद्रितपुस्तके, घृतकुल्या मधुकुल्या इत्यादि नयेद्विष्णुपुरं नरः इत्यन्तपाठो वर्त्तते । तदनन्तरं,

उद्भिज्जाः स्वेदजा वापि अण्डजा ये जरायुजाः ।
मधुस्रवां समासाद्य मृताः स्वर्गपुरं ययुः ॥४३॥
दशाश्वमेधिके हंसतीर्थे श्राद्धाद्दिवं व्रजेत् ।
दशाश्वमेधहंसौ च नत्वा शिवपुरं व्रजेत् ।
भरतस्याश्रमे श्राद्धान्नयेद्ब्रह्मालयं पितॄन् ॥ ४४ ॥ इति पाठोऽस्ति।

उद्भिज्जाः स्वेदजा वापि इत्यादि नयेद्ब्रह्मालयं पितॄनित्यन्तपाठः ख० ग० पुस्तकयोर्न सन्ति ।

(३) एतच्छ्लोकार्द्धं मुद्रितपुस्तके नेष्यते ।

(४) पुत्रन्तु यज्ञेन इति मुद्रितपु० ।

(५) मखसंज्ञं ततस्तीर्थमिति मुद्रितपु० ।

(६) तर्पणात् पिण्डदानाच्च स्नानकृदिति मुद्रितपु० ।

(७) तारकेश्वरमिति मुद्रितपु० ।

(८) गयापूपे इति मुद्रितपु० ।

 

भस्मकूटे भस्मनाथं नत्वा च तारयेत्[१]
त्यक्तपापो भवेन्मुक्तः सङ्गमे स्नानमाचरे
इष्टिं चक्रेऽश्वमेधाख्यं वशिष्ठो मुनिसत्तमः
इष्टितो निर्गतः शम्भुर्वरं वृणु वशिष्ठकं ॥
प्राहेति तं वशिष्ठोऽपि शिव तुष्टोऽसि मे
वस्तव्यं चात्र देवश्च तथेत्युक्त्वा शिवः स्थितः[३]
पिण्डदो धेनुकारण्ये कामधेनुपदेषु च ।
स्नात्वा नत्वाथ सम्पूज्य[४] ब्रह्मलोकं नयेत् पि
कर्द्दमाले गयानाभौ मुण्डपृष्ठसमीपतः ।
स्नात्वा श्राद्धादिकं कृत्वा पितॄणामनृणो भवेत्
फल्गुचण्डीश्मशानाख्यीमङ्गलाद्याः[६] समर्च्चयेत् ।
गयायाञ्च वृषोत्सर्गात्त्रिःसप्तकुलमुद्धरेत् ।
यत्र तत्र स्थिता देवा ऋषयोऽपि जितेन्द्रिया
श्राद्धं गदाधरं ध्यायन् श्राद्धपिण्डादिदानतः ।
कुलानां शतमुद्धृत्य ब्रह्मलोकं नयेत् पितॄन्[७] ॥

(१) भस्मकूपे भस्मना च स्नात्वा सन्तारयेदिति मुद्रितपु० ।
(२) स्नातो नत्वा वशिष्ठेशं तत्तीर्थे चाश्वमेधभाक् इति मुद्रितपु०
(३) वस्तव्यं सर्व्वदेवात्र तथास्त्वुक्त्वा स्थितः शिवः इति मुद्रितपु०
(४) स्नातो नत्वा कामदुघां इति मुद्रितपु० ।
(५) स्नात्वा श्राद्धादिना स्वर्गं पितृन्नत्वाथ चण्डिकामिति मुद्रितपु० ।
(६) फल्गुचण्डीशमाराध्य मङ्गलादीनिति मुद्रितपु० ।
(७) ब्रह्मलोकं नयेत्पितॄनित्यनन्तरं मुद्रितपुस्तके गयागयो गयादि इत्यादि पूजयेद्वापि पुस्तकमित्यन्तपाठो नास्ति, तत्र तस्मिन् स्थले पाठान्तरमस्ति तद्यथा—

यादित्यो गायत्री च गदाधरः ।
रश्चैव षड्गयामुक्तिदायिकाः ॥६०॥
मदं पुण्यं यः पठेत् सततं नरः ।
द्रुया यस्तु स याति परमां गतिं ॥६१॥
गयाख्यानं विप्रेभ्यः पुण्यकन्नरः ।
द्धं कृतं तेन कृतं तेन सुनिश्चितं ॥६२॥
महिमानश्च अभ्यसेद्यः समाहितः ।
राजसूयेन अश्वमेधेन नारद ॥६३॥
दा लेखयेद्वापि पूजयेद्वापि पुस्तकं ।
गेहे स्थिरा लक्ष्मीः सुप्रसन्ना भविष्यति ॥६४॥
ख्यानमिदं पुण्यं गृहे तिष्ठति पुस्तकं ।
चौरजनितं भयं तत्र न विद्यते ॥६५॥

---

। दध्योदनेनैव दद्यान्नैवेद्यमुत्तमं ।
जनार्दनाय देवाय समभ्यर्च्य यथाविधि ।
दद्यान्निक्षिप्य तद्धस्ते तच्छेषेणैव जीवनं ॥५६॥
उपाख्यानमिदं पुन्यं त्रिवारं यः पठेन्नरः ।
गयाश्राद्धं कृतं तेन नात्र कार्य्या विचारणा ॥५७॥
देवता ऋषयस्तुष्टाः पितरस्तस्य नारद ।
यद्यदिष्टं तु तत्तस्मै प्रदास्यन्ति मुहुर्मुहुः ॥५८॥
महिमानं गयायाश्च यः शृणोति सकृच्छुभं ।
भुक्त्वेह विपुलान् भोगान् नरो विष्णुपुरं व्रजे ॥५९॥
जपेच्च श्राद्धकाले यो भक्तिमान् द्विजपुङ्गवः ।
गयाश्राद्धं विधानेन कृतं तेन सुनिश्चितं ॥६०॥

श्राद्धकाले पठेद्यस्तु गयामाहात्म्यमुत्तमं ।
विधिहीनन्तु तत् सर्व्वं पितॄणान्तु गयासमं ॥ ६६॥
यानि तीर्थानि त्रैलोक्ये तानि दृष्टानि तत्र वै ।
येन ज्ञातं गयाख्यानं श्रुतं वा पठितं मुने ॥ ६७॥

सूत उवाच ।　सनत्कुमारो मुनिपुङ्गवाय
पुण्यां कथाञ्चाथ निवेद्य भक्त्या ।
स्वमाश्रमं पुण्यवने[1]रुपेतं
विसृज्य संगीतगुरुं जगाम ॥ ६८॥

[इति पञ्चाशत्तमोऽध्यायः ।]

इति श्रीवायुपुराणे वायुप्रोक्ते[2] गयामाहात्म्यं समाप्तं. समाप्तश्चायं वायुपुराणः ॥०॥



(१) रम्यवनैरिति मुद्रितपु० ।
(२) श्वेतवराहकल्पे इति मुद्रितपु० ।